विन्यासविशेषस्तु—उत्तरीयस्येव यज्ञसूत्रस्यापि तत्र तत्र तत्तद्वाक्याद्वगन्तव्य इत्यभिप्रायः। अतएव—

"प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा ।
पित्र्यमानिधनात् कार्य्यं विधिवद्दर्भपाणिना"।

इति कर्म्माङ्गतया प्राप्तं यज्ञसूत्रमनूद्य, तदीयविन्यासविशेषस्य-(प्राचीनावीतित्वस्य) विधिरुपपद्यते। अन्यथा विशिष्टस्य यज्ञोपवीतस्य कर्म्मार्थत्वे तस्य च शास्त्रान्तरबलात् दैवकृत्यमात्रपरतया पित्र्ये कर्म्मण्यपूर्व्वं विन्यासविशेषविशिष्टं यज्ञोपवीतं विधित्सितं भवति—इति भिद्येत वाक्यम्। भिन्नो खल्विमावर्थौ—यत्रापूर्व्वं विन्यासविशेषविशिष्टं यज्ञोपवीतं, यत्रास्य कर्म्मसंयोग इति। "यज्ञोपवीतं त्रिपुष्करं ब्रह्मसूत्रमित्यर्थः। तदस्यास्तीति यज्ञोपवीती" इति च भट्टभाष्यम्।

किमिदं यज्ञोपवीतं? कथञ्चाचान्तोदको भवति? इत्येतत् सर्व्वमाचार्य्य एवानुपदं व्युत्पादयिष्यति। अत्र चाचार्य्यानुक्ता अन्येपि कर्त्तृधर्म्माः परिशिष्टकृतः कात्यायनस्य वचनादवगन्तव्याः।

"यत्र दिङ्नियमो न स्याज्जपहोमादिकर्म्मसु।
तिस्रस्तत्र दिशो ज्ञेयाः प्राचीसौम्यापराजिताः।
तिष्ठन्नासीनः प्रह्वोवानियमोयत्र नेदृशः।
तदासीनेन कर्त्तव्यं न प्रह्वेण न तिष्ठता"।

इत्येवमादयः। एवमन्येप्यनुसन्धेयाः शास्त्रान्तरेषु ॥ * ॥ २ ॥ * ॥

इदानीं कर्म्माङ्गानि वक्तव्यानि। तत्रासाधारणत्वादादौ तावत् कालमेव कर्म्मसाधनं परिभाषते।—

उदगयने पूर्व्वपक्षे पुण्येऽहनि प्रागावर्त्तनादह्नः कालं विद्यात् ॥ २ ॥

उत्तरस्यां सवितुरयनसम्बन्धात् उदगयनं प्रसिद्धं ज्योतिःशास्त्रेषु। तस्मिन्नुदगयने। पूर्व्वपक्षे,—"तत्र पक्षावुभौ मासे शुक्लकृष्णौ क्रमेण हि" इत्यादि स्मरणात्, शुक्लपक्षे। पुण्ये, शोभने विष्ट्यादिदोषरहिते यथोक्ते, अहनि दिवसे,—(तदनेन रात्रिं नानुजानात्याचार्य्य इत्यवगम्यते)। अह्नो वासरस्य, आवर्त्तनात्—छायायाः परिवर्त्तनात् प्राक् पूर्व्वं पूर्व्वाह्न इत्येतत्। कालं विद्यात्, जानीयात्। गृह्यकर्म्मणामिति सम्बध्यते। स्मरन्ति च—

"आवर्त्तनात्तु पूर्व्वाह्णोऽपराह्णस्ततः परम्"।

इति।

"अश्वत्थं वन्दयेन्नित्यं पूर्व्वाह्णे प्रहरद्वये"।

इति च। न च पूर्व्वाह्ण इत्येव वक्तुमुचितं, अलं ग्रन्थगौरवेणेति वाच्यं। स्वतन्त्रेच्छस्य नियन्तुमशक्यत्वात्। "पूर्व्वाह्णो वै देवानां मध्यन्दिनं मनुष्याणामपराह्णः पितॄणाम्" इति श्रुत्युक्तत्रिधाविभक्तदिनप्रथमभागात्मकपूर्व्वाह्णव्यवच्छेदकत्वाच्चेति। यत्तु श्राद्धपूर्व्वकत्वात् कर्म्मणः श्राद्धस्य चोदयसन्निधौ प्रतिषेधात्तथाऽभिधानमिति भट्टभाष्यम्। तच्चिन्त्यम्। उदयसन्निधौ श्राद्धप्रतिषेधेऽपि कर्म्मणः कालपरिभाषायां पूर्व्वाह्णाभिधाने बाधकाभावात्। न खलु पूर्व्वाह्णाभिधानं यथोक्ताभिधानं वा तत्र किमपि विलक्षणमुपलभामहे इति धीमद्भिरनुचिन्तनीयम्।

विसमासकरणमेकैकस्यानुगुणद्योतनार्थं, समुदितोपलब्धौ महानभ्युदय इति व्याख्यातारः। अतो न कालविशेषनियतेषु गर्भाधानादिष्वनुपपत्तिः। एकैकानुगुणस्य तत्रापि सुलभत्वात्। यद्यप्योदगयनादीनां कर्म्माङ्गतैव परमनुज्ञायते, न तु दक्षिणायनादीनामन्दनङ्गतापि, वाक्यभेदप्रसङ्गात्। तथाप्युपनयनादौ दक्षिणायनादेरनङ्गतापि प्रत्येतव्या, स्मृत्यन्तरसंवादात्। तथैव खलु विहितेतरस्यापि वासरादेर्विवाहाद्यङ्गतेति। स्मर्य्यते च—

"रात्रिभागः समाख्यातः खरांशोर्दक्षिणायनम्।
व्रतबन्धादिकं तस्माच्चूडाकर्म्म च वर्ज्जयेत्" ॥

इति—

"निषिद्धं निशि च व्रतम्"—इति चैवमादि।

"सर्व्वकालमेके विवाहम्"-इति च गृह्यान्तरम्, ज्योतिःशास्त्रमपि—

"न सकल-गुण-सम्पल्लभ्यतेऽल्पैरहोभि-
र्बहुतर-गुण-युक्तं योजयेन्मङ्गलेषु।
प्रभवति नहि दोषो भूरिभावे गुणानां
सलिल-लव इवाग्नेः सम्प्रदीप्तेन्धनस्य।

इति।

"कष्टाभीष्टे तुल्यसङ्ख्ये फले चेत्
स्यातां; नाशः फलयोस्तत्र वाच्यः।
वाच्या पक्तिर्योऽतिरिक्तस्तयोः स्यात्
सर्व्वस्थाने कल्पनैवं प्रदिष्टा"।

इति चैवमादि ॥ २ ॥ * ॥

एवन्तर्ह्युदगयनाद्यभावे शास्त्रबलादप्यनुष्ठीयमानस्य पिण्डपितृयज्ञा देर्वैगुण्यं स्यादित्यत आह।—

## यथादेशञ्च ॥ ४ ॥

आदिश्यते इत्यादेशस्तस्यातिक्रमाभावो यथादेशम्। यथाचादेशः शास्त्रस्य, तथा च कालं विद्यादित्यनुवर्त्तते। शास्त्रमेवं खल्वेवम्विधेष्वर्थेषु नः प्रमाणं, यथाचादिशति शास्त्रं तथा च प्रमेयं प्रमिमीमहे, आदिशति च शास्त्रं किञ्चित् कर्म्मोदगयनाद्यभावेपीति तत्रानङ्गतैवामीषामङ्गता च यथोक्तानामित्यभिप्रायः। तदिदं "पदार्थान्तरस्याकाङ्क्षविशेषमपहाय तदितरत्र सामान्यमन्वेति" इति न्यायमूलमपि सूत्रं सुखप्रतिपिपादयिषया कारुणिक आचार्य्यः प्रणिनाय—शिष्याननुस्मरन्निति।

अथवा। पुनरपीदं सूत्रयन्नाचार्य्योयथादिष्टस्य कालस्य कर्म्मणादरातिशयं दर्शयति। तथाच सत्यामपि "यथा शक्नुयात् तथा कुर्य्यात्" इति श्रुतौ,सत्यपि च "अपि वाप्येकदेशे स्यात् प्रधाने ह्यर्थनिर्वृत्तिर्गुणमात्रमितरत्तदर्थत्वात्" इति सिद्धान्ते, नित्यानामपि कर्म्मणामादिष्टकालव्यतिक्रमेण नानुष्ठानम्। अतएव स्मर्य्यते।

"अकाले चेत् कृतं कर्म्म काले तस्य पुनःक्रिया।
कालातीतन्तु यत् कुर्य्यादकृतं तद्विनिर्दिशेत्"।

इति।

"अङ्गत्वेपि च कालस्य न त्यागोऽन्याङ्गवत् कृतः।
अनुपादेयरूपत्वात् काले कर्म्म विधीयते"।

इति चाभियुक्तानां वचनम्। केषाञ्चित्तु सायंप्रातर्होमादीनामादिष्टेपि कालान्तरे प्रायश्चित्तं कृत्वैवानुष्ठानं भवति।

"आसायमाकृतेः कालात् कालः स्यात् प्रातराकृतेः"।

इति।

"गौणेषु तेषु कालेषु कर्म्म चोदितमारभेत्।
प्रायश्चित्तप्रकरणप्रोक्तां निष्कृतिमाचरेत्"।

इति चैवमादिस्मरणात्। येषान्तु कालोनाङ्गमपि तु निमित्तमात्रमितिदर्शनम्। तेषामयमपि पक्षोन्यायावगतएव सूत्रेणोच्यते। न खल्वन्तरेण निमित्तं नैमित्तिकानामात्मलाभः सम्भवति ॥ ४ ॥

कर्म्मकालमभिधायेदानीमनुष्ठेयानि कर्म्माङ्गान्याह द्वाभ्याम्।—

सर्व्वाण्येवान्वाहार्य्यवन्ति ॥ ५ ॥

अनु, पश्चादाह्रियते यस्मात् प्रकृतं कर्म्म इति, अनु, पश्चादाह्रियते यत् प्रस्तुतात् कर्म्मण इति चान्वाहार्य्यं नान्दीमुखश्राद्धं दक्षिणा चोच्यते। अतएव गृह्यान्तरम्।

"यत् श्राद्धं कर्म्मणामादौ याचान्ते दक्षिणा भवेत्।
अमावास्यां द्वितीयं यदन्वाहार्य्यं तदुच्यते"।

इति। तदयमर्थः। सर्व्वाण्येव प्रकृतत्वात् "गृह्याकर्म्माणि" इति सम्बध्यते। "सर्व्वाण्येव वक्ष्यमाणानि कर्म्माणि" इति चैकादशीतत्त्वे। अन्वाहार्य्यवन्ति, अन्वाहार्य्यमुक्तं तद्विद्यते येषां तानीमान्यन्वाहार्य्यवन्ति, भवन्तीति वाक्यशेषः, विद्यादिति वा वर्त्तते। एव

शब्दस्यावधारणार्थः। सर्व्वाणि गृह्यकर्म्माण्यन्वाहार्य्यवन्त्येवेत्यवधि-यते। न त्वन्यत्रान्वाहार्य्यं निषिध्यते। अतो गृह्यानुक्तेष्वन्न-प्राशनादिषु शास्त्रान्तरात् श्राद्धं दक्षिणा च न विरुध्यते। तथा श्रौतेष्वपि ज्योतिष्टोमादिषु। सर्व्वाण्येव गृह्यकर्म्माणि शाखान्तरी-याण्यपि अन्वाहार्य्यवन्ति इति वाऽर्थः। अथवा। सर्व्वाण्येव— आधान सायंप्रातर्होमादीनि, न तु कानिचिदेव विवाहप्रभृतीनि— (येषु स्मृत्यन्तरेण साक्षादन्वाहार्य्यं विहितम्)—गृह्यकर्म्माणि इति यथाश्रुत एवार्थः। "अनेकस्याशेषता सर्व्वशब्दार्थः"—इति हि ता-न्त्रिका मन्यन्ते। किमर्थमिदम्?—इति चेत्, अनेकस्याशेषतावग-तये, इति गृहाण। यथा,—"सर्व्वाणि ह वा इमानि भूतान्या-काशादेव समुत्पद्यन्ते"—इत्यस्यां श्रुतौ इमानीति समाम्नायापि सर्व्वाणीत्याम्नातम्। यथा वा,—"खादिरपालाशालाभे, विभीतक, तिल्वक, वाधक, नीव, निम्ब, राजवृक्ष, शाल्मल्यरलु, दधित्थ, कोविदार, श्लेष्मातक, वर्ज्जं सर्व्ववनस्पतीनामिध्मो यथार्थं स्यात्"— इत्यत्र सर्व्ववनस्पतीनामित्युक्तम्। एवमिहापीत्यदोषः। "आर्षेयं वृणीते, एकं वृणीते, द्वौ वृणीते, त्रीन् वृणीते, न चतुरो वृणीते, न पञ्चातिवृणीते," इत्यत्र—न चतुरो वृणीते न पञ्चातिवृणीते, इतिवन्नित्यानुवादो वा भविष्यति—सर्व्वाण्येवेति। वाक्यगौरवम्?— इति चेन्नाल्पत्वात्। इति चेद्भवान् पश्यति,—सर्व्ववचनेन वाक्य-गौरवमापद्यते इति। तदुच्यते। नैष दोषः। अल्पत्वात् वाक्यस्य। यस्मादेवमपि अल्पमेवेदं वाक्यं भवति,—सर्व्वाण्येवान्वाहार्य्यव-न्ति—इति। यद्येवं—किमतो भवति?। एतदतो भवति,—

सर्व्वकर्म्मशेषभूतस्य श्राद्धस्य दक्षिणायाश्चाल्पीयसा सूत्रेणाभिधानात् परं वाक्यलाघवं मन्यमानः खल्वयमाचार्य्योऽन्यद्वाक्यलाघवमनाद्रियमाणः सर्व्वाणीत्याह। यथा भगवानक्षपादः—"अथ तत् पूर्व्वकमनुमानं तत् त्रिविधं पूर्व्ववत् शेषवत् सामान्यतो दृष्टञ्च" इति, 'तत् त्रिविधम्'—इति सूत्रयाञ्चकार। तदुक्तं भगवता वात्स्यायनेन न्यायभाष्ये—"विभागवचनादेतत् त्रिविधमिति सिद्धे त्रिविधवचनं, महतोमहाविषयस्य न्यायस्य लघीयसासूत्रेणोपदेशात् परं वाक्यलाघवं मन्यमानस्यान्यस्मिन् वाक्यलाघवेऽनादरः"—इति। विप्रुट्शेनापि स्तूयते इति च नये, सर्व्वशब्दोयमन्वाहार्य्यस्तुत्यर्थोऽपि भवति। कथम्?। इत्थं नामेदमन्वाहार्य्यं यदनेन सर्व्वाण्येव गृह्यकर्म्माणि—महान्त्यपि उपकृतानि भवन्तीति।

सर्व्वशब्दः श्रौतानामप्युपग्रहार्थः—इति भट्टभाष्यम्। नैतदेवम्। अथातो गृह्यकर्म्माण्युपदेक्ष्याम इति प्रतिज्ञायैतत् सूत्रणात्। अन्यशास्त्रपरिभाषायाश्चान्यत्रानुपयोगात्। श्रौतसामान्येष्वेव चाविशेषेण प्रसङ्गात्। न च सर्व्वशब्दोपि शक्नोति श्रौतमर्थमभिवदितुम्! कस्मात्?।"सर्व्वत्वमाधिकारिकम्"—इति सिद्धान्तविरोधात्। गृह्यस्मृतिः खल्वियमाचार्य्येणारब्धेत्येतन्न प्रस्मर्त्तव्यम्। सोयं सर्व्वशब्दः सर्व्वं ........वावगमयति, न जातुचिदन्यद्वैदिकं लौकिकं वा किञ्चिदिति। अनर्थकं सर्व्वत्रचनमिति चेत्,—काममनर्थकं भवतु, न तु शक्नोत्यन्यदभिधातुम्। "आम्नायस्यार्थं वक्तुं प्रभवामो नाम्नायं पर्य्यनुयोक्तुम्"—इति हि पदवाक्यप्रमाणकुशलाना स-

मयः। तस्मात्—"पूर्णाहुत्या सर्व्वान् कामानाप्नोति" इति वदाधिकारिकमेव सर्व्ववचनम्।

अनन्तर सूत्रान्वितानामेव गृह्यकर्म्मणामयमन्वाहार्य्यविधिर्न सर्व्वेषामित्यपि कदाचिद्भवत्याशङ्का कस्यचिन्मन्दमतेरिति सा माभूदिति वा सर्व्वाण्येवेति वचनम्। परमार्थतस्तु नास्तीयं शङ्का। कस्मात्?। गृह्यकर्म्मणां प्रतिज्ञानात्, तेषाञ्चोच्चावचानामेकेन सूत्रेणासम्भवात् सूत्रद्वयेन कालविधानात्, अन्वाहार्य्यस्य परस्य चैकैकेनैव सूत्रेण विधानसम्भवात्। तथा चोक्तम्। "आनन्तर्य्यमचोदना"—इति। अनन्तरस्य च सूत्रस्य निरुक्तकालादरार्थतया पर्य्यवसानात्। मन्दमतिबोधनार्थमप्याचार्य्याणां किञ्चित् सूत्रितमुपलभ्यते—"स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्"—इत्येवमादिकम्।

अपिच न वयमेतद्विचारयामः—सर्व्ववचनं कर्त्तव्यं, न वा कर्त्तव्यमिति। किन्तर्हि?—कृते सर्व्ववचने किमतः प्रतिपत्तव्यम्;—सर्व्वाणि श्रौतानि, उत, सर्व्वाणि गृह्यकर्म्माण्येवेति। तच्च सर्वाणि गृह्यकर्म्माण्येव—इति व्यवस्थापितम्। अन्यच्च पुरस्तादुक्तम्। न च वाक्यमिदं प्रकरणाद्बलवद्भविष्यति—इति वाच्यम्। यतो न खल्वत्र किमप्यस्ति प्रकरणं यस्माद् वाक्यं बलवद्भविष्यतीति मन्यसे। "कर्त्तव्यस्येतिकर्त्तव्यताकाङ्क्षस्य वचनं प्रकरणं, प्रारम्भो हि स तस्या वचनक्रियायाः, स एष विध्यादिर्विध्यन्तापेक्षः"—इति खल्वाहुः प्रकरणलक्षणमाचार्य्याः शवरस्वामिनः पूर्व्वस्यां मीमांसायाम्। न चेह किञ्चित् कर्त्तव्यं विहितम्।

न चाविदितं नामाकाङ्क्षति कश्चिदिति कर्त्तव्यताम्। विधौ ख-ल्वियमाकाङ्क्षा भवति। तत्र हि कर्त्तव्यतया चोदनाऽवगम्यते। "यत्र हि कर्त्तव्यतया चोदना—इति गम्यते; तत्र इतिकर्त्तव्य-ता आकाङ्क्ष्यते"—इति हि तन्त्रस्थितिः। प्रतिज्ञैव खल्वियमाचा-र्य्यस्य—"अथातो गृह्याकर्म्माण्युपदेक्ष्यामः"—इति। न च वाक्य-मपि साधारणं, सर्व्वत्रस्याधिकारिकत्वादित्यवोचाम।

अपिच। सर्व्वाणीति तावद्विशेषणम्। न चात्र किञ्चिद्विशे-ष्यमुच्यते। भवितव्यन्तु तेन। अन्यथा विशेष्यसाकाङ्क्षं खल्विदं वाक्यमपर्य्यवसितमेव स्यात्। तस्मादस्य निराकाङ्क्षप्रतिपत्तये—गृह्याकर्म्माणीत्यनुषज्यते। तदिदं सर्व्वाणि गृह्याकर्म्माणीत्येवं पर्य्य-वस्यति। न खल्वेवं पर्य्यवसितं सद्वाक्यं गृह्याकर्म्मणामन्यद्विषयी-करोति—येन वाक्यमिदं प्रकरणाद्बलवदिति कथयसि! स खल्व-यमस्थान एवोपालम्भो—वाक्यमिदं प्रकरणाद्बलवद्भविष्यति—इति।

आह। व्यपेतत्वान्नास्त्यनुषङ्गो गृह्याकर्म्माणीति। नैतदेवम्। वाक्यस्यास्य साकाङ्क्षत्वात्, वाक्यशेषस्य चान्यस्यानुपलम्भात्, गृह्या-कर्म्माणीत्यस्य च वाक्यशेषीभवितुं योग्यत्वात्। उपक्रमश्चैवमनु-गृहीतो भवति। इतरथाऽत्र सम्भवन्नप्ययमर्थोऽन्यत्रापि नीयेत। कल्पयितव्येपि कस्मिंश्चिद्वाक्यशेषे—गृह्याकर्म्माणि इत्येतदेव कल्प-यितुमुचितम्। कस्मात्?। उपक्रमानुग्रहात्। "प्रकृतप्रत्ययस्य न्याय्यः"—इति हि तन्त्रयुक्तिः।

अपिच। न खलु व्यपेतमनुषज्यते—गृह्याकर्म्माणीति। कस्मात्?। प्रतिसूत्रं तत् सम्बन्धावगमादनुप्रसंस्कारत्वात्। प्रतिसूत्रं खल्व-

ल्पीयते गृह्यकर्म्म, तत्र तत्र यथायथं विपरिणाम एव परं वि-शेषः। न चैतावता किञ्चित् हीयते। बुद्ध्यारोहमेव खल्वस्माकं गृह्यकर्म्म। तस्मादनुप्रसंस्कारत्वादिहापि तदेव संबन्धुमर्हति। अथातो गृह्याकर्म्माण्युपदेक्ष्यामः,—इति च प्रतिज्ञानात्। प्रतिज्ञा खल्वियमिदमर्थैवाचार्य्यस्य—यद् वक्ष्यमाणाः सर्व्वाः परिभाषा गृह्यकर्म्म परा भवेयुरिति। यदि च—भिन्नविभक्तिवचनतया निर्देशादनन्तरेष्वपि योगेषु गृह्यकर्म्म नानुषज्येत,—नानुषज्येत चा-चापि व्यपेतत्वात्। तथापि निराकाङ्क्षत्वप्रतिपत्तये वचनानामव-श्यमेषु वाक्यशेषः कल्पयितव्यो भवति,—इति गृह्यकर्म्मैव वाक्य-शेषतया कल्पयितुमुचितम्। आचार्य्यप्रतिज्ञामात् खल्वागतमेव हृदयं—तत्,—न युज्यते विनाकारणमुत्स्रष्टुम्। कल्पयितव्ये हि कस्मिंश्चित्, कस्यचिन्निराकाङ्क्षप्रतिपत्तये, बुद्ध्यारोहमेव तावत् कल्पयितुमुचितं—तेन चेन्निराकाङ्क्षं क्रियते। श्रुतस्योपेक्षा-नर्हत्वात्।

दृश्यते खल्वाचार्य्याणामेवमपि सम्बन्धोऽनुमतः प्रस्तुतेन प-दार्थेन सूत्रेषु—"अभ्युपेत्यकालभेदे दोषवचनात्" इति, "अनुक्त-दोपपत्तेश्च" इति चैवमादिषु। अतएव व्याख्यातं भगवता वात्स्या-यनेन, "न व्याघातो हवने इत्यनुवर्त्तते"—इति पूर्व्वस्मिन्, "पुनरुक्तदोषोऽभ्यासे नेतिप्रकृतम्"—इति चोत्तरस्मिन् सूत्रे। "तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः" "न कर्म्मकर्त्तृसाधनवैगु-ण्यात्" "अभ्युपेत्यकालभेदे दोषवचनात्" "अनुवादोपपत्तेश्च" इति न्यायचरणानि सूत्राणि। तस्मात् यथा "सत्यप्रयोगे पुरुष-

येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षमनिमित्तं"—इति धर्म्म एवानि-मित्तमिति कल्पते—"आसनं वा सर्व्वत्रैवमूतः" इति च खगालोक्त एव व्यवतिष्ठते। एवमिहापि सर्व्वाणि गृह्यकर्म्माणि इत्येवार्थः सम्पद्यते।

न खलु श्रौतानीत्यस्य वाक्यशेषतायां किञ्चित् प्रमाणमस्ति। न खल्वेवं गृह्यकर्म्मस्वन्वाहार्य्यं प्राप्नोति। न चैवमाचार्य्यस्य सम्यग् वादित्वं भवति। स खल्वेवमन्यत् प्रतिजानानोऽन्यथाभिदधानः प्रेक्षावद्भिरुन्मत्तवदुपेक्ष्येत! न चैवं सति कात्यायनस्य वचनानि—गृह्यकर्म्मविशेषेष्वेव श्राद्धनिषेधकानि—

"नाष्टकासु भवेत् श्राद्धं न श्राद्धे श्राद्धमिष्यते।
न सोष्यन्तीजातकर्म्म प्रोषितागतकर्म्मसु"।

इत्येवमादीन्युपपद्यन्ते। नापिकर्म्मसामान्यमेव वाक्यशेषतया कल्पयितुं शक्यते। कस्मात्?। सन्ध्यास्नानदानादिषु, लौकिकेषु चाविशेषेणप्रसङ्गात्।

तदेवं सिद्धे गृह्यकर्म्मभिः सम्बन्धेऽस्य वाक्यस्य, सर्व्वशब्दश्चेत् श्रौतसंग्रहार्थं कल्पयसि—भेत्स्यसि तर्हि वाक्यम्!—कल्पयिष्यसि चान्यद्विशेष्यं सर्वाणीत्यस्य निराकाङ्क्षप्रतिपत्तये। कथम्?। गृह्य-कर्म्माण्यन्वाहार्य्यवन्ति, सर्वाणि श्रौतान्यन्वाहार्य्यवन्ति,—इति वचन-व्यक्तिभेदात्। तस्मादस्मदुक्त एवार्थे धीमद्भिर्यत्न आस्थेयः।

तदिदं श्राद्धं मातृपूजादिपूर्व्वकमेव भवति। कस्मात्?

"अनिष्ट्वा तु पितॄन् श्राद्धैः कर्म्म कुर्य्यान्न वैदिकम्।
तत्रापि मातरः पूर्व्वं पूजनीयाः प्रयत्नतः"।

इत्येवमादिकर्मप्रदीपदर्शनात्। अत्र प्रत्यवस्थीयते। नन्विदमेव कात्यायनवचनं वैदिकेषु श्राद्धं दर्शयति?। अत्रोच्यते। यदि नामेदं वचनं वैदिकेषु श्राद्धं दर्शयति, तत् किमस्माकमपचीयते?। न खल्ववैदिकानि गृह्यकर्माणि आचार्य्यः समुपदिदेश। ननु न ब्रूमोऽवैदिकानि गृह्यकर्माण्याचार्य्यः समुपदिदेश—इति। सत्यं वैदिकान्येवैतानि गृह्यकर्माणि। परमेभ्योऽन्यानि सन्ति वैदिकानि कर्माणि?। सन्तु नाम, किमतो भविष्यति?। यद्येवम्, एतदतो भविष्यति,—सर्वशब्दस्य सामान्यार्थतामनेन वचनेन कात्यायनः स्पष्टयाञ्चकार—इति। उच्यते। नैतावताभिषेण वैदिकसामान्यपरता सर्वशब्दस्य शक्यतेऽध्यवसातुम्। कस्मात्?। क्रमपरत्वाद्वचनस्य। कात्यायनवचनं खल्विदमनूद्य श्राद्धं, वैदिकस्य कर्म्मं, क्रममनयोर्विधत्ते, न वैदिकेषु श्राद्धम्। कस्मादवगम्यते?। साक्षादेव समाम्नानात्। पितॄन् श्राद्धैरनिष्ट्वा वैदिकं कर्म न कुर्य्यात्—इति श्राद्धं सिद्धवदनूद्य वैदिकस्य, क्रममात्रमेव साक्षादिह समाम्नायते। तत्रैवं सति यथा प्राप्तमेवानूद्यते इति न किञ्चिदनुचितम्। अन्यैव वचनव्यक्तिराचार्य्यस्य—सर्वाणि श्राद्धवन्तीति। अन्यैव च वचनव्यक्तिः कात्यायनस्य—श्राद्धैः पितॄनिष्ट्वा वैदिकं कुर्य्यादिति। तदत्र विधीयते श्राद्धमेकस्याम्, अनूद्य च तत्, क्रममात्रमन्यस्याम्। दर्शितश्चास्माभिरन्यथा वैदिकसामान्येषु श्राद्धप्रसक्तिरिति, तदपि न प्रस्मर्त्तव्यम्। वैदिकपदस्य साक्षात् श्रुत्युक्तकर्मपरतायामपि प्राचीन एव दोषः परावर्त्तते इत्यास्तां विस्तरः। श्राद्धस्येदं केषुचित् प्रथमप्रयोग एव, केषुचित्

प्रतिप्रयोगमेव, केषुचिच नैव कर्त्तव्यमित्याचक्षते। तदेतत् सर्व्वं परिशिष्टकृतः कात्यायनस्य वचनादवगन्तव्यम्। ग्रन्थगौरवभिया परमुपरम्यतेऽस्माभिः ॥ ५ ॥ * ॥

## अपवर्गेऽभिरूपभोजनं यथाशक्ति ॥ ६ ॥

क्रियायाः परिसमाप्तिरपवर्ग इत्युच्यते। तस्मिन्नपवर्गे। अभिरूपो विद्वान् कृतबुद्धिरनुष्ठाता चेत्याहुः। तदस्याभिरूपस्याभिरूपयोरभिरूपाणां वा, भोजनमशनं, यथाशक्ति; यथा शक्यते तथैव न पुनर्निर्बन्धेनेत्येतत्। कारयितव्यमिति वाक्यशेषः। गृह्यकर्मसु विद्यादिति वा सम्बध्यते। यथा शक्यते, तथाऽभिरूपभोजनं गृह्यकर्मणामङ्गं जानीयादिति तत्रार्थः। यथाशक्तीति सूचयन्नाचार्य्यः शक्त्यपेक्षयाऽभिरूपभोजनं कर्माङ्गमिति दर्शयति। तेन सत्यामपि शक्तौ यत्राभिरूपस्य भोजनं—तत्र वैगुण्यमवगम्यते। स्मरति च भगवान् मनुः—

"प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते।
न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम्"।

इति ॥ ६ ॥ * ॥

सेयं परिभाषिता सर्व्वकर्मसाधारणी परिभाषा। इदानीन्तानि कर्माणि वक्तव्यानि। तत्र प्रायेणाग्निसाध्यत्वात् कर्मणामग्न्याधानकालमावदाह।—

**ब्रह्मचारी वेदमधीत्यान्त्यां समिधमभ्याधास्यन्॥ ७॥**

ब्रह्म वेदः, तच्चरति प्राप्नोति यथोक्तव्रतादिभिरिति ब्रह्मचारी प्रथमाश्रमीत्याचक्षते। स चोपकुर्व्वाणक एवार्थात्। इतरस्यामरणमेव गुरुकुलावस्थानानुष्ठानात्। स खल्वयं ब्रह्मचारी—.

"वेदानधीत्य वेदौ वा वेदं वापि यथा क्रमम्"।

इति स्मरणात्,—वेदान्, वेदौ, वेदं, वा अधीत्य यथावदधिगम्येत्यर्थः। तदत्रानुपादेयतया "ग्रहं सम्मार्ष्टि" इतिवत् सङ्ख्या न विवक्षिता,—"सर्व्वेषां वा लक्षणत्वादविशिष्टं हि लक्षणम्"—इति सिद्धान्तात्। न खल्वत्र "पशुनायजेत" इत्यादाविव वेदस्याध्ययनं विधित्सितम्, किन्त्वनूदितम्, अनुवादस्य प्राप्तस्यैव भवति,—इति यथाप्राप्तमेवानूद्यते इत्यदोषः। तदयमर्थः। सायम्प्रातर्विहितसमिदाधानो ब्रह्मचारी, वेदमधीत्य (ब्रह्मचर्य्यसमाप्तिसमये) अन्त्यां—अन्ते अवसाने भवां—पश्चिमां, समिधम्—

"नाङ्गुष्ठादधिका ग्राह्या समित् स्थूलतया क्वचित्।
न वियुक्ता त्वचा चैव न सकीटा न पाटिता।
प्रादेशान्नाधिका नोना न तथा स्याद्विशाखिका।
न सपर्णा न निर्वीर्य्या होमेषु च विजानता"।

इति कर्म्मप्रदीपोक्तलक्षणाम्, अभ्याधास्यन् आभिमुख्येन प्रातराधास्यन्—अग्नौ प्रक्षेप्स्यन्,—"अग्निसमाधानं कुर्व्वीत"—इति परस्मात् सिंहावलोकितन्यायेन सम्बध्यते। तथा च ब्रह्मचर्य्यपरिसमाप्तिसमये, ब्रह्मचारिणा गृहस्थाश्रमं प्रविविक्षुणा या पश्चिमा समिदाधेया, सा तु—

"न खेऽग्नावन्यहोमः स्याल्लुक्तैकां समिदाहुतिम् ।
स्वगर्भसंस्क्रियार्थांश्च यावन्नासौ प्रजायते" ।

इति कर्म्मप्रदीपदर्शनात्—सत्यप्यन्यस्मिन् होमसाधने पित्राद्यार्थ्यसमाहितेऽग्नौ, तदानीमेव वक्ष्यमाणवैश्यकुलादियोनिमन्यमन्तरमाधाय, तस्मिन्नाधातव्या इति फलितार्थः । सत्यप्यन्यस्मिन्नग्नाविदानीमन्यस्याग्नेराधानफलन्तूपरिष्टादुपदर्शयिष्यत्याचार्य्यः— "स एवास्य गृह्योऽग्निर्भवति" इति । अत्र च—

"अनाश्रमी न तिष्ठेत्तु क्षणमेकमपि द्विजः" ।

इत्यादिस्मरणात् स एवादधीत—यस्मै पूर्व्वमेव काचित् कन्या केनचिद्वाग्दत्तासीदित्येतत् स्पष्टयति कात्यायनः ।—

"यस्य दत्ता भवेत् कन्या वाचा सत्येन केनचित् ।
सोऽन्त्यां समिधमाधास्यन्नादधीतैव नान्यथा" ।

इति ॥ ७ ॥ * ॥

आधानकालान्तरमाह ।—

## जायाया वा पाणिं जिघृक्षन् ॥ ८ ॥

यस्यामात्मा जायते सेयं पाणिग्रहणादिसंस्कारसंस्कृता नारी जायेत्युच्यते । तस्या जायायाः । (भाविनिभूतवदुपचारेण जायाया इत्याह) । पाणिं हस्तं, जिघृक्षन्—यथाविधिग्रहीतुमिच्छन्नित्येतत् । "अग्निसमाधानं कुर्व्वीत"—इति सम्बध्यते । वाशब्दः पूर्व्वकल्पापेक्षया विकल्पार्थः । तदत्र "भार्य्यादिरग्निः" इति शास्त्रान्तरदर्शनात् भार्य्यासम्बन्ध एक एव निमित्तमाधानस्य । तस्य च कालद्वयमुक्तं—अभ्याधास्यन्निति, जिघृक्षन्निति च ॥ ८ ॥ * ॥

अथ चाधानं लक्षणपूर्व्वकं समन्त्रकमग्नेः स्थापनमुच्यते। आङ्-पूर्व्वस्य दधातेरारोपणवाचित्वात्। तथा प्रसिद्धेश्च। तत्, किं लक्षणं नाम?—कथञ्चाग्नेः स्थापनम्?—इतीदमिदानीं त्रिभिः सूत्रैराह।—

**अनुगुप्ता अप आहृत्य, प्रागुदक्प्रवणं देशं समं वा; परिसमुह्योपलिप्य, मध्यतः प्राचीं रेखा-मुल्लिख्योदीचीञ्च संहतां पश्चात्, मध्ये प्राचीस्तिस्र उल्लिख्याभ्युक्षेत् ॥ ९ ॥**

अनुगुप्ता अनुरक्षिताः—आच्छादिताः, पतितादिभिरदृष्टा इत्येतत्। अप उदकं, आहृत्य—अनिषिद्धजलाशयादानीय, "ताभिः प्रक्षालितपाणिपादवदन आचम्य"—इति भट्टभाष्यम्। प्रागुदक्-प्रवणम्—प्राग्वा, उदग्वा, क्रमनिम्नम्, देशं भूमिभागम्,—

"कुशैः सम्मार्ज्जयेद्भूमिं शुद्धामादौ शुचिस्ततः।
हस्तमात्रां चतुरस्रां गोमयेनोपलेपयेत्"।

इत्येवमादिस्मृत्यन्तरानुमतम्। समं, प्रागुदगाद्यनिम्नमित्येतत्। वाशब्दो विकल्पार्थः। तद्व्यवस्थामाह गृह्यसंग्रहः।—

"प्राक्प्रवणं ब्रह्मवर्चस्यमुदक्प्रवणं यशोत्तमम्।
पित्र्यं दक्षिणतो नीचं प्रतिष्ठालम्भकं समम्"।

इति।—परिसमूह्य, परि—परितः सर्व्वत इत्यर्थः। समूह्य—"कुशैः सम्मार्ज्जयेद्भूमिम्"—इति दर्शनात्—कुशैः पांश्वादिकं सम्य-गुत्सार्य्य, "परिसमूह्य वितस्तिचये उत्तरत उत्करं करोति"

इति गृह्यान्तरदर्शनात्—उत्तरस्यां दिशि वितस्तित्रयोपरि प्रक्षिप्य। उपलिप्य,—"गोमयेन समन्तं पर्य्युपलिम्पति"—इति दर्शनात्—"गोमयेनोपलेपयेत्"—इति च स्मरणात् योग्यत्वाच्च, गोमयोदकेनेति वाक्यशेषः। देशमिति सम्बध्यते। मध्यतः,—स्थण्डिलाभ्यन्तरे, दक्षिणांश एव, न तु मध्यांश एवेत्यर्थः। कस्मात्?। हस्तमात्रस्थण्डिलेष्युदग्गतैकविंशत्यङ्गुलरेखानुरोधात्। सप्तसप्ताङ्गुलान्तरितप्राग्गतरेखात्रयस्योदग्गतरेखाऽनुषक्तस्यानुरोधाच्च। अत एव हस्तमितस्थण्डिले स्मर्य्यते।—

"अङ्गुष्ठमात्रं भूभागं त्यक्त्वा दक्षिणतः सुधीः।
उत्तरे द्व्यङ्गुलं त्यक्त्वा पश्चिमेऽप्यङ्गुलद्वयम्"।

इति।—प्राचीं, प्राग्गतां, रेखां द्वादशाङ्गुलप्रमाणां पार्थिवीं पीतवर्णाम्,—दक्षिणहस्तेन—कुशेन,—उल्लिख्य। उदीचीञ्च, उदग्गताञ्च रेखामेकविंशत्यङ्गुलप्रमाणामाग्नेयीं—लोहितवर्णामुल्लिख्य। चकारो रेखामुल्लिख्येत्यनुषङ्गार्थः। तामिमामुदीचीं रेखां विशिनष्टि।—संहतां, संलग्नां। पश्चात्, पश्चिमस्यां प्राग्गताया इत्येतत्। 'मध्ये'—उदग्गतायाः, तल्लग्ना इति यावत्। 'प्राचीः'—प्राग्गताः, 'तिस्रः' रेखाः प्रादेशप्रमाणाः सप्तसप्ताङ्गुलान्तरिताः—दक्षिणत उपक्रमदर्शनादुत्तरोत्तराः, उल्लिख्येत्यन्वयः। आसाञ्च तिसृणां रेखानामेका प्राजापत्या कृष्णवर्णा, द्वितीया ऐन्द्री नीलवर्णा, तृतीया सौमी शुक्लवर्णा इत्यवगन्तव्यम्। तदेतत् सर्व्वं परिशिष्टवचनात् स्मृत्यन्तरसंवादाच्चावसीयते। तदाह कात्यायनः।

कर्म्मोपदिश्यते यत्र कर्तुरङ्गं न चोच्यते।
दक्षिणस्तत्र विज्ञेयः कर्म्मणां पारगः करः"।

इति।

"लक्षणे प्रागतायास्तु प्रमाणं द्वादशाङ्गुलम्।
तन्मूललग्नायोदीची तस्या एवं नवोत्तरम्"।
उदग्गतायाः संलग्नाः शेषाः प्रादेशमात्रिकाः।
"सप्तसप्ताङ्गुलांस्त्यक्ता कुशेनैव समुल्लिखेत्"।

इति च। अपिच स्मर्य्यते।

"प्राग्गता पार्थिवी ज्ञेया चाग्नेयी चाप्युदग्गता।
प्राजापत्या तथा चैन्द्री सौमी च प्राक्कृता स्मृता।
पार्थिवी पीतवर्णा स्यादाग्नेयी लोहिता भवेत्।
प्राजापत्या भवेत् कृष्णा नीला चैन्द्री प्रकीर्त्तिता।
श्वेतवर्णा च सौमी स्याद्रेखानां वर्णलक्षणम्"।

इति। अत्र चाङ्गुलिमानादिकं यजमानस्येत्याह कर्म्मप्रदीपः।

"मानक्रियायामुक्तायामनुक्ते मानकर्त्तरि।
मानकृत् यजमानः स्याद् विदुषामेष निर्णयः"।

इति। एतच्च रेखोल्लेखनम्,—यावदग्निस्थापनं सव्यहस्तं भूमौ निधाय कर्त्तव्यमित्याह गृह्यासंग्रहः।

"सव्यं भूमौ प्रतिष्ठाप्य प्रोल्लिखेद्दक्षिणेन तु।
तावन्नोत्थापयेत् पाणिं यावदग्निं निधापयेत्"।

इति। तदेवं यथोक्ता रेखा उल्लिख्य,—"उल्लिख्योद्धृत्याभ्युक्षेत्"—इति कात्यायनसूत्रात्;—

"उत्करं स्फ्यरेखाभ्योरत्निमात्रे निधापयेत् ।
द्वारमेतत् पदार्थानां प्रागुदीच्यां दिशि स्मृतम्" ।

इति गृह्यासंग्रहवचनाच्च ;—रेखाभ्योमृदमुद्धृत्य प्रागुदीच्यां दिश्य-रत्निमात्रे निधाय, 'अभ्युक्षेत्'—"उक्षसेचने" इति स्मरणादाभिमुख्येन—

"उत्तानेनैव हस्तेन प्रोक्षणं समुदाहृतम् ।
न्यञ्चताभ्युक्षणं प्रोक्तं तिरश्चावोक्षणं मतम्" ।

इति स्मृत्यन्तरोक्तप्रकारेण, सिञ्चेदद्भिरिति सामर्थ्यात्, यथोक्ता रेखा इत्यर्थः ।

अथैवमुल्लिख्याभ्युक्षेदिति श्रूयमाणमानन्तर्य्यमतिक्रम्यते । शास्त्रं खल्विदम्—उल्लिख्याभ्युक्षेत्—इति । न च शास्त्रं नामातिक्रमितव्यम्। नैतदेवम् । आनन्तर्य्यश्रवणाभावात् । न खल्वानन्तर्य्यमिहोल्लेखा-भ्युक्षणयोः श्रूयते—किन्तर्हि ?—पूर्व्वापरीभावमात्रम्। कस्मात्?। उल्लिख्याभ्युक्षेदिति क्त्वाश्रवणात्। पूर्व्वकालतायां हि क्त्वाप्रत्ययं स्म-रन्ति शाब्दिकाः—("एककर्तृकयोः पूर्व्वकाले क्त्वा"—इति)—नत्वा-नन्तर्य्ये। न खल्वेवमप्युल्लेखस्य पूर्व्वकालतायामस्ति कश्चिद्विरोधः। येनोल्लिख्याभ्युक्षेदिति क्त्वाश्रवणमतिक्रम्येत । यथा खल्वधीत्य वेद-मधीत्य च विचारशास्त्रं स्नातापि, नातिक्रामति—"वेदमधीत्य स्नायात्"—इति शास्त्रं, तथेहापीत्यदोषः। अतएव—"वेदमधीत्य स्नायादिति शास्त्रन्त्वध्ययनसमावर्त्तनयोः पूर्व्वापरीभावसमानक-र्तृकत्वे एवाचष्टे, न त्वानन्तर्य्यम्"—इति माधवाचार्य्याः। अपिच। वाक्यबलात् खल्वत्र मृदुद्धरणादिकं क्रियते, क्रमस्त्वाश्रित्य प्रत्यय-

तिष्ठते भवान्। तच्चैतदनुचितम्। दुर्बलोहि क्रमः—बलवत्तरञ्च वाक्यम्। तदुक्तम्—"श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्"—इति। तस्माद्वाक्यानुरोधात् क्रमं बाधेमहि—न क्रमानुरोधात् वाक्यम्। अतएवोक्तं शाखान्तराधिकरणे—"विरोधिना त्वसंयोगात् ऐककर्म्म्यऽतत्संयोगात् विधीनां सर्व्वकर्म्मप्रत्ययः स्यात्"—इति। अपिच। मृदुद्धरणादिकं पदार्थः, क्रमस्तु पदार्थानामुपकारकोगुणः। न खलु गुणानुरोधेन पदार्थ एव न कर्त्तव्यो भवतीति युक्तम्! प्राप्तानां पदार्थानां उत्तरकालं हि क्रम आपतति। यदा च पदार्थः प्राप्नोति, तदाक्रम एव नास्ति। न खलु पूर्व्वसिद्धः पदार्थः पश्चिमसिद्धेन क्रमेण विरोधादकर्त्तव्यो भवति!

नन्वाचार्य्यानुक्तमपि मृदुद्धरणादिकं कथमस्माकमप्यभिधीयते—(यतोऽयं विचारः—श्रवणमतिक्रम्यते वा, न वा अतिक्रम्यते इति।)—परोक्तत्वात्। अक्रियैव खल्वियमुच्यते। तदाह कात्यायनः।—

"अक्रिया त्रिविधा प्रोक्ता मुनिभिः कर्म्मकारिणाम्।
अक्रिया च परोक्ता च तृतीया चायथाक्रिया।
स्वशाखाश्रयमुत्सृज्य परशाखाश्रयन्तु यः।
कर्त्तुमिच्छति दुर्म्मेधा मोघं तत्तस्य चेष्टितम्"।

इति। उच्यते। शाखान्तराधिकरणन्यायेनैकमेवेदं कर्म्मेत्यदोषः। अतएव जैमिनिराचार्य्यस्तस्मिन्नेवाधिकरणे—"एकं वा संयोगरूपचोदनाख्याविशेषात्"—इति सिद्धान्तयाञ्चकार। एकत्वे च कर्म्मणो

यत्र क्वचित् किञ्चिदङ्गमामनन्ति, अन्यत्रापि तदुपसंहर्त्तुमुचितम्। किमन्यत् कुर्य्यादियं चिन्ता—ऋते गुणोपसंहारात्?। फलञ्चेदमभिहितमस्याश्चिन्ताया भगवता भाष्यकारेणाचार्य्येण च भङ्ग्यन्तरेण। बादरायणस्त्वाचार्य्योऽस्येदमेव फलं साचादसूत्रयत् शारीरके। "उपसंहारोऽर्थाभेदात् विधिशेषवत् समाने च"—इति। अतएव स्मरति भगवान् कात्यायनोऽपि।

"यन्नाम्नातं स्वशाखायां परोक्तमविरोधि च।

विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्म्मवत्"।

इति। या पुनरुपदर्शितापुरस्तात् परोक्तनिन्दा—'परोक्ता च'—इति। सा खलु, विरोधिनीमनाकाङ्क्षिताञ्च परोक्तां क्रियां निन्दतीत्यवगम्यते। कस्मात्?। 'स्वशाखाश्रयमुत्सृज्य'—इति, 'परोक्तमविरोधि च'—इति च समाम्नानात्। न चेदं मृदुद्धरणादिकं पारशाखिकमपि; आचार्य्यपुत्रेणैवाभिधानात्। न खलु स्वशाखायां ग्रन्थान्तरे श्रूयमाणमपि पारशाखिकं भवति॥ ९॥

## लक्षणावृदेषा सर्व्वत्र॥ १०॥

परिसमूहनाद्यभ्युक्षणान्तं कर्म्म लक्षणमुच्यते। तस्य खल्वस्य लक्षणस्य, आवृत्परिपाटी, एषा अनन्तरोक्ता न तु विपरीता, सर्व्वत्र यत्र यत्राग्निः प्रणीयते तत्र तत्रेत्यर्थः। अत्र यद्यपि 'प्रागुदक्प्रवणं देशं समं वा परिसमूह्य'—इति श्रुत्या लक्षणमिदं साक्षाद्भूमेरुपकारकं तथापि भूसंस्कारद्वारैव प्रणाल्या अग्न्याधानस्याप्युपकारकं प्रकरणादित्यवगन्तव्यम्। 'अग्निसमाधानं कुर्व्वीत'—इति हि प्रक-

रणम्। यथा व्रीहीनवहन्तीत्यवघातस्य द्वितीया श्रुत्या साक्षाद् व्रीह्युपकारकत्वेपि, प्रणाल्या क्रतूपकारकत्वमपि प्रकरणादिष्यते, तथात्रापि द्रष्टव्यम्। वाक्येन वा लक्षणमग्निप्रणयनमात्राङ्गं भवति। 'लक्षणावृद्देषा सर्व्वत्र'—इति हि समामनन्ति। अतएव तत्र तत्राग्निप्रणयने लक्षणं वक्ष्यत्याचार्य्यः—'उत्तरार्द्धे परिवृतस्य लक्षणं कृत्वाऽग्निं प्रणयन्ति'—इति, 'पूर्वस्याः कर्ष्वाः पुरस्ताल्लक्षणं कृत्वाग्निं प्रणयन्ति'—इति च।

तदिदं लक्षणमाधानाङ्गमग्निप्रणयनाङ्गं वा भूमिसंस्कारद्वारेति संस्कृतायामपि भूमावाधानाद्यङ्गतया प्राप्तं लक्षणं कर्त्तव्यमेव। न चावघातस्य कृष्णलइव, संस्कृतेपि देशे लक्षणस्य बाध एव, द्वारबाधादिति वाच्यम्। शास्त्रावधारणवेलायां प्रयोजनवत्त्वाल्लक्षणस्य, इदानीमनुष्ठानवेलायामेव हि क्वचित् प्रयोजनाभावोऽवगम्यते, कृष्णले त्ववघातस्य शास्त्रावधारणवेलायामेव नास्ति प्रयोजनमिति वैषम्यात्। याज्ञिकास्तु खल्वनुष्ठानवेलायामालस्यादिदोषवशाद्व्रीह्यादिस्थाने गृहीतमपि तण्डुलाद्यवहन्ति वितुषीकृतमपि। विहिताविहितत्वसन्देहे च विहिताकरणादविहितकरणमेव न्याय्यमित्याचक्षते।

यत्र त्वाहित एवाग्निर्नीयतेऽन्यस्मिन् प्रदेशे, कारणवशात्, तत्र यद्यपि निष्पन्नत्वादाधानस्य तदङ्गं लक्षणमपि न युज्यते कर्त्तुम्, तथापि प्रदेशस्य तस्य संस्कारार्थं तत्रापि लक्षणं कर्त्तव्यमेव। स्थापनमात्रस्य तत्राप्यविशेषाच्च। 'लक्षणावृद्देषा सर्वत्र'—इति ह्यनुशासनम्। 'लक्षणं कृत्वाग्निं प्रणयन्ति'—इति च दर्शनम्। "समू-

श्चोपलिप्ते।ल्लिख्योद्धृत्याभ्युच्चेदेव संस्कारोऽनुगतेऽग्नौ भूयः"—इति च गृह्यान्तरम्। अतएवास्मादेव गृह्यान्तराभ्निरूपितं तत्त्वज्ञैः—"यद्यग्निस्थापनानन्तरं कर्मकाले वृष्ट्यादिशङ्कया संस्कृताग्निरन्यत्र नीयते तदा पुनर्भूसंस्कारः कर्त्तव्यः"—इति।

न तु लक्षणमग्नेरपि संस्कारः, प्रामाणाभावात्। न खल्वस्ति किञ्चित् प्रमाणमग्नेरपि संस्कारोलक्षणमिति। शब्दप्रमाणकः खल्वयमर्थो—ऽयं कर्त्तव्योऽयञ्च न कर्त्तव्य—इति, अयमस्योपकरोति नास्य—इति चैवमादिः। न खल्वस्ति कश्चिच्छब्दोलक्षणमग्नेरुपकरोतीति। श्रुत्या तावल्लक्षणं भूमेरुपकारकं, प्रकरणाच्चाङ्गमाधानस्य, वाक्याद्वा प्रणयनस्येत्यवोचाम। न खल्वग्निना लक्षणसम्बन्धो ऽस्ति। 'लक्षणं कृत्वाग्निं प्रणयन्ति'—इत्यादौ हि श्रुत्या प्रणयनेनाग्नेः सम्बन्धोऽवगम्यते—वाक्येन 'लक्षणं कृत्वा'—इत्यस्य च। न तु लक्षणाग्न्योरन्वयोऽस्ति।

"जातस्य लक्षणं कृत्वा तं प्रणीय समिध्य च"।

इति कर्म्मप्रदीपेपि जातस्येति सुपां सुपा व्यत्यये षष्ठी द्रष्टव्या। जाते सतीत्यर्थः। "मन्थेदग्निं निकामतः"—इति ह्यभिधाय 'जातस्य लक्षणं कृत्वा'—इत्यभिहितवान् कात्यायनः। न हि लक्षणेन समं जातस्य सम्बन्धोऽस्तीत्यवोचाम। न खलु 'जातस्य लक्षणं कृत्वा'—इति विधीयते, किन्त्वनूद्यते। न चाप्राप्तं किञ्चिदनूद्यते! विधीयते इति चेन्न वाक्यभेदप्रसङ्गात्। विधानपक्षे खल्वनूद्य लक्षणं जातसम्बन्धस्तत्र विधातव्यः, कृत्वेति च क्रम इति भिद्येत वाक्यम्। तस्मात् क्रम विधिरेवायं—'जातस्य लक्षणं कृत्वा'—इत्येवमादिः।

परम्परया वा आतसम्बन्धोलक्षणस्य वर्णनोय इति न किञ्चिद-नुचितम्।

ननु 'समूह्योपलिप्योल्लिख्योद्धृत्याभ्युक्ष्य देषसंस्कारोऽनुगतेऽग्नौ भूयः'—इति संस्कृताया अपि भूमेः पुनः संस्कारविधानादग्नि-संस्कारोलक्षणमिति चेन्न, संस्कृताया भूमेः संस्कारविधायकमिद-मित्यत्र प्रमाणाभावात्। 'अनुगतेऽग्नौ संस्कारो भूयः'—इत्यभि-धानाच्च। सोऽयमग्नौ स्थापयितव्ये संस्कारो भूमेर्नत्वग्नेरेव। शब्दप्र-माणकः खल्वयमर्थः—इत्यवोचाम। न खल्वनुगतेनाग्निरसंस्कृतो भवति। न च संस्कृतायामपि भूमावग्निप्रणयनाङ्गं लक्षणमनुचितं भवतीति ध्येयम्।

अथानुगताविनष्टः—इत्यनर्थान्तरम्। यद्येवं किमतो भविष्य-ति?। एतदतो भविष्यति;—स्थापितेऽग्नौ विनष्टे पुनरपि लक्षणं कृत्वा तत्रैवान्योऽग्निः स्थापनीयः—इति। किमतापि भवति?। एतदतो भवति;—यदि नाभाग्निर्नष्टो न तावता संस्कृतापि भूमिरसंस्कृता भवितुमर्हति। येन भूयः संस्कारोऽर्थवान्। आम्नायते च संस्कारः। तस्मादनुमीयते,—अग्नेरेव संस्कारः—इति। उच्यते। नैतदस्ति—अग्नेरेव संस्कारः—इति। कस्मात्?। प्रमाणाभावात्। न खल्वस्ति प्रमाणम्—अग्नेरेव संस्कारः—इति। नन्वेवमनुमीयते इत्युक्तम्। सत्यमुक्तम्। प्रमाणन्तु तत्र किमिति पृच्छामः। पुनर्व्वचनमिति चेन्नाविशेषात्। इति चेद्भवान् पश्य-ति;—पुनर्व्वचनमेव प्रमाणमग्निसंस्कारोलक्षणमित्यत्र। अन्यथा वचनमिदमनर्थकं स्यादिति। तत्रोच्यते। नैतदस्ति—पुनर्व्वचनमग्नि-

संस्कारोलक्षणमित्यस्मिन्नर्थे प्रमाणमिति। कस्मात्?। अविशेषात्। विशेषाभावादित्यर्थः। किमनेनोक्तं भवति?। एतदनेनोक्तं भवति,—भवेदपि पुनर्व्वचनं प्रमाणं नाम; यदि पुनरुच्यमानस्यास्य काचिदन्या वचनव्यक्तिः सम्भवेत्। न तु सम्भवति। कस्मात्?। अविशेषादेव। यद्विधाविशिष्टा वचनव्यक्तिरस्याग्न्यर्थतायां प्रमाणम्, तद्विधा खल्विह वचनव्यक्तिर्नास्ति। सकृदुच्चरितेऽप्यस्य यावानर्थः, शतकृत्वोऽप्युच्चारणे तावानेवार्थः प्रतीयते, न ततोऽधिक इति। तदेवमत्यल्पमिदमुच्यते—पुनर्व्वचनम्—इति। पुनः पुनरपि वचनं नैतदवगमयितुमर्हति। तस्माद् भूमेरेवैष संस्कारः पुनराम्नायते. नाग्नेरित्यवगम्यते। भूयः संस्कारवचनञ्चैवमाञ्जस्येनोपपत्स्यते इति। कथं नाम? भूयः पुनरिति खल्वेकोऽर्थः। तदनेनावगम्यते,—यदनेन पूर्वं संस्कृतं तदेव पुनरपि संस्क्रियते इति। अथेदानीमग्निः संस्क्रियते? तर्हि पूर्वं भूमिरिदानीञ्चाग्निः संस्क्रियते इति विषयभेदात् भूयो वचनमसमञ्जसमापद्येत। न चैतदुचितम्

अथापिस्यात्—अस्मादेवकारणात् पूर्व्वमप्यग्निरनेन संस्कृत इत्यनुमास्यामहे; ततो नैष दोषो भविष्यति—इति। अत्रोच्यते। नाविमोक्षात्। न खल्वेवमपि दोषादिमोक्षः सम्भवति। कस्मात्?। अन्यत्वाविशेषात्। पूर्व्वमन्योऽग्निरिदानीञ्चान्योऽग्निः संस्क्रियते—इत्यभ्युपगच्छतोऽपि अन्यत्वाविशेषात् स एव दोषोऽनुवर्त्तते—इत्यविमोक्षादित्यर्थः। इतश्च। अप्रमाणत्वात्। न खल्वेवमनुमाने किञ्चिदपि प्रमाणमुपलभ्यते। सेयमप्रमाणिकी पुरुषबुद्धिमात्रमूला कल्पनाप्रेक्षावतामनपेक्षणीया भवति। अन्यथा चापपत्तेः।

भवेदपि कदाचिदियं कल्पना; यदि नामान्यथा शास्त्रमिदं नोपपद्येत, न तु नोपपद्यते। अन्यथा खल्वस्मदुक्तरीत्या शास्त्रमर्थवत् कथमप्रमाणमनुमानमनुष्ठास्यतीति शक्यमध्यवसातुम्। प्रमाणविरोधाच्च। प्रमाणेन च खल्वेषा कल्पना विरुध्यते। श्रुत्या तावल्लक्षणं भूमेरुपकारकं, वाक्याद्वा प्रणयनस्येत्यवोचाम। तदिदमागमबाधितमनुमानमप्रमाणमित्यनादरणीयम्। संस्कृताया भूमेः पुनः संस्कारोऽनर्थकः?—इति चेत्—काममनर्थको भवतु। नैवान्या वचनव्यक्तिः सम्भवति। अपि च। असंस्कृताया अपि भूमेः संस्कारे कमर्थं भवान् पश्यति? न खल्वत्रापि लक्षणेन भूमेर्दृष्टः कश्चिदुपकारः क्रियते! वचनबलाददृष्टमत्र किञ्चिदनुमास्यामहे?—इति चेद्वयमपि वचनबलादेवादृष्टं किञ्चिदनुमास्यामहे। वचनबलात् खल्वेवं कुर्वाणाः किमित्युपालभ्येमहि—किमिति क्रियते?—इति। तस्मात् स्वतः शुद्धप्रदेशे गङ्गापुलिनादाविवात्रापि वचनबलादेव लक्षणं कर्त्तव्यम्। तस्मादेवमपि विनष्टेऽग्नौ पुनरन्यस्याग्नेः प्रणयनाङ्गतया प्राप्तं लक्षणं संस्कृतायामपि भूमौ कर्त्तव्यमिति न किञ्चिदनुचितम्। दर्शितञ्चास्माभिः,—लक्षणेन सममग्नेः सम्बन्धो नास्ति, अस्ति च प्रणयनस्येति। "तस्मादग्न्यर्थाः परिसमूहनादयः"—इति कर्कभाष्यमप्रमाणम्। "परिसमूह्योपलिप्योल्लिख्योद्धृत्याभ्युक्ष्याग्निमुपसमाधाय"—इति वचनादग्निसमाधानार्था भवन्तु परिसमूहनादयः, न त्वातुविदग्न्यर्था भवितुमर्हन्ति। तस्मादस्मदुक्तमेव व्याख्यानमादरणीयम्। तदनेन प्रबन्धेनैतदप्यवगम्यते,—यदि स्वस्यार्नास्ति

एवाग्नौ किञ्चित् श्रूयते, न तत्र लक्षणं कर्त्तव्यमिति। भट्टनारायणस्त्वाह—"यत्र यत्राग्निप्रणयनं क्रियते, तत्र तत्र भुवः संस्कारविधानात् भूसंस्कारः। अनुगतेऽग्नौ संस्कृताया अपि भूमेः पुनः संस्कारविधानात् अग्निसंस्कार इति। तथाच गृह्यान्तरम्। समूह्योपलिप्योल्लिख्योद्धृत्याभ्युक्षेदेष संस्कारोऽनुगतेऽग्नौ भूयः—इति। तस्मादुभयसंस्कारः इति सिद्धम्"—इति ॥ १० ॥ * ॥

## भूर्भुवः स्वरित्यभिमुखमग्निं प्रणयन्ति ॥ ११ ॥

"शुभं पात्रन्तु कांस्यं स्यात्तेनाग्निं प्रणयेद्बुधः।
तस्याभावे शरावेन नवेनाभिमुखश्च तम्"।

इति गृह्यासंग्रहवचनात्। "प्राञ्चं नीत्वावर्त्त्य स्थापयन्ति"—इति स्मरणाच्च—वक्ष्यमाणयोनिमग्निं कांस्यपात्रस्थं कृत्वा, तथा नीत्वा, आवर्त्त्य—सम्यक् भ्रामयित्वा च, 'अभिमुखं' यथा भवत्यात्मन इत्यर्थात्, तथा भूर्भुवः स्वरित्यनेन मन्त्रेण 'प्रणयन्ति' स्थापयन्ति रेखापरीत्यर्थः। यत्पुनः—

"शरावे भिन्नपात्रे वा कपाले वोल्मुकेऽपि वा।
नाग्निप्रणयनं कुर्य्याद्व्याधिहानिभयावहम्"।

इति स्मृत्यन्तरम्। तदुदाहृतगृह्यासंग्रहवचनविरोधात् कौथुमादिव्यतिरिक्तविषयम्। कांस्यादिपात्रसद्भावे शरावनिषेधकमिति राघवभट्टप्रभृतयः ॥ ११ ॥

लक्षणादिकमभिधायायेदानीमग्न्याधानकालानुपदिशति त्रिभिः सूत्रैः—

प्रेते वा गृहपतौ परमेष्ठिकरणम् ॥ १२ ॥

प्रेते इति कर्त्तरि निष्ठा। प्रकर्षेण इते गते—अस्माल्लोकादित्यर्थात्, मृत इत्येतत्। वाशब्दाद्वैकल्पिकोऽयमाधानकाल इति दर्शयति। गृहपतौ गृहस्वामिनि। तथाच गोतमः। "भार्य्यादिरग्निर्दाया-दिर्वा"—इति। "दायाद्य काल एकेषाम्"—इति च गृह्यान्तरम्। परेते खलु गृहस्वामिनि दायसम्बन्धः पुत्राणामिष्यते। अतएव स्मर्य्यते।

"ऊर्द्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम्।
भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोः"।

इति।

"पितर्य्युपरते पुत्रा विभजेयु र्धनं पितुः।
अस्वाम्यं हि भवेदेषां निर्द्दोषे पितरि स्थिते"।

इति चैवमादि। कर्कोपाध्यायास्त्वाहुः—व्यवस्थितोऽयं विकल्पः।—अभ्रातृकस्य दारकालः, भ्रातृमतो दायाद्यकालः—इति। तेषामयमाशयः। विभागमन्तरेण साधारणधनस्य परित्यागासम्भवादनधिकार एवाविभक्तानां धनसाध्येष्वाधानादिषु। अतो भ्रातृमतो विभागकाल एवाधिकारः। स एव कालो दायाद्यकाल इत्युच्यते—इति। आचार्य्यस्तु प्रेते वा गृहपताविति ब्रुवन्नेतदनुजानातीत्यवगम्यते। न चाविभक्तधनस्य कथं परित्याग इति वाच्यं स्वत्वस्य तथाप्यविशेषात्। निर्द्दोषे पितरि स्थिते पुत्राणामस्वाम्यम्—इति स्मरन्मुनिः परेते पितरि स्वाम्यमेषामनुमन्यते। नारदोऽपि स्मरति।—

"यद्येकजाता बहवः पृथग्धर्म्माः पृथक्क्रियाः।
पृथक्कर्म्मगुणोपेता न चेत् कार्य्येषु सम्मताः।
स्वभागानथ दद्युस्ते विक्रीणीयुरथापि वा।
कुर्य्युर्यथेष्टं तत् सर्व्वमीशास्ते स्वधनस्य वै"।

इति। परेते पितरि दायसम्बन्धात् स एव कालोदायाय काल इत्युच्यते इति न किञ्चिदनुचितम्।—तदेवं प्रेते गृहपतौ, 'परमेष्ठिकरणम्' परमे श्रेष्ठेस्थाने तिष्ठतीति परमेष्ठी अग्निरित्याचक्षते। तस्य परमेष्ठिनोऽग्नेः, करणम्—यथोक्तेन विधिना स्वीकरणम्, समाधानमित्येतत्। कर्त्तव्यमिति वाक्यशेषः। "तच्चैकादशेऽह्नि स्यात्, प्रागनधिकारात्"—इति भट्टभाष्यम्। कात्यायनस्तु—

"एतद्गृहपतौ प्रेते कुर्य्यादेकादशेऽहनि।
प्रागेवैकादशात् शुद्धात् सद्यो जागरणादिकम्"।

इत्यभिधायाह—

"ज्येष्ठः कुर्य्यात्तथाऽऽधानं कनीयांश्च विवर्ज्जयेत्।
सैकादशेऽह्नि कुर्व्वीत द्वादशे वा विचक्षणः"।

इति। तदत्र वृद्धिश्राद्धं न भवति। कस्मात्?।

"न तत् पूर्व्वं यतः प्रोक्तः सपिण्डनविधिः क्वचित्।
वृद्धिश्राद्धस्य लोपः स्यादुभयोरपि पक्षयोः"।

इति कर्म्मप्रदीपदर्शनात्॥ १२॥ *॥

## तथा तिथिनक्षत्रपर्व्वसमवाये॥ १३॥

तथेति वैकल्पिकत्वं दर्शयति। नक्षत्रशब्दश्चैको लुप्तवत् द्रष्टव्यः।

"नक्षत्रशब्दः काकाक्षिन्यायेनोभयत्र सम्बध्यते"—इति भट्टनारायणोपाध्यायाः। तिथिश्च नक्षत्रञ्च तिथिनक्षत्रे, नक्षत्रञ्च पर्व्व च नक्षत्रपर्व्वणी, तयोस्तयोश्च समवायस्तस्मिन्निति। तिथिः,—(पर्वेतिपुनः करणात्—"पौर्वापर्य्ये सति पूर्वदौर्वल्यम्"—इति च सिद्धान्तात्)—पर्वेतरा शोभना ज्योतिः शास्त्रानुमता, नक्षत्रमपि शोभनं ज्योतिः शास्त्रानुमतमेव। तयोस्तिथिनक्षत्रयोः समवाये संयोगे, "अग्निसमाधानं कुर्वीत"—इति सम्बध्यते। तिथिनक्षत्रकीर्त्तनञ्चेदम्—

"वह्निग्रहं कुजगुरुश्चदिनेशवारे
माघादिषट्सु च मृदुध्रुववह्निभेषु।
कुम्भाजभांशकविलग्नमशङ्ककालं
लग्नस्थशीतगुसितौ च विहायकुर्य्यात्"॥

इति ज्योतिःशास्त्रोक्तमन्यदप्युपलक्षयति। तथा। नक्षत्रं माससंज्ञानिमित्तं चित्रादिकम्, पर्वपौर्णमासम्, तयोः समवाये संयोगे, अग्निसमाधानं कुर्वीत। तथेत्यनुषज्यते वैकल्पिकत्वावेदकम्। तिथिनक्षत्रपर्वणां वा समवाये—युगपदसम्भवात्, तिथिनक्षत्रसमवाये, नक्षत्रपर्वसमवाये चेत्यर्थः। तदयमेक एव नक्षत्रशब्दोज्योतिःशास्त्रानुमतमेकविधमेव नक्षत्रमभिधत्ते इति द्रष्टव्यम्।

अथ वा। तिथिनक्षत्रयोर्ज्योतिःशास्त्रोक्तयोः समवाये इति यथोक्त एवार्थः। नक्षत्रपर्वणोश्च—"कृत्तिकासु रोहिण्यां मृगशिरसि फल्गुनीषु विशाखयोरुत्तरयोः प्रोष्ठपदयोः" "एतेषां कस्मिंश्चित्"—इति श्रौताश्वलायनोक्तयोः,—"या वैशाख्याममावस्यारो-

थिना सम्बध्यते, तस्यामादधीत"—इति अन्त्यकार्योर्वा समवाये इत्यर्थः। तदत्र नक्षत्रशब्दस्यार्थद्वयम्—(ज्योतिःशास्त्रोक्तं अन्यकञ्च नक्षत्रम्) प्रामाणिकमित्यादरणीयम्। तदिदमाधानकालद्वयम्—यस्य तिथिनक्षत्रसमवायो, यस्य नक्षत्रपर्व्वसमवायः—इति।

इयमप्यपरा सूत्रयोजना भट्टभाष्ये दर्शिता—"तिथिना पौर्णमास्या यानि नक्षत्राणि समाध्यायन्ते, तानि नक्षत्राणि मघादीनि द्वादश, तेषामन्यतमस्य पर्व्वणा पौर्णमासेन समवायः संयोगस्तिथिनक्षत्रपर्व्वसमवायस्तस्मिन्"—इत्यन्तेन सन्दर्भेण। अस्मिंस्त्वनये, अनेन सूत्रेणैक एवाधानकालोऽभिहितः—इत्यवगन्तव्यम्॥ १३ ॥ * ॥

## दर्शे वा पौर्णमासे वाऽग्निसमाधानं कुर्वीत ॥ १४ ॥

दर्शोऽमावस्या सूर्य्येन्दुसङ्गम इत्यनर्थान्तरम्। पौर्णमासः पौर्णमासीत्युच्यते। तदेतस्मिन् दर्शे वा पौर्णमासे वा; यस्मिन् कस्मिन्नपि—(केवल एव—नतु नक्षत्रमप्यपेक्ष्य इत्यर्थः)—अग्निसमाधानं कुर्वीत। वाशब्दद्वयन्तुल्यवद्विकल्पार्थम्। समेत्य—आधानं समाधानम्। समेत्य—मिलित्वा। केन?—

"नैकयापि विना कार्य्यमाधानं भार्य्यया द्विजैः।
अकृतं तद्विजानीयात् सर्व्वा, नान्वारभन्ति यत्"।

इति कर्म्मप्रदीपवाक्यात्—भार्य्ययेति वाक्यशेषः। अग्नेः समाधानम्,—'अग्निसमाधानम्'। अत्र च—कया भार्य्यया कथम्भूतया च मेलनम्, कया च, न—इत्येतत् सर्व्वमप्याह कात्यायनः।—

"वर्णज्येष्ठ्ये न बह्वीभिः सवर्णाभिश्च जन्मतः।
कार्य्यमग्निच्युतेराभिः साध्वीभिर्मथनं पृथक्।
नात्र शूद्रां नियुञ्जीत न द्रोहद्वेषकारिणीम्।
नाव्रतस्थां नान्येन पुंसा च सह सङ्गताम्।
ततः शक्तिवरा पश्चादासामन्यतमैव या।
उपेतानाञ्चान्यतमा मन्थेदग्निं निकामतः"।

इति। इदञ्चाधानमनग्नावग्रजे सति न कर्त्तव्यम्,—कर्त्तव्यञ्चानग्नावप्यग्रजे क्लीवादौ सत्यपि, निर्दोषेपि तस्मिंस्तदनुमत्या,—इत्यप्याह स एव।—

"आधानकाला ये उक्तास्तथा याश्चाग्नियोनयः।
तदाश्रित्याग्निमादध्यादग्निमानग्रजो यदि।
दाराधिगमनाधाने यः कुर्य्यादग्रजाग्रिमः।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्व्वजः।
परिवित्तिः परिवेत्ता च नरकं गच्छतो ध्रुवम्।
अपीर्णप्रायश्चित्तौ तौ पादोनफलभागिनौ।
देशान्तरस्थक्लीवैकवृषणानसहोदरान्।
वेश्यातिसक्तपतितशूद्रतुल्यातिरोगिणः।
जड़मूकान्धवधिरकुब्जवामनकुण्ठकान्।
अतिवृद्धानभार्य्यांश्च कृषिसक्तान्नृपस्य च।
धनवृद्धिप्रसक्तांश्च कामतः कारिणस्तथा।
कुलटोन्मत्तचौरांश्च परिविन्दन्नदुष्यति।
धनवार्द्धुषिकं राजसेवकं कर्षकं तथा।

प्रोषितश्च प्रतीक्षेत वर्षत्रयमपि त्वरन्।
प्रोषितं यद्यशृण्वानमब्दादूर्द्ध्वं समाचरेत्।
आगते च पुनस्तस्मिन् पादं तच्छुद्धये चरेत्"।

इति।

"अग्रजः स्याद्यदाऽनग्निरधिकार्य्यनुजः कथम्?।
अग्रजानुमतः कुर्य्यादग्निहोत्रं यथाविधि"।

इति।

"ज्येष्ठोभ्राता यदा तिष्ठेदाधानं नैव कारयेत्।
अनुज्ञातस्तु कुर्व्वीत शङ्खस्य वचनं यथा।
नाग्नयः परिविन्दन्ति न वेदा न तपांसि च।
दारैण परिविन्दं स्यात् पृथग्धर्म्मा हि ब्राह्मणाः।
नाग्नयः परिविन्दन्ति न यज्ञा न तपांसि च।
न च श्राद्धं कनिष्ठस्य या च कन्याविरूपिका"।

इति च। पितरि चानग्नावपि पुत्रस्याधानाधिकारो न व्याहन्यते। तदप्याह स एव।—

"पितुर्यस्य च नाधानं कथं पुत्रस्तु कारयेत्।
अग्निहोत्राधिकारोऽस्ति शङ्खस्य वचनं यथा"।

इति। आधानपरिपाटीचाचार्य्यैरनुक्तापि—

"परिधायाहतं वासः प्रावृत्य च यथाविधि"।

इत्येवमादि कर्म्मप्रदीपवचनेभ्य एवावगन्तव्या। नत्वध्वर्युभ्योऽग्रही-तव्या। परात्मत्वात्। अक्रियैव खल्वसावस्माकमिति ॥ १४ ॥ * ॥

उक्ता आधानकालाः। अथेदानीमग्नियोनयोवक्तव्याः। तास्त्रिभिः सूत्रैरभिधीयन्ते।—

वैश्यकुलाद्वाऽम्बरीषाद्वाऽग्निमाहृत्याभ्यादध्यात् ॥ ॥ १५ ॥

वैश्यस्तृतीयोवर्णः शूद्रः एवाभिमतः। तस्यास्य वैश्यस्य कुलात्—गृहात्, वा, अम्बरीषात्; भ्राष्ट्रात्—यवादिभर्ज्जनपात्रात्, वा, अग्निमाहृत्य आनीय, अभ्यादध्यात् अभिसर्वतोभावेनादध्यादित्यर्थः। व्याख्यातौ वाशब्दौ। स खल्वयमग्निर्ऋतेरुच्छिष्टः संस्कृतो वा गृह्यतेऽविशेषादिति कर्कोपाध्यायाः ॥ १५ ॥ * ॥

अपि वा बहुयाजिन एवागाराद्ब्राह्मणस्य वा, राजन्यस्य वा, वैश्यस्य वा ॥ १६ ॥

अपि वा—इत्यम्बरीषात् पश्चान्तरमुपदिशति। बहुभिः सोमैर्यैरिष्टं स बहुयाजीत्याचक्षते। तस्यामुष्य बहुयाजिन एव। एवकारस्तदितरं व्यवच्छिनत्ति। 'अगारात्' गृहात्। 'अग्निमाहृत्याभ्यादध्यात्'—इति सम्बध्यते। कस्य बहुयाजिनः?—इत्येतदाह।—'ब्राह्मणस्य वा' 'राजन्यस्य'—क्षत्रियस्य, 'वा', 'वैश्यस्य वा'। वाशब्दत्रयन्तुल्यवद्विकल्पार्थं। वैश्यकुलात्—इति सामान्यतोऽभिहितं, तमेव वैश्यमिदानीं बहुयाजितया विशिंषन्नाचार्य्यः पुनर्वैश्यग्रहणञ्चकार। नात्र पुनरुक्तिः शङ्कनीया;—सामान्यप्राप्तस्य पुनर्विशेषकथनं खल्वपुनरुक्तमेवेत्याहुः। अन्येत्वाग्नियोनिर्वैश्यकुलमबहुयाजिनोऽपीत्येवमर्थं वा पूर्व्वत्र वैश्यकुलग्रहणमित्यवगन्तव्यम् ॥ ॥ १६ ॥ * ॥

## अपिवाऽन्यं* मथित्वाऽभ्यादध्यात् ॥ १७ ॥

अपि वा,—अथवा। अन्यम्—

"अश्वत्थोयः शमीगर्भः प्रशस्तोर्वीसमुद्भवः।

तस्य या प्राङ्मुखी शाखा वोदीची वोर्द्धगापि वा"।

इत्येवमादि कर्म्मप्रदीपोक्तं मन्थनयन्त्रम्—(पुंस्त्वं छान्दसम्)—अरणिं वा।

"परिधायाहतं वासः प्रावृत्य च यथाविधि।

बिभृयात् प्राङ्मुखोयन्त्रमावृता वक्ष्यमाणया"।

इत्येवमादिकया कर्म्मप्रदीपोक्तयैवावृता मथित्वा, अभ्यादध्यादग्निमिति वाक्यशेषः। मथित्वा अरणिं, अन्यम्—परिकीर्त्तितादपरमग्निमारणेयमिति वाऽर्थः। "अरणिप्रदानमेके"—इति।—"आरणेयमल्पपुण्यकोपकामः"—इति च गृह्यान्तरदर्शनात्॥

॥ १७॥ *॥

## पुण्यस्त्वेवानर्द्धुकोभवतीति ॥ १८ ॥

पुण्यः, पुण्यजनक एव, प्रशस्तत्वादयमारणेयोऽग्निर्भवति। नतु ऋद्धिजनकोपीत्याह—अनर्द्धुकः,—इति। ऋद्धिरिति ब्रह्मवर्च्चसादिकमुच्यते। तामृद्धिं न जनयतीत्यनर्द्धुकः। तुशब्दो वैशेष्यमवगमयत्यारणेयस्य। ब्राह्मणकुलादियोनयः खल्वग्नयो जनयन्ति

---

* इत्यमेव पाठः सर्वेषु सूत्रग्रन्थेषु। भट्टभाष्यग्राह्यसर्व्वस्वयोरपि इत्थमेवेदम्—सूत्रमधारि। परिशिष्टप्रकाशे तु—'अपि वाऽरणिम्'—इति लिखितम्॥

ब्रह्मवर्चसादिकम्, अथन्त्वारणेयेोऽग्निः तथैत्यनर्द्धुक इत्याह। तथा च गृह्यान्तरम्। "ब्राह्मणकुलाद्ब्रह्मवर्चसकामोऽग्निमाहृत्यादधीत, राजन्यादोजोवीर्य्यकामः, वैश्यात् पुत्रपशुकामः, अम्बरीषाद्धनधान्यकामः, आरणेयमुरुपुण्यलोककामः"—इति। कथन्त्वारणेयोऽग्निर्विशिष्यतेऽनर्द्धुकत्वात्। नैष दोषः। उरुपुण्यलोककारित्वादारणेयस्य। उरुपुण्यलोककारी खल्वारणेय एव भवतीति स एव विशिष्यते। स खल्वारणेयोऽग्निरुरुपुण्यलोकं कुर्व्वाणस्तेनैव ब्रह्मवर्चसादिकमपि कर्त्तुमर्हति। तदधीनत्वात्तेषाम्। अत एव स्मर्य्यते।

"न हि पुण्यकृतः किञ्चित्त्रिषु लोकेषु दुर्लभम्।
दुष्प्रापमपि येनाप्तं ब्राह्मण्यं गाधिसूनुना"।

इति। स्वाधीना चेयमन्या योनिः पराधीना चान्या। दैवाच्च पुनराधातव्येऽग्नौ पूर्व्वैव योनिराश्रयितव्या भवति।—

"पूर्व्वैव योनिः पूर्व्वावृत्पुनराधानकर्म्मणि"।

इति कात्यायनस्मरणात्। "पूर्व्वैवानुगतेऽग्नौ योनिः"—इति च गृह्यान्तरात्। तत्र च स्वाधीनत्वादेवान्या योनिः सुलभा भवति। पराधीनानाञ्च योनीनां सुतरां दुर्लभत्वमिति पराधीनां पूर्व्वां योनिमलभमानः पुनराधाता प्रत्यवेयादिति चारणेयो विशिष्यते। इतरेऽपि खल्वग्नयः कर्म्मणैवाधानेन च्छृद्धिसाधनमित्ययमारणेयोऽपि काम्यैः स्वनिष्ठच्छृद्धिसाधनहोमैः शक्नोति प्रणाड्या च्छृद्धिं साधयितुमित्यदोषः। अत एव कर्म्मप्रदीपे स्मरति भगवान् कात्यायनोऽपि।—

"पुष्यमेवादधीताग्निं स हि सर्व्वैः प्रशस्यते ।
अनडुत्कलं यत्तस्य काम्यैस्तन्नीयते शमम्" ।

इति । इतिरेतावत्य एवाग्नियोनय इति दर्शयति ॥ १८ ॥ * ॥

## यथाकामयेत, तथा कुर्य्यात् ॥ १९ ॥

सत्स्वेतेषु आधानकालेषु,—सतीषु चैतास्वग्नियोनिषु, यथाकामयेतेच्छेदाधानकर्त्ता, तथा कुर्य्यादाधानमिति वाक्यशेषः ॥ ॥ १९ ॥ * ॥

## स, यदेवान्त्यां समिधमभ्यादधाति, जायाया वा पाणिम्–जिघृक्षन् जुहोति, तमभिसंयच्छेत् ॥ २० ॥

स यथोक्तः कर्त्ता, यदेव यस्मिन्नेवाग्नौ । एवकारादिति कर्त्तव्यतान्तरव्यवच्छेदः । 'अन्त्याम्—समिधमभ्यादधाति'—यस्मिन्नेव वा 'जायायाः पाणिं जिघृक्षन् जुहोति'—लाजादिकमर्थात्; तमग्निमभिसंयच्छेत्, आभिमुख्येन धारयेत्, रक्षेदित्येतत् ॥ ॥ २० ॥ * ॥

## स एवास्य गृह्योऽग्निर्भवति ॥ २१ ॥

स यथोक्त एव न पुनरन्य इत्यन्यस्मिन्नग्नावस्य होमप्रतिषेधो गृह्याग्निसम्पाद्यकर्म्मस्वन्याहिते गृह्येपीति विज्ञायते । 'अस्य'—आधातुः, गृह्यो गृहार्थो गृह्यनामा वाऽग्निर्भवति । सोयमग्निराधातुरेव गृह्यो भवति न पुनरन्यस्य इति वा सूत्रार्थः । तदेतत् सर्व्वमाह कात्यायनः ।

"मह्याहिताग्नेः स्वं कर्म्म लौकिकेऽग्नौ विधीयते"

इति।

"यस्याग्नावन्यहोमः स्यात् स वैश्वानरदैवतम्।
चरुं निरूप्य जुहुयात् प्रायश्चित्तन्तु तस्य तत्"।

इति।

"परेणाग्नौ कृते स्वार्थे परस्याग्नौ कृते स्वयम्"।

इति चैवमादि। अस्य चापवादः पुरस्तादेवोक्तः—ब्रह्मचारी वेदमधीत्यान्त्यां समिधमभ्याधास्यन्नित्यत्र ॥ २१ ॥ ० ॥

## तेन चैवास्य प्रातराहुतिर्हुता भवतीति ॥ २२ ॥

तेनान्त्यसमिदाधानेनैव, न त्वन्येन। 'पाणिं जिघृक्षन्'—इत्येतस्मिंश्च कल्पे, तेनैव लाजादिहोमेनेत्येतत्। यस्त्वर्थः—

"वैवाहिकेऽग्नौ कुर्व्वीत सायम्प्रातस्त्वतन्द्रितः।
चतुर्थी कर्म्मकृत्वैतदेतच्छाट्यायनेर्मतम्"।

इत्यस्मादपरोऽयं कल्पः—इति दर्शयति। चैवेति वा निपातसमुदायः। गृह्यपरिभाषाकृद्भिरप्युक्तम्—"यदा अह्नि विवाहहोमः, तदा सायङ्काले होमारम्भः। यदा रात्रौ विवाहहोमः, तदा उत्तरेद्युः सायङ्काले होमारम्भः"—इति।

"यस्मिन्नह्नि विवाहः स्यात् सायमारभ्य तस्य तु।
परिचर्य्यां विवाहाग्नेर्विदधीत स्वयं द्विजः।
यदि रात्रौ विवाहाग्निरुत्पन्नः स्यात्तथा सति।
उत्पन्नस्योत्तरस्याह्नः सायं परिचरेदमुम्"।

इति च, स्थ्यन्तरम् ।—"पाणिग्रहणादि गृह्यं परिचरेत्"—इति च गृह्यान्तरम् ।—अत्राग्नेराधातुर्वा प्रातराहुतिर्हुता भवति । इति राधानप्रकरणपरिसमाप्तिं द्योतयति ॥ २२ ॥ ० ॥

## सायमाहुत्युपक्रम एवात ऊर्द्ध्वं गृह्येऽग्नौ होमो विधीयते ॥ २३ ॥

सायं हूयते इति सायमाहुतिः, सायमाहुत्या उपक्रम्यते आरभ्यते यः, सोयं सायमाहुत्युपक्रमः । केषाञ्चिच्छाखिनामग्निहोत्रं यथा प्रातराहुत्या प्रातरारभ्यते, सायमाहुत्या च निस्तिष्ठते, न तथा कौथुमादीनामित्येतदेव कारेण दर्शयत्याचार्य्यः । तदत्र सायमाहुत्युपक्रमं प्रातराहुत्यन्तमेकमिदं कर्म्मेति विज्ञायते । तदाह कात्यायनः ।

"सायमादिप्रातरन्तमेकं कर्म्म प्रचक्षते" ।

इति । ततश्च येनैव हविषा—हुतेनाहुतेन वा, दध्ना पयसा वा, सायंहोमः कृतः, तेनैव प्रातर्होमोपि समापनीयोऽन्यत्र प्रतिनिधेः । अपचारे स्वल्पकृतस्य कृतस्य वोपात्तस्य हविषस्तदनुकारिणाऽपरेणैव हविषा प्रातर्होमः कर्त्तव्यो न पुन र्वैकल्पिकं मुख्यमपि हविरुपादेयम् । "सामान्यम्—तच्चिकीर्षा हि"—इति, "निर्देशात्तु विकल्पे यत् प्रवृत्तम्"—इति च सिद्धान्तादित्येषोऽर्थः । अपवर्गविहितमप्यभिरूपभोजनम् प्रातराहुत्यनन्तरमेवे त्यवगन्तव्यम् । सोयं सायमाहुत्युपक्रम एव—'अतः' अस्मादाधानकालात्, 'ऊर्द्ध्व'—परतो, 'गृह्येऽग्नौ' यथोक्ते, हूयते इति 'होमः—

"तद्युक्ते श्रवणात् जुहोतिरासेचनाधिकः स्यात्"—इत्युक्तलक्षणः, 'विधीयते' क्रियते ॥ २३ ॥ * ॥

## पुरा प्रादुष्करणवेलायाः सायंप्रातरनुगुप्ता अप आहरेत् परिचरणीयाः ॥ २४ ॥

पुरा पूर्व्वम्। कस्मात्?। 'प्रादुष्करणवेलायाः'—"पुरास्तमयादग्निं—प्रादुष्कृत्य"—इत्यादिना वक्ष्यमाणायाः। 'सायंप्रातः'—चशब्दस्य—समुच्चयार्थोलुप्तवद्, द्रष्टव्यः। सायंप्रातश्चेत्यर्थः। 'अनुगुप्ता अप आहरेत्'—(कृतभाष्यमेतत्) 'परिचरणीयाः'—परिचर्य्यन्ते निर्व्वा-ह्यन्ते, आचमनादीनि याभिरिति—"कृत्यल्युटोऽन्यत्रापि"—इति वचनादनीयः करणे वेदितव्यः। तदयमर्थः। याभिरद्भिराचमन पर्य्युक्षणादि परिचर्य्यते; ता इमाः परिचरणीया अपः—इति-सम्बन्धः ॥ २४ ॥ * ॥

## अपि वा सायम् ॥ २५ ॥

अपि वा—अथवा। सायं—(पूर्वंचाप्येतदुपादानात्)—सायमेव। अप आहरेत् परिचरणीयाः—इति संबध्यते। सायमाहृताभिरे-वाद्भिः सायं प्रातश्च परिचरेदित्यर्थः ॥ २५ ॥ * ॥

## अपि वा कुम्भाद्वा मणिकाद्वा गृह्णीयात् ॥ २६ ॥

अपिवेत्याहरेदित्यपेक्षया विकल्पार्थः—अपि वा गृह्णीयादिति। कुम्भात् घटात् वा, मणिरेव मणिकः—तस्मान्मणिकादलिञ्जरात्।—

महतोजलभाण्डात् वा। वाशब्दद्वयं तुल्यवदनयोर्विकल्पार्थम्। 'गृह्णीयात्'—प्रकृतत्वादपः परिचरणीयाः। "निर्णिक्तकरचरण-मुखी पत्नी स्त्रियो वाऽऽचम्य, कुम्भादेव अप उद्धृत्य दद्यात्, ताभिः परिचरेत्"—इति भट्टभाष्यम्॥ २६ ॥ * ॥

## पुरास्तमयादग्निं प्रादुष्कृत्यास्तमिते सायमाहुतिं जुहुयात् ॥ २७ ॥

पुरा, पूर्वस्मिन् काले। कस्मात्?। अस्तमयात्, सवितुरर्थात्। कात्यायनोप्याह।—

"सूर्य्येऽस्तशैलमप्राप्ते षट्त्रिंशद्भिरथाऽङ्गुलैः।
प्रादुष्करणमग्नीनां प्रातर्भासाञ्च दर्शनात्"।

इति। तस्मिन्नेतस्मिन् काले। 'अग्निं' आहितं, 'प्रादुष्कृत्य'—प्रकटीकृत्य, प्रज्वाल्येत्येतत्। 'अस्तमिते'—सवितरि।—

"यावत् सम्यङ् न भास्यन्ते नभस्यृक्षाणि सर्व्वतः।
न च लौहित्यमापैति तावत् सायञ्च हूयते"।

इति कर्म्मप्रदीपपरिदर्शिते काले। 'सायमाहुतिं'—अग्निहोत्रलक्षणां जुहुयात्॥ २७ ॥ * ॥

## पुरोदयात् प्रातः प्रादुष्कृत्योदितेऽनुदिते वा प्रातराहुतिं जुहुयात् ॥ २८ ॥

पुरा—उदयात्, सवितुः। तमिमं सामान्येनाभिहितं कालं विशिनष्टि—'प्रातर्'—इति।—

"चतस्रोघटिकाप्रातररुणोदय उच्यते"।

इति स्मृत्युक्तलक्षणे—इत्यर्थः। अतएव कात्यायनोऽपि—"प्रातर्भा-साह दर्शनात्"—इत्याह। तस्मिन्नेव खलु काले प्राची दिगरुण किरणारुणीकृता सम्पद्यते। तदेतस्मिन् काले—'प्रादुष्कृत्य'—प्रकाशलादग्निम्। 'उदिते'—उद्गते रवौ।

"हस्तादूर्द्धं रविर्यावद्भुवं हित्वा न गच्छति।
तावद्धोमविधिः पुण्यो नान्योऽभ्युदितहोमिनाम्"।

इति कर्म्मप्रदीपस्पष्टीकृतकाले इत्येतत्। अत्र, "अभ्युदित—इति, अभिशब्दस्य सर्व्वतोभावार्थस्योपादानात् सम्पूर्णसूर्य्यमण्डलदर्शने उदितहोमो न त्वर्द्धोदितादाविव्यवगन्तव्यम्"—इति परिशिष्टप्रकाशः। नैवम्। ऐदमर्थ्यानियमात्। न खल्वत्राभेरिदमर्थत्वे किञ्चिन्नियामकमवगम्यते। अनेकार्थाः खल्वेवमादयः शब्दा लोके बहुलमुपलभ्यन्ते, तान्निकेशानुमन्यन्ते। कीर्त्तनस्य चान्यार्थत्वात्। अत्र खल्वभ्युदितहोमिनामित्येतदन्यार्थं संकीर्त्त्यते। किमर्थम्?। तदुच्यते। तावदेव होमकालः पुण्योनपुनरन्य इत्येतत् खल्विह विधित्सितम्। तस्मात्तदर्थमिदं सङ्कीर्त्तनं नान्यद्विदधाति। यदि पुनरन्यदपि प्रतिपिपादयिषितमिहाभ्युपगम्यते, तर्ह्यर्थभेदाद्वाक्यं भिद्येत! अन्या खल्वस्य वाक्यस्य वचनव्यक्तिरनूद्यमानस्य, अन्यैव विधीयमानस्य। तस्मात् प्राप्तिरहितमन्यार्थसङ्कीर्त्तनमिदमसाधकमस्यार्थस्य—सम्पूर्णसूर्य्यमण्डलदर्शने उदितहोमः—इति। तस्माद् यावदादित्योभुवं हित्वा हस्तादूर्द्धं न गच्छति, उदितहोमिनां तावदेव होमकालः पुण्योनपुनरितोऽप्यधिकं गच्छति,—इत्यमुमर्थं

सूचयितुमृषिरभ्युदितहोमिनामित्याह। स खल्वयम्—उदितहोमिनां नान्यः कालः—इति वक्तव्येऽन्यस्य कालस्यात्यन्तमननुज्ञार्थमभ्युदितहोमिनामित्याह। कथन्नाम?। ये तावदभ्युदितहोमिनस्तेषामपि यदा यावदादित्योहस्तादूर्द्धं न गच्छति, तावानेव होमकालो न परस्तादपि, तदा किमु वक्तव्यमुदितहोमिनाम्?—इति। सोयमभिशब्दोऽस्यार्थस्योपोद्बलको भवति। स खल्वयमभ्युदितहोमोऽसन्नप्येवमर्थं सिद्धवन्निर्दिश्यते। सन्नेववाऽनूद्यते। उदितहोमिन एव वा एवं निर्दिश्यन्ते—इति न किञ्चिदनुचितम्। तथाचोक्तम्।

"धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्त्तते।
तमेव विशिनष्ट्यन्य उपसर्गगतिस्त्रिधा"।

इति। अतएव गृह्यपरिशिष्टम्।

"रेखामात्रन्तु दृश्येत रश्मिभिश्च समन्वितम्।
उदयं तद्विजानीयाद्धोमं कुर्य्याद्विचक्षणः"।

इति। पांशुतुषारादिभिरन्तरिते रवौ यत् कर्त्तव्यं, तदप्याह कात्यायनः।

"रजो नीहारधूमाभ्रवृक्षाग्रान्तरिते रवौ।
सन्ध्यामुद्दिश्य जुहुयात् व्रतमस्य न लुप्यते"।

इति। 'अनुदिते'—उदयमप्राप्ते, 'वा', रवौ, 'प्रातराहुतिं' अग्निहोत्रलक्षणां, 'जुहुयात्'। वाशब्दादुदितानुदितहोमयोर्वैकल्पिकत्वं दर्शयति। एकस्मात्र वाशब्दः श्रूयते—अनुदिते वा—इति। 'सोयमनुदितहोमो नोदितहोमेन तुल्यवद्विकल्प्यते।

कस्मात्?। वाशब्दद्वयाश्रवणात्। न खलु 'दर्शे वा पौर्णमासे वा'—इत्येवमादिवदिह तथात्वावबोधकं वाशब्दद्वयमस्ति। स खल्वयमुदितहोमोऽन्यस्मात् प्रशस्यते कौथुमादीनामित्यवगम्यते। यस्त्वनुदिते जुहोति, स चेन्न शक्नोत्यनुदिते होतुं; जातुचित् कुतश्चित् प्रतिबन्धात्,—लोप एवास्य प्रातराहुतेर्भवति, न शक्नोत्युदिते जुहुयात्। कस्मात्?। 'उदितेऽनुदिते वा'—इति विकल्पश्रवणात्। विकल्पे च नोभयः शास्त्रार्थः—इति तन्त्रस्थितिः। श्रुतिश्चास्यामेव दशायामुदितहोमं निन्दति। "श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति"—इति।"यथाऽतिथये प्रद्रुतायान्नमाहरेयुस्तादृक् तत्; यदि उदिते जुह्वति"—इति चैवमादिका। आह च भगवानक्षपादः—"अभ्युपेत्यकालभेदे दोषवचनात्"—इति। जैमिनिरपि—"प्रक्रमाद्वा नियोगेन"—इति ॥ २८ ॥ * ॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये प्रथमप्रपाठकस्य प्रथमा काण्डिका ॥ * ॥



यज्ञोपवीतसम्बन्धमाचमाचमनञ्च खल्वङ्गं कर्म्मणामित्येतदवगतं—'यज्ञोपवीतिनाचान्तोदकेन कृत्यम्'—इत्यत्र। अथेदानीं तदुभयमपि क्रमेण व्याचिख्यासुः—शिष्यानुजिघृक्षया, यज्ञोपवीतन्तावदाह।—

**यज्ञोपवीतं कुरुते सूत्रं वस्त्रं वाऽपि वा कुशरज्जुमेव॥ १॥**

यज्ञोपवीतं कुरुते, कुर्व्वीत—धारयेदित्येत्। विध्यर्थे लट्। कीदृशन्तत्?-इत्याह—'सूत्रम्'। सूत्रनिर्म्मितम्।

"त्रिवृदूर्द्ध्ववृतं कार्य्यं तन्तुत्रयमधोवृतम्।
त्रिवृतञ्चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते"।

इति कर्म्मप्रदीपोक्तलक्षणमित्यर्थः। अत्र च—

"कार्पासमुपवीतं स्याद्विप्रस्योर्द्ध्ववृतं त्रिवृत्।
शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम्"।

इति,—"कौषं क्षौमं वा त्रिवृत् यज्ञोपवीतमानाभेः"—इति चैवमादिस्मृत्यन्तरेभ्यो विशेषोऽवगन्तव्यः। मुख्यस्यायं पक्षः, इह वाशब्दाभावात् उत्तरत्र च वाशब्दाम्नानात्—इति भट्टनारायणप्रभृतयः। यच—"वाससा यज्ञोपवीतानि कुरुते, तदभावे

विहृता सूत्रेण"—इति निगमपरिशिष्टवाक्यम्। तत्र यज्ञोपवीत-पदमुत्तरीयपरं तद्धर्मविन्यासविशेषलाभार्थम्। यथा "उपसद्भिश्चरित्वा मासमेकमग्निहोत्रं जुहोति"—इति कौण्डपायिनामयनेऽग्निहोत्रपदमग्निहोत्रधर्मप्राप्त्यर्थं गौणम्। एवमिहापीत्यदोषः। एवं बहूनि वचनान्यस्मिन्नेवोपपद्यन्ते। अन्यथा अस्मादेव वाक्यात्तानि वस्त्रालाभविषयाणि वक्तव्यानि। न चैतदुचितम्। कस्मात्?।

"विरोधो यत्र वाक्यानां प्रामाण्यं तत्र भूयसाम्"।

इति स्मरणात्। अतएव स्मर्य्यते।—

"यथा यज्ञोपवीतञ्च धार्य्यते च द्विजोत्तमैः।
तथा सन्धार्य्यते यत्नादुत्तराच्छादनं परम्"।

इति।

"यज्ञोपवीते द्वे धार्य्ये श्रौतस्मार्त्तेषु कर्म्मसु।
तृतीयञ्चोत्तरीयार्थं वस्त्रालाभेतदिष्यते"।

इति चैवमादि। परिशिष्टप्रकाशेऽप्युक्तम्—"यज्ञोपवीतानीत्युत्तरीये गौणं तद्धर्मविन्यासविशेषप्राप्त्यर्थम्"—इति।

'वस्त्रं वा'—अरण्यादावुपवीतनाशे सूत्रलाभासम्भवात्, यज्ञोपवीतं कुरुते। अन्यथा ह्युपवीतस्य मेहनादावनर्थः स्यात्।

"पिबतो मेहतश्चापि भुञ्जतोऽनुपवीतिनः।
प्राणायामत्रिकं षट्कं नवकञ्च यथाक्रमम्"।

इति स्मरणात्। न खलु समुद्भूतवेगानाममीषां क्षणमपि विलम्बः सम्भवति, वेगप्रतिघातप्रतिषेधाच्च,—इत्यन्यदेतत्।

'अपि वा'—अथवा—(चौरादिभिर्वस्त्रस्याप्यपहारेऽरण्यादौ) 'कुशरज्जुमेव' यज्ञोपवीतं कुरुते। एव शब्दो यज्ञोपवीतकरणं नियमति। कर्म्माङ्गमेव यज्ञोपवीतं मन्यमानः, तस्मादन्यत्रायज्ञोपवीती प्रत्यवैतीत्यर्थः। तदत्र यज्ञोपवीतं विहितं पुरुषार्थं यस्य कर्म्मसंयोगः पुरस्तादुक्त इत्यभिप्रायः। तदेतत् कात्यायनेनाप्युक्तम्।

"सदोपवीतिना भाव्यं सदा बद्धशिखेन च।
विशिखो व्युपवीतश्च यत् करोति न तत्कृतम्"।

इति ॥ १ ॥ * ॥

तस्यैव खल्विदानीं यज्ञोपवीतस्य विन्यासविशेषः परिभाष्यते द्वाभ्यां, विनियोगविशेषविवक्षया।—

**दक्षिणं बाहुमुद्धृत्यशिरोऽवधाय सव्येंऽसे प्रतिष्ठापयति दक्षिणं कक्षमन्ववलम्बं भवत्येवं यज्ञोपवीती भवति ॥ २ ॥**

दक्षिणं सव्येतरं बाहुं भुजमुद्धृत्योत्क्षिप्य, शिरोमूर्द्धानमवधाय वेष्टयित्वा, 'सव्ये' दक्षिणेतरे—वामे, अंसे स्कन्धे इत्यर्थः। प्रतिष्ठापयति स्थापयति,—यज्ञोपवीतम्। (तथा सति) दक्षिणं कक्षं बाहुमूलकोटरप्रदेशं, अनु-अधः, अवलम्बं लम्बमानं भवति—यज्ञोपवीतमर्थात्। पुरुषस्त्वेवमनेन प्रकारेण यज्ञोपवीती भवति। सेयं परिभाषा कर्म्मार्था—"उपवीतं देवानामुपव्ययते"—इत्येवमादिशास्त्रशेषभूता च। विध्येकवाक्यतया खल्वर्थवादानां प्रमाणमनुमन्यन्ते तान्त्रिकाः—"विधिनात्वेकवाक्यत्वात् स्तुत्यर्थेनविधीनां स्युः"—इति। न

खल्वयमपूर्व्वस्य यज्ञोपवीतित्वस्य विधिः,—अपि तु संज्ञाविधिरेषः एवं यज्ञोपवीती भवतीति। कस्मात्?। पक्षान्तरे वाक्यभेदात्। अपूर्व्वस्य यज्ञोपवीतित्वस्यायं विधिरित्येतस्मिन् पक्षे भिद्येत वाक्यम्। कथम्?। यज्ञोपवीती भवेत्, स चैवं भवति—इति वचनव्यक्तिभेदात्। न च विशिष्टो विधिः सम्भवति, प्राप्तत्वात् यज्ञोपवीतस्य, अप्राप्तत्वाच्च विन्यासविशेषस्य विध्यनुवादवैषम्यापत्तेः। न च क्लृप्तविधिशेषत्वे सम्भवति कल्प्यविधिशेषत्वं न्याय्यम्। श्रुत्या चैवमवगमात्। श्रुत्या च खल्वेवमवगम्यते—संज्ञाविधिरेवैषः—इति। एवं यज्ञोपवीती भवतीति समाम्नानमेवं खल्वाञ्जस्येनोपपद्यते। नह्यत्र यज्ञोपवीती भवेदित्याम्नायते, किन्तर्हि?—एवम्—अनया रीत्या यज्ञोपवीती भवति—इति। तस्मात्—"उपवीतं देवानामुपव्ययते"—इति, "यज्ञोपवीती निर्व्वर्त्त्य"—इति चैवमादिविधीनामयं शेषः—एवं यज्ञोपवीती भवतीति। ननु यज्ञोपवीतं कुरुते इति पुरुषार्थं यज्ञोपवीतमनूद्य तस्य विन्यासविशेषः परिभाष्यते—एवं यज्ञोपवीती भवति—इति। एवं प्राचीनावीती भवति—इति च। एवन्तर्हि मन्मतमेवानुजानाति भवान्।—यज्ञसूत्रमात्रं पुरुषार्थः, विन्यासविशेषस्तु कर्म्मार्थः—इति। परमार्थतोऽपि, 'यज्ञोपवीतं कुरुते'—इति सूत्रयित्वा, 'एवं यज्ञोपवीती भवति'—इति, 'एवं प्राचीनावीती भवति'—इति च सूत्रयत आचार्य्यस्यास्मदुक्त एवार्थे स्वरसोऽवगम्यते। तदिदमभिहितमस्माभिः—"यज्ञोपवीतिनाचान्तोदकेन कृत्यम्"—इत्यत्र॥ ॥ २ ॥ * ॥

सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणेंऽसे प्रतिष्ठापयति, सव्यं कक्षमन्ववलम्बं भवत्येवं प्राचीनावीती भवति ॥ ३ ॥

सव्यं वामम्। व्याख्यातमन्यत्। यज्ञोपवीतिना कृत्यमित्येतत् व्याचिख्यासुराचार्य्यः प्राचीनावीतित्वमप्यभिदधानोयज्ञोपवीतमस्यास्तीत्यमुमेवार्थं तत्रावगमयति। भाष्यकल्पा खल्वेषा काण्डिका यज्ञोपवीतिनाचान्तोदकेन कृत्यमित्यस्य सूत्रस्य ॥ ३ ॥ * ॥

यदर्थं विन्यासविशेषः परिभाषितः स विनियोगविशेष इदानीमभिधीयते।—

पितृयज्ञे त्वेव प्राचीनावीती भवति ॥ ४ ॥

पितृभ्यः, पितॄणां वा, यज्ञः—"यजति चोदनाद्रव्यदेवताक्रियं समुदाये कृतार्थत्वात्"—इत्युक्तलक्षणः, तस्मिन् पितृयज्ञे पितृकर्म्मणीत्येतत्। तुशब्दश्चशब्दार्थोऽन्यदपि समुच्चिनोति। तदाह कात्यायनः।—

"दक्षिणं पातयेज्जानु देवान् परिचरन् सदा।

पातयेदितरज्जानु पितॄन् परिचरन्नपि"।

इति। अथवा। तुशब्दः पितृयज्ञादन्यत् व्यवच्छिनत्ति। तेनान्यत्र विशेषशास्त्रात् सर्व्वत्र यज्ञोपवीती भवतीति गम्यते। पितृयज्ञमात्रे प्राचीनावीतित्वमभिदधानः खल्वयमाचार्य्योऽर्थादन्यत्र यज्ञोपवीतित्वं दर्शयति। एकः शब्दोऽपरः खल्वार्थोऽपर्य्यो भव-

ति। कर्म्मार्थश्च विन्यासविशेषः, पितृयज्ञेऽवकाशमलभमानोऽन्यत्र निविशते। अर्थापत्तिरपि पञ्चमोप्रमाणानामिति हि तन्त्रस्थितिः। अन्यच्च पुरस्तादुक्तम्। एवशब्दश्च पित्र्ये कर्म्मणि प्राचीनावीतित्वं नियमयति। स्मरति च भगवान् मनुः।

"प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा।
पित्र्यमानिधनात् कार्य्यं विधिवद्दर्भपाणिना"।

इति। ऋज्वर्थमन्यत्॥ ४ ॥ ॥ * ॥

यज्ञोपवीतिना कृत्यमित्येतद्व्याख्यातम्। आचान्तोदकेन कृत्यमित्येतदिदानीं व्याख्यायते।—

## उदगग्नेरुत्सृप्य प्रक्षाल्य पाणी पादौ चोपविश्य त्रिराचामेत् द्विः परिमृजीत॥ ५॥

अग्निमाध्यस्याग्निहोत्रस्य प्रकृतत्वात्—गृह्यकर्म्मणः च प्रायेणाग्निसाध्यत्वात्, उदगग्नेरित्याह। उदगुत्तरतः। कस्य?। अग्नेः। उत्सृप्योत्क्रम्य (सर्पतिर्गच्छति कर्म्मा) गत्वेत्येतत्। प्रक्षाल्याद्भिः, पाणी हस्तौ, पादौ चरणौ च। तत् कथमित्याह देवलः।

"प्रथमं प्राङ्मुखः स्थित्वा पादौ प्रक्षालयेच्छनैः।
उदङ्मुखोवा दैवत्ये पैतृके दक्षिणामुखः"।

इति। परिशेषादन्यत्राह आपस्तम्बः। "प्रत्यक् पादावसेचनम्"—इति। क्रमश्च पादप्रक्षालने—"सव्यं पादमवने निजे इति सव्यं प्रक्षालयेत्, दक्षिणं पादमवने निजे इति दक्षिणं प्रक्षालयेत्"—इति

शिष्टदर्शनादवगन्तव्यः । "सव्यं प्रक्षाल्य दक्षिणं प्रक्षालयति"—इति च स्मृत्यन्तरम् ।—'उपविश्य'—

"अन्तर्जानु शुचौ देशे उपविष्ट उदङ्मुखः ।
प्राग्वा ब्राह्मेण तीर्थेन द्विजोनित्यमुपस्पृशेत्" ।

इति स्मृत्यन्तरोक्तप्रकारेणेत्यर्थः । 'त्रिः'—त्रिवारं, 'आचामेत्'—'आचान्तोदकेन कृत्यम्'—इत्यस्य परिदर्शकतया—'अप' इति वाक्यशेषः । "त्रिः पिबेदम्बु वीक्षितम्"—इति च स्मृत्यन्तरम् । अत्र त्रिराचामेदित्यभिदधान आचार्य्यः—त्रिरभ्यचणमाचमनमन्यदिति कर्त्तव्यतेति दर्शयति । मन्त्रार्थमुक्तावल्यामप्येवम् । 'द्विः' वारद्वयम्, 'परिमृजीत'—

"संवृत्याङ्गुष्ठमूलेन द्विः प्रमृज्यात्ततोमुखम्" ।

इति स्मरणान्मुखमङ्गुष्ठमूलेन प्रमृज्यादित्यर्थः ॥ ५ ॥ * ॥

## पादावभ्युक्ष्य शिरोऽभ्युक्षेत् ॥ ६ ॥

अद्भिरिति सामर्थ्यात् । स्पष्टमन्यत् । विषमासकरणं पादाभ्युक्षणशेषेण शिरोऽभ्युक्षणनिषेधार्थमिति भट्टभाष्यम् ॥ ६ ॥ * ॥

## इन्द्रियाण्यद्भिः संस्पृशेत् ॥ ७ ॥

'इन्द्रियाणि, (इन्द्रियानाममूर्त्तत्वात्) इन्द्रियायतनानि, अद्भिः करणभूताभिः, उदकार्द्रेण हस्तेनेत्येतत् । प्रतीन्द्रियमित्यर्थः । 'संस्पृशेत्'—सम्यक् स्मृत्यन्तरोक्तप्रकारेण स्पृशेत् ॥ ७ ॥ * ॥

कानि तानि इन्द्रियाणि ?—इत्यत आह ।

अक्षिणी नासिके कर्णाविति ॥ ८ ॥

अक्षिणी, चक्षुषी। नासिके, नासाच्छिद्रे। कर्णौ, श्रवणौ। 'स्पृशेत्' इति सम्बध्यते। इतिरन्यदपि स्मृत्यन्तरोक्तं समुच्चिनोति। उपन्यासमात्रमेवेदम्। क्रमश्च शास्त्रान्तरीय एव भवति। तदाह दक्षः।

"प्रक्षाल्यपाणीपादौ च त्रिः पिबेदम्बु वीक्षितम्।
सम्वृत्याङ्गुष्ठमूलेन द्विः प्रमृज्यात्ततो मुखम्।
संहत्य तिसृभिः पूर्व्वमास्यमेवमुपस्पृशेत्।
अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम्।
अङ्गुष्ठानामिकाभ्याञ्च चक्षुः श्रोत्रे पुनः पुनः।
नाभिं कनिष्ठाङ्गुष्ठेन हृदयन्तु तलेन वै।
सर्व्वाभिश्च शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत्"।

इति। तदेतत् सर्व्वं स्पष्टयति कर्म्मप्रदीपे कात्यायनः।

"त्रिः प्राश्यापोद्विरुन्मृज्य मुखमेतानुपस्पृशेत्।
आस्यनासाक्षिकर्णांश्च नाभिवक्षःशिरोंसकान्।
संहताभिस्त्रिअङ्गुलीभिरास्यमेवमुपस्पृशेत्।
अङ्गुष्ठेन प्रदेशिन्या घ्राणञ्चैवमुपस्पृशेत्।
अङ्गुष्ठानामिकाभ्याञ्च चक्षुः श्रोत्रं पुनः पुनः।
कनिष्ठाङ्गुष्ठयोर्नाभिं हृदयन्तु तलेन वै"।

इति ॥ ८ ॥ * ॥

यद्यन्मीमांस्यं स्यात्तत्तदद्भिः संस्पृशेत् ॥ ९ ॥

यत् यत्, इन्द्रियमन्यद्वाऽङ्गं, 'मीमांस्यं'—(मीमांसाविचारः) इदं

शुद्धं जातं नवेति सन्देहनिरासाय, विचार्थं—विचारार्थं भव-ति, तत्तदद्भिरुदकैः, संस्पृशेत्—प्रक्षालयेत्, न तु संशयनिरासाय विचारं कुर्य्यादित्यर्थः ॥ ९ ॥ * ॥

तच्चैतदाहुः ॥ १० ॥

तच्च तस्मिन्नाचमने, एतत् वक्ष्यमाणमाहुः ब्राह्मणवाक्यानीति वाक्यशेषः। सूत्रञ्चेदमाभाषान्तं शिष्याणां सुखावबोधार्थं भवति॥ ॥ १० ॥ * ॥

नोपस्पृशेद्व्रजन् ॥ ११ ॥

न उपस्पृशेदाचामेत्, व्रजन् (व्रजतिर्गच्छति कर्म्मा) गच्छन्नित्यर्थः ॥ ॥ ११ ॥ * ॥

न तिष्ठन् ॥ १२ ॥

न—"उपस्पृशेत्"—इति सम्बध्यते प्रतिवाक्यमितः प्रभृति। तिष्ठन्'—ऊर्द्धः सन् ॥ १२ ॥ * ॥

न हसन् ॥ १३ ॥

न, स्मयमानः—इति भट्टभाष्यम्। न हास्यं कुर्व्वन्निति फलि-तार्थः ॥ १० ॥ * ॥

न विलोकयन् ॥ १४ ॥

इतस्ततः किञ्चन विलोकयन्नोपस्पृशेत् ॥ १४ ॥ ० ॥

* नाप्रणतः ॥ १५ ॥

उपविष्टोऽप्यप्रणतोऽनवनतशरीरो नोपस्पृशेत्, उच्छिष्टानामपामङ्गेषु पातसम्भवादित्यभिप्रायः ॥ १५ ॥ ० ॥

नाङ्गुलीभिः ॥ १६ ॥

न उपस्पृशेदङ्गुलीभिरुद्धृमुदकमतिक्षिप्येत्यर्थः ॥ १६ ॥ ० ॥

नातीर्थेन ॥ १७ ॥

तीर्थादाचमनार्थशास्त्रविहिताद् यदन्यत्तदतीर्थमित्युच्यते। पर्युदासार्थः खल्वयं निपातः। तेनातीर्थेन पित्र्येण नोपस्पृशेत्। स्मरति च भगवान् मनुः।

"ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत्।
कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन"।

इति। तान्येतानि तीर्थानि—

"कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च।
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात्"।

इति स्मृत्यन्तरादवगन्तव्यानि ॥ १७ ॥ ० ॥

न सशब्दम् ॥ १८ ॥

सशब्दं यथा भवति, न तथोपस्पृशेत् ॥ १८ ॥ ० ॥

नानवेक्षितम् ॥ १९ ॥

अनवेक्षितमदृष्टमुदकं नोपस्पृशेत्। "रात्रावप्यवीक्षितेनापि शुद्धि-

दक्षा मनीषिभिः"—इति स्मरणान्न रात्रावेतन्नियम इति द्रष्टव्यम् ॥ ॥ १९ ॥ ० ॥

न बाह्वंसः ॥ २० ॥

जानुभ्यां बाहू—बहिष्कृतावंसौ—"अन्तर्जान्वोररत्नी कृत्वा चिरपो-हार्द्रीः पिवेत्"—इति स्मृत्यन्तरदर्शनात्—हस्तौ यस्य, सोऽयं बाह्वंसो नोपस्पृशेत् ॥ २० ॥ ० ॥

नान्तरीयैकदेशस्य कल्पयित्वोत्तरीयताम् ॥ २१ ॥

अधः परिधानमन्तरीयमित्याचक्षते। तस्यान्तरीयस्य,—एकदेश-स्यावयवस्य, उत्तरीयतां कल्पयित्वा। एकवासा इत्येतत् ॥ २१ ॥ ० ॥

नोष्णाभिः ॥ २२ ॥

न, उपस्पृशेत्—उष्णाभिः, वह्नितप्ताभिरद्भिर्न पुनर्घर्मतप्ताभि-रपीत्यर्थः।

"उदकेनातुराणाञ्च तथोष्णेनोष्णपायिनाम्"।

इति स्मृत्यन्तरदर्शनादनातुरः पुरुष इति वाक्यशेषः ॥ २२ ॥

न सफेनाभिः ॥ २३ ॥

अद्भिरित्येव ॥ २३ ॥ ० ॥

न च सोपानत्कः क्वचित् ॥ २४ ॥

चकारोऽप्यर्थे भिन्नक्रमो द्रष्टव्यः। उपानहौ प्रसिद्धे, ताभ्यां

स्थितः पुरुषः सोपानत्क इत्युच्यते। सोऽयं सोपानत्कः, क्वचिच्च—कस्याञ्चिदप्यवस्थायाम्।—

“राज्ञां गुरूणां देवानां न दृष्येदन्तिके चरन्।
आजानुपन्नचरणस्तथाचमनकर्म्मणि”।

इति स्मृत्यन्तरोक्तायामपि। नोपस्पृशेत्। सोऽयं कौथुमादीनां विशेषविधिः। भट्टभाष्ये त्विदं स्मृत्यन्तरमस्यापवादतया वर्णि-तम्॥ २४॥ ०॥

## कासक्तिकः॥ २५॥

“शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोपि वा।
अकृत्वा पादयोः शौचमाचान्तोप्यशुचिर्भवेत्”।

इति स्मृत्यन्तरदर्शनात्—‘के,’ शिरसि, आसक्तिका आवेष्टिका कृता येन, सोऽयं कासक्तिकः कृतशिरोवेष्टनः। ‘नोपस्पृशेत्’ इति सम्बध्यते। बद्धपरिकरः कञ्चुकी चैवमुच्यते इत्यप्याहुरन्ये॥ ॥ २५॥ ०॥

## गले बद्धः॥ २६॥

गलावलम्बितवासाः, प्रावृतोत्तरासङ्ग इत्येतत्। ‘नोपस्पृशेत्’—इत्यनुवर्त्तते॥ २६॥ ०॥

## चरणौ न प्रसार्य्य च॥ २७॥

चरणौ पादौ, प्रसार्य्य वितत्य। चशब्दः—

“नासनारूढचरण आचामेन्न जपेत् क्वचित्”।

इति स्मृत्यन्तरोक्तं समुच्चिनोति। तेन, तथाविधश्च, न, उप-स्पृशेत् ॥ २७ ॥ ० ॥

## अन्ततः प्रत्युपस्पृश्य शुचिर्भवति ॥ २८ ॥

अन्ततोयथोक्ताचमनात् परतः, प्रत्युपस्पृश्य-स्पृष्ट्वोदकं पाणिना, शुचिर्भवति पुरुष इत्यर्थः। अन्ततोमध्यत इन्द्रियायतनान्युपस्पृश्य शुचि र्भवति, न पार्श्वत इत्यन्ये ॥ २८ ॥ ० ॥

## हृदयस्पृशस्त्वेवाप आचामेत् ॥ २९ ॥

हृदयं याः स्पृशन्ति, ता इमा हृदयस्पृश एवाप आचामेदिति हृदयस्पृश आपोनियम्यन्ते। तुशब्दश्च च शब्दार्थः—

"हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः।
वैश्योद्भिः प्राशिताभिश्च शूद्रः स्पृष्टाभिरन्ततः"।

इति स्मृत्यन्तरोक्तं समुच्चिनोति ॥ २९ ॥ ० ॥

## उच्छिष्टोहैवातोऽन्यथा भवतीति ॥ ३० ॥

उच्छिष्टोह किल इत्येतिह्यार्थकोऽनर्थको वा निपातः। उच्छिष्ट एव न शुद्ध इत्यर्थः। अतोऽस्मात् यथोक्तात् विधेरन्यथाऽन्येन प्रकारेणाचान्तोऽपि भवति। इति शब्दश्चवाक्यसमाप्तिं द्योत-यति ॥ ३० ॥ ०॥

## अथ प्रत्युपस्पर्शनानि ॥ ३१ ॥

अथोपस्पर्शानन्तरं प्रति पुनरुपस्पृशन्ति येषु निमित्तेषु, ता-

नीमानि प्रत्युपस्पर्शनानि—द्विराचमननिमित्तानीत्येतत्। वक्ष्यन्ते इति वाक्यशेषः॥ २१॥ ०॥

**सुप्त्वा, भुक्त्वा, क्षुत्वा, स्नात्वा, पीत्वा, विपरिधाय च, रथ्यामाक्रम्य, श्मशानञ्चाचान्तः पुनराचामेत्॥२२॥**

सुप्त्वा—निद्रामासेव्य, भुक्त्वा—भक्षयित्वा,—किञ्चिद्भक्ष्यमित्यर्थात्, क्षुत्वा—क्षुतं कृत्वा; स्नात्वा—आप्लुत्य, पीत्वा—पेयमुदकादि, विपरिधाय—वासः। चः समुच्चये।

"होमे भोजनकाले च सन्ध्ययोरुभयोरपि।

आचान्तः पुनराचामेद्वासोविपरिधाय च"।

इत्येवमादिस्मृत्यन्तरोक्तं समुच्चिनोति। रथ्या, प्रतोली, विशिखेत्यनर्थान्तरम्। तामाक्रम्य, शवानां शयनं श्मशानम् चकारादाक्रम्येत्यनुषज्यते। आचान्तः कृताचमनः सन् पुनर्भूय आचामेदिति द्विराचमनमेषु निमित्तेषु कर्त्तव्यमन्यत्र कर्म्मकालात्। तथाच स्मृत्यन्तरम्।

"क्षुते निष्ठीविते सुप्ते परिधानेऽश्रुपातने।

कर्म्मस्थ एषु नाचामेद्दक्षिणश्रवणं स्पृशेत्"।

इति॥ २२॥ ०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये प्रथमप्रपाठकस्य द्वितीया कण्डिका॥ ०॥

---

## गोभिलीयगृह्यसूत्रे

प्रथमप्रपाठके तृतीया कण्डिका।



उक्तौ सायंप्रातर्होमकालौ, अथेदानीमाहृदनयोर्वक्तव्या—कथं होतव्यमिति। तामाह।—

**अग्निमुपसमाधाय परिसमूह्य दक्षिणजान्वक्तो दक्षिणेनाग्निमदितेऽनुमन्यस्वेत्युदकाञ्जलिं प्रसिञ्चेत्॥ १॥**

प्रादुष्कृतमग्निमुपसमीपे होमकालस्य, समाधायेन्धनेन सम्यगाधाय प्रज्वाल्य, परि सर्व्वतोभावेन समूह्य विचिप्तानग्न्यवयवानेकीकृत्य, मन्त्रानुपदेशादमन्त्रकमित्यभिप्रायः। यत् पुनराचार्य्य एव समन्त्रकं परिसमूहनं वच्यति—"इमं स्तोममिति ऋचेन परिसमूहेत्"—इति। तदत्र न भवति; परिसमूह्येत्येतावन्मात्रोपदेशात्। तदाह कर्म्मप्रदीपः।

"न कुर्य्यात् चिप्रहोमेषु द्विजः परिसमूहनम्।
वैरूपाचञ्च न जपेत् प्रपदञ्च विवर्ज्जयेत्"।

इति। चिप्रं ये हूयन्ते त इमे चिप्रहोमाः सायंप्रातर्होमादय उच्यन्ते। एवं स्तरणमप्यत्र न कर्त्तव्यम्। कस्मात्? इतः परं स्तरणाख्यानात्। इतः परं खल्वाचार्य्यः स्तरणमभिदधानः शास्त्रेषु स्तरणमिति दर्शयति। तदप्याह कर्म्मप्रदीप एव।

"यान्यधः स्मरणाम्नानाञ्च तेषु स्मरणं भवेत्।
एककार्य्यार्थसाध्यत्वात् परिधीनपि वर्ज्जयेत्"।

इति। ब्रह्मस्थापनमपि नास्त्येव। कस्मात्? तदधः समाम्नानादेव। अत एव गृह्यान्तरम्।

"एकसाध्येष्ववर्हिःषु न स्यात् परिसमूहनम्।
नोदगासादनञ्चैव चिप्रहोमा हि ते स्मृताः"।

इति चिप्रहोमानामेकसाध्यत्वम्—होममात्रसाध्यत्वं दर्शयति। गृह्यासंग्रहोप्याह।—

"राकाग्नौ पितृयज्ञे च ब्रह्माणं नोपकल्पयेत्।
सायंप्रातश्च होमेषु तथैव बलिकर्म्मसु"।

इति। न्युब्जकरणन्तु—(इदं भूमेर्भजामह इति)—कर्त्तुमुचितम्। कस्मात्?। "पूर्व्वेषु चैके"—इति तस्य पक्षप्राप्तत्वात्। न खल्वेतत् प्रतिषिध्यते। परमकरणेपि न वैगुण्यं भवति; पक्षप्राप्तत्वादेव। एकेषां खल्वाचार्य्याणां मतम्—कर्त्तव्यमिति, न कर्त्तव्यमिति चापरेषाम्। तस्मात् कारणेऽभ्युदयः, अकरणे चावैगुण्यमिति सिद्धम्।

दक्षिणजान्वक्तः,—दक्षिणं जानु अक्तम्—(अञ्चतिर्गच्छति कर्म्मा) गतं, (भूमिमित्यर्थात्) यस्य, स दक्षिणजान्वक्तः भूमिगतदक्षिणजानुक उच्यते। स खल्वयं दक्षिणजान्वक्तः, 'दक्षिणेनाग्निं' दक्षिणस्यामदूरवर्त्तिन्यान्दिश्यग्नेः, अदितेऽनुमन्य-स्वेत्यनेन मन्त्रेण करणभूतेन (तस्मान्मन्त्रं पठित्वेत्यर्थः। "मन्त्रान्ते कर्म्मादीन् सन्निपातयेत्"—इति स्मरणाच्च।) 'उद-

काञ्जलिं' विन्यासविशेषविशिष्टहस्तावञ्जलिरित्याचक्षते। 'उदकपूरितोऽञ्जलिः, अञ्जलेर्वा उदकमित्युदकाञ्जलिः। तमिममुदकाञ्जलिं प्रसिञ्चेत् प्रागग्रमित्यर्थः। अग्नेः खलु दक्षिणस्यामदूरवर्त्तिन्यां दिश्ययं प्रसेकः पूर्व्वाभिमुखस्य होता भवति। "प्राञ्चि उदञ्चि वा कर्म्माण्यनुतिष्ठेरन्"—इति च ब्राह्मणम् ॥ १ ॥ * ॥

## अनुमतेऽनुमन्यस्वेति पश्चात् ॥ २ ॥

पश्चात् पश्चिमस्यां दिश्यग्नेः—उदकाञ्जलिं प्रसिञ्चेदित्यनुवर्त्तते। उदगग्रमित्यर्थः। कृतभाष्यमन्यत् ॥ २ ॥ * ॥

## सरस्वत्यनुमन्यस्वेत्युत्तरतः ॥ ३ ॥

उत्तरत उत्तरस्यां दिश्यग्नेरुदकाञ्जलिं प्रसिञ्चेत् पूर्व्वाग्रम्। स्पष्टमन्यत् ॥ ३ ॥ ० ॥

## देवसवितः प्रसुवेति प्रदक्षिणमग्निं पर्य्युक्षेत् सकृद्वा त्रिर्वा ॥ ४ ॥

देवसवितः प्रसुवेत्यनेन मन्त्रेणकरण भूतेन प्रदक्षिणं यथा भवत्यग्नेस्तथाऽग्निं पर्य्युक्षेत् परिषिञ्चेदेष्टव्यदुदकाञ्जलिधारयेत्यर्थः। सकृदेकवारं वा त्रिर्व्वारत्रयं वा यथा भवति तथा पर्य्युक्षेदिति क्रियाविशेषणमेतत्। पर्य्युक्षणस्येदावर्त्त्यते मन्त्रोऽप्यावर्त्तनीयः। करणत्वादस्य। प्रधानस्य खल्वावृत्तौ तदनुयायिनो गुणा अप्यावर्त्तन्ते। वाशब्दौ तुल्यवद्विकल्पार्थौ। तदत्र

चिरावृत्तिपक्षे फलभूमा कल्पनीयः। इतरथा लघुप्रयत्नसाध्य मसकृत् पर्य्युक्षणे यावानर्थस्तावानेव चेत् गुरुप्रयत्नसाध्ये पक्षा-न्तरेपि स्यात्;—स्यात्तर्ह्यप्रामाण्यमेवाननुष्ठानलक्षणमस्य। कः खल्वनुन्मत्तः सत्यप्यल्पीयस्युपाये तावन्तमेवार्थमुत्पिपादयिषु र्गरी-यांसमुपायमुपादत्ते। अत एवाह कात्यायनः।—

"यत्र स्यात् कृच्छ्रभूयस्त्वं श्रेयसोपि मणीषिणः।

भूयस्त्वं ब्रुवते तत्र कृच्छ्रात् श्रेयो ह्यवाप्यते"।

इति॥ ४ ॥ ० ॥

पर्य्युक्षणप्रकारमाह।—

**पर्य्युक्षणान्तान् व्यतिहरन्नभिपर्य्युक्षन् होमी-यम्॥ ५॥**

दण्डरज्जूदकधारादिष्वादिरप्यन्त शब्दो भवतीत्याहुः। बहुवच-नश्रुतिस्त्रिर्वेति पक्षाभिप्राया। तदयमर्थः। पर्य्युक्षणानां पर्य्युक्ष-णोदकधाराणामन्तान् व्यतिहरन् अभ्यन्तरतः कुर्व्वन्नित्यर्थः। अनेनैतदुक्तं भवति। पर्य्युक्षणारम्भकोटिमभ्यन्तरतोऽवसानको-टिञ्च वहिः कुर्य्यादिति। व्यतिहरन् व्यतियोजयन् मिश्रीकु-र्व्वन्निति वा। अन्ये त्वाहुः—व्यतिहारोविकर्षः व्यतिहरन् विकृष्टा-न्तरालान् कुर्व्वन्नित्यर्थः—इति। होमीयं होमार्थमुपक्लृप्तं व्री-ह्यादि, अभिपर्य्युक्षन् धारया अभ्यन्तरतः कुर्व्वन्नित्यर्थः। अथवा। अभिपर्य्युक्षन् आभिमुख्येन सिञ्चन् स्पर्शयन्नित्येतत्। पर्य्युक्षेदग्निमिति पूर्व्वसूत्रस्थं सम्बध्यते॥ ५॥ ०॥

**अथ हविष्यस्यान्नस्याग्नौ जुहुयात् कृतस्य वाऽकृतस्य वा ॥ ६ ॥**

अथेत्यानन्तर्य्यार्थोविशिष्टमानन्तर्य्यमभिद्योतयति ।

"समिदादिषु होमेषु मन्त्रदैवतवर्ज्जिता ।
पुरस्ताच्चोपरिष्टाच्च इन्धनार्थं समिद्भवेत्" ।

इति कर्म्मप्रदीपदर्शनात् पर्य्युक्षणानन्तरं तूष्णीं समिधम् धायेत्यर्थः । समिच्च प्रोक्षितैवाधातव्येत्याहापस्तम्बः । "नाप्रोक्षितमिन्धनमग्नावादध्यात्"—इति । हविष्यस्य हविर्षिसाधोः—

"हविष्येषु यवा मुख्यास्तदनुव्रीहयः स्मृताः ।
माषकोद्रवगौरादीन् सर्व्वालाभेऽपि वर्ज्जयेत्" ।

इति कर्म्मप्रदीपोक्तस्य माषकोद्रवादिवर्ज्जस्य यवादेः । अन्नस्य अदनीयस्य कीटाद्यदुष्टतया भक्षणयोग्यस्येत्येतत् । षष्ठी चेयं सम्बन्धार्था । हविष्येणान्नेनाग्नौ जुहुयात् होममभिनिर्व्वर्त्तयेदित्यर्थः । अथवा । अवयवार्थैवेयं षष्ठीद्रष्टव्या । हविष्यस्यान्नस्यावयवेन होममभिनिर्व्वर्त्तयेत्—इति । किमनेनोक्तं भवति ? । एतदनेनोक्तं भवति । न सर्व्वमिह हविष्यमन्नं होतव्यम् । किन्तर्हि ? । अवयवस्तस्य होतव्यः—यथाऽनग्निश्यते तथा होतव्यम्—इति । स खल्वयं होमः—

"होमपात्रमनादेशे द्रवद्रव्ये स्रुवः स्मृतः ।
पाणिरेवेतरस्मिंस्तु स्रुचा चात्र न हूयते" ।

इति ।

"पाण्याहुतिर्द्वादशपर्व्वपूरिका
कंसादिना चेत् स्रुवमात्रपूरिका।
दैवेन तीर्थेन च हूयते हवि-
र्व्यङ्गारिणि स्वर्च्चिषि तच्च पावके"।

इति च कर्म्मप्रदीपदर्शनात्।—

"उत्तानेनैव हस्तेन ह्यङ्गुष्ठाग्रेण पीडितम्।
संहताङ्गुलिपाणिस्तु वाग्यतो जुहुयाद्धविः"।

इति च स्मरणात्, यथोक्तप्रमाणं यथोक्तं हविर्गृहीत्वा यथोक्तेन प्रकारेण दक्षिणेन पाणिना कर्त्तव्यः। अत्र च पुनः—'अग्नौ'—इति सूचयन्नाचार्य्यः—समिद्धे वह्नौ होतव्यमिति द्योतयति। सूचितं खल्वाचार्य्येण पुरस्तादेव—"गृह्येऽग्नौ होमो विधीयते"—इति। तदाह कर्म्मप्रदीपः।—

"योऽनर्च्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः।
मन्दाग्निरामयावी च दरिद्रश्चोपजायते।
तस्मात् समिद्धे होतव्यं नासमिद्धे कदाचन।
आरोग्यमिच्छतायुश्च श्रियमात्यन्तिकीन्तथा"।

इति। समिन्धनञ्चाग्नेर्व्यजनादिनाकर्त्तव्यमित्यप्याह स एव।

"जुह्वंश्चहुतेचैव पाणिशूर्पस्फ्यदारुभिः।
न कुर्य्यादग्निधमनं कुर्य्याद्वा व्यजनादिना।
मुखेनैके धमन्त्यग्निं मुखाद्ध्येषोऽध्यजायत।
नाग्निं मुखेनेति च यल्लौकिके योजयन्ति तत्"।

इति। होमे च कर्त्तव्ये यत्र यदभिधानोऽग्निस्तत्र तमाह्वयमं-पूज्य होतव्यम्—

"सम्पूजयेत्ततो वह्निं दद्याच्चैवाहुतीः क्रमात्"।

इति।

"आह्वय चैव होतव्यं यत्र यो विहितोऽनलः"।

इति चैवमादिस्मरणात्। यत्र चाग्निर्यदभिधानो भवति तदाह गृह्यासंग्रहः।

"लौकिके पावको ह्यग्निः प्रथमः परिकीर्त्तितः।
अग्निस्तु मारुतो नाम गर्भाधाने विधीयते।
पुंसवने चन्द्रनामा शुङ्गाकर्म्मणि शोभनः।
सीमन्ते मङ्गलो नाम प्रगल्भो जातकर्म्मणि।
नाम्नि स्यात् पार्थिवो ह्यग्निः प्राशने च शुचिस्तथा।
सत्यनामा च चूड़ायां व्रतादेशे समुद्भवः।
गोदाने सूर्य्यनामा स्यात् केशान्ते ह्यग्निरुच्यते।
वैश्वानरो विसर्गे च विवाहे योजकः स्मृतः।
चतुर्थ्यान्तु शिखी नाम धृतिरग्निस्तथाऽपरे।
प्रायश्चित्ते विधुश्चैव पाकयज्ञे च साहसः।
लक्षहोमे च वह्निः स्यात् कोटिहोमे हुताशनः।
पूर्णाहुत्यां मृडोनाम शान्तिके वरदस्तथा।
पौष्टिके बलदश्चैव क्रोधोऽग्निश्चाभिचारिके।
कोष्ठे तु जठरो नाम क्रव्यादो मृतभक्षणे"।

इति। विशेषनामासम्भवे च विश्वरूपो नामाग्निः सर्व्वत्र भवति।

"सर्व्वतः पाणिपादान्तः सर्व्वतोऽक्षिशिरोमुखः।

विश्वरूपो महानग्निः प्रणीतः सर्व्वकर्म्मसु"।

इति वचनात्। हविष्यस्यान्नस्येत्येतद्विशिनष्टि;—'कृतस्य' ओदनादेर्व्वा, 'अकृतस्य' ब्रीह्यादेर्व्वा। तदाह कात्यायनः।

"कृतमोदनसक्त्वादि तण्डुलादि कृताकृतम्।

ब्रीह्यादि चाकृतं प्रोक्तमिति हव्यं त्रिधा मतम्"।

इति। व्याख्यातौ वाशब्दौ ॥ ६ ॥ * ॥

**अकृतञ्चेत् प्रक्षाल्य जुहुयात् प्रोदकं कृत्वा॥ ७ ॥**

अकृतं ब्रीह्यादि, चेत् यदि, जुहुयात्,—तर्हि पूर्व्वमेव तत् प्रक्षाल्य—"त्रिर्द्देवेभ्यः प्रक्षालयेदित्याहुः"—इति लिङ्गदर्शनात् देवार्थत्वाचास्य वारत्रयमिति वाक्यशेषः। प्रगतमुदकं यस्मात्तदिदं प्रोदकम्—प्रगतोदकं कृत्वा जुहुयात्। तदयमर्थः। पूर्व्वमेव ब्रीह्यादि प्रक्षाल्य प्रगतोदकञ्च कृत्वा संस्थापयेत् शुचौ भाजने। आगते च होमकाले तस्मादेवोद्धृत्योद्धृत्य जुहुयात्। न तु होमकाले प्रक्षालयेत्। अप्रगतोदकतयाऽग्नेरपचयापत्तेरित्यभिप्रायः। शब्दप्रमाणकत्वादस्यार्थस्य न किमपि शङ्कितव्यम्। तस्मादेव च नास्ति कृतस्य प्रक्षालनापेक्षा। न खल्वस्ति शब्दः—कृतं प्रक्षालयेदिति॥ ७ ॥ ० ॥

**अथ यदि दधिपयोयवागूं वा, कंसेन वा चरुस्थाल्या वा स्रुवेण वै वा ॥ ८ ॥**

अथ ब्रीहियवयोरभावे, यदि—दधि, पयो, यवागूं वा जुहुयात्।

यवागूर्यवसृष्टकः। स खल्वयं दध्यादिहोमानुवादो दध्यादिहोमविधिमनुमापयति—(ओीहियवयोरभावे दध्यादि जुहुयादिति)। कस्मात्?। प्राप्त्यनुसारित्वादनुवादस्य। यथा चतुरवत्तं पञ्चावत्तं वा जुहोतीति होमानुवादो होमविधिमिति शूलपाणिः। यथा वा—

"असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम्।
उच्छिष्टं भागधेयं स्याद्दर्भेषु विकिरश्च यः"।

इति दर्भेषु विकिरानुवादो दर्भेषु विकिरविधिम्। तथा चोक्तम्।

"लिङ्गादपि विधिर्ज्ञेयो दर्भेषु विकिरो यथा"।

इति। यथा वा—"यद्युवा उभयं चिकीर्षेद्धोतश्चैव ब्रह्मत्वञ्चैव"—इत्युभयचिकीर्षानुवादस्तदुभयचिकीर्षाविधिमिति। दृश्यते च—"यदि ब्राह्मणो यजेत, बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वाऽभिधारयेत्, यदि राजन्य ऐन्द्रं, यदि वैश्यो वैश्वदेवम्"—इति स यदि कादयाम्नानात् ब्राह्मणादीनां क्रतोर्विधानमिति। तथा च गृह्यान्तरम्।

"अभावे ओीहियवयोर्दध्ना वा पयसापि वा।
तदभावे यवाग्वा वा जुहुयादुदकेन वा"।

इति। तदयमर्थः। यदि ओीहियवयोरभावे दधिपयो जुहुयात्—"खादिरे बध्नाति, पालाशे बध्नाति, रोहितके बध्नाति"—इतिवदनयोरपि दधिपयसोर्विकल्पः। वाशब्दाभावश्च तुल्यवद्‌कल्पार्थः। तयोरप्यभावे यदि यवागूं वा जुहुयात्—तर्हि

कंसेन कांस्यभाजनेन वा जुहुयात्। 'चरुस्थाल्या' चरुर्यत्र श्रप्यते, सा चरुस्थालीत्युच्यते। तया चरुस्थाल्या—

"तिर्य्यगूर्द्ध्वं समिन्मात्रा दृढ़ा नातिवृहन्मुखी।
मृण्मय्यौडुम्बरी वापि चरुस्थाली प्रशस्यते"।

इति कर्म्मप्रदीपोक्तलक्षणया वा जुहुयात्। 'स्रुवेण', स्रुवः खलु होमपात्रमुच्यते—

"खादिरो वाथ पालाशो द्विवितस्तिः स्रुवः स्मृतः।
स्रग्वाङ्गमात्रा विज्ञेया वृत्तस्तु प्रग्रहस्तयोः।
स्रुवाग्रे घ्राणवत् खातं द्व्यङ्गुष्ठपरिमण्डलम्।
जुह्वाः शराववत् खातं सनिर्व्वाहं षड़ङ्गुलम्"।

इति कर्म्मप्रदीपोक्तलक्षणः। तेन स्रुवेण वा जुहुयात्। 'वै'—इति प्रसिद्धार्थकोनिपातः स्रुवस्यैवम्विधेषु होमेषु प्रसिद्धिं द्योतयति। कात्यायनोप्याह।

"होमपात्रमनादेशे द्रवद्रव्ये स्रुवः स्मृतः"।

इति। ततश्चाभावविकल्पोयम्—'कंसेन वा चरुस्थाल्या वा'—इति। तस्मात् स्रुवेणेति प्रथमः कल्पः। तस्य खल्वभावे कंसचरुस्थाल्योर्विकल्प इति सिद्धम्।

केचिदत्र सूत्रद्वयं कल्पयन्ति। तत्र—"अथ यदि दधिपयोयवागूं वा"—इत्येकं, "कंसेन वा चरुस्थाल्या वा स्रुवेण वै वा"—इति चैकं सूत्रमिति मन्यन्ते। विवरणञ्चेत्थं कुर्व्वन्ति।—अथ यदिशब्दौ प्रश्नाध्याहारार्थौ। अथ यदि व्रीहियवयोरभावः स्यात् किं जुहुयात्?—इति प्रश्नोऽध्याहारार्थः। एवं पृष्ट

आह—दधि जुहुयात्, पयो जुहुयात्, तयोरप्यभावे यवागूं वा जुहुयात्। श्रोत्रादेस्तावत् पाणिना होमः सिद्धः, दध्यादि केन जुहुयात्?—इत्यत आह। "कंसेन वा चरुस्थाल्या वा स्रुवेण वै वा"। उक्तार्थमन्यत् ॥ ८ ॥ * ॥

**अग्नये स्वाहेति पूर्व्वां तूष्णीमेवोत्तरां मध्ये चैवा-पराजितायाञ्चैव दिशीतिसायम् ॥ ९ ॥**

अग्नये स्वाहेत्यनेन मन्त्रेण पठितेन पूर्व्वां प्रथमां यथोक्तहवि-राहुतिमग्निहोत्रलक्षणां जुहुयात्। ताञ्चेमां पूर्व्वामाहुतिं मध्य एवाग्ने जुहुयात्—न तु दध्यादिहोमपक्षेप्यग्नेरपचयाशङ्कां कुर्य्यादित्येवकारार्थः। तूष्णीमेवेत्येवकारो वाग्व्यापारप्रतिषेधं नियमयत्युत्तरस्यामाहुत्याम्। सेयमुत्तराहुतिर्मन्त्रदैवतयोरनादे-शात्, प्रधानाहुतित्वया चामन्त्रदैवततया अनुचितत्वात्,—"तद्युक्ते अवणाज्जुहोतिरासेचनाधिकः स्यात्"—इति च देवतानियमात्, प्रजापतये स्वाहेति मनसैवोच्चार्य्य मन्त्रं होतव्या। कस्मात् पुनः कारणात् प्रजापतये स्वाहेत्ययमत्र मन्त्रो भवति?।

"आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते।
मन्त्रस्य देवतायाश्च प्रजापतिरितिस्थितिः।

इति कात्यायनस्मरणात्। न खलु वाग्व्यापारप्रतिषेधनियमेपि मनसोऽव्यापारः प्रतिषिद्धो भवति। तस्मात् प्रजापतये स्वाहेत्ययं मन्त्रः मनसैवोच्चारणीयो होमार्थम्। "यदग्नये च प्रजापतये च सायं जुहोति"—इति। "तस्मात् प्राजापत्यां मनसा जुहोति मनो

हि प्रजापतिः"—इति च ब्राह्मणम्। "अग्नये स्वाहा प्रजापतये स्वाहा इति सायं, सूर्य्याय स्वाहा प्रजापतये स्वाहा इति प्रातः"—इति च गृह्यान्तरम्। ताश्चेमामुत्तराहुतिमपराजितायां दिश्यग्नेर्जुहुयात्। अपराजिता, प्रागुत्तरा ऐशानीत्यनर्थान्तरम्। 'इति' अनेन प्रकारेण सायं जुहुयादग्निहोत्रलक्षणम्॥ ९ ॥ ० ॥

अथ प्रातः,—सूर्य्याय स्वाहेतिपूर्व्वां, तूष्णीमेवोत्तरां मध्ये चैवापराजितायाञ्चैव दिशि ॥ १० ॥

अथेतिपूर्व्वप्रकृतार्थम्। येनैव हविषा सायं होमः कृतः,—कृतेन वा, अकृतेन वा, दध्ना वा, पयसा वा;—तेनैव प्रातरपि होतव्यमन्यत्र प्रतिनिधेरिति खल्ववोचाम—"सायमाहुत्युपक्रम एवातऊर्द्ध्वं गृह्येऽग्नौ होमोविधीयते"—इत्यत्र। 'प्रातर्'—यथोक्तलक्षणे। कृतभाष्यमन्यत् ॥ १० ॥ * ॥

समिधमाधायानुपर्य्युक्ष्य तथैवोदकाञ्जलीन् प्रसिञ्चेदन्वमंस्था इति मन्त्रविशेषः ॥ ११ ॥

समिधं मन्त्रदैवतवर्ज्जितां प्रकृतहोमापवर्गविहितामिन्धनार्थामाधाय निःक्षिप्याग्नौ, अनुपर्य्युक्ष्याग्निं 'देवसवितः प्रसुव'—इत्यनेन मन्त्रेणेत्यर्थः। तथैव तेनैव प्रकारेण, पूर्व्वोक्तयैवावृता उदकाञ्जलीन् प्रसिञ्चेत्—'अदिते'—इत्येवमादिभिर्मन्त्रैः। 'अनुमन्यस्व'—इत्येतस्मिंश्च स्थानत्रये, 'अन्वमंस्थाः'—इति मन्त्रविशेषः मन्त्रस्य विशेषः कर्त्तव्य इति वाक्यशेषः ॥ ११ ॥ * ॥

**प्रदक्षिणमग्निं परिक्रम्यापां शेषं निनीय पूरयित्वा चमसं प्रतिष्ठाप्य यथार्थम् ॥ १२ ॥**

प्रदक्षिणं यथा भवति, तथाग्निं परिक्रम्यापां परिचरणीयानां शेषमवशिष्टं परिचरणकर्म्मणः, निनीय संस्थाप्य । संस्थापितानामप्यपां पुनः संस्थापनवचनमपरित्याज्यत्वं दर्शयति । अथवा । निनीय मिश्रयित्वा, अन्याभिरद्भिः, पूरयित्वा चमसं पात्रविशेषम् । आचमनमितिपाठेपि, आचम्यतेऽनेनेत्याचमनं पात्रमेवार्थः । तच पात्रं प्रतिष्ठाप्य, आत्मनोऽन्तिके स्थापयित्वा, यथार्थं कर्म्मापवर्गविहितं वामदेव्यगानादिकं, प्रातराहुतिपश्चाद्विहितं ब्रह्मयज्ञं वा कुर्य्यादिति वाक्यशेषः । तत्र प्रमाणं वक्ष्यामः । प्रातराहुत्यनन्तरञ्चेद्ब्रह्मयज्ञः क्रियते, तदा वामदेव्यगानमपि तदन्त एव कर्त्तव्यम् । न त्विदानीमेव प्रातराहुत्यन्ते । 'वामदेव्यं गणेष्वन्ते'— इति कात्यायनस्मरणात् । तदिदं पुनरुदकपात्रपरिपूरणमुदकालम्भनार्थमेव भवति । नत्वदृष्टार्थम् ।—

"यस्य दृष्टं न लभ्येत तस्यादृष्टं प्रकल्प्यते" ।

इति ह्यभियुक्ताः स्मरन्ति । विहितं खल्वेतदुदकालम्भनं कर्म्मकुर्व्वतोनिमित्तविशेषेषु । तदाह कर्म्मप्रदीपः ।

"पित्र्यमन्त्रानुद्रवणे आत्मालम्भे अवेक्षणे ।
अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे ।
मार्ज्जारमुषिकस्पर्शे आक्रुष्टे क्रोधसम्भवे ।
निमित्तेष्वेषु सर्व्वत्र कर्म्म कुर्व्वन्नपः स्पृशेत्" ।

इति ।

"रौद्रञ्च राक्षसं पित्र्यमासुरञ्चाभिचारिकम्।
उक्त्वा मन्त्रं स्पृशेदाप आलभ्यात्मानमेव च"।

इति च गृह्यान्तरम्॥ १२॥ *॥

## एवमत ऊर्द्धं गृह्येऽग्नौ जुहुयाद्वा हावयेद्वाऽऽजीवितावभृथात्॥ १३॥

एवमनेन प्रकारेणातोऽस्मात् पूर्व्वोक्ताद्धोमद्वयादूर्द्धं परतः, गृह्येग्नौ—(पुनरुपादानात्—अन्यान्यपि यानि कर्माणि गृह्येग्नौ विधीयन्ते, तेष्वपि, न पुनरग्निहोत्रमात्र एवेत्यर्थः।)—जुहुयाद्वा स्वयं, सम्भवश्चेत्, हावयेद्वा पुत्रादिभिरसम्भवश्चेत्। असम्भवकारणञ्चोक्तं कात्यायनेन कर्म्मप्रदीपे।

"सूतके च प्रवासे च अशक्तौ श्राद्धभोजने।
एवमादि निमित्तेषु हावयेदिति योजयेत्"।

इति। यदा पुनरसमर्थो व्याध्यादिना हावयति, तदा यत् कर्त्तव्यं तदप्याह स एव।

"स्वयं होमासमर्थस्य समीपमुपसर्पणम्।
तत्राप्यशक्तस्य सतः शयनाच्चोपवेशनम्"।

इति। तदनेन, नायं तुल्यवद्विकल्पः—जुहुयाद्वा हावयेद्वा—इति। किन्तर्हि?—व्यवस्थितोयं विकल्पः। कथं नाम?—सम्भवे जुहुयात्, असम्भवे हावयेदिति यथोक्तैव व्यवस्था।

"सन्ध्याकर्म्मावसाने तु स्वयं होमोविधीयते।
स्वयं होमे फलं यत्तु तदन्येन न जायते"।

इति च स्मृत्यन्तरम्। तदत्राद्यमग्निहोत्रहोमद्वयं स्वयमेव कर्त्तव्यम। कस्मात्?। अत ऊर्द्धम्—इत्यभिधानात्। अत ऊर्द्धमिति खल्वभिदधान आचार्य्य आद्ये होमद्वये नायं विकल्पः—(जुहुयाद्वा हावयेद्वेति)—इति दर्शयति। तस्मादाद्यं होमद्वयं स्वयमेव कर्त्तव्यम्, ऊर्द्धन्त्वस्मात् जुहुयाद्वा हावयेद्वेति सिद्धम्। तस्य खल्वेतस्याग्निहोत्रस्यावधिरुच्यते—'आजीवितावभृथात्'—इति। अवभृथोऽवसान इत्यनर्थान्तरम्। जीवितस्यावभृथोऽन्तो विनाशः क्षय इत्येकोऽर्थः। तस्मात् जीवितावभृथात् आ। (पदद्वयञ्चेदम्)। जीवितक्षयपर्य्यन्तमित्यर्थः। तथाच श्रूयते। "यावज्जीवमग्निहोत्रं जुहोति"—इति। "एतद्वै जरामर्य्यं सत्रं यदग्निहोत्रं, जरया वा ह्येवास्मान्मुच्यते मृत्युनाच"—इति। "जरामर्य्यं वा एतत् सत्रं यदग्निहोत्रं दर्शपूर्णमासौ च, जरया ह वा एताभ्यां निर्मुच्यते, मृत्युना च"—इति चैवमादि॥ १३॥ *॥

## अथाप्युदाहरन्ति॥ १४॥

अथेति पूर्व्वप्रकृतार्थम्। अथ यत् प्रकृतं—हावयेद्वेति, तदस्यार्थस्य द्रढिम्ने ब्राह्मणवाक्यमप्युदाहरन्ति शिष्टा इत्याभाषान्तं सूत्रम्॥ ॥ १४॥ *॥

## कामं गृह्येऽग्नौ पत्नी जुहुतात् सायंप्रातर्होमौ, गृहाः पत्नी, गृह्यएषोऽग्निर्भवतीति॥ १५॥

काममित्यनुमत्यर्थको निपातः। अत्रासामर्थ्ये गृह्येऽग्नौ पत्नी जुहुयात्

सायंप्रातर्होमौ। गृह्योऽग्नौ खल्वयं होम इति पत्नी जुहुयात्। कस्मात्?। तदुच्यते। गृह्याः पत्नी, एष चाग्निर्गृह्य इति ख्याच्यते। तथाच—एतस्मात् समाख्यानात् पत्नी जुहुयात्। तथाच स्मर्य्यते।

"न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते।
तयाहि सहितः सर्व्वान् पुरुषार्थान् समश्नुते"।

इति। ततश्च यावता होमनिष्पत्तिर्भवति, तावन्मात्रं पत्नीमध्यापयेत्। कस्मात्?। पत्नी जुहुयादितिवचनात्। न खल्वनधीत्य शक्नोति पत्नी होतुम्। न च तूष्णीमित्याह वचनम्। किमिव हि वचनं न कुर्य्यान्नास्ति वचनस्यातिभारः—इति हि तन्त्रस्थितिः। सा खल्वियं पत्नी होतुरन्यस्याभाव एव जुहुयात्। कस्मात्?—

"निक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजन्तथा।
प्रवसेत् कार्य्यवान् विप्रोवृथैव न चिरं क्वचित्"।

इति कर्म्मप्रदीपवाक्ये ऋत्विक् परिकल्पनस्यार्थवत्त्वात्।

"असमक्षन्तु दम्पत्योर्होतव्यं नर्त्विगादिना।
द्वयोरप्यसमक्षन्तु भवेद्धुतमनर्थकम्"।

इति च तस्याः समक्षमेवर्त्विगादिना होमानुष्ठानात्। यदपि स्मरणम्—

"पत्नी पुत्रः कुमारी वा शिष्योवापि यथाक्रमम्।
पूर्व्वपूर्व्वस्य चाभावे विदध्यादुत्तरोत्तरः"।

इति। तदपि नास्माकं सम्भवति। कुमारीश्रवणात्। न खल्वस्माकं स्वशास्त्रे कुमार्य्या होतव्यमिति श्रूयते। इतश्च। स्वशास्त्र-

विरोधात्। खशास्त्रे खल्वस्माकं पत्न्याः समन्त्रमेवर्त्विगादिना होमोऽनुज्ञायते इत्यवोचाम। न च पत्न्या अशक्तौ तदिति वाच्यं मानाभावात्। न खल्वस्मिन् सङ्कोचे प्रमाणमस्ति। न च सामान्यमपि वचनमृते कारणाद्विशेषपरं कल्पयितुमुचितम्!। इतश्च। ऋत्विक् परिकल्पनवैयर्थ्यात्। ऋत्विक्परिकल्पनं खल्वेवमनर्थकं स्यात्। पत्न्याः खल्वशक्तौ ऋत्विजा होतव्यमिति स परिचिकल्पयिषितः। सा खल्वियमनर्थिका कल्पना स्यात्। कस्मात्?। तदैव तत्सम्भवात्। यदि नामाशक्ता पत्नी भवति, तर्हि सैव तदानीमृत्विजं परिकल्पयिष्यति, किमिदानीमेव तत् परिकल्पनेन। तदशक्तौ चान्यपरिकल्पनाऽविशेषात्। परिकल्पितस्यापि ऋत्विजोऽशक्तौ अन्योपि ऋत्विक् पत्न्यापरिकल्पयितव्य एव—इति इदानीं ऋत्विक्परिकल्पने, न कश्चिद्विशेषोऽस्ति।

ननु—"जातिन्तु बादरायणोऽविशेषात्, तस्मात् स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात्"—इति सिद्धान्तात् पत्न्यप्यधिकारिणी कथमिवादितो न जुहुयात्?। उच्यते। नैतदस्ति—केवलायाः पत्न्या अधिकार इति। किन्तर्हि?—दम्पत्योः सहाधिकार इति सिद्धान्तः। तथा चोक्तम्। "स्ववतोस्तु वचनादैककर्म्यं स्यात्"—इति। "धर्मे चार्थे च कामे च नातिचरितव्या"—इति, "सहधर्मश्चरितव्यः"—इति चैवमादि खल्वभियुक्ताः स्मरन्ति। तस्मान्नास्ति पत्न्याः केवलायाः पृथगधिकारः। सहाधिकारेपि यावदुक्तमेव साऽधिकारोति इति तदन्यत्रानधिकार एव तस्याः सिध्यते। "तस्या यावदुक्तमाशीर्ब्रह्मचर्य्यमतुल्यत्वात"—इति सिद्धान्तात्। वचनबलादेवान्यथा

होतव्यमिति यथा वचनमेवाधिक्रियते। दर्शितश्चास्माभिर्वचनस्य तात्पर्य्यम्—होतुरन्यस्याभावे पत्नी जुहुयात्—इति। "सा चान्य-होतुरभावे जुहुयात्"—इति च भट्टभाष्यम्। तस्मादन्येषामेवैष नियमः। परशास्त्रोक्तं खल्वेतदिति नास्माकं भवति। तथा चाश्वलायनगृह्यम्। "पाणिग्रहणादि गृह्यं परिचरेत् स्वयं पत्न्यपि वा पुत्रः कुमार्य्यन्तेवासी वा"—इति।

इतिब्राह्मणवाक्यपरिसमाप्त्यर्थः, सायंप्रातर्होमप्रकरणपरिसमाप्त्यर्थो वा ॥ १५ ॥ * ॥

उपदिष्टो सायंप्रातर्होमो, उपदिष्टश्च प्रातर्होमानन्तरं ब्रह्मयज्ञः, —'प्रदक्षिणमग्निं परिक्रम्यापां शेषं निनीय पूरयित्वा चमसं प्रतिष्ठाप्य यथार्थम्'—इत्यत्र। स खल्वयं ब्रह्मयज्ञः पञ्चानां महायज्ञानामादिभूतः। तदाह कर्म्मप्रदीपः।

"देव-भूत-पितृ-ब्रह्म-मनुष्याणामनुक्रमात्।
महासत्राणि जानीयात्त एव हि महामखाः।
अध्यापनं महायज्ञः, पितृयज्ञस्तु तर्पणम्।
होमोदैवो, वलिर्भौतो, नृयज्ञोऽतिथिपूजनम्"।

इति। अनुक्रमादिच्यमाणानीत्यर्थ इति परिशिष्टप्रकाशः। ते खल्विमे पञ्च महायज्ञाः पञ्चसूना पापापनुत्तये गृहमेधिना प्रत्यहं कर्त्तव्याः। अत एव स्मरति भगवान्मनुः।

'पञ्चैतान् यो महायज्ञान्नहापयति शक्तितः।
स गृहेपि वसन्नित्यं सूनादोषैर्न लिप्यते"।

इति।

"पञ्चसूना गृहस्थस्य चुल्लीपेषण्युपस्करः।
कण्डनी चोदकुम्भस्य बध्यते यास्तु वाहयन्"।

इति च। स खल्वयं ब्रह्मयज्ञोऽध्यापनं श्रुतिजपस्य। तदप्याह कर्म्मप्रदीपः। "अध्यापनं ब्रह्मयज्ञः"—इति।

"वेदमादित आरभ्य शक्तितोऽहरहर्जपेत्"।

इति। "यस्य श्रुतिजपः प्रोक्तः ब्रह्मयज्ञः स चोच्यते"।

इति च। अत्र शक्तित इत्युपादानादशक्तो कियानपि श्रुतिजपो ब्रह्मयज्ञो भवतीत्यवगम्यते। "एकामृचं एकं वा यजुरेकं वा सामाभिव्याहरेत्"—इति च स्मृत्यन्तरम्। तदेवं च्छन्दोगानां स्वशाखापरिभावितोद्विविधो ब्रह्मयज्ञो भवति। परिशिष्टप्रकाशोप्येवमेवाह। भट्टभाष्ये तु—

"गुरावध्ययनं कुर्व्वन् शुश्रूषादियदाचरेत्।
स सर्व्वो ब्रह्मयज्ञः स्यात्तत्तपः परमुच्यते"।

इति स्मरणात् गुरोर्यदध्ययनं सोपि ब्रह्मयज्ञ इत्यभिहितम्। तस्य खल्वस्य ब्रह्मयज्ञस्य विकल्पेन त्रयः काला भवन्ति। तदप्याह कर्म्मप्रदीपः।

"स चार्व्वाक् तर्पणात्कार्य्यः पश्चाद्वा प्रातराहुतेः।
वैश्वदेवावसाने वा नान्यत्रेति निमित्तकात्"।

इति। तर्पणादर्व्वाक् श्रुतिजपात्मको ब्रह्मयज्ञः कार्य्य इत्येकः कालः। न चायं ब्रह्मयज्ञः सवितुरुपस्थानरूप इति वाच्यं तस्य ब्रह्मयज्ञत्वेप्रमाणाभावात्। न खल्वस्तिप्रमाणं—सवितु रुपस्थानं ब्रह्मयज्ञ इति। कात्यायनः खल्वादितः सन्ध्योपासनमुक्त्वा

उक्त्वा च तदतिक्रमदोषम्,—"वेदमादित आरभ्य"—इत्यादित आरभ्य यथाशक्तिवेदाध्ययनं विदधौ। न चेदं सवितुरुपस्थानरूपं सम्भवति। आदित आरभ्येत्यभिधानात्। न च सवितुरुपस्थाने आदित आरभ्यवेदो जप्यते, तस्मात् सन्ध्योपासनादन्य एव कश्चित् श्रुतिजपो वचनार्थः। यस्य श्रुतिजप इत्यादिना च तस्यैव ब्रह्मयज्ञसञ्ज्ञामभिधाय,—स चार्व्वाक्तर्पणात् कार्य्यः,—इति तस्यैव तर्पणादर्व्वाक् कर्त्तव्यतामाह स्म। अतएव स्मरति वृहस्पतिः।

"ब्रह्मयज्ञार्थसिद्ध्यर्थं विद्यामाध्यात्मिकीं जपेत्।
जप्त्वाथ प्रणवं वापि ततस्तर्पणमाचरेत्"।

इति। तथा च सन्ध्योपासनमभिधाय ब्रह्मपुराणे।

"कृत्वा प्रदक्षिणं सूर्य्यं नमस्कृत्योपविश्य च।
स्वाध्यायं प्राङ्मुखः कृत्वा तर्पयेद्देवतामृषीन्।

इति। स्वाध्यायब्राह्मणेपि, "रक्षांसि वा पुरानुवाके तपोग्रमतिष्ठन्त तान् प्रजापतिर्वरेणोपामन्त्रयत"—इत्येवमादिना तृतीयेनानुवाकेन सन्ध्योपासनमभिधाय, "अजान् ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयं स्वयम्भ्वभ्यानर्षत्"—इति, "यत् स्वाध्यायमधीयीतैकामप्यृचं यजुः साम वा तद्ब्रह्मयज्ञः सन्तिष्ठते"—इति चैवमादिभिरष्टाभिरनुवाकैः सविस्तरं पृथगेव ब्रह्मयज्ञः समाम्नायते। तस्मात् सवितुरुपस्थानरूपोयं ब्रह्मयज्ञ इत्यप्रमाणं वचनम्। अथैवमाचार्य्येण—"अथ नित्यवत् सन्ध्यामुपासीत उदुत्यं चित्रम्"—इत्युपक्रम्य,—"आभिर्ऋग्भिः सवितुरुपस्थानम्"—इत्यभिधाय,—"नमो ब्रह्मणे इत्युपजाप चेत्यन्तेनाग्निस्पृष्यलिसि च

सर्व्वंच सव्येनैतां स्तर्पयेत्"—इत्येवमादिना तर्पणमभिधाय,—"गायत्र्यष्टशतमादौ कृत्वा भासं दशसोभम्"—इत्यादिना,—"अहरहर्ब्रह्मयज्ञाय"—इत्येवमन्तेन तर्पणानन्तरं ब्रह्मयज्ञोऽभिहितः कथं सङ्गच्छते?। उच्यते। नैष दोषः। श्रुतिसाम्येप्यर्थभेदात्। समानायामप्युभयत्र तर्पणश्रुतावनयोरर्थभेदो भवति। भिद्यते खल्वनयोरर्थ इत्यदोषः। आचार्य्यः किल सूर्य्योपस्थानादनन्तरं स्नानाङ्गमेव तर्पणमभिदधौ, न त्वन्यत् प्रधानभूतम्—पितृयज्ञस्तु तर्पणम्—इति। स्नानप्रकरणे खल्वाचार्य्यस्तर्पणं सूर्य्योपस्थानादनुपदमाह स्म। तदस्य तर्पणस्य स्नानाङ्गतायामस्ति प्रमाणं प्रकरणम्, न तु प्रधानतायां किञ्चिदपि प्रमाणं पश्यामः। कात्यायनवाक्यस्वरसादप्येवमेवाचार्य्यस्याभिप्रायोऽवधार्य्यते। कात्यायनोपि खल्वाचार्य्यस्याभिप्रायस्य प्रकाशयितेत्यवोचाम। स च ब्रह्मयज्ञानन्तरं तर्पणं पितृयज्ञमभिदधानः सूर्य्योपस्थानादनन्तरं स्नानाङ्गमेव तर्पणमाचार्य्येणाभिहितमिति दर्शयति। अन्यथा कथमिव स्वोपजीव्यस्यैवाचार्य्यस्य विरुद्धमयमभिदधीत! एवं खल्वस्यैव वचस्यनाश्वासो लोकानां प्रसज्येत! तस्मादाचार्य्येण—"अथातः स्नानविधिं व्याख्यास्यामः"—इति प्रतिज्ञाय, "पुनः शन्नो देव्यादिभिर्मार्जनञ्च"—इत्येवमन्तेन स्नानमभिधाय, तदङ्गस्य तर्पणस्याभिधाने प्राप्ते, "अथ नित्यवत् सन्ध्यामुपासीत"—इति, "आभिर्ऋग्भिः सवितुरुपस्थानम्"—इति चानुद्य क्रमार्थं, तर्पणमभिहितम्। तस्मात् स्नानाङ्गं तर्पणं सवितुरुपस्थानात्परं पितृयज्ञस्तु तर्पणं ब्रह्मयज्ञात्परमित्यविरोधः।

ननु स चार्व्वाकृतपणात् कार्य्य इति कात्यायनवाक्यस्य पितृयज्ञपरत्वे किं मानम्?। उच्यते। पञ्चमहायज्ञप्रकरणे खल्वेवमभिहितं कात्यायनेन। तदत्र तर्पणपदस्योपक्रमोपस्थितं पितृयज्ञ एव तर्पणमर्थः। "सन्निहिते बुद्धिरन्तरङ्गा"—इति न्यायात्। "प्रकृतप्रत्ययस्य नाथ्यः"—इति चाभियुक्तवचनात्। व्यक्तिवचनानाञ्चामीषाम् आग्नेयीवत् सन्निहितव्यक्तिपरताया न्याय्यत्वात्। तस्माद् यथा "आग्नेय्या अग्नीध्रमुपतिष्ठते"—इत्याग्नेयोपदेन प्रकृतौ ज्योतिष्टोमसमाम्नातोऽन्यत्र विनियुक्तोऽपि मन्त्रो गृह्यते, न पुनर्दाशतया लिङ्गवन्तोऽपि मन्त्रा नापि तदुभयम्—इति तृतीयाध्याये निरूपितम्। एवमिहापि प्रकृतं पितृयज्ञरूपमेव तर्पणं परामृश्यते, न स्नानाङ्गं नाप्युभयमिति। न खल्वत्र तर्पणस्याङ्गत्वं प्रामाणिकम्; न चात्र श्रुतिलिङ्गादिकं किमपि प्रमाणमुपलभामहे; येन स्नानाङ्गमिदं तर्पणमिति प्रतिपद्येमहि। ब्रह्मयज्ञसाहचर्य्यादपि पितृयज्ञस्तर्पणं प्रधानमेवावगम्यते। साहचर्य्यमपि खल्वर्थस्य नियामकमिष्यते। अतएव कर्म्मप्रदीपे—पितृयज्ञस्तु तर्पणम्—इति स्नानप्रकरणैरपेक्ष्येणाम्नातम्। मनुस्मृतावपि—पितृयज्ञस्तु तर्पणम्—इत्युक्तम्। तत्र स्नानस्य तदङ्गतर्पणस्य वा नामापि न श्रूयते। न च लाघवात् स्नानाङ्गतर्पणमेव पितृयज्ञ इति वाच्यं प्रामाणाभावात्। न च धर्म्मे लाघवं प्रमाणं नाम। शब्दमूलः खल्वयमर्थो भवति। प्रकरणान्तरे खल्विदमाम्नानं प्रकरणाधिकरणन्यायेन कर्म्मान्तरमवगमयति। तथा चोक्तम्। "प्रकरणान्तरे प्रयोजनान्यत्वम्"—

इति। तुल्यञ्च समाम्नानम्—अध्यापनं ब्रह्मयज्ञस्तर्पणं पितृयज्ञो होमो देवयज्ञ इत्येवमादि, न च स्नानाङ्गतर्पणादर्व्वाक् छन्दोगानां ब्रह्मयज्ञो भवति। छन्दोगानां विहितस्यैव ब्रह्मयज्ञस्य खल्वेष कालविधिर्भवति—सचार्व्वाक् तर्पणात् कार्य्यः—इत्येवमादिः। न चान्यविषयमेतद्वाक्यम्। न खल्वस्यैव पूर्व्वस्मिन् परस्मिंश्च वाक्यप्रवाहे छन्दोगविषये सति मध्यमिदं वाक्यमकस्मादेवान्येषां भवितुमर्हति। न चार्द्धजरतीयमुचितम्। तस्मान्न किञ्चिदेतत्। स्नानाङ्गञ्च तर्पणमन्तरेण स्नानं न भवति, भवति चेदं तर्पणमन्तरेणापि स्नानं रोगाद्युपद्रवेषु।

"तर्पणन्तु शुचिः कुर्य्यात् प्रत्यहं स्नातकोद्विजः।
देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम्"।

इति च स्मृत्यन्तरम्। तदेवं सिद्धे तर्पणद्वैते, स्नानाङ्गतर्पणं सवितुरुपस्थानात् परं पितृयज्ञस्तु तर्पणं ब्रह्मयज्ञादिति न किञ्चिदनुचितम्।

यदि पुनः सामान्येन तर्पणस्य ब्रह्मयज्ञोत्तरत्वमाम्नायेतापि,—तर्हि तत् प्रकृत्या वा गृह्येत, विकृत्या वा—इति द्वयी गतिः स्यात्। तत्र यदि प्रकृत्या गृह्येत, तर्ह्युभयोः कालयोरन्यतरः कालः पक्षे त्यज्येत। यदि विकृत्यापि गृह्येत, तत्रापि चोदकेन सवितुरुपस्थानोत्तरत्वं प्राप्यते—इत्यन्यतरः कालस्त्यज्येतैव। तदेवमुभयथाप्यन्यतरस्य कालस्य परित्यागे समानेपि यतरस्मिन् पक्षे न्यायोऽनुगृह्यते, ततरः पक्ष इहाश्रयितव्यो भवति। तत्र विकृतौ चोदकप्राप्तः काल आनुमानिक इति स त्यज्यताम्, प्रकृतौ तु सूर्य्योपस्थानोत्तरकालः साक्षादाम्नात इति स न युज्यते त्यक्तुमित्य-

स्तत्पक्षे न्यायोऽनुगृह्यते। अतएव—"य इष्ट्या पशुना सोमेन आग्रयणेन वा यक्ष्यमाणः स पौर्णमास्याममावस्यायां वा यजेत"—. इति सामान्यवचनेन साङ्गस्य यागस्यामावस्यायां पौर्णमास्यां वा करणाम्नानात्; तस्य च प्रकृतिपरत्वे तत्र प्रत्यक्षसमाम्नातस्य—(पूर्व्वेद्युरग्निं गृह्णाति उत्तरमहर्द्देवतां यजेत इति)—कालस्य पक्षे परित्यागप्रसङ्गात् सामान्यवचनं विकृतिपरमिति तत्र चोदकप्राप्तमानुमानिकं द्वैयहकाल्यं परित्यज्यते इति वैकृतानामैन्द्राग्नादीनां यद्यस्काललमिति पञ्चमाध्याये सिद्धान्तितम्। यदि पुनः सामान्यमप्यभिधानं कस्माच्चिदपि कारणात् प्रकृतिविषयमप्यभविष्यत्;—अभविष्यत्तर्हि विकल्पोऽप्यनयोः कालयोः। स खल्वनुचित एव। कस्मात्?। अतुल्यबलत्वात्। अस्तु तर्ह्यन्येषामेव ब्रह्मयज्ञोत्तरत्वमिति चेद्भ्रान्तोसि। विकृतिपरतया सावकाशमत एव दुर्व्वलं सामान्यमाम्नानं न प्राकृतेन समाम्नानेन विकल्प्यते—इति ब्रूमः। तत् किमिति स्वशास्त्रोक्तमपि ब्रह्मयज्ञोत्तरत्वमन्येषां भवतु, छन्दोगस्य तदेव नित्यवत् त्यजतु। परमार्थतस्तु ब्रह्मयज्ञोत्तरत्वाम्नानं न सामान्यविषयं किन्तर्हि विकृतिविषयमेवेति पुरस्तादुपदर्शितमस्माभिः। अतएव गोभिलीयवचनम्।

"आप्लवने तु सम्प्राप्ते तर्पणं तदनन्तरम्।
गायत्रीन्तु जपेत् पश्चात् स्वाध्यायञ्चैव शक्तितः।
आप्लवने तु सम्प्राप्ते गायत्रीं जपतः पुरा।
तर्पणं कुर्व्वतः पश्चात् स्नानमेव वृथा भवेत्"।

इति। तदनेनस्नानाङ्गत्वेव तर्पणस्यायं काल इति स्पष्टमवगम्यते।

कस्मात्? । "आप्लवने तु सम्प्राप्ते—इत्युपक्रमात्। स्नानमेव वृथा भवेत्—इति चोपसंहारात्। स्नानाङ्गं खल्विदं तर्पणं अपयज्ञात् पूर्व्वं कर्त्तव्यं, अपयज्ञादनन्तरञ्च तर्पणं प्रधानभूतं पितृयज्ञरूपं कर्त्तव्यमिति कात्यायनस्याभिप्रायः। स चार्व्वाक्तर्पणात् कार्य्य इति तर्पणादर्व्वाग् ब्रह्मयज्ञमभिदधानः कात्यायनोऽर्थाद्ब्रह्मयज्ञात् परं पितृयज्ञरूपं तर्पणं दर्शयति। "अथ सधृतवासा उदकान्तं कृत्वा प्रयतः शुचौ देशे विधीयते"—इत्यापस्तम्बस्मृतावपि अथ सधृतवासा इत्युपादानात् व्यक्तमिदमवगम्यते; यदुत स्नानाङ्गतर्पणानन्तरं ब्रह्मयज्ञ इति। तदनेन तन्त्रता निरस्ता। कस्मात्? । कालभेदात्। अन्यः कालः पितृयज्ञस्य तर्पणस्य ब्रह्मयज्ञोत्तरत्वमन्यस्य कालः स्नानाङ्गस्य तर्पणस्य सूर्य्योपस्थानोत्तरत्वमिति भवति कालभेदः।

ननु भवतु तर्पणद्वयं शास्त्रार्थः। तथापि स्नानाङ्गस्यैव तर्पणस्य सपरिकराभिहितत्वात्तदेव प्रकृतीभूतमितरच्च विकृतीभूतं प्रधानरूपि, इति चोदकप्राप्ताधर्म्मास्तत्र भवन्ति इति तस्यापि सूर्य्योपस्थानोत्तरत्वं भवितुमर्हति। उच्यते। नत्वं भवितुमर्हति। स चार्व्वाक् तर्पणात् कार्य्यः—इत्याम्नानात्तु न भवति। चोदकेन हि विप्रकृष्टाधीतः कालोऽभ्योधेत, सन्निकृष्टन्तु ब्रह्मयज्ञोत्तरत्वमिति शीघ्रमुपस्थितेन ब्रह्मयज्ञोत्तरत्वेन विलम्बोपस्थितं सूर्य्योपस्थानोत्तरत्वं बाध्यते। शरमयेनेव बर्हिषा कुशमयं बर्हिः। अपिच। यदि विकृतवानुमानिकं चोदकप्राप्तं सामिधेनीनां पाञ्चदश्यं बाधित्वा, "सप्तदशसामिधेनीरनुब्रूयात्"—इत्यनारभ्याधीतेनापि वाक्येन साप्तदश्यं सामिधेनीनामिष्यते, तर्हि, स चार्व्वाक् तर्पणात् कार्य्यः—इति, ब्रह्म-

शब्दप्रसिद्ध्यर्थम्—इति चैवमादिभिर्वाक्यैः साक्षादेव पितृयज्ञविषयैः चोदकप्राप्तं सूर्योपस्थानोत्तरत्वं वाधित्वा पितृयज्ञस्य तर्पणस्य ब्रह्मयज्ञोत्तरत्वं सुतरामेष्टव्यम्। अतएव चातुर्मास्येषु साकमेधे तृतीये पर्व्वणि—"अग्नयेऽनीकवते प्रातरष्टाकपालो, मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुः, मरुद्भ्यो गृहमेधिभ्यः सर्व्वासां दुग्धे सायमोदनम्"—इति प्रातर्मध्यन्दिने सायमित्यक्तः कालेषु इष्टीनां समाम्नानात्,—यथा देवदत्तः प्रातरपूपं भक्षयति, मध्यन्दिने विविधमन्नमश्नाति, अपराह्णे मोदकान् भक्षयति—इत्येकस्मिन्नहनि इति गम्यते, तथात्रापि गम्यते—इत्येकस्मिन्नहनि इष्टीनामवगमात् सद्यस्कालताविकृतीनाममूषामिष्टीनामिति चोदकप्राप्तमानुमानिकं द्व्यहकालत्वं वाध्यत इति पञ्चमाध्याये सिद्धान्तितम्। तथा चोक्तम्। "अपि वा क्रमकालसंयुक्ता सद्यः क्रियेत तत्र विधेरनुमानात् प्रकृतिधर्म्मलोपः स्यात्"—इति। एवमिहापि भविष्यति। स चार्व्वाक् तर्पणात् कार्य्य.—इति वचनबलादवगम्यमानं तर्पणस्य पितृयज्ञस्य ब्रह्मयज्ञोत्तरत्वं कथमनर्थकम्—प्रलापमात्रं प्रतिपद्येमहि। एवं हि महर्षिमाप्तं सन्तमनाप्तं प्रकल्पयेमहि। न चैतदुचितम्। यावान् खल्वश्रुतकल्पनायां दोषस्तावानेव श्रुतस्योत्सर्गे भवति। ननु नास्त्यत्र शब्दो ब्रह्मयज्ञानन्तरन्तर्पणं पितृयज्ञ इति। साकमेधेऽपि तर्हि नास्ति शब्दः—सद्यस्काला इमा इष्टय इति। तत्रार्थादवगम्यते सद्यस्कालता इति चेदिहाप्यर्थादवगम्यते ब्रह्मयज्ञोत्तरतेत्यविशेष एव। न खलु वयं शब्दस्याप्रयोगमर्थाभावेहेतुमभ्युपगच्छामः। सत्यप्यर्थे तदवसराभावान्न प्रयुज्यते शब्द इति खल्वभियुक्ताः कथयन्ति।

गम्यते चान्यस्मात् कारणादयमर्थो—यदुत ब्रह्मयज्ञादनन्तरं पितृयज्ञस्तर्पणं कर्त्तव्यमिति। अस्ति चात्र साक्षादपि ब्रह्मयज्ञोत्तरत्वावगमकं किञ्चिद्वचनम्। तच्च पुरस्तादेवोदाहृतमस्माभिः।

ननु छन्दोगानां स्नानाङ्गतर्पणस्य सूर्य्योपस्थानोत्तरत्वं साक्षादाम्नातं विकृतावपि तदेवलभ्यते। तथा ज्योतिष्टोमस्य दृष्ट्युत्तरकालत्वं विकृतावप्यतिदेशप्राप्तम्। एवमिहापि। तस्मादनायत्या ब्रह्मयज्ञोत्तरत्वं साक्षादाम्नातमपि तदन्येषामेव भविष्यति। तत्र तावदाम्नातमपि ब्रह्मयज्ञोत्तरत्वमन्येषामस्त्वेतीति वदन् प्रष्टव्यः,—साक्षादाम्नातं ब्रह्मयज्ञोत्तरत्वं छन्दोगैः कुतस्त्यज्येत? तेषां सूर्य्योपस्थानोत्तरत्वस्य चोदकप्राप्तत्वादिति चेन्न तेषामस्यापि कालस्य वाक्येन प्राप्तत्वाविशेषात्। अपि च। चोदकेन सूर्य्योपस्थानोत्तरत्वमवगम्यते, वाक्येन च ब्रह्मयज्ञोत्तरत्वमपि, तत् कतरदिह त्यक्तव्यमिति भवति विचारणा। तत्र च चोदकप्राप्तएवानुमानिकः कालस्त्यक्तव्यः स्वशास्त्रे खल्वाम्नातं ब्रह्मयज्ञोत्तरत्वं न युज्यते त्यक्तुम्—इत्यवोचाम। ननु उक्तम्—वाजसनेयिप्रभृतिविषयमाम्नानं भविष्यतीति। नैष दोषः। न खल्वत्र समाम्नाने वाजसनेयिप्रभृतयः श्रूयन्ते, किन्तर्हि भवता कल्पयितुमभिप्रेयन्ते, सैव कल्पना न सम्भवतीति ब्रूमः। छन्दोगानां विकृतितर्पणस्य सूर्य्योपस्थानोत्तरत्वञ्चेत् केनचित् कारणेन सिध्येत्;—सिध्येदपि नाम सामान्यसमाम्नानस्य तदन्यविषयत्वमिति मन्येमहि। तच्च चोदकेन सिषाधयिषितम्, तच्च न सम्भवतीत्युक्तम्। स्वशास्त्रे च खल्वस्माकमाम्नातं ब्रह्मयज्ञोत्तरत्वमिति चावोचाम। इतरेतरा-

अर्थाचासिद्धिः। चोदकेन छन्दोगानां प्रधानतर्पणस्य सूर्योपस्थानोत्तरत्वसिद्धावेव तद्विरोधाद्वाक्यस्य तदन्यपरत्वं सेत्स्यति, सिद्धे च वाक्यस्य तदन्यपरत्वे तर्पणस्य सूर्योपस्थानोत्तरत्वसिद्धिरितीतरेतराश्रयमापद्येत। न खलु साक्षादाम्नानस्य सामान्यविषयत्वे सत्यपि चोदकस्य व्यापारोऽस्तीत्यवोचाम। तस्मादितरेतराश्रयाच्च न सिध्यति वाजसनेयिप्रभृतिविषयत्वं वचनानाम्। वैकृतस्त्वार्थोऽर्थादप्यवगतश्चोदकं बाधितुमीष्टे, चोदकस्य दुर्ब्बलत्वादित्यप्यस्माभिरुपपादितमधस्तादेव।

एतेन यत्परिशिष्टप्रकाशकृताऽभिहितम्—स चार्व्वाक् तर्पणात्कार्य्य इति यजुर्व्वेदिविषयम्, छन्दोगानान्तर्पणात्परं ब्रह्मयज्ञाभिधानादिति, यच्च तत्त्वकारेण—ब्रह्मयज्ञानन्तरन्तर्पणं सामगेतरेषामिति, तदसङ्गतम्। पितृयज्ञरूपं खल्विदं तर्पणं—स चार्व्वाक् तर्पणात्कार्य्य इति, स्नानाङ्गञ्च तर्पणं ब्रह्मयज्ञादर्व्वागभिहितमिति विभिन्नविषयतयाविरोधानवसरात्। शब्दमूलः खल्वयमर्थो भवति—अनेनेदं कर्त्तव्यमनेनेदमिति। न खल्वस्ति शब्दो—ब्रह्मयज्ञानन्तरन्तर्पणं सामगेतरेषामिति। सेयमशाब्दी पुरुषबुद्धिमूला कल्पनाप्रेक्षावतामनपेक्षणीया भवति। कस्मात्?—"धर्म्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्"—इति सिद्धान्तात्। लाघवादेवमस्तु, इति चेदुच्यते। न खलु शास्त्रबलाद्वस्तुसिद्धौ लाघवं किमपि कर्त्तुमर्हति। पुरुषप्रवृत्तौ खल्वेतदुपयुज्यते। अल्पीयस्य दृष्टानुमानकल्पनान्याय्येति चेदुच्यते। सत्यं न्याय्या—अल्पीयसी दृष्टानुमानकल्पना यत्र विशेषहेतुर्नास्ति। इह चास्ति विशेषहेतुः

—स चार्व्वाक्तर्पणात् कार्य्य इति वचनम्। न च लाघवमिति कृत्वा—छन्दोगानामप्याम्नानं वाजसनेयिनामिति कल्पयितुमुचितम्। प्रमाणस्य खल्वभावेऽल्पीयस्यपि अदृष्टानुमानकल्पना न क्रियते,—क्रियते पुनर्गरीयस्यपि सति प्रमाणे इति हि प्रमाणपरतन्त्राणां समयः। तथा चाभियुक्तानां वचनम्।

"प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि।

अदृष्टशतभागोऽपि न कल्प्यो निष्प्रमाणकः"।

इति। "प्रातर्मध्याह्ने च स्नानतर्पणयोः प्रधानाङ्गयोर्मध्य एव सन्ध्यावन्दनं तथैव कात्यायनादिना तत्प्रयोगाभिधानात्"—इति वाचस्पतिमिश्राः। तदनेन वाजसनेयिनां स्नानाङ्गतर्पणं सन्ध्योपासनात् परमेव प्रतीयते, नतु ब्रह्मयज्ञात्परमिति।

"स्नात्वोपास्य द्विजः सन्ध्यां देवादींश्चैव तर्पयेत्"।

इति च व्यासस्मरणम्। न चेदं छन्दोगानामिति शक्यते वक्तुम्, सवितुरुपस्थानानन्तरमेव तेषान्तर्पणविधानात्। न चोपस्थानान्तमेव छन्दोगानां सन्ध्योपासनम्, किन्तर्हि?—गायत्रीजपान्तमेव। कस्मात्?। अस्मात्। "अथातः सन्ध्योपासनविधिं व्याख्यास्यामः"—इति प्रतिज्ञाय, "ध्यानयुक्तमावर्त्तयेदों पूर्व्वां गायत्रीम्"—इति गायत्रीजपान्तमभिधाय, "अथ य इमां सन्ध्यां नोपास्ते"—इत्युपसंहरन्नाचार्य्यो गायत्रीजपान्तमेव सन्ध्योपासनमिति दर्शयति। अत एव स्नानप्रकरणे—"अथ नित्यवत् सन्ध्यामुपासीत"—इत्यभिधाय, "सवितुरुपस्थानं, नमो ब्रह्मणे इत्युपजाप च"—इत्यभिहितम्। तदत्र—सन्ध्यामुपासीत—इति गायत्रीजपान्तमेव सन्ध्योपासनं

प्राप्नोतीत्यन्तरातर्पणार्थम्—सवितुरुपस्थानम्—इति वचनं सङ्गच्छते। तदन्तस्य सन्ध्योपासनत्वे तु—सन्ध्यामुपासीत—इत्यनेनैव, प्राप्तत्वात्—सवितुरुपस्थानम्—इति पुनर्व्वचनमाचार्य्यस्यानर्थकमेव स्यात्। कर्म्मप्रदीपेऽपि।

"अत ऊर्द्ध्वं प्रवक्ष्यामि सन्ध्योपासनिकं विधिम्।
अनर्हः कर्म्मणां विप्रः सन्ध्याहीनो यतः स्मृतः"।

इति प्रतिज्ञाय,—

"तिष्ठेदोदयनात् पूर्व्वां मध्यमामपि शक्तितः।
आसीतोड्गमाच्चान्त्यां सन्ध्यां पूर्व्वत्रिकं जपन्"।

इति गायत्रीजपान्तमभिधाय,—

एतत् सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यत्र तिष्ठति।
यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते"।

इत्युपसंजहार। व्यासस्मृतौ च, प्रायेण वाजसनेयिनां कर्म्मोपलभ्यते। यदि केषाञ्चित् स्नानाङ्गतर्पणस्य ब्रह्मयज्ञोत्तरत्वमिष्यतापि, नैतावता कारणेनास्माकमेवोपदेशो नास्माकं भविष्यतीति समीचीनमुपलभामहे। न खल्वन्यशास्त्रोक्तमपि पुरुषबुद्ध्या बलादन्यत्र नीयते इति युक्तम्। न खल्वेवमयं धर्म्मो भवति। तस्मादाचार्य्येण मध्याह्नस्नानप्रयोगेऽन्तरा सन्ध्योपासनस्य सवितुरुपस्थानादनन्तरं तदङ्गतर्पणाभिधानात्,—"यथाहनि तथाप्रातर्नित्यं स्नायादनातुरः"—इति कर्म्मप्रदीपेन प्रातःस्नानेऽपि तद्धर्म्मातिदेशात् उभयत्र सूर्य्योपस्थानादनन्तरं छन्दोगानां स्नानाङ्गतर्पणम्। सायं सूर्य्यग्रासादौ सत्यपि सन्ध्योपासने स्नानप्रयोगान्तर्गत-

मेव तद्भवति तत्र तादृशप्रयोगविधेरभावात्। यत्र च चन्द्रोपरागादौ नास्ति सन्ध्योपासनं, तत्र सुतरां स्नानप्रयोगान्तर्भूतमेव तदङ्गं तर्पणमित्यविवाद एव। पितृयज्ञस्तु तर्पणं ब्रह्मयज्ञोत्तरमेवेति सिद्धम्। यत्पुनर्मनुवचनम्—

"यदेव तर्पयत्यद्भिः पितॄन्, स्नात्वा द्विजोत्तमः।

तेनैव सर्व्वमाप्नोति पितृयज्ञक्रियाफलम्"।

इति। तत्स्नात्वेति साङ्गस्य सतर्पणस्य स्नानस्याभिधानात् यदेवेति स्नानाङ्गमेव—पितृयज्ञस्तु तर्पणम्—इति प्रधानतर्पणं परामृशति,—अशक्तावप्यन्यस्य पितृयज्ञस्य तर्पणादेव सर्व्वं पितृयज्ञफलं दर्शयति। स्नात्वेति तु प्राप्तस्यैव कर्म्मार्थस्नानस्यानुवादः। यथा स्मृत्यन्तरे—

"यदादौ वेदमारभ्य स्नात्वा भक्त्या द्विजोत्तमः।

अध्यापयेत् द्विजान् शिष्यान् सोयं ब्रह्ममखः स्मृतः"।

इत्येवमादौ। अथवा। अत्यन्ताशक्तः स्नात्वा यदेव तर्पयति स्नानाङ्गमपि, तेनापि पितृयज्ञः कृतो भवतीत्येवमर्थं मनुवचनं भविष्यतीत्यदोषः। न चास्मादेव मनुवचनात् स्नानाङ्गतर्पणादेव प्रधानतर्पणं तन्त्रात् सेत्स्यति इति वाच्यम्। नैयायिक्यास्तन्त्रतायाः कालभेदऽसम्भवात्। नैयायिकी खल्वियं तन्त्रतेष्यते। न च कालभेदे तन्त्रतान्यायोऽस्ति। न च वचनशतेनापि न्याय आनेतुं शक्यते। तथाच—

"गणशः क्रियमाणे तु मातृभ्यः पूजनं सकृत्।

सकृदेव भवेत् श्राद्धमादौ न पृथगादिषु"।

इत्येवमादिवत् सकृदनुष्ठानबोधकं शास्त्रमस्ति। तस्मादशक्तविषयं

मनुवचनं वाच्यम्। न च वाच्यं—कात्यायनवचनमेव स्नानाशक्त-विषयं किमिति न स्यादिति। प्रमाणाभावात्। नहि मनुः स्नानाकृतर्पणस्य पितृयज्ञत्वं स्मरति, किन्तर्हि?—तेनैव पितृयज्ञफल-प्राप्तिम्। उक्तञ्चास्माभिः स्नानाङ्गतर्पणस्य जपयज्ञात् पूर्व्वत्वं, पितृयज्ञस्य च तर्पणस्य जपयज्ञात् पराचीनत्वं प्रधानत्वञ्च। तद-नयो विभिन्नविषययोर्व्वाक्ययोर्नास्त्येकविषयत्वम्। विशेषवचन-त्वाच्च। विशेषवचनं खल्विदं कात्यायनस्य छन्दोगविषयं, न सामान्येन मनुवचनेनान्येन वा सङ्कोचयितुमुचितम्। विशेषस्य बलवत्त्वात्। "पदार्थान्तरसाकाङ्क्षविशेषमपहाय तदितरत्र सा-मान्यमन्वेति"—इति हि न्यायः। कथं पुनर्मनोर्दुर्बलत्वमुच्यते? बृहस्पतिस्तस्य प्राधान्यं स्मरति—

"वेदार्थोपनिबन्धृत्वात् प्राधान्यं हि मनोः स्मृतम्।
मन्वर्थविपरीता या सा स्मृतिर्न प्रशस्यते"।

इति। अत्रोच्यते। सत्यं स्मरति बृहस्पतिरस्य प्राधान्यम्, अस्त्येव तत्, तच्च वयमपि नापलपामः। परमेतत् प्राधान्यमवष्टभ्य नात्र नि-र्णयो युक्त इति ब्रूमः। यत्र खल्वन्यत् विनिगमनाकारणं नास्ति समानविषयञ्च समाम्नानद्वयमुपलभ्यते, तत्र मनोः प्राधान्यमवष्टभ्य शास्त्रार्थावधारणा कर्त्तुमुचिता। सामान्यविशेषवचनयोस्तु विशेष-वचनं बलवदिति को नाम साहसिकः समुत्सहतेऽपलपितुम्?। एवं खल्वपहस्तितैव शास्त्रमर्य्यादा स्यात्। सर्व्वाणि दर्शनानि सर्व्वे च लोकाः व्याकुप्येरन्। अतएव बृहस्पतेरेव स्मरणम्—

"केवलं शास्त्रमाश्रित्य न कर्त्तव्यो विनिर्णयः।

युक्तिहीनविचारेण धर्म्महानिः प्रजायते"।

इति। अतएव मनोरननुमतमपि वैश्वदेवादिकमाचार्य्यानुमतमनुष्ठीयते, मन्वनुमतन्तु काम्यतया क्रियते इति निपुणतरमुपपादयिष्यामः। परमार्थतस्तु स्नात्वा यदेव तर्पयति—इति, तेनैव—इति च ब्रुवाणो मनुरेवकारादन्यत् तर्पणं विनापि, पित्र्यबलिनेव, स्नानाङ्गतर्पणेनैव पितृयज्ञफलप्राप्तिं दर्शयति इति —तद्वचनमेव पृथक्तर्पणाशक्तविषयं भवितुमुचितम्। अपिच। मनुना स्नानाङ्गतर्पणेनैव पितृयज्ञक्रियाफलप्राप्तिवचनात् तन्त्वतामनुमायान्यथानुपपत्त्या पितृयज्ञतर्पणस्य तत्कालत्वमनुमिमीते भवान्। अस्मादेव च कारणात् ब्रह्मयज्ञोत्तरत्ववचनं स्नानाशक्तविषयमिति प्रतिपद्यते,। तच्चैतदनुचितम्। कस्मात्?। इतरेतराश्रयात्। सिद्धे हि स्नानाङ्गतर्पणकालत्वे प्रधानतर्पणस्य, ब्रह्मयज्ञोत्तरत्ववचनं स्नानाशक्तविषयमवतिष्ठते। सिद्धे च ब्रह्मयज्ञोत्तरत्ववचनस्य स्नानाशक्तविषयत्वे प्रधानतर्पणस्य तत्कालत्वानुमानकल्पना—इति इतरेतराश्रयमापद्येत। अपि चार्थविप्रकर्षात्। विप्रकृष्टा खल्वेषा कालकल्पना, सन्निकृष्टेन कालेन ब्रह्मयज्ञोत्तरत्वेन बाध्यते। आनुमानिकं खल्विदं स्नानाङ्गतर्पणकालत्वं प्रत्यक्षन्तु ब्रह्मयज्ञोत्तरत्वं, प्रत्यक्षञ्चानुमानाद्बलीयः। यावत् खल्वनुमातुमुत्सहते भवान्, तावदेव ब्रह्मयज्ञोत्तरत्वमन्वीयते—इति प्रत्यक्षविरोधादनुमानमेव बाध्यते—इति युक्तम्। सदाचारस्य स्मृत्यपेक्षया दुर्ब्बलतायामित्थमेव कारणमभिहितं वार्त्तिककृद्भिः। तथा चोक्तम्।

"सदाचारः स्मृतिं यावदनुमातुं समुत्सुकः।
स्मृतिर्लब्धश्रुतिस्तावद्धर्म्ममेव प्रमापयेत्"।

इति। न्यायमालायामपि।

"स्मृतिमूलो हि सर्व्वत्र शिष्टाचारस्ततोऽत्र च।
अनुमेया स्मृतिः स्मृत्या वाध्या प्रत्यक्षया तु सा"।

इति। अपि च। तेनैव सर्व्वमाप्नोति पितृयज्ञक्रियाफलम्—इत्यवधारणमनुरशक्तविषयमिदमिति दर्शयति। शक्तस्य तु श्राद्धादिकरणं दर्शयिष्यामः। यदि पुनः केषाञ्चिदपि शाखिनां तर्पणयोः समानकालत्वं प्रामाणिकम्। तर्हि कामं तत्परमस्तु मनुवचनम्। तावताप्यस्माकं ब्रह्मयज्ञोत्तरत्ववचनं नापचीयते। तस्मादस्मदुक्त एवार्थः समादरणीयः।

अथैवमेकस्मिन्नेव दिने स्नानाङ्गं प्रधानञ्चेति तर्पणद्वयं कर्त्तव्यमित्युक्तम्। तत् खल्वनुचितमेव। कस्मात्?।—

"नावर्त्तयेत् पुनः कर्म्म तर्पणादिकमन्वहम्।
काम्यनैमित्तिके हित्वा एकं ह्येकत्र वासरे"।

इत्येवमादि स्मरणात्। उच्यते। इदं हि वाक्यं, एकं ह्येकत्र वासरे—इत्युपसंहारादेकस्यैव कर्म्मणः पुनरावृत्तिं निषेधयतीति—सकृदनुष्ठानेनैव शास्त्रार्थस्य कृतत्वात् सुतरां नावर्त्त्यते कर्म्मेति न्यायमूलम्। न पुनर्निमित्तभेदेपि नैमित्तिकानामावृत्तिं निषेधयति। सति निमित्ते नैमित्तिकस्यावश्यम्भावात्। अत एवैकस्मिन्नहनि प्रातर्मध्याह्ने च स्नानाङ्गतर्पणमुपपद्यते। काम्यनैमित्तिके हित्वा—इति च निमित्तभेदे नावृत्तौ मुनेः स्वरसोऽवगम्यते।

अत एवेदमपि प्रदर्शनमात्रं न पुनर्नियमार्थम्। न्यायस्यान्यथाप्यविशेषात्।*अतएव—

"विषुवद्दिवसे प्राप्ते पञ्चतीर्थ्यां विधानतः।

स्नात्वा सङ्कर्षणं कृष्णं दृष्ट्वा भद्राञ्च भो द्विजाः!"।

इत्येकस्मिन्नपि दिने निमित्तभेदेन नैमित्तिकावृत्तिर्न्यायावगतैव स्मर्य्यते। तथा।

"धर्म्मविन्नाचरेत् स्नानमाह्निकञ्च पुनः पुनः।

तर्पणं ब्रह्मयज्ञञ्च वैश्वदेवं न चाचरेत्"।

इति। इदमपि वचनं एकस्यैव कर्म्मण एकदैव पुनराचरणं निषेधयतीति न्यायमूलमेव। वैश्वदेवसाहचर्य्याच्चैवमवगम्यते। न खल्वेकस्मिन् दिने सकृदेव वैश्वदेवः कर्त्तव्य इति शक्यते वक्तुम्, रात्रावपि पुनर्वैश्वदेवस्य वक्ष्यमाणत्वात्। अतएव सामान्यतः स्मर्य्यते।

"यथाब्देनाब्दिकं कर्म्म मासेनैव तु मासिकम्।

न्यूनाधिकं न कर्त्तव्यं न चैकत्र क्रियाद्वयम्"।

इति। एकस्याः क्रियाया एकदा वारद्वयविधानं न युक्तमिति हलायुधः। तस्मात् तर्पणद्वयमविरुद्धम्। तदेवं ब्रह्मयज्ञस्यैकः कालः—'स चार्व्वाक् तर्पणात् कार्य्यः'—इति। 'पश्चाद्वा प्रातराहुतेः'—इत्यपरः कालः। अध्यापनं श्रुतिजपस्याच कर्त्तव्यम्। तथा च स्मर्य्यते।

"द्वितीये च तथा भागे वेदाभ्यासो विधीयते।

वेदाभ्यासो हि विप्राणां परमन्तप उच्यते।

ब्रह्मयज्ञः स विज्ञेयः षडङ्गसहितस्तु सः।
वेदस्वीकरणं पूर्व्वं विचारोऽभ्यसनं जपः।
तद्दानञ्चैव शिष्येभ्यो वेदाभ्यासस्तु पञ्चधा"।

इति। अनया च स्मृत्येदमवगम्यते—यत् गुरोरध्ययनमपि ब्रह्मयज्ञोऽचैव कर्त्तव्यमिति। अत्र चाध्यापनं प्रथमः कल्प इति भट्टभाष्यम्। कर्म्मप्रदीपेऽप्याह।

"ब्रह्मयज्ञादपि ब्रह्मदानमेवातिरिच्यते"।

इति। 'वैश्वदेवावसाने वा'—इत्यपरः कालः। वैश्वदेवो नाम होम उच्यते देवयज्ञरूपः—विश्वे देवाः सर्व्वे देवाः, ते यस्य होमस्य देवताः सोयं देवयज्ञात्मको होमो वैश्वदेव इत्युच्यते। तदवसानमन्यः कालो ब्रह्मयज्ञस्य। तस्य खल्वस्य वैश्वदेवस्यावसाने विहितमपि वामदेव्यगानं बलिकर्म्मान्त एव कर्त्तव्यम्।

"अहोमकेष्वपि भवेत् यथोक्तं चन्द्रदर्शने।
वामदेव्यं गणेष्वन्ते बल्यन्ते वैश्वदेविके"।

इति कर्म्मप्रदीपदर्शनात्। स खल्वयं वामदेव्यगानरूपो ब्रह्मयज्ञो वैश्वदेवावसाने बलिकर्म्म कृत्वा कर्त्तव्यः—इति परिशिष्टप्रकाशः। बल्यन्ते वामदेव्यगानान्तिको यो जपः स ब्रह्मयज्ञः—इति भट्टभाष्यम्। ते खल्विमे त्रयो ब्रह्मयज्ञकाला व्यवस्थिता वेदितव्याः। कथन्नाम?—तर्पणादर्व्वाक् श्रुतिजपः। प्रातराहुतेः पश्चात् स चाध्यापनञ्चाध्ययनञ्च। वैश्वदेवावसाने स एवेति। सा खल्वियं व्यवस्था बहुसम्मतत्वादादरणीया। अनियममेते यथासम्भवं ब्रह्मयज्ञकाला इत्यपरमतम्। वैश्वदेवावसाने तु व्याख्यातारो विव-

त्त। केचिदाहुः—वामदेव्यगानमेवाच अतिजप इति। अन्ये त्वाहुः—वामदेव्यगानमपि अन्यदप्यध्ययनमच अतिजप इति। इदमेव तावन्मतमाद्रियामहे। कस्मात्?। ब्रह्मयज्ञस्यैव कालचयविधानात्। व्यवस्थायाश्च प्रमाणविशेषाभावात्। इयान् परं विशेषः। यदग्नौ कर्म्मापवर्गविहितेनापि वामदेव्यगानेन स कृतो भवति। तस्मात्—ब्रह्मयज्ञस्य कालत्रयविधानात्—ब्रह्मयज्ञोऽनिर्दिष्टकालो मनुष्ययज्ञात् पूर्व्वमेवेति कर्कभाष्यमप्रमाणम्। तमिमं वैश्वदेवमुपदिदिक्षुराचार्य्य इदमाह।—

**निष्ठिते सायमाशप्रातराशे भूतमिति प्रवाचयेत्॥ ॥१६॥**

निष्ठा निष्पत्तिः संजाताऽस्येति निष्ठितः, तस्मिन्निष्ठिते निष्पन्ने इत्येतत्। अन्ये त्वाहुः—निष्ठिते निःशेषेण व्यञ्जनोपसेचनादिसहित स्थिते सिद्धे—इति। कस्मिन्?। सायमाशप्रातराशे, सायमश्यते इति सायमाशः, प्रातरश्यते इति प्रातराशः, स च स चेति द्वन्द्वैकवद्भावस्तस्मिन् सायमाशप्रातराशे। सायंप्रातःशब्दौ खल्विमौ दिवारात्रिपरौ। कस्मात्?।

"मुनिभिर्द्दिरशनं प्रोक्तं
विप्राणां मर्त्यवासिनां नित्यम्।
अहनि च तथा तमस्विन्यां
सार्द्धप्रहरयामान्तः"।

इति कर्म्मप्रदीपदर्शनात्। भूतमिति प्रवाचयेत्, प्रकर्षेण वाचयेत्।

भूतमिति प्रवाचयेदिति सूत्रयन्नाचार्य्यो—भूतमिति ब्रूहीति प्रवाचयितुः प्रश्नोऽर्थादायात इति दर्शयति। कः प्रवाचयेत्?—गृहपतिः। कस्मात्?—प्रकृतत्वात्। कां प्रवाचयेत्?—पत्नीम्। कस्मात्?—अन्नपंक्त्यां तस्या एवाधिकारात्। कथमन्नपंक्त्यां तस्या एवाधिकारः?—मन्वादिस्मरणात्। तथा च स्मरति भगवान्मनुः।

"अर्थस्य संग्रहे चैनां व्ययेचैव नियोजयेत्।
शौचे धर्म्मेऽन्नपंक्त्यां च पारिणाय्यस्य रक्षणे"।

इति। केनचित् प्रतिबन्धेन पत्नी चेदसन्निहिता रजस्वलां, तर्हि किं कर्त्तव्यम्?—इत्यत्राह कर्म्मप्रदीपः।

"भूतप्रवाचने पत्नी यद्यसन्निहिता भवेत्।
रजोयोगादिना तत्र कथं कुर्व्वन्ति याज्ञिकाः?।
महानसेऽन्नं या कुर्य्यात्सवर्णा तां प्रवाचयेत्।
प्रणवाद्यपि वा कुर्य्यात् कात्यायनवचो यथा"।

इति ॥ १६ ॥ * ॥

## ऋते भगया वाचा शुचिर्भूत्वा ॥ १७ ॥

ऋते विना, अभगया अभजनीयया अशोभनया वाचा, तां विनेति व्यत्ययेनेयं तृतीया द्रष्टव्या। अथवा। ऋते प्रदीप्ते, प्रकृतत्वादग्नौ, वैश्वदेवार्थमिति वाक्यशेषः। भट्टभाष्ये तु—"ऋते गते। ऋगतौ। कस्मिन्?—प्रकृतत्वादग्नेर्होमार्थमग्निसविधमासादिते

इत्यर्थः। एतस्मिन् काले प्रवाचयेत्"। इति व्याख्यातम्। तथाच गृहपतिना भगया वाचा भूतमिति ब्रूहीत्येवमभिहिता पत्नी, शुचिर्भूत्वाऽऽचमनादिना, भगया वाचा शोभनया विस्पष्टया भूतमिति ब्रूयादित्यर्थः। गृहपतेः खल्वाचान्तोदकेन कृत्यमित्यनेनैव शौचं सिद्धमिति शुचिर्भूत्वेत्येतत् पत्नीसम्बन्धविवक्षयैवाचार्य्यः सूत्रयाञ्चकारेति गम्यते ॥ १७ ॥ * ॥

पत्न्या खल्वेवमुक्ते गृहपतिः—

**प्रतिजपत्योमित्युच्चैस्तस्मै नमस्तन्माख्या इत्युपांशु ॥ ॥ १८ ॥**

ॐ—इत्युच्चैः प्रतिजपति। तस्मै नमस्तन्माख्या इत्युपांशु—

"शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयन्।
किञ्चित् शब्दं स्वयं विद्यादुपांशुः स जपः स्मृतः"।

इत्युक्तलक्षणं यथा भवति, तथा प्रतिजपतीत्यनुषज्यते ॥ १८ ॥ ० ॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये प्रथमप्रपाठकस्य तृतीया काण्डिका ॥ * ॥



# गोभिलीयगृह्यसूत्रे

## प्रथमप्रपाठके चतुर्थी कण्डिका।



अथेदानीमुपक्रान्तेनान्नेन वैश्वदेवबलिकर्म्मणी कर्त्तव्ये—इत्येतदिदानीमाह।

**अथ वाग्यतो बलीन् हरेत् ॥ १ ॥**

अथेत्यानन्तर्य्यार्थम्। वक्ष्यमाणं वैश्वदेवहोमं निवर्त्त्याथानन्तरं वाग्यतः संयतवाक्, बलीन् वक्ष्यमाणान्, हरेन्निदध्यादित्यर्थः। ननु वक्ष्यति होमानन्तरम्—अथ बलीन् हरेत्,—इति, तत् किमित्यस्मिन्नर्थेत्युच्यते ?। उच्यते। होमानन्तरं बलीनेव हरेत्, नत्वन्यत् किञ्चित् कुर्य्यादित्येवमर्थम्। तदनेन वैश्वदेवावसानविहितमपि वामदेव्यगानादिकं बलिहरणान्त एव कर्त्तव्यम्। अत एव कात्यायनोऽपि—

"वामदेव्यं गणेष्वन्ते बल्यन्ते वैश्वदेविके"।

इति स्मरति। एतेन—

"प्रियो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा।

संप्राप्तो वैश्वदेवान्ते सोऽतिथिः स्वर्गसंक्रमः"।

इति स्मृतिरपि व्याख्याता वेदितव्या ॥ १ ॥ * ॥

वाग्यत इत्यस्यापवादमाह—

भाषेतान्नसंसिद्धिमतिथिभिः कामं सम्भाषेत ॥ २ ॥

भाषेत वदेत्, अन्नसं सिद्धिमन्नस्य सम्यक्सिद्धिं प्रकृतिमित्येतत् । —किमिदमन्नमुपसिक्तं उत न?—इत्येवमादिकामन्नप्रकृतिं प्रतिभाषेत । भाषणञ्चेदं पृच्छारूपम् । अन्नसंसिद्धिमन्नसंसिद्ध्यर्थं भाषेत—इति भट्टनारायणोपाध्यायाः । अतिथिभिः—

"एकरात्रं हि निवसन्नतिथि र्ब्राह्मणः स्मृतः ।

अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते" ।

इति मन्वादिस्मरणात् नास्ति द्वितीया तिथिरस्येत्यतिथिरुच्यते । तैरतिथिभिः सह । ( बहुवचनात् सम्भवे बहवोऽप्यतिथयो भवन्तीति दर्शयति । ) काममिच्छया सम्भाषेत वलिहरणकालेपि । अतिथिगुणविशेषादिकं ज्ञात्वा इच्छया सम्भाषेत वा, न वा सम्भाषेत—इत्यनियमः ॥ २ ॥ * ॥

अथ हविष्यस्यान्नस्योद्धृत्य हविष्यै र्व्यञ्जनैरुपसिच्याग्नौ जुहुयात् तूष्णीं पाणिनैव ॥ ३ ॥

अथेति प्रकृतममन्त्रकपरिसमूहनादिसमिदाधानान्तं स्मारयति । कर्म्मप्रदीपेप्याह—

"पर्य्युक्षणञ्च सर्व्वत्र कर्त्तव्यमदितेन्विति ।

अन्ते च वामदेव्यस्य गानं कुर्य्यादृचस्त्रिधा" ।

इति । हविष्यस्यान्नस्येति षष्ठी सम्बन्धार्था अवयवार्था वा । तावन्नेषः खल्वेष होमो भवति । न खल्वत्र सर्व्वज्ञतले प्रमाणमस्ति । एतद-

वग्निष्टेनैवान्नेन बलिहरणं, गृहमेधिनो भोजनञ्चान्नेव इति च वक्ष्यामः। अन्नस्येति च सूचयन्नाचार्य्यो नात्र चरोरावृदस्तीति दर्शयति। स्थालीपाके—चरौ खलु तामावृतं वक्ष्यति। न खल्वत्र स्थालीपाकः श्रूयते। मनुरपि—

"वैश्वदेवस्य सिद्धस्य गृह्येऽग्नौ विधिपूर्व्वकम्।
आभ्यः कुर्य्याद्देवताभ्यो ब्राह्मणो होममन्वहम्"।

इति स्मरति। विश्वे देवाः सर्व्वे देवास्ते यस्य पाकस्य देवताः सोऽयं वैश्वदेवोऽहरहर्यत् पच्यते तदुच्यते। तदयमर्थः। अथ समिदाधानान्तकर्म्मानन्तरं हविष्यस्यान्नस्य उद्धृत्य गृहीत्वा, हविष्यै घृतदुग्धदध्यादिभि र्व्यञ्जनैरुपकरणैरुपसिच्य सन्नीयाग्नौ जुहुयात्। तूष्णीमिति वाग्व्यापारप्रतिषेधान्मनसा मन्त्रमुच्चार्य्येत्यर्थः। वाग्यतोबलीन् हरेत्,—इति बलिहरण एव वाग्यतत्वमुक्तमितीह होमे, न प्राप्नोतीति खल्वाचार्य्यस्तूष्णीमित्याह। 'पाणिनैव' जुहुयान्न स्रुवादिपात्रान्तरेणेत्यर्थः॥ ३॥

## प्राजापत्या पूर्व्वाऽऽहुतिर्भवति सौविष्टकृत्युत्तरा॥ ४॥

प्रजापतिर्देवताऽस्येति प्राजापत्या प्रजापतिदेवताका पूर्व्वा प्रथमा आहुतिर्भवति। 'सु' शोभनं 'इष्टं' अभिलषितं करोतीति, स्विष्टकृदित्यग्निरुच्यते। कस्मादग्निरुच्यते?। तदुच्यते। 'अग्नये स्विष्टकृते स्वाहेत्युत्तरार्द्धपूर्व्वार्द्धे जुहुयात्'—इति लिङ्गात्। "देवा वै अग्निं स्विष्टकृतमब्रुवन्;—हव्यं नोवहेति, सोऽब्रवीत्; किं मे ततः स्यात्?—इति, यत् कामयसे इत्यब्रुवन्, सोऽब्रवीत्; सर्व्वेष्टिषु

केवला सौविष्टकृतीति, तथेति, सोऽवद्बुद्धौषि"—इति च ब्राह्मणं भवति। तस्य खल्वस्य स्विष्टकृत इयं सौविष्टकृती। सा खल्वियं सौविष्टकृती स्विष्टकृद्देवताका उत्तरा द्वितीया आहुतिर्भवतीत्यनुषज्यते। अत्रच—प्रजापतये स्वाहा, अग्नये स्विष्टकृते स्वाहा—इति होममन्त्रः पर्य्यवस्यति। कस्मात्?—लिङ्गदर्शनादेव। वक्ष्यति चाचार्य्यः—"मन्त्रान्ते स्वाहाकारः"—इति। "नमः स्वस्ति स्वाहा स्वधा अलं वषड्योगे चतुर्थी"—इति च शाब्दिकस्मरणम्। "अमुष्मै स्वाहेति जुहुयात्"—इति च गृह्यान्तरम्। होमोदैवः—इति वचनादयन्तावद्देवयज्ञो वैश्वदेव इति चोच्यते।

इदमिदानीं सन्दिह्यते। "अग्नावग्निर्धन्वन्तरिर्विश्वे देवाः प्रजापतिः स्विष्टकृदिति होमाः"—इति गोतमेन पञ्च आहुतयो दर्शिताः। अन्यैरपि मुनिभिरन्यथैव होमः समाम्नातः। किमेते होमा विकल्प्येरन्, आहोस्वित् समुच्चीयेरन्?। यदा समुच्चीयेरन्, तदापि किं स्वशाखाहोमानामर्व्वागन्तरा परतो वा निविशेरन्, अथ वा परत एवेति?। किन्तावत् प्राप्तम्?—विकल्प्येरन्निति। कस्मात्?। एकार्थत्वात्। वैश्वदेवनिर्वृत्त्यर्थं खल्विमे होमाः समाम्नायन्ते।'एकार्थास्तु विकल्प्येरन्'—इति खल्वाचार्य्याणां समयः। अथवा। समुच्चीयेरन्निति प्राप्तम्। कस्मात्?। अतुल्यबलत्वात्। अतुल्यबलाः खल्विमे होमा भवन्ति;—स्वशाखाविहितो होमः स्वस्यैव भवति, अन्यस्तु स्वस्य चान्यस्य च—इत्यतुल्यबलत्वात् समुच्चीयेरन्निति युक्तम्। ते खल्विमे समुच्चीयमाना होमाः, स्वशाखाहोमानाम् आदावन्ते मध्ये चानियमेन सन्निविशन्ते नियमकारिणः शास्त्र-

स्याभावादिति तावत् प्राप्तम्। एवं प्राप्ते उच्यते। विकल्पस्तावद-मीषां न सम्भवति, अतुल्यबलत्वादेव। इतश्च। स्वशास्त्रपरित्याग-प्रसङ्गात्। यदा खल्विमे विकल्प्येरन्, तदा स्वशास्त्रसमाम्नातोऽपि होमः पक्षे परित्यज्येत। न चैतदुचितम्। न खलु स्वशाखाश्र-यमुत्सृज्य परोक्तमुपादीयते। तस्मान्न विकल्पः। अथ समुच्चीयेरन्न-मी होमाः?। एतदपि न सम्भवति। कस्मात्?। एकसिद्धावन्य-वैयर्थ्यात्। एकेन स्वशास्त्रोक्तहोमेन सिद्धे फले न खल्वन्यस्य हो-मस्य प्रयोजनमुपलभामहे। येन तमपि समुच्चिनुमः। अपि च। गोतमेन प्राजापत्याहुतेरर्व्वागन्यास्तिस्र आहुतयः समाम्नायन्ते। ताः खल्विमास्तिस्र आहुतयः कौथुमादीनां प्राजापत्याहुतेर-र्व्वाक् न सम्भवन्ति। कस्मात्?। प्राजापत्या पूर्व्वाहुतिर्भवतीति समाम्नानात्। इयमेव पूर्व्वा नातोऽन्येत्यर्थः। अन्यथा पूर्व्वेति व्यर्थमापद्येत। एवं 'प्राक् स्विष्टकृत आवापः'—इति समाम्नानात् प्राजापत्याहुतेः परतः स्विष्टकृदाहुतेरर्व्वागन्यः सामान्याभिहितः पौराणिकादिको होमो माभूदित्येतदर्थं सौविष्टकृत्युत्तरेत्याह। इयमेवोत्तरा नान्येतितदर्थः। अन्ते सन्निविशन्तामितिचेन्न स्वशा-खाविहितहोमेन सिद्धे फले साधनव्यापारवैयर्थ्यात्। नन्वमी सामान्यहोमाः स्वशास्त्रहोमानामन्ते नित्यतया मा सन्निविशन्तां काम्यत एव सन्निविशन्तामिति चेदोमिति ब्रूमः। सामान्येन खल्वभिहितानां सर्व्वशाखिधर्म्मत्वमुचितम्। कस्मात्?। सामा-म्नानस्यार्थवत्त्वात्। तेषां समाम्नानं खल्वेवमर्थवद्भवति। इतरथा-ऽनर्थकं प्रलापमात्रं स्यात्। कस्मात्?। प्रातिस्विकसमाम्नानाविशे-

स्यात्। सर्व्वेषामेव शाखिनां प्रातिस्विकं समाम्नानमस्ति होमाना-मिति कस्मिंश्चिदपि शाखिन्यवकाशमलभमानं सामान्यसमाम्नानं निर्विषयमेव स्यात्। तेषां खल्वाहिताग्निमप्युपक्रम्य किञ्चिदाम्नातमि-त्यनाहिताग्निपरतयापि तदहृतार्थमेव भवति। तस्मात् सामा-न्यसमाम्नाता होमाः सामान्यधर्म्मा इति सिद्धम्। ननु शाखान्त-राधिकरणन्यायेनैकमेवेदं कर्म्मेति सर्व्वत्र सर्व्वोपसंहारो भवि-ष्यति। नैष दोषः। भिन्नशास्त्रसमाम्नानात्। विभिन्नेषु शास्त्रेषु खल्वाम्नातानां परस्परनिराकाङ्क्षाणामेषां उपसंहारो न सम्भ-वति। अतएव गृह्यपरिशिष्टम्।

"प्रयोगशास्त्रं गृह्यादि न समुच्चीयते परैः।
प्रयोगशास्त्रताहानादनारम्भविधानतः।
बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म्म प्रकीर्त्तितम्।
तस्य तावति शास्त्रार्थे कृते सर्व्वः कृतोभवेत्"।

इति। अपि चागुणत्वात्। उपसंहारैः खलु गुणानामेव भवति न प्रधानानाम्। प्रधानानि चेह सामान्यसमाम्नाता होमाः। अपि च देवताभेदात्। देवताभेदः खल्विहोपलभ्यते। न च देवताभेदे कर्म्मैक्यं भवति। अपि च पूर्व्वोत्तरत्वाम्नानात्। प्रा-जापत्या पूर्व्वाहुतिर्भवति सौविष्टकृत्युत्तरेति पूर्व्वोत्तरत्वमाहु-त्योराम्नायमानः खल्वाचार्य्य एतावानेवहोम इति दर्शयति— इत्यवोचाम। तस्मान्नामीषामेककर्म्मत्वमस्ति। तस्मादादौ मध्ये च सन्निवेशासम्भवात् स्वशास्त्रहोमानामन्त एवेच्छया सामान्य-होमाः सन्निविशन्ते। स्वशास्त्रोक्तहोमः खल्वावश्यकः सामान्य-

होमोपि निर्विषयोमाभूदितीच्छया काममन्ते भवतु, नत्वाव-श्यकः। ततश्च सामान्यहोमानामकरणे प्रत्यवायोनास्ति। करणे-त्वभ्युदयः।

"यत्र स्यात् कृच्छ्रभूयस्त्वं श्रेयसोपि, मणीषिणः।
भूयस्त्वं ब्रुवते तत्र कृच्छ्रात् श्रेयोह्यवाप्यते"।

इति स्मरणात्। वलिकर्म्मण्यप्येष न्यायश्चिन्तनीयः। एतेन—"सदा भोजनस्योपनीतस्याग्रमग्नौ जुहुयात्, अग्ने विवस्वदुषस इति पूर्व्वेण, वलिञ्चोत्तरेण कुर्य्यात्, वहुपशुधनधान्योभवति"—इत्येवमादि श्रुत्यादिसमाम्नाते काम्ये होमवलिकर्म्मणी व्याख्याते। तदेतत् सर्व्वमाह कात्यायनः।

"न स्यातां काम्यसामान्ये जुहोति वलिकर्म्मणी।
पूर्व्वं नित्यविशेषोक्त जुहोति वलिकर्म्मणोः।
काममन्ते भवेयातां न तु मध्ये कदाचन।
नैकस्मिन् कर्म्मणि तते कर्म्मान्यत्तायते यतः"।

इति। "अग्निहोत्रदेवताभ्यः सोमाय वनस्पतये अग्नीषोमाभ्यां इन्द्राग्निभ्यां द्यावापृथिवीभ्यां धन्वन्तरये इन्द्राय विश्वेभ्यो देवेभ्यो ब्रह्मणे"—इत्येवमादिकस्तु परशास्त्रोक्तो होमोवलिश्चपरैर्न कर्त्तव्य एव। परोक्तत्वात्। अक्रियैव खल्वसावन्येषामित्यवोचाम। अनाहिताग्नेर्यत् कर्त्तव्यन्तदप्याह कात्यायनः।

"अग्न्यादिर्गौतमेनोक्तो होमः शाकल एव च।
अनाहिताग्नेरेवैष युज्यते वलिभिः सह"।

इति। यः खल्वग्न्यादिहोमो गौतमेनोक्तः, स तदुक्तैरेव वलिभिः—

"दिग्देवताभ्यश्च यथा स्वं, द्वारेषु मरुद्भ्यो, गृहदेवताभ्यः प्रविश्य, ब्रह्मणे मध्ये, अद्भ्य उदकुम्भे, आकाशायेत्यन्तरीक्षे, नक्तञ्चरेभ्यश्च सायम्"—इत्येवं लक्षणैः सहित इत्येकः कल्पः। यश्च शाकलहोमो देवकृतस्यैनस—इत्याद्यष्टाहुत्यात्मकः सामवेदपठितः स चाग्नि-पुराणाद्युक्तवलिभिः सहित इत्यन्यः कल्पः। तथा चाग्निपुरा-णयोगियाज्ञवल्क्यौ।

"अन्नं व्याहृतिभिः पूर्व्वं हुत्वा मन्त्रैश्च शाकलैः।
भूतेभ्यश्च वलिं दत्त्वा ततोऽश्नीयादनग्निमान्"।

इति। प्रणवपरिशिष्टम्।

"अन्नं व्याहृतिभिर्हुत्वा तथा मन्त्रैश्च शाकलैः।
भूतेभ्यश्च वलिं दत्त्वा तदाश्नीयादनग्निकः"।

इति। तथा स्मृत्यन्तरम्।

"अनग्निकस्तु योविप्रोह्यन्नं व्याहृतिभिः स्वयम्।
हुत्वाशाकलहोमैश्च शिष्टाद्भूतवलिं हरेत्"।

इति। तदेवं गोतमोक्तहोमस्तदुक्तवलिभिः सहेति, शाकलहो-मोऽग्निपुराणाद्युक्तवलिभिः सहेति च निरपेक्षौ द्वौ कल्पाविति रघुनन्दनादीनां मतम्। तेषां मते, 'शाकल एव च'—इत्येवका-रोऽनन्तरोक्तकल्पव्यवच्छेदार्थः, च शब्दश्च वाशब्दार्थः, एष इति च प्रकृतवाचिना सर्व्वनाम्ना निरपेक्षं कल्पद्वयमुच्यते। पितृ-दयिताकारादिभिस्तु—एकस्मिन् प्रयोगे गोतमोक्ताग्न्यादिहोम-शाकलहोमौ समुच्चितौ लिखितौ। तेषां मते एवचेति निपात-समुदायः समुच्चयवाची। यथा स्मृत्यन्तरे—

"विश्वेभ्यश्चैव देवेभ्यो धन्वन्तरय एव च।
कुह्वै चैवानुमत्यै च प्रजापतय एव च"।

इति।

"दिवाचरेभ्यो भूतेभ्यो नक्तञ्चारिभ्य एव च"।

इति चैवमादौ। एवशब्दो गृह्योक्तहोमव्यवच्छेदार्थः, चशब्दः समुच्चयार्थो वा। एष इति चैकवचनान्तेन प्रकृतवाचिना सर्व्वनाम्ना समुच्चितं होमद्वयमेकप्रयोगभूतं परामृश्यते। एष इति खल्वेकवचनं विधेयविशेषणतया विवक्षितं भवितुमुचितम्। अन्यथाविवक्षायां कारणमस्ति। न चैष गौतमोक्तहोमः—एष वा शाकलहोम इत्याद्वृत्तिकल्पना प्रामाणिकी। न च साहित्यवाचिद्विवचनान्ताद्यनुक्तेर्नैवमितिवाच्यं साहित्यवाचिचकारस्योक्तत्वात्। न च, अन्नं व्याहृतिभिर्हुत्वा—इति, अनग्निकस्तु योविप्रः—इति चैवमादिभिः केवलशाकलहोमाभिधानान्न समुच्चय इति वाच्यम्, अन्यार्थानामन्यत्रानुपयोगात्। अन्यार्थाः खल्विमाः स्मृतयः—कल्पान्तरपरा नान्यत्रोपयुज्यन्ते इति कात्यायनकल्पे समुच्चयो न विरुध्यते। कल्पान्तरपराः खल्विमाः स्मृतयो भवन्ति। कस्मात्?। अतुल्यार्थत्वात्। कात्यायनेन शाकल एव होमः समाम्नातः, आसु च स्मृतिषु व्याहृतिहोमः शाकलहोमश्चेति नेमौ तुल्यौ कल्पाविति शक्यते वक्तुम्। तस्मादिमाः स्मृतयः कात्यायनकल्पात् कल्पान्तरविधायिन्यो न कात्यायनकल्पे समुच्चयं बाधितुमुत्सहन्ते। अथ व्यासस्मृतौ।—

"व्यस्ताभिर्व्याहृतीभिश्च समस्ताभिस्ततः परम्।

षड्भिर्देवकृतस्येति मन्त्रवद्भि र्यथाक्रमम्।
प्राजापत्यं स्विष्टकृतं हुत्वैवं द्वादशाहुतीः"।

इति संख्यावचनम्। यच्च स्कन्दपुराणवचनम्—

"वैश्वानरं समभ्यर्च्च्य साज्यपुष्पाक्षतैरथ।
भूराद्या व्याहृतीस्तिस्रः स्वाहान्ताः प्रणवादिकाः।
ॐ भूर्भुवः स्वः स्वाहेति विप्रोदद्यात्तथाहुतिम्।
तथा देवकृतस्याद्या जुहुयात्तु षडाहुतीः।
यमाय तूष्णीमेकाञ्च तथा स्विष्टकृदग्नये।
विश्वेभ्यश्चापि देवेभ्यो भूमौ दद्यात्ततोवलिम्।
सर्व्वेभ्यश्चापि भूतेभ्यो नमो दद्यात्तदुत्तरे।
दक्षिणेपि पितृभ्यश्च प्राचीनावीतिकोददेत्।
निर्नेजकोदकान्तेन ऐशान्यां यक्ष्मणेऽर्पयेत्।
ततो ब्रह्मादिदेवेभ्योनमोदद्यात्तदुत्तरे।
निवीती सनकादिभ्यः पितृभ्यस्त्वपसव्यवान्"।

इति। तदपि कल्पान्तरपरमेव। तस्मात् शाखिविशेष एवावतिष्ठते, इति नास्माकमेतत् प्रमाणं भवति। इतश्च शाखिविशेष एवावतिष्ठते,—संख्यान्तरवचनात्। संख्यान्तरं खल्विहोच्यते—षडभिरिति, द्वादशाहुतीरिति, षडाहुतीरिति च। अस्माकं खल्वष्टा वाहुतयः शाकलहोमे भवन्ति। अष्टाहुत्यात्मकः खल्वेष होमः काण्वब्राह्मणे समाम्नातः। तस्मादमूषां स्मृतीनां कात्यायनकल्पात् कल्पान्तरपरत्वं वाच्यम्। अतएव हलायुधेन वाजसनेयिनां देवकृतस्येति षडाहुतयोलिखिताः व्याहृतिहोमादयश्च।

अस्माकं खल्वेतस्मिन् शाकलहोमे स्वाहाकारप्रयोगो नास्ति। कथन्तर्हि होतव्यम्?। तदुच्यते। "देवकृतस्यैनसोऽवजनमसि"— इत्येवमादिभिरसिकारान्तैरेवाष्टाभिर्मन्त्रैरष्टावाहुतयो होतव्याः। कस्मादेवमुच्यते?। द्राह्यायणसमाम्नानात्। तथाच द्राह्यायण सूत्रम्। "अष्टावष्टौ शकलान्याहवनीये प्रहरेयुर्देवकृतस्येत्येतत्-प्रभृतिभिरिकारान्तैः"—इति। लाट्यायनोऽप्याचार्य्य एवमेव सूत्र-याञ्चकार। अत्र खल्विकारान्तैरिति सूत्रयन्नाचार्य्यः स्वाहाका-रस्याप्रयोगं दर्शयति। विपर्य्यये च स्वाहाकारो मन्त्रान्तः स्यात् न पुनरिकार इति। 'तस्मादिकारान्तैरित्येतत्' स्वाहाकारं परिसञ्चष्टे। अत एवाचार्य्यसायनेन प्रौढब्राह्मणभाष्ये व्याख्या-तम्—"अवयजनमसीत्येव मन्त्रैः न तत्र स्वाहाकार इत्यर्थः"— इति। होममन्त्रस्य स्वाहाकारान्तत्वमन्तरेणापि दर्शनान्नैवात्र किमपि शङ्कितव्यं भवति। तथाच सूत्रम्। "अग्निहोत्रे द्वे आहुती जुहुयुरपां पुष्पमिति पूर्व्वां स्वाहाकारेणोत्तराम्"—इति। वाच-निकी खल्वेवमादिकाव्यवस्थावचनमनुसरतीति न किञ्चिदनुचि-तम्। यत् पुनराचार्य्येणाग्निस्वामिना विवृतम्—"इकारान्तैरिति मन्त्रान्तज्ञापनार्थम्"—इति। तस्याप्यसदुक्त एवार्थैतात् पर्य्यम्। कथन्नाम?—इकार एवान्तोनात्र स्वाहाकारोऽस्तीति। अव-गम्यत एव खल्वमीषां मन्त्राणामिकारान्तत्वमिति पुनरिकारा-न्तवचनमनर्थकमेव स्यात्—यदि न परिसञ्चचीत। न च— "उत्तरादिः पूर्व्वान्तलक्षणम्"—इति सूत्रणान्नात्र मन्त्राणामि-कारान्तत्वमवगम्यते इति वाच्यं,सोमभागमन्त्रादीनामिवामीषा-

अपि लिङ्गादेवावसानावगमस्य सम्भवात् । इकारान्तैरित्यनेनाप्य-विकारावसानत्वानवगमाच्च । तस्मात्—'मन्त्रान्ते स्वाहाकारः— इति वचनादिकारान्तानां मन्त्राणामन्ते स्वाहाकारः कर्त्तव्यः'— इत्यसङ्गतं वचनम् ।

समुच्चयपक्षे च बलिभिरिति गृह्योक्त एव बलि र्ग्रह्यते । कस्मात्?। अन्तरङ्गत्वात् । विशेषानुक्तौ गृह्योक्तमेव सर्व्वेषामन्त-रङ्गं शीघ्रं हृदयमागच्छति, तन्न युज्यते विनाकारणमुत्स्रष्टुम् । इतश्च,—अप्रतिषिद्धत्वात् । प्रतिषिद्धः खल्वनग्नेर्गृह्योक्तोहोम इति समाक्रियतां, बलिस्त्वप्रतिषिद्धः कथं न क्रियते!। इतश्च;— होममात्रव्यवच्छेदात् । होमः शाकल एव च—इत्येवकारेण गृह्योक्तहोममात्रं व्यवच्छिन्दन्नृषि र्गृह्योक्तं बलिमनुजानातीत्यव-गम्यते । इतश्च,—स्वशाखाश्रयपरित्यागप्रसङ्गात् । स्वशाखाश्रयं खल्वेवं परित्यज्येत, न चैतदुचितम्, न चात्र विशेषवचनमस्ति । तस्मादनग्निनापि गृह्योक्ता बलयोदेयाः । काम्याश्च बलयो विष्णु-पुराणादौ पठिताः । त इहोच्यन्ते ।

"ततोऽन्यदन्नमादाय भूमिभागेषु वै बुधः ।
दद्यादशेषभूतेभ्यः स्वेच्छया तत्समाहितः ।
देवा मनुष्याः पशवो वयांसि
सिद्धाः सयक्षोरगदैत्यसंघाः ।
प्रेताः पिशाचास्तरवः समस्ता-
ये चान्नमिच्छन्ति मया प्रदत्तम् ॥
पिपीलिकाः कीटपतङ्गकाद्या-

बुभुक्षिताः कर्म्मनिबन्धबद्धाः ।
प्रयान्तु ते तृप्तिमिदं मयान्नं
तेभ्योनिसृष्टं सुखिनो भवन्तु ॥
येषां न माता न पिता न बन्धु—
र्नैवान्नसिद्धिर्न तथान्नमस्ति ।
तत् तृप्तयेऽन्नं भुविदत्तमेत—
त्तेयान्तु तृप्तिं मुदिता भवन्तु ॥
भूतानि सर्व्वाणि तथान्नमेत—
दहञ्च विष्णुर्न यतोऽन्यदस्ति ।
तस्मादहं भूतनिकायभूत—
मन्नं प्रयच्छामि भवाय तेषाम् ॥
चतुर्दशो भूतगणोय एष—
तत्र स्थिता येऽखिलभूतसंघाः ।
तृप्त्यर्थमन्नं हि मया निसृष्ट—
मेषामिदन्ते मुदिता भवन्तु ॥
"इत्युच्चार्य्य नरोदद्यादन्नं श्रद्धासमन्वितः ।
भुवि भूतोपकाराय गृही सर्व्वाश्रयो यतः ॥
श्वचाण्डालविहङ्गानां भुवि दद्यात्ततो नरः ।
ये चान्ये पतिताः केचिदपात्रा भुवि मानवाः" ॥

इति । तदत्र,—देवा मनुष्याः,—इत्येवमादिकां पञ्चश्लोकीमुच्चार्य्य एक एव बलिर्दातव्यः। इति नाप्रकृतवाचिना पञ्चश्लोक्याः परामर्शादन्नमिति चैकवचननिर्देशात्—इति वाचस्पतिमिश्रप्रभृतयः। एवमन्येऽपि कल्पास्तन्त्रान्तरे द्रष्टव्याः।

स खल्वयं वैश्वदेवहोमो लौकिकाग्नौ जलादावपि कर्त्तव्यः।

"लौकिके वैदिके वापि हुतोच्छिष्टे जले च्छितौ।

वैश्वदेवञ्च कुर्व्वीत पञ्चसूनापनुत्तये"।

इति शातातपस्मरणात्।

"शालाग्नौ वा पचेदन्नं लौकिके वापि नित्यशः।

यस्मिन्नग्नौ पचेदन्नं तस्मिन् होमो विधीयते"।

इति च स्मृत्यन्तरम्। जलच्छित्योः पर्य्युक्षणादिकमपि नास्ति, अग्नावेव तदाम्नानादिति वाचस्पतिमिश्राः। गोतमोक्ताग्न्यादिहोमशाकलहोमयोर्विकल्पवादिनस्त्वाहुः—गोतमवचने होमादेवाग्निप्राप्तेरग्निग्रहणं जलच्छित्याधारतानिवृत्त्यर्थं, ततश्च शाकलकल्प एव साऽवतिष्ठते—इति। तदनेन समुच्चयपक्षेऽप्यनयोर्जलच्छित्याधारता न युक्ता तत्राप्यग्न्यादिहोमस्याविशेषादिति चेत्। उच्यते। यदि नामाग्निग्रहणं जलच्छित्याधारतां निवर्त्तयेदपि, तर्हि केवलगोतमोक्तहोम एव निवर्त्तयतु, न तु तत्समुच्चिते शाकलहोमेऽपि, तद्वचनस्य तत्राप्रवृत्तेः। सामान्येन च वचनान्तरेण तत्प्राप्तेः। अपिच। नैतदप्यस्ति,—गोतमवचनेऽग्निपदं जलच्छित्याधारतानिवृत्त्यर्थम्—इति। न खलु गोतमवचनेऽग्निग्रहणं जलच्छित्याधारतां निवर्त्तयति, किन्तर्हि, एकदेशोत्कीर्त्तनपरमग्निपदं जलादिकमुपलक्षयति। अतएव—

"कनकालङ्कृतां दत्वा तत्र गामवतारयेत्।

सामगाय च सा देया ब्राह्मणाय विशाम्पते!"।

इति वचनमेकदेशोत्कीर्त्तनपरमिति,—"सचेलकण्ठां काञ्चन-

ष्टम्यां वृषप्रजां स्थूलचुरीं कांस्योपदोहां विप्राय दद्यात्"—इति
मुन्यन्तरोक्तमन्यदुपलक्षयति,—इति वाचस्पतिमिश्रैर्निरूपितम्।
ननु होमादेवाग्निप्राप्तेरग्निग्रहणमग्नावेवेत्येवमर्थमेव किमिति न स्यात्?
इति चेन्नैष दोषः। कस्मात्?। अशब्दत्वात्। अग्नाविति वचनं
भवति, तदिदं वचनमग्नौ होमं शक्नोति वदितुं, न पुनरनग्निं
निवर्त्तयितुं प्रभवति। तस्मादशब्दोऽयमर्थः—अग्नावेव इति। हो
मादेवाग्नेः प्राप्तत्वादन्याय्यं पुनर्व्वचनम्?। उच्यते। काममन्याय्यं भवतु,
न तु शक्नोत्यन्यद्वदितुम्। सकृदुच्चरितेऽप्यस्य यावानर्थः, शतकृत्वोऽप्युच्च-
रिते तावानेव प्रतीयते। अपिच। साधुः खल्वयमाचार्य्यः कथमस्य
वचनमन्याय्यं भवतु। साधोर्व्वचनं बहुशोऽप्युच्यमानं न्याय्यमेव।
असाधोस्तु सकृदप्यन्याय्यम्। पुनर्व्वचनस्य प्रयोजनं किञ्चिद्वक्तव्यम्?।
एवन्तर्हि आदरः पुनर्व्वचनस्य प्रयोजनं भविष्यति। आदरेणाग्नौ-
होमः कर्त्तव्यः—इति। आदरार्थमपि पुनर्व्वचनमाचार्य्याणां बहु-
लमुपलभ्यते इति नैषाऽस्मत्कल्पनेति शक्यते वक्तुम्। परिसंख्यार्थमेव
कुतो न भवति पुनर्व्वचनमिति चेन्न, अन्यथैवोपपत्तेः। न खल्वि-
ष्यते परिसंख्या सम्भवन्त्यामपि गतौ। सा हि दोषत्रयदुष्टा भवति।
तथा चोक्तम्।

"श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात्।
प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदोषिका"।

इति। परिसंख्यायाञ्च श्रुतिरत्यन्तमुत्सृष्टा भवति। यावच्च भवा-
नग्निपदस्यास्वार्थकल्पनया जलादिकं व्यावर्त्तयितुमुत्सहते, ताव-
द्वाक्यान्तरेण जलाद्याधारताऽन्वीयते—इत्युपरिष्टादुपजायमानेऽपि

परिसंख्यावाक्यार्थः कथमिवाभ्वितमपि जलादिकं परिसञ्चचीत। वाक्यभेदश्चैवमापद्येत। कस्मात्?। इति होमाः कर्त्तव्याः, ते चाग्नावेव न जलादावित्यर्थभेदात्। एकं खल्विदं वाक्यम्—'अग्नावग्निर्धन्वन्तरिर्विश्वेदेवाः प्रजापतिः स्विष्टकृदिति होमाः'—इति। तस्मादग्नाविति न नियमार्थं वचनम्। अन्यथा—

"वैश्वानरं समभ्यर्च्य साज्यपुष्पाहुतैरथ"।

इति।

"अनाहितावसथ्याग्निरादायान्नं घृतप्लुतम्।

शाकलेन विधानेन जुहुयाल्लौकिकेऽनले"।

इति चैवमादिस्मृतौ शाकलहोमेष्वग्नेरुपादानात्तत्रापि जलचित्याधारता न स्यात्। तस्मादेवेति चेन्नाभ्युपगमात्। अभ्युपगम्यते खल्वेतद्भवता—यदुत शाकलकल्पे जलचित्याधारतेति। अपिच। गोतमः खल्वाचार्य्यः—"भार्य्यादिरग्निर्दायादिर्वा, तस्मिन् गृह्याणि, देवपितृमनुष्ययज्ञाः"—इत्यभिधाय, 'अग्नावग्निः'—इत्यादिवचनं रचयाञ्चकार। स खल्वयं होमो गृह्य एवाग्नौ माभूदित्येवमर्थं पुनरग्नावित्याह। तत्कथमनर्थकमग्निवचनं?—येन परिसञ्चचीत! अग्नावित्यवचने खल्वयं होमः प्रकृते गृह्य एवाग्नौ स्यात्। होमात् खल्वग्निर्गम्यते, प्रकृतश्च गृह्योऽग्निरिति स एव गम्येत। तस्मादग्नाविति जात्या द्रव्यमग्निमात्रं लक्षयित्वा तत्र होमो विधीयते,—लौकिकेष्वग्नौ होतव्यमित्येवमर्थं, नान्येषामाधाराणां निवृत्त्यर्थम्। न खल्वग्निपदं व्यक्तिवचनं, येनाग्नेयोन्यायात् सन्निहित एवाग्निरर्थः स्यात्। यदि पुनरग्निपदस्यापि प्रकृत

एवाग्निरर्थ इत्युच्यते। अस्तु तर्हि गृह्याग्निसाध्योयं होमः, स एवानाहिताग्नेः कात्यायनेन विहितः,—इत्यनाहिताग्नेराधारविशेषाभावान्न तेषामप्यग्नावेव कर्त्तव्य इति शक्यते वक्तुम्। होममात्रं खल्वनाहिताग्नेर्विधीयते, न तु गृह्याग्निसाध्यत्वविशिष्टमपि। गौरवादसम्भवाच्च। न खल्वनाहितगृह्याग्नेस्तस्मिन्नग्नौ होमः सम्भवति। तस्मादेवमपि होम एवानग्नेर्विधीयते, नत्वग्नौ होमोपि। तस्माद्धोतमन्त्रवचनेऽग्निपदं निरग्नेरप्याधारान्तरं निवर्त्तयतीत्ययुक्तं वचनम्॥ ४॥ *॥

## अथ वलीन् हरेत् बाह्यतोवाऽन्तर्वा सुभूमिं कृत्वा॥ ५॥

अथेति पूर्व्वप्रकृतार्थम्। अथ पूर्व्वप्रकृतेनैवान्नेन होमावशिष्टेनेत्येतत्। कात्यायनोपि स्मरति।

"स्वशाखाविधिना कृत्वा तच्छेषेण वलिं हरेत्"।

इति। अपचारे च शेषस्यान्यदप्युपादाय वलीन् हरेत्। कस्मात्?—

"यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत्।
यवानामिव गोधूमा व्रीहीणामिव शालयः"॥

इति कर्म्मप्रदीपस्मरणात्। 'गुणलोपे, न मुख्यस्य'—इति च न्यायात्। मुख्यः खल्वयं वलिर्भवति प्रधानत्वात्। न खल्वयं वलिर्द्रव्यार्थः, किन्तर्हि?—पुरुषार्थ इत्युपरिष्टादुपपादयिष्यामः। पुरुषार्थञ्च कर्म्म प्रयोजयति द्रव्यम्। प्रधाने च कर्म्मणि द्रव्यविधि-

रथं भवति,—शेषेण वलीन् हरेत्—शेषेण वलिहरणमभिनिर्वर्त्तये-
दिति। ननु साक्षाद्व शेषः प्रतिपाद्यते?। उच्यते। सत्यं शेषः प्रतिपाद्यते। तत् खल्विदं प्रतिपादनं प्रधाने कर्म्मणि क्रियते—इति शेषनाशेपि नैतत् परिलुप्यते। कर्म्मचोदनाहि द्रव्यमन्तरेणानुपपन्ना द्रव्यमाक्षिपति, विशेषशास्त्रन्तु नियामकम्, तचासम्भवात् यदा न प्रवर्त्तेत, तदा माभून्नियमः, तथापि सामान्याक्षेपस्य वारयितुमशक्यत्वात् अस्ति प्रतिनिधिः,—इति खल्वभियुक्ताः कथयन्ति। प्रतिपत्तिरूपकर्म्माङ्ग एव प्रतिपाद्याभावे तन्निवृत्तिमनुमन्यन्ते। विहितस्य द्रव्यस्य खल्वपचारे प्रतिनिधिरुपादेय इति च षष्ठाध्याये सिद्धान्तितम्।

"चरितार्था श्रुतिः कार्य्या यस्मादप्यनुकल्पशः"।

इति च स्मरणम्। अस्तिचात्र साक्षादपि द्रव्यान्तरविधायकं किञ्चिद्वचनम्। तच्चोदाहरिष्यामः। तस्माच्छेषापचारेऽन्यदुपादाय वलयो हर्त्तव्या इति सिद्धम्। कुत्र वलयो हर्त्तव्याः?। तदुच्यते। 'वाह्यतो' वहिर्व्वा, प्रकृतत्वादग्न्यगारस्य। तथा चाग्न्यगारान्निष्क्रम्य तस्मिंस्तस्मिन् प्रदेशे तन्तं वलिं हरेत्, योयोवलिर्यस्मिन् यस्मिन् प्रदेशे समाम्नातः। 'अन्तर्' मध्ये वा अग्न्यगारस्य—एकस्मिन्नेव प्रदेशे वलीन् हरेत् सर्व्वान्। 'सुभूमिं' शोभनां भूमिं कृत्वा, यथासम्भवं सम्मार्ज्जनोपलेपनादिभिरिति वाक्यशेषः॥

॥ ५॥ *॥

**सकृदपोनिनीय चतुर्धा बलिं निदध्यात् सकृदन्ततः परिषिञ्चेत् ॥ ६ ॥**

सकृदेकवारम्। अप उदकं निनीय निषिच्य चतुर्द्धा चतुर्षु स्थानेषु बलिं बलिचतुष्टयं निदध्यात्। अत्र च—"समाचारात्, प्राञ्चं बलिचतुष्टयमात्रं सकृद्गृहीत्वा चतुर्षु स्थानेषु निदध्यात्, बलिमित्येकवचनात्, चतुर्धेतिवचनाच्च"—इति वल्गुसोमभट्टनारायणौ। तत्रेदं, बलिचतुष्टयार्थं सकृदेव सेकः—इत्यस्मिन् पक्षे ज्ञेयम्। यत्र पुनरग्रिमसूत्रानुसारादेकैकबल्यर्थमकैकपरिषेकः पुरस्ताच्चोपरिष्टाच्च क्रियते, न तत्रैतद्भवति। न खलु शक्यते द्वितीयादिबल्यन्नं दक्षहस्ते कुर्व्वता तेनैव हस्ते न परिषेक्तुम्। दक्षिणः करः खलु कर्म्मपारगोऽङ्गानुक्तावित्यवोचाम। परिशिष्टप्रकाशोऽप्येवमेवाह। तदेवं बलिचतुष्टयं दत्वा, सकृदेकवारं अन्तत उपरिष्टात् परिषिञ्चेदग्नीन्। प्राक्संस्थाः खल्विमे बलयो भवन्ति। कस्मात्?। "प्राञ्चि उदञ्चि वा कर्म्माण्यनुतिष्ठेरन्"—इति श्रवणात्। एकत्र निधानपक्षे चास्माकं तथा दर्शनात्। तच्चोदाहरिष्यामः। बलिपरिमाणञ्चाह कर्म्मप्रदीपः।

"न चावराञ्जीवलयो भवन्ति
महामार्ज्जार श्रवण प्रमाणात्।
एकत्र चेत् हत्ता भवन्ति
इतरेतर संसक्ताश्च" ॥

इति। तच्च परिमाणमङ्गुष्ठपर्व्वमात्रमिति भट्टभाष्यम् ॥ ६ ॥ *॥

एकैकं वानुनिधानमुभयतः परिषिञ्चेत् ॥ ७ ॥

'एकैकम्', एकमेकं वा बलिम्, 'अनुनिधानं',—निधानमनुलक्ष्मी-कृत्यानुनिधानं, प्रत्येकं निहितान् बलीन् प्रत्येकमेवोभयतः, पुरस्ता-च्चोपरिष्टाच्च परिषिञ्चेत् ॥ ७ ॥ * ॥

स यत् प्रथमं निदधाति स पार्थिवो बलिर्भवत्यथ यत् द्वितीयं स वायव्यो यत् तृतीयं स वैश्वदेवो यच्चतुर्थं स प्राजापत्यः ॥ ८ ॥

स यजमानः प्रथमं यन्निदधाति इति यदर्थोनिधानक्रियाविशे-षणम्। व्यत्ययाद्वा नपुंसकत्वम्। स यत् यं बलिं प्रथमं निद-धाति, स पार्थिवः,—पृथिवी देवताऽस्येति देवतार्थे तद्धितवि-धानात् पृथिवीदेवताको भवतीत्यर्थः। अनेनैव सूत्रशेषो व्या-ख्यातः। "अनिरुक्तं हि प्राजापत्यम्"—इति वचनात् मानसः प्राजापत्यबलिः। तदच मन्त्रानुपदेशात्—

"ॐकारादिसमायुक्तं नमस्कारान्तकीर्त्तितम्।
स्वनामसर्व्वसत्वानां मन्त्र इत्यभिधीयते"।

इति स्मृत्यन्तरदर्शनात्, ॐ पृथिव्यै नमः—इत्येवमादिको बलि-मन्त्रः सिध्यति। यत्तु आचार्य्य एव विक्षतौ वास्तुबलौ वक्ष्य-ति,—"नमो ब्रह्मणे इति दिवि"—इति। तदपि पदद्वय-कीर्त्तनाभिप्रायं न क्रमपरम्। अत एव—

"पायसेवापि दातव्यः स्वनाम्ना सर्व्वतः क्रमात्।
नमस्कारान्तयुक्तेन प्रणवाद्येन सर्व्वतः"।

इति वास्तुवलावेव स्मृत्यन्तरम्। एवमेवाचार्य्यस्याशयं स्पष्टयाञ्चकार कात्यायनः कर्म्मप्रदीपे।

"अमुष्मै नम इत्येवं वलिदानं विधीयते।
वलिदानप्रदानार्थं नमस्कारः कृतोयतः"।

इति। अत्र, इतिः पदद्वयकीर्त्तनार्थः। एवमिति क्रमार्थम्। भट्टनारायणकुल्लुकभट्टशूलपाणिवाचस्पतिमिश्ररघुनन्दनप्रभृतिभिरपि नमस्कारान्त एव वलिमन्त्रोलिखितः। परिशिष्टप्रकाशेतु,—नमो ब्रह्मणे इति दर्शनात् नमः पृथिव्यै इति वलिहरणमन्त्रोलिखितः। अमुष्मै नम इति च तत् सूत्रविरोधादेव न क्रमपरं किन्तु पदद्वयकीर्त्तनाभिप्रायम्—इति चाभिहितम्। नैतदेवम्। शाब्दक्रमविरोधात्। इत्येवं वलिदानम्—इति शाब्दः क्रमः खल्विह कात्यायनेन समाम्नातः। पाठक्रमाच्च वलवत्तरः स इष्यते। तथाचोक्तम्। "श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाणत्वात्"—इति। "क्रमकोर्योऽर्थशब्दाभ्यां श्रुतिविशेषादर्थ परत्वाच्च"—इति च। कात्यायनवचनं पदद्वयकीर्त्तनाभिप्रायं न क्रमपरमितिचेन्न विनिगमनाभावात्। कात्यायनवचनं पदद्वयकीर्त्तनाभिप्रायमाचार्य्यसूत्रं वेत्यत्र न काचिद्विनिगमनोपलभ्यते। परमार्थतस्तु—इत्येवमितिवचनात् कात्यायनवचनं क्रमपरं भवितुमर्हति। किमाचार्य्यः कात्यायनस्य नोपजीव्यः?। क एवमाह—नोपजीव्य इति, सत्यमुपजीव्य एवाचार्य्यः कात्यायनस्य, किमतोभविष्यति?।

यद्येवमेतद्वतो भविष्यति ;—कात्यायनवचनमुपजीव्यबाधभयादेव न क्रमपरम्—इति। नैवम्। भवेदेवं यद्याचार्य्यविरुद्धम् अपि कात्यायनवचनं प्रमाणमिति प्रतिपद्येमहि, न च वयमेवं प्रतिपद्यामहे, किन्तर्हि?—इत्येवं बलिदानम्—इति ब्रुवाणः कात्यायन आचार्य्यस्यैवमेवाभिप्राय इति दर्शयति—इति ब्रूमः। कात्यायनः खलु,—गोभिलोक्तानामस्पष्टानां विधिं प्रदीपवत् सम्यग्दर्शयिष्ये—इति प्रतिज्ञातवानित्यवोचाम। वृत्तिकारकल्पः खलु कात्यायन आचार्य्यस्य दृश्यते। मुन्यन्तरैश्चास्य सम्बादो दृश्यते,न खल्वाचार्य्यस्तेशामपि उपजीव्यः! इदमप्यनल्पप्रामाण्यकारणं यदुत संवादः—इति। स्मृत्यर्थसन्देहे च स्मृत्यन्तरसंवादादेवार्थनिर्णयं निबन्धारोमन्यन्ते। यदि पुनः,—नमो ब्रह्मणे—इत्याचार्य्यस्य सूत्रं क्रमपरमेवेष्यते, तर्हि कामं ब्रह्मबलावेव नमो ब्रह्मणे इत्यस्तु प्रयोगस्तत्रैव तथाम्नानात्, न त्वन्यत्र प्रमाणाभावात्। कल्प्यतामन्यत्रापीतिचेन्न, नमस्कारान्तत्वबोधकशास्त्रसद्भावात्। न खल्वाचार्य्येणैकत्र नमः पदं पूर्वमुक्तमिति सर्व्वत्र तदेव कल्पयितव्यम्,—अनादृत्य नमः पदान्तत्वबोधकानि मुनिवचनानि,—इति युक्तम्। अथ—

"बहूनामेकधर्म्माणामेकस्यापि यदुच्यते।

सर्व्वेषामेव तत् कुर्य्यादेकरूपा हि ते स्मृताः"।

इति वचनादस्तु सर्व्वत्रैव नमः पदादित्वमितिचेदुच्यते। एवमपि वास्तुबलावेव तद्भवितुमर्हति, न तु नित्यबलावपि। नित्यबलौ कृप्तेन नमस्कारान्तवचनेन कल्पनानवकाशात्। वस्तुतस्तु वास्तुबला-

वपि न तद्वचनात् सर्व्वत्र नमः पदादित्वं कल्पयितुं शक्यते। कस्मात्?। तत्रापि मन्यन्तरीयनमस्कारान्तवचनाविशेषात्। अपिच। यत्र खल्वेकधर्म्माणां बहूनामेकं सिद्धवदनूद्य किञ्चिदुच्यते, तत्रैव तद्वचनं प्रवर्त्तते। नचात्र बहूनामेकं सिद्धवदनूद्य किञ्चिद्विधीयते। किन्तर्हि?—किञ्चिद्विशिष्टमेकमेव विधीयते। तच्च किञ्चिद्विशिष्टमेवैकं विहितं सद्बहूनाम् एकं भवति—इति नास्त्यत्र तद्वचनस्यावकाशः। यत्र खल्वेकधर्म्माणां बहूनामेकं धर्म्मिणं—लब्धात्मभावमनूद्य कस्यचिद्धर्म्मस्य विधानं भवति, भवति तत्र तस्य वचनस्यावसर इति धीमद्भिरनुचिन्तनीयम्। यत्तु—बलिमन्त्राणामन्येषां नमः पदान्तत्वमभ्युपगम्य, ब्रह्मबलौ नमः पदादित्व नमः पदान्तत्वयोर्व्विकल्पम्—आहुः। तत्र प्रमाणं नास्ति। यदि नाम विकृतिगतमाचार्य्यसूत्रं क्रमपरमिष्यते, तर्हि कामं विकृतावेव ब्रह्मबलौ एवमस्तु, न तु वैकृतेषु वल्यन्तरेषु, प्राकृतेषु च वलिष्वेषा कल्पना सम्भवति। विकल्पस्य चान्याय्यत्वात्। क्रमपरत्व खल्वाचार्य्यसूत्रस्य कात्यायनवाक्येन समस्य विकल्पायोगाच्चानुचितैषा कल्पना, न खल्वष्टदोषदुष्टोविकल्पः सम्भवन्त्यामपि गतौ समाश्रयितुमुचितः। यद्यपि प्रामाण्यान्माभूद्वचनस्य प्रमत्तगीतता—इति खल्वसावगत्या समाश्रियते। तथाचाभियुक्तानां वचनम्।

एवमेवाष्टदोषोपि यद्व्रीहियवपाकयोः।

विकल्प आश्रितस्तत्र गतिरन्या न विद्यते"।

इति। प्रकृतिविकारभावाच्च। यदि नाम वैकृतं शास्त्रं क्रमपरमिष्यते, तथापि न तत्प्राकृतेन शास्त्रेण विकल्प्यते—इत्यसङ्गतैषा

कल्पना। अतुल्यबलत्वाच्च। नह्याचार्य्यसूत्रस्य क्रमपरत्वमभ्युपेत्य, पुनः कात्यायनवाक्यात् तद्विरुद्धं नमः पदान्तत्वं ब्रह्मबलौ शक्यमभ्युपगन्तुम्। न खल्वनयोस्तुल्यबलत्वमस्ति वचनयोः। सेयं—निरङ्कुशत्वात् पुरुषबुद्धीनां—कल्पना, समुल्लसिता, न शास्त्रबलादित्यनादरणीया॥ ८॥ *॥

**अथापरान् वलीन् हरेत्; उदधानस्य, मध्यमस्य द्वारस्याब्दैवतः प्रथमोवलिर्भवत्योषधिवनस्पतिभ्यो द्वितीय, आकाशाय तृतीयः॥ ९॥**

अथेति पूर्व्वविध्यनुकर्षणार्थम्। पूर्व्वेषामिवामीषामपि वलीनामभयतः परिषेक इत्यर्थः। कर्म्मप्रदीपेप्याह—"सर्व्वेषामुभयतः परिषेकः"—इति। अपरानन्यान् वलीन् हरेत्। कुत्रेमे वलयो-हर्त्तव्याः?—इत्यचाह;—'उदधानस्य', उदकं धीयते यस्मिन्नुदकं दधाति य इति वोदधानं मणिक उच्यते। षष्ठी चेयं समीपार्था। उदधानस्य मणिकस्य समीपे, नोदधान एवेत्यर्थः। मध्यमस्य द्वारस्य,—गृहस्येत्यर्थात्। 'अब्दैवतः' आपो देवता यस्य, सोयमब्दैवतः, 'प्रथमः' प्रकृतानां वलीनामाद्योवलिर्भवति। स खल्वयं वलिरुदधानसमीपे निधातव्यः। यश्च मध्यमस्य द्वारस्य समीपे निधीयते सोयं द्वितीयोवलिरोषधिवनस्पतिभ्यो भवति। तृतीयः खल्वाकाशाय वलिर्भवति। स खल्वयमाकाशदैवतो वलिरन्तरीचे निधातव्यो भवति। कस्मात्?। आकाशदैवतत्वादस्य वलेरनिर्देशाच्च स्थानस्य। आकाशदैवते वलौ खल्वन्तरीचमागच्छति

हृदयं, तत्रानुचितं परित्यक्तुं विशेषोपदेशविरहात्। स्मृत्यन्तरे चोपदेशात्। स्मृत्यन्तरे खल्वेवमुपदेशो दृश्यते, गोतमीये,— "आकाशायेत्यन्तरीक्षे"—इति। भट्टभाष्ये तु—"अयमनिर्दिष्ट-स्थानोयत्र कुत्रचिन्निधेयः"—इत्युक्तम्॥ ९॥

**अथापरं वलिं हरेत्,—शयनं वाऽधिवर्च्चों वा,* सकामाय वा वलिर्भवति मन्यवे वा॥ १०॥**

अथापरं वलिं हरेदित्युक्तार्थम्। शयनं शय्येत्यनर्थान्तरम्। अधि-वर्च्चोमूत्रोच्चारप्रदेशः। वाशब्दचतुष्कञ्च शब्दार्थम्। शयनञ्च प्रत्य-धिवर्च्चस्च प्रतिवलिं हरेत्। हृतश्च स वलिः, कामाय च भवति, मन्यवे च,—इति यथासङ्ख्यम्। तदयमर्थः। शयनं प्रति योवलिर्नि-धीयते स कामदेवताकोभवति, अधिवर्च्चः प्रति योवलिर्निधीयते स मन्युदेवताकोभवति—इति। अत्रापि, "वलिमित्येकवचनात् स्थानद्वयनिर्देशाच्च वलिद्वयमात्रं सकृद्गृहीत्वा निदध्यात्"—इति भट्टभाष्यम्। तदिदं प्रत्येकपरिषेकपक्षे न सम्भवतीत्यवोचाम। अन्येत्वाद्यवाशब्दान् विकल्पार्थान् मन्यमानाः,—"एकएवायं वलिः शयनं वा प्रतिदेयोऽधिवर्च्चो वा, स कामदैवत्यो भवति मन्युदैवत्यो वा"—इति। नैतदेवम्। "अथ तद्विन्यासः"—इत्यारभ्य, कर्म्मप्रदीपे, "कामाय मन्यवे"—इति वलिद्वयसमाम्नानात्। चतु-र्दश नित्याः"—इति च सङ्ख्यावचनात्। वलेरेकत्वे खल्वियं

* 'अधिवर्च्चं वा'—इति क्वचित् पाठः। तत्र च 'सान्ता अप्यदन्ताः' —इति गतिः।

सङ्क्षा लुप्येत!। एतेन,—येप्याहुः,—"अयनं प्रतिकामाय रात्रौ, अधिवर्षः प्रत्यहनि मन्यवे"—इति, तेपि निरस्ताः। प्रमाण-विशेषाभावाच्च ॥ १० ॥ * ॥

## अथ संस्तूपं,* सरश्मोजनेभ्यः ११ ॥

अथेति विशिष्टमानन्तर्य्यं द्योतयति। मन्युवलिदानानन्तरम्,—इन्द्राय वासुकये ब्रह्मणे—इति वलित्रयं दत्त्वाऽयानन्तरमित्यर्थः। कस्मादेवमुच्यते?। उच्यते। आचार्य्य एव वास्तुवलौ दशदिक्षु इन्द्रादिवलिदशकमभिधायासूत्रयत्,—"प्राच्यूर्द्ध्वावाचीभ्योऽहरह-र्नित्यप्रयोगः"—इति। प्राच्यूर्द्धाधोदिक्षु खल्विन्द्रब्रह्मवासुकिदे-वत्या वलयोवास्तुकर्म्मणि समाम्नाताः। तेषां खल्वमीषां वलीना-महरहर्नित्यं प्रयोगोभवति—इति सूत्रयन्नाचार्य्यः, स्पष्टमिदमा-ह,—अहरहः, इन्द्रब्रह्मवासुकिवलयो भवन्तीति। परिशिष्टप्र-काशेप्युक्तम्,—"गृह्यान्तरानुसारेण मन्युवलेरनन्तरम्—इन्द्रवासु-किब्रह्मदेवत्या वलयोदेयाः, ततोरक्षःपितृवली"—इति। "चतुर्दश नित्याः"—इति च कर्म्मप्रदीपः। ते खल्विमे वलयः प्राच्यूर्द्धाधो-दिक्षु निधातव्याः। कस्मात्?। प्राच्यूर्द्धावाचीभ्योऽहरहर्नित्यप्र-योगः—इति दर्शनात्। क्रमस्तु,—इन्द्राय वासुकये ब्रह्मणे इति। कस्मात्?। विकृतौ तथादर्शनात्। विकृतौ खल्वादित इन्द्रवलि-स्ततोवासुकिवलिस्ततोपि ब्रह्मवलिर्दृश्यते। परन्त्वत्र दशत्वाद्वली-नामन्येपि वलयोऽन्तराऽन्तरामन्निविष्टाः। न चैतावता किञ्चिद-

---

* 'सस्तूपं'—इति सो० प्रा० पुस्तके पाठः।

पचीयते। विकृत्यागतानां खल्वमीषां बलीनां तदवगतमेव पौ-र्व्वापर्य्यं स्थानञ्च कल्पयितुमुचितम्। तदाह कर्मप्रदीपः। "मन्यवे इन्द्राय वासुकये ब्रह्मणे"—इति।

अत्राह। "एकत्र प्राक् संस्थाश्चैते बलयो भवन्त्येतद्वचनात्—इति। नैतदेवम्। "एकत्र चेत् कृत्वा भवन्ति"—इत्यभिधा-य,—"अथ तद्विन्यासः"—इत्युपक्रमादेकत्र कृत्स्नबलिनिधानपक्ष एवैतस्य विन्यासविशेषस्य समाम्नानात्। कल्प्यतेऽनेकत्र निधा-नपक्षेऽपीति चेत्। उच्यते। कल्पनीयं तावत् स्थानमिति सत्यं, परन्तु युष्मदुक्तं वा कल्प्यते, अस्मदुक्तं वा,—इति भवति विचारणा। तत्र ये बलयो यत्राचार्य्येण समाम्नातास्ते तत्रैव दा-तुमुचिता अतिदेशागता अप्यमति विशेषवचने। उपजीव्यः खल्वा-चार्य्यः कात्यायनस्य। 'प्राच्यूर्द्धावाचीभ्योऽहरहर्नित्यप्रयोगः"—इति च हृदयमागताः प्राच्यूर्द्धाधोदिशोन युज्यन्ते परित्यक्तुम्। अधिपतयः खल्विमे आसां दिशामित्येषोऽस्मत्कल्पनायां विशेषः। तदेवमिन्द्रवासुकिब्रह्मबलिदानानन्तरं, संस्तूपं प्रति, "संस्तूपः सम्मार्जनरेणुपुञ्जादिप्रक्षेपस्थानम्,—उत्करण्डिकेति लोकैरभिधी-यते"—इति भट्टभाष्यम्। तमिमं संस्तूपं प्रति, बलिं हरेत्। स खल्वयं बलिः,—रक्षोजनेभ्यो भवति॥ ११॥ *॥

**अथैतद्बलिशेषमद्भिरभ्यासिच्यापसलवि दक्षिणानि-नयेत्तत्पितृभ्यो भवति॥ १२॥**

अथशब्दः प्राचीनावीतितिलसव्यजानुपातदक्षिणामुखत्वानि स्मार-

यति। एतद्बलिशेषम्, एतद्बलिदानावशिष्टमन्नम्, अद्भिरभ्यासि-च्याप्लाव्य। तदिदमाप्लावनं, रक्षोवल्यवशिष्टत्वादन्नस्य संस्कारार्थं भवति। शेषं खल्विदमन्नं पितृवल्यर्थमुच्यते। तस्य च संस्कारो-नानर्थकः। आप्लावनं रक्षोवलिशेषस्यान्नस्य न किञ्चित् दृष्टमुप-करोति?—इति चेन्माकरोतु दृष्टमुपकारम्, अदृष्टन्तु करि-ष्यति। यथा। "स्रुचः संमार्ष्टि"—"अग्निं संमार्ष्टि" "पुरोडाशं पर्य्यग्निं करोति"—इत्येवमादौ। तथा चोक्तं। "तुल्यश्रुति-त्वाद्वा इतरैः स धर्म्मः स्यात्"—इति। तदन्नमद्भिरभ्यासिच्य, 'अपसवलि' पितृतीर्थेनेत्यर्थः। अपसलविशब्दः खल्वयं पितृतीर्थ-माह। तथाच गृह्यान्तरम्। "प्रदेशिन्यङ्गुष्ठयोरन्तरा अपसलवि अपसव्यं वा, तेन पितृभ्यो ददाति"—इति। 'दक्षिणा' दक्षिणस्यां दिशि निनयेत्। तच्चेदं निनयनं पितृभ्यो भवति। तथाच पित्र-र्थत्वान्नात्र नमस्कारः प्रयोक्तव्यः, किन्तु पितृभ्यः स्वधेति स्वधाकारे-णैव वलिर्दातव्यः। तदाह कात्यायनः।

"स्वाहाकारवषट्कारनमस्कारादिवौकसाम्।
स्वधाकारः पितॄणाञ्च हन्त कारो नृणां मतः।
स्वधाकारेण निनयेत् पित्र्यं वलिमतः सदा।
तदप्येके नमस्कारैः कुर्व्वते नेति गौतमः"।

इति। एकत्र चेत् सर्व्वे वलयो निधीयन्ते तर्हि, यथा निधात-व्यन्तदाह कर्म्मप्रदीपः।"अथ तद्विन्यासो वृद्धि पिण्डानि वोत्तरो-त्तरांश्चतुरोवलीन्निदध्यात्,—पृथिव्यै, वायवे, विश्वेभ्योदेवेभ्यः, प्रजा-पतये—इति। सव्यत एतेषामेकैकस्यैकैकम्,—अद्भ्यः, ओषधिवनस्प-

तिभ्यः, आकाशाय, कामाय—इति। एतेषामपि, मन्यवे, इन्द्राय, वासुकये, ब्रह्मणे—इति। एतेषामपि, रक्षोजनेभ्यः—इति। सर्व्वेषां दक्षिणतः पितृभ्यः—इति, चतुर्दशनित्याः, आशस्यप्रभृतयः काम्याः। सर्व्वेषामुभयतः परिषेकः पिण्डवच्च पश्चिमा प्रतिपत्तिः"—इति। आधानदिने च वैश्वदेवबलिकर्म्मणी सायमाहुत्यनन्तरं रात्रावेव कर्त्तव्ये। तदप्याह कर्म्मप्रदीपः।

"ऊर्द्ध्वं पूर्णाहुतेः कुर्य्यात् सायं होमादनन्तरम्।
वैश्वदेवन्तु पाकान्ते बलिकर्म्म समन्वितम्।
ब्राह्मणान् भोजयेत् पश्चादभिरूपान् स्वशक्तितः।
यजमानस्ततोऽश्नीयादितिकात्यायनोऽब्रवीत्"।

इति। सोयं भूतयज्ञः,—"बलिर्भौतः"—इति वचनात्। एतदनन्तरं वामदेव्यगानं कर्त्तव्यम्। "बल्यन्ते वैश्वदेविके"—इति स्मरणात्। स खल्वयं ब्रह्मयज्ञस्य तृतीयः कालः—इत्यवोचाम।

अथेदानीं मनुष्ययज्ञः कर्त्तव्यः। तदाह कात्यायनः,—"नृयज्ञोऽतिथिभोजनम्"—इति। मनुरपि—

"कृत्वैतद्बलिकर्म्मैवमतिथिं पूर्व्वमाशयेत्।
भिक्षाञ्च भिक्षवे दद्यात् यथावद्ब्रह्मचारिणे"।

इति स्मरति। तथा विष्णुपुराणे।

"ततो गोदोहमात्रं वैकालं तिष्ठेद्गृहाङ्गने।
अतिथिग्रहणार्थाय तदूर्द्ध्वं वा यथेच्छया।
अतिथिं तत्र संप्राप्तं पूजयेत् स्वागतादिना।
तथाऽऽसनप्रदानेन पादप्रक्षालनेन च।

श्रद्धया लब्नदानेन प्रियप्रश्नोत्तरेण च ।
गच्छतश्चानुयानेन प्रीतिमुत्पादयेद्गृही ।
अज्ञातकुलनामानमन्यतः समुपागतम् ।
पूजयेदतिथिं सम्यङ्नैकग्रामनिवासिनम् ।
अकिञ्चनमसम्बद्धमन्यदेशादुपागतम् ।
असंपूज्यातिथिं भुञ्जन् भक्तं कामं व्रजत्यधः ।
स्वाध्यायगोत्रचरणमपृष्ट्वा च तथाकुलम् ।
हिरण्यगर्भबुद्ध्या तं मन्येताभ्यागतं गृही ।
पित्रर्थञ्चापरं विप्रमेकमप्याशयेन्नृप ! ।
तद्देश्यं विदिताचारसम्भूतिं पञ्चयज्ञियम् ।
अन्नाग्रञ्च समुद्धृत्य हन्तकारोपकल्पितम् ।
निवापभूतं भूपाल ! श्रोत्रियायोपकल्पयेत् ।
दद्याच्च भिक्षात्रितयं परिव्राड्ब्रह्मचारिणाम् ।
इच्छया च नरो दद्याद्विभवे सत्यवारितम् ।
इत्येतेतिथयः प्रोक्ताः प्रागुक्ता भिक्षवश्च ये ।
चतुरः पूजयन्नेतान्नृयज्ञर्णात् प्रमुच्यते" ।

इति । तथा मार्कण्डेयपुराणे ।

"अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते ।
तस्मिंस्तृप्ते नृयज्ञोत्थादृणान्मुच्येद्गृहाश्रमी ।
तस्मा अदत्वा यो भुङ्क्ते स्वयं किल्बिषभुङ्नरः ।
स पापं केवलं भुङ्क्ते पुरीषञ्चान्यजन्मनि ।
अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते ।

स दत्त्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति।
अप्यम्बुशाकदानेन यद्वाप्यश्नाति स स्वयम्।
पूजयेत्तु नरः शक्त्या तेनैवातिथिमादरात्"।

इत्यभिधाय, ततोऽनतिदूरे।—

"भिक्षाञ्च याचतां दद्यात् परिव्राड्ब्रह्मचारिणाम्।
ग्रासप्रमाणा भिक्षा स्यादग्रं ग्रासचतुष्टयम्।
अग्रचतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः।
भोजनं हन्तकारं वा अग्रं भिक्षामथापि वा।
अदत्त्वा तु न भोक्तव्यं यथा विभवमात्मनः"।

इत्यभिहितम्। तथा शातातपः।

"भिक्षां वा पुष्कलं वापि हन्तकारमथापि वा।
असम्भवे सदा दद्यादुदपात्रमथापि वा।
ग्रासमात्रा भवेद्भिक्षा पुष्कलन्तच्चतुर्गुणम्।
पुष्कलानि तु चत्वारि हन्तकारं विदुर्बुधाः"।

इति स्मरति। सोऽयं मनुष्ययज्ञो बहुविधः। तस्य खल्वस्य मनुष्ययज्ञस्य यथाशक्ति समुच्चयविकल्पाववगन्तव्यौ। तत्र शक्तावतिथिभोजनं भिक्षादानञ्च यथोक्तम्। अतिथेरलाभेपि कमपि श्रोत्रियं भोजयेत्। तच्च नित्यश्राद्धेन सहैकप्रयोग एव स्यात्। एतत्सूचनार्थमेव,—पित्रर्थञ्चापरम्,—इति चकारः श्रूयते। तथा—ऽन्यत्रापि—

"पूजयेत्तु नरः शक्त्या तेनैवातिथिमादरात्।
कुर्य्याच्चाहरहः श्राद्धमन्नाद्येनोदकेन वा"।

इति।

"इदमन्नं मनुष्येभ्यो हन्तेत्युक्त्वा समुत्सृजेत् ।
गोत्रनामस्वधाकारैः पितृभ्यश्चापि शक्तितः ।
षड्भ्योऽन्नमन्वहं दद्यात् पितृयज्ञविधानतः" ।

इति चैवमादौ ।

"तथैकमतिथिं कृत्वा श्राद्धस्य स्वयमेव तु" ।

इति च मत्स्यपुराणम् । व्यक्तमुक्तं ब्रह्मपुराणे—

"नित्यश्राद्धमदैवं स्यान्मनुष्यैः सह गीयते" ।

इति । यत्तु—"अतिथिलाभेऽपि कमपि श्रोत्रियं भोजयेत्, मनुष्यश्राद्धमिदमुच्यते"—इति । तदसङ्गतम् । कस्मात्? । प्रमाणाभावात् । नृयज्ञस्यातिथिभोजनेनैव जातत्वात् । तदेव खल्वतिथिभोजनं तदलाभे श्रोत्रियभोजनं वा, नित्यश्राद्धेन सहैकप्रयोगभूतं, तदेव च मनुष्यश्राद्धमित्यभिलप्यते, पितृश्राद्धेनैकप्रयोगभूतत्वात् । न पुनरन्यन्मनुष्यश्राद्धं नामास्ति । अतएव "तथैकमतिथिं कृत्वा"—इत्यतिथ्यनुकल्पस्य श्राद्धैकप्रयोगत्वं स्मर्य्यते । अतएव च—'मनुष्यैः सह गीयते'—इत्युक्तं न मनुष्यश्राद्धैरिति । तदिदं 'मनुष्यैः सह गीयते'—इति वचनमस्य मनुष्यश्राद्धत्वव्यपदेशमूलम् । यदि नामान्यदपि मनुष्यश्राद्धं स्यात्,—तर्हि तदपि नित्यमेव कर्त्तव्यमिति नित्यश्राद्धपदेनैवाभिधीयेत । तस्मादतिथिभोजनं तदलाभे कस्यचित् श्रोत्रियस्यापि भोजनं कारयितव्यं, तदेव मनुष्यश्राद्धमित्युच्यते । न पुनरतिथिभोजने जातेऽपि श्रोत्रियभोजनम् आवश्यकं, तस्य तदनुकल्पत्वात् ।

"अन्नाद्यस्य समुद्धृत्य हन्तकारोपलक्षितम् ।
निवापभूतं भूपाल ! श्रोत्रियायोपपादयेत्" ।

इत्यभिधाय,—इत्येतेऽतिथयः प्रोक्ताः,—इत्युपसंहाराच्चास्यातिथ्य-नुकल्पत्वमवगम्यते। अतएव,—चतुरः पूजयन्निति सङ्ख्योपपद्यते। भिक्षात्रयस्यातिथिभोजनस्य च पूर्व्वमुक्तत्वात्, निवापभूतं भूपाल श्रोत्रियायोपपादयेत्,—इत्यभिधानस्य च अतिथ्यलाभे कस्मैचित् श्रोत्रियाय निवापभूतं देयमित्यर्थकतया सङ्ख्यानतिरेकात्। अत एवैतस्यातिथिभोजनस्य निवापभूतश्रोत्रियोद्देश्यकदानस्य च नि-त्यश्राद्धेन सहैकप्रयोगत्वप्रतिपादनार्थमतिथिप्रकरणेपि,—पित्रर्थं-चापरं विप्रम्—इति नित्यश्राद्धमभिहितम्। अतिथिप्रकरणं खल्विदमिति तावदविवादमेव। कस्मात्?। अतिथिग्रहणार्थाय—इत्युपक्रमात्, इत्येतेऽतिथयः प्रोक्ताः—इति चोपसंहारात्। तस्माद-स्मदुक्त एव वचनार्थे चतुरः—इति सङ्ख्या सङ्गच्छते। अन्यथा, अतिथिभोजनं भिक्षात्रितयं श्रोत्रियाय दानञ्चेति पञ्च पूजनीयाः सम्पद्यन्ते। तत्र चतुरः—इति सङ्ख्या पीड्येत!। न च चतुरः—इत्येकवचनान्तं कर्तृविशेषणमिति वाच्यं व्यर्थत्वात्। प्रागुक्ता भिक्ष-वश्च ये,—इति तु, विभवे सत्यवारितम्—इत्युक्तभिक्षुकान्तरपरि-ग्रहः। अतएव तेषामनावश्यकतया तदभावेपि नृयज्ञर्णात् प्रमुच्यते पुरुष इति तद्दह न गृह्यन्ते—इति चतुरः पूजयन्नित्याह। यदि पुनश्चतुरः—इति कर्तृविशेषणं स्यात्, तर्हि एतान् पूजयन्निति, इच्छया च नरोदद्यादितीच्छया दानस्यापि परामर्शात् अनावश्यक-दानेनापि विना पुरुषोनृयज्ञर्णान्न प्रमुच्यते—इति स्यात्। न चैत-दुचितम्। तस्मादस्मदुक्त एव वचनार्थः। अतएव—मार्कण्डेयपुरा-णेपि अतिथिभोजनं विधाय, अतिथयेऽदत्वा भुञ्जतोदोषः—इति

भिधाय, 'भोजनं हन्तकारं वा'—इति पुनर्भोजनमदत्त्वा भुञ्जतो दोषवचनं अतिथेरलाभे कस्मैचिदपि ब्राह्मणाय भोजनम् अवश्यं देयमित्येवमर्थं भवति। अतएव बह्वीष्वेव स्मृतिष्वतिथिपूजनं पितृणाञ्च श्राद्धमुक्त्वा गृहिणोभोजनमाम्नातम् आम्नस्येन सङ्गच्छते। अतएव मत्स्यपुराणे पितृकल्पे सप्तव्याधोपाख्याने।

"द्वौ देवे भ्रातरौ कृत्वा पित्र्ये त्रीणि त्वनुक्रमात्।
तथैकमतिथिं कृत्वा श्राद्धञ्च स्वयमेव तु।
चकार मन्त्रवत् श्राद्धं स्मरन् पितृपरायणः"।

इति। तथैकमतिथिं कृत्वेति अतिथ्यनुकल्पत्वमस्यावगम्यते। अतिथिभोजनस्य श्राद्धैकप्रयोगत्वञ्चानुमीयते। यत्तु—"तथैकमतिथिं कृत्वेति सनकादिश्राद्धपरं नातिथियज्ञपरं श्राद्धप्रकरणात् श्राद्धफलोत्कर्षकथनाच्च"—इति श्राद्धविवेकः। तच्चिन्त्यम्। प्रकरणात् शब्दस्य बलीयस्त्वात्। अतिथियज्ञेनापि तदेकप्रयोगस्य श्राद्धस्य फलोत्कर्षो वाचनिक एव। कथमन्यथा सनकादिश्राद्धेनापि, पितृश्राद्धफलोत्कर्षः। "न च देवश्राद्धवत् सनकादिश्राद्धमङ्गं प्रमाणाभावात्"—इति च स्वयमेव वर्णितम्। श्राद्धफलोत्कर्षकथनञ्चार्थवाद इति न किञ्चिदेतत्। वस्तुतस्तु तथैकमतिथिमित्यस्य सनकादिश्राद्धपरत्वेपि,—अतिथिपूजनमेव सनकादिश्राद्धमिति गम्यते। अतिथिपदस्वरसात्। अतएव "आत्मीयामभीष्टां देवतामुद्दिश्य प्राङ्मुखमतिथिं भोजयेन्मनुष्यार्थे"—इति गृह्यान्तरेऽतिथिपूजनस्य मनुष्यार्थत्वं—सनकाद्यर्थत्वं—सनकादितृप्त्यर्थत्वं स्मर्य्यते। "तस्मिंस्तृप्ते नृयज्ञोत्थादृणान्मुच्येत्" इति च स्मरणम्। प-

रमिह भ्रातुरतिथित्वाश्रवणादतिथिपदप्रयोगाच्च अतिथ्यनुकल्पत्वम् —अतिथिकार्य्यकारित्वमस्यावगम्यत एव। नक्तव्रतादावुपवासपद-प्रयोगात्तत्कार्य्यकारित्वमिव तस्येति नानुपपत्तिः। नचातिथेर्देवता-त्वात्,"न देवताग्निशब्दक्रियमन्यार्थसंयोगात्"—इति च सिद्धान्तात् तस्यानुकल्प-कल्पना न युक्ता—इति वाच्यम्, अतिथेर्देवतात्वाभा-वात्। आत्मीयाया अभीष्टाया देवताया इह देवतात्वात्। तस्मात् अभीष्टां देवतामुद्दिश्य अतिथिं भोजयेत्। सा चाभीष्टा देवता, मनुष्यः,—इति ब्रूमः। कस्मात्?। मनुष्ययज्ञ इति समाख्यानात्। मनुष्येभ्य इदं हन्त— इति च लिङ्गात्। सर्व्वदेवमयोऽतिथिरिति-स्मरणस्य च अतिथिस्तवपरत्वात्। यच्चातिथिपूजायां देवानां पितॄणाञ्च तृप्तिः स्मर्य्यते, सोऽप्यर्थवाद एव। मनुष्ययज्ञः खल्वेवं स्तूयते। कथमन्यथा पितॄणामप्यत्र न देवतात्वम्। नचैवमि-ष्यते। तस्माल्लाभेऽतिथिं भोजयेत्। अलाभे कमपि श्रोत्रियं भोजयेत्। भोजनोपयुक्तस्य च पर्य्याप्तस्यान्नस्याभावे यथाशक्ति किञ्चिदप्यन्नमुद्धृत्य ब्राह्मणाय दद्यात्। तदाह कर्म्मप्रदीपः।

"अप्युद्धृत्य यथाशक्ति किञ्चिदन्नं यथाविधि।
पितृभ्योऽथ मनुष्येभ्यो दद्यादहरहर्द्विजे।
पितृभ्य इदमित्युक्ता स्वधाकारमुदीरयेत्।
हन्तकारं मनुष्येभ्यस्तदन्ते निनयेदपः"।

इति। अन्नस्याप्यभावे मूलादिकमपि दद्यात्। तदाह गौतमः। "अहरह ब्राह्मणेभ्योऽन्नं दद्यादामूलफलशाकेभ्योऽथैवं मनुष्ययज्ञं समाप्नोति"—इति। "अहरहर्दद्यादोदपात्रात्तथैवं मनुष्ययज्ञं समा-

प्नोति"—इति च शातपथीये ब्राह्मणे। अत्यन्तासम्भवे च यथोक्त-भिक्षादानेनापि कस्याञ्चिदवस्थायां मनुष्ययज्ञोनिर्व्वहति। अत-एव "भोजनं हन्तकारं वा"—इत्येवमादिवचनेषु विकल्प-निर्द्देशः सङ्गच्छते। भिक्षुकस्य चाभावेऽग्रं गोभ्योदद्यात्, गवामप्यभावेऽग्नौ क्षिपेत्। "भिक्षुकाभावे चाग्रं गोभ्योदद्यात् अग्नौ वा क्षिपेत्"—इति विष्णुस्मरणात्। इत्येते नृयज्ञप्रकाराः।

अथेदानीं पितृयज्ञः वक्तव्यः। स चानेकप्रकारः। तत्र तावत् पित्रादींस्त्रींस्त्रींश्च मातामहादीनुद्दिश्य यथोक्तब्राह्मणभोजनमिति एकः कल्पः। तदाह कात्यायनः।

"श्राद्धं वा पितृयज्ञः स्यात् पित्र्योवलिरथापि वा"।

इति।

"अप्येकमाशयेद्विप्रं पितृयज्ञार्थसिद्धये।
अदैवं नास्ति चेदन्योभोक्ता भोज्यमथापि वा"।

इति च। वायुपुराणे।—

"अप्येकं भोजयेद्विप्रं षसामप्यन्वहं गृही।
अदृष्टाः प्रहरन्त्यस्मै वज्रपाते षड़ङ्घ्रिणा"।

इति। एके पुनरयुग्मब्राह्मणभोजनम् इह वर्णयन्ति। तदसङ्गतम्। कुतः?। 'त्रीन् द्वावेकम्'—इति वक्ष्यमाणवचनात्। नित्यश्राद्धे तु विशेषोऽभिधीयते। यथा हारीतः।

"नित्यश्राद्धमदैवं स्यादर्घपिण्डविवर्जितम्"।

इति। मत्स्यपुराणम्।

"नित्यं तावत् प्रवक्ष्यामि अर्घावाहनवर्जितम्।

अदैवं तद्विजानीयात् पार्व्वणं पर्व्वसु स्मृतम्"।

इति। कार्ष्णाजिनिः।

"दर्भांश्चैवासने दद्यान्नतु पाणौ कदाचन।

पितृदेवमनुष्याणामेवं तृप्तिर्हि शाश्वती"।

इति। लिखितजातूकर्णौ।

"नित्यश्राद्धमदैवं स्यात् पिण्डहोमविवर्जितम्"।

इति। भविष्यपुराणम्।

"अग्नौकरणमर्घ्यञ्चावाहनञ्चावनेजनम्।

पिण्डश्राद्धे प्रकुर्व्वीत पिण्डहीने विवर्ज्जयेत्"।

इति। व्यासः।

"आवाहनस्वधाकारपिण्डाग्नौकरणादिकम्।

ब्रह्मचर्य्यादिनियमं विश्वान्देवांस्तथैवंच।

नित्यश्राद्धे त्यजेदेतान् भोज्यमन्नं प्रकल्पयेत्।

दत्वा च दक्षिणां शक्त्या नमस्कारैर्विसर्ज्जयेत्।

एकमप्याशयेन्नित्यं षण्णामप्यन्वहं गृही"।

इति। स्वधाकारः स्वधावाचनम्। शातातपः।

"पिण्डनिर्व्वापरहितं यत्तु श्राद्धं विधीयते।

स्वधावाचनलोपोऽत्र विकिरस्तु न लुप्यते।

अक्षय्यदक्षिणास्वस्ति सौमनस्यं तथास्त्विति"।

इति। एवञ्च—

"नित्यश्राद्धमदैवं स्यादर्घ्यपिण्डविवर्ज्जितम्।

दक्षिणारहितं ह्येतद्दातृभोक्तृव्रतोज्झितम्"।

इति दक्षिणानिषेधोऽशक्तविषयः—इति तत्त्वकृतः। अतएव शक्त्या दक्षिणादानं व्यासः स्मरति। नित्यश्राद्धे देवपक्षस्य प्रामाणिकत्वेतु सदैवादैवत्वयोरपि विकल्प एव। तदिदं नित्यश्राद्धं सम्भवे बहुब्राह्मणकमसम्भवे त्वेकब्राह्मणकमपि भवति। श्राद्धकरणेऽशक्तस्तु यथाशक्ति किञ्चिदप्यन्नम् उद्धृत्य पितृभ्य इदं स्वधेत्युच्चार्य्य ब्राह्मणाय दद्यात्। 'अप्येकमाशयेद्विप्रम्'—इत्यभिधाय,—"अप्युद्धृत्य यथाशक्ति',—इत्येवमादि कात्यायनस्मरणात्। नचेदं श्राद्धविधायकमिति वाच्यं प्रमाणाभावात्। श्राद्धञ्च पूर्व्वेण वाक्येन विहितम्—'श्राद्धं वा पितृयज्ञः स्यात्'—इति, 'अप्येकमाशयेद्विप्रम्'—इति च। कथमिहापि विधीयेत! । तस्मात्—'अप्येकमाशयेत्'—इति बहूनामसम्भवे एकब्राह्मणभोजनम्—एकेनापि ब्राह्मणेन श्राद्धकरणमित्येतत्परम्। 'अप्युद्धृत्य यथाशक्ति'—इति तु श्राद्धासम्भवे—ब्राह्मणभोजनोपयुक्तान्नासम्भवे किञ्चिदप्युद्धृत्य देयमित्याह। भिन्नौ खल्विमौ कल्पौ भवतः—यच्चैकब्राह्मणकश्राद्धं, यच्चोद्धृत्याल्पमपि देयमिति। तत्त्वकृतोऽप्येवम्। भट्टनारायणस्याप्येष एव स्वरसः। एतेन—

"नित्यश्राद्धेष्वसामर्थ्यात् त्रीन् द्वावेकमथापि वा।
भोजयेत् पितृयज्ञार्थं दद्यादुद्धृत्य दुर्व्बलः"।

इति।

"यथाशक्त्यन्नमुद्धृत्य पित्र्येण विधिना सदा।
आहूय ब्राह्मणं दद्यात्तत्कुले वा समर्पयेत्"।

इत्येवमादिपुराणवाक्यमपि व्याख्यातम्। तच्चाप्यशक्तस्य योयं

भूतयज्ञे पितृबलिर्दीयते, तेनैव पितृयज्ञः कृतो भवति। यदा कस्याञ्चिदवस्थायाम्—('यज्ञादेव निवर्त्तते'—इत्येवमादिकयाम्) न हरति बलीन्, तदा तर्पणेनैव पितृयज्ञः कृताभवति। तदिदं तर्पणं सर्व्वस्यामेव दशायामावश्यकं यथाशक्ति चान्यत्। इयान् परं विशेषो यदशक्तस्य तर्पणेनापि प्रत्यवायः परिहृतो भवति। समुच्चयेन सर्व्वेषां पञ्चानामुपदेशस्तु शक्ततमस्येति परिशिष्टप्रकाशः। तथा गोतमः। "नित्यं स्वाध्यायः पितृभ्यश्चोदकदानं, यथोत्साहमन्यत्" —इति। अत्र च,—तर्पणब्रह्मयज्ञयोः पूर्व्वमुक्तयोरपि नित्यमित्यादिना पुनरभिधानं यज्ञत्रयानुष्ठानाशक्तावङ्गवैकल्येनाप्यनयोरवश्यानुष्ठेयत्वार्थम्—इति कल्पतरुप्रभृतयः। अन्ये त्रेषां पञ्चानां यथाशक्ति समुच्चयविकल्पावाहुः। यदा पुनर्न शक्नोति पृथक् तर्पयितुं, तदा स्नानाङ्गेनापि तर्पणेन पितृयज्ञफलमधिगच्छति। सोऽयमुक्तः पितृयज्ञः। उक्ताश्चपञ्च महायज्ञाः ॥ १२ ॥ ० ॥

अथेदानीमुक्तस्यैव विशेषोऽभिधीयते—

## आसीन एवाग्नौ जुहुयात् १३ ॥

आसीन उपविष्ट एव। नोर्द्धः, न वा प्रह्वः ॥ १३ ॥ ० ॥

## आसीनः पितृभ्यो दद्यात्, यथोपपादमितरान् ॥ १४ ॥

आसीनः पितृभ्यो बलिं दद्यात् हरेत्। आसीनः—इत्येतदवाच्यम् ?—इति चेन्न, एवं हि आसीन इत्यनुवर्त्तेत। तदेतदस्पष्टमाचार्य्य आसीन इत्याह। पितृभ्यो दद्यात् यथोपपादम्—

इत्ययमपि सम्बन्ध आशङ्क्येत, सापि माभूदिति च तद्वचनम्। इतरान्,—अपरान् बलीन्। कस्मादपरान्?। पित्र्यबलेरिति ब्रूमः। कस्मात्?। प्रकृतत्वात्। प्रकृतः खल्वत्र बलिः पित्र्य एवेति तदपेक्षयैवापरत्ववर्णनमुचितम्। तान् खल्विमान् पित्र्यबलेरन्यान् सर्व्वान् बलीन्, 'यथोपपादं' यथोपपद्यते दानं, तथैव दद्यात् न पुनरासीन एवेत्ययमस्ति नियम इत्यर्थः। तेनाधिवर्चःप्रदेशस्याशुचितया दूरस्थ एव प्रक्षिप्य दद्यादूर्द्धः सन्। एवमन्यत्रापि क्वचित् प्रह्वः क्वचिचान्यादृश एवेति यथायथमूहनीयम्॥ १४ ॥ ० ॥

## स्वयन्त्वेवैतान् यावद्वसेद्बलीन् हरेत्॥ १५ ॥

यावद्गृहे वसेत्, तावदेतान् सर्व्वानेव बलीन्,—न पुनः पित्र्यबलेरपरानेवेत्यर्थः। स्वयमेव यजमानो हरेन्निदध्यादनलसः सन्। गृहे वसन् खल्वसौ यजमानः स्वयमेव बलिहरणं कुर्य्यान्नान्यद्वारा इति सूचयन्नाचार्य्यः, प्रवसन्नन्यद्वारापि—इत्येतत् सूचयति। तच्चोत्तरत्र वक्ष्यामः। तस्मात् यावद्वसेदिति स्वयं सम्भवाभिप्रायं वचनम्। उपलक्षणञ्चैतद्बलिग्रहणं होमादीनामपीति द्रष्टव्यम्। तुशब्दश्च स्वयं करणपक्षे फलविशेषं द्योतयति॥ १५ ॥

## अपि वाऽन्यो ब्राह्मणः॥ १६ ॥

अपिवा, अथवा। असौ यजमानस्य प्रवासे वेत्यर्थः। अन्यो ब्राह्मणो, 'बलीन् हरेत्'—इत्यनुवर्त्तते। अथवा। अपि वेत्येतत्

क्षत्रियविषयमाचार्य्यस्य पक्षान्तरम्। स्वयमेवेत्येतन्नियममननुजा-
नन्नाचार्य्यः—'अन्यः'—इत्याह। स्वस्मादन्योऽपि ब्राह्मणो राज्ञो
वलिहरणादिकं कुर्य्यादित्यर्थः। तथाच स्मरति भगवान्मनुः।

"पुरोहितञ्च कुर्व्वीत, वृणुयादेव चर्त्विजम्।
तेऽस्य गृह्याणि कर्म्माणि कुर्य्युर्वैतानि कानि च"॥

इति॥१६॥०॥

## दम्पती एव॥१७॥

जायाच पतिश्च—दम्पती, भार्य्यापती—गृहपतिस्तत्पत्नी चोच्येते। ताविमौ दम्पती एव,—वलीन् हरेयाताम्,—इति सम्बध्यते॥१७॥

## इति गृहमेधिव्रतम्॥१८॥

इत्येवमहरहः पञ्चानां महायज्ञानामनुष्ठानं गृहमेधिव्रतम्, गृहे ययोर्मेधो यज्ञो भवति, ताविमौ गृहमेधिनौ दम्पती—इति ब्रूमः। तयोर्गृहमेधिनोर्दम्पत्योर्व्रतं शास्त्रविहितोनियम इत्यर्थः। तदेवं पञ्चमहायज्ञावशिष्टमन्नं दम्पती भुञ्जीयाताम्।

"भुक्तवत्स्वथ विप्रेषु स्वेषु भृत्येषु चैवहि।
भुञ्जीयातान्ततः पश्चादवशिष्टन्तु दम्पती"॥

इत्येवमादिस्मरणात्। अकृत्वा च पञ्च महायज्ञान् भुञ्जतोस्तयोर्व्रत-लोपोभवतीति विज्ञायते;—ऋते सुवासिनीप्रभृतिभ्यः। तदाह मनुः।

"सुवासिनीः कुमारांश्च रोगिणोगर्भिणीस्तथा।
अतिथिभ्योऽग्र एवैतान् भोजयेदविचारयन्"।

इति। तथा गोतमः। "भोजयेत् पूर्व्वमतिथिकुमारव्याधित-गर्भिणीसुवासिनीस्थविरान् जघन्यांश्च"—इति।

"अदत्त्वा यस्तु एतेभ्यः पूर्व्वं भुङ्क्तेऽविचक्षणः।
स भुञ्जानो न जानाति श्वगृध्रैर्जग्धिमात्मनः" ॥

इति च धर्म्मशास्त्रम् ॥ १८ ॥

दम्पती एव बलीन् हरेयाताम्—इत्युक्तम्, अथेदानीं कश्चिदिह विशेषोऽभिधीयते—

स्त्री ह सायं प्रातः पुमानिति ॥ १९ ॥

स्त्री पत्नी, ह किल। स खल्वयम्—ऐतिह्यार्थकोऽनर्थको वा निपातः। इति होचुर्वृद्धाः—इति ह्यैतिह्यमुच्यते। सेयं पत्नी, सायं रात्रौ, बलीन् हरेत्—अमन्त्रं, तूष्णीम्—इत्यर्थः। कस्मात् पुनः कारणादमन्त्रमुच्यते पत्न्या बलिहरणम्?—इयमेव तावन्मात्रं नाख्यायते?। उपदेशादिति ब्रूमः। अमन्त्रमेव खल्वस्या बलिहरणमुपदिश्यते—इति नेयमध्याप्यते इत्यदोषः। तथाच मनोः स्मरणम्।

"सायन्त्वन्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेत्।
वैश्वदेवं हि नामैतत् सायं प्रातर्विधीयते" ॥

इति। तदनेन रात्रावपि वैश्वदेवबलिकर्म्मणाविशेषेण कर्त्तव्यत्वम्—इति दर्शितम्। अस्याञ्च स्मृतौ—सिद्धस्य अन्नस्य—इति पचप्राप्तमनूद्यते गुणभूतं, न तु विधित्सितम्। सायं बलिं हरेत्—इत्ययमत्र सम्बन्धः, न सायं सिद्धस्य अन्नस्य—इति। तस्मात्—"यस्याभयं हविरार्त्तिम् आर्च्छेत्"—इतिवत् नित्यानुवादोयम्—अन्नस्य

सिद्धस्य—इति। 'अथ हविष्यस्यान्नस्य'—इतिवन्मुख्यकल्पपरिकी-र्त्तनाभिप्रायं वा वचनम्। तदिदं बलिहरणद्रव्याभिधानपरं शास्त्रं नान्यत् परिमष्टे। अभावे खल्वन्नस्य प्रतिनिधिमप्युपादाय बलिहरणं कर्त्तुमुचितम्। कस्मात्?। शास्त्रार्थवत्तोपपत्तेः। प्रतिनिधिशास्त्राणां खल्वेवमर्थवत्तोपपद्यते। इतरथा प्रतिनिधि-शास्त्रमनर्थकं—प्रलापमात्रं स्यात्। तच्चोदाहरिष्यामः। नचैत-दुचितम्। अहनीति चेन्नाविशेषात्। इति चेत् भवान् पश्यति, —अहनि प्रतिनिधिशास्त्रमर्थवत् कथमनर्थकं प्रलापमात्रम् उच्य-ते—इति। तत्र ब्रूमः। नैषा कल्पना सम्भवति। कस्मात्?। अवि-शेषात्, विशेषाभावादित्यर्थः। अहन्यपि, सिद्धस्य—इति, अन्नस्य —इति च श्रवणम्, अविशेषेणोपलभ्यते—इति। तत् यदि रात्रौ प्रतिनिधिशास्त्रं न प्रवर्त्तते, अहन्यपि न प्रवर्त्तिष्यते, हेत्वविशेषात्। अप्रवृत्तिहेतुः खल्वहनि रात्रौ च न विशिष्यते—उभयत्रापि समान इत्यर्थः। तथाचोक्तम्। "अथ हविष्यस्यान्नस्योद्धृत्य हवि-ष्यैर्व्यञ्जनैरुपसिच्याग्नौ जुहुयात्"—इति। मनुरपि स्मरति।

"वैश्वदेवस्य सिद्धस्य गृह्येऽग्नौ विधिपूर्व्वकम्।
आभ्यः कुर्य्याद्देवताभ्यो ब्राह्मणो होममन्वहम्" ॥

इति। "वैश्वदेवादन्नात् पर्य्युक्ष्य जुहोति"—इति च गृह्यान्तरम्। आह च कात्यायनः कर्म्मप्रदीपे।

"सायं प्रातर्व्वैश्वदेवः कर्त्तव्यो बलिकर्म्म च।
अनश्नतापि सततमन्यथा किल्बिषी भवेत्" ॥

इति। तदयानश्नतोपि वैश्वदेवोबलिकर्म्म च कर्त्तव्यम्—इत्युक्तम्।

तस्मात् इयमेवावधारणा—सायं वलिं हरेत्—इति सम्बन्धः, न सायं सिद्धस्य—इति। अथ मन्यसे—अतिथ्यनुरोधेन पाकसम्भव एव अनश्नतोरात्रीकरणम्—इति। तत्रोच्यते। नाप्रमाणत्वात्। न खल्वेषा कल्पना सम्भवति;—अतिथ्यनुरोधेन यदा पच्यते, तदैव रात्रौ अनश्नता वैश्वदेवादिकं कर्त्तव्यम्, नापचमानेन—इति। कस्मात्?। अस्मिन्नर्थे प्रमाणाभावात्। न खलु पाकार्थता वैश्वदेववलिकर्म्मणोः शक्यते वक्तुम्। किं कारणम्?। पुरुषसंस्कारत्वात्। कुतः पुनरनयोः पुरुषसंस्कारत्वमुच्यते?। "सहधर्मचारिणीसंयोगः, पञ्चानां महायज्ञानामनुष्ठानम्"—इति गोतमेन पुरुषसंस्कारमध्ये पाठात्। "तानेतानहरहः कुर्व्वीत"—इति—

"स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनु"॥

इति च पुरुषार्थत्वावगमात्। वैश्वदेवं वलिकर्म्म च, अकुर्व्वाणः पुरुषः किल्विषी भवति—इति च कात्यायनेन सुव्यक्तमनयोः पुरुषार्थत्वाभिधानात्। "पञ्च वा एते महायज्ञाः सतति प्रतायन्ते सतति सन्तिष्ठन्ते देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञः—इति चारण्यके तैत्तिरीये। तदेव खल्वमीषां मूलम्—इत्यभियुक्ता मन्यन्ते। तस्मात् पुरुषार्थत्वम् एवामीषां महायज्ञानां, न पुनर्वैश्वदेववलिकर्म्मणोः पाकार्थत्वम्। अथ उच्येत—'पुरुषार्थयोरेव सतोरनयोः पाकार्थतामप्यनुमन्यामहे—इति'। अत्रोच्यते। काममनुमन्येमहि पाकार्थताम् अप्यनयो यदि प्रमाणम् अत्र किञ्चित् उपलभेमहि। नतु प्रमाणमिह किञ्चिदुपल-

भामहे। तस्मादसङ्गतमनयोः पाकार्थत्वम्—इति। स यदि ब्रूयात्,—अकृत्वा वैश्वदेवादिकमन्नं भुञ्जानस्य दोषश्रवणादन्न-संस्कारत्वमनयोरनुमातव्यम्—इति। तं प्रतिब्रूयात्, ब्रह्मयज्ञादिकमप्यकृत्वा भुञ्जानस्य दोषश्रवणादनैकान्तिकमेतल्लिङ्गं नान्न-संस्कारत्वमनयोरनुमापयति—इति। तदिदं दोषकीर्त्तनम्, आवश्यकत्वम् अमीषाम् अवगमयति,—इति पुरुषार्थशास्त्रैस्तुल्य-वदेव तात्पर्य्यम्। तत्प्राये समाम्नानाच्च। पुरुषार्थप्राये चाध्या-पनादिकर्म्मप्रवाहे वैश्वदेवबलिकर्म्मणी समाम्नायेते। तदनयो-रपि पुरुषार्थत्वम् एव अवधार्य्यते। तथाचोक्तम्। "प्राये वच-नाच्च"—इति। पुरुषार्थयोरनयोरन्नसंस्कारार्थत्वम् अपि, न साम्प्रतम् अभ्युपगन्तव्यम्। पुरुषार्थत्वे हि द्रव्यम्—वैश्वदेवाद्यर्थं भवति, अन्नसंस्कारार्थत्वे त्वन्नार्थं वैश्वदेवादिकं स्यात्। अस्तु को-दोषः?—इति चेन्नासम्भवात्। न खल्वेतत् सम्भवति,—अन्नार्थं वैश्वदेवादिकं, वैश्वदेवाद्यर्थञ्चान्नम्,—इति। कस्मात्?। विरो-धात्। विरुध्यते खल्वेकस्य गुणभावः प्रधानभावश्च। नह्येकमेव वस्तु एकमेवापेक्ष्य एकदैव प्रधानं गुणभूतञ्च भवितुमर्हति। इतश्च। वाक्यभेदप्रसङ्गात्। कथं वाक्यभेदप्रसङ्गः?। वचनव्यक्तिभेदात्। वचनव्यक्तिः खल्वनयोर्भिद्यते—इति भिद्येत वाक्यम्। वैश्वदेवेनान्नं संस्कुर्य्यात्—इत्येकस्मिन् पक्षे वचनव्यक्तिर्भवति, अन्नेन वैश्वदेवादि-कमभिनिर्व्वर्त्तयेत्—इति चान्यस्मिन्। एकं खल्विदं वाक्यं—'हविष्यस्यान्नस्य जुहुयात्'—इति। न च भङ्क्त्वा वाक्यम्, उभ-यार्थत्वं कल्पयितुम् उचितम्।

आह—'अस्मादेवाम्नानात् द्रव्यार्थत्वम् अवगम्यते—इति'। न—इति ब्रूमः। कस्मात्?। अर्थकर्म्मवदाम्नानात्। अर्थकर्म्मण्यपि अग्निहोत्रे समाम्नायते—"अथ हविष्यस्यान्नस्याग्नौ जुहुयात् कृतस्य वा अकृतस्य वा"—इति। तत्समानमिदमपि आम्नायते—"हविष्यस्यान्नस्य"—इति। तस्मात्—"सोमेन यजेत"—इत्येवमादिवदिहापि द्रव्यमुच्यते जुहोतेरुपकारकम्। सेयं द्रव्यचोदना वा स्यात्, विशिष्टकर्म्मचोदना वा स्यात्, सर्व्वथापि द्रव्यं कर्म्मार्थतां नातिशेते। यथा खल्वपचारे सोमस्य पूतिका उपादीयन्ते वचनबलात्, एवमिहाप्यपचारेऽन्नस्य अन्यदप्युपादेयं वचनबलात्—इति न किञ्चिदनुचितम्। न खल्वत्र द्रव्यस्य ईप्सितभावः अवगम्यते। हविष्यादन्नादुद्धृत्य तेन होममभिनिर्वर्त्तयेत्—इति खल्वत्र वचनव्यक्तिर्भवति। कस्मात्?। "वैश्वदेवादन्नात् पर्य्युक्ष्य स्वाहाकारैर्जुहुयात्"—इति ग्रन्थान्तरदर्शनात्। अथ वा। हविष्येणान्नेन होममभिनिर्व्वर्त्तयेत्—इत्ययम् एव अर्थः। यदाप्यवयवार्था षष्ठीयम् उच्यते, तदापि हविष्यान्नावयवेन जुहुयात्—इति वचनार्थः। सर्व्वथापि द्रव्यमेव कर्म्मार्थं न कर्म्मद्रव्यार्थमवगम्यते। येषामपि हविष्यस्यान्नस्य अवयवं जुहुयात्—इति वचनव्यक्तिः, तेषाम् अपि न कर्म्मणः अन्नावयवार्थत्वम् अवगन्तव्यम्। न खल्वन्नावयवेन संस्कृतेन किञ्चित् प्रयोजनम् अस्ति! तदर्थञ्चेत् कर्म्म, तदप्यनर्थकं स्यात्। यः खल्ववयवो जुहोति नासम्बध्यते, स तेनैवोपचीयते, नावतिष्ठते, यस्त्ववतिष्ठते, नासौ जुहोति नासम्बध्यते!। अन्नार्थतायाम् अप्यनर्थकत्वम् अविशिष्टम्। होममभिनिर्व्वर्त्तयतां

खल्वमीषां प्रयोजनवत्त्वम् न केवलानाम्। न च वैश्वदेवादिकम् अन्नस्य किञ्चित् उपकरोति। न खल्वेवम् अन्नार्थताकर्मणः शक्यते वक्तुम्। "यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत, तस्य द्रव्यप्रधानत्वात्"—इति सूत्रणात्।

अथ वैश्वदेवादिकम् अन्नस्य माकरोतु दृष्टं कञ्चिदुपकारम्, अदृष्टन्तु करिष्यति। अदृष्टोपि उपकारोलोके बहुलम् उपलभ्यते। ग्रामान्तरात् आगतानां पुरुषाणां पर्य्यग्निकरणेन खल्वदृष्ट उपकारः क्रियते—इत्युच्यते। न—इति ब्रूमः। न करिष्यति अदृष्टम् अपि उपकारं वैश्वदेवो द्रव्यस्य। कस्मात्?। तस्य शब्दमूलत्वात्। शब्दमूलं खल्वदृष्टम् इष्यते। न खल्वस्ति शब्दः,—वैश्वदेवो द्रव्यस्य उपकरोति,—इति। शब्दस्तस्य पुरुषार्थताम् आह—'महायज्ञैश्च'—इति, 'तानेतान्'—इति चैवमादिः। सा खल्वियं कल्पना पुरुषबुद्धिमूला—इत्यनादरणीया। तथाचोक्तम्। "धर्म्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्"—इति।

न च एकेनादृष्टेन पुरुषार्थतया चरितार्थे शास्त्रे अन्यदपि अदृष्टं कल्पयितुम् उचितम्!। लोकेपि नात्यन्तम् अदृष्ट उपकारोदृश्यते, यत्र चात्यन्तम् अदृष्ट उपकारः, तत्र प्रमाणम् अपि न दुर्लभम्—इत्यनुदाहरणम्।

स खल्वयम्—'अन्नस्य'—इत्युपदेशोऽन्नस्य होमस्य च सम्बन्धं करोति, सम्बन्धे च सति—"द्रव्याणां कर्म्मसंयोगे गुणत्वेनाभिसम्बन्धः" —इति, "भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते"—इति चानया तन्त्रयुक्त्या, द्रव्यं गुणभावेन सम्बध्यते। सेयं तृतीयार्थे षष्ठी वि-

भक्तिः,—इति,"शक्तून् जुहोति, मारुतं जुहोति, एककपालं जुहोति" —इत्येवमादिवत् इहापि द्रव्यमेव कर्म्मार्थं, कर्म्म तु पुरुषार्थम् एव, न द्रव्यार्थम्—इति सिद्धम्। अत एव स्मर्य्यते। "अहरहः पञ्चयज्ञान्निर्व्वपेत् अपि मूलपत्रोदकशाकेभ्यः"—इति। "अहरहः स्वाहां कुर्य्यादन्नाभावे केनचिदाकाष्ठात् देवताभ्यः, पितृभ्योमनुष्येभ्यश्चोदपात्रात्"—इति च गृह्यान्तरम्। "यदग्नौ जुहोत्यपि समिधं तद्देवयज्ञः सन्तिष्ठते, यत् पितृभ्यः स्वधाकरोत्यप्यपस्तत् पितृयज्ञः सन्तिष्ठते"—इति च तैत्तिरीये ब्राह्मणे। "न चेदुत्पद्यतेऽन्नन्तु अद्भिरेनान् समापयेत्"—इति च स्मरणम्। तदेवमादिशास्त्रेभ्यः—सुव्यक्तमिदम् अवगम्यते; यत् द्रव्यमेव कर्म्मार्थम्—इति, कर्म्मप्रधानं पुरुषार्थम्—इति च। न हि द्रव्यार्थकर्म्मणां द्रव्याभावेपि करणम् अस्ति। पुरुषार्थमेव हि कर्म्म, अतद्रव्यापचारेप्यन्येन केनचित् यथाकथञ्चित् क्रियते, द्रव्यस्य गुणभूतत्वात्। द्रव्यार्थत्वे तु कर्म्मणश्चोदितद्रव्याभावे लोप एव स्यात्। न खलु व्रीह्यङ्गत्वेपि चरावववघातः क्रियते, न वा तदर्थं व्रीहय उत्पाद्यन्ते। तदिदं प्रतिनिधिविधानपरं शास्त्रम् अन्नाभावेप्यन्येन होममुपदिशत् कर्म्मनिर्वृत्तेरीप्सिततमतां दर्शयति। तस्मात् न कर्म्मणो द्रव्यार्थता। तदुक्तम्। "ये द्रव्यं न चिकीर्ष्यते, तानि प्रधानभूतानि, द्रव्यस्य गुणभूतत्वात्' —इति। मनुरपि—

"वैश्वदेवे तु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत्।
तस्याप्यन्नं यथाशक्ति प्रदद्यान्न बलिं हरेत्"॥

इति पाकान्तरेणान्नदानपक्षेपि, न बलिं हरेत्—इत्याचक्षाणः द्रव्यस्यैव कर्म्मार्थताम् अनुजानाति—इत्यवगम्यते। इतरथा कथमिवासंस्कृतमन्नभोजनम् अनुजानीयात्!। आचार्य्योपि वक्ष्यति। "यद्येकस्मिन् काले व्रीहियवौ प्रक्रियेयाताम्, अन्यतरस्य कृत्वा कृतं मन्येत"—इति, "यद्येकस्मिन् काले पुनः पुनरन्नं पच्येत सकृदेवैतद्बलितन्त्रं कुर्व्वीत"—इति चैवमादि।

अथ, गृह्यान्तरम्—"अकृतस्य नाश्नीयान्नचान्नमाशयेत्"—इति, अकृतस्य अशनं निषेधयति। किमतो भविष्यति?। उच्यते। एतदतो भविष्यति,—अकृतस्य अशननिषेधेन होमस्य अन्नसंस्कारकत्वम् अनुस्यामामहे;—होमः खल्वन्नं संस्कारोति, तदभावे चासंस्कृतम् अन्नं नात्तव्यम्,—इति। अत्रोच्यते। एवमपि अन्येषाम् एवैष होमोऽन्नार्थः स्यात्, नास्माकम्। अपि च। नैषा कल्पना सम्भवति—अन्नार्थो वैश्वदेवः—इति। कुतः?। तदुच्यते। पञ्चमहायज्ञानां खलु तैत्तिरीयारण्यकमेव मूलम् आचक्षते। तत्र च पुरुषार्थत्वम् अमीषाम् अवगम्यते। तच्च पुरस्तादुपदर्शितम् अस्माभिः। सेयं निर्मूला कल्पना अनादरणीया। तस्मात् होमभोजनयोः क्रमः इह विधित्सितः—इत्यवगच्छामः। पूर्व्वं यस्य न हूयते, तन्न अत्तव्यम्—इति, अनया वचनव्यक्त्या खल्वस्मत्पक्षोऽनुगृह्यते। अथ वा। अकृतस्य—इति कर्त्तरि निष्ठा। न कृतं येन—इति वा विग्रहः, "अकृतस्य प्रायश्चित्तम्"—इत्येवमादिवद्व्याख्येयम्। होममकुर्व्वतोऽन्नं नाश्नीयात्, न च आशयेत्—इति वचनार्थः। अत एव—'अकृतस्य'—इति,

'अन्नम्'—इति च वैयधिकरण्येन पदद्वयम् उपादीयते। अन्यथा खलु 'अकृतस्य'—इति षष्ठी वा न स्यात्, 'अन्नम्'—इति वा द्वितीया। तदिदम् एकं वचनं बहूनाम् अनुरोधान्नेयं, न तु एतदवष्टभ्य बहूनि वचनानि अन्यथा नेयानि—इति युक्तम्। स्मरन्ति च।

"विरोधो यत्र वाक्यानां प्रामाण्यं तत्र भूयसाम्।
तुल्यप्रमाणत्वे तु न्याय एव प्रवर्त्तकः" ॥

इति। सुव्यक्तमप्यस्यास्यार्थत्वस्मरणं यदि कथञ्चिदुपलभ्येतापि, तर्हि तदपि क्लृप्तश्रुतिविरोधादनपेक्षणीयमेव प्रेक्षावताम्। किं पुनरङ्ग! सन्दिग्धार्थस्य तदानुगुण्येन वर्णनम्। तस्मात्—वैश्वदेवादिकम् अन्नार्थम्, उभयार्थं वा,—इत्यसङ्गता कल्पना।

तदेवं सिद्धेपि वैश्वदेवस्य पुरुषार्थत्वे, अन्नस्य सिद्धस्य—इति यद्यनुवादो वा, मुख्यकल्पाभिप्रायं वा न स्यात्; नियम्येत तर्ह्यन्नम्। परिसङ्ख्यायेत चान्यत् द्रव्यम्। भिद्येत तर्हि वाक्यम्। कथम्?। रात्रौ वैश्वदेवः कर्त्तव्यः, स च सिद्धेनैव,—इति वचनव्यक्तिभेदात्। न चैतदपि सम्भवति, प्रतिनिधिवचनानामनर्थकत्वापत्तेः। तस्मात् पाकाभावेपि रात्रौ वैश्वदेवादिकम् उदकादिनापि कर्त्तुमुचितम्। न खलु पाकाभावे—'अनश्नतापि रात्रौ वैश्वदेवः कर्त्तव्यः'—इति शास्त्रं न प्रवर्त्तते!। तत् किम् इति, अकारणमेव शास्त्रम् इदम् अतिक्रम्यते!। न च शास्त्रं नामातिक्रमितव्यम्। 'सततम्'—इति चाभिधानात्। अनश्नतापि सततं वैश्वदेवो बलिकर्म्म च कर्त्तव्यम्,—इति स्वल्पाम्नातं

कात्यायनेन। सेयं 'सततं' श्रुतिरेवं सति उपरुध्येत!। न खल्वेवम्—इयम् अनुरुध्यते। तस्मान्न किञ्चिदेतत्। यदि पुनः निःयम्यते अन्नं, तर्हि तदर्थवत्तोपपत्तेः, 'अनश्नतापि सततम्,'—इति च स्मरणात्, पुरुषार्थत्वाञ्चास्य, अनश्नतापि वैश्वदेवार्थम् एव पुनः पाकः क्रियताम्। पाकेनैव चेत् वैश्वदेवः कर्त्तव्यः, तर्हि अयमेव बलादपि पाकमानयिष्यति। तस्मात्—यद्येवम् आग्रहातिशयं करोषि;—सिद्धेनैव वैश्वदेवः कर्त्तव्यः,—इति, तर्हि अनुमन्यस्व अतिथ्यनुरोधम् अन्तरेणापि अनश्नतोपि पुनः पाकम्। किमिति,—अतिथ्यनुरोधेन पाकाभावे वैश्वदेवलोपं कथयसि—इति न विद्मः। एतेन—

"पुनः पाकमुपादाय सायमप्यवनीपते!।
वैश्वदेवनिमित्तं वै पत्न्यमन्त्रं बलिं हरेत्" ॥

इत्येवमादिकं पुराणवचनमपि व्याख्यातम्। अन्यथा खल्वश्नतोपि रात्रौ पाकाभावे नास्ति वैश्वदेवादिकम्,—इत्यापतति। न चैवम् इष्यते। पुराणञ्च खल्विदं न शक्नोति श्रुतिं स्मृतिञ्च बाधितुम्। कस्मात्?।

"श्रुतिस्मृतिपुराणानां विरोधो यत्र जायते।
तत्र श्रौतं प्रमाणन्तु द्वयोर्द्वैधे स्मृतिर्वरा" ॥

इति व्यासस्मरणात्। तस्मात्,—"स्वीयभोजनसम्भवे पाकं विनापि, तदसम्भवे अतिथ्यनुरोधेन पाकसम्भव एव, सायं वैश्वदेवबलिकर्म्मणो,—इति रघुनन्दनमतमसङ्गतम्। न च स्वीयभोजनसम्भवे पाकं विनापि,—इत्यस्यां कल्पनायां प्रमाणम् अस्ति।

न चैवं, पुनः पाकमुपादाय,—इति वचनमुपपद्यते। तस्मात्, पुनः पाकमुपादाय,—इत्यनूद्यते, पाकं सिद्धमन्नम्, उपादाय, सायम् अपि, पुन वैश्वदेवं कुर्य्यात्,—इति वा वचनार्थः। तस्मादस्मदुक्तैव व्यवस्था शास्त्रार्थः॥ १९॥ ०॥

तदिदं वलिहरणम् अहरहर्यत् पच्यते तेनैवान्नेन कर्त्तव्यं न पुनरन्यार्थमपि यत् श्रप्यते, तेनापि कर्त्तव्यम्—इत्युच्यते। कस्मात्?। 'वैश्वदेवादन्नात् पर्य्युक्ष्य जुहोति'—इति, 'सिद्धस्य वैश्वदेवस्य अन्वहं होतव्यम्'—इति, 'होमशेषेण वलयोहर्त्तव्याः'—इति चैवमादिशास्त्रेभ्यः। नेत्युच्यते। पुरुषार्थं खल्वेवमादिकं कर्म्म, यथाकथञ्चित् पुरुषेण निर्व्वर्त्तनीयम्। अन्यथा खल्वयम् अधर्म्मम् इयात्। तस्मान्नैष नियमः,—वैश्वदेवेनैवान्नेन होतव्यम्—इति। तमिमम् अर्थम् आचार्य्यः सुव्यक्तम्—उपदिशन्नाह—

## सर्व्वस्य त्वेवान्नस्यैतान् वलीन् हरेत्,—पित्र्यस्य वा, स्वस्त्ययनस्य वा, ऽर्थार्थस्य वा॥ २०॥

सर्व्वस्यैवान्नस्य एतान् वलीन् हरेत्। यत् किञ्चिदन्नं पच्यते भोजनार्थं वा, अन्यार्थं वा, तेनैव—वलयोहर्त्तव्याः न पुनरन्नस्यापि कश्चिन्नियमोऽनेनैवान्नेन—इत्येतदर्थम् आचार्य्यः 'सर्व्वस्य'—इत्याह। "अनेकस्य अशेषता सर्व्वशब्दस्य अर्थः"—इति ब्रवोचाम। स खल्वयम् अर्थोविस्पष्टमुपदिश्यते,—'पित्र्यस्य वा' इति। पित्र्यस्य, पितृकर्म्मार्थं प्रकृतस्य, अमावस्यादावन्वाहार्य्याद्यर्थम्—

इत्यर्थः। स्वस्त्ययनस्य, तदर्थं पक्वस्य। स्वस्ति—इति अभिप्रेतार्थसिद्धिम् आचक्ष्महे। अस्या अयनं प्रापकं यत्कर्म्म, तत् स्वस्त्ययनम्। किन्तत्?। ब्राह्मणभोजनादिकम्। कस्मात्?। "स्नेहवदमांसमन्नं ब्राह्मणान् भोजयित्वा स्वस्ति हैषां भवति"—इत्येवमादिवचनात्। 'अर्थार्थस्य' अर्थोधनम्, अर्थः प्रयोजनं, यस्य, पुरुषस्य, सोयम् अर्थार्थः—इत्युच्यते। यस्मात् पुरुषात् अर्थं आशास्यते, तदर्थं पक्वस्य—इत्यर्थः।

अथ पित्राद्यर्थं यत् पच्यते, तेनापि चेत् वैश्वदेवादिकं क्रियते, न तर्हि इदानीं पाकः पित्र्यो भवति। वैश्वदेवाद्यर्थत्वम् अपि खल्वस्य विद्यत एव। उच्यते। सत्यम् अस्तीदं, यत् पित्रर्थं यत् पच्यते, तेनापि वैश्वदेवादिकं कर्त्तव्यम्—इति। नैतावता पाकस्य पित्र्यत्वम् अपक्रोतुं शक्यते। अपणस्य पित्रुद्देश्यकत्वम् अस्त्येव—इति, पाकः पित्र्यः—इत्युच्यते। पितृकर्म्म किलोद्दिश्य यत् पच्यते, तत् पित्र्यम्—इति प्रतिजानीमहे। सोयं पाकविशेषः पितॄणाम् असाधारणः,—इति तथा व्यपदिश्यते। व्यपदेशाः खल्वसाधारणतयैव भवन्ति। प्रत्यक्षं खल्वेतदस्माकम्, यत् क्षितिजलपवनवीजादिसमवधानजन्माप्यङ्कुरो व्यपदिश्यते—शाल्यङ्कुरः—इति। कस्मात्?। शालिवीजानाम् साधारणत्वात्। क्षित्यादिकं खलु साधारणम्—इति, न तेन व्यपदिश्यते। तस्मादुपपन्नम् एतत्—'पित्र्यस्य वा स्वस्त्ययनस्य वा अर्थार्थस्य वा'—इति। तदेवं यस्य कस्यापि अर्थं पक्वस्य अन्नस्यैतान् वलीन् हरेत्, न पुनर्वैश्वदेवार्थपक्वस्यैव—इति एव शब्दार्थः। तु शब्दो वलिहर-

णस्य कालविशेषं द्योतयति। कः पुनरसौ कालविशेषः?। पूर्व्वं, पश्चाद्वा—इति ब्रूमः। सोयं विभज्य प्रदर्श्यते। तत्र तावत् अर्थार्थं स्वस्त्ययनार्थञ्च यत् पच्यते, तेन पूर्व्वमेव बलिहरणं भोजनादित्याचक्ष्महे। कस्मात्?। 'अहुतस्य नाश्नीयात् न चान्नमाशयेत्' —इति गृह्यान्तरवचनात्। तथा दर्शनाच्च। दृश्यते खल्वादितो बलिहरणं पश्चात् भोजनं वैश्वदेवस्यान्नस्य। तस्मादिहापि तदेव कल्पयितुम् उचितम्। न खलु पुरुषोच्छिष्टेनान्नेन बलिहरणम्—इति सम्भवति। यज्ञावशिष्टान्नभोजनम् एव उपदिशन्ति शिष्टाः।

"यज्ञशिष्टाशनं ह्येतत् सतामन्नं विधीयते"।

इति।

"यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम्"।

इति चैवमादि। अत एव वैश्वदेवादर्व्वाक् यदि भिक्षुकः समायाति, तदापि वैश्वदेवार्थम् अन्नम् उद्धृत्य,—पृथक् कृत्वा, तस्मै भिक्षा दातव्या,—इति स्मर्य्यते। न तु भिक्षादानावशेषेण वैश्वदेवः कर्त्तव्यः—इति। तदाह व्यासः।

"अकृते वैश्वदेवेतु भिक्षुके गृहमागते।
उद्धृत्य वैश्वदेवान्नं भिक्षां दत्त्वा विसर्ज्जयेत्"॥

इति। पित्रर्थश्चेदन्नं पच्यते, तर्हि पूर्व्वम् एव श्राद्धं, पश्चाद्बलिहरणम्—इति ब्रूमः। तत् कस्य हेतोः?। तथैव स्मरणात्। तथा च मनोः स्मरणम्।

"उच्छेषणन्तु तत्तिष्ठेद्यावद्विप्रा विसर्ज्जिताः।
ततो गृहबलिं कुर्य्यादिति धर्म्मो व्यवस्थितः"।

इति। न चेदं गृह्यबलिपदम्—

स्वयमेव हरेत् काम्यान् बलीन् यावद्गृहे वसेत्।

आतुरत्वे प्रवासे वा लोपो गृह्यबलेर्भवेत्" ॥

इति गृह्यान्तरदर्शनात् काम्यबलिमात्रपरम्—इति वाच्यम्। तन्मात्रपरत्वे प्रमाणाभावात्। तस्मात् गृहे यो बलिर्दीयते—गृहमेधिना यः क्रियते, सोयं गृह्यबलिरुच्यते। गृह्यबलिपदस्य काम्यबलिमात्रपरत्वेपि, काम्यानां बलीनां श्राद्धोत्तरत्वम् इदं वचनं शक्नोति विधातुं, न तु नित्यानाम् एतन्निषेद्धुम् अपि। ततश्च तेषामपि शास्त्रान्तरात् तथात्वम् अविरुद्धमेव। तथा च गौतमस्मरणम्।

"पितृश्राद्धमकृत्वा तु वैश्वदेवं करोति यः।

अकृतं तद्भवेत् श्राद्धं पितॄणां नोपतिष्ठते"।

इति।

"पितृपाकात् समुद्धृत्य वैश्वदेवं करोति यः।

अकृतं तद्भवेत् श्राद्धं पितॄणां नोपतिष्ठते"।

इति च स्मृत्यन्तरम्। तथा कार्ष्णाजिनि स्मरणम्।

"यदा श्राद्धं पितृभ्यश्च कर्त्तुमिच्छति मानवः।

वैश्वदवं ततः कुर्य्यान्निवृत्ते पितृकर्म्मणि"।

इति। अत्र वैश्वदेवस्य श्राद्धोत्तरत्ववचनात् ततः पराचीनस्य बलेः सुतरां तथात्वम्। तथा मत्स्यपुराणम्।

"निर्व्वर्त्त्य प्रणिपत्याथ पर्य्युक्ष्याग्निञ्च धर्म्मवित्।

वैश्वदेवं प्रकुर्व्वीत नैत्यिकं विधिमेव च"।

इति। अत्र—"नैत्यिकं बलिमेव च"—इति श्राद्धभाष्ये नीलाम्बरोपाध्यायाः पठन्ति। परिशिष्टप्रकाशे नारायणोपाध्याये-ण्येवमेव पठति। वाचस्पतिमिश्राणामप्ययमेव पाठः। भविष्य-पुराणञ्च।

"कृत्वा श्राद्धं महाबाहो! ब्राह्मणांश्च विसृज्य च।
वैश्वदेवादिकं कर्म्म ततः कुर्य्यान्नराधिप!"।

इति।

"विसर्ज्जयेत् प्रियाण्युक्त्वा प्रणिपत्य च भक्तितः।
आद्वारमनुगच्छेच्चागच्छेच्चानुप्रमोदितः।
ततो नित्यक्रियां कुर्य्याद्भोजयेच्च तथाऽतिथीन्।
नित्यक्रियां पितॄणाञ्च केचिदिच्छन्ति सत्तमाः।
न पितॄणां तथैवान्ये शेषं पूर्व्ववदाचरेत्।
पृथक् पाकेन वेत्यन्ये केचित् सर्व्वञ्च पूर्व्ववत्"।

इति च मार्कण्डेयपुराणम्। न चैवं नित्यश्राद्धमपि बलिहरणात् पूर्व्वमेव प्राप्नोति—इति वाच्यम्। नित्यपाकस्य पितृपाकत्वा-भावात्। व्यपदेशाः खल्वसाधारणतया भवन्ति—इत्यवोचाम। वैश्वदेवः—सर्व्वार्थः खल्वसौ पाको भवति। पितृपाकात् समु-द्धृत्य,—इति हि स्मरन्ति। सर्व्वासु च स्मृतिषु बलिहरणात् पराचीनमेव नित्यश्राद्धम् उच्यते। अमीषाञ्च वचनानां पार्व्व-णश्राद्धप्रकरणे पाठात् नान्यत्र सन्निवेशः। ननु वाक्यं प्रकरणं बाधिष्यते?। नेत्युच्यते। विसर्ज्जयेत्—इति, आद्वारम् अनुगच्छेत् —इति च, अभिधाय, ततो नित्यक्रियां कुर्य्यात्—इत्याम्नानात्

व्यक्तमिदम् अवगम्यते—विसर्ज्जनमनुगमनञ्चेदम् अनित्ये यत् क्रियते, तदुच्यते, न तु नित्ये—अहरहः क्रियमाणश्राद्धेपि—. इति। तत् इदं वाक्यं न अहरहः श्राद्धविषयम्—इति सिद्धम्।

"नित्यश्राद्धे गयाश्राद्धे तीर्थश्राद्धे तथैव च।
वैश्वदेवं जुहेदादौ ततः श्राद्धं समाचरेत्"।

इति च स्मरणान्तरम्। अपि च। निर्व्वर्त्त्य—इति, कृत्वा श्राद्धम्—इति, विसर्ज्जयेत्—इति च, प्रकृतमेव निर्व्वर्त्तनं, प्रकृतमेव श्राद्धम्, प्रकृतमेव च विसर्ज्जनम् अर्थोऽवगम्यते। व्यक्तिवचनानां खल्वमीषाम् आग्नेयोन्यायात् सन्निहितव्यक्तिपरतैव न्याय्या—इत्यदोषः। तस्मात् पूर्व्वं श्राद्धं पश्चाद्बलिहरणम्—इत्यवगन्तव्यम्।

अत्राह। 'श्राद्धोत्तरकालन्तु तदर्थतैव पाकस्य न स्यात्। सर्व्वो हि सर्व्वस्य परद्रव्यस्य यावन्मात्रं दत्तम्, तस्यैवेष्टे, नान्यस्य—इति। एवञ्च सति सूत्रारम्भवैयर्थ्यमेव स्यात्। तस्मात् श्राद्धात् पूर्व्वं बलिहरणम्'—इति। न—इति ब्रूमः। वाचनिके न्यायानवतारात्। वाचनिकः खल्वयम् अर्थः—इत्युपपादितम् अस्माभिः। तत्किमत्र न्यायः करिष्यति?। नहि वचनस्यातिभारो नाम अस्ति। उत्तरकालं नास्ति तदर्थतैव पाकस्य—इत्यपि वर्णनमनुचितम् एव। कस्मात्?। वचनप्रामाण्यादेव। यस्मात् वचनानि श्राद्धादुत्तरकाले बलिहरणं दर्शयन्ति, तस्मादवगच्छामः—अस्त्युत्तरकालमपि पाकस्य तदर्थत्वम्—इति। अपि च। कस्मादुत्तरकालमस्य तदर्थता लुप्यते?—इति तावदयं प्रष्टव्यः। प्रयोजनस्य वृत्तत्वात्—इति चेन्न, न ह्याम्रे वृत्तेपि वनस्पतेस्तदर्थता

उच्यते। पाकः खल्वयम् पितृकर्म्मोद्दिश्य कृतः—इत्यस्ति पित्रर्थता पाकस्य। न खल्वविशिष्टान्नस्य तदर्थत्वाभावः पाकस्य तदर्थत्वम् अपहन्तुं शक्नोति। तथा चोक्तम्। "यमर्थमधिकृत्य प्रवर्त्तते तत् प्रयोजनम्"—इति। श्राद्धं खल्वधिकृत्य पाकः प्रवृत्तः—इति वृत्तेपि श्राद्धे नैतत् अन्यथयितुं शक्यते। यथा खल्वाग्नेयहोमे कृतेपि, पुरोडाशस्याग्नेयता न व्याहन्यते—यत एवाग्नेयात् पुरोडाशात् स्विष्टकृदवद्यते, तथेहापि भविष्यति,—इति न किञ्चिदेतत्। प्रयोजनं यावन्मात्रेण निर्व्वाह्यते, तावन्मात्रमेव चेत् तदर्थम् उच्यते, न तर्हि अन्यार्थपाकात् वलिहरणं सम्भवति। न खल्वेक एव भागः श्राद्धाय च उपादेयो, वलिहरणाय च,—इति सम-ञ्जसं वचनम्। यदि तावत् श्राद्धायोपादीयते, नैव वलिहरणाय भवति, अथ वलिहरणायोपादीयते, न तर्हि श्राद्धाय भवति,—इत्यशक्यत्वादनुचितम्। अथ 'प्रयोजननिर्व्वाहाय यदुपयुज्यते,—यत् अर्हति प्रयोजनं निर्व्वोढुम्, तदेव तदर्थम्'—इति मन्यते, तर्हि वृत्तेपि प्रयोजने, नैव द्रव्यस्य तदर्थत्वमपचीयते। स्वरूपयोग्यतामात्रस्याविशिष्टत्वात्—इति यथोक्त एवार्थः। यच्च —'प्रकृतस्य शास्त्रीयात्'—इति वचनम्, तदेतद्व्यतिरिक्तविषयमवतिष्ठते। तस्मात्—"वैश्वदेववलिकर्म्मणी नित्ये श्राद्धात् पूर्व्वमेव कर्त्तव्ये, काम्यन्तु वलिकर्म्म श्राद्धानन्तरम्"—इत्यसङ्गतं वर्णनम्।

यदप्याहुः—"पार्व्वणश्राद्धे कर्त्तव्ये साग्निना तर्पणेनैव पञ्चयज्ञान्तर्गतपितृयज्ञस्य निर्वर्त्तितत्वात् न श्राद्धानन्तरं पित्र्य-

वलिनित्यश्राद्धयोरनुष्ठानं, निरग्निना पार्व्वणदिनेपि तदनन्तरं पितृवलिनित्यश्राद्धे कर्त्तव्ये''—इति, तदप्यसङ्गतम्। पितृः वलेर्नित्यत्वात्, चतुर्द्दश नित्याः—इति सङ्ख्यावचनात्, प्रमाणविशेषाभावाच्च। यच्चोक्तम्—

"पितृयज्ञन्तु निर्व्वर्त्त्य तर्पणाख्यं द्विजोऽग्निमान्।
पिण्डान्वाहार्य्यकं कुर्य्यात् श्राद्धमिन्दुक्षये सदा"॥

'इति मत्स्यपुराणवचनेऽर्थात् प्राप्तस्यापि तर्पणानन्तर्य्यस्य पुनरभिधानात् अन्यः पितृयज्ञो नास्ति'—इति। तदपि चिन्त्यम्। आनन्तर्य्याश्रवणात्। क्त्वाहि, पूर्व्वकालतायां स्मर्य्यते,—इत्येवोचाम। तदिदं वचनं सिद्धवदनुद्य पूर्व्वकालीनन्तर्पणं, इन्दुक्षये सदा कुर्य्यादन्वाहार्य्यम्—इत्येतद्विधत्ते। न तु तर्पणस्य पूर्व्वकालताम् अपि। कस्मात्?। वाक्यभेदप्रसङ्गात्। एकं खल्विदं वाक्यम् एवं सति भिद्येत। अपि च। इदं वचनम्, श्राद्धदिने तर्पणस्यावश्यकत्वम् आचष्टे, नत्वन्यत् परिसङ्ख्यष्टे। कथं नाम?। तर्पणं निर्वर्त्त्यैव श्राद्धं कुर्य्यात्, न तु केवलनित्यश्राद्धेनैव पितृयज्ञो निर्व्वर्त्तते—इति मन्येत। तदनेन श्राद्धदिने तर्पणमनावश्यकम्—इति मतम् अननुमतम्—इति दर्शितम्। "पितृतर्पणानन्तर्य्यानुवादस्तर्पणपार्व्वणयोर्मध्ये पितृयज्ञाख्यनित्यश्राद्धव्युदासार्थः''—इति शूलपाण्युपाध्यायाः। सर्व्वथापि न परिसङ्ख्यष्टे। श्रुतहान्यश्रुतकल्पनापत्तेः। तदुक्तम्।

"अन्यार्थश्रूयमाणा च यान्यार्थप्रतिषेधिका।
परिसङ्ख्या तु सा ज्ञेया यथा प्रोक्षितभोजनम्"॥

इति। दोषस्तु खल्वयम्, यत् श्रुतस्य च उत्सर्गोऽश्रुतस्य च परिकल्पनम्। प्राप्तस्यैवम् अन्योपि पितृयज्ञो बाध्येत। तदिदं दोषत्रयं परिसङ्ख्यायाम् अवर्जनीयम् आपद्येत। न चैतत् युक्तम् अभ्युपगन्तुम्। श्लोकमपि उदाहरन्ति।

"श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात्।

प्राप्तस्य बाधादित्येवं परिसङ्ख्या त्रिदोषिका" ॥

इति। यदि पुनः—परिसञ्चचीतापि अन्यं पितृयज्ञं, तदापि श्राद्धात् पूर्वमेव परिसञ्चचीत, न तु परस्तादपि। कस्मात्?। तर्पणाख्यमेव पितृयज्ञं निर्वर्त्त्य—(न तु बलिहरणादिकमपि कृत्वा—इत्यर्थः)—पिण्डान्वाहार्य्यकं श्राद्धं कुर्य्यात्,—इति वचनव्यक्तिसम्भवात्। अस्यां खलु वचनव्यक्तौ अन्योपि पितृयज्ञः श्राद्धात्परम् अर्थादवगम्यते। तस्मादस्मदुक्त एवार्थ आदरणीयः ॥ २० ॥ ० ॥

तदिदं बलिहरणम्—

## यज्ञादेव निवर्त्तते ॥ २१ ॥

यज्ञो ज्योतिष्टोमादिः। तस्मात् यज्ञात् हेतोर्निवर्त्तते। यज्ञादिति वा सप्तम्यर्थे व्यत्ययेन विभक्तिः पञ्चमी क्रियते। यज्ञ एव निवर्त्तते—इत्यर्थः। बलिहरणम्—इति च होमादेरपि उपलक्षणम् अवोचाम। "तस्मात् दीक्षितो न ददाति, न पचति, न जुहोति"—इति, च ब्राह्मणम् भवति। एवशब्देन किम् इह व्यवच्छिद्यते?। न किञ्चित्। किमर्थं तर्हि?। होमादीनाम् आव-

श्यकत्वप्रदर्शनार्थम्—इति ब्रूमः। कथन्नाम?। यत्र एव निवर्त्तते न पुनरन्यत्र—आपद्यपि—इत्यर्थः। तेनापद्यपि पञ्चयज्ञानाम-वश्यकर्त्तव्यत्वम् अवगम्यते। स्मरन्ति च।

"आपद्यपि हि कष्टायां पञ्चयज्ञान्न हापयेत्।
स्वर्गापवर्गयोः प्राप्तिं महायज्ञैः प्रचक्षते"॥

इति। सोऽयं सामान्यो विधिरपवादविधिभिरुपरुध्यते। न पुनरे-तावता कारणेन सपिण्डमरणादावपि कर्त्तव्यतैव अमीषाम्—इति भ्रमितव्यम्,। कस्मात्?।

"सन्ध्यां पञ्चमहायज्ञान् नैत्यिकं स्मृतिकर्म्म च।
तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रिया"॥

इति।

"पञ्चयज्ञविधानञ्च न कुर्य्यान्मृत्युजन्मनोः"।

इति चैवमादिस्मरणात्। यत्र एव निवृत्तिरिति वचनात् खल्व-शौचादावानुमानिकी कर्त्तव्यता प्रतीतिः, प्रत्यक्षन्तु निषेधशा-स्त्रम्। भट्टनारायणस्त्वाह—"दीक्षितो न जुहोति,—इति सिद्धे पुनर्वचनं परिसङ्ख्यानार्थम्। कथन्नाम?। यत्र एव बलिहरणं निवर्त्तते, नान्यत्रेति। एवञ्चाशौचादावपि सिद्धस्य पाकस्य किञ्चिदन्नं तूष्णीं प्रक्षिप्य अग्नौ जुहुयात्। तच्छेषं बलिं कृत्वा तूष्णीमेव प्रक्षिपेत्"—इति॥ २१॥ ०॥

**यद्येकस्मिन् काले व्रीहियवौ प्रक्रियेयाताम्, अन्य-तरस्य कृत्वा कृतं मन्येत॥ २२॥**

यदि, एकस्मिन्—भोजनकाले; दिवैव वा, रात्रावेव वा,—इत्यर्थः। व्रीहियवौ, व्रीहिश्च यवश्च, तौ व्रीहियवौ। अनयोरुपादानम् अन्यदपि धान्यादिकम् उपलक्षयति। 'प्रक्रियेयाताम्' प्रकर्षेण; भक्तकरम्भपायसशष्कुल्यादिभेदेन—इत्यर्थः। 'क्रियेयातां' कृतौ भवेयाताम्, तर्हि अन्यतरस्य एकतरस्य, व्रीहेः यवस्य वा, 'कृत्वा' बलिहरणम्, 'कृतं' 'मन्येत' जानीयात्, न पुनः अन्यस्यापि कर्त्तव्यम्—इत्यर्थः॥ २२॥ ०॥

यद्येकस्मिन् काले पुनः पुनरन्नं पच्येत, सकृदेवैतद् बलितन्त्रं कुर्व्वीत॥ २३॥

यद्येकस्मिन् काले—इत्युक्तार्थम्। 'पुनः पुनः' भूयोभूयः 'अन्नं पच्येत', अतिथ्यादिबाहुल्यवशात्, तथापि 'सकृत्' एकवारम्, 'एव' 'एतद्बलितन्त्रं' 'कुर्व्वीत' न प्रतिपचनम्॥ २३॥

यद्येकस्मिन् कुले बहुधाऽन्नं पच्येत, गृहपतिमहानसादेवैतद्बलितन्त्रं कुर्व्वीत॥ २४॥

'यदि' 'एकस्मिन् कुले' एकपाकोपजीविनि भ्रात्रादिवर्गे, 'बहुधा अन्नं पच्येत' बहुषु महानसेषु कुतश्चित् कारणात् कदाचित्, भ्रातृपुत्रादीनां भोजनसौकर्य्यार्थं वा, तर्हि, एषां यो गृहपतिः, तस्य, 'महानसात्' 'एव' 'एतद्बलितन्त्रं कुर्व्वीत'। न प्रतिमहानसात्—इत्यर्थः। स्मरति च बृहस्पतिः।

"एकपाकेन वसतां पितृदेव द्विजार्च्चनम्।

एकं भवेत्, गृहस्थानां तदेव स्यात् गृहे गृहे"।

इति। कः कुर्व्वीत?। गृहपतिः—इति ब्रूमः। कस्मात्?। प्रकृतत्वात्। प्रकृतः खल्वत्र गृहपतिः कर्त्ता—इति स एव कुर्व्वीत॥ ॥ २४॥ ०॥

## यस्य त्वेषामग्रतः सिध्येत्, नियुक्तमग्नौ कृत्वाऽग्रं ब्राह्मणाय दत्त्वा भुञ्जीत॥ २५॥

'एषाम्' एकपाकोपजीविनां, मध्ये, 'यस्य तु' 'अग्रतः' पूर्व्वं, गृहपतिपाकात्, 'सिध्येत्' सिध्यति पाकः, स किञ्चिदन्नम्—'अग्नौ' 'नियुक्तं' 'कृत्वा' किञ्चिच्च, 'अग्रं' 'ब्राह्मणाय दत्त्वा भुञ्जीत'। तुशब्दो विशेषणार्थः। किं विशिष्यते?। अनावश्यकत्वेऽपि वैश्वदेवादीनाम्, अयमस्य विशिष्यते,—यदग्नौ नियोज्यं ब्राह्मणाय च दातव्यम्—इति॥ १५॥ *॥

## यस्यो जघन्यं भुञ्जीतैवेति॥ २६॥

यस्य पुनर्जघन्यं परस्तात् गृहपतिपाकात् सिध्यति पाकः, स भुञ्जीतैव, न पुनरग्नौ वा नियुञ्जीत, ब्राह्मणाय वा दद्यात्, वलिं वा हरेत्। उ—इति पुनरर्थोऽपार्थो वा निपातः। अन्ये तु पठन्ति—"यः सो जघन्यं भुञ्जीतैव"—इति। तदिदम् एवं विवियते,—यः जघन्यं भुञ्जीत, स उ भुञ्जीतैव—इति। सो जघन्यम्,—इति छान्दसोऽयं प्रयोगः। 'इतिः' नित्यवलिप्रकरणपरिसमाप्तिं द्योतयति।

सेयं पञ्चसूत्री द्रव्यस्य कर्म्मार्थताम् आह। कर्म्मणश्च पुरुषार्थताम्। कर्म्मणां द्रव्यार्थत्वे खल्वावर्त्तेत प्रतिद्रव्यं कर्म्म। तदननुजानानः आचार्य्यः पुरुषार्थत्वम् अमीषां दर्शयति। द्रव्यार्थत्वे खल्वमीषां वचनानामदृष्टार्थत्वं कल्पनीयं स्यात्। न चैतदुचितं सम्भवन्त्यां गतौ। तस्मात् यथोक्तएवार्थः॥ २६ ॥ * ॥

## अथाप्युदाहरन्ति ॥ २७ ॥

अथानन्तरञ्च यत् कर्त्तव्यं, तदपि उदाहरन्ति वदन्ति ब्राह्मणवाक्यानि—इत्याभासान्तं सूत्रम्॥ २७॥

## एतस्यैव वलिहरणस्यान्ते कामं प्रब्रुवीत, भवति हैवास्य ॥ २८ ॥

एतत्—इति वलिहरणं ब्रूमः। 'एतस्य' वलिहरणस्य, 'अन्ते' अवसाने, 'एव'—काम्यानामपि वलीनामनन्तरम्—इत्यर्थः। 'कामं प्रब्रुवीत' काम्यते इति कामः—अभिलषितमायुरादिकम् उच्यते। तमिमं कामम् अभिलषितं वस्तु, प्रब्रुवीत प्रकर्षेण कथयेत लाभार्थी, प्रार्थयेदग्निम्—इत्येतत्। "मनो ह वै देवा मनुष्यस्य जानन्ति"—इति श्रवणात् मनसैव इयं प्रार्थना माभूत्—इति प्रब्रुवीतेत्याह। प्रार्थना च इयं वामदेव्यगानादर्वाक् कर्त्तव्या। तदाह नित्यान् काम्यानपि वलीनभिधाय कात्यायनः।

स्पृष्ट्वाऽपो वीक्ष्यमाणोऽग्निं कृताञ्जलिपुटस्ततः।
वामदेव्यजपात् पूर्व्वं प्रार्थयेत् द्रविणोदसम्।
आयुरारोग्यमैश्वर्य्यं धीर्धृतिः शं वलं यशः।

ओजोवर्च्चः पशून् वीर्य्यं ब्रह्म ब्राह्मणम् एव च।
सौभाग्यं कर्म्म सिद्धिञ्च कुलज्यैष्ठ्यं सकर्त्तृताम्।
सर्व्वमेतत् कर्म्मसाचिन्! द्रविणोद! रिरीहि नः"।

इति। आयुरारोग्यम्—इत्यादिः प्रार्थनमन्त्रः। स खल्वयं प्रार्थितः कामो, 'भवति' निष्पद्यते, 'एव'। 'ह' किल, 'अस्य' प्रार्थयितुरित्यर्थः॥ २८॥

**स्वयन्त्वेवाशस्यं वलिं हरेत् यवेभ्योऽध्याव्रीहिभ्यः, व्रीहिभ्योऽध्यायवेभ्यः, सत्वाशस्यो नाम वलिर्भवति॥ ॥ २९॥**

'स्वयं तु एव'। तुशब्दः, चशब्दार्थः, समुच्चये। किं समुच्चिनोति?। पूर्व्वोक्तं नित्यवलिम्—इति भट्टभाष्यम्। नैतत् युक्तम्। कस्मात्?। नित्यवलौ प्रतिनिधिसद्भावात्। आशस्य वलौ च तदभावात्। समुच्चयपक्षे खल्वाशस्यञ्च वलिं स्वयमेव हरेत्—इति वचनव्यक्तिरवगम्यते। नित्यञ्च—इति चार्थः। तदनया वचनव्यक्त्या आशस्य इव नित्येऽपि वलौ प्रतिनिधिर्निरस्येत। तस्मात्—तुशब्दः सुभूमिकरणादिकं स्मारयति —इति ब्रूमः। कथन्नाम?। नित्यवलिवत्—सुभूमिकरणम् उभयतः परिषेकः—इत्येवमादिकया रीत्या—इति। 'आशस्यम्' आशस्यनामानं 'वलिं' 'स्वयम्' 'एव' 'हरेत्' न पुनः प्रवासादावपि अन्येन—इत्यर्थः। उक्तस्यायमर्थः पुरस्तादस्माभिः—'स्वयमेव हरेत् काम्यान्'—इत्यादि गृह्यान्तरेण।

कोऽयमाग्रयो नाम वलिः? कस्मै च हर्त्तव्यः?—इत्यत्राह—'यवेभ्यः'—इति। सेयं चतुर्थीविभक्तिर्यवानां देवतात्वम् अवगमयति। त्यागोद्देश्यां हि देवताम् आचक्षते। चतुर्थ्या खल्वत्र यवानाम् उद्देश्यत्वम् अवगम्यते। श्लोकमपि उदाहरन्ति।

"तद्धितेन चतुर्थ्या वा मन्त्रलिङ्गेन चेष्यते।
देवतासङ्गतिस्तत्र दुर्व्वलन्तु परम्परम्"।

इति। तस्मात् यवदेवतोऽयं वलिर्भवति। तेन—यवेभ्यो नमः—इति प्रयोगः सिध्यति। कस्मिन् काले हर्त्तव्योऽयं वलिः?। तदुच्यते। 'अधि' उपरि। कस्मात्?। 'यवेभ्यः' यवोत्पत्तेरित्येतत्। तदत्र यवपदाच्चतुर्थ्येव प्रमाणम्।

"अपादानसम्प्रदानकरणाधारकर्म्मणाम्।
कर्त्तुश्चान्योन्यसन्देहे परमेकं प्रवर्त्तते"।

इति शाब्दिकस्मरणात्। यवेभ्य उपरि—इति यथाश्रुतेऽप्यर्थे केवलमभ्युपगम्यमाने, देवतानुपदेशात् यवदेवतएवायं वलिः कल्पयितुमुचितः। श्रुतत्वात्। तदुत्सर्गे च कारणविशेषाभावात्। अतएव—यवेनैव द्रव्येणैष वलिर्हर्त्तव्यः—इत्यवधार्य्यते। अतएव च—

"आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते।
मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः"।

इति कर्म्मप्रदीपवचनादाज्यद्रव्यकः प्रजापतिदेवताकोऽयं वलिः—इत्यपि नाद्रियते। 'जुहोतिषु'—इत्यभिधानाच्च। तथा च गृह्यान्तरम्।

"यवैर्यवेभ्य आवापो व्रीह्युत्पत्तेरधो वलिः।

व्रीहिभ्यो व्रीहिभिः पूर्वं यवोत्पत्तेर्जिजीविषेतः” ।

इति। कियन्तं कालं यावदयं वलिर्द्दर्त्तव्यः?। तदुच्यते। ‘आः व्रीहिभ्यः’ व्रीह्युत्पत्तिपर्य्यन्तम्—इत्यर्थः। एतेन—‘व्रीहिभ्योऽध्या-यवेभ्यः’—इति व्याख्यातम्। ‘स लाशस्यो नाम वलिर्भवति’। सः—इति प्रस्तुतपरामर्शिना सर्व्वनाम्ना निरपेक्षं वलिद्वयं परा-मृश्यते। तुशब्दोऽन्येभ्यो वलिभ्योऽस्य वैशेष्यमवगमयति। स्वयमेव खल्वयं वलिर्द्दर्त्तव्यो लोप एवास्य प्रवासादाविति ह्यवोचाम। स खल्वयं वलिरेकस्मात् शस्यादारभ्य अपरशस्यपर्य्यन्तं कर्त्तव्यत्वात्—‘आशस्यो नाम’ भवति ॥ २९ ॥

तदनेनाशस्यवलिना—

दीर्घायुर्हैव भवति ॥ ३० ॥

दीर्घम् आयुर्यस्य सोयं दीर्घायुः, दीर्घं वा अस्य आयुः, ह किल नूनं भवत्येव। नायमल्पायुर्भवतीत्यर्थः ॥ ३० ॥

विश्राणिते फलीकरणानामाचामस्यापामिति बलिं हरेत्, स रौद्रो भवति स रौद्रो भवति ॥ ३१ ॥ * ॥

‘विश्राणिते’ विशेषेण श्राणिते, श्रण दाने इति स्मरणात् दत्ते अन्ने। ‘फलीकरणानां’ कञ्चुकानाम्—इति भट्टभाष्यम्। फलीकरणानि कणाः—इति परिशिष्टप्रकाशः। तथाच गृह्यपरिशिष्टम्।

“आचितं शकटं प्राहुर्द्रोणः स्यात् कांसमानकः।
कञ्चुकाश्च कणाश्चैव फलीकरणकङ्कुशाः”।

इति। 'आचामस्य' भक्तमण्डस्य—

"ओदनाग्रद्रवं प्राहुराचामं हि मनीषिणः"।

इति स्मरणात्। 'अपाम्' उदकस्य। षष्ठीविभक्तयोऽवयवार्थाः। इतिना मिलितमुच्यते, चीण्येतान्येकीकृत्येत्यर्थः। 'वलिं हरेत्'—इत्युक्तार्थम्। स खल्वयं बलिः, रौद्रो रुद्रदेवताको भवति। रात्रौ चायं वलिर्दातव्यः। कस्मात्?।

"यत्क्षणे चोदकं दद्यात् यच्चैतत्ते इति ब्रुवन्।

आरोग्यमस्य तेन स्यात्, सायं रौद्रात् यथेप्सितम्"।

इति गृह्यान्तरदर्शनात्। एतस्मात् च गृह्यान्तरात्,—यत् किञ्चित् कामयते, तत् रौद्रबलेः फलम् अवगच्छामः। 'स रौद्रो भवति स रौद्रो भवति'—इत्यभ्यासो महायज्ञप्रकरणपरिसमाप्तिं द्योतयति ॥ ३१ ॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये प्रथमप्रपाठकस्य चतुर्थी काण्डिका ॥ ० ॥

# गोभिलीयगृह्यसूत्रे

प्रथमप्रपाठके पञ्चमी कण्डिका।



## अथ दर्शपौर्णमासयोः ॥ १ ॥

अथेत्ययमधिकारार्थः। दर्शश्च पौर्णमासश्च,—दर्शपौर्णमासौ। तयोरधिकार इदानीं वर्त्तिष्यते—इति वाक्यशेषः। अथशब्दः पूर्व्व-प्रकृतार्थो वा। कथन्नाम?। यथा सायंप्रातर्होमवैश्वबलिहरणानि नित्यानि, तथा दर्शपौर्णमासावपि। एवमपि वर्णयन्ति ॥ १ ॥

तत्र तावदुपवासपूर्व्वकत्वाद्दर्शपौर्णमासयोरुपवासव्यवस्थैव प्रथम-मभिधातव्या। तत्रापि—

"दर्शान्तं पौर्णमासाद्यमेकमेव प्रचक्षते"।

इति कर्मप्रदीपवचनात् पौर्णमासादित्वावगमात्, पूर्णाहुतेरूर्द्ध-मादितः पौर्णमास्यामागतायाञ्च तथात्वस्याविवादात् पौर्णमास्याः तावत् व्यवस्था उच्यते—

## सन्ध्यां पौर्णमासीमुपवसेत् ॥ २ ॥

रात्र्यह्नोः सन्धिः, सन्ध्या—

"अहोरात्रस्य यः सन्धिः सूर्य्यनक्षत्रवर्जितः।
सा च सन्ध्या समाख्याता मुनिभिस्तत्त्वदर्शिभिः"।

इति स्मृतुक्तलक्षणा। सा खल्वियं परैव सन्ध्या गृह्यते—इति वक्ष्यामः। अविशेषात् सन्ध्याद्वयमपि सन्ध्याशब्दार्थः—इति तु

भट्टभाष्यम्। तस्यां या पौर्णमास्यवच्छिद्यते ;—यस्यां किल पौर्णमास्यां, सन्ध्यायामेव—सवितुरस्तमयसमकालमेव पूर्णश्चन्द्रमाः समुदेति, सा पौर्णमासी सन्ध्येत्युच्यते। तामिमां सन्ध्यां पौर्णमासीं प्राप्योपवसेत्—तस्यामुपवासं कुर्यादित्यर्थः। उपवासः खल्वयम्,—उपावृत्तस्य पापेभ्यः गुणैः सहवासो वक्ष्यमाणोपवसथ्यानुष्ठानं यथोक्तकालञ्चाभोजनमुच्यते। न पुनरहोरात्रमभोजनम्। कस्मात्?। "औपवसथिकं दम्पती भुञ्जीयाताम्"—इति तदहर्भोजनोपदेशात्।

"उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह।
उपवासः सविज्ञेयो न शरीरविशोषणम्"।

इति च स्मरणात्। एके पुनः—"उपास्मिन् श्वो यक्ष्यमाणा देवा वसन्ति एवं विद्वानग्निमुपस्तृणाति"—इति तैत्तिरीयब्राह्मणं पश्यन्तः उपवासोऽग्न्याधानम्"—इति वर्णयन्ति। तदप्यादरणीयम्। "पूर्व्वेद्युरग्निं गृह्णाति उत्तरमहर्देवतां यजते"—इत्येवमादिशास्त्रादप्येतदवगमात् ॥ २ ॥

उत्तरामित्येके ॥ ३ ॥

सन्ध्यां पौर्णमासीमनुपोष्य तदुत्तरां पौर्णमासीमुपवसेत्—खण्डामपोष्यर्थः। इत्येके आचार्य्या मन्यन्ते।

एवं वा—

उत्तरेति प्रकृतत्वात् पौर्णमास्याः प्रतिपदुच्यते। उत्तरपदं खल्विदमव्यवहितत्वात् पौर्णमास्यास्तदपेक्षयैव उत्तरत्वमवगमयति,

न सन्ध्यामपेक्ष्य, व्यवहितत्वादित्यभिप्रायः। तामिमामुत्तरां प्रतिपदमुपवसेत्—इति, एके अन्ये शाखिनो मन्यन्ते न वयमेवं ब्रूम इत्यर्थः। तथाच तैरकीये ब्राह्मणं। "द्वे ह वै पौर्णमास्यौ द्वे अमावस्ये,—तस्मात् प्रतिपद्युपवसन् यजेतापरेद्युः"—इति। तस्मात् पारशाखिकोऽयं पक्षः कौथुमादीनां न भवति॥ ३॥

स्थिता तावदपर्य्यवसितैव पौर्णमासीकथा, 'त्रयः पौर्णमासी काला भवन्ति'—इत्यत्र पुनरुद्भविष्यति। अमावस्यायाः खल्विदानीं व्यवस्थोच्यते—

## अथ यदहश्चन्द्रमा न दृश्येत,ताममावास्याम्॥४॥

अथ उभयत्रामावास्यालाभे यदहर्यस्मिन्नहनि चन्द्रमा न दृश्येत, नावलोक्येत, ताममावास्याम्, उपवसेदित्यनुवर्त्तते। सा खल्वियं कुहूरुच्यते—इति सैवोपवस्तव्या न सिनीवाली। तस्यां खल्ववलोक्यते प्रातः चन्द्रमाः। तस्मान्नात्र त्रयलक्षणा। तदिदं सूत्रं वर्द्धमानाभिप्रायम्। कात्यायनोप्याह।

"वर्द्धमानाममावास्यां लक्षयेदपरेऽहनि।
यामां स्त्रीनधिकान् वापि पितृयज्ञस्ततो भवेत्"।

इति॥ ४॥०॥

कस्याश्चिदमावस्यायाः कस्याश्चिच्च पौर्णमास्या उपवासव्यवस्थामभिधाय, अथेदानीं दर्शपौर्णमासयोः कश्चिन्नियमः, पौर्णमास्यमावस्ययोश्च स्वरूपं वक्तव्यम्—इत्युत्तरो ग्रन्थ आरभ्यते।

एवं वा—

कस्मात् पुनः कारणात् पौर्णमास्याम् अमावस्यायाञ्च उपवासो व्यवस्थाप्यते ?—न पुनश्चतुर्दश्याम् उपोष्य तयोरेव इज्यते ?—इत्यस्यां जिज्ञासायाम्—इदं सूत्रमारभ्यते—

पक्षान्ता उपवस्तव्याः पक्षादयोऽभियष्टव्याः ॥ ५ ॥

पक्षोऽर्द्धमासः। स च शुक्लकृष्णभेदात् द्विविधः। तदन्ततिथिश्च इयो पौर्णमासी अमावस्या च। बहुवचनं व्यक्तिभेदाभिप्रायम्। तदयमर्थः। पक्षाणामन्ता अवसानतिथय उपवस्तव्याः। पक्षाणामादयः प्रतिपदश्च अभियष्टव्याः आभिमुख्येन यष्टव्याः—इत्यर्थः। अस्मादपि कारणात्—पौर्णमासीमुपवसेत् नोत्तराम्—इत्यवधार्य्यते ॥ ५ ॥

आमावास्येन हविषा पूर्व्वपक्षमभियजते पौर्णमासेनापरपक्षम् ॥ ६ ॥

अमावास्यायां यदुपक्लृप्तं हविस्तदामावास्यम्—इत्युच्यते। तेन आमावास्येन हविषा पूर्व्वपक्षं शुक्लपक्षम् अभियजते। पौर्णमासेन पौर्णमास्याम् उपक्लृप्तेन हविषा अपरपक्षं कृष्णपक्षम्, अभियजते—इत्यनुषज्यते। पूर्व्वपक्षप्रतिपदिष्ट्या कृत्स्न एव पूर्व्वः पक्षः इष्टो भवति, अपरपक्षप्रतिपदिष्ट्या च कृत्स्नोऽपरपक्षः—इत्यभिप्रायः। न खलु पक्षमभिव्याप्य इष्टिराम्नायते, तस्माद् यथोक्त एवार्थः ॥ ६ ॥

अथ केयं पौर्णमासी ? का वा अमावस्या ?। तदुच्यते—

**यः परमो विप्रकर्षः सूर्य्याचन्द्रमसोः सा पौर्णमासी, यः परमः सन्निकर्षः साऽमावास्या ॥ ७ ॥**

यः परमो महान् विप्रकर्षोव्यवधानं सप्तमराश्यवस्थानम्—इत्येतत्। कयोः?। सूर्य्याचन्द्रमसोः। सूर्य्यस्य चन्द्रमास्य, तयोः सूर्य्याचन्द्रमसोः। सा पौर्णमासी पूर्णिमा—इत्येकोऽर्थः। सा—इति पौर्णमास्यपेक्षया स्त्रीत्वम्। यः खलु परमः सन्निकर्षः सन्निकर्षः—एकराश्यवच्छेदेनैकांशावस्थानं सूर्य्याचन्द्रमसोः, सा अमावस्या, दर्शः सूर्य्येन्दुसङ्गमः—इत्यनर्थान्तरम् ॥ ७ ॥

अवसिता प्रासङ्गिकीकथा। प्रकृताम् एव इदानीम् अमावस्याव्यवस्थाम् अनुवर्त्तामहे—

**यदहस्त्वेव चन्द्रमा न दृश्येत,ताममावस्यां कुर्व्वीत ॥ ८ ॥**

यदहश्चन्द्रमा न दृश्येत, न दृश्यते—क्षीयते, आगमबलात् क्षीणः—इत्यवगम्यते; ताममावस्यां कुर्व्वीत। तुशब्दः, चशब्दार्थः समुच्चये। एवशब्दोऽवधारणार्थः। उपवासम् अन्यच्च यद्विहितम्—"अमावस्यायां तत् श्राद्धम् इतरदन्वाहार्य्यम्"—इति, तदपि तस्यामेव कुर्व्वीत—इत्येवम् अवध्रियते। तदनेन,—उपवास पिण्डपितृयज्ञ अन्वाहार्य्यश्राद्धानाम् एकस्मिन् काले कर्त्तव्यत्वम् अवगम्यते। अतएव कात्यायनः अमीभिरेव वचनैः श्राद्धम् अपि व्यवस्थापयाञ्चकार।

तदिदं क्षीणामावस्याभिप्रायं सूत्रम्। क्षयश्चात्र लक्ष्यते। अतो नास्ति पौनरुक्त्यम्—'अथ यदहश्चन्द्रमा न दृश्येत तामभावस्याम्'—इत्यनेन सूत्रेण। तत्र खल्ववलोकनाभावोऽर्थः, वर्द्धमानाभिप्रायञ्च वचनम्—इत्यवोचाम। तदाह कात्यायनः।

"पिण्डान्वाहार्य्यकं श्राद्धं क्षीणे राजनि शस्यते।
वासरस्य तृतीयांशे नाति सन्ध्या समीपतः।
यदा चतुर्दशीयामं तुरीयमनुपूरयेत्।
अमावस्या क्षीयमाणा तदैव श्राद्धमिष्यते।
यदुक्तं यदहस्त्वेव दर्शनं नैति चन्द्रमाः।
तत्क्षयापेक्षया ज्ञेयं क्षीणे राजनि चेत्यपि"।

इति। तथा च श्रूयते। "अपराह्णे ददाति, तस्मिन् क्षीणे ददाति"—इति। "एष वै सोमो राजा देवानाम् अन्नं यच्चन्द्रमाः, स एतां रात्रिं क्षीयते, तस्मिन् क्षीणे ददाति"—इति च शतपथीये ब्राह्मणे।

या च श्रुतिः—"यदहस्त्वेव चन्द्रमादर्शनं नैति,ताममावस्यां कुर्व्वीत"—इति, "यदैवैष न पुरस्तान्न पश्चाद्दृशे, अथैभ्यो ददाति"—इति चैवं जातीयिका, सा तु दर्शनाभावपरैव, न क्षयपरा। श्रुतिः खल्वेवमत्यन्तम् उत्सृज्येत। "श्रुतिलक्षणाविषये च श्रुतिर्ज्यायसी"—इत्याचक्षते। शतपथादिब्राह्मणेषु च, क्षीयते—इति, क्षीणे—इति चैवमादि समाम्नानात् क्षयमात्रम् अर्थः, न पुनरदर्शनम् अपि। तथाविधवचनव्यक्तेरभावात्। तदनयोर्विभिन्नविषययोर्वचनयोर्नास्त्येकविषयत्वम्। तस्मान्नामीषां वच-

नानामेकवाक्यता। न खल्वेकवाक्यत्वानुरोधात् श्रुतिरुत्स्रष्टुं युज्यते, लक्षणा वा आश्रयितुम्। श्रुतिर्हि वाक्याद्बलीयसी, कथमिव वाक्यानुरोधादुत्सृज्येत!। तस्मात्—शतपथश्रुतिदर्शनादपरापि श्रुतिः क्षयपरा—इति वाचस्पतिमिश्रादिवर्णनमसङ्गतम्। सा खल्वियमपरा श्रुतिर्वर्द्धमानाऽभिप्राया—इत्यवधार्य्यते। कुतः?। परिशिष्टकारस्मरणात्। स हि वर्द्धमानायाम् अपरेऽहनि श्राद्धं स्मरति। अतएव, आचार्य्यस्य सूत्रद्वयम् उपपद्यते,—'अथ यदहश्चन्द्रमा न दृश्येत'—इति, 'यदहस्त्वेव चन्द्रमा न दृश्येत' —इति च। इतरथा श्रुतीनामेकवाक्यतायाम् अपि, आचार्य्यस्य सूत्रद्वयं नोपपद्यते। न खलु सर्व्वत्र क्षयलक्षणायां कश्चिदपि विशेषः शक्यते दर्शयितुम्। वर्द्धमानायामपि चैवमनुपपत्तिः। सर्व्वत्र क्षयलक्षणायां खल्वनुपपत्तिर्वर्द्धमानायां परदिने श्राद्धकरणस्य। कस्मात्?। अमावस्याष्टमे यामे क्षयाभावात्। प्रत्यक्षश्रुतिविरोधेन च स्मार्त्तायाः श्रुतेरनुमानासम्भवात्।

यः पुनरेवं समाधानं ब्रूते,—'यदुक्तं यदहस्त्वेव'—इत्यनया स्मृत्या श्रुतौ लक्षणा वर्णना न सम्भवति, स्मृतिमपेक्ष्य श्रुतेर्बलवत्वात्'—इति। सोऽपि नातीव समीचीनम् आह। कुतः?। यतो भवेदेतदेवं नाम, यदि स्मृतिविरोधपरिहाराय श्रुतौ लक्षणा अभ्युपगम्येत। ननु तथा अभ्युपगम्यते। श्रुतिरियम् अनया स्मृत्या व्याख्यायते—इति कृत्वा तु खल्वियम् आशङ्का कदाचित् जायेत। न खल्वेवमियं श्रुत्या विरुध्यते; येन अप्रमाणं स्यात्। श्रुत्या विरुध्यमाना स्मृतिरप्रमाणम्—इति हि स्मर्त्तारः स्मरन्ति,

न श्रुतिव्याख्यानपरापि। तस्मात् यथा श्रुतिव्याख्यानपराणाम्—"अभ्युत्य कालभेदे दोषवचनात्"—इति, "चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः"—इति, "वचनात्त्वयथार्थमैन्द्री स्यात्"—इति चैवमादिकानाम् अक्षपाद-वादरायण-जैमिनीयानां सूत्राणां नाप्रामाण्यम्, एवमिहापि भवितुमुचितम्। कथमन्यथा कात्यायनवचनादाचार्य्यसूत्रेपि लक्षणा स्यात्, तस्य तदुपजीव्यत्वात्। अतएव भगवतो व्यासस्य स्मरणम्।

"वेदार्थो यः समाख्यातस्तत्राज्ञानं भवेद् यदि।
ऋषिभिर्निश्चिते तत्र का शङ्का स्यान्मणीषिणाम्"।

इति। न खल्वत्र, यदा चतुर्दशीयामम्,—इत्यत्र श्रुतिविरोधपरिहाराय तत्र लक्षणा इति नारायणोपाध्यायादिदिशा भ्रमितव्यम्। अदर्शनवत् क्षयस्यापि श्रौतत्वाविशेषात्। तस्मादस्मदुक्तमेव समाधानम् आदरणीयम्। क्षयस्तु कात्यायनेन दर्शितः।

"अष्टमांशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः।
अमावस्याष्टमांशे च ततः किल भवेदणुः"।

इति। 'ततः'—इति अमावस्याष्टमयामे क्षयाभावं दर्शयति। क्षयानन्तरम्—इति तस्यार्थः। अन्यथा तत्पदवैयर्थ्यात्—इति रामकृष्णोपाध्यायाः। अमावस्याष्टमांशे च—इति चस्त्वर्थः, व्यवस्थार्थको वा। अमावस्यायाः सप्तमम् अंशं यावत् क्षयः, अष्टमे च अंशे उत्पत्तिर्व्यवस्थाप्यते। तस्मात्—अणुकालेपि क्षयकाल एव—इत्यसङ्गतं वर्णनम्। यच्च—'ततः'—इत्यत्र, 'पुनर्'—इति पठितं

नारायणोपाध्यायेन। तदप्यनुचितम्। सर्व्वेष्वेव ग्रन्थेषु 'ततः'—इत्येव पाठस्य दर्शनात्। शूलपाणिप्रभृतिभिः प्रामाणिकतरैश्च तथैव पठितत्वात्। किं बहुना?। तन्मतम् अनुजानानोऽपि वाचस्पतिमिश्रः, 'ततः'—इत्येव पठति। तदस्य स्वमतरत्ता व्यग्रमानसस्य अभिनवपाठकल्पनां नाद्रियामहे। नापि 'पुनर्'—इति पाठ आञ्जस्येन सङ्गच्छते। कुतः?। उच्यते। पुनः किल भवेदणुः—इत्यस्य खल्वयमर्थः अवगम्यते;—अमावस्याष्टमांशे पुनरपि —(चतुर्दश्यष्टमयामवदेव) अणुर्भवेत्—इति। पुनः शब्दस्वरसात्। सोऽपि एवमेव व्याचष्टे। स खल्वयम् अर्थः, नातीव समञ्जसः। कस्मात्?। एवं खल्वणुपदस्य लक्षणा स्यात्। वाक्यार्थश्च नोपपद्यते। कथम्?। यदि तावदणुपदं ह्र्यणुकाभिप्रायं, तर्हि स्फुटम् एतस्य चतुर्दश्यन्तयामवैलक्षण्यम्। पुनः शब्दस्य खल्वेवं पीड्यते। अथ मतम्—चतुर्दश्यष्टमे यामे चन्द्रमसो यावन्तोऽवयवाः शिष्यन्ते, तदभिप्रायकम् अणुपदम्, तथाच यादृशमणुत्वं चतुर्दशीशेषयामे तादृशम् अत्रापि—इति। एवन्तर्हि अणुपदस्य लक्षणा स्यात्। न ह्यत्र लक्षणा कारणमस्ति। न चैवम् अपि वाक्यार्थ उपपद्यते। किं कारणम्?। चतुर्दश्यष्टमे यामे किल चन्द्रमास्तुर्यभागोनकलावशिष्टो भवति, अमावस्या सप्तमयामे च कृत्स्नं चीयते।

"अत्रेन्दुराद्ये प्रहरेऽवतिष्ठते
चतुर्थभागो न कलावशिष्टः"।

इति विशेषाभिधानस्वरसात्। चतुर्दश्यष्टमयामे तावत् यथावद्व-

स्थितस्य चन्द्रमसोऽवयवापगमादेवं वाक्यार्थः सङ्गच्छते। अमावस्याष्टमयामे तु नैवम्। नहि सप्तमयामे निरवशेषेण क्षीणस्य अणुमात्रावशेषस्य चन्द्रमसो जातुचिदपि अष्टमयामे अवयवापगमाच्चतुर्थभागोनकलावशिष्टता सम्भवति। अपि तु अवयवोपचयादेव—इत्यकामेनापि वाच्यम्। यथाच—उपचीयमानावयवस्य चन्द्रमसः चतुर्थभागोनकलावशेषः—इति न शक्यते वक्तुम्। कुतः?। अवशेषपदार्थासङ्गतेः। भिन्नौ खल्विमावर्थौ,—यस्यावस्थितस्य चन्द्रमसोऽवयवापगमाच्चतुर्थभागोनकलावशेषः, यच्चाणुमात्रावशेषस्यावयवोत्पत्त्या चतुर्थभागोनकलत्वम्,—इति धीमद्भिरवधेयम्। एतेन,—इदमपि वर्णनम् असङ्गतमेव;—'अक्रत्स्नचयस्तुरीयोनकलाऽवशिष्टता, सा च चतुर्दशीशेषयामे भवति, क्रत्स्नचयस्य सप्तमे अमावस्यायामे 'अष्टमे च पुनस्तुरीयोनकलावशेषः'—इति।

तस्मात् 'पुनः किल भवेदणुः'—इति पाठेपि पुनःशब्दः पश्चान्तरार्थो वर्णनीयः। तेन चयात् पश्चान्तरमिदमुच्यते,—अणुर्भवेत् उत्पद्यते,—इति वचनव्यक्तिरादरणीया। अतएव,—'अमावस्याष्टमांशे अणुर्भवति पुनरुत्पद्यते'—इति तत्त्वकारादिभिर्व्याख्यातम्। अतः,—इदमपि वर्णनम् अनादरणीयम्;—'अमावस्याष्टमयामे परमाणुमात्रं तिष्ठति, द्व्यणुकारम्भस्तु प्रतिपद्येव'—इति। भवेत्—इति प्रमादपाठः खल्वेवं स्यात्।

अपिच। एवमपि उत्पत्तिकाल एव अमावस्याष्टमांशः स्यात्। न क्षयकालः। कस्मात्?। असाधारणत्वात्। उत्पत्तिः खल्वष्टमांशे असाधारणी।

सा सूत्रेोपदिश्यते। न चयः। व्यपदेशाश्च असाधारणतयैव भवन्ति,—इत्यवोचाम। 'क्षीणे ददाति'—इत्येतस्य च असाधारण एव क्षयोऽर्थः। कुतः?। शीघ्रमुपस्थितेः। साधारणासाधारणयोरसाधारणमेव शीघ्रम् आगच्छति हृदयम्। आगच्छति चेत्, न युज्यते विलम्बकारणम् उत्स्रष्टुम्। अतएव,—"इष्टिपूर्व्वकमेवादः पौर्णमासं हविः"—इत्यग्निषोमीयः पुरोडाश एवोत्कृष्यते, न पुनरुपांश्वाजीयम् आज्यम् अपि अग्निषोमीयानग्निषोमीयसाधारणम्—इति सिद्धान्तः। अपिच। अमावस्यायाः चयस्य व्यभिचाराभावे, नजातुचिदपि,—'यदहस्त्वेव चन्द्रमा न दृश्येत तामसावस्याम्'—इति अमावस्यां चयेण व्यशेष्यत्। व्यशिषच्चाचार्य्यः,—तस्मादनुमिमीमहे;—व्यभिचरत्यमावस्याचयम्—इति।

इदम् इदानीं सन्दिह्यते। यदा पूर्व्वस्याम् अमावस्यायाम् उपवासः क्रियते, तदा परदिने पक्षादियागः किं पूर्व्वाह्ण एव अमावस्यायाम् अपि कर्त्तव्यः?—आहोस्विदपराह्णेपि प्रतिपद्येव?—इति। पूर्व्वाह्ण एव दर्शेपि,—इति तावत् प्रतिपद्यामहे। कुतः?। "अथ पूर्व्वाह्ण एव प्रातराहुतिं हुत्वाऽग्रेणाग्निं परिक्रम्य"—इति वच्यमाणसूत्रात्। पूर्व्वाह्ण एव—इति—सूचयन्नाचार्य्योऽन्तरेणापि प्रतिपदं पूर्व्वाह्ण एव यागं दर्शयति—अमावस्यायाम् अपि। अन्यथा, 'प्रागावर्त्तनादह्नः'—इति सूचितत्वादनुवादापत्तेः। स खलु अप्रवृत्तिविशेषकरोऽनर्थकः—इत्यवोचाम। अपराह्णेपि प्रतिपद्येव,—इति च प्रतिपद्यामहे।

कस्मात्?। "पक्षान्ता उपवस्तव्याः पक्षादयोऽभियष्टव्याः"—इति सूत्रणात्। सोयं तुल्यवद्विकल्पः,—इति भट्टनारायणोपाध्यायाः। तदेतत् कात्यायनः स्पष्टयाञ्चकार।

"पक्षादावेव कुर्व्वीत सदा पक्षादिकं चरुम्।
पूर्व्वाह्ण एव कुर्व्वीत विद्धेऽप्यन्ये मनीषिणः"।

इति। सदापदमुभाभ्याम् अन्वेति। कथन्नाम?। सदा, सर्व्वस्मिन्नेव पक्षादौ विद्धेपि, आपराह्णिकेपि वा,—इत्यर्थः। सदा, सर्व्वस्मिन्नेव पूर्व्वाह्णे, सदर्शेपि,—इत्यर्थः। तदिदमुक्तं,—'विद्धेप्यन्ये मनीषिणः'—इति। अत्रान्यग्रहणं क्रियते,—अन्येषामाचार्य्याणाम् इदं मतम्—(न पुनरस्मत् कल्पितम्)—इत्यन्यानाचार्य्यान् पूजयितुं, नात्मीयं मतं पर्य्युदसितुम्। 'अन्येपि मनीषिणः'—इति वा वचनव्यक्तिरादरणीया। 'सदा'—पदाद्वा नित्यस्यैव पक्षादिचरोरयं कालविकल्पः,—इत्ययम् अर्थोऽवगन्तव्यः। तदत्र, 'पक्षादावेव कुर्व्वीत'—इति, 'पूर्व्वाह्ण एव कुर्व्वीत'—इति च निरपेक्षसमाम्नानात्, "खादिरे बध्नाति, पालाशे बध्नाति, रौहितके बध्नाति"—इति, "यवैर्यजेत, व्रीहिभिर्यजेत"—इति चैवम् आदिवद्विकल्प एव स्फुटम् अवगम्यते। स्वेन स्वेन पदसमूहेन खल्वत्र वाक्यद्वयं पृथक् पृथगेव परिपूर्णं, तस्माद्विस्पष्टमर्थद्वयं, विभागे च न साकाङ्क्षम्—इति; "हस्तौ अवनेनिक्ते, उपलराजिं स्तृणाति"—इत्येतयोरिव नानयोरपि परस्परं सम्बन्धः। तथाचोक्तम्। "वाक्यानाञ्च समाप्तत्वात्"—इति, "समेषु वाक्यभेदः स्यात्"—इति, "एकार्थास्तु विकल्पेरन्"—इति च। 'यस्मिंस्तु सा-

धनोपकारे कार्य्ये, तस्मिन्नेव उपकारे अन्यत् साधनं विधीयते, तत्र विकल्पः'—इति च शास्त्रतात्पर्य्यविदां समयः। अत्र खल्वेकस्मिन् होमे साधनतया द्वौ कालौ विहितौ,—पश्चादावेव—इति, पूर्व्वाह्ण एव,—इति च।

"स्मृतिशास्त्रे विकल्पस्तु आकाङ्क्षापूरणे सति"।

इति च स्मरणम्। एवकारद्वयेन च प्रत्येकमवधारयन्नेकैकशः करणम् उपदिशति। कुर्व्वीत,—इति च क्रियाभ्यासस्तावन्मात्रे करणार्थः। इतरथा इदम् अनर्थकं स्यात्। तदुक्तम्। "एकस्यैवं पुनः श्रुतिरविशेषादनर्थकं हि स्यात्"—इति। यत्र चोभयमेव सम्पद्यते, तत्राप्यन्यतरोपादानम् अवर्ज्जनीयमेव। एकैकशः अनुगुणानाम् उदगयनादीनाम् इव वा, समुदितोपलब्धौ महान् अभ्युदयोवाच्यः।

"स्रुग्भ्यां द्वाभ्यां तिलव्रीहि-यव-गोधूम-कल्पितम्।
हविः प्रजुहुयात्सद्यं वासरानेकविंशतिम्"।

इत्यस्याञ्च स्मृतौ,—सतिसम्भवे तिलादीनां समुच्चयः, असति विकल्पः,—इति विश्वेश्वरभट्टैर्व्याख्यातम्। तद्वदत्रापि वा, सम्भवासम्भवाभ्यां समुच्चयविकल्पौ आदरणीयौ। अतएव,—"यत् पितृभ्यः पूर्व्वेद्युः करोति, पितृभ्यस्तेतत् यज्ञं निष्क्रीय यज्ञमानो देवेभ्यः प्रतनुते"—इति, "पूर्व्वेद्युरग्निं गृह्णाति उत्तरमहर्देवतां यजते"—इति चैवमाद्याः श्रुतयोऽनुगृह्यन्ते। अन्यथा, उपवासश्राद्धयोरेकदिनत्वनियमात्; पूर्व्वस्याममावस्यायां तदवधारणात्; उत्तरदिने यागम् अकृत्वा, तत्परदिने प्रतिपदि तत्करणे, श्रुतय

उपरुध्येरन्। न चाहः पदं तिथिपरम्—इति तृतीयेऽपि दिने प्रति-पदियागे श्रुतीनाम् उपरोधो नास्ति,—इति वाच्यं, पावनस्यैव अङ्गोऽवगतेः। 'यज्ञादौ पावनो मतः' इति स्मरणात्। आचार्य्य स्याप्यस्मिन्नर्थे स्वरसोऽवगम्यते। कथम्?। 'यदहस्त्वेव'—इत्येव-मादिभिः सूत्रैरुपवासक लं सूत्रयित्वा, 'अथ यदहरुपवसथो भव-ति'—इत्यादिभिः प्रातरुपवसथम् अभिधाय, 'अथापराह्ण एव'—इत्यादिभिस्तस्मिन्नेव दिने दम्पत्योर्भोजनमुक्त्वा, 'तौ खलु जाग्र-त्मिश्रावेव'—इत्यादिना तत्रैव जागरणं विधाय, 'अथ पूर्वाह्ण एव प्रातराहुतिं हुत्वा' इत्यनेन,—अथानन्तरदिने प्रातराहु-तिहोमानन्तरम् एव यागस्य सूत्रणात् पूर्वापरपावनदिनत्वम् एव उपवासपर्वादियागयोः पर्य्यवस्यति। 'पूर्वेद्युः पितृभ्यो निष्क्रीय प्रातर्देवेभ्यः प्रतनुते'—इतीयञ्च श्रुतिः पावनाभि-प्रायैव स्फुटम् अवगम्यते। कुतः?। प्रातर्—इति वचनात्। अत्र प्रातरिति वचनाच्च प्रातरेव यागः प्रतिपद्भावेऽपि,—इति प्रतीयते।

नापि तृतीयदिने यागः कर्त्तुम् उचितः। तत्र हि द्वितीया विद्धतया प्रतिपदः, चन्द्रमसो दर्शनप्रसङ्गः। स खल्वनिष्ट एव। तथाच गृह्यान्तरम्।

"यजनीयेऽह्निसोमश्चेदारुण्यां दिशि दृश्यते।
तत्र व्याहृतिभिर्हुत्वा दण्डं दद्यात् द्विजातये"।

इति। "एषा वैमृधानामेष्टिः"—इति च ब्राह्मणम्।

वर्द्धमानायां पुनर् अनन्यगतेर्व्वचनात् नैष दोषः। तदिद-मुक्तं,—'विद्धेष्यन्ये'—इति।

"सन्धिश्चेदपराह्णे स्यात् यागः प्रातः परेऽहनि।
कुर्व्वाणः प्रतिपद्भागे तुरीयेपि न दुष्यति"।

इति च गृह्यपरिभाषादौ स्मृत्यन्तरम्। अत्र 'पादः प्रातः'—इति केनचित् पठितम्। तदनाकरम्।

न चाहुः पदस्य तिथिपरतायाम् अपि नियमेन पूर्व्वापरदि-नत्वम् उपपद्यते श्राद्धपचादियागयोः। चतुर्दश्याम् अपि श्राद्ध-विधानात्। न खल्वेतदन्यत्र इयं श्रुतिरित्यत्र किञ्चित् प्रमाणम् अस्ति। 'प्रतिपद्युपवसन् यजेतापरेद्युः'—इत्यस्याम् अपि श्रुतौ, प्रतिपद्युपवसन्—इति श्रूयते, न प्रतिपदि यजेत—इति। श्रुतिः खल्वेवम् अत्यन्तम् उत्सृष्टा भवति। न च वाक्यानुरोधात् श्रुतिरुत्स्रष्टुं युज्यते! "यदर्थस्याभिधानं शब्दस्य श्रवणमात्रादे-वावगम्यते, स श्रुत्याऽवगम्यते"—इति हि पदवाक्यप्रमाणकुश-ला मन्यन्ते। शब्दश्रवणमात्राच्चायमर्थोऽवगम्यते,—प्रतिपद्युपवस-न्निति। अन्यस्तु—प्रतिपदि यजेत,—इति पुरुषबुद्धिकल्पितः। यथा खल्वेकस्माद्वाक्यादाख्यातपदम् अन्यस्माच्च नाम पदं गृहीत्वा यो वाक्यार्थः सम्पद्यते पुरुषकल्पनामूलः, तादृशो ह्यय-मर्थो भवति,—अपरेद्युः प्रतिपदि यजेत,—इति। तस्मादयुक्तः स आश्रयितुम्। तथा चोक्तम्। "धर्म्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्"—इति। अतएव,—'द्वे ह्वै पौर्णमास्यौ, द्वे अमावस्ये'—इति पौर्णमास्यमावस्ययोर्द्धित्वमुच्यते। तदनेन प्रतिपदोऽमाव-

स्यात्वं पौर्णमासीत्वञ्चातिदिश्यते,—इति प्रतिपद्युपवास एव अनया श्रुत्या विधीयते,—इति प्रतिपद्यामहे। नाप्यपि धर्मातिदेशस्य सप्तमाध्याये सिद्धान्तितत्वात्। अथ मतं,—प्रतिपदि यागेपि, अमावस्यायां यजेत, पौर्णमास्याञ्च,—इत्युपपत्तये तस्याः पौर्णमास्यादित्वम् अतिदिश्यते?। तर्हि अमावस्यायाम् अपि यागोऽनेनैव नयेन अवगम्यते,—इत्यस्मत्पक्ष एवानुगृह्यते।

स खल्वयं प्रतिपद्युपवासोऽन्येषामनुमतो नास्माकम्,—इति आचार्य्येणैव उक्तम्,—'उत्तरामित्येके'—इति। अतएव, एकेषाम् अनुमताम् उत्तरां दर्शयितुं तत्रैव सूत्रे, 'प्रतिपद्युवसन्'—इतीमां श्रुतिं तत्रभवान् भट्टनारायण उदाजहार। अपिच। परेषाम एव एषा श्रुतिर्नास्माकम्। रौरुकीयाः खल्वेवम् आमनन्ति, न अस्मच्छाखिनः। तस्मादिमाम् अवष्टभ्य नास्मच्छास्त्रम् अन्यथयितुम् उचितम्।

बह्वीनां वा श्रुतीनामनुरोधात् वरम् इयमेवैका वर्द्धमानाभिप्राया वर्णयितव्या। न खल्वेकस्या अनुरोधात् बह्व्य उपरोद्धुमुचिताः। तस्मान्न किञ्चिदेतत्।

"पूर्वाह्णे मध्यमेवापि यदि पर्व समाप्यते।
तदोपवासः पूर्वेद्युस्तदहर्याग इष्यते।
अपराह्णेथवा रात्रौ यदि पर्व समाप्यते।
उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते"।

इति च स्मृतिर्मध्यमेपि भागे पर्वसमाप्तौ तद्दिने यागमभिदधाना अस्मदुक्तमेव अर्थम् अनुगृह्णाति। न चात्रान्यागतिः सम्भ-

वति, मध्यमपर्य्यन्तपर्व्वसमाप्तावपि पूर्व्वेद्युरेवोपवासस्यावश्यम्भावात् तदत्र पूर्व्ववाक्यं क्षीणाभिप्रायम्, उत्तरवाक्यञ्च वर्द्धमानाभिप्रायं प्रत्येतव्यम्। यदपि—

"आवर्त्तने यदा सन्धिस्ततः पूर्व्वमथापि वा।

तस्मिन्नहनियष्टव्यं परतश्चेत् परेऽहनि"।

इति स्मरणम्। तत्र, आवर्त्तनम् अह्नो मध्यभागः,—इति तिष्याभट्टोक्तमादरणीयम्। आवर्त्यते यत्र भागे, तदावर्त्तनम्,—इति व्युत्पत्तेः सम्भवात् वचनान्तरसंवादाच्च। न ह्यावर्त्तनपर्य्यन्ते—इत्यस्यां वचनव्यक्तौ किञ्चित् कारणम् अस्ति। एकत्रैव वचने,—आवर्त्तने, ततः पूर्व्वं वा,—इत्युपादानाच्च नायमर्थः शक्यते वक्तुम्। तस्मादस्या अपि स्मृतेः पूर्व्वोक्तस्मृतिसमानविषयतैव अवगन्तव्या। वचनस्य यथा श्रुतार्थपरतायाम् अपि, आवर्त्तनकालेपि सन्धौ तदहर्यागम् उपदिशन्ती स्मृतिरस्मन्मतम् एव अनुगृह्णातीति ध्येयम्। तदत्रापि यथासम्भवं क्षीणा वर्द्धमानाभिप्रायता वर्णनीया। न हि प्रहरद्वयादुपरि पर्व्वसमापनमात्रे, तदहरिष्टिरुपक्रमितुं शक्यते, येन परेऽहनि साक्रियेत।

साधारणाश्च खल्वेवमाद्याः स्मृतयः, असाधारणवचनानामनुपरोधेन नेतव्याः।

पर्व्वणः सन्धिश्च यदि पर्व्वणस्तुरीयो भागः, तदा व्यक्तम् अस्मद्दर्शनैव आभिरुपदिश्यते—इत्यनुसन्धेयम्।

वाचस्पतिमिश्रास्तु,—"हरिहरपद्धत्यादौ तु विशेषः। तथा

हि, श्राद्धेष्टोस्तावदव्यवधानेन पूर्वापराह्णानुष्ठेयत्वं,—'पूर्वेद्युः पितृभ्यो निष्क्रीय प्रातर्देवेभ्यः प्रतनुते'—इति श्रुतेः। लोगाक्षिणापि,—

'पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते।
उपोष्य तत्र पूर्वेद्युस्तदहर्याग इष्यते।
अपराह्णेय मायाह्ने यदि पर्व समाप्यते।
उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते'।

समाप्यते प्राप्यते। पर्व अमावस्या। उपोष्य औपवसथ्यं विधाय। तेनापराह्णगामिन्याममावस्यायां श्राद्धम् औपवसथ्यञ्च विधाय तदुत्तराह्णे मध्याह्नाभ्यन्तरे इष्टिः,—इति वर्त्तुलार्थः। एवञ्च वर्द्धमानावत् सर्वत्रैवोत्तरापराह्ण एव साग्निना श्राद्धं कार्य्यम्"—इति परेषां विशेषमुपन्यस्य,—"एतन्मते चीयमाणापदस्य उत्तरापराह्णाव्याप्तित्वमर्थः। खर्वितापदस्यापि स्तम्भिताया उत्तरापराह्णव्यापने प्रथमायाः प्रतिषेधोऽर्थः, तदव्यापने तु विधिरिति व्यवस्थितविकल्पः"—इति वर्णयाम्बभूवुः। तदत्र भवन्तो भूमिदेवाः प्रमाणम्। परमत्र मते व्यक्तम् उत्तरदिने अमावस्यायाम् अपि इष्टिरवगम्यते। ये तु—चीणादौ पूर्वस्याममावस्यायां श्राद्धम्, इष्टिञ्च पूर्वाह्णे प्रतिपद्येव वदन्ति, तेषाम् उपवासतृतीयदिवसे वा यागः स्यात्। श्राद्धोपवासयोः समान दिनत्वं वा न स्यात्। श्रुतीनां स्मृतीनाञ्च बह्वीनाम् उपरोधोऽवर्जनीयः स्यात्। तदत्र तएवप्रष्टव्याः॥ ८॥ ०॥

यस्माच्चतुर्दश्यामपि चन्द्रमाः चीयते, तस्मात्—

## दृश्यमानेऽप्येकदागताध्वा भवतीति ॥ ९ ॥

दृश्यमानेऽपि चन्द्रे। तदिदं चतुर्दशीमभिप्रेत्य वचनम्। अस्यापि खल्वमावस्याविषयत्वे पूर्वेणैवसूत्रेण शिनीवाल्याविधानादर्थतएव तत्र प्रातश्चन्द्रमसोदर्शनस्य प्राप्तत्वादनुवादापत्तेः। एकदा—एकस्मिन् काले। यदा खलु विप्रकृष्टायाम् अमावस्यायाम् अपेक्ष्यमाणायां सन्ध्यासमीपमुहूर्त्तं स्यात्, तदैव, न सर्वदा—इत्यर्थः। 'गताध्वा' गतः प्राप्तः देवपितृलोक प्रापणाय अध्वा अनया, सेयं गताध्वा प्रशस्ता, 'भवति' चतुर्दश्यपि। तदाह कात्यायनः।

"यच्चोक्तं दृश्यमानेऽपि तच्चतुर्दश्यपेक्षया।

अमावस्यां प्रतीक्षेत तदन्तेवापि निर्वपेत्"।

इति। अतएव—

"दर्शस्तत्र निमित्तं वै कालश्चन्द्रक्षयात्मकः"।

इति क्षीणामावस्याविषयं स्मरणम्। 'इतिः' अमावस्या व्यवस्थोपसंहारार्थः ॥ ९ ॥

अवसिता अमावस्याकथा। अपर्य्यवसिताम् इदानीं पौर्णमासीकथाम् अनुवर्त्तामहे।—

## त्रयः पौर्णमासी काला भवन्ति; सन्ध्या वाऽस्तमितोदितावोच्चैर्वा ॥ १० ॥

त्रयः त्रिसङ्ख्याकाः, पौर्णमास्या एव कालाः पौर्णमासी कालाः, भवन्ति। ते खल्विमे विभज्य प्रदर्श्यन्ते। सन्ध्या वा। सन्ध्या

तावदूक्तलक्षणा। सा वा। अस्तमितोदिता वा। अस्तमिते उदितो यस्यां,—यस्यां किल पौर्णमास्याम् अस्तमिते सवितरि पूर्णश्चन्द्रमाः समुदेति, सेयम् अस्तमितोदिता। सा वा। उच्चैर्वा। यस्याम् उच्चैः स्थिते,—कलाहीने समुदिते चन्द्रमसि, पश्चात् सवितुरस्तमयः स्यात्, सेयम् उच्चैः पौर्णमासीत्युच्यते। सा वा। इयं किल चतुर्दशी मिश्रा भवति। पुराणेपि इत्थम् एव पौर्णमासीप्रकाराः व्युत्पादिताः। तथाचोक्तम्।

"राका चानुमती चैव द्विविधा पूर्णिमा मता।
पूर्व्वोदितकलाहीने पौर्णमास्या निशाकरे।
पूर्णिमानुमती ज्ञेया पश्चास्तमितभास्करे।
यस्मात्तामनुमन्यन्ते देवताः पितृभिः सह।
तस्मादनुमती नाम पूर्णिमा प्रथमा स्मृता।
यदा चास्तमिते सूर्य्ये पूर्णचन्द्रस्य चोद्गमः।
युगपत्, सोत्तरा रागात्तदानुमतिपूर्णिमा।
राकान्तामनुमन्यन्ते देवताः पितृभिः सह।
रञ्जनाच्चैव चन्द्रस्य राकेति कवयोऽब्रुवन्"।

इति। पश्चास्त—इति पृषोदरादित्वात् साधुः। कलाहीने निशाकरे पूर्व्वमुदिते सति, यत्र भास्करोऽस्तमेति। सेयम् अनुमती नाम पूर्णिमोच्यते। इयमेव, 'उच्चैः'—इति सूचिता। अस्तमिते सूर्य्ये पूर्णचन्द्रस्योद्गमः, युगपच्च सूर्य्यस्यास्तमयः पूर्णचन्द्रस्योद्गमश्च,—इति द्वयी राका भवति। अत्राद्या,—अस्तमितोदिता, द्वितीया सन्ध्येत्यस्मदीयं दर्शनम्। एतस्मात् लिङ्गात्,

—सन्ध्या पौर्णमासी अपि, अस्तमयसन्ध्यासम्बन्धिनी गृह्यते, न पुनरुदयसन्ध्यासम्बन्धिन्यपि,—इति युक्तम्। सेयम् अभिद्यमाने-ऽप्यर्थे भिन्नयोराचार्य्ययोर्विभिन्नारीतिरित्यनवद्यम्॥ १० ॥

उच्चैः पौर्णमासी तावच्चतुर्दशी मिश्रा भवति, सेयम् उभयं-दिनगामिनी, कतरा पुनरत्रोपेोष्या ?। तत्राह।—

## अथ यदहः पूर्णो भवति ॥ ११ ॥

अथेत्यनन्तरायाम् उच्चैः पौर्णमास्याम् एष विधिरिति दर्शयति। 'अथशब्दः सूत्रभेदप्रज्ञापनार्थः। अन्यथा पूर्व्वेण सूत्रेणास्यैकसूत्रता स्यात्;—उच्चैर्वा यदहः पूर्णो भवति'—इत्येके वर्णयन्ति। यदहर्यस्मिन्नहनि पूर्णः सकलकलोपचयादखण्डमण्डलश्चन्द्रमाः भवति, ताम् उपवसेत्—इत्यर्थः ॥ ११ ॥

कदा पुनश्चन्द्रमाः सकलकलोपचयादखण्डमण्डलो भवति ?, कः खलु ज्ञानोपायोऽस्यार्थस्य ?,—इत्यस्याम् आकाङ्क्षायाम् उच्यते,—

## पृथगेवैतस्य ज्ञानस्याध्यायो भवति, अधीयीत वा तद्विद्भ्यो वा पर्व्वागमयेत ॥ १२ ॥

पृथगन्य एव, एतस्य पूर्व्वविवक्षितस्य ज्ञानस्य, उपायभूतोऽध्यायः अधीयते—इत्यध्यायो ग्रन्थो भवति। तञ्च ग्रन्थम्, अधीयीत वा—स्वयं वा पठेत्, तत् ज्ञानं ये विदन्ति,—त इमे तद्विदः ज्योतिः-शास्त्रविद उच्यन्ते, तेभ्यः सकाशात् वा पर्व्व दर्शपौर्णमासाख्यम् आगमयेत सम्यग् जानीयात्। कस्मिन् काले चन्द्रमाः चीयते ?,

—तदपि ज्ञानं ज्योतिःशास्त्र सापेक्षमेव,—इत्यभिप्रायः। तत्र क्षयकालः कात्यायनेनैव ज्योतिःशास्त्रादाकृष्य दर्शितः। पूर्णता कालः परमस्माभिर्वक्ष्यमवशिष्यते। पञ्चदश्यां पञ्चदशे किल मुहूर्त्ते चन्द्रमाः सकलकलोपचयादखण्डमण्डलो भवति,—इति ज्योतिःशास्त्रविदः कथयन्ति। श्लोकमपि उदाहरन्ति।

"पञ्चदश्यां पञ्चदशे मुहूर्त्ते चन्द्रमण्डलम्।

तथा भवति, तदक्षं सदा तव, नृपोत्तम!"।

इति। केनचित् ज्योतिः शास्त्र कुशलेन कश्चिद्राजा खल्वेवमुपश्लोकितः।

"राकामध्यगतश्चन्द्रः पूर्ण इत्यभिधीयते"।

इति च स्मरन्ति। कालवशात् पुनरेतस्याप्यन्यथात्वं जातम्। युगपरिवृत्त्या किलकालभेदो गणितागतवस्तुषु भवति,—इति होरागमादिषु व्युत्पादितम्। अतएव, ततः पराचीनेन ज्योतिः शास्त्रविदा भास्कराचार्य्येण सिद्धान्तशिरोमणावुक्तम्।

"कक्षाचतुर्थस्तरणेर्हिचन्द्रः

कर्णान्तरे तिर्य्यगितोऽयतोऽज्ञात्।

पादोनषट्काष्ट लवांतरेऽतो

दलं नृदृश्यस्य दलस्य शुक्लम्"।

इति ॥ १२ ॥ ० ॥

**अथ यदहरुपवसथो भवति, तदहः पूर्व्वाह्ण एव प्रातराहुतिं हुत्वैतदग्नेः स्थण्डिलं गोमयेन समन्तं पर्य्युपलिम्पति ॥ १३ ॥**

अथेति पूर्व्वप्रकृतार्थम्। पूर्व्वं प्रकृते यस्मिन्नहनि उपवसथो भवति, तदहस्तस्मिन्नहनि प्रातराहुतिं हुत्वा, पूर्व्वाह्ण एव, अग्नेरे तदधिकृतं स्थण्डिलम्, एतस्य अधिकृतस्याग्नेर्व्वा स्थण्डिलम् अग्न्यगारम्, गोमयेन समन्तं चतुरस्रं परि सर्वतोभावेनोपलिम्पति। एतदिति रहवती निरासार्थम्। तत् खल्वस्य द्वितीयम् अग्न्यागारम्। स्थण्डिलग्रहणं लौहादिभाण्डस्थे अग्नौ होम निषेधार्थम्। पूर्वाह्ण एव उपलिम्पति,—इति सम्बन्धात् एव काराच्च पूर्वाह्ण एव उपवसथं दर्शयति चतुर्दश्याम् अपि। अन्यथा, प्रागावर्त्तनादिति सिद्धत्वादनुवादापत्तेः। अतएव पूर्वाह्ण एव प्रातराहुतिं हुत्वा,—इत्यपि न वर्ण्यते। सिद्धायाम् अपि प्रातराहुतौ, प्रातराहुतिं हुत्वा,—इति वचनम्, औपवसथिके अहनि स्वयं होमकरणसूचनार्थम्। कथन्नाम?। हुत्वा पर्य्युपलिप्तव्यम्—इति पर्य्युपलेपनहोमयोर्वेकः कर्त्ताऽवगम्यते। किमर्थं पुनरत्र स्वयं करणम् उच्यते?। फल विशेषार्थम्। अत्र हि स्वयं होमे कृते सर्वदैव स्वयं कृतो भवति। भवति चात्र ब्राह्मणम्। "एते ह वै रात्रौ सर्वारात्रयः समवयन्ति; या आपूर्य्यमाणपक्षस्य रात्रयः त: सर्वाः पौर्णमासीं समवयन्ति, या अपक्षीयमाणपक्षस्य रात्रयस्ताः सर्वा अमावस्यां समवयन्ति, स यो ह वै विद्वान् स्वयमुपवसथे जुहोति, सर्वदाहैवास्य स्वयं हुतं भवति"—इति॥ १३ ॥ ० ॥

**अथेध्मानुपकल्पयते; खादिरान् वा, पालाशान् वा ॥ १४ ॥**

अथानन्तरम्, होमार्थम् इध्मान् समिधः,—

"प्रादेशद्वयमिध्मस्य प्रमाणं परिकीर्त्तितम्।
एवम्बिधाःस्युरेवेह समिधः सर्व्वकर्म्मसु।
समिधोऽष्टादशेध्मस्य प्रवदन्ति मणीषिणः।
दर्शे च पौर्णमासे च क्रियास्वन्यासु विंशतिम्"।

इति कर्म्मप्रदीपोक्तलक्षणसंख्याकाः। उपकल्पयते, उप समीपे अग्नेरित्यर्थात्, कल्पयते आसादयतीत्यर्थः। इध्मान् विशिनष्टि,—खादिरान् खदिरमयान् वा, पालाशान् पलाशमयान् वा। खदिरपलाशौ प्रसिद्धौ। वा शब्दद्वयन्तुल्यवद्विकल्पार्थम्। ते खल्विमे इध्माः यत्र न कर्त्तव्याः, तदप्याह कर्म्मप्रदीप एव।

"अङ्ग होम समित्तन्त्र सोष्यन्त्याख्येषु कर्म्मसु।
येषाञ्चैतदुपर्य्युक्तं तेषु तत् सदृशेषु च।
अक्ष भङ्गादि विपदि जलहोमादि कर्म्मणि।
सोमाहुतिषु सर्वासु नैतेष्विध्मो विधीयते"।

इति। अस्यायमर्थः। विवाहादि कर्म्माङ्गभूता ये होमास्ते अङ्गहोमाः—इत्युच्यन्ते। येऽपि समिद्धविष्कास्तन्त्रहोमाः। (द्विविधाः किल होमाः याज्ञिकसम्प्रदाय प्रसिद्धाः,—क्षिप्रहोमास्तन्त्रहोमाश्च,—इति। तत्र ये क्षिप्रं हूयन्ते,—तदिमे सायं प्रातर्होमादयोऽनङ्गविस्तारयुक्ताः क्षिप्रहोमा उच्यन्ते। ये तु परिसमूहन बर्हिराद्यङ्गविस्तारयुक्ताः, तदिमे तन्त्रस्येतिकर्त्तव्यताया यथोक्तायाः संबन्धात् तन्त्रहोमा उच्यन्ते।) यस्य आसन्न प्रसवायाः सुखप्रसवार्थं सोष्यन्तीहोमः। येषाञ्च सायं प्रातर्वैश्वदेव

होमानाम्, एतत् इध्माख्यं द्रव्यम्, उपरि पश्चात, उक्तम् आम्नातम्। तेष्वतेषु तत् सदृशेष्वन्येषु च चिप्रहोमेषु। यः किल ऊढायां यानेन पत्या नीयमानायाम् अचभङ्ग नद्युत्तिमोचादि विपदि नैमित्तिको होमो विहितः। यश्च,—"पौर्णमास्यां रात्रावविदासिनि ह्रदे नाभिमात्रमवगाह्याचततण्डुलान्गंन्धेष्वास्येन जुहुयात् स्वाहेत्युदके"—इति काम्योजलहोमः, आदिपदात् यश्च पदवर्त्महोमः, याश्च सोमरसाहुतयः, तेषु एतेषु सर्वेषु होमेषु इध्मो न विधीयते,—इति॥ १४ ॥ ० ॥

खादिरपालाशालाभे,—विभीतक, तिल्वक, वाधक, नीव, निम्ब, राजवृक्ष, शाल्मल्य, ऽरलु, दधित्थ, कोविदार, श्लेष्मातक,—वर्ज्जं सर्ववनस्पतीनामिध्मो यथार्थं स्यात्॥ १५ ॥

खादिरपालाशयोरलाभे असम्भवे, विभीतकादिवर्ज्जम् अन्येषां सर्वेषां वनस्पतीनाम् अश्वत्थप्रभृतीनाम्, इध्मो, यथार्थम्, अर्थं प्रयोजनम् अनतिक्रम्य, स्यात्—आसादनीयो भवेत्। तदलाभे,—इत्यनभिधाय, खादिरपालाशालाभे,—इति जात्या द्रव्यमुपलचयनाचार्य्यस्तयोरलाभ एव सर्वं वनस्पतीनाम् उपादानं, न तु, तत् प्रति निष्ठारण्यभावे,—इति दर्शयति। विभीतकादयो वृचजाति विशेषाः॥ १५ ॥ ० ॥

विशाखानि प्रति लूनाः कुशाबर्हिः ॥ १६ ॥

विश्लिष्टाः पृथग्भूताः शाखाः पत्राणि यस्मात् स्थानात्, तानि विशाखानि—कुश स्कन्ध प्रदेशा उच्यन्ते। तानि प्रति लक्षीकृत्य लूनाश्छिन्नाः कुशाः, बर्हिः—बर्हिः स्तरणार्थमासादयितव्याः—इत्यर्थः। बर्हिः संज्ञकाः,—इति वा व्याख्येयम्। तदत्र विधेय प्राधान्य विवक्षयैकवचनम् द्रष्टव्यम्। 'बर्हिषः'—इति बहुवचनान्तम् एव शूलपाण्युपाध्यायः पठति। तदा व्यक्त एवार्थः॥ १६ ॥ ० ॥

उपमूल लूनाः पितृभ्यः ॥ १७ ॥

उपमूले मूल समीपदेशे लूनाः कुशाः, पितृभ्यः पितृकर्म्मार्थम् आसादयितव्याः,—इति प्रसङ्गादिहोच्यते। ते खल्विमे पित्रर्थमासादयितव्याः कुशाः, मूलसमीपेऽप्यधोभाग एव लवितव्याः, नोर्द्धभागे। कस्मात्?।

"हरितायज्ञियादर्भाः पीतकाः पाकयज्ञियाः।
समूलाः पितृदेवत्याः कल्माषा वैश्वदेविकाः"।

इति कर्म्मप्रदीपे समूलत्वोपदेशात्। एके पुनरुपमूल लूनानां समूलत्वासम्भवं मन्यमानाः, पिण्डास्तरण कुशानां च्छिन्नमूलत्व विधायक कात्यायनसूत्रं पश्यन्तोभ्रान्ताः सूत्रमिदं पिण्डास्तरण कुशपरम्—इति प्रलपन्ति। तदसङ्गतम्! मूलादधस्ताल्लवन एव समूलत्व उपमूललूनत्वयोः सम्भवात्।

'गोकर्ण दीर्घाश्च कुशाः सकृच्छिन्नाः समूलकाः"।

इति तद्धृतवचनान्तर एव छिन्नानाम् अपि कुशानां समूलत्व-दर्शनाच्च। कात्यायनस्तु न अस्मत्सूत्रकारः,—इति तत् सूत्रोप-दर्शनम् अत्रानुचितम् ॥ १७ ॥ ० ॥

**तेषामलाभे,—शूकतृण, शर, शीर्य्य, वल्वज, मुतव, नल, शुण्ठ,—वर्ज्जं सर्व्वतृणानि ॥ १८ ॥**

तेषां यथोपदिष्टानां कुशानाम् अलाभे, शूकतृणादिवर्ज्जं सर्व्व-तृणानि, वर्हिस्तरणार्थमामादयितव्यानि, वर्हिः संज्ञकानि वा भवन्ति। तैः कुशार्थः कर्त्तव्यः—इत्यर्थः। शूकतृणं, शूकयुतं तृणम्। शूकानि फलपुष्पमञ्जर्य्यः। शरादयः, तृणजातिविशेषाः। यत् पुनः पुराणवचनम्—

"कुशाः काशाः वल्वजाश्च तथाऽन्ये तीक्ष्णरोमशाः।
मौञ्जाश्च शाद्वलश्चैव षड्दर्भाः परिकीर्त्तिताः"।

इति। तत् कौथुमादि व्यतिरिक्तविषयम्। 'तीक्ष्णरोमशाः,—इति वल्वजानां विशेषणं, तेनाच तद्व्यतिरिक्त वल्वजानां निषेधो-बोद्धव्यः'—इति नारायणोपाध्यायप्रभृतयः। तदसङ्गतम्। साधारण वचन व्यपाश्रयेण स्वशास्त्रसङ्कोचस्यान्याय्यत्वात्। 'तथाऽन्ये'—इति वल्वजानां भेदेनैव तीक्ष्णरोमशानामवगमाच्च। अन्यथा, 'तथाऽन्ये'—इति प्रमादपाठः स्यात्। षट्सङ्ख्याविरोधाच्च। षट्-सङ्ख्या कीर्त्तनं खल्वेवं विरुध्यते। तीक्ष्णरोमशत्वस्य वल्वज विशे-षणत्वे पञ्चानाम् एवोपलम्भात्। न च—

"पितृतीर्थेन देयाः स्युर्दूर्व्वा श्यामाकमेव च"।

इति तत् पूर्ववचनोपात्ताभ्यां दूर्वाश्यामाकाभ्यां सङ्ख्यापूरणम् इति वाच्यं, सप्तसङ्ख्यापत्तेः। तस्मात्, ततो भेदेनैव इह षस्णामुपादानम्, षस्णाम् एव वा मध्ये दूर्वाश्यामाकयोरितरापेक्षया उपादेयत्वार्थं तयोः पूर्वम् प्रातिस्विकतया कीर्त्तनम्,—इति वर्णनीयम्। ते खल्वत्र शाद्वलतयैवलभ्येते। यच्च,—शाद्वलम्—इति दूर्वादिषड्-विशेषणं पृथक्त्वे तु सप्तत्वापत्तेः,—इति वाचस्पतिवर्णनम्। तदप्यनुचितमेव। विशेषणत्वाऽसङ्गतेः। शाद्वलस्यैकवचनान्ततया कुशादीनाञ्च बहुवचनान्ततया परस्परम् अनाकाङ्क्षत्व प्रतीतेः। मौञ्जञ्च शाद्वलस्यैव—इति च मुञ्जादिभ्यो भेदेनैव शाद्वलस्यावग-मात्। पूर्ववचनोपात्तयोः दूर्वाश्यामाकयोरत्रान्तर्भावस्योक्तत्वाच्च। षड्दर्भाः—इति खल्वत्र परिभाष्यते। तेषामेव दूर्वाश्यामाकयोः विशेष विवक्षया पूर्वत्रोपादानम्—इत्यस्मदुक्तैववर्णना। अतएव इह पठितानाम् अपि कुशानाम्—

"गोकर्णं दीर्घाश्च कुशाः सकृच्छिन्नाः समूलकाः"।

इति पूर्व्वचन पूर्व्वार्द्धे परिकीर्त्तनम्। तस्मात् पूर्व्ववचने पूर्व्वार्द्धेन प्रथमकल्पानां कुशानाम्, उत्तरार्द्धेन च अनुकल्पान्तरापेक्षया अभ्यर्हितयोः दूर्वाश्यामाकयोः पृथगुपादानम्—इत्यादरणीयम्॥ ॥ १८ ॥ ० ॥

**आज्यं, स्थालीपाकीयान् व्रीहीन् वा यवान् वा, चरुस्थालीं, मेक्षणम, अनुगुप्ता अप इति ॥ १९ ॥**

अत्र प्रतिपदम् उपकल्पयते—इति सम्बध्यते। कथम्?। आ-

ज्यम् उपकल्पयते। स्थालीपाकीयान् स्थालीपाकसमर्थान्,—यावद्भिः स्थालीपाको निर्वहति तावतो व्रीहीन् वा यवान् वा, उपकल्पयते। चरुस्थालीम् उक्तलक्षणाम्, उपकल्पयते। मेक्षणम्—

"इध्मजातीयमिध्मार्द्धप्रमाणं मेक्षणं भवेत्।
वृत्तञ्चाङ्गुष्ठपृथ्वग्रमवदानक्रियाक्षमम्।
एषैव दर्व्वी यस्तत्र विशेषस्तमहं ब्रुवे।
दर्व्वीद्व्यङ्गुलपृथ्वग्रातुरीयोनन्तु मेक्षणम्"।

इति कर्म्मप्रदीपोक्तलक्षणम्, उपकल्पयते। अनुगुप्ता अप उपकल्पयते। इतिना, अन्यदप्येवम्भूतं दर्व्वीप्रभृतिकं सूचयति॥ १९॥

## यानि चानुकल्पमुदाहरिष्यामः॥ २०॥

यानि तैलादीन्यनुकल्पम् प्रत्युदाहरिष्यामः, च शब्दात् यानि च उलूखलादीन्युदाहरिष्यामः, तान्युपकल्पयते॥ २०॥०॥

अथेदानीम् उपवसतो व्रतम् उच्यते,—

## न तदहः प्रसृज्येत॥ २१॥

तदहस्तस्मिन्नहनि, न प्रसृज्येत प्रकर्षेणत्यजेत् गृहम्—इत्यर्थाद्गम्यते। सृज्यतिस्त्यजतिकर्म्मा। तदनेनास्य प्रवासो निषिध्यते। प्रसृज्येत—प्रकर्षेण दूरं गच्छेत्—इति वा व्याख्येयम्॥ २१॥०॥

## दूरादपि गृहानभ्येयात्॥ २२॥

अभ्येयात् आगच्छेत्। स्वयं होतुम्। तदहरितिवर्त्तते॥ २२॥०॥

अबहुवादी स्यात् ॥ २३ ॥

बहु वदितुं शीलम् अस्य,—इति बहुवादी, स न भवति,—इत्य-बहुवादी, स्यात्, तदहरितिवर्त्तत एव। तदत्र,—ताच्छील्यार्थक-णिनिप्रत्ययात् वृथैव बहुवादी न भवेत्, व्याख्यानादौ खल्व-दोष एव बहुकथनेपि,—इति दर्शयति ॥ २३ ॥ ० ॥

अन्यतस्तुधनं क्रीणीयान्न विक्रीणीत ॥ २४ ॥

अन्यतः सकाशात् धनं द्रव्यं क्रीणीयात्, न तु स्वयं विक्रीणीत अन्यस्मै। तदहरित्येव। तदत्र तु शब्दो भिन्नक्रमेण योजनीयः, अनर्थको वा। "मिताचरेष्वनर्थकम्"—इति वचनात् ॥ २४ ॥०॥

सत्यं विवदिषेत् ॥ २५ ॥

ऋजुरक्षरार्थः। सत्यं वदेत्,—इति वक्तव्ये, सत्यं विवदिषेत्,—इति सूत्रयन्नाचार्य्यो मनसाप्यसत्यं वक्तुं नेच्छेदित्युपदिशति ॥ ॥ २५ ॥ ० ॥

अथापराह्ण एवाप्लुत्यौपवसथिकं दम्पती भुञ्जी-यातां; यदेनयोः काम्यꣳ स्यात्, सर्पिर्मिश्रꣳ स्यात्, कुशलेन ॥ २६ ॥

अथ इध्माद्याहरणानन्तरम् आप्लुत्य, अपराह्ण एव दम्पती भुञ्जी-याताम्—इति भिन्नक्रमेण योजनीयम्। कुतः?। पूर्वाह्ण एव

स्नानस्याम्नानात्, तद्बाधे च कारणविशेषाभावात्। तथाच स्मरणम्।

"मैत्रं प्रसाधनं स्नानं दन्तधावनमञ्जनम्।
पूर्वाह्ण एव कुर्व्वीत देवतानाञ्च पूजनम्"।

इति।

"चतुर्थे च तथा भागे स्नानार्थं मृदमाहरेत्।
तिलपुष्पकुशादीनि स्नानञ्चाकृत्रिमे जले"।

इति चैवमादि। "अपराह्णे व्रतोपायनीयम् अश्नीयाताम्"—इति च तन्त्रान्तरे अपराह्ण एवानयोर्भोजनम् उपदिश्यते। तस्माद् यथोक्त एवार्थः।

अह्नोऽपरो भागः, अपराह्णः। तत्रैव भुञ्जीयाताम्,—इत्येकभोजनम् अनयोर्नियम्यते,—द्विर्भोजनप्राप्तौ भोजनान्तर व्युदासार्थम्। किं भुञ्जीयाताम्?। औपवसथिकम्। उपवसथेन संसृष्टं—तत्रापि यदविरुद्धम्। तत्रापि एनयोर्दम्पत्योर्यत् काम्यं कमनीयं रुचितम्—इत्येतत्। स्यात्, भवति। सर्पिर्मिश्रं घृतमिश्रञ्च स्यात्। यच्च कुशलेन सुखेन, परिणमति,—इति वाक्यशेषः। एतदुक्तं भवति। इत्यम् औपवसथिकम् अल्पं भुञ्जीयातां, यत् भुक्तम् अनयोः सुखेन परिणमति, न मनागपि शरीरवैषम्यम् उत्पादयति,—इति। एवं खल्वविघ्नेन श्वोयागः सम्पत्स्यते,—इत्यभिप्रायः। किम्पुनस्तदौपवसथिकम्?। लवणादिवर्ज्जम्,—इति ब्रूमः। कुतः?। गृह्यान्तरवचनात्। तथाचोक्तम्।

"लवणं मधु मांसञ्च चारांशो येन भूयते।
उपवासे न भुञ्जीत, नोत्तरात्रौ च किञ्चन"।

इति। अत्र, उत्तरात्रौ किञ्चन न भुञ्जीत,—इत्युपादानात्, दिवा दैवादभोजने, रात्रेः प्रथमयामेपि भोजनं दर्शयति।

"दिवोदितानि कर्म्माणि स्वकाले न कृतानि चेत्।
शर्वर्य्याः प्रथमे यामे तानि कुर्य्यादतन्द्रितः"।

इति च स्मृत्यन्तरम्॥ २६॥ ०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये प्रथमप्रपाठकस्य पञ्चमी काण्डिका॥ ०॥

# गोभिलीयगृह्यसूत्रे

प्रथमप्रपाठके षष्ठी कण्डिका।



अथेदानीम् औपवसथिक भोजन नियम द्रढिम्ने ब्राह्मणम् उदाहरति,—

**माननतन्त्व्यो होवाचाहुता वा एतस्य मानुष्याहुति र्भवति; य औपवसथिकं नाश्नाति ॥ १ ॥**

माननतन्त्व्योनाम कश्चिदाचार्य्यः ह किल उवाच। किम् उवाच?। तदुच्यते। अहुता हुतफलरहिता, वै—इत्यनर्थको निपातः। एतस्य, औपवसथिकम् अनश्नतः मानुष्याहुतिर्मनुष्योपकार्य्या आहुतिः, सायं प्रातर्होमवैश्वदेवादिलक्षणा, भवति। सर्वोपि होमो निष्फलो भवतीत्यर्थः। मानुष्याहुतिः प्राणाग्निहोत्र लक्षणा वा। तथाच स्मर्य्यते।

"गृहस्थो ब्रह्मचारी च यस्त्वनश्नंस्तपश्चरेत्।
प्राणाग्निहोत्र लोपेन अवकीर्णी भवेत्तु सः"।

इति।

"अनड्वान् ब्रह्मचारी च आहिताग्निश्च ते त्रयः।
अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नताम्"।

इति चैवमादि। एतस्य,—इति आचार्य्य एव विवृणोति। 'य औपवसथिकं नाश्नाति' न भुङ्क्ते ॥१॥ ० ॥

किञ्च। स खल्वयम्,—

**अनीश्वरो ह क्षोधुको भवत्यकाम्योजनानां पापवसीयसी ह्यस्य प्रजा भवति ॥ २ ॥**

न ईश्वरोऽनीश्वरो ह किल भवति। क्षोधुकः क्षुत्युक्तः,—अतृप्तः सदा भवतीत्यर्थः। न काम्योऽकाम्योऽकमनीयोऽस्पृहनीयो जनानां लोकानां भवति। किञ्च। पापवसीयसी पापशीला, ह किल अस्य औपवसथिकमनश्नानस्य, प्रजा सन्ततिर्भवति। पापं प्रसिद्धं वसीयः पुण्यम्। तदुभयवत्यस्य प्रजा भवति,—इति वा वर्णनीयम्॥ २ ॥ ० ॥

अनश्नानस्य दोषम् अभिधाय, अथेदानीम् वैपरीत्येनाश्नानस्य गुणा अभिधीयन्ते,—

**य औपवसथिकं भुङ्क्ते ईश्वरो ह भवत्यक्षोधुकः काम्यो जनानां, वसीयसी ह्यस्य प्रजा भवति ॥ ३ ॥**

वसीयसी कल्याणी पुण्यवतीत्यनर्थान्तरम्। सुस्थिता,—इति भट्टभाष्यम्। अपापवसीयसी,—इति पाठे,—पापवसीयसी व्याख्याता, सा न भवतीत्यपापवसीयसी। कृतभाष्यमन्यत् ॥ ३ ॥ ० ॥

यस्मादनश्नानस्यैतेदोषाः, अश्नानस्य चैतेगुणा भवन्ति,—

**तस्मात् यत् कामयेतौपवसथिकं भुञ्जीयाताम् ॥४॥**

यदौपवसथिकं कामयेत गृहपतिः, व्यत्ययाद्वा कामयेयातां दम्पती, तद्भुञ्जीयाताम् ॥ ४ ॥ ० ॥

अथेदानीम् अन्यदपि व्रतम् अभिधीयते,—

**अध एवैतां रात्रिं शयीयाताम् ॥ ५ ॥**

अधो भूमावेव न पल्यङ्कादौ, (स्वस्तरस्तु न निषिध्यते) एतां उपवसथदिवसीयां रात्रिं शयीयातां दम्पती ॥ ५ ॥

**तौ खलु जाग्रन्मिश्रावेवैतां रात्रिं विहरेयाताम्, इतिहासमिश्रेण वा, केनचिद्वा ॥ ६ ॥**

तौ दम्पती। खल्वित्यनर्थको निपातः। जाग्रन्मिश्रौ जाग्रदवस्थैव स्वापं मिश्रयन्तौ, एतां रात्रिं विहरेयातां नयेयाताम्— इत्यर्थः। कथं जाग्रन्मिश्रौ भवेताम्?। तदुच्यते। इतिहासमिश्रेण। भावप्रधानोऽयं निर्देशः, इत्यभावे तृतीया। इतिहासमिश्रतया—तदालोचनयेत्येतत्। इतिहासमिश्रेण केनचित् सूत्रद्वारेण वा,—इति वा व्याख्येयम्। अन्येनापि केनचित् पुण्यकथादिना वा,—इत्ययम् अभ्युपायो जाग्रन्मिश्रत्वे ॥ ६ ॥

**जुगुप्सेयातान्त्वेवाव्रत्येभ्यः कर्म्मभ्यः ॥ ७ ॥**

जुगुप्सेयातां निन्देताम्। अव्रत्येभ्यः, व्रते साधु व्रत्यं, तन्न भवतीत्यव्रत्यं,—व्रतविरुद्धम् उच्यते। तेभ्यः कर्म्मभ्यः ग्राम्यधर्म्मादिभ्यः,

—तानि कर्म्माणि त्यक्तुम्—इत्यर्थः। गोप्तुम् इच्छा वा जुगुप्सो-च्यते। तदा खल्वशत्रेभ्यः आत्मानं रक्षितुम् इच्छेताम्—इति व्यक्तैव वचनव्यक्तिः। तुशब्दः सम्भवकालं व्यवच्छिनत्ति। एव-शब्दस्य, प्रकृतं नियमयन् व्यतिरेके व्रतभङ्गम् अवगमयति। अतएव स्मर्य्यते,—

"स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम्।
सङ्कल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च।
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः।
अनुरागात् कृतञ्चैव ब्रह्मचर्य्यविरोधकम्।
विपरीतं ब्रह्मचर्य्यमेतदेवाष्टलक्षणम्"।

इति।

"उपवासे तथा यौनं हन्ति सप्त कुलानि वै।
स्त्रीणां सम्प्रेक्षणात् स्पर्शात्ताभिः सङ्कथनादपि।
ब्रह्मचर्य्यं विपद्येत, न दारेष्वृतुसङ्गमात्"।

इति चैवमादि। अत्रच, सम्प्रेक्षणात्, सङ्कथनात्,—इत्यत्र सरा-गत्वं सशब्दस्यार्थः, साहचर्य्यात् स्पर्शेऽपि तथा,—इति शूलपा-णुपाध्यायाः। तुशब्द चशब्दार्थो॰ वा,—गात्राभ्यङ्गादीनि समु-च्चिनोति। कस्मात्?—

"गात्राभ्यङ्गं शिरोऽभ्यङ्गं ताम्बूलञ्चानुलेपनम्।
व्रतस्थो वर्ज्जयेत् सर्व्वं यच्चान्यद्बलरागकृत्"।

इत्येवमादि स्मरणात्॥ ७॥ ०॥

न प्रवसन्नुपवसेदित्याहुः ॥ ८ ॥

प्रवसन् प्रवासम् अनुतिष्ठन् न उपवसेत्,—इत्याहुरेके आचार्य्याः। तस्मादेवावगम्यते,—प्रवसन्नप्युपवसेत्,—इत्यन्ये आचार्य्या मन्यन्ते —इति ॥ ८ ॥ ० ॥

यदा तु खलु प्रवसन् गृहपतिर्न उपवसति, तदापि,—

पत्न्या व्रतं भवतीति ॥ ९ ॥

पत्न्या व्रतम् औपवसथिकं भवति,—इति आहुराचार्य्याः ॥ ९ ॥ एवं प्रवसता नोपवस्तव्यम्,—इत्येकेषाम् आचार्य्याणां मतं, प्रवसताप्युपवस्तव्यम्—इति चापरेषाम्। एतस्मिंश्च विकल्पे इति,—

यथा कामयेत, तथा कुर्य्यात् ॥ १० ॥

स्पष्टभाष्यमेतत् ॥ १० ॥ ० ॥

एवमेवाहिताग्नेरप्युपवसथो भवति ॥ ११ ॥

आहिताग्निः पञ्चाग्निरुच्यते। स च,—

"पवनः पावन स्त्रेता यस्य पञ्चाग्नयोगृहे"।

इति स्मृत्युक्तः। पवन आवसथ्योऽग्निः पावनः सभ्योऽग्निः यः शीतापनोदनाद्यर्थं बहुषु देशेष्वपि विधीयते,—इति कुल्लूकभट्टः। यच्चन्यत्। औपासनाग्निम् अधिकृत्य उपवसथस्य सूचितत्वात् आहिताग्नेरेष न प्राप्नोतीत्येवम् अतिदिश्यते ॥ ११ ॥ ० ॥

यच्चाम्नायो विदध्यात् ॥ १२ ॥

आम्नायत अभ्यस्यते,—इत्याम्नायो वेद उच्यते। स खल्वाम्नायः शाखान्तरीयोपि यदन्यद्विदध्यात्, तदपि कर्त्तव्यम्,—इति वाक्य शेषः। शाखान्तराधिकरण न्यायादिति अभिप्रायः। चः समुच्चये, पूर्व्वोक्तम् एव समुच्चिनोति ॥ १२ ॥ ० ॥

अथ पूर्व्वाह्ण एव प्रातराहुतिं हुत्वाऽग्रेणाग्निं परिक्रम्य दक्षिणतोऽग्नेः प्रागग्रान् दर्भानास्तीर्य्य ॥ १३ ॥

अथापरदिने प्रातराहुतिं हुत्वा। सिद्धाया अपि प्रातराहुतेः पुनरभिधानं क्रमार्थम्। कथन्नाम?। प्रातराहुतिं हुत्वा समिदाधानान्तं विधाय वक्ष्यमाणं कर्म्म कुर्य्यात्। कुतः?।

"आधाय समिधञ्चैव ब्रह्माणमुपवेशयेत्"।

इति कर्म्मप्रदीप दर्शनात्। "अग्निमुपसमाधाय दक्षिणतो ब्रह्मासनमास्तीर्य्य"—इति च गृह्यान्तरम्। तदयमर्थः। प्रातराहुतिं हुत्वा पूर्व्वाह्ण एव—प्रतिपदभावेपि,—इत्यवोचाम। अग्रेण पूर्व्वयादिशा, अग्निं परिक्रम्य अग्निं प्रदक्षिणीकृत्य गत्वा, दक्षिणतो दक्षिणस्यां दिश्यग्नेः। सार्व्व विभक्तिकस्तसिल्।

"उदग्धारामविच्छिन्नामग्निमारभ्य दक्षिणम्।

दद्याद्ब्रह्मासन स्थाने सर्व कर्म्मसु नित्यशः"।

इति गृह्यासंग्रह वचनात्, अविच्छिन्नां वारिधारां दत्वा, प्रागग्रान् दर्भान् आस्तीर्य्य, ब्रह्मोपवेशनार्थम्। निरस्यति,—इति

वक्ष्यमाणेन सम्बन्धः। तच निरसनं ब्रह्मणः कर्म,—इति वक्ष्यामः। ततश्च, एतदन्तं कर्म याजमानिकम्। कथन्तर्हि आस्तरण निरसनयोः सम्बन्धः? समान कर्त्तृकत्वाभावात्। कुतः पुनः समान कर्त्तृकत्वम् अन्तरेण न सम्बन्ध उपपद्यते?। क्त्वाप्रत्यय बलात्,—इति चेत्;—इति चेत् पश्यति क्त्वाप्रत्ययबलादेतदव गम्यते; समान कर्त्तृकया कयाचित् क्रियया समम् अत्र सम्बन्धेन भवितव्यम्,—इति। अत्रोच्यते। नान्यथोपपत्तेः। नैषदोषः। कस्मात्?। अन्यथाप्युपपत्तेः क्त्वाप्रत्ययस्य। कथम्?। पूर्वकालता मात्रार्थतया। तत्राप्येष दृश्यते,—इति वक्ष्यामः। 'अन्वचेष्टेत्'— इति वा व्यवहित तरेण वक्ष्यमाणेन सम्बन्धो वर्णनीयः। एवं किल भट्टनारायणादयो व्याचचक्षिरे। श्लोकम् अपि उदाहरन्ति।

"येन यस्याभिसम्बन्धो दूरस्थस्यापि तस्य सः।
अर्थतो ह्यसमर्थानाम् आनन्तर्य्यमकारणम्"।

इति॥ १३ ॥ ० ॥

अथेदानीं ब्राह्मं कर्म्म अभिधीयते,—

**तेषां पुरस्तात् प्रत्यङ्मुखस्तिष्ठन्, सव्यस्य पाणेरङ्गुष्ठेनोपकनिष्ठिकया चाङ्गुल्या ब्रह्माऽऽसनात् तृणमभिसंगृह्य, दक्षिणापरमष्टमं देशं निरस्यति,—निरस्तः परावसुरिति॥ १४॥**

तेषां यजमानास्तृतानां दर्भानां, पुरस्तात् पूर्व्वस्यां दिशि, प्रत्यङ्मुखः पश्चिमाभिमुखः, तिष्ठन् ऊर्द्ध्वः सन्, सव्यस्य वामस्य, पाणेः

करस्य, अङ्गुष्ठेन, उपकनिष्ठिकया—कनिष्ठसमीपदेशस्था अङ्गुली उपकनिष्ठा अनामिका च उच्यते, उपकनिष्ठेव उपकनिष्ठिका, तया च अङ्गुल्या, ब्रह्मा ब्रह्मतया परिकल्पितः, (इदानीमपि कयाचिद्विवचया ब्रह्मा—इत्युच्यते।) आसनात्—तदर्थकल्पितात् यजमानास्तृतात् कुशमयात्, तृणं दर्भरूपम्, अभि संगृह्य गृहीत्वा, दक्षिणापरं—दक्षिणस्याश्च अपरस्याश्च दिशोरन्तरालम्, अतएव,—अष्टमम् उभयदिगष्टमांशं, देशं दिग्विभागं; नैऋतकोणम्,—इत्येतत्। तं प्रति, निरस्यति प्रक्षिपति;—निरस्तः परावसुः,—इति, अनेन मन्त्रेण।

तदिदं निरसनं ब्राह्मं कर्म्म—इति विज्ञायते। कुतः?। ब्रह्मा,—इति कर्तृनिर्देशात्। लाट्यायनसूत्रणाच्च। स खल्वाचार्य्यो अन्यत्रैव याजमानं कर्म्म सूत्रयित्वा, "सर्व्वत्र ब्रह्मा दक्षिणत उदङ्मुखः कुर्य्याद्धोमेभ्योऽन्यत्"—इति ब्राह्मं कर्म्म वक्तुम् उपक्रममाणः तत्रैव प्रकरणे,—"तद्दक्षिणतो निरस्तः परावसुरिति दक्षिणा तृणं निरस्येत्, आवसोः सदने सीदामीत्युपविशेत्"—इति सूत्रयाञ्चकार। तदनेन, निरसनं ब्राह्मं कर्म्म,—इत्यवगच्छामः। अतएव तेनैव "दक्षिणार्द्धे तु सदसः पूर्वमुपवेशनं प्रस्तोतुः प्रत्युपवेशनं ब्रह्मोपवेशनेन; निरस्तः परावसुरिति दक्षिणा तृणं निरस्येत्, 'आवसोः सदने सीदामीत्युपविशेत्" —इति ब्राह्मं कर्म्म निरसनम् उपवेशनञ्च अन्यत्राप्युपवेशने सूत्रितम्। एतस्माच्च कारणात् नात्र आसनेन ब्रह्मणः सम्बन्धः, अपितु निरसनेनैव,—इत्यवगन्तव्यम्।

ये तु ब्रुवते,—नात्र ब्रह्मोत्यासनेन सम्बन्धः, 'उपवेशनात् पूर्वं तत्सम्बन्धाभावात्'—इति। तान् प्रति वक्तव्यम्। तदर्थपरिकल्पितत्वादासनस्य अन्यत्र कोपि सम्बन्धः—इत्यकामेनापि वाच्यम्। लोकेपि देवाद्यर्थं परिकल्पितासनादौ देवासनादि व्यपदेशाः दृश्यन्ते। "लोकेयेष्वर्थेषु प्रसिद्धानि पदानि, तानि सति सम्भवे तदर्थान्येव सूत्रेषु"—इति खल्वनुक्रमणिका शास्त्र तात्पर्य्य विदाम्। "पुरोडाशकपालेन तुषानुपवपति"—इति च भविष्यता पुरोडाशेन कपालस्य व्यपदेशो दृश्यते। तस्मात्,—यथा, "प्रैतु होतुश्चमसः"—इत्यत्र, होता यत्र चमति, चमिष्यति अचमीद्वा स होतुश्चमसः,—इति चमसिनां शेष भक्षाधिकरणे निर्णीतं, तथा अत्रापि ब्रह्मा यत्र आस्ते आसिष्यते आसिष्ट वा, तद्ब्रह्मासनम्,—इति शक्यते वक्तुम्। अनयैव दिशा,—ब्रह्मासनमास्तीर्य्य,—इति, दद्याद्ब्रह्मासनस्थाने,—इति, ब्रह्मासने निधाय,—इति चैवमादयः शतशः व्यपदेशाः समुपपद्यन्ते। एतावन्मात्रे पुनरत्र कारणेऽभ्युपगम्यमाने ब्रह्मासनात्—इति यथा श्रुत एवार्थो वर्णनीयः स्यात्। ब्रह्मासनयोरिदानीमपि सम्बन्धस्य अस्माभिरुपपादितत्वात्। श्रुत्या खल्वासनसम्बन्धो ब्रह्मणोऽत्रावगम्यते, वाक्येन च व्यवहित योजनया निरसन सम्बन्ध श्चिकीर्षितः।

कथन्तर्हि प्रकृतेऽपि निरसनेन सम्बन्धः? ननु श्रुत्या आसनसम्बन्ध एव स्यात्। स्यादेतदेवं यदि शास्त्रान्तरम् अस्यां वर्णनायां कारणं न स्यात्। अस्ति चात्र स्पष्टं शास्त्रान्तरम्। आसन सम्बन्धेपि ब्रह्मणो न ज्ञायते,—को निरस्यति?—इति।

अवश्यम् अत्र कर्त्ता कश्चित् कल्पयितव्यः। स तावदुपस्थितत्वात् बलवच्छास्त्रान्तर बलाच्च ब्रह्मैव कल्पयितुमुचितः। न खल्वत्र यजमानः कर्त्ता साक्षादुपदिश्यते, सन्निधीयते वा। क्त्वाश्रुतेः पूर्व्वापरीभाव मात्रेणापि चरितार्थत्वात्। स खल्वत्र विकल्पयिषितः। न तु शक्यते कल्पयितुम्। ग्रन्थान्तर विरोधात्। तदपि खल्वस्मच्छास्त्रमेव, किम् इति यदृच्छा कल्पनया उपरुध्येत!। उभय सम्बन्धस्य च वक्तुम् आवश्यकत्वे, निरसनसम्बन्ध एव तावदुचितो वर्णयितुम्। गुण प्रधान भावेनोभाभ्याम् अन्वये च प्रधानानुरूपैव विभक्ति रभियुक्तै रनुमन्यते। तस्मादस्मदुक्तमेव समाधानम् आदरणीयम्॥ १४ ॥ ० ॥

अप उपस्पृश्याथ ब्रह्माऽऽसन उपविशत्यावसोः सदने सीदामीति ॥ १५ ॥

अप उदकम्, उपस्पृश्याचम्य स्पृष्ट्वा वा, अथानन्तरं ब्रह्मा आसने यथोक्ते उपविशति,—आवसोः सदने सीदामीत्यनेन मन्त्रेण। तदत्र सूत्रम् अनवस्पृश्यैव,—'आवसोः सदने सीद,—इति यजमानो ब्रूयात्, (एतदन्तम् एव कर्म्म याजमानिकम्) सीदामि,—इत्यभिधाय ब्रह्मा उपविशेत्'—इति भवदेव भट्ट कल्पना समुन्नमिता ॥ १५ ॥ ० ॥

स खल्वयम्,—

अग्निमभिमुखो वाग्यतः प्राञ्जलिरास्त आकर्म्मणः पर्य्यवसानात् ॥ १६ ॥

अग्निम् अभिमुखः आभिमुख्येनाग्निमुखः,—उदङ्मुख इत्यर्थः। वाग्यतो नियमितवचनः प्राञ्जलिः प्रकृष्टोऽञ्जलिर्यस्य, सोऽयं प्राञ्जलिः कृताञ्जलिपुटः सन् आस्ते। कियन्तं कालम् आस्ते?। आकर्म्मणः पर्य्यवसानात्। परि सर्व्वतोभावेन कर्म्मणः अवसानं समाप्तिः कर्म्मणः पर्य्यवसानम्, तत् पर्य्यन्तम्। किम् इदं कर्म्म?। यत् क्रियते यजमानेन, तदिदं यागादि कर्म्म। कुत्र पुनरस्य सर्व्वतोभावेन अवसानम्?। दक्षिणादाने—इति ब्रूमः। कुतः?। तत्र तद्विधानात्। कर्म्मान्ते खल्वेषा विधीयते। अदत्तायां खल्वस्यां कृतम् अपि कर्म्म न परिसमाप्यते, निष्फलत्वात्। अतएव,—'हतो यज्ञस्त्वदक्षिणः'—इति स्मरन्ति। आह, दक्षिणायाः अनेन अङ्गत्वम् केवलम् उच्यते, तदभावे च कर्म्मणो वैगुण्यात् निन्द्यम्?। तर्हि व्यक्तम् अस्याम् अदत्तायां कर्म्म न परिसमाप्यते, अपि तु दत्तायामेव,—इति यथोक्त एवार्थः। अतएव,—आवसोः सीदामि,—इति ब्रह्मोपवेशन मन्त्र लिङ्गम् अनुगृह्यते। भट्टनारायण प्रभृतयस्तु वर्णयन्ति,—'कर्म्म, कृताकृत प्रत्यवेक्षणम्'—इति॥ १६ ॥ ०॥

स खलु वाग्यतोऽपि,—

## भाषेत यज्ञसंसिद्धिम्॥ १७॥

भाषेत वदेत्, यज्ञसंसिद्धिं यज्ञस्य सम्यक् सिद्ध्यनुकूलां वाचम्,—यदा खल्वन्यथैव होत्रा कर्म्म क्रियते, तदा यज्ञस्य सम्यक् सिद्धि-

र्थम्,—एतदेवं कुरु, कृत्वा चैतदेतत् कुरु,—इत्येवमादि लच्चणाम्। एतदन्यच्च अस्य वाग्यतत्वम्—इत्यर्थः॥ १७॥

तत्रापि,—

नायज्ञीयां वाचं वदेत्॥ १८॥

अयज्ञीयां यज्ञानर्हाम् असंस्कृतां वाचं न वदेत्। भवति चात्र ब्राह्मणम्। "साधुभिर्भाषितव्यं, नापभ्रंषितवै न म्लेच्छितवै"—इति॥ १८॥०॥

यद्ययज्ञीयां वाचं वदेत्; वैष्णवीमृचं यजुर्व्वा जपेत्॥ १९॥

यदि कुतश्चित् कारणात् अयज्ञीयाम् असंस्कृतां वाचं वदेत्,—तर्हि वैष्णवीं विष्णुदेवताकाम् ऋचम्,—इदं विष्णुर्विचक्रमे,—इत्यादि लच्चणां जपेत्। मुख्यश्चायं पक्षः, इह वा शब्दाश्रवणात्। तदसम्भवे यजुर्व्वा जपेत्। यजुश्च, विष्णोः शिरोसि—इत्यादि-लक्षणम्,—इति भट्टनारायणोपाध्यायाः। विष्णोरराटमसि—इत्यादि लक्षणम्,—इति रघुनन्दनादयः। तदत्र भवन्तो भूमि-देवाः प्रमाणम्॥ १९॥०॥

अपि वा नमोविष्णवे इति ब्रूयात्॥ २०॥

अपि वा, ऋग्यजुषोर्जपासम्भवे, नमो विष्णवे इत्येवं ब्रूयात्॥ ॥ २०॥

**यद्युवा उभयं चिकीर्षेद्धौत्रञ्चैव ब्रह्मत्वञ्चैवैतेनैव कल्पेन छत्रं वोत्तरासङ्गं वोद कमण्डलुं दर्भवटुं वा ब्रह्मासने निधाय, तेनैव प्रत्याव्रज्याथान्यच्चेष्टेत् ॥२१॥**

यद्यपति ब्राह्मणान्तरे। उ वै,—इत्यनर्थकौ निपातौ। एवम् एके। यद्युवा,—इति निपात समुदायो यद्यर्थे। एवम् अपरे। उभयं चिकीर्षेत् कर्त्तुमिच्छेत्। तदनेन लिङ्गेन विधिरनुमीयते;—असम्भवे उभयम् अपि स्वयं कुर्य्यात्,—इति। तदिदम् अभिहितम् अस्माभिः,—'अथ यदि दधि पयो यवागूं वा'—इत्येवमादिके सूत्रे। किं पुनस्तदुभयम्?। तदुच्यते। हौत्रं होतुः कर्म्म चैव, ब्रह्मत्वं ब्रह्मणः कर्म्म चैव। तर्हि, एतेनैव कल्पेन पूर्व्वोक्तयैव आवृता, अग्रेणाग्निम्—इत्येवमादिकया। (एवकार करणात्,—आवसोः सदने सीदामि,—इति मन्त्रोपि एवम् एव पठनीयः,—इत्यवगम्यते।) छायया त्रायते—इति छत्रम् आतपत्रं वा, उत्तरासङ्गम् उत्तरीयं वा, उद कमण्डलुम् उदक पूरित कमण्डलु वा, दर्भवटुं कुश ब्राह्मणं वा,—

स खल्वयं दर्भवटुर्यथा निर्म्मातव्यः, तदाह गृह्यासंग्रह परिशिष्टम्।

"ऊर्द्धकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः।
दक्षिणावर्त्तको ब्रह्मा वामावर्त्तस्तु विष्टरः"।

इति। अत्र च,—

"द्विरावृत्त्याथ मध्ये वै अर्द्धावृत्त्यान्तदेशतः।
ग्रन्थिः प्रदक्षिणावर्त्तः स ब्रह्मग्रन्थिसंज्ञकः"।

इति पुराणवाक्यम् अपि अनुसन्धेयम्। दर्भपरिमाणञ्चात्र नास्ति,—इत्याह कर्म्मप्रदीपः।

"यज्ञवास्तुनि मुष्टाञ्च स्तम्बे दर्भवटौ तथा।
दर्भसङ्ख्या न विहिता विष्टरास्तरणेष्वपि"।

इति। एवञ्च,—

"पञ्चाशद्भिः कुशैर्ब्रह्मा तदर्द्धेन च विष्टरः"।

इति वचनं यदि समूलं, तदा सम्भवासम्भवाभ्यां नियमानियमयोर्व्यवस्थितो विकल्पः,—इति परिशिष्टप्रकाशः। शाख्यन्तरीयम्,—इति तत्त्वकारः। अन्यापि सङ्ख्या, कौथुमादि व्यतिरिक्तविषया।

तमिमं दर्भवटुं वा, ब्रह्मासने निधाय स्थापयित्वा, तेनैव पथा, येन पूर्व्वं परिक्रमणं कृतं तेनैव पथा प्रदक्षिणेनाग्निं प्रत्याव्रज्य आगत्य पूर्व्वस्थानम्—इत्येतत्। अथानन्तरम्, अन्यत् भूमिजप परिसमूहनादिकं, चेष्टेत् चेष्टेत, कुर्य्यादित्यर्थः। अथेतिविशिष्टमानन्तर्य्यं द्योतयति। किन्तत्?। यथोपयोगम् उत्तरतोऽग्नेर्द्रव्याणाम् अधोमुखानाम् उदगग्राणां पूर्व्वपूर्व्वक्रमेण आसादनं, वीक्षणं, प्रोक्षणञ्च अद्भिः कृत्वा। तदेतत्। कुतः?। शाखान्तर दर्शनात्। तथाच कर्म्मप्रदीपः।

"प्राक् प्राञ्चम् उदगग्नेरुदगग्रं समीपतः।
तत्तथाऽऽसादयेद् द्रव्यं यद् यथा विनियुज्यते"।

इति। शांख्यायन सूत्रम्। "उत्तरतोऽग्ने र्यथोपयोगम् अवाञ्चि प्राञ्चासादयेत्"—इति।

"द्रव्याणामुपक्लृप्तानां होमीयानां यथाक्रमम्।
सादयन् वीक्षणं कुर्य्यादद्भिरभ्युक्षणन्तथा"।

इति च स्मृत्यन्तरम्। इदञ्च द्रव्यासादनाद्यनन्तरं भूमिजपादिकं चर्व्वनङ्गे द्रष्टव्यम्। चर्व्वङ्गे तु कर्म्मणि द्रव्यासादनाद्यनन्तरमेव चरुश्रपणम् आचार्य्यः सूत्रयिष्यति,—'अथोलूखलमुषले'—इत्यादि। ततश्च चर्वङ्गके कर्म्मणि, द्रव्यासादनाद्यनन्तरं चरुश्रपणं अनन्तरं भूमि जपादिकं कर्त्तव्यम्। अतएव, कर्म्मप्रदीप कृद्भिः,—'तिर्य्यगूर्द्धसमिन्मात्रा'—इत्यादिना, 'शूर्पं वैणव मेव च'—इत्येवमन्तेन ग्रन्थेन चर्वङ्गम् अभिधाय,—'दक्षिणं वामतो वाह्यम्'—इत्यादिना भूमिजप परिसमूहन हस्तविन्यासोऽभिहितः। तस्माद् ब्रह्मस्थापन द्रव्यासादनादि चरुश्रपणेभ्यः परं भूमि जपपरिसमूहनादिकम्—इति भवदेवभट्ट वीरेश्वर रघुनन्दनोक्तम् आदरणीयम्। अन्यत् चरुश्रपणादिकम्—इति वा वर्णनीयम्। भट्टभाष्ये तु,—भूमि जपं, त्र्यृचेन परिसमूहनञ्च कृत्वा ब्रह्मस्थापनं कर्त्तव्यम्,—इत्युक्तम्। सरला परिशिष्टप्रकाश कारास्त्वाहुः,—भूमि जपानन्तरं चरुश्रपणम्—उक्तम्॥ २१॥ ०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये प्रथमप्रपाठकस्य षष्ठी काण्डिका॥ ०॥

---

प्रथमप्रपाठके सप्तमी काण्डिका।



**अथोलूखलमुषले प्रक्षाल्य शूर्पञ्च पश्चादग्नेः प्रागग्रान् दर्भानास्तीर्य्योपसादयति ॥ १ ॥**

अथ द्रव्याणाञ्च संप्रोच्य च पूर्वमासादिते उलूखलमुषले शूर्पञ्च —इत्येतत् त्रयम्—

"मुषलोलूखले वार्चे स्वायते सुदृढे तथा।
इच्छा प्रमाणे भवतः शूर्पं वैणव मेव च"।

इति कर्मप्रदीपोक्तलक्षणम्, प्रक्षाल्य, पश्चादग्नेः प्रागग्रान् दर्भानास्तीर्य्य तत्रोपसादयति स्थापयतीत्यर्थः। पूर्वं खल्वग्नेरुत्तरतः समासादितानां शूर्पोलूखलमुषलानाम् इदानीमग्नेः पश्चिमतः स्थापनं कर्त्तव्यं निर्वापार्थम् ॥ १ ॥ ० ॥

**अथ हविर्निर्व्वपति व्रीहीन् वा यवान् वा कंसेन वा चरुस्थाल्या वा ॥ २ ॥**

अथानन्तरम् आसादिते तस्मिन्नुलूखले हविर्निर्वपति प्रक्षिपति। हविर्विशिनष्टि,—'व्रीहीन् वा यवान् वा'। केन निर्वपति?। तदुच्यते। कंसेन वा चरुस्थाल्या वा। स्पष्टमन्यत् ॥ २ ॥ ० ॥

कथं निर्वपति?। तदभिधीयते—

अमुष्मै त्वाजुष्टं निर्वपामीति देवतानामादेशꣳसकृत्; द्विस्तूष्णीम्॥ ३॥

अमुष्मैत्वाजुष्टं निर्वपामीति अनेन मन्त्रेण, देवतायाः वेदमेयस्या-गोद्देश्यायाः नाम्न आदेशः—आदिश्यते इत्यादेशः समुच्चारणं यथा भवति, तथा सकृदेकवारं निर्वपति, 'द्विः' वावद्वयं तूष्णीम् अमन्त्रं निर्वपतीतिसम्बन्धः। तेन, 'अग्नये त्वाजुष्टं निर्वपामि'—इत्येवमादिमन्त्रेण सकृन्निरूप्य तूष्णीमपि द्वि निर्वपेत्। अत्रच यावता निरुप्तेन होमो निर्वर्त्यते किञ्चिच्चावशिष्यते तावत् परिमित मेव हवि र्निर्वप्तव्यम्। बहु दैवत्ये च चरौ न प्रत्येकमेवानुनिर्वापौ कर्त्तव्यौ, किन्तु तन्त्रेण द्वावेवानुनिर्वापौ सर्वशेषे करणीयौ। तदेतत् सर्वं कर्म्मप्रदीपः स्पष्टयाञ्चकार। तथा चोक्तम्।

"चरुः समश्ननीयोयस्तथा गोयज्ञकर्म्मणि।
वृषभोत्सर्ज्जने चैव अश्वयज्ञे तथैवच।
आवण्यां वा प्रदोषे यः कृष्यारम्भे तथैवच।
कथमेतेषु निर्वापाः? कथञ्चैवजुहोतयः?।
देवता संख्यथायाद्या निर्वापाश्च पृथक् पृथक्।
तूष्णीं द्विरेव गृह्णीयात् होमस्यापि पृथक् पृथक्।
यावता होम निर्वृत्ति र्भवेद्वा यत्र कीर्त्तिता।
शेषश्चैव भवेत् किञ्चित्तावन्तं निर्वपेच्चरुम्"।

इति। अत्र,—एतेषु इति, एतत् प्रकारेष्वन्येष्वपीत्यर्थः॥ ३॥०॥

**अथ पश्चात् प्राङ्मुखोऽवहन्तुमुपक्रमेते; दक्षिणोत्तराभ्यां पाणिभ्याम् ॥ ४ ॥**

अथेति पूर्वप्रकृतार्थम्। अथ पूर्वप्रकृतेन आसादितेन मुषलेन पश्चादनन्तरं प्राङ्मुखः पूर्वप्रकृतानेव निरुप्तान् व्रीहीन् वा यवान् वा अवहन्तुम्—(अवहननं कण्डनम्-इत्याख्यायते) उपक्रमते आरभेत। कथम्?। दक्षिणोत्तराभ्यां, दक्षिणः करः उत्तरः उपरिगतो ययोः पाण्योस्ताभ्यां दक्षिणोत्तराभ्यां पाणिभ्यां गृहीतेन मुषलेनेत्यर्थः। "उपक्रमते—इति वचनादुपक्रम एवायं नियमः। ततश्च शिष्येनापि पश्चादवहननं कुर्वतो न दोषः"—इति भट्टभाष्यम् ॥ ४ ॥ ० ॥

**त्रिः फलीकृतांस्तण्डुलान् त्रिर्देवेभ्यः प्रक्षालयेदित्याहुर्द्विर्मनुष्येभ्यः सकृत् पितृभ्य इति ॥ ५ ॥**

त्रिर्वारत्रयम् अवघातेन फलीकृतान्—फल निष्पत्तौ—इति स्मरणात् निष्पत्तीकृतान् तण्डुलान् कृतच्छट्टनानित्यर्थो लभ्यते। एतदुक्तं भवति। मुषलेन तथाऽवहन्तव्यं यथा वारत्रयावघातेन तण्डुला निष्पद्यन्ते—इति। तथाच स्मरणम्।

"कण्डनं सेचनञ्चैव तथैवोलूखल क्रिया।
सकृदेव पितृणां स्याद्दैवे त्रिलं विधीयते"।

इति। अन्येत्वाहुः—'त्रिः फलीकरणं तण्डुलानां कुण्डकाप नयनं च्छट्टनमिति प्रसिद्धम्। सकृत् कण्डनेनैवापनीत तुषांस्तण्डुलान्

त्रिः फलीकृतान् कृत्वा'—इति। तदिदं सकृत् कण्डन वचनमध-कृतम्। दैवे त्रिवम्—इति स्मरणात्। अपरे तु व्याचक्षते,—'त्रिः फलीकृतान् त्रिधा वितुषीकृतान् कण्डन प्रच्छदनाभ्यामितिशेषः'—इति। तदेतत् मणीषिभिश्चिन्तनीयम्। तानिमां स्तण्डुलान् त्रिर्वारत्रयं देवेभ्यः प्रक्षालयेदित्याऊर्बुवन्ति आचार्य्याः। अनेनैव सूत्र शेषो व्याख्यातः॥ ५॥ ०॥

## पवित्रान्तर्हितां स्तण्डुलानावपेत्॥ ६॥

प्रक्षालितां स्तण्डुलान् पवित्रान्तर्हितान्। पवित्रम्—

"अनन्तर्गर्भिणं साग्रं कौशं द्विदल मेव च।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्"।

इति कर्म्मप्रदीपोक्तलक्षणम् अन्तर्हितं व्यवहितं येषां, तान् पवित्रान्तर्हितान् कृत्वा आवपेत् निःक्षिपेत् चरुस्थाल्याम्। चरुस्थाल्यामुत्तराग्रं पवित्रं निःक्षिप्य तण्डुलान्निःक्षिपेत्—इति तत्कार प्रभृतयः॥ ६॥ ०॥

## कुशल शृतमिव स्थालीपाकं श्रपयेत् प्रदक्षिण-मुदायुवन्॥ ७॥

कुशलः पाक-निपुणो भण्यते। तेन शृतं पक्वमिव स्थालीपाकं श्रपयेत् पचेत्। कतमं पुनः शृतं कुशलशृतमिव भवति?। उच्यते। अदग्धम् अकठिनम् अनतिशिथिलम् अवीतरसम् किल शृतं कुशल शृतमिव भवतीत्याचक्ष्महे। कुतः?। लोक प्रसिद्धेः। कर्म्मप्रदीपेप्याह।

"खण्डाखोक्ष खरः स्विन्नोऽप्यदग्धोऽकठिनः शुभः।
नचातिशिथिलः पाच्यो नच वीतरसो भवेत्"।

इति। प्रदक्षिणं दक्षिणावर्त्तनं यथा भवति, तथा मेक्षणेन उदायुवन्—'युमिश्रणे'—इति स्मरणादूर्द्धमोषन्मिश्रयन् अपयेदितिसम्बन्धः। मेक्षणेन—इति कुतो लभ्यते?। 'तस्मिन्नेवाग्नौ अपयत्योदनचरुञ्च मांसचरुञ्च पृथङ्मेक्षणाभ्यां प्रदक्षिणमुदायुवन्'—इति दर्शनात्॥ ७॥ ०॥

घृतमभिघार्य्योदगुद्वास्य प्रत्यभिघारयेत् ॥ ८॥

घृतं पक्वं स्फुटितं चरुम् अभिघार्य्य आज्यस्रुवेणाप्लाव्य उदगुत्तरस्याम् अग्नेः उद्वास्य उत्तार्य्य प्रत्यभिघारयेत् पुनस्तथाऽऽप्लावयेत्॥ ८॥ ०॥

अग्निमुपसमाधाय कुशैः समन्तं परिस्तृणुयात्; पुरस्ताद्दक्षिणतउत्तरतः पश्चादिति ॥ ९॥

अग्निम् उपसमाधाय समिद्भिः समिध्य प्रज्वाल्य—इत्येतत्। कुशैः पूर्वमासादितैः विशाखानि प्रतिलूनैः समन्तं समन्तात् सर्वतः सर्वासु दिक्षु—इत्यर्थः। परिस्तृणुयात् आच्छादयेत्। कथम्?। पूर्वस्यां दक्षिणस्याम् उत्तरस्यां पश्चात्—इत्यनेन क्रमेण॥ ९॥ ०॥

सर्व्वतस्त्रिवृतं पञ्चवृतं वा ॥ १०॥

सर्वतः सर्वासु दिक्षु त्रिवृतं वारत्रयं, पञ्चवृतं पञ्चकृत्वो वा, परिस्तृणुयात्—इत्यनुवर्त्तते ॥ १०॥ ०॥

कथम्पुनरेकं परिस्तरणं सम्पद्यते? यस्य त्रिः पञ्चकृत्वो वा करण-
मुपदिश्यते। तदुच्यते,—

बहुलमयुग्मसंहतम् ॥ ११ ॥

बहुलं बहुतृणकम्। अयुग्मसंहतं,—युग्मञ्च संहतञ्च युग्मसंह-
तम्—इति द्वन्द्वैकवद्भावः, तन्नभवतीत्ययुग्मसंहतम्, अयुग्ममसंह-
तञ्चेत्यर्थः। केचित्तथैवपठन्ति। असंहतम् असंलग्नं पृथक्
पृथगित्यनर्थान्तरम्। तदेवं प्रतिदिशम् अयुग्मैः परस्परमसंलग्नै
र्बहुभिस्तृणै रेकम्परिस्तरणं सम्पद्यते, तस्य खल्वस्य त्रिः पञ्चकृत्वो
वा करणम् उपदिश्यते—इत्यर्थः। अतएव तत्कारेणाप्यभि-
हितं—'प्रतिदिशं दर्भत्रयेणावृतानि कृत्वा तेषां मूलानि तथै-
वाच्छादयेत्'—इति। तत्र दर्भत्रयेणेति न नियमपरं वाक्यम्।
कस्मात्?। परिस्तरणे दर्भसंख्यानियमाभावात्। तच्च पुर-
स्तादुदाहृतमस्माभिः। तदिदं परिस्तरणं पूर्वस्याम् उत्तरान्ता-
द्दक्षिणान्तं यावत्, दक्षिणस्यां पूर्वान्तात् पश्चिमान्तं यावत्, यथा
दक्षिणस्यां तथोत्तरस्यां, यथा पूर्वस्यां तथा पश्चाद्दिशि कर्त्तव्यम्।
कुतः पुनरेवमुच्यते?। कुशानां प्रागग्रत्वानुरोधात्। 'प्राचो-
सौम्यापराजिता'—इति च स्मरणात्।

तदेतत् परिस्तरण स्वरूप प्रतिपादनपरं सूत्रम्,—'बहुलम-
युग्मसंहतम्'—इति, न तु 'त्रिवृतं पञ्चवृतं वा'—इत्यस्य विशेषा-
र्थम्; बहुलमयुग्मम्—इत्यनुवादापत्तेः। यच्च,—"त्रिवृतं पञ्च-
वृतं वा—इत्यनेनैवायुग्मत्वे सिद्धे अयुग्ममित्येकावृतस्यापि प्राप्त्य-

र्थम्। तथाच गृह्यान्तरम्। सकृत् त्रिर्वा प्रदक्षिणं प्रतिदिश-मग्नेस्तृणोति"—इति रघुनन्दनादृतं भट्ट नारायणादि मतम्। तदसङ्गतम्। नह्येतत् विशेषार्थं सूत्रं, किन्तर्हि?—परिस्तरण स्वरूप प्रतिपादनार्थम्—इत्यवोचाम। न खल्वदर्शिते परिस्तरण स्वरूपे त्रिवृतं पञ्चवृतं वा—इति समञ्जसं वचनम्। अदर्शिते हि स्वरूपे कस्य त्रिवृत् पञ्चवृद्वा उपदिश्येत। तदिदम् अर्थतः सूत्रं—'तत्रो-दकेषु मन्त्राख्या'—इति वदादितो द्रष्टव्यम्। तदेवं स्थिते अयु-ग्मम्—इत्यस्य कुत एवानुवादापत्तिः?—येन तत्परिहारार्थम् एकाध्याहृत् परिकल्प्येत। कथमन्यथा बहुलम्—इत्यत्र अनु-वादता परिहरणीया?। नित्यानुवाद तया परिहार स्त्वन्यत्रापि समानः। गृह्यान्तरमपि प्रदक्षिणं परिस्तरणं विदधत् कौथुमा-दीनाम् अन्यत्रावतिष्ठते। 'पुरस्ताद्दक्षिणत उत्तरतः पश्चात्'—इति खल्वाचार्यः सूत्रयाञ्चकार ॥ ११ ॥ ० ॥

अथेदानीं परिस्तरण प्रकारोऽभिधीयते,—

## प्रागग्रैरग्रैर्मूलानिच्छादयन् ॥ १२ ॥

प्रागग्रैः प्राक्स्तृताग्रैः कुशैः पश्चादास्तृते रग्रैरग्रप्रदेशै र्नमध्ये र्नापिमूलैः पूर्वास्तृतानां कुशानां मूलानि च्छादयन् सूक्ष्मम् परिस्तृणुयात् ॥ १२ ॥ ० ॥

एकस्तावदयं परिस्तरण प्रकार उक्तः, अथेदानीम् अन्योपि उच्यते,—

पश्चाद्वाऽऽस्तीर्य्य दक्षिणतः प्राञ्चं प्रकर्षति तथोत्तरेण ॥ १३ ॥

पश्चाद्दिश्यग्नेरास्तीर्य दक्षिणतः प्राञ्चं प्रकर्षति प्रकिरन्नयति, तथा तेनैव प्रकारेणोत्तरेणोत्तरतः प्राञ्चं प्रकर्षति। उभयहस्तेन कुशान् गृहीत्वा दक्षिणहस्तगृहीतैर्दक्षिणतः परिस्तृणोति सव्यहस्तगृहीतैरपि सव्यतः—इति भट्टनारायणोपाध्यायाः ॥ १३ ॥ ० ॥

दक्षिणोत्तराण्यग्राणि कुर्य्यात् ॥ १४ ॥

दक्षिणानि च तान्युत्तराणिचेति दक्षिणोत्तराणि कुशाग्राणि कुर्य्यात्। दक्षिणहस्तगृहीतानि कुशाग्राण्युत्तराणि उपरिष्टात्—ऊर्द्धं पूर्वस्यांदिशि—इत्येतत्। अर्थात् सव्यहस्तगृहीतान्यधराणि पश्चाद्दिशीत्यर्थः।

एवं वा,—

दक्षिणानि च उत्तराणि च—इति विग्रहः। दक्षिणस्यामग्राणि दक्षिणदिग्गतानि, उत्तरस्याञ्चोत्तराणि—उत्तरदिग्गतानि कुर्य्यात् ॥ १४ ॥ ० ॥

एष परिस्तरणन्यायः सर्व्वेष्वाहुतिमत्सु ॥ १५ ॥

एषोऽनन्तरोक्तः परिस्तरण प्रकारः सर्व्वेष्वाहुतिमत्सु—यत्र यत्र श्रूयते तत्र तत्र भवत्यन्यत्र सायं प्रातर्होमादिभ्यः ॥ १५ ॥ ० ॥

कुशानां तत्प्रतिनिधीनाञ्च खल्वभावे,—

परिधीनप्येके कुर्व्वन्ति—शामीलान् पार्णान् वा ॥१६॥

परिधीन्—

"बाहुमात्राः परिधय ऋजवः सत्वचोऽव्रणाः।
त्रयोभवन्त्यशीर्णाग्रा एकेषान्तु चतुर्दिशम्"।

इति कर्म्मप्रदीपोक्त लक्षण संख्याकान्, एके अन्ये आचार्य्याः कुर्वन्ति परिस्तरणार्थम्। तानेव विशिनष्टि। शामीलान् शमीमयान्, तद-सम्भवे पार्णान् पलाशमयान् वा। परिधीनां विन्यास प्रकार माह कर्म्मप्रदीपः।

"प्रागग्रावभितः पश्चादुदगग्र मथापरम्।
न्यसेत् परिधि मन्यञ्चेदुदगग्रः स पूर्वतः"।

इति ॥ १६ ॥ ० ॥

उत्तरतोऽपां पूर्णःस्रुवः प्रणीता ॥ १७ ॥

उत्तरतः उत्तरस्यां दिश्यग्नेरपाम् उदकेन पूर्णः सम्भृतः स्रुवो यथोक्तलक्षणः प्रणीता भवति। तदनेन संस्कार विशेषादप एवाभिधीयन्ते ताभिश्च पर्य्युक्षण पवित्रमार्ज्जनादय उदकार्थाः कर्त्तव्याः—इत्यभिप्रायः। "प्रणीताभिरुदकार्थः कार्य्यः"—इति च ग्रन्थान्तरम् ॥ १७ ॥ ० ॥

भावे नवा स्यादित्येके ॥ १८ ॥

भावः सत्तेत्यनर्थान्तरम्। भावे अन्यस्य महतः पात्रस्य अनन्त-

रोक्त: स्नुवःस्याद्वा अदृष्टार्थम्, नवा स्यात्,—इत्येके आचार्या मन्यन्ते ॥ १८ ॥ ० ॥

वर्हिषि स्थालीपाकमासाद्येध्ममभ्याधायाज्यं संस्कुरुते ॥ १९ ॥

वर्हिषि आस्तृते, स्थालीपाकं चरुम् आसाद्य स्थापयित्वा, इध्ममित्येकवचनं जात्यपेक्षम्, इध्मान् यथोक्तान् अभ्याधाय,—

"इध्मोऽप्येधार्थमेवाग्नेर्हविराहुतिषु स्मृतः" ।

इति कर्म्मप्रदीपदर्शनादमन्त्रकमग्नौ प्रक्षिप्य अन्वाक्रम होमादिभ्यः । इज्यते अनेनेत्याज्यं संस्कुरुते वक्ष्यमाणेन विधिना ॥ १९ ॥ ० ॥

किन्तदाज्यम्?—इत्यत आह,—

सर्पिस्तैलं दधि पयो यवागूं वा ॥ २० ॥

सर्पिर्घृतम्, तदलाभे तैलम् तिलस्नेहम्, तदसम्भवे दधि, तदभावे- पयः क्षीरम्, तस्याप्यलाभे यवागूं वा, संस्कुरुते—इति प्रतिपदम् सम्बध्यते । सर्वमेतदाज्यम् उच्यते,—इत्यभिप्रायः । तदाह गृह्यासंग्रहः ।

"अग्निनाचैवमन्त्रेण पवित्रेण च चक्षुषा ।
चतुर्भिरेव यत् पूतं तदाज्यमितरद्धृतम् ।
घृतं वा यदि वा तैलं पयो वा यदि यावकम् ।
आज्यस्थाने नियुक्तानामाज्यशब्दोविधीयते" ।

इति ॥ २० ॥ ० ॥

* तत एव बर्हिषः प्रादेशमात्रे पवित्रे कुरुते ॥ २१ ॥

ततस्तस्मादास्तीर्ण शेषादेव बर्हिषः सकाशात्,—इति अन्यद् बर्हिरास्तृतं व्यवच्छिद्यते। यस्मादेव बर्हिषः कुशमादाय आस्तरणं कृतं, तस्मादेव बर्हिषः,—इत्यर्थः। अन्येत्वाहुः,—तत एव आस्तृता देव बर्हिषः—इति। तदसङ्गतम्। कस्मात्?। उच्यते। न खल्वेतत् सम्भवति एकमेव बर्हिः स्तरणाय च पवित्र करणाय च—इति। नचैकत्रविनियुक्तानां बर्हिषाम् असति विशेषवचने अन्यत्र विनियोगः शक्यते वक्तुम्। न खल्वेकैव कुक्कुटी रन्धनाय च कल्प्यते प्रसवाय च!। इदमेव विशेषवचनम्—इति चेत्, न, प्रमाणाभावात्। नास्ति अत्र किञ्चित् प्रमाणं भवदभिमत एवार्थोऽस्यवचनस्य—इति। अन्यथा खल्वेतदस्माभिर्व्याख्यातम्। अस्ति च विनियुक्तशेषं बर्हिरिति तदेव ग्रहीतुम् उचितम्। तथा चोक्तम्। "विरोधे च श्रुति विशेषादव्यक्तः शेषे"—इति। ततो विस्तीर्ण शेषादिति च भट्टभाष्यम्।

प्रादेशमात्रे विस्तृततर्ज्जन्यङ्गुष्ठप्रमाणे (प्रामाणार्थे मात्रट्) पवित्रे कुरुते। द्विवचनं दलापेक्षम्। प्रादेशमात्रस्य बर्हिर्द्वयस्य खल्वत्र पवित्रीकरणम् उपदिश्यते। नहि द्विदलपवित्रस्य द्वित्वं शक्यते वक्तुम्; 'बर्हिषः प्रादेशमात्रे'—इत्यभिधानात्। तथाच कर्म्मप्रदीपः।

"अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्।

एतदेव हि पिञ्जल्या लक्षणं समुदाहृतम्।
आज्यस्योत्पवनार्थं यत्तदप्येतावदेव तु"।

इति। "समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे करोति"—इति च ब्राह्मणम् ॥ २१ ॥ ० ॥

**ओषधिमन्तर्धाय च्छिनत्ति न नखेन—पवित्रे स्थो-वैष्णव्याविति ॥ २२ ॥**

ओषधिं व्रीह्यादिकम् अन्तर्धाय अन्तराकृत्वा, 'पवित्रे स्थो वैष्णव्यौ'—इत्यनेन मन्त्रेण च्छिनत्ति वृश्चति। न नखेन न करजेन,—इति ओषध्यन्यदप्यन्तर्धायच्छिनत्ति,—इति दर्शयति ॥ २२ ॥ ० ॥

**अथैने अद्भिरनुमार्ष्टि,—विष्णोर्म्मनसा पूते स्थ इति ॥ २३ ॥**

अथानन्तर मेवाविमुञ्चन् एने पवित्रे अद्भिः प्रणीताद्भिरनुमार्ष्टि सव्यहस्तेन मूलप्रदेशे गृहीत्वा दक्षिणहस्तेनानुमृज्यात् विष्णोर्म्मनसा पूते स्थः—इत्यनेन मन्त्रेण ॥ २३ ॥ ० ॥

**सम्पूयोत् पुनात्युदगग्राभ्यां पवित्राभ्याम् ॥ २४ ॥**

प्रकृतत्वादाज्यं, सम्पूय—

"पवित्रमन्तराकृत्वा स्थाल्यामाज्यं समावपेत्"।

इत्युक्तक्रमेण, आज्यस्थाल्याम्—

"आज्यस्थाली च कर्त्तव्या तैजसद्रव्यसम्भवा।
महीमयी वा कर्त्तव्या सर्व्वास्वाज्याहुतिषु च।
आज्यस्थाल्याः प्रमाणन्तु यथा कामन्तु कारयेत्।
सुदृढ़ामव्रणां भद्रामाज्यस्थालीं प्रचक्षते"।

इति कर्म्मप्रदीपोक्तलक्षणायां निधाय। मक्षिकादिकमपनीय,— इति सरला। उदगग्राभ्यां पवित्राभ्यां पवित्रघटकदलाभ्याम्— इत्यर्थः। उत्पुनाति ऊर्द्धं शोधयति॥ २४॥ ०॥

कथम् उत्पुनाति?। तदुच्यते—

**अङ्गुष्ठाभ्याञ्चोपकनिष्ठिकाभ्याञ्चाङ्गुलिभ्यामभिसंगृह्य प्राक्शस्त्रिरुत्पुनाति,—देवस्त्वा सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्य्यस्य रश्मिभिरिति सकृद् यजुषा द्विस्तूष्णीम्॥ २५॥**

अङ्गुष्ठाभ्याम्—इत्येवमादि द्विवचनं पाणिद्वयार्थम्। अङ्गुष्ठाभ्यामुपकनिष्ठिकाभ्याञ्चाङ्गुलिभ्याम् अभिसंगृह्य प्रकृतत्वात् पवित्रे गृहीत्वा। मूलदेशस्य सव्यहस्तेन पूर्व्वमेव धृतत्वात् अग्रे दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां मूले च वामहस्तानामिकाङ्गुष्ठाभ्यां गृहीत्वा, "अन्तयोर्गृहीत्वाऽङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्याम्"— इति गृह्यान्तरदर्शनात् कुशपत्रयोरुदगग्रत्वानुरोधात् उत्पवनस्य सौकर्य्यार्थञ्च दक्षिणहस्तोपरिभावेनाधोकृतसव्यहस्तपाणिरित्यर्थः। प्राक्शः प्रागग्रं यथा भवति तथा त्रिः वारत्रयम् उत्पुनाति आज्यमग्नौ निःक्षिपति। त्रिरित्येतद्विशिनष्टि,—'देवस्त्वा'—

इत्यनेन यजुषा सकृदेकवारं, तूष्णीम् अमन्त्रकञ्च द्वि र्व्वारद्वयम्॥ २५॥ ०॥

## अथैने अद्भिरभ्युक्ष्याग्नावप्युत्सृजेत् ॥ २६ ॥

अथानन्तर मेवाविमुञ्चन्नेने पवित्रे सव्येन गृहीत्वा दक्षिणेन,प्रणोताद्भिरभ्युक्ष्य दक्षिणेनैव अग्नौ अनुत्सृजेत् त्यजेत्। अपि रुपसर्गः॥ २६॥ ०॥

## अथैतदाज्यमधिश्रित्योदगुदासयेत् ॥ २७ ॥

अथानन्तरम् एतदनन्तरोक्तं सर्पिरादिरूपमाज्यम् अधिश्रित्य अग्नेरुपरिकृत्वा उदगुत्तरस्याम् अग्नेः, उदासयेत् स्थापयेत्, आज्यम् आज्यपात्रम्—इत्यर्थः। "घृत तैल पयसाम् अधिश्रयणं कुर्य्यान्नदधः यवाग्वास्तु विकल्पः"—इति भट्टभाष्यम्। तदनेन आज्यपात्रम् अपि संस्क्रियते—इति; सकृत् संस्कृताज्यपात्रे यदाज्यान्तरं निःक्षिप्यते, न तत्र संस्कारान्तरापेक्षा। तदाह गृह्यासंग्रहः।

"यथा सिमन्तिनी नारी पूर्व्वगर्भेण संस्कृता।
एव माज्यस्य संस्कारः संस्कार विधिचोदितः"।

इति। तथावसरेवाच्यम्॥ २७॥ ०॥

## एव माज्यस्य संस्करणकल्पो भवतीति ॥ २८॥

एवम् अनेन प्रकारेण आज्यस्य संस्करणकल्पो भवति, यत्र यत्राज्यं संस्क्रियते तत्र तत्रैवं कर्त्तव्यम्—इत्यभिप्रायः। इतिः॰ काण्डिका-

परिसमाप्त्यर्थः, स्रुवादि संस्कार समुच्चयार्थो वा। तथाच गृह्यान्तरम्।"स्रुवं प्रतप्य दर्भैः संमृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यात्"— इति। कर्मप्रदीपेप्याह।

"तेषां प्राक्शः कुशैः कार्य्यः सम्प्रमार्गो जुह्वता ।
प्रतापनञ्च लिप्तानां प्रक्षाल्योष्णेन वारिणा" ।

इति ॥ २८ ॥ ० ॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये प्रथमप्रपाठकस्य सप्तमी काण्डिका ॥ ० ॥

## गोभिलीयगृह्यसूत्रे

प्रथमप्रपाठके अष्टमी कण्डिका।



### पूर्व्वमाज्यमपरःस्थालीपाकः ॥ १ ॥

पूर्व्वापरदेशत्वादनयोरपि पूर्व्वापर व्यपदेशः। पूर्व्वस्याम् आज्यम् आसादयितव्यम्, अपरस्याञ्च स्थालीपाकः आसादयितव्यः—इति वाक्यशेषः। पूर्व्वं खल्वग्नेरुत्तरतः समासादितयोरनयोरिदानीं क्रियासौकर्य्यार्थम् अग्नेः पश्चिमतः पूर्व्वापरभावेन समासादनम्—इति बोद्धव्यम्। तथाच गृह्यान्तरम्। "होत्रग्न्योरन्तरा आज्यहविषी आसादयेत्"—इति। इदानीं हविषः पश्चिमतः समासादनादेव वक्ष्यत्याचार्य्यः,—"अथैतद्धविरुच्छिष्टमुदगुद्वास्य"—इति ॥ १ ॥ ० ॥

### पर्य्युक्ष्य स्थालीपाकमाज्यमानीय मेक्षणेनोपघातं होतुमेवोपक्रमते ॥ २ ॥

अदितेऽनुमन्यस्व,—इत्येवमादिना अग्निं पर्य्युक्ष्य स्थालीपाकेचरौ आज्यम् आनीय प्रक्षिप्य मेक्षणेन यथोक्तेन उपघातम्—उपघातनामा यथा भवति होमः तथा होतुमेव उपक्रमते प्रारभते

(विध्यर्थे लट्) प्रारभेत—इत्यर्थः। उपघातं होतुम्, उपघात-नामानं होमं कर्त्तुम्—इति वा व्याख्येयम्। एव शब्दोऽवधारणार्थः। होतुमेवोपक्रमते, नान्यत् किञ्चिदभिघारणादिकं कुर्य्यादित्यर्थः। "चरावाज्यमानीय प्रपदं त्रिरूपांशु जपित्वा समिधमादाय जुहुयादेव"—इति भट्टभाष्यम्। तदनेनोपघात होमे अभिघारणादिकम् आज्यभागौ च न भवतीति सूचयति। द्विविधः किल होमो याज्ञिकप्रसिद्धः,—उपघातः उपस्तीर्णाभिघारितश्च। चरावाज्यं निःक्षिप्य विनैव अभिघारणादिकं यद्धूयते, स उपघातः, यच्च स्रुचि स्रुवेणाज्येन अभिघार्य्य चरुमवदाय पुनराज्येनाभिघार्य्य हूयते, तदुपस्तीर्णाभिघारितमित्याख्यायते। स्रुवेण स्रुचि यदाज्यं प्रथमं गृह्यते तदुपस्तीर्णं; हविरवदायानन्तरं यदाज्यं दीयते तदभिधारितम्—इति व्यपदिश्यते। यथोपस्तीर्णाभिघारितं होतव्यं तदुपरिष्टाद्व्युत्पादयिष्यति, यथोपघात होमस्तदत्र सूच्यते। तथाच गृह्यासंग्रहः।

"पाणिना मेक्षणेनाथ स्रुवेणैव तु यद्धविः।
हूयते चानुपस्तीर्य्य उपघातः स उच्यते।
यद्युपघातं जुहुयाच्चरावाज्यं समावपेत्।
मेक्षणेन तु होतव्यं नाज्यभागौ न स्विष्टकृत्"।

इति। तदेवम्, उपघातः—इति पारिभाषिकी संज्ञा होमविशेषस्य। तस्मात्—हिंसार्थानामेककर्मकादिति तृतीयान्तोपपदे णमा उपघातपदव्युत्पत्तिरप्रामाणिकी। उपघातं जुहुयात्—इत्यादौ तृतीयान्तोपपदाभावाच्च। स खल्वयम् उपघात होमः समस्तगी-

यत्र पितृयज्ञचर्व्वाः, अन्यत्रापि बहुदैवत्ये चरौ, आन्वष्टक्यचरौ च भवति। तदाह कर्म्मप्रदीपः।

"चरौ समवनीये तु पितृयज्ञचरौ तथा।
होतव्यं मेक्षणेनान्यदुपस्तीर्य्याभिघारितम्"।

इति।

"चरौ तु बहुदैवत्ये होमस्स्योपघातवत्"।

इति च स्मरणम्। वक्ष्यति चान्वष्टक्ये,—"कंसे चरू समवदाय-मेक्षणेनोपघातं जुहुयात्"—इति। तत्रान्वष्टक्य पितृयज्ञयोः क्षिप्रहोमधर्म्मः समवनीये तु ब्रह्मोपवेशनादि तन्त्रधर्म्मः,—इति भट्टनारायणोपाध्यायाः। वृषोत्सर्ग होमस्य तु बहुदैवत्येपि नोपघातत्वम्। तदाह कर्म्मप्रदीपः।

"एतेभ्य एव जुहुयान्मेक्षणेनावदाय च।
स्रुच्याहुतीश्वरोः पृथक् सिञ्चेदाज्याभिघारितम्"।

इति।

"चतुर्गृहीतं कृत्वाऽऽज्य माभि र्ऋग्भिः पृथक् पृथक्।
स्वाहाकारावसानाभिर्जुहुयाद्विधिवत् सदा"।

इति च॥ २॥ ०॥

## यद्युवा उपस्तीर्णाभिघारितं जुहुषेत्,—आज्यभागावेव प्रथमौ जुहुयात्॥ ३॥

उ वै—इत्यनर्थकौ निपातौ। यदि उपस्तीर्णाभिघारितं यथोक्त लक्षणं होतुमिच्छेत्, तर्हि आज्यभागावेव प्रथमौ जुहुयात्।

एवकारोऽवधारणार्थः। यद्युपस्तीर्णाभिघारितं जुहुषेत्, तदैव आज्य भागौ प्रथमौ जुहुयात्—इत्येवमवध्रियते। तदिमावाज्य-भागौ उपघात होमे न भवतः—इति दर्शयति।

भट्टनारायणस्त्वाह—'यत्र यत्र ब्रह्मोपवेशनादि, तत्र तत्रो-भयोर्विकल्पयोराज्यभागौ प्रथमौ जुहुयादेव'—इति। सेयं निर्व्वासनिका व्यवस्था नास्माभिराद्रियते। कस्मात्? । उप-स्तीर्णाभिघारितेनानयो राज्यभागयो रेकवाक्यत्वात्। प्रमाण-विशेषस्य चाभावात्। यद्युपस्तीर्णाभिघारितं होतुमिच्छेत्—आज्यभागौ जुहुयात्—इति स्पष्टैकवाक्यता। न खलु भङ्क्का-वाक्यम् अन्यत्र कल्पयितुम् उचितौ। आचार्य्यपुत्त्रश्च उपघात-होमे साक्षादाज्यभागौ निषिषेध। तच्चोदाहृतम् अस्माभिः पूर्व्वस्मिन् सूत्रे। वक्ष्यति चाचार्य्यः—'नाज्यभागौ न स्विष्टकृत्'—इति।

केचिदत्र,—जुहुषेत्—इत्यत्र जुहुयादिति प्रकल्प्य सूत्रद्वयं कल्पयन्ति। तत्र च,—यद्युवा उपस्तीर्णाभिघारितं जुहुयात्—इत्येकम्, आज्यभागावेव प्रथमौ जुहुयात्—इति चापरं सूत्रं मन्यन्ते। यद्युवा—इत्येतस्य च अथवा—इत्यर्थम् आचक्षते। तदनाकरम्॥ ३॥ ०॥

कथमाज्यभागौ जुहुयात्? । तदुच्यते।

**चतुर्गृहीतमाज्यं गृहीत्वा पञ्चावत्तन्तु भृगूणाम्, अग्नये स्वाहेत्युत्तरतः सोमाय स्वाहेति दक्षिणतः प्राक्-प्रोजुहुयात्॥ ४॥**

चतुर्गृहीतं चतुःकृत्वो गृहीतम् । केन गृहीतम्? । स्रुवेण । कस्मात्? । आज्यधारणे तस्य गुणत्वात् । कस्मिन् गृहीतम्? । स्रुचि । कस्मात्? । 'जुहूः प्रदाने गुणभूता'—इति तान्त्रिकसमयात्। "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति, यस्य खादिरी न सोऽन्नात् परिच्यवते"—इति च श्रवणात्। तथा चोक्तम्। "द्रव्य संस्कार कर्म्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्"—इति। "अनेन गृहीतं जुह्वा जुहोति"—इति च गृह्यान्तरम्। तदेवं स्रुवेण स्रुचि चतुर्गृहीतम् आज्यं गृहीत्वा,—(अश्वालम्भनमालभेत—इत्यादिवत् इहापि प्रत्ययार्थ मात्र विवक्षा) कृत्वा—इत्यर्थः। पञ्चात्तं पञ्चकृत्वो गृहीतं तु भृगूणाम् अपत्यप्रत्ययस्य लोपात् भृगोरपत्यानामित्यर्थः। 'भृगूणां भृगुगोत्राणाम्'—इति सरलावृत्तिरप्येतमेवार्थमाह। 'भृगुगोत्राणां भार्गवप्रवराणाञ्च'—इति भवदेवभट्टः। 'भार्गवप्रवराणाम्'—इति भट्टनारायणोपाध्यायः। तन्त्रान्तरकारास्तु स्मरन्ति।

"जामदग्न्या वत्सविदा वार्ष्टिषेणस्तथैव च।
भार्गवाश्च्यवना श्चौर्व्वाः पञ्चावत्तिन ईरिताः"।

इति। तदस्तु किं विस्तरेण।

सूत्रशेषम् इदानीं विव्रियते। तदेवं स्रुचि आज्यं गृहीत्वा अग्नये स्वाहा—इत्यग्नरुत्तरभागे प्रागगतं जुहुयात्। एवं तथैव गृहीत्वा, सोमाय स्वाहा—इत्यग्नेर्दक्षिणभागे प्रागगतं जुहुयात्। अन्यास्त्वाहुतयोऽग्नेर्मध्यभागे होतव्याः—इत्यर्थादवगम्यते। तथाच शांख्यायन गृह्यम्। "उत्तरमाग्नेयं दक्षिणं सौम्यं मध्येऽन्याहुतयः"—

इति। वक्ष्यति च आचार्य्यः,—"अग्नयेस्वाहेतिमध्ये जुहुयात्"—इति ॥ ४ ॥ ० ॥

अथ हविष उपस्तीर्य्यावद्यति ॥ ५ ॥

अथानन्तरं हविषश्चरोरवद्यति,—अवदानंचरुं गृह्णातीत्यर्थः। किं कृत्वा?। उपस्तीर्य्य—प्रकृतत्वादाज्यस्रुवेणास्राव्य, स्रुचम्—इत्यर्थात् ॥ ५ ॥ ० ॥

कथम् अवद्यति?। तदुच्यते;—

मध्यात् पूर्व्वार्द्धाच्चतुरवत्तीचेद्भवति, मध्यात् पूर्व्वार्द्धात् पश्चार्द्धादिति पञ्चावत्तीचेद्भवति ॥ ६ ॥

मध्यात् चरोर्मध्यप्रदेशात्। पूर्व्वार्द्धात्, चरोरित्येव। चशब्दश्च समुच्चयार्थोलुप्तवत् द्रष्टव्यः। मध्यात् पूर्व्वार्द्धाच्च—इत्यर्थः। तथाच गृह्यान्तरम्। "मध्यात पूर्व्वार्द्धाच्च हविषोऽवद्यति"—इति। चतुरवत्तो, चत्वार्य्यवदानानि यस्य, सोयं चतुरवत्तो—इत्युच्यते। चेद् यदि चतुरवत्तो भवत्यवदाता, तर्हि चरोर्मध्यात् पूर्वार्द्धाच्चावद्यति—इति गतम् मंतव्यः। एवंखल्वाज्याभिघारणं पूर्व्ववदानद्वयं पुनरभिघारणञ्च—इति चत्वार्य्यवदानानि सम्पद्यन्ते। यदि पुनः पञ्चावत्तो भवत्यवदाता, तदा चरोर्मध्यात् पूर्वार्द्धात् पश्चार्द्धात्—पश्चिमार्द्धाच्च अवद्यतीत्यर्थः। इति मन्त्रः

चशब्दार्थः समुच्चये। इति एवम् अवदानम्—इति वा व्याख्येयम् ॥ ६ ॥ ० ॥

अभिघारयत्यवदानानि ॥ ७ ॥

अभिघारयत्याज्यस्रुवेणाप्लावयति अवदानानि यथाश्रुति गृहीतानि। बहुवचनं व्यक्तिभेदापेक्षया, वक्ष्यमाणत्रिर्होमपक्षापेक्षया वा ॥ ७ ॥ ० ॥

प्रत्यनक्त्यवदानस्थानान्ययातयामतायै ॥ ८ ॥

अवदानानां स्थानान्यवदानस्थानानि। यस्मात् प्रदेशादवद्यते तदवदानस्थानम्। तान्यवदानस्थानानि मेक्षणक्षतस्थानानीत्यर्थः। बहुवचनं पूर्ववद्वर्णनीयम्। तानि खल्ववदानस्थानानि प्रति, अनक्ति अक्तानि करोति आज्यस्रुवेणाप्लावयतीत्येतत्। किमर्थम् अनक्ति?। अयातयामतायै। यागायोग्यता यातयामतेत्युच्यते। न यातयामता अयातयामता, तस्यै। एतदुक्तं भवति। मेक्षणक्षतेन यातयामता चरो रुत्पद्यते, आज्याप्लावनेन पुनरयातयामता तस्य भवति—इति ॥ ८ ॥ ० ॥

एवं खल्ववदाय;—

अग्नयेस्वाहेति मध्ये जुहुयात् ॥ ९ ॥

मध्ये अग्नेरेव ॥ ९ ॥ ० ॥

कति जुहुयात्?। उच्यते,—

**सकृद्वा चिर्व्वैतेन कल्पेन ॥ १० ॥**

एतेन कल्पेनानन्तरोक्तयाऽनया आवृता,—इत्यादरार्थमुक्तम्। सकृद्वा चिर्व्वा जुहुयात्। वाशब्दद्वयं तुल्यवद्विकल्पार्थम्। चित्वपक्षे च "एका देया तिस्रो देयाः"—इत्यादिवत् श्रेयसो भूयस्त्वं कल्पयितव्यम्। अन्येत्वाहुः,—अभात्र विकल्पोयम्, त्रित्वपक्षाशक्तौ सकृत्—इति॥ १०॥ ०॥

**अथ स्विष्टकृत उपस्तीर्य्यावद्यत्युत्तरार्द्धपूर्व्वार्द्धात् सकृदेवभूयिष्ठं, द्विरभिघारयेत् ॥ ११ ॥**

अथ प्रधान होमानन्तरं स्विष्टकृतोऽवद्यति स्विष्टकृदर्थम् अवद्यति। किं कृत्वा?। उपस्तीर्य्य—अज्यस्रुवेण स्रुचम् अप्लाव्य। कथम्?। चरोरुत्तरार्द्धपूर्व्वार्द्धात्। उत्तरार्द्धश्च पूर्व्वार्द्धश्च तस्मात्। अपराजिताया दिशः—इत्येतत्। दिगन्तरालानि खलु दिशोर्दिशोर्लक्षण साङ्कर्य्यात् पदार्थतत्वनिपुणा व्यवहरन्ति। तथा चोक्तम्। "तथा दिगन्तरालानि"—इति। अर्द्धशब्दः खल्वत्र विषमांश वाची। अपराजितायादिशस्तदवद्यते, तर्हि उत्तरार्द्धादप्यवद्यते पूर्व्वार्द्धादपि—इति शक्यते वक्तुम्। तस्मादपराजिताया दिशः सकृदेकवार मेव भूयिष्ठं बहुतरम् अवद्यति। अवद्य च द्विरभिघारयेत् वारद्वयम् आज्य स्रुवणाप्लावयेत्। एवं किल चत्वार्य्यवदानानि सम्पद्यन्ते॥ ११॥ ०॥

**यद्यु पञ्चावत्तीस्यात् द्विरुपस्तीर्य्यावदाय द्विरभिघारयेत्॥ १२॥**

उ—इत्यनर्थकोनिपातः। यदि पञ्चावत्ती भवेत्, तर्हि द्विराप्लाव्य अवदाय पुन र्द्विराप्लावयेत् पञ्चावदान सम्पत्त्यर्थम्। यद्य वा—इति पाठे, उ वा—इति निपातौ, यद्युवा—इति वा निपात समुदायो यद्यर्थः॥ १२ ॥ ० ॥

न प्रत्यनक्त्यवदानस्थानं यातयामतायै ॥ १३ ॥

स्विष्टकृतोऽवद्य च अवदानस्थानं यातयामतायै यातयामतानिवृत्तये न प्रत्यनक्ति नाज्यस्रुवेणाप्लावयति। कुतः?। स्विष्टकृद्धोमानन्तरं तेन चरुणा होमान्तराभावात्, होमार्थमेव चाप्लावनस्य विहितत्वात्। तस्मादिद नीं यातयामतायाम् अपि नास्ति क्षतिरिति न प्रत्यक्तव्यम् अवदानस्थानम्—इत्यभिप्रायः। तदत्र यातयामतायै—इति,—

"नरकाय प्रदातव्यो दीपः सम्पूज्य देवताः"।

इतिवन्निवृत्तौ तादर्थ्यचतुर्थी बोद्धव्या। यातयामतायाः—इति पाठेऽपि यातयामतां निवर्त्तयितुम्—इति स एवार्थः। अन्येतु व्याचक्षते,—'यातयामतया इति हेतौ पञ्चमी। हेतोर्व्वचनात् यत्रायातयामता इष्यते, तत्रावदानस्थानं प्रत्यनक्ति, इदानोन्तु सा नेष्यते—इति न प्रत्यनक्त्यवदानस्थानम्'—इति॥ १३ ॥ ० ॥

अग्नये स्विष्टकृते स्वाहेत्युत्तरार्द्धपूर्वार्द्धे जुहुयात् ॥ १४ ॥

उत्तरार्द्धपूर्वार्द्धे अग्नेरेव। कृतभाष्य मन्यत्॥ १४ ॥ ० ॥

## महाव्याहृतिभि राज्येनाभिजुहुयात् ॥ १५ ॥

भूर्भुवः स्वरिति महाव्याहृतयस्तिस्रः प्रसिद्धाः। कर्म्मप्रदीपे-प्याह।

"भूराद्या स्तिस्र एवैता महाव्याहृतयोऽव्ययाः"।

इति। ताभिर्महाव्याहृतिभिस्तिसृभिराज्येन (द्रवद्रव्यकत्वात् स्रुवेण) अभिजुहुयात् आहुतित्रयम्। अभिरुपसर्गः। स खल्वयं महा-व्याहृति होमः चरुहोमात् परस्तात् एव कर्त्तव्यः न तु पुरस्ता-दपि। कस्मात्?। इदानीमेवोपदेशात्। आज्यहोमात्तु पुरस्तात् परस्ताच्च कर्त्तव्यः,—इत्युपरिष्टाद्वक्ष्यति ॥ १५ ॥ ० ॥

## प्राक् स्विष्टकृत आवापः ॥ १६ ॥

प्राक् पूर्वं स्विष्टकृतः स्विष्टकृद्धोमात्, आ उप्यते—इत्यावापः प्रधा-नहोमः कर्त्तव्यः,—इति सूत्रार्थः। एवञ्च मुख्यहोमे लक्षते यदि चरुर्नष्टो दुष्टो वा भवति तदाऽन्यः पाच्यः, मुख्ये कृते चरुनाश-दुष्टीस्यातां तदा आज्येनैव स्विष्टकृद्धोमः—इति सरला। स खल्वयम् अर्थो नातीव समीचीनः। कुतः?। "एकदेशद्रव्यश्चोत्पत्तौ विद्यमान संयोगात्"—इति सिद्धान्तात् स्विष्टकृद्धोमस्य प्रतिपत्ति-त्वात्। प्रतिपत्तेश्च प्रतिपाद्याभावे लोप एव आकरे निरूपितः। यजतित्वेऽपि स्विष्टकृतः प्रस्तरप्रहरणवत् प्रतिपत्तित्वं न विरुध्यते। शेष श्रुतिश्च न शेषिणं प्रयोजयति। नचेत् शेषिणं प्रयोजयति; न तरां तत्प्रतिनिधिम् अपि। शेष प्रतिनिधिं तर्हि प्रयोजयतु?। न—इति ब्रूमः। कस्मात्?। विद्यमानसंयोगादेव। न खल्वेतत्

शेषम् अपि प्रयोजयितुं शक्नोति, प्रतिपत्तेः प्रतिपाद्यप्रयोजकतायाम् असामर्थ्यात्। सति प्रतिपाद्ये खल्वियं प्रवर्त्तते। अन्यथा अर्थकर्म्मणः प्रतिपत्तेर्व्विशेषो न स्यात्। तस्मात् यथा,—सर्व्वावदानेन शेषाभावात् शेषाज्यात् स्विष्टकृदिड़े नेज्यते साकं प्रस्थाय्ये च, तद्वत्रापि शेषापचारे शेषाभावस्याविशेषात् स्विष्टकृन्न यष्टव्यो भवति। अतएव,—मुख्यमात्रोपयोगिन्यपि व्रीह्यादौ सति तदेवादेयं तत्र लोपएव शेषकार्य्याणां स्विष्टकृदादीनाम्, न तु तन्निष्पादन समर्थमपि नीवारादिकम्—इति सिद्धान्तः। अतएव च,—स्विष्टकृदर्थम् अवत्तस्य हविषोऽपचारे न पुनरवदातव्यम्, अपितु प्रतिपाद्यमानाभावात् लोप एव स्विष्टकृतः स्यात्—इति षष्ठाध्याये निरूपितम्। तथा चोक्तम्। "अपि वा शेषभाजां स्यात् विशिष्टकारणत्वात्"—इति। कथम् अन्यथा तत्रापि अन्यत् न प्रतिनिधीयते!। एवं खल्वाचार्य्याणां लोपवचनम् प्रलापमात्रं स्यात्। तस्मान्नकिञ्चिदेतत्।

मुख्यहोमार्थम् अवत्ते च हविषि नष्टे दुष्टे वा खल्वाज्येन होतव्यं न पुनरवदातव्यं, न वा अन्यत् पाच्यम्। कुतः?। "निर्द्देशाद्वा अन्यदागमयेत्"—इति सिद्धान्तात्। "यस्य सर्व्वाणि हवींषि नश्येयुर्दुष्येयुर्व्वा अपहरेयुर्व्वा, आज्येन ता देवताः परिसंख्याय यजेरन्"—इति च हविर्षोनाशे आज्य विधानात्। "तत्र सर्वशब्दस्य निमित्तविशेषणत्वेनाविवक्षितत्वात् नाशमात्रे सर्वत्राज्यस्य विधिः"—इत्यधिकरणमालायां माधवाचार्य्याः।

यास्तु प्रायश्चित्ताहुतय स्ता अपि स्विष्टकृद्धोमादर्वागेव

होतव्याः—इत्येके मन्यन्ते। तदसङ्गतम्। तासामप्रधानत्वात्। आगन्तुकानाम् अन्त एवाभिनिवेशस्य न्याय्यत्वाच्च। आगन्तुकाः खल्वेता आहुतयः प्रायश्चित्तरूपत्वात्। प्रायश्चित्ताहुतयो हि प्रकृतहोम वैगुण्यदोषोपशमनाय विधीयन्ते,—इति प्रकृत होमात् परत एव होतुमुचिताः। महाव्याहृतिहोमान्तेनैव प्रकृत होम निष्पत्तिः। तस्मात् महाव्याहृतिहोमं कृत्वा कर्म्मापवर्गविहितां समिधम् आधाय प्रायश्चित्ताहुतयो होतव्याः। ताः खल्वेताः हविर्विशेषाऽनादेशादाज्येन आज्यतन्त्रेण हूयन्ते।

स खल्वयं प्रायश्चित्तहोमः,—व्यस्तसमस्त महाव्याहृतिभिर्वा, अज्ञातम्—इत्यादि मन्त्रेण वा, प्राजापत्य मन्त्रेण वा कर्त्तव्यः। कुतः?। "तस्मादेतामेव जुहुयात् अपिवाऽज्ञातम् यदनाज्ञातम्"—इत्येवमादिकायां श्रुतौ विकल्पोपदेशात्। व्यक्त माह कर्मप्रदीपः।

> "यत्र व्याहृतिभि र्होमः प्रायश्चित्तात्मको भवेत्।
> चतस्र स्तत्र विज्ञेयाः स्त्रीपाणिग्रहणे यथा।
> अपिवाऽज्ञातमित्येषा प्राजापत्याऽपिवाऽऽहुतिः।
> होतव्या, त्रिविकल्पोऽयं प्रायश्चित्तविधिः स्मृतः"।

इति। तदत्र त्रिविकल्पः—इत्यनेन कल्पान्तरस्य प्रतिषेधोऽवगम्यते। केचित् पुनरत्र, "पाहिनोऽग्नएनसे स्वाहा"—इत्यादिकमधिकं प्रायश्चित्त होमम् आचक्षते। तदसारम्। इह तस्यानुपदेशात्। यदपि शाट्यायनकं ग्रन्थान्तरम् अधीयते तदप्यप्रमाणम्। अनार्षत्वात्। परिशिष्टमध्यान्तःपातित्वासम्भवाच्च,—

इति भट्टनारायणोपाध्यायाः। प्राक्तायन होमस्य समूलत्वेपि शाख्यन्तरीयत्वम्— इति तत्वकारः।

एतत् सर्वप्रायश्चित्तं चिप्रहोमवर्ज्जं सर्वत्रैव स्यात्—इति भट्ट-भाष्यम्। श्रुतिश्चात्र भवति। "सर्वस्यैष प्रायश्चित्तिः"—इति। स खल्वयं प्रायश्चित्त होमः प्रकृत होमवैगुण्य प्रशमनार्थत्वादवैगुण्ये न कर्त्तव्य एव,—इत्यनियततया नाचार्य्येण सूत्रितः—इति प्रत्येतव्यम्॥ १६॥ ०॥

**गणेष्वेकं परिसमूहन मिध्मो वर्हिः पर्य्युक्षण माज्य माज्यभागौ च॥ १७॥**

गणेषु एकदाक्रियमाणेषु अनेक होमेषु एकं परिसमूहनम्। एक-शब्दः परस्तादपि प्रत्येकम् अनुषञ्जनीयः। अनेनैव सूत्रशेषो व्याख्यातः। प्रत्येकं तन्त्रविधाने प्राप्ते यानि तन्त्रेण कर्त्तुं शक्यन्ते, तेषां तन्त्रभाव इहोपदिश्यते। परिकीर्त्तनञ्च परिसमूहनादीनामुदाहरण प्रपञ्चार्थं न परिसंख्यानार्थम्। तेन उलूखलमुषलादिकम् अपि एकम् एव भवतीति द्रष्टव्यम्। गणेषु—इति सामान्यतोऽभिधानात् विभिन्न देवताकेष्वपि होमेषु एकदाक्रियमाणेषु एकमेव परिसमूहनादिकम्—इत्यवगम्यते। तथा च गृह्यान्तरम्।

"पाकयज्ञान् समासाद्य एकाज्यानेकवर्हिषः।
एकस्मिष्टकृतः कुर्य्यान्नानापि सति दैवते"।

इति॥ १७॥ ०॥

**सर्व्वेभ्यः समवदाय सकृदेव सौविष्टकृतं जुहोति ॥ १८ ॥**

गणेषु—इत्येव। अकृजुरक्षरार्थः। सकृदेकवारं न पृथक् पृथगित्यभिप्रायः। उपलक्षण मेतत् महाव्याहृत्याद्यपि सकृदेव भवति—इति सरला ॥ १८ ॥ ० ॥

**हुत्वैतन्मेक्षणमनुप्रहरेत् ॥ १९ ॥**

एतत्—इति सन्निकर्षातिशयात् सौविष्टकृतं ब्रूमः। एतत् सौविष्टकृतं हुत्वा मेक्षणम् अनुप्रहरेत् अग्नौक्षिपेत्। सेयं कर्म्मार्थस्य मेक्षणस्य अनन्तरमेव कर्म्मणः प्रतिपत्तिराम्नाता। अन्येत्वाहुः,—महाव्याहृतिभिरपि हुत्वा मेक्षणमनुप्रहरेत् न स्विष्टकृद्धोमादनन्तरमेव—इति। स खल्वयं मेक्षणप्रक्षेपः अन्यत्राह्निकेषु होमेषु प्रत्येतव्यः। कुतः?। तत्र चरुशेषस्य तस्मै प्रतिपादयितव्यत्वस्य वक्ष्यमाणत्वात्, अन्यत्र च मेक्षणेनैवोद्धृत्य तद्भोजनस्य सूत्रणात्। न चानुप्रहृतेनैवमेक्षणेनोद्धरणम्। तस्माद् यथोक्त एवार्थः ॥ १९ ॥ ० ॥

**प्रक्षाल्य वैनेनोद्धृत्य भुञ्जीत ॥ २० ॥**

प्रक्षाल्य वा मेक्षणम्, एनेन एतेन मेक्षणेनोद्धृत्य चरुशेषं भुञ्जीत यजमानः। एनः प्रकृत्यरम् एतदर्थः। एतेन—इति पाठे व्यक्त एवार्थः। अन्ये पुनर्,—एनं प्रकृत्यन्तरम् अविद्वांसो भाषन्ते,—प्रक्षाल्य वाऽनेन,—इति पाठे प्राप्ते छान्दसोऽयं प्रयोगः,—इति।

यत्र होत्रं ब्रह्मत्वञ्चोभयमपि स्वयमेव करोति, सोऽस्य विषयः। यत्र च अन्यो ब्रह्मा भवति, तत्र वक्ष्यति,—अथैतद्धुविरुच्छिष्टम्—इत्यादि ॥ २० ॥ ० ॥

न स्रुवमनुप्रहरेदित्येक आहुः ॥ २१ ॥

स्रुवमग्नौ न क्षिपेदित्येके आचार्य्या वदन्ति। अस्मादेवावगम्यते,—स्रुवमग्नौ क्षिपेत्—इत्यन्ये वदन्ति—इति। तस्मात् स्रुवमग्नौ क्षिपेद्वा नवा क्षिपेदिति विकल्पः ॥ २१ ॥ ० ॥

आग्नेय एवानाहिताग्नेरुभयोर्दर्शपौर्णमासयोः स्थालीपाकः स्यात् ॥ २२ ॥

अनाहिताग्निः श्रौताग्निरहितः स्मार्त्ताग्निरित्येतत्। स्पष्टमन्यत् ॥ २२ ॥ ० ॥

आग्नेयोवाऽग्नीषोमीयोवाऽऽहिताग्नेः पौर्णमास्याम् ॥ २३ ॥

स्पष्टार्थं सूत्रम् ॥ २३ ॥ ० ॥

ऐन्द्रो वैन्द्राग्नो वा माहेन्द्रो वा अमावस्यायाम् ॥ २४ ॥

आहिताग्नेरेव। स्पष्टमुत्तरार्थः। अत्रैके विनिवेश विकल्पम् आहुः,—ऐन्द्रमाहेन्द्रौ सोमयाजिनः, ऐन्द्राग्नस्त्वसोमयाजिनः। तत्रापि एकेन इष्टवत ऐन्द्रो बहुभिरिष्टवतो माहेन्द्रः—इति। अन्येतु—इच्छा विकल्पम् आहुः ॥ २४ ॥ ० ॥

अपि वाऽऽहिताग्नेरप्युभयोर्दर्श पौर्णमासयोराग्नेय एव स्यात् ॥ २५ ॥

ऋज्वर्थम् ॥ २५ ॥ ० ॥

समिधमाधायानुपर्य्युक्ष्य यज्ञवास्तु करोति ॥ २६ ॥

समिधमाधायानुपर्य्युक्षेत्, क्रमार्थम्। तदिदमभिधानं क्रमार्थं भवति। कथन्नाम?। समिधमाधायानुपर्य्युक्ष्य अनन्तरं यज्ञवास्तु—एतन्नामकं कर्म्म करोति ॥ २६ ॥ ० ॥

किमिदं यज्ञ वास्तु?। तत्राह।

तत एव वर्हिषः कुशमुष्टिमादायाज्ये वा हविषि वा त्रिरवदध्यादग्राणि मध्यानि मूलानीत्यक्तं रिहाणा व्यन्तुवय इति ॥ २७ ॥

ततस्तस्मादास्तृतादेव वर्हिषः—इति नियमादन्यद्वर्हिर्व्यवच्छिद्यते। शेषादेव वर्हिषः—इति कुतो न वर्ण्यते?। उच्यते। प्रधानकर्म्मापवर्गविहितमिदं प्रतिपत्तिरेव भवितु मुचितम्। आस्तृतानां वर्हिषाम् इदानीं प्रतिपिपादयिषितत्वात्। प्रतिपत्तिप्राये वचनाच्च। व्याख्यातारश्चैवमेव प्रतिपन्नाः। 'कुशमुष्टिम्' अनियतसङ्ख्याकम् आहृाय गृहीत्वा आज्येयत्योक्ते वा, हविषि चरौ वा त्रिरवदध्यात् त्रारयय मज्जयेत् अग्राणि मध्यानि मूलानि—इति। प्रस्तुतं कुशमुष्टिम् अग्रादिस्थानत्रयेषु त्रिरज्ञयेत्—एकैकस्थानं प्रत्येकैकम्

अञ्जनम्—इत्यर्थः। अक्तं रिहाणा व्यन्तु वयः—इत्यनेन मन्त्रेण वारत्रयं पठितेन। प्रधानानुयायित्वात् गुणानाम्।

"कर्म्मावृत्तौ तु मन्त्रस्याप्यावृत्तिः गृह्यकर्म्मणि"।

इति चाभियुक्तवचनात्। यत्र खल्वनावृत्तिरिष्यते मन्त्राणां, प्रायेण तत्रोत्तरत्र तूष्णीमिति करोति—सकृद् यजुषाद्विस्तूष्णीम्—इत्येवमादौ॥ २७॥ ०॥

**अथैनमद्भिरभ्युक्ष्याग्नावप्यर्जयेत्,—यः पशूनामधिपती रुद्र स्तन्तिचरो वृषा पशूनस्माकं माहिंसीरेतदस्तु हुतन्तवस्वाहेति॥ २८॥**

अथानन्तर मेवाविमुञ्चन्नेनं कुशमुष्टिमद्भिरभ्युक्ष्य अग्नौ अप्यर्जयेत् क्षिपेत्। अपिरुपसर्गः। अपवर्जयेत्—इति पाठेऽपि स एवार्थः। यः पशूनाम्—इत्यनेन मन्त्रेण॥ २८॥ ०॥

**एतद् यज्ञवास्त्वित्याचक्षते॥ २९॥**

तत एव बर्हिषः—इत्यारभ्य यदुक्तं, तदेतत् कर्म्म यज्ञवास्तु—इत्याचक्षते आचार्य्याः। किमर्थं पुनरिदमुच्यते?। उच्यते। यज्ञवास्तु करोति—इत्युक्तं, किमिदं यज्ञवास्तु—इति न ज्ञायते, तदिदम् अनेन निगमनेन ज्ञाप्यते। अवचने खल्वेतस्य हविःशेषार्पणमपि यज्ञवास्तु—इत्याशङ्केत। तदिदं प्रतिपत्तिकर्म्म। कृतार्थानां बर्हिषाम् इह विनियोगाम्नानात्। तस्मात्स्तृतेषु बर्हिःषु न भवति।

ननु यज्ञवास्तु—इति समाख्यालभ्यार्थं सिद्ध्यर्थं बर्हिरन्यदुपादीयताम्? अन्यथा खल्ववास्तु यज्ञः स्यात्। उच्यते। काममवास्तु यज्ञः स्यात्। न प्रतिनिधिः। न खल्वेतदर्थं कर्म। प्रतिपत्तीनाञ्च प्रतिपद्याभावे लोपम् अवोचाम। अपिच। एवमप्यवास्तुर्यज्ञःस्यादेव। कुतः?। तत एव बर्हिषः—कुशमुष्टिमादाय यद्धूयते, तदेतत् यज्ञवास्त्वाचक्षते। तस्मादन्यस्मिन् बर्हिष्युपादीयमानेपि न स होमो यज्ञवास्तु भवति। समाख्यालभ्यार्थं सिद्ध्यर्थम्—इति चेत्। इति चेद्भवान् पश्यति समाख्यालभ्यार्थं सिद्ध्यर्थम् अन्यदपि बर्हिरुपादेयम्—इति। तत्र ब्रूमः। नासामर्थ्यात्। नैतत् सम्भवति। कुतः?। तदुच्यते। नैव समाख्यावदिति अन्यद्बर्हिरुपादेयम्—इति। समाख्यालभ्यार्थं सिद्ध्यर्थम् अनुमीयते खल्वेतत्। प्रत्यक्षन्तु आस्तृतमेव बर्हिः। न च प्रत्यक्षं नियममुपरुध्य आनुमानिकम् अन्यद्बर्हिः शक्यमुपादातुम्। अनुमानस्य प्रत्यक्षबाधायाम् असामर्थ्यात्। दुर्बला च समाख्या न बलवत्तरं वाक्यं बाधितुं प्रभवति। नियमः खल्वेवमुपरुध्येत।

अथैवम्—एतद् यज्ञवास्त्वित्याचक्षते—इति पुनः सूत्रणमनर्थकम्?—इति चेत् काम मनर्थकं भवतु न तु शक्नोत्यन्यद्वदितुम्। सकृदुच्चरितेप्यस्य यावानर्थः शतकृत्वोप्युच्चारणे तावानेव प्रतीयते, न ततोऽधिकः। समाख्या च पूर्वेणापि वाक्येनावगम्यते—इति भवतामपि पुनः सूत्रण मनर्थक मेव। तदेतत् पुनरुपादानं निगमनरूपम्—इत्यभिहितमस्माभिः। तत् कुत एवानर्थक्यमस्य। अवास्तु यज्ञः स्यात?—इति चेत्, नैषदोषः। सूत्यर्थत्वात्

समाख्यायाः, न खल्वियं 'यज्ञस्य वेश्मभूः'। कथन्नाम?। एवमयं होमो यदसौ यज्ञवास्तुरिति। प्रत्यचन्तु यज्ञस्यागो यजमाने वर्त्तते, विष्णुस्तु न कस्मिंश्चित्। स्विष्टकृदादिवच्चैतदवगन्तव्यम्। यथा शोभनाभिलषितकारित्वस्य समाख्यात्वेऽपि प्रतिपत्तिरेवासौ। यथा वा व्यतिरेके निन्दावचनेऽपि तत्रापि प्रतिपत्तिरेव श्राद्धे शेषभोजनम्। एवमिहापि प्रतिपत्तिरेवैतदित्यविरुद्धम्। स्तुत्यैव केवलं प्रतिपत्तित्वमस्य निरस्यते,—इति चेत्, श्राद्ध शेषभोजनादावपि निरस्यताम्। तथा च तत्राप्यपचारे प्रतिनिधिरापद्येत। न चैवमिष्यते। तथात्वेऽपि वा न प्रतिनिधिः, नियमस्यार्थवत्त्वात्। तथापि किं स्तुतेः प्रयोजनम्?—इति चेत्, अफलायां प्रतिपत्तौ कथं प्रवर्त्तेत—इति प्ररोचनमेव—इत्यस्तु किं विस्तरेण।

अन्ये तु मन्यन्ते,—यद्यप्येतत् प्रतिपत्तिरेव, तथापि एतद् यज्ञवास्त्वित्याचचते,—इति पुनरुपादानात् नात्यन्तमिदं प्रतिपत्तिरिति दर्शयति। तस्मादपचारेण्यास्तृतानां बर्हिषाम्, समाख्यालभ्यार्थसिद्ध्यर्थम् अन्यदपि बर्हिरादाय होतव्यम्। इतरथा अवास्तुर्यज्ञः स्यात्—इति ॥ २८ ॥ ० ॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये प्रथमप्रपाठकस्य अष्टमी काण्डिका ॥ ० ॥

---

## गोभिलीयगृह्यसूत्रे

प्रथमप्रपाठके नवमी कण्डिका।



**अथैतद्धविरुच्छिष्टमुदगुद्वास्योद्धृत्य ब्रह्मणे प्रयच्छेत् ॥ १ ॥**

अथेत्यानन्तर्य्यार्थम्। प्रदक्षिण प्रणीताविमोकोदपात्रपूरणानि कृत्वा अनन्तरम्—इति भट्टभाष्यम्। 'एतत्' अभिप्रेतं, हविः, उच्छिष्टम् अवशिष्टम्, उदगुद्वास्य (एतस्मादवगम्यते—होमकाले होतृभ्यो रन्तरा हविषः समासादनम्—इति) उद्धृत्य पात्रान्तरे कृत्वा ब्रह्मणे प्रयच्छेत् प्रदद्यात्। एतत्—इति कतमदिह अभिप्रेयते?। समशनीय नवयज्ञ वास्तुपशमनादिचरुभ्योऽन्यत्—इति ब्रूमः। कुतः?। तत्र तत्र अन्यस्या अन्यस्याः प्रतिपत्तेरुपदेशात्। एतच्चावसरे प्रदर्शयिष्यामः॥ १ ॥ ॥

किं ब्रह्मणे चरुशेषस्य प्रदानमात्रम्?। न। किन्तर्हि?—

**तं तितर्पयिषेत् ॥ २ ॥**

तं ब्रह्माणं तर्पयितुम् इच्छेत्। यथा असौ तृप्यति, तथा कर्त्तव्यम्—इत्यर्थः। तर्पयेत्—इति वक्तव्ये मनो विशुद्धि प्रदर्शनार्थम्,

तितर्पयिषेत्—इत्यभिहितम्। कथं नाम?। श्रद्धाऽऽस्तिक्यादि गुणवता मनसा ब्राह्मणं तर्पयितुमिच्छेत् तत्कृतम् अतिशय विशेषं जानानः। तथाच स्मरणम्।

"श्रद्धाविधि समायुक्तं कर्म्म यत् क्रियते नृभिः।
सुविशुद्धेन भावेन तदानन्त्याय कल्पते"।

इति। श्रद्धारहितस्य खल्वन्नम् अभोज्यम् आङ्गराचार्य्याः। तच्चेह विस्तरभयान् न प्रस्तूयते॥ २ ॥ ० ॥

कस्मात् पुनः कारणात् ब्राह्मणः तर्पणे यत्नातिशयः उपदिश्यते?। तदुच्यते,—

**ब्राह्मणस्य तृप्ति मनु तृप्यामीति ह यज्ञस्य वेदयन्ते ॥ ३ ॥**

ब्राह्मणस्य तृप्तिम्, अनु पश्चात् लचीकृत्य वा, अहं तृप्यामि,—ब्राह्मणस्य तृप्तौ जातायां मम तृप्ति र्भवति—इत्येतत्। इति एवं ह किल यज्ञस्य अभिप्रायं वेदयन्ते ज्ञापयन्त्याचार्य्याः। एतस्मात् कारणात् तं तितर्पयिषेत्। सोयं ब्राह्मणशब्दो ब्रह्मपरोवर्णनीयः, उपक्रमानुग्रहार्थम्॥ ३ ॥ ० ॥

यस्मादेवं ब्रह्मणस्तर्पणम्, तस्मात् चरुशेषस्य अपचारे तेन वा तृप्त्यसम्भवे, अन्येनापि अन्नेन तं तर्पयेत्—इत्याह,—

**अथ यदस्यान्यदन्नमुपसिद्धꣳ स्यात् ॥ ४ ॥**

अथेत्यानन्तर्य्यार्थम्। अथ अनन्तरमेव भोजयेत् नात्मीयं भोजनकालम् अपि प्रतीक्षेत—इत्यर्थः। अस्य यजमानस्य यत्किञ्चि-

इन्यदनम् उप समीपे तत्कालस्य सिद्धं निष्पन्नं स्यात् भवति, तेन सिषिद्धातिरिक्तेन तं तितर्पयिषेत्—इति गतेन सम्बध्यते। प्रतिपत्तिलेऽप्येतस्य वचनप्रमाण्यादन्नान्तरमुपादेयम्। यद्दोष प्रांदानादनन्तरम् अन्यदप्यन्नं प्रयच्छेत्—इति वा वर्णनीयम् ॥ ४ ॥ ० ॥

## अथ ब्राह्मणान् भक्तेनोपेप्सेत् ॥ ५ ॥

अथ स्थपाकसिद्धानन्तरं ब्राह्मणान् भक्तेन अन्नेन उपेप्सेत् तर्पयितुम् इच्छेत्। उपेत्ययम् उपसर्गः। अपवर्गे तावदभिरूपभोजनं विहितम्, तदत्र कृतेन ब्रह्मतर्पणेनैव कृतं मामंस्त,—इति पुनरिदम् असूत्रयदाचार्य्यः ॥ ५ ॥ ० ॥

## पूर्णपात्रो दक्षिणा तं ब्रह्मणे दद्यात् ॥ ६ ॥

पूर्णपात्रः पूर्णपात्रम् (पुंस्त्वं छान्दसम्)। तदिदं पूर्णपात्रं दक्षिणा—इत्युत्सर्गः। तं ब्रह्मणे दद्यात्। दक्षिणाग्रहणं ब्रह्मणोऽभावेऽप्यन्यस्मै दानार्थम्। कथं नाम?। दक्षिणेयम्—इति कृत्वा स्वयं कर्म्मकरणेऽप्यन्यस्मै अवश्यं देया। व्यतिरेके वैगुण्यापत्तेः। तदाह कर्म्मप्रदीपः।

"ब्रह्मणे दक्षिणा देया यत्र या परिकीर्त्तिता।
कर्म्मान्तेऽनुच्यमानायां पूर्णपात्रादिका भवेत्।
विदध्याद्धौत्रमन्यश्चेद्दक्षिणार्द्धहरो भवेत्।
स्वयञ्चेदुभयं कुर्य्यादन्यस्मै प्रतिपादयेत्"।

इति। पूर्णपात्रादिका,—इत्यादिपदात् दक्षिणाविशेषालाभे मूलादिकम् अपि संगृह्णाति। तथाच मैत्रायणीयपरिशिष्टम्। "दक्षिणाऽलाभे मूलानां भक्ष्याणां दक्षिणां ददाति"—इति। तदत्र,-यत्र या—इति सर्व्वनाम्ना व्याप्यवगमात्,कर्म्मान्ते—इति च सामान्याभिधानात्,दक्षिणामात्रमेव ब्रह्मणे देयम्—इत्युपदिशति। न च प्रधानकर्म्मदक्षिणानाम् अन्यस्मै दानं श्रूयते—इति विशेषोपदेशविरहादपि ब्रह्मा एव तेषां देयता पर्य्यस्यति। स खल्वयम् आचार्य्यस्यास्पष्टोऽभिप्राय:कर्म्मप्रदीपकृता स्पष्टीकृतः—इत्यास्थेयम्। न चैतत्सूत्रानुसारात् कर्म्मान्त—इति ब्रह्मसाध्यहोमान्त परम्—इतियुक्तम्, एतद्विवरणरूपत्वात्तस्य। नह्यत्रापि होमदक्षिणेयम्—इत्युच्यते, किन्तु प्रकरणादनुमीयते, वाक्यन्तु अविशेषाद्ब्रह्मणे दक्षिणादानमुपदिशति। दुर्बलञ्च प्रकरणं वाक्यात्—इत्यवोचाम। अपिच। इयमपि दक्षिणा प्रधानस्यैवकर्म्मणः, परमेतत् होमात्मकम्—इति नैतावता किञ्चिदपचीयते। तथात्वे वा दर्शादि यागप्रस्तावात् तस्यैव दक्षिणा ब्राह्मणेदया—इत्यापतति। सचायं पर्य्यनुयोगः सामान्याभिधानबलादेव परिहर्त्तव्यः। स चान्यत्रापि समानः। विदध्याद्धौत्रम्—इति तु होमप्रस्तावाद्वा प्रायेण गृह्यकर्म्मणां सहोमकत्वाद्वा समाम्नातम्। न खल्वन्यदैतत् निषिध्यते। एकस्मिन्नुपदेशस्य विशेषोपदेशविरहे अन्यस्मिन्नपि कल्पनीयः—इति शास्त्रमर्य्यादा। तस्मात् अन्यैरपि ऋत्विग्भिर्व्विभज्यैव दक्षिणा ग्रहीतव्या। न्यायस्याविशेषात्

अपिच। सहोमके कर्म्मणि ब्रह्मणः सद्भावात् कर्म्मदक्षिणायाश्च ब्रह्मणे देयत्वसूचणात् होतुः किं तत्र दक्षिणा नास्त्येव?—इत्याशङ्कायां, 'विदध्याद्धौत्रमन्यश्चेत्'—इति वचनान्तरको न्याय्य एव,—इति न किञ्चिदनुचितम्। स खल्वयम् उत्सर्गो विधिरिति यत्र स्पष्टम् अन्यस्मै आचार्य्यादिकाय दक्षिणाविशेषस्य दानम् उपदिश्यते, तत्र नैतत् प्रवर्त्तते। अब्रह्मकेतु कर्म्मणि सुतरामन्यस्मै दक्षिणा दातव्या। ब्रह्मणे—इति कर्म्मकारयितृपलक्षणत्वे तु प्रागेव नानुपपत्तिः। सेयं भट्टनारायणादीनां बहूनाम् अनुमता व्यवस्था। तत्त्वकारस्तु,—होमदक्षिणैव ब्रह्मणे देया, कर्म्मान्ते—इति ब्रह्मसाध्यहोमान्तपरम्,—इत्येकत्राभिदधानः, कर्म्मान्ते—इति यथाश्रुतमेव ब्रह्मणे—इति कर्म्मकारयितृपलक्षणम्—इति पुनरन्यत्र ब्रुवाणः स्वातन्त्र्यातिशयमात्मनः ख्यापयति।

यद्यप्यन्यस्मै दक्षिणादीयते, तदापि कुलर्त्विजे गुरवे वा देया, तयोः प्रतिग्रहवैमुख्यादिना ग्रहणासम्भवे बहुतरायां वा दक्षिणायाम् अन्यस्मै अपि दातुमिच्छायां तदनुमत्या, दूरस्थत्वे च तयोस्ताभ्यामुद्दिश्य मनसादत्त्वैव देया। तदप्याह कर्म्मप्रदीप एव।

"कुलर्त्विजमधीयानं सन्निकृष्टं गुरुं तथा।
नातिक्रमेत् सदा दित्सन् यदीच्छेदात्मनो हितम्।
अहमस्मै ददानीति एवमाभाष्य दीयते।
नैतावपृष्ट्वा ददतः पात्रेऽपि फलमस्ति हि।

दूरस्थाभ्यामपिद्वाभ्यां प्रदाय मनसा वरम्।

इतरेभ्य स्ततोदद्यादेष दानविधिः स्मृतः"।

इति ॥ ६ ॥ ० ॥

किमिदं पूर्णपात्रम्?। तदुच्यते,—

**कꣳसं चमसं वाऽन्नस्य पूरयित्वा कृतस्य वाऽकृतस्य वाऽपि वा फलानामेवैतं पूर्णपात्रमित्याचक्षते ॥ ७ ॥**

कंसं कांस्यभाजनम्, चमसं वानस्पत्यं पात्रं वा, अन्नस्य पूरयित्वा अन्नैर्व्वर्द्धयित्वा। अन्नस्य—इत्येतद्विशिनष्टि, कृतस्य वा अकृतस्य वा। अपि वा अथवा अन्नासम्भवे फलनामेव—फलैरेवभोज्यै-रित्येवकारकरणादुपदिशति अन्यच्च फलमभोज्यं व्यवच्छिनत्ति, पूरयित्वा, एतं पूर्णपात्रम्—इत्याचक्षते आचार्य्याः। एतम्—इति व्यत्ययात् पुंस्त्वम्। एतत् कंसादिकं पूर्णपात्रम् आचक्षते। कथं कृत्वा?। अन्नस्य पूरयित्वा स्थापितम्—इत्यर्थः। कियन्मितस्य पुनरन्नस्य पूरणम्?। तदाह गृह्यासङ्ग्रहः।

"अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलम्।

पुष्कलानि च चत्वारि पूर्णपात्रं विधीयते"।

इति। असम्भवे पुनरेतस्य परिमाणस्य यावताऽन्नेन बहुभोक्तुः पुरुषस्य तृप्तिः सम्पद्यते, तावतोप्यन्नस्य पूरितं पात्रं पूर्णपात्रं भवति। तदाह कर्म्मप्रदीपः।

"यावता बहुभोक्तुस्य तृप्तिः पूर्णेन जायते।

नावरार्द्धं ततः कुर्य्यात् पूर्णपात्रमितिस्थितिः"।

इति ॥ ७ ॥

## ब्रह्मैवैकऋत्विक् ॥ ८ ॥

दर्शपौर्णमासप्रस्तावादिदमुच्यते। तेन सायं प्रातर्होम वैश्वदेवादीनाम् अब्रह्मत्वेपि न क्षतिः। एक एव ब्रह्मा ऋत्विग्भवति। किमनेनोक्तम्?। इदमनेनोक्तम्—एक एव ब्रह्मा सर्व्वकर्मसु ऋत्विक् कर्त्तव्यो न पुनरेकस्मिन् कर्म्मण्येको ब्रह्मा अन्यस्मिंश्चान्यः अपरापरस्मिंश्चापरापरः—इति। तदनेन,—यजमानेन ऋत्विगत्याज्यो भवतीत्युपदिशति। तथाच स्मरणम्।

"ऋत्विग्याज्यमदुष्टं यस्त्यजेदनपकारिणम्।
अदुष्टमृत्विजं याज्यो विनेयौ तावुभावपि।
क्रमागतेष्वेषधर्म्मो वृतेष्वृत्विक्षु च स्वयम्।
यादृच्छिकेतु संयोज्ये तत् त्यागे नास्ति किल्विषम्"।

इति ॥ ८ ॥ ० ॥

## पाकयज्ञेषु स्वयꣳ होता भवति ॥ ९ ॥

पाकयज्ञेषु अल्पयज्ञेषु प्रशस्तयज्ञेषु वा। कस्मात्?। उभयत्र पाकशब्ददर्शनात्। दृश्यते खल्वल्पे पाकशब्दः,—योऽस्मत् पाकतरः—इति। तं पाकेन मनसाऽपश्यम्—इति, योमा पाकेन मनसा—इति च प्रशंसायां पाकशब्दः प्रयुक्तः। स खल्वयम् अर्थो ग्रन्थान्तर वृत्तिकारै र्निरूपितः। तत्त्वकारादयस्तु मन्यन्ते,—पाकयज्ञाः—पाकात्मकयज्ञा वृषोत्सर्गादिः—इति। वयन्तु, एकाग्नौ ये यज्ञाः तान् पाकयज्ञानवगच्छामः। कस्मात्?। अस्माकमेव ग्रन्थान्तरे

समाम्नानात्। तथाच लाट्यायनसूत्रम्। "पाकयज्ञा इत्याचक्षते एकाग्नौ यज्ञान्"—इति।

तेषु पाकयज्ञेषु स्वयं—स्वयमेव होता भवति। तदिदं स्वयमेव होतृत्वं प्रशस्तम्—इत्यवगम्यते। कुतः?।

"स्वयं होमे फलं यत्तु तदन्येन न जायते"।

इति स्मरणात्। अन्यो होतैव कुतो न व्यवच्छिद्यते?। स्वयमशक्तौ पाकयज्ञलोपापत्तेः। न चैतदुचितम्। जुहुयाद्वा हावयेद्वा—इति सामान्यतः सूत्रणात्। न प्रवसन्नुपवसेत्—इति च प्रवासदर्शनात्।

'निःक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजन्तथा।
प्रवसेत् कार्य्यवान् विप्रो वृथैव न चिरं क्वचित्"।

इति च कर्म्मप्रदीपवचनात्॥ ६॥ ०॥

## पूर्णपात्रोऽवमः पाकयज्ञानां दक्षिणा॥ १०॥

पूर्णपात्रः—इति पुंस्त्वं व्याख्यातम्। पूर्णपात्रम् अवमं सर्व्वनिकृष्टं पाकयज्ञानां दक्षिणा। नातोऽप्यल्पतरी तेषां दक्षिणा अस्तीत्यर्थः॥ १०॥ ०॥

## अपरिमितं परार्द्ध्यम्॥ ११॥

न परिमितम् अपरिमितं बहु—इत्यभिप्रेतम्। तदिदम् अपरिमितं परार्द्ध्यं प्रशस्तं भवति दक्षिणा पाकयज्ञानाम्। परार्द्धम्—इति केचित् पठन्ति। परार्द्धं खल्वन्तिमम् अङ्कस्थानम् उच्यते।

तथाच अपरिमितं परार्द्धपर्य्यन्तमपि पाकयज्ञानां दक्षिणा— इति तत्रार्थः ॥ ११ ॥ ० ॥

एतस्मिन्नर्थे दृष्टान्तम् उपन्यस्यति,—

**अपिह सुदाः पैजवन ऐन्द्राग्नेन स्थालीपाकेनेष्ट्वा शतꣳ सहस्राणि ददौ ॥ १२ ॥**

अपिरण्यानपि समुच्चिनोति। ह—इत्यैतिह्यार्थको निपातः। शोभनं ददाति—इति सुदा नामतः, पिजवनस्य अपत्यं पुमान् पैजवनोऽपि ह किल ऐन्द्राग्नेन स्थालीपाकेन इष्ट्वा शतं सहस्राणि शतगुणितानि सहस्राणि—लक्षम्—इत्येतत्। ददौ, दक्षिणाम्— इति प्रकरणाल्लभ्यते। कस्य वस्तुनः शतं सहस्राणि?। गवाम्— इति ब्रूमः। कस्मात्?। संख्यामात्रकीर्त्तनात्। संख्यामात्र-कीर्त्तने च प्रायेण गा एव संख्येयतया व्यवहरन्ति याज्ञिकाः। शतदक्षिणेनाहं यक्ष्ये द्वादशशतदक्षिणेन—इति खल्वाहुः। "संख्यामात्रे च दक्षिणागावः"—इति च द्राह्यायणसूत्रात् ॥ १२ ॥ ० ॥

**अथ यदि गृह्योऽग्नौ सायं प्रातर्होमयोर्व्वा दर्शपूर्ण-मासयोर्व्वा हव्यं वा होतारं वा नाधिगच्छेत्; कथं कुर्य्यादिति ॥ १३ ॥**

अथेति पूर्व्वप्रकृतार्थम्। अथैतयोर्गृह्योऽग्नौ यावज्जीवं कर्त्तव्ययोः सायं प्रातर्होमयोर्व्वा, दर्शपूर्णमासयोर्व्वा—प्रदर्शनमेतत् वैश्वदेव-

स्यापि, दैवादन्यस्माद्वा कस्माच्चित् कारणात् हव्यं हवनीयं वस्तु वा, होतारं हवनकर्त्तारं वा स्वयमशक्तौ, यदि न अधिगच्छेत् न लभेत, तर्हि कथं कुर्य्यादित्युच्यते। (आभावान्तं सूत्रम्) ॥ १३ ॥ ० ॥

**आ सायमाहुतेः प्रातराहुतिर्नात्येत्याऽऽप्रातराहुतेः सायमाहुति राऽमावास्यायाः पौर्णमासं नात्येत्याऽऽ- पौर्णमास्या आमावास्यम् ॥ १४ ॥**

आ सायमाहुतेः सायमाहुतिपर्य्यन्तम्। सेयं सायमाहुतिर्म्मर्य्यादा अवधिः सीमेत्येतत्। प्रातराहुतिः नात्येति नातिक्रामति। सा खल्वियं स्वकाले अहुता प्रातराहुतिरिदानीं प्रायश्चित्तात्मकं महाव्याहृतिहोमं कृत्वा होतव्या। तथाच गृह्यान्तरम्।

"स्वकाले सायमाहुत्या अप्राप्तौ होतृहव्ययोः।
प्राक् प्रातराहुतेः कालः प्रायश्चित्ते कृते सति।
प्राक् सायमाहुतेः प्रातर्होम कालाऽनतिक्रमः।
प्राक् पौर्णमासाद्दर्शस्य प्राग्दर्शादितरस्य च"।

इति। एतेनैवसूत्रशेषोव्याख्यातः। तदिदं प्रदर्शनार्थं परिकीर्त्तनं सायमाहुत्यादीनां न नियमार्थम्। कुतः?। स्मृत्यन्तरदर्शनात्। तथाचोक्तम्।

"मुख्यकाले यदाऽवश्यं कर्म्म कर्त्तुं न शक्यते।
गौणकालेऽपि कर्त्तव्यं गौणोऽप्यत्रेदृशो भवेत्।
आसायमाहुतेः कालात् कालः स्यात् प्रातराहुतेः।
प्रातराहुतिकालात् प्राक् कालः स्यात् सायमाहुतेः।

पूर्णमासस्य कालोऽस्ति पुरा दर्शस्य कालतः ।
स्यात् साकमेधकालोऽपि आसुनासीरकालतः ।
सुनासीरीयकालोऽप्याऽऽवैश्वदेविककालतः ।
श्यामाके व्रीहिभिश्चैव यवै रन्योन्यकालतः ।
प्रागयष्टुं युज्यतेऽवश्यं नैवलाग्रयणात्ययः ।
दक्षिणायनकाले या पशिव्ज्या योत्तरायणे ।
अन्योन्यकालतः पूर्व्वं यष्टुं युक्ते उभे अपि ।
एव मागामियागीयमुख्यकालादधस्तनः ।
स्वकालादुत्तरो गौणः कालः पूर्व्वस्य कर्मणः ।
यद्वाऽऽगामिक्रियामुख्यकालस्याप्यन्तरालवत् ।
गौणकालत्व मिच्छन्ति केचित् प्राक्तनकर्म्मणि" ।

इति । सर्व्वमेव प्राक्तनकर्म्म प्रायश्चित्तहोमानन्तरमेव गौणकाले करणीयम् । सायमाहुत्यादौ तथा दर्शनात् ।

"गौणेषु तेषु कालेषु कर्म्म चोदितमारभेत् ।
प्रायश्चित्तप्रकरणे प्रोक्तां निष्कृतिमाचरेत्" ।

इति स्मरणाच्च । वैश्वदेवस्य पुनरतिक्रमे अभोजनमपि कृत्वा कालान्तरे प्रायश्चित्तानन्तरं तदाचरणम् । तथाच गृह्यान्तरम् ।

"वैश्वदेवेऽतिक्रान्ते अहोरात्रमभोजनम् ।
प्रायश्चित्तमथो कृत्वा पुनः सन्तनुयाद्व्रतम्" ।

इति । प्रथमवैश्वदेवातिक्रमे दिवा अभोजनं, द्वितीयवैश्वदेवातिक्रमे च रात्र्यभोजनम्—इति परिशिष्टप्रकाशः । वैश्वदेवद्वयातिक्रमे तु विशेषमाह कर्म्मप्रदीपः ।

"परेणाग्नौ कृते स्वार्थं परस्याग्नौ कृते स्वयम्।
पितृयज्ञात्यये चैव वैश्वदेवद्वयस्य च।
अनिष्ट्वा नवयज्ञेन नवान्नप्राशने तथा।
भोजने पतितान्नस्य चरुर्वैश्वानरो भवेत्"।

इति। प्राक् सूर्य्यास्तमयात् प्रथमो वैश्वदेवो नात्येति, प्राक् च रात्रेः सार्द्धात् प्रहरात् द्वितीयः। कुतः?। यतस्तावानेव भोजन-कालः। तच्च पुरस्तान्निवेदितमस्माभिः॥ १४ ॥ ० ॥

**एतेनैवावकाशेन हव्यं वा होतारं वा लिप्सेत॥ १५॥**

एतेन—इति गौणकालपरामर्शः। लिप्सेत लब्धुमिच्छेत्। लिप्सेत्—इति पाठे व्यत्ययात् परस्मैपदम्। प्राप्तस्याप्यादरार्थमभिधानम्। कथं नाम?। तथा लिप्सेत यथा गौणकालो नात्येति, तस्याप्यति-क्रमे कर्म्मैव लुप्यते,—इत्यभिप्रायः। ऋज्वन्यत्। यदा पुनर्लभ्यते, तदा होतव्यम्। तदाह कर्म्मप्रदीपः।

"पौर्णमासात्यये हव्यं होता वा यद्द्दुर्भवेत्।
तदहर्जुहुयादेवममावस्यात्ययेपि च"।

इति॥ १५ ॥ ० ॥

**अपि वा यज्ञियानामेवौषधिवनस्पतीनां फलानि वा पलाशानि वा श्रपयित्वा जुहुयात्॥ १६॥**

अपि वा—इति पक्षो विपरिवर्त्तते। एतेनाप्यवकाशेन हविष्यनुप-लभ्यमाने यज्ञियानां यज्ञार्हाणाम् अनिषिद्धानाम्—इत्येतत्। ओषधीनाम्—

"व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः ।
यवाश्चौषधयः सप्त विपदो घ्नन्ति धारिताः" ।

इति कर्म्मप्रदीपोक्तानाम्, वनस्पतीनां वृक्षाणाञ्च फलानि शस्यानि वा; पलाशानि छदनानि पत्राणि वा यथोपपन्नानि; श्रपयित्वा स्थालीपाकविधिना, जुहुयात्॥ १६ ॥ ० ॥

**अप्यप एवान्ततो जुहुयादिति ह स्माह पाकयज्ञ ऐड़ो हुतं ह्येव ॥ १७ ॥**

अन्ततः सर्वासम्पत्तौ अप उदकम् अपि जुहुयादेव, न तु अद्भिः कथम् होमः—इत्याशङ्कीत । सर्वालाभे उदकमप्यन्ततो मध्यत एवाग्नेर्जुहुयात् नलस्त्वुपशमाशङ्कां कुर्य्यादिति वा व्याख्येयम् । इति ह किल आहस्म उवाच, नामतः पाकयज्ञः इड़स्यापत्यम् ऐड़ः कश्चिदाचार्य्यः; हुतमेव भवत्येवमपिकृते । हि शब्दो यस्मादर्थे । यस्मादेवमपिकृते हुतमेव भवति न अहुतम्—इति पाकयज्ञ आहस्म, तस्मादप एवान्ततो जुहुयादित्यर्थः ॥ १७ ॥ ० ॥

**अहुतस्य प्रायश्चित्तं भवतीति ॥ १८ ॥**

हुत—इति कर्त्तरिनिष्ठा । न हुतं येन—इति वा विग्रहः । अहुतस्य उदकस्याप्यलाभात् होममकुर्वतः प्रायश्चित्तं भवति । किं पुनस्तत् प्रायश्चित्तम् ? । पुनराधानम्—इति ब्रूमः । कुतः ? ।

"होमद्वयात्यये दर्श पूर्णमासात्यये तथा ।
पुनरेवाग्निमादध्यादितिभास्करशासनम्" ।

इति स्मरणात्। इति रन्यान्यपि पुनराधाननिमित्तानि समुच्चिनोति। तानि च,—

"असमक्षन्तु दम्पत्यो र्हेतव्यं नर्त्विगादिना।
द्वयोरप्यसमक्षन्तु भवेद्धुतमनर्थकम्"।

इत्येवमादीनि कर्म्मप्रदीपादिष्वनुसन्धेयानि। पुनराधानप्रकारश्च,—

"पूर्व्वैव योनिः पूर्व्वावृत् पुनराधानकर्म्मणि"।

इत्यादिना कर्म्मप्रदीप एव अभिहितः॥ १८॥ ०॥

## नाव्रतो ब्राह्मणः स्यादिति॥ १९॥

व्रतरहितो ब्राह्मणो नस्यादल्पमपिकालम्। "मुहूर्त्तमपिनाव्रतो ब्राह्मणः स्यात्"—इति पाठे व्यक्त एवार्थः। इति हेतो। यस्मात् नाव्रतो ब्राह्मणः स्यात्, तस्मात् पुनराधाननिमित्ते जाते, अविलम्बमेवादध्यादित्यभिप्रायः॥ १९॥ ०॥

## अथाप्युदाहरन्ति॥ २०॥

स्फुजुरक्षरार्थः। अकृतस्य प्रायश्चित्तं पुनर्वाधानमुक्तम्, अथेदानीम् अन्यदपि पक्षान्तरं तत्र दर्शयितुं ब्राह्मणवाक्योदाहरणाभासरूपं सूत्रम्॥ २०॥ ०॥

## यावन्न हूयेताऽभोजनेनैव तावत् सन्तनुयात्॥२१॥

हविषोऽलाभे यावन्न हूयेत हूयते, अभोजनेनैव तावत् तावन्तं कालं सन्तनुयात् सन्ततमविच्छिन्नमनुष्ठं कुर्य्यात्। द्विव्रतम्—

इत्यर्थः। यावता कालेन हविर्लभ्यते, तावति काले अभोजनेऽपि व्रतमलुप्तं भवतीत्यभिप्रायः ॥ २१ ॥ ० ॥

किम् अभोजनेनैव व्रतं सम्पद्यते?। न। किन्तर्हि?—

अथ यदाऽधिगच्छेत् प्रति जुहुयात् ॥ २२ ॥

यदा पुनरधिगच्छेल्लभेत हविः, तदा अथ,—सायमाद्युपक्रमत्वात् कर्म्मणां सायमादिकालं प्रतीक्ष्य, प्रति जुहुयात्। यावन्न हूयते तावन्तं कालम् अभोजनेन क्षपयित्वा यदा हविरुपलभ्यते तदा सायमादिकालं प्रतीक्ष्य प्रति जुहुयादित्यर्थः। प्रति शब्दो-होमस्य प्रकारविशेषद्योतनार्थः। कतमः पुनरसौ प्रकारः?। उच्यते। अतिक्रान्ताः सर्व्वा अग्निदैवत्या आहुती र्व्विगणय्य तावन्ति हवींषि पात्रे कृत्वा,—अग्नये स्वाहा—इति सकृदेव जुहुयात्। एवं प्राजापत्याः। एवम् अपरापराः। तदाह कर्म्मप्रदीपः।

"आहूयमानेऽनश्नंश्चेत् नयेत् कालं समाहितः।
सम्पन्ने तु यथा तत्र हूयते तदिहोच्यते।
अहुताः परिसङ्ख्याय पात्रे कृत्वाऽऽहुतीः, सकृत्—
मन्त्रेण विधिवद्धुत्वा एवमेवापरा अपि"।

इति ॥ २२ ॥ ० ॥

एवमप्यस्य व्रतꣳ सन्ततं भवतीति ॥ २३ ॥

एवम् अपि कृते अस्य व्रतिनो व्रतं नियमः सन्ततम् अविलुप्तं भवति। तस्मात् पुनराधानं न कर्त्तव्यम्—इत्यभिप्रायः। इतिः आहुत्यवाक्यावधानज्ञापनार्थः, प्रकरणपरिसमाप्त्यर्थो वा॥ २३ ॥०॥

## एषोऽत ऊर्द्ध्वं हविराहुतिषु न्यायः ॥ २४ ॥

अत ऊर्द्धम् अस्मात् परतो वक्ष्यमाण एष न्यायो हविराहुतिषु—हूयते—इति हविः; अविशेषात् समिदाज्यपश्वपूपशाकादिकं सर्वम् उच्यते, तस्य हविष आहुतिषु वोद्धव्यः—इति परिभाष्यते। पराचीनस्यापि बुद्ध्या सन्निकृष्य एतदा परामर्शः। न्यायग्रहणं क्वचिदाम्नातस्यापि प्रतिषेधार्थम्। यथा समाम्नातोऽपि मन्त्रान्ते स्वाहाकारः स्वाहान्ते मन्त्रे नाद्रियते, अन्यायत्वात्। तच्चोत्तरत्र वक्ष्यामः। एवम् अन्यदपि ऊह्यम्।

एवं वा—

एषोऽनन्तरोक्तो न्यायः प्रकारः—इत्येतत्। अत ऊर्द्धं वक्ष्यमाणासु हविराहुतिषु द्रष्टव्यः—इत्युक्तः प्रकारः सर्वत्रातिदिश्यते। न्याय ग्रहणेन किमुक्तं भवति?। एतदनेनोक्तं भवति;—अत ऊर्द्धं ये चिप्रहोमा ब्रह्मचारिसमिदादयो वक्ष्यन्ते, तेषु चिप्रहोमोक्त एव प्रकारो भवति। ये पुन स्तन्त्रहोमाः वैवाहिकहोमादयः, तेषु ब्रह्मोपवशनादि तन्त्रं द्रष्टव्यम्। तथा क्वचित् प्राप्तोऽप्यर्थो निवर्त्तते। किमुदाहरणम्?। इदमुदाहरणम्। आज्यतन्त्रेषु मुषलोलूखलसूर्पादयो निवर्त्तन्ते, पाणाहुतिषु सेचणस्रुगादयः—इति। सोऽयं न्यायशब्दस्यार्थः ॥ २४ ॥ ० ॥

## मन्त्रान्ते स्वाहाकारः ॥ २५ ॥

होम मन्त्राणाम् अन्ते अवसाने स्वाहाकारः कर्त्तव्यः—इति सूत्रशेषः। स खल्वयं स्वाहाकारो हविस्त्यागार्थः—इति स्वाहाकारान्त

मन्त्रेषु नैष विधिरुपतिष्ठते। तत्र खल्वाम्नातेनैव स्वाहाकारेण हविस्त्यागः कृतः—इत्यपरस्याम्नानम् अनर्थकं भवति। तथाच तन्त्रान्तरम्।

"नमोऽन्ते न नमो दद्यात् स्वाहान्ते द्विठमेवच।
एकाया माहुतौ चापि सर्वत्रायं विधिः स्मृतः"।

इति। यत्र च मन्त्रादितोऽपि समाम्नातः स्वाहाकारो हविस्त्यागार्थो भवति, तत्राप्यग्नौकरणहोमे मन्त्रान्ते स्वाहाकारान्तरं न कर्त्तव्यमेव। न्यायस्याविशेषात्। तदाह कर्म्मप्रदीपः।

"स्वाहां कुर्य्यान्नचात्रान्ते न चैव जुहुयाद्धविः।
स्वाहाकारेण हुत्वाग्नौ पश्चाद्धोमं समापयेत्"।

इति। होममन्त्राणामादौ न प्रत्येकम् ॐकारः करणीयः। तदप्याह स एव।

"नोङ्कुर्य्याद्धोममन्त्राणां पृथगादिषु कुत्रचित्।
अन्येषाञ्च विकृष्टानां कालेनाऽऽचमनादिना"।

इति॥ २५॥ ०॥

**आज्याहुतिष्वाज्यमेव संस्कृत्योपघातं जुहुयात् नाज्यभागौ न स्विष्टकृत्॥ २६॥**

आज्यस्य यथोक्तस्याऽऽहुतिषु—यत्राज्यमेव हूयते—इत्यर्थः। आज्यं संस्कृत्यैव, उपघातं यथा भवति तथा जुहुयात्, द्रवद्रव्यत्वात् स्रुवेण—इत्यर्थः। एव कारेण यद्व्यवच्छिद्यते, तदप्युच्यते सुखावबोधार्थम्। नाज्यभागावत्र भवतः न च स्विष्टकृदपि भवति। तदेते अतिदेशागता इह प्रतिषिध्यन्ते॥ २६॥ ०॥

आज्याहुतिष्वनादेशे पुरस्ताच्चोपरिष्टाच्च महा-
व्याहृतिभि र्होमः ॥ २७ ॥

आज्याहुतिषु आज्यमात्राहुतिषु, आहुतेरनादेशे च—मध्यात् पूर्व्वार्द्धादितिवच्चशब्दः समुच्चयार्थो लुप्तवत् द्रष्टव्यः। यत्र होम एव नादिश्यते उपदिश्यते चाग्नि रवगम्यते वा किञ्चिदन्यद्धोमलिङ्गं, तत्र गर्भाधान पुंसवन शुङ्गाकर्म्म सीमन्तकरण चूडाकरणादिषु प्रधानकर्म्मणो गर्भाधानाऽशाभिमर्षणादेः पुरस्ताच्च उपरिष्टाच्च,—आद्यन्तयोरित्यर्थः। महाव्याहृतयः तिस्रः व्याख्याताः, ताभिर्होमः कर्त्तव्यः—इति वाक्यशेषः। एवं खल्वग्नेरुपदेश स्तन्त्रतचार्थवान् भवति। इतरथाऽनर्थको वा स्यात्, अदृष्टार्थो वा कल्प्येत।

चन्द्रदर्शनादावपि तर्हि पुरस्ताच्चोपरिष्टाच्च महाव्याहृतिभिर्होतव्यम्?। न। तत्राग्नेरप्युपदेशाभावात्। अतएव—

"अहोमकेष्वपि भवेत् यथोक्तं चन्द्रदर्शने"।

इति कर्म्मप्रदीपेऽपि चन्द्रदर्शनस्याहोमकत्वमुक्तम्। गर्भाधानेऽपि होमसवसरे उपपादयिष्यामः।

अन्ये तु वर्णयन्ति,—'आज्याहुतिष्वनादेशे आज्याहुतयोऽपि यत्र नादिश्यन्ते—होम एव यत्र नादिश्यते—इत्यर्थः। न पुनराज्याहुतिषु अनादेशे च—इति व्याख्यानं युक्तं, चकाराध्याहारदोषात्'—इति। अत्र ब्रूमः। आज्याहुतयो यत्र नादिश्यन्ते—इति वर्णनायां सर्व्वाहुतिष्वतिप्रसङ्गः। आज्याहुतयोऽपि यत्र नादि-

श्चन्ते—इत्यर्थकल्पने च व्यक्तम् अपेरध्याहारः। आज्यपदस्यैवम-नतिप्रयोजनं स्यात्। आकृतिष्वनादेशे—इति खल्वभिप्रेयते। तस्मा-दस्मदुक्तमेव व्याख्यानम् आदरणीयम्। द्योतको हि चशब्दस्ता-त्पर्य्यस्येष्यते। तच्चेत् तात्पर्य्यम् अन्यस्मादपि कारणादवगम्यते, अकिञ्चित्करं तदकीर्त्तनं भवति। आज्याकृतिषु—इति सप्तमी-निर्देशस्यैवं तात्पर्य्यम् उपोद्बलयति। आज्याकृतिष्वनादेशे—इति चासमासकरणं प्रत्येकम् अन्वयं द्योतयति॥ २७॥ ०॥

**यथा पाणिग्रहणे; तथा चूड़ाकर्म्मण्युपनयने गोदाने च॥ २८॥**

यथा पाणिग्रहणे महाव्याहृतिभिः व्यस्तसमस्ताभि स्तस्र आ-कृतयो हूयन्ते—(तथाच पाणिग्रहणे वच्यत्याचार्य्यः,—महाव्या-हृतिभिश्च पृथक्, समस्ताभिश्चतुर्थीम्—इति।) तथा चूड़ाकर्म्मणि। तथा शब्दः प्रत्येकम् अभिसम्बध्यते। तथोपनयने, तथा गोदाने च,—इत्यति दिश्यते। सोऽयम अनागतातिदेशः। चूड़ाकर्म्मादि व्यतिरिक्तेषु तु तिस्र एवाकृतयो भवन्ति॥ २८॥ ०॥

**अपवृत्ते कर्म्मणि वामदेव्यगानꣳ शान्त्यर्थꣳ शान्त्यर्थम्॥ २९॥**

अपवृत्ते समाप्ते कर्म्मणि वामदेव्यगानं, कर्त्तव्यम्—इति परिभा-ष्यते। तस्मात् सर्व्वेषामेव कर्म्मणाम् अपवर्गे वामदेव्यं साम गात-व्यम्। कर्म्मणि—इति सामान्येनोपदेशाच्च। बहूनाञ्च कर्म्मणा

मेकदा करणे अन्ततः सकृदेव वामदेव्यं गातव्यं न प्रत्येकमन्ते। तदाह कर्मप्रदीपः।

"अहोमकेष्वपि भवेत् यथोक्तं चन्द्रदर्शने।

वामदेव्यं गणेष्वन्ते वस्त्वन्ते वैश्वदेविके"।

इति। गानस्य अशक्तावपि ऋचो वारत्रयं पठनीयाः। तदप्याह स एव।

"अन्ते च वामदेव्यस्य गानं कुर्य्यादृचस्त्रिधा"।

इति। शान्त्यर्थम्—इति विहितं वामदेव्यागानम् अनेन स्तूयते—इत्यर्थवादोऽयम्। उभयस्मिन् विधीयमाने हि वाक्यं भिद्येत। वामदेव्यगानं कर्त्तव्यम्, तच्च शान्त्यर्थं भवति—इति। तस्मात्,—"उदुम्बरो यूपो भवति ऊर्ग् वा उदुम्बर ऊर्क् पशव ऊर्ज्जं वा स्मा ऊर्ज्जं पशून्नाप्नोति ऊर्ज्जोऽवरुध्ये"—इतिवदिहापि स्तुतिरेव प्रयोजनं न फलविधिः। अन्येत्वाहुः,—शान्त्यर्थम्—इति वचनात्ताव अस्य नित्यत्वम्—इति। शान्त्यर्थं शान्त्यर्थम्—इत्यभ्यासः प्रपाठकपरिसमाप्तिं द्योतयति ॥ २९ ॥ ० ॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्र-भाष्ये प्रथमप्रपाठकस्य नवमी काण्डिका समाप्ता ॥ ० ॥

समाप्तश्चायं प्रथमः प्रपाठकः ॥ ॐ ॥

द्वितीयप्रपाठके प्रथमा काण्डिका।



एवन्तावत् प्रथमे प्रपाठके अग्निसमाधानम्, समाहितानाग्नेश्चावश्य कर्त्तव्यं सायं प्रातर्होमादिकम्, देवसवितरित्यादेश्च मन्त्रस्य विनियोगो निरूपितम्। समाधानञ्चाग्नेर्जायायाः पाणिं जिघृक्षोरभिहितम्। अथेदानीं कथं जायायाः पाणि र्गृह्यते, देवसवितरित्यादेः परेषाञ्च मन्त्राणां विनियोगः,—इत्येवमर्थजातं निरूपयितुं द्वितीयः प्रपाठक आरभ्यते। प्रसङ्गा गतञ्चाव्यत्। तत्र तावत् पाणि ग्रहण मेव प्रथमं निरूप्यते,—

## पुण्येनक्षत्रे दारान् कुर्व्वीत ॥ १ ॥

पुण्ये शोभने, नक्षत्रे ऋक्षे। "उदगयने पूर्व्वपक्षे पुण्येऽहनि"—इति सिद्धत्वादेतदवाच्यम्—इति चेत्। न। दारकर्म्मणि नक्षत्रस्यादरातिशयार्थत्वात्। दाराः, गृहाः, पञ्चालाः—इत्येवमादयो नित्यबहुवचनान्ताः शब्दाः पुंलिङ्गाः। दारान् सहधर्म्मचारिणीम्, पत्नीम—इत्यनर्थान्तरम्। भवञ्चन्यत्॥ १॥ ०॥

कीदृशान् दारान् कुर्व्वीत?। तदाह

## लक्षण प्रशस्तान् कुशलेन ॥ २ ॥

प्रशस्तम् अवैधव्यादिसूचकं लक्षणं चिह्नं येषां त इमे प्रशस्त

लक्षणाः सन्तो व्यत्ययेन लक्षणप्रशस्तां इत्युच्यन्ते। ताम्। लक्षणेन शोभन लक्षणेन प्रशस्तान् श्रेष्ठान्—इति वाऽर्थः। दारान कुर्व्वीत—इति दारसम्बन्ध विवक्षया इत्थं निर्देशः। कथमगम्यन्ते लक्षणानि ?। तदुच्यते। कुशलेन स्त्रीलक्षणविदा। स्त्रीणां लक्षणानि शुभाशुभसूचकानि यो वेत्ति सोऽयं स्त्रीलक्षणविद् उच्यते। तेन परीक्षितान्—इत्यर्थः। तथाच स्मरणम्।

"सदा गृही सुखं भुङ्क्ते स्त्री लक्षणवती यदि।
अतः सुख समृद्ध्यर्थ मादौ लक्षणमीक्षयेत्"।

इति। इयमपरा सूत्रयोजना। लक्षणविदा कर्त्ता लक्षणेन शोभन लक्षणेन प्रशस्तान् अन्तर्भूत निजर्थ तया प्रशंसितान् दारान् कुर्व्वीत। लक्षण शब्दः शोभन लक्षणार्थोऽन्यत्रापि दृश्यते *॥ २॥०॥

---

* केचिदेतत् सूत्रानन्तरम्—"अनार्षे शुल्करक्षिताम्"—इति सूत्रमधिकं पठन्ति। "आर्षशुल्कं गोमिथुनादि, तदितर शुल्कनीतां त्यजेत्"—इति व्याचक्षते च। तदिदं सूत्रमनार्षमिति प्रतिभाति। तथाहि। पूर्व्वं "दारान कुर्व्वीत"—इति सूत्रयित्वा, तद्विशेषणत्व विवक्षयैव च—"लक्षण प्रशस्ताम्"—इति, किमति "अनार्षे शुल्क रक्षितान्"—इति नासूत्रयत्। "तदलाभे पिण्डान"—इत्युत्तरं सूत्रमप्येवं सत्युपपद्यते। नचहि तच्छब्देन स्त्रीलक्षणविदः परामर्शः। एतच्चानयोरेव सूत्रयोरानन्तर्य्ये स्यात्। न पुनरन्तरा सूत्रान्तरेण व्यवधाने। अपिच। अनार्षे शुल्क रक्षिताम्—इत्यानेनार्षेऽपि गोमिथुनस्य शुल्करूपता प्रतीयते। सोऽयमर्थो न्यायविरुद्धो मनुविरुद्धश्च। तथाच मनुः।

"आर्षे गोमिथुनं शुल्कं केचिदाहुर्म्मृषैव तत्।
अल्पोऽप्येवं महान् वापि विक्रयस्तावदेव सः"।

इति। सूत्रपुस्तकेषु सर्व्वेष्वस्मदवलोकितेषु सोमादिटि भाष्यपुस्तके च—अनार्षे शुल्क रक्षिताम—इति सूत्रं न दृश्यते।

तदलाभे पिण्डान् ॥ ३ ॥

तदिति प्रकृतः स्त्रीलक्षणवित् परामृश्यते। तस्य स्त्रीलक्षणविदो-ऽलाभे पिण्डान् कुर्व्वीत ॥ ३ ॥ ० ॥

कुतो मृदमादाय पिण्डाः कर्त्तव्याः?। तदाह—

वेद्याः सीतायाः ह्रदाद्गोष्ठाच्चतुष्पथादादेवनादादहनादीरिणात् ॥ ४ ॥

वेदिरग्निष्टोमादौ विहिता। सीता लाङ्गलपद्धतिरित्यनर्थान्तरम्। कृष्टं क्षेत्रम्—इत्येके। ह्रदोऽगाधजलाशयो ग्रीष्मेपि यः शोषं नैति। गावो यत्र तिष्ठन्ति तद्गोष्ठम्। चतुष्पथः प्रसिद्धः। आदीव्यते यत्र तदादेवनम् द्यूतस्थानम्। आदह्यते यत्र तदादहनं श्मशानम्। यत्रोप्तं बीजं न प्ररोहति तदीरिणम् ऊषरम्—इत्येकोऽर्थः। एतेभ्यो वेद्यादिस्थानेभ्यो मृदमादाय पृथगेव पिण्डान् कुर्व्वीत। पृथगिति कुतो वर्ण्यते?। असमासकरणादित्याह। सर्व्वेभ्यः सम्भार्य्यम्—इति चोत्तरत्राम्नानात्। एवं खल्वष्टौ पिण्डा भवन्ति ॥ ४ ॥ ० ॥

सर्व्वेभ्यः सम्भार्य्यं नवमम् ॥ ५ ॥

सर्व्वेभ्यो वेद्यादिस्थानेभ्यः स्तोकस्तोकां मृदं सम्भृत्याहृत्य क्रियते—इति सम्भार्य्यं नवमं पिण्डं कुर्व्वीत ॥ ५ ॥ ० ॥

समान् कृतलक्षणान् ॥ ६ ॥

समान् समानान् प्रमाणतः, कृतं लक्षणं येषां तान् कृतलक्षणांश्च

पिण्डान् कुर्व्वीत। लक्षणं चिह्नम्—इत्यनर्थान्तरम्। यतमः पिण्डो यतमस्या मृद स्तच्चिह्नं कर्त्तव्यं वक्ष्यमाणार्थम्॥ ६॥ ०॥ तान् खल्विमान् पिण्डान्—

पाणावाधाय कुमार्य्या उपनामये हतमेव प्रथममृतं नात्येतिकश्चनर्त्ते इयं पृथिवी श्रिता सर्व्वमिदम-सौभूयादिति, तस्यानाम गृहीत्वैषामेकं गृहाणेति ब्रूयात्॥ ७॥

स्वकीये पाणौ हस्ते आधाय कृत्वा कुमार्य्याः कन्यायाः उप समीपे नामयेत् स्थापयेत् ऋत मेव प्रथमम्—इत्यनेन मन्त्रेणेतिकारा-न्तेनेत्यर्थः। किं कृत्वा?। असावित्यस्मिन् मन्त्रस्थाने तस्याः कुमार्य्या नाम गृहीत्वा उच्चार्य्य। तेन 'सर्व्वमिदं धनदाभूयात्' —इत्येवमादिकः प्रयोगः। एवं स्थापयित्वा, पुनः, तस्या नाम गृहीत्वा योग्यत्वात् सम्बोधनविभक्त्या उच्चार्य्य—एषामेकं गृहाण— इति ब्रूयात्। 'धनदे! एषा मेकं गृहाण'—इत्यादिः प्रयोगः। तदिदं तस्या नाम गृहीत्वेति मध्यपठितं मध्यमणि न्यायेनो-भाभ्यां सम्बध्यते। अतएव गृहाणेति सम्बोध्यमानार्थापेक्षो मध्यम पुरुषोप्याञ्जस्येनोपपद्यते॥ ७॥ ०॥

पूर्व्वेषां चतुर्णां गृह्णन्तीमुपयच्छेत्॥ ८॥

पूर्व्वेषां चतुर्णां वेदि सीता ह्रदगोष्ठमृन्निर्मितानां पिण्डानाम् एकतमं पिण्डं गृह्णन्तीं (छान्दसोयं प्रयोगः) गृह्णतीम् आददानं कुमारीमुपयच्छेत् विवाहयेदित्यर्थः॥ ८॥ ०॥

सभार्य्यमपीत्येके ॥ ६ ॥

सभार्य्यमपि पिण्डमाददानामुपयच्छेदित्येके आचार्य्या मन्यन्ते। अस्मादेवावगम्यते,—सभार्य्यमाददानां नोपयच्छेदित्यन्ये मन्यन्ते—इति। तस्मात् सभार्य्यमाददानामिच्छयोपयच्छेद्वा नवोपयच्छेत्—इति सिद्धम्। किं कारणम्?। शुभाशुभयोर्मिश्रत्वम्। कुतः पुनरेतत्?। शाखान्तरे प्रत्येकशः फलार्थवाद दर्शनात्, सभार्य्यस्य च संर्व्वघटितत्वात्। तथा चोक्तम्।

"गृह्णाना वेदिपिण्डञ्च प्रसूते याज्ञिकान् सुतान्।
सीता पिण्डन्तु गृह्णाना सुतान् सूते कृषीबलान्।
सर्व्वकाम समृद्धांश्च तृतीयस्य परिग्रहात्।
गोष्ठपिण्डग्रहाच्चापि गोमिनः सुखिन स्तथा।
इतश्चेतश्च गन्तारः पञ्चमेनाश्रिताः सुताः।
षष्ठेन तु गृहीतेन भवन्ति द्यूतसेविनः।
श्मशान पिण्डग्रहणाद्विधवा जायते ध्रुवम्।
वन्ध्या वा विधवा वा स्यादष्टमग्रहणादपि।
मिश्रमेतद्भवेत् सर्व्वं यतः पूर्व्वोदितं फलम्।
नवमस्य ग्रह स्तस्मात् शुभो वा यदि वाऽशुभः"।

इति ॥ ६ ॥ ० ॥

अथेदानीमासन्न विवाहायाः कन्यायाः स्नपनमभिधीयते,—

क्लीतकै र्यवै र्माषै र्व्वाऽऽप्लुताᳫं सुहृत् सुरोत्तमेन सशरीरां त्रिर्मूर्द्धन्यभिषिञ्चेत्—कामदेव ते नाम मदो-नामासीति, समानयामुमिति पति नाम गृह्णीयात्, स्वाहाकारान्ताभि रुपस्थ मुत्तराभ्यां स्नावयेत् ॥ १० ॥

क्लीतकैः क्लिन्नकैः चूर्णीकृत्योदकेन द्रवीकृतैरित्येतत्। कैः ?। यवै-र्माषैर्व्वा। यवमाषौ प्रसिद्धौ। वा शब्दो विकल्पार्थः। "मसूरयव माषाणां स्नद्ण्यचूर्णान्येकीकृत्य"—इति भवदेवभट्टवचनम् अप्रमा-णम्। तदेभिर्यवैर्माषैर्व्वा आप्लुतां कृतसर्व्वाङ्गोद्वर्त्तनां, सुहृत् मित्रं स्निग्धहृदयः—इत्यनर्थान्तरम्। सह शरीरेण वर्त्तमानां कन्यां मूर्द्धनि शिरसि त्रि र्व्वारत्रयम् अभिषिञ्चेत्। मूर्द्धनि तथाऽभिषे-क्तव्यं यथा सर्व्वमेव शरीरमभिषिक्तं भवतीत्यर्थः। केन अभि-षिञ्चेत्?। सुरोत्तमेन। वरुणा सुराऽरविन्दानीत्युदकनाम पाठादुदकनामैतत्—यत् सुरेति। तदयमर्थः। उदकेन उत्तमेन शोभनगन्धवर्णादियुक्तेन अभिषिञ्चेत्। सुरैव कस्मान्नोच्यते?। उच्यते। सुरा हि नामात्यन्तमपवित्रं यदस्याः घ्राणस्पर्शयोरपि प्रायश्चित्तमुपदिशन्ति। तथाच स्मर्य्यते।

"सुराया गन्धमाघ्राय स्नात्वाऽऽज्यं प्राश्य शुध्यति।
स्पर्शे प्रतिग्रहे चैव त्र्यहं पीत्वा तथोदकम्"।

इति। "सुरास्नानसमं तैलम्"—इति च सुरास्नानस्यात्यन्तनि-न्द्यतां दर्शयति। वचनबलाददोषः?—इति चेत्। न। अन्यथो-पपत्तेः। अन्यथापि वचनमुपपद्यते—इति नास्ति वचनस्य बलम्। न खल्वविरोधेन सम्भवति वचनार्थे विरुद्धमर्थं प्रकल्प्य वचन

तस्माददोषः—इतीयं कल्पना साधीयसी भवति। अन्यथोपपन्नञ्च वचनं न सामान्यस्यापि शास्त्रस्य बाधकं भवितु मर्हति—इति षमर्षिना शेषभस्याधिकरणे दर्शितम्। तस्मादुदकेनैवाभिषेकः। किं तूष्णीमभिषिञ्चेत्?। न। कथं तर्हि?। कामदेव ते नाम मदो-नामासि—इत्येवमादिभिः ऋग्भिः। कतिभिः ऋग्भिः?। स्वाहा-कारान्ताभिः। अस्मिन् प्रदेशे स्वाहाकारान्ता यावत्यऋचः सन्ति तावतीभिः,—तिसृभिरित्यर्थः। तस्मादेकैकाम् ऋचमुच्चार्य्य एकै-कोऽभिषेकः कर्त्तव्यः। उत्तराभ्यान्तु द्वाभ्याम् ऋग्भ्याम् उपस्थं योनिं प्लावयेत्। एतदुक्तं भवति। तिसृभिरेव ऋग्भिः तथा शिरस्य-भिषेकः कर्त्तव्यो यथा सर्व्वं शरीरमभिषिक्तं भवति, परमुत्तराभ्यां तथाऽभिषेक्तव्यं यथोपस्थो विशेषतः प्लावितो भवति—इति। अथे-दानीं मन्त्रे विशेषमाह। समानयामुमित्यत्र अमुमित्यस्मिन् मन्त्र स्थाने समानयामुकमित्यभिषेक्तव्यायाः कन्यायाः पत्यु र्नाम गृह्णी-यात् उच्चारयेत्। तदिदं सूत्रम् उत्सृज्य पाठक्रमम् अनुसृत्यार्थ क्रमं व्याख्यातम् ॥ १० ॥ ० ॥

## ज्ञातिकर्म्मैतत् ॥ ११ ॥

एतत् कन्यास्नपनं ज्ञाते र्मातापित्रोरन्यस्य कुलीनस्य सुहृदः कर्म्म। ज्ञातिकर्म्मत्वादेवेदं नातीवावश्यकमित्यत्रगम्यते। एवमेके। अय-ञ्चाभिषेको दौर्भाग्यालक्ष्म्यपवर्गाणां नोदनार्थं शाखान्तरेष्वपि पठ्यते, तस्मात् प्रयत्नतः कर्त्तव्यः। एवमन्ये। तदत्र भवन्तो भूमि-देवाः प्रमाणम्॥ ११ ॥ ० ॥

अथेदानीं पाणिग्रहणमभिधीयते,—

पाणिग्रहणे पुरस्ता च्छालाया अग्नि रुपसमाहितो भवति ॥ १२ ॥

पाणिग्रहणे कर्म्मणि प्रक्रान्ते पुरस्तादग्रतः शालायाः गृहस्य—चत्वर इत्यर्थः। अग्नि रुपसमाहितः स्थापितो भवति, पूर्व्वाह्णामावृतं कृत्वा। अनुपदेशात् कर्त्तुरनियमः। तेन यावद्वरो वधूमादाय गृहान्निष्क्रम्यागच्छति, तावदन्य एव कश्चिदग्निं स्थापयति। आवृतमपि स एव करोति। अतएव सूचयिष्यति—"बर्हिषोऽन्तं कटान्तं प्रापयेत्"—इति।

यद्यप्याचार्य्येण कन्याप्रदानं प्रतिग्रहश्च न सूचितम्, तथापि "अलङ्कृत्य कन्यामुदकपूर्वां दद्यात्"—इत्येवमादि गृह्यान्तरदर्शनात् तदप्यादरणीयम्। पाणिग्रहणे शिष्यजिज्ञासा समुत्कटेति तन्निरसिसिषया खल्वाचार्य्यस्तदेव सूत्रयाञ्चकार, न कन्याप्रदानम्—इति लिख्यते। प्रदानञ्चेदं कन्यादातुः कर्म्म, न प्रतिग्रहीतुः। प्रतिग्रहोऽपि दानाधीन एव ॥ १२ ॥ ० ॥

अथ जन्यानामेको ध्रुवाणामपां कलसं पूरयित्वा सहोदकुम्भः प्रावृतो वाग्यतोऽग्रेणाग्निं परिक्रम्य दक्षिणत उदङ्मुखोऽवतिष्ठते ॥ १३ ॥

अथानन्तरं स्थापितेऽग्नावित्यर्थः। जन्याः नवोढाज्ञातयो वरस्निग्धा वा। तेषामेकोऽन्यतमः ध्रुवाणां सन्ततानां सम्यग्विस्तृतानाम्—(तदनेन कूपाद्युदकं नानुजानाति—इति गम्यते।) अपां, ध्रुवाभिरद्भिरित्येतत्। कलसं कुम्भं पूरयित्वा वर्द्धयित्वा, सह उद-

कुम्भेन उदकपूरितेन कुम्भेन वर्त्तमानः—तमादायेत्यर्थः। प्रावृतो वस्त्रेणाच्छादितः। कृतोष्णीषः—इत्यन्ये। 'वाग्यतोऽग्रेणाग्निं परिक्रम्य'—इति कृतभाष्यम्। दक्षिणतो दक्षिणस्यां दिश्यग्नेः (ब्रह्माऽऽसनं परित्यज्य—इत्यर्थाल्लभ्यते।) उदङ्मुखः कौवेरीदिगभिमुखः अवतिष्ठते ऊर्द्धस्तिष्ठति। अवपूर्वं स्तिष्ठति रनुपविष्टतां बोधयति। अत्रापि वाग्यमनलोपे पूर्वोक्तमेव प्रायश्चित्तं कारणस्याविशेषात्—इति द्रष्टव्यम्। एव मन्यत्रापि॥ १३॥ ०॥

## प्राजनेनान्यः॥ १४॥

प्राजनेन सह प्रतोदेन अन्यः कुम्भधारिणोऽपरः प्रावृतो वाग्यतोऽग्रेणाग्निं परिक्रम्य दक्षिणत उदङ्मुखोऽवतिष्ठते॥ १४॥ ०॥

## शमीपलाशमिश्रांश्च लाजांश्चतुरञ्जलिमात्रान् शूर्पेणोपसादयन्ति पश्चादग्नेः॥ १५॥

शमी प्रसिद्धा। तस्याः पलाशानि पत्राणि तन्मिश्रान् लाजान्—

"अक्षतास्तु यवाः प्रोक्ता भृष्टा धाना भवन्ति ते।
भृष्टास्तु व्रीहयो लाजा घटा खाण्डिक उच्यते"।

इत्युक्तलक्षणान्। चत्वारोऽञ्जलयः परिमाणमेषाम्—इति चतुरञ्जलिमात्रान्। परिमाणे मात्रट्। यावद्भि श्चत्वारोऽञ्जलयः पूर्य्यन्ते तावतः—इत्येतत्। शूर्पेणोपसादयन्ति शूर्पस्थान् कृत्वा स्थापयन्ति पश्चादग्नेः। बहुवचनात् कर्त्तुरनियमः। सः समुच्चये पूर्वोक्तमेव समुच्चिनोति॥ १५॥ ०॥

दृषत् पुत्रश्च ॥ १६ ॥

दृषत् शिला पेषणाधारात्मिका, पुत्रश्चोपलः पेषणकरणस्वरूपः। साच सचेतिद्वन्द्वैकवद्भावः। तच्चोपसादयन्ति पश्चादग्नेः। कुतः पुनः पुत्र उपल इति वर्ण्यते?। सन्निधानादित्याह। सन्निहितैव दृषज्जाति रागच्छतिहृदयमिति सैव पुत्रस्यापि कल्पयितुमुचिता। श्लोकमपि उदाहरन्ति।

"प्रसिद्धार्थस्य सान्निध्ये योऽप्रसिद्धार्थ उच्यते।
तत्सन्निधान सामर्थ्यात्तज्जातीयोऽवगम्यते"।

इति। दृषज्जातीयपुत्रस्यैवासादनं न तु दृषदः पुत्रस्य च—इति वा व्याख्येयम्॥ १६ ॥ ० ॥

अथ यस्याः पाणिं ग्रहीष्यन् भवति सशिरस्का साऽऽप्लुता भवति ॥ १७ ॥

अथ पूर्वोक्ताभिषेकानन्तरं यस्याः कन्यायाः पाणिं ग्रहीष्यन् ग्रहीतुमिच्छन् भवति—ग्रहीष्यति वरः, सा कन्या सशिरस्का आप्लुता अविधवोपनीतमङ्गलोदकैः स्नाता भवति॥ १७ ॥ ० ॥

अहतेन वसनेन पतिः परिदध्यात्,—या अकृन्तन्नित्येतयर्चा, परिधत्त धत्त वाससेति च॥ १८ ॥

अहतेनाच्छिन्नेनाखण्डितेन। आहतेन—इति केचित् पठन्ति। तदग्राकरम्। वसनेन वाससा पतिः यस्याः पाणिं ग्रहीष्यन् भवति

तां परिदध्यात् अन्तर्भूतनिजर्थतया परिधापयेत् संयोजयेत्— अहतं वास त्वां परिधापयेदित्यर्थः। अतएव परिधत्स्व—इति, परिधत्त—इति च मन्त्रलिङ्गमनुगृह्यते। गृह्यान्तरे परिधापनोपदेशाच्चैवमवगन्तव्यम्। तच्चोदाहरिष्यामः। वरस्य परिधापनोपदेशादेव वध्वाः परिधानमप्याक्षिप्यते, तद्विना तदनुपपत्तेः। आचार्यस्याध्यापनविधिनैव माणवकस्याध्ययनमप्याक्षिप्यते—इति यद्वत्। या अकृन्तन्नित्येतया ऋचा, परिधत्तधत्तवाससा—इति मन्त्रेण च परिदध्यादिति गतेनसम्बन्धः। एतया—इत्यवाच्यम्?—इति चेत्। न। स्वरवर्ण नियमार्थत्वात्। कथं नाम?। एतया एवम्भूतस्वरवर्णयैव न तु व्यत्यस्तस्वरवर्णयेत्यर्थः। तदनेन स्वरवर्ण सम्पादनार्थमवश्यं यतितव्यम्—इति दर्शयति। तथा चोक्तम्।

"मन्त्रो हीनः स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात्"।

इति। अत्र किञ्चिद्वक्तव्यमस्ति। द्वयो खल्वत्र परिधापनक्रियाऽवधार्यते। कस्मात्?। भेदेनोपदेशात्। 'एतयर्चा'—इति,'इति च',—इति चानयोर्मन्त्रयो र्भेदेनोपदेशो विभिन्नक्रियाविनियोगमवगमति। यदि पुन रेकस्यामेव परिधापनक्रियायामुभयोर्विनियोगोऽभिप्रेयेत, तर्ह्युक्तं भेदोपदेशेन। तस्माद्वसनद्वयपरिधापने मन्त्रद्वयस्य विनियोगः—इत्यादिमो मन्त्रोऽधरीयवसनपरिधापने, ऽन्तिमस्तोत्तरीयवसनपरिधापने करणम्—इति स्थिप्यते। गृह्या-

न्तरचोपदेशात्। गृह्यान्तरे च वसनद्वयस्य (अधरीयस्य उत्तरीयस्य च) परिधापनमुपदिश्यते—इतीहापि तदेव वर्णयितुमुचितम्। तथाच गृह्यान्तरम्। "अथैनां वासः परिधापयति"—इति। "अथोत्तरीयम्"—इति च।

"द्विकच्छः कच्छशेषस्तु मुक्तकच्छ स्तथैव च।
एकवासा अवासाश्च नग्नः पञ्चविधः स्मृतः"।

इत्येकवाससोनग्नलक्षणाच्चैतदवगन्तव्यम्॥ १८॥ ०॥

प्रावृतां यज्ञोपवीतिनीमभ्युदानयन् जपेत्—सोमोऽददद्गन्धर्व्वायेति॥ १९॥

प्रावृतां कृतोत्तरीयाम्। कथं प्रावृताम्?। यज्ञोपवीतिनीं यज्ञोपवीतिनीमिव, यज्ञोपवीतवत्कृतोत्तरीयामित्यर्थः।
एवं वा—
प्रावृतां प्रकर्षेणावृताम् आच्छादिताम्,—"न नाभिं दर्शयेत् कुलवधू रागुल्फाभ्यां वासः परिदध्यात् न स्तनौ विवृतौ कुर्य्यात्"—इति स्मृत्युक्तरीत्या परिहिताधरीयवसनाम्—इत्येतत्। यज्ञोपवीतं यज्ञोपवीतवत् विन्यासविशिष्ट मुत्तरीयं, तत् यस्या अस्ति, सेयं यज्ञोपवीतिनी ताम्—यज्ञोपवीतवत् परिहितोत्तरीयवसनामित्यर्थः। तदाभ्यां पदाभ्यां पूर्वच सूचितयो वाससो र्विन्यासविशेषमिह दर्शयति। यज्ञोपवीतपदस्योत्तरीयेऽपि प्रयुज्यते विन्यासविशेषलाभार्थम्—इति पुरस्तादभिहितमस्माभिः। यज्ञोपवीतवतीमित्येव कुतो न वर्ण्यते?। तदभावादित्याह। न खल्वस्ति योषितां यज्ञो-

पवीतं येनानुद्येत। अनुमीयतामिति चेत्—स्यान्मतम् अस्मादेवा-नुवादात् योषितामपि यज्ञोपवीत मनुमीयताम्। न। अन्यथो-पपत्तेः। अन्यथैवोपपन्नोऽयमनुवादो न विधिमनुमापयितुमलम्। अनन्यथासिद्धः खल्वनुवादो विधिमनुमापयति। सिद्धवदुपदेशा-च्चासिद्धिः। सिद्धवत् खल्वेतदुपदिश्यते—यज्ञोपवीतिनीम्—इति। सिद्धं खल्वासां यज्ञोपवीतशब्दमुत्तरीयं न यज्ञोपवीतम्। तस्मा-दसिद्धि र्योषितां यज्ञोपवीतस्य। तामिमां प्रावृतां यज्ञोपवी-तिनीं वधूं अभ्युदानयन्—"पित्रा प्रत्ता मादाय गृहीत्वा निष्क्रामयति"—इति गृह्यान्तरदर्शनात् करेण करे गृहीत्वा गृहादग्नेरभिमुखीमानयन् जपेत् पतिः—सोमोऽददित्येतं मन्त्रम् ॥ १९ ॥ ० ॥

पश्चादग्नेः संवेष्टितं कटमेवं जातीयं वाऽन्यत् पदा प्रवर्त्तयन्तीं वाचयेत्—प्र मे पतियानः पन्थाः कल्पता-मिति ॥ २० ॥

संवेष्टितं सम्यग्वेष्टितमधस्तोपरि च पार्श्वेचाच्छादितमहतेन वसने-नेत्यर्थः। कटं, कटः प्रसिद्धः वीरणपत्रै ग्रंथ्यते। तस्य खल्वसम्भवे एवं जातीयं तृणजातीयम् अन्यद्वा किञ्चित् तृणवेष्टकादि,पदा चर-णेन प्रवर्त्तयन्तीं प्रसारयन्तीम्—अग्निसमीपं नयन्तीं वधूं वाचयेत् भाषयेत् पतिः। किं वाचयेत्?। प्रमेपतियानः—इत्येतं मन्त्रम्। गतमन्यत्। अत्रानुवादाद्विधिरनुमीयते,—वरवध्वो रुपवेशनार्थं कटः कर्त्तव्यः—इति। कर्त्तुस्त्वानियमः। एतदुक्तं भवति, वरेण

नीयमाणा वधूः चरणेन कटं प्रसार्य्याग्निसमीपं नयत्युपवेशना-र्थम्, मन्त्रञ्च तत्कालमेव पठति—इति ॥ २० ॥ ० ॥

## स्वयं जपेदजपन्त्यां प्रास्यादिति ॥ २१ ॥

लज्जया अन्येन वा केनचित् कारणेन तं मन्त्रमजपन्त्यां वध्वां पतिः स्वयमेव जपेत्। तच्च प्रमे—इत्येतस्मिन् मन्त्रस्थाने प्रास्या इत्येष विशेषः कार्य्यः ॥ २१ ॥ ० ॥

पदा प्रवर्त्तयन्तीमित्युक्तम्। तत् कियन्तं प्रवर्त्तयेत्?। उच्यते,—

## वर्हिषोऽन्तं कटान्तं प्रापयेत् ॥ २२ ॥

वर्हिषः—इति जात्याश्रयमेकवचनम्। वर्हिषाम् आस्तृतानामन्तं कटस्यान्तं प्रापयेत्। अयमर्थः। कटस्तथा पदा प्रवर्त्तयितव्यो वध्वा, यथा तदन्तभाग आस्तृत वर्हिषां किञ्चिदुपरि स्यादिति। तस्मा-दवगच्छामः,—यावद्वासः परिधाय वरो वधूमादायागच्छति, तावद्वर्हिरास्तरणादिका सर्व्वाप्यावृदन्येनैव कर्त्तव्या—इति।

रघुनन्दनस्त्वाह—"अन्तशब्दो समीपवचनो, आस्तृतवर्हिषां कटस्य च समीपं देशं—कटवर्हिषोरन्तरालरूपं वधूं प्रापयेत् पतिः"—इति। तदसङ्गतम्। उपात्तं कर्मद्वय मुत्सृज्यानुषङ्गेन वध्वाः कर्मत्वकल्पनाऽनौचित्यात्। एकस्य चान्तशब्दस्यानतिप्रयोजनत्वात्। एवं हि वर्हिषोऽन्तं कटस्यचेति कुर्य्यात्। नाप्यन्तरालदेशं गतया वध्वा किञ्चित् प्रयोजनमस्ति। उपविष्टया खल्वेतया प्रयोजनम्। "प्रापयेत्"—इत्यत्र "प्रेरयेत्"—इति केचित् पठन्ति। तत्रापि तथैवार्थः ॥ २२ ॥ ० ॥

एवं वरगृहीतकरा वधू रागत्य,—

पूर्व्वे कटान्ते दक्षिणतः पाणिग्राहस्योपविशति ॥२३॥

पूर्वे कटान्ते कटस्य पूर्वस्मिन् भागे दक्षिणतोदक्षिणस्यां दिशि उपविशति। कस्य दक्षिणतः?। पाणिग्राहस्य। यः पाणिमस्या ग्रहीष्यति, तस्य ॥ २३ ॥ ० ॥

दक्षिणेन पाणिना दक्षिणमंऽस मन्वारब्धायाः षडाज्याहुती र्जुहोत्यग्निरेतु प्रथम इत्येतत् प्रभृतिभिः ॥ २४ ॥

दक्षिणेन सव्येतरेण। वामाचारा योषितः—इति ह्याचक्षते, तस्मात् सन्निहितत्वाच्च सव्येनैवेदमन्वारम्भणं मा प्रसाङ्क्षीदिति खल्वाचार्य्यो-दक्षिणेनेत्याह। अन्वारब्धायाः—इति कर्त्तरि निष्ठा। षष्ठीचेयं सम्बन्धार्था। तदयमर्थः। दक्षिणेन पाणिना दक्षिणमंसम् वरस्येत्यर्थात्। अन्वारब्धायाः अन्वारभमाणायां वध्वां, पाणिग्राहः षडाज्याहुतीः षट्संख्याका आज्यहविष्का आहुतीर्जुहोति, अग्निरेतु—इत्येवमादिभिः षड्भिर्मन्त्रैः। होमस्य खल्वस्याज्यहविष्कतया आज्यतन्त्रविहितो महाव्याहृतिहोमः पुरस्तादपि भवति। आज्यभागौ स्विष्टकृच्च न भवन्तीत्यवगन्तव्यम्॥ २४ ॥ ० ॥

महाव्याहृतिभिश्च पृथक् ॥ २५ ॥

महाव्याहृतिभि र्व्यस्ताभिः, अतएव पृथक् नानेत्यनर्थान्तरम्—एकै-

कश्चः—इत्येतत्। आज्याहुतीर्जुहोतीत्यनुवर्त्तते। एवं खलु तिस्र आहुतयो भवन्ति॥ २५॥ ०॥

समस्ताभि श्चतुर्थीम्॥ २६॥

समस्ताभिर्महाव्याहृतिभिश्चतुर्थी माज्याहुतिं जुहोति। सेयं संख्या महाव्याहृतिहोमापेक्षया बोद्धव्या। ताः खल्वेता श्चतस्र आहुतयः षडाहुतीनां परस्तादेव भवन्ति। इदानीमेवोपदेशात्। पुरस्तात्तु-तिस्र एवाज्यतन्त्रोपक्रमविहिताः॥ २६॥ ०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये द्वितीयप्रपाठकस्य प्रथमा काण्डिका॥ ०॥

---

द्वितीयप्रपाठके द्वितीया काण्डिका।

## हुत्वोपोत्तिष्ठतः॥ १॥

उपेति संहतहस्तत्वमुच्यते। हुत्वा संहतहस्तौ दम्पती उत्तिष्ठतः। 'उप'—इत्यत्र, 'उपेत्य'—इति केचित् पठन्ति, उपेत्य अञ्जलिं बध्वा—इति व्याचक्षते च। आह। एक कर्त्तृकत्वा भावात् कथं हुत्वेति क्त्वा प्रत्ययः?। पाणिग्राहो हि जुहोति। उच्यते। पूर्व्वापरीभावमात्र मत्र क्त्वाऽर्थः, नत्वेककर्त्तृकत्वमपि। तत्राप्येष दृश्यते—"आज्याहुतिं हुत्वा मुख्यं धनं दद्यात्"—इत्येवमादौ बहुलम्। अत्र खल्वन्यो जुहोति, अन्यश्च ददाति। यजमानो हि ददाति। होमं कुर्व्वाणस्य पत्यु रंस मन्वारभमाणा वधूरपि कयाचि द्विवक्षया होमानुकूलचेष्टावती भवति—इत्यस्ति समानकर्त्तृकत्वम्—इति तत्कारः।

अथ हुत्वेत्येतदवाच्यं नन्वभिधानादेव तत्प्राप्यते—इति चेत्। न। हुत्वा अनन्तर मेवोत्तिष्ठतः न तु तन्त्रसमापनादिकमपि कृत्वा—इत्येवमर्थत्वात्॥ १॥ ०॥

**अनुपृष्ठं पतिः परिक्रम्य दक्षिणत उदङ्मुखोऽवतिष्ठते वध्वञ्जलिं गृहीत्वा॥ २॥**

पृष्ठम् अनु लक्षीकृत्य अनुपृष्ठं वध्वा इत्येव। वध्वाः पृष्ठतः पश्चिमया दिशा पतिः परिक्रम्य गत्वा, दक्षिणतो वध्वा एव, उदङ्मुखोऽवतिष्ठते ऊर्द्धस्तिष्ठति। किं कृत्वा?। वध्वञ्जलिं गृहीत्वा, स्वेनाञ्जलिना—इति भट्टनारायण भवदेवभट्टादयः। पूर्व्वमञ्जलिकरणमनयोः सूचितं तदुभयमेवमुपयुज्यते। रघुनन्दनस्त्वाह—"वध्वञ्जलिं दक्षिणेन पाणिना गृहीत्वा"—इति। तदत्र पत्युरञ्जलिकरणस्यार्थवत्तां न पश्यामः।

स खल्वयमञ्जलिः पाणिग्रहणपर्य्यन्तं स्थास्यति। पतिश्च तावन्तं कालममुमञ्जलिमनापत्सु न त्यजेत्। तथाच गृह्यान्तरम्।

"कृत्वाऽऽज्य मथ जायाया अन्वारभ्याञ्जलिं पतिः।
न विमुञ्चेदनापत्सु यावत् पाणिग्रहो जपः"।

इति॥ २॥ ०॥

## पूर्व्वा माता लाजानादाय भ्राता वा वधू माक्रामयेदश्मानं दक्षिणेन प्रपदेन॥ ३॥

पूर्व्वा पूर्व्वदिश्यवस्थिता—इत्यर्थः। यत्तु—'पूर्व्वामातेत्येकं पदम्, पूर्व्वदिश्यवस्थिताया वध्वा एव माता'—इति। तदसुन्दरम्। सामानाधिकरण्येनान्वयसम्भवे वैयधिकरण्येनान्वयानौचित्यस्य उद्भिदाद्यधिकरणे दर्शितत्वात्। यच्च वर्णयन्ति—'पूर्व्वा बह्वीनां मातॄणां मध्ये या प्रथमा माता'—इति। तदप्यसङ्गतम्। अमुख्यत्वापत्तेः। जनन्यां हि मातृशब्दं स्मरन्ति। सा खल्वेकैव। मातृपदस्य पितृ-

पत्नीपरत्वे च लक्षणाप्रसङ्गः । तचान्याय्यः । यः पुनर् एवं समाधत्ते—'एक मातृकायां पूर्व्वा पदस्यानर्थक्य प्रसङ्गात्'—इति । सोऽप्यनेनैव निरस्तः । किञ्च । स तावत् देवानां प्रियोऽविद्यमानमातृकायां मातृपदस्यार्थवत्त्वं पर्य्यनुयोक्तव्यः । तावतैव तूष्णीमासिष्यते ।

सूत्रमिदानीं योज्यते । पूर्व्वदिश्यवस्थिता जननी भ्राता एकपितृजातो वा पूर्व्वदिश्यवस्थित एव । अन्यो वा ब्राह्मणः कश्चित्—इति भवदेवरघुनन्दनौ । वधूं अश्मानम् आक्रामयेत्, दक्षिणेन प्रपदेन पदाग्रेणेत्यर्थः । किं कृत्वा? । लाजान् शूर्पस्थितान् आदाय गृहीत्वा । सव्येन पाणिना लाजान् शूर्पेण गृहीत्वा दक्षिणेन बधूमश्मानमाक्रामयेत्—इति भट्टभाष्यम् । अन्येत्वाहुः—अञ्जलिनैव लाजानादाय बधू माक्रामयेत्—इति । अश्मानमाक्रामयेत् इति वचनादवगम्यते,—वध्वा अग्रतोऽश्मा निधातव्यः—इति ॥ ३ ॥ ० ॥

तयाचाश्मन्याक्रम्यमाणे,—

पाणिग्रहो जपति,—इममश्मानमारोहेति ॥ ४ ॥

स्पष्टार्थम् ॥ ४ ॥ ० ॥

सकृत् संगृहीतं लाजानामञ्जलिं भ्राता व' अञ्जलावावपति ॥ ५ ॥

सकृदेकवारं संगृहीतं सम्यक् गृहीतं, यथा न विकीर्य्यते तथा

गृहीतम्—इत्यर्थः। 'संगृहीतं कृत्वा'—इति केचित् पठन्ति। अकिरन् इत्यर्थः—इति वर्णयन्ति च। 'लाजानामञ्जलिम्' अञ्जलिपरिमितान् लाजान्—इत्येतत्। लाजाञ्जलिम्—इति पाठेऽपि तथैवार्थः। 'वध्वञ्जलौ' 'आवपति' ददाति। कः?। भ्राता। माता वा। कुतः?। पूर्वत्र विकल्प श्रवणात्। अभावे चान्योपि ब्राह्मणः। कस्मात्?। कर्म्मणः प्रधानत्वात्। होमः खल्वत्र प्रधानं, तच्चावापो गुणभावेनोपकरोति, तमपि भ्राता माता वा। न खलु गुणस्य गुणानुरोधेन प्रधानमेव न कर्त्तव्यम्—इति युक्तम्। मुख्यं कथं सगुणं स्यात्—इति खल्वसौ गुणेषु प्रवर्त्तते। स यदि गुणस्य गुणं विनिपातयति,—नास्य किञ्चिद्धीयते। नह्यसौ गुणं सगुणं कर्त्तुं प्रवृत्तः। अथ यदि गुणं सगुणं कुर्व्वाणः प्रधानं विनिपातयति, स्वार्थोऽस्य हीयते,—अनर्थिका अस्य प्रवृत्तिः स्यात्। तस्मादन्योप्यावपेदिति सिद्धम्। भ्राता—इत्यत्र माता भ्रात्रादिर्व्वा—इति केचित् पठन्ति, तदा व्यक्त एवार्थः॥ ५॥ ०॥

तᳬ सोपस्तीर्णाभिघारितमग्नौ जुहोत्यविच्छिन्दत्यञ्जलिम्—इयं नार्य्युपब्रूते—इति॥ ६॥

तं लाजाञ्जलिं सोपस्तीर्णाभिघारितम्—उपस्तीर्णञ्च अभिघारितञ्च उपस्तीर्णाभिघारितं तत् सहितम्—इत्यर्थः। तस्मात् लाजावापस्य पुरस्ताच्चोपरिष्टाच्च घृतस्रुवेणाप्लावयितव्यम्। तत्र लाजानां सकृन्मात्रावापस्य सूचितत्वात् चीण्याप्लावनान्यपेक्षितानि चतुरवत्तिनाम्, अन्येषाञ्च चत्वारि। चतुरवत्तिनां तावत् पुरस्तादेकमा-

स्रावनं परस्तात् द्व आस्नावने। अन्येषान्तु पुरस्तादप्यास्रावनद्वयं परस्तादपि। कस्मात्?। स्विष्टकृदवदाने तथा दर्शनात्।

सोपस्तीर्णाभिघारितम्—इत्युच्यते, न ज्ञायते,—कोवा उपस्तृणुयात् कोवा अभिघारयेत्?—इति। तद्वक्तव्यम्। उच्यते। माता भ्राता वा उपस्तृणुयात् अभिघारयेच्च। कस्मात्?। यस्मात् लाजावापे तावन्निर्विवादमनयोः कर्त्तृत्वं, तस्मादुपस्तरणाभिघारणयोरपि तयोरेव कर्त्तृत्वं कल्पयितुमुचितम्। लाजावापः खलु होमस्योपकरोति, उपस्तरणमपि तस्योपकरोति अभिघारणमपि। तस्मादितरच्च यः कर्त्ता इतरस्यापि स एव भवितु मर्हति। यः खल्वेकमर्थं करोति, शक्नोति सोऽपरमपिकर्त्तुं, शक्नोति चेत् करिष्यतितराम्। नचान्यः कश्चिदिह सन्निहितः। वरस्तर्हि करोतु?। नेत्युच्यते। कुतः?। अशक्यत्वात्। अशक्यं हि वरस्योपस्तरणमभिघारणञ्च कर्त्तुम्। किं कारणम्?। वध्वञ्जलिः खल्वेवं परित्यज्येत। तच्चानिष्टम्—इत्यवोचाम। अपिच। लाजानावपत उपस्तरण मप्यर्थादाक्षिप्यते। तद्विना तस्य कर्त्तु मशक्यत्वात्। तत् सामान्यादभिघारणेऽपि तथा। एतेन—यत् रघुनन्दनादयोवर्णयन्ति,—वर एवोपस्तृणोति अभिघारयति च—इति, तदसङ्गतम्। प्रमाणाभावाच्च।

अथ सूत्रशेषोव्याख्यायते। अग्नौ जुहोतीत्युक्तार्थम्। कथम् जुहोति?। लाजाञ्जलिम् अविच्छिन्दती विच्छेदमकुर्वती—अञ्जलिभेदमकुर्वतीत्यर्थः। "अविच्छिन्नमञ्जलिम्"—इति पाठेऽपि तथैवार्थः। होमप्रकारस्य शाखान्तरे पठ्यते।

"अङ्गुल्यग्रे न होतव्यं तथाचाञ्जलिभेदतः।
अञ्जली वामपार्श्वेन लाजहोमो विधीयते"।

इति। केन मन्त्रेण जुहोति?। इयं नार्य्युपब्रूते—इति मन्त्रेण वरेण पठितेन—इत्यर्थः।

कस्मात् पुनः कारणात् वरो मन्त्रं पठति? न माता न वा भ्राता न वा वधूरेव। उच्यते। माता तावन् न पठति, अमन्त्रत्वात्। नापि भ्राता प्रमाणाभावात्। वरस्तु पठति शरीरार्द्धत्वस्मरणात्। "अर्द्धो ह वा एष आत्मनो यज्जाया"—इति च वाजसनेये ब्राह्मणे। शरीरार्द्धेन चेत् क्रियते, तर्हि स्वयमेव क्रियते—इति शक्यं वक्तुम्। पत्नीपाद्य मन्त्राणामप्यस्य पाठः समाम्नायते। पत्नी स्वयमेव पठतु—इति चेत्। न, अमन्त्रत्वात् प्रमाणाभावाच्च। आक्षिप्यतामिति चेत्। न, अन्यथोपपत्तेः। काममाक्षिप्येत पत्न्या मन्त्रपाठो यद्यन्यथा होमो नोपपद्येत। न तु नोपपद्यते। वाक्यादिति चेत्—इति चेत् पश्यसि वाक्यात् पत्न्या मन्त्रपाठः—इति। तदपि न। कुतः?। वाक्याद्धि लिङ्गं बलीयः। लिङ्गं खल्वेवमुपलभ्यते—इयं नार्य्युपब्रूते—इति। अथ कस्मादियं श्रुतिरेव न भवति;—'इयं नार्य्युपब्रूते—इति जुहोति'—इति। नेत्युच्यते। होमकरणत्वमात्रं हि मन्त्रस्य श्रुत्याऽवगम्यते, न तु करणमन्त्रस्य पत्न्याः पाठोऽपि। एतेन वाक्यमपि व्याख्यातम्। तदपि तावतैव कृतकृत्यं नातीवास्था मन्त्रपाठमाह। तस्मात् वधू जुहोति, वरो मन्त्रं पठति—इति साधूक्तम्। कथमन्यो जुहोति अन्यस्य मन्त्रं पठति?। शास्त्रतात्पर्य्यबलादित्याह।

दृश्यते खल्वध्वर्युर्जुहोति होता वषट्करोति। तस्मादध्वर्युरेव मन्त्रं पठति—इत्यमीमांसकवचनं हेयम्॥ ६ ॥ ० ॥

अर्य्यमणं नु देवं पूषणमित्युत्तरयोः ॥ ७ ॥

उत्तरयो र्लाजहोमयो र्यथाक्रमम् 'अर्य्यमणं नुदेवं' 'पूषणम्'—इत्येतौ मन्त्रौ विनियोक्तव्यौ। प्रसङ्गाल्लाघवाच्च अत्रैवैतदुच्यते। एकस्मादेव हि लाजहोमात् परं परिणयनमभिधास्यति, ततोऽपरं होमम्। 'एवं त्रिः'—इति च सूत्रयिष्यति। होमत्रयस्यैव त्रित्वमिति चेत्। न, असम्भवात्। चतुरञ्जलिमात्राणां लाजानामासादनस्य सूचितत्वात्, एकाञ्जलिमात्रावाप विधानाच्च ॥ ॥ ७ ॥ ० ॥

हुते पति र्यथेतं परिव्रज्य* प्रदक्षिणमग्निं परिणयति मन्त्रवान् वा† ब्राह्मणः—कन्यलापितृभ्यः—इति ॥ ॥ ८ ॥

हुते—इत्येकवचनसंयोगादेकस्मिन्नेव लाजाञ्जलौ हुते—इत्यर्थः। अन्यथैतदनर्थकं स्यात्। हुते पतिः परिव्रज्य पुनरागत्य। कथं पुनरागन्तव्यम्?। यथेतं, यथा येन प्रकारेण पत्नी-पृष्ठदेशेन इतं गतं गमनं कृतं पत्नीदक्षिणस्यां, तथैव पत्नी-पृष्ठदेशेन

---

* प्रतिक्रम्य—इति, परिक्रम्य—इति च पाठान्तरम्।

† अस्मदवलोकितेषु सर्व्वेषु सूत्रग्रन्थेषु इत्यमेव पाठः। तत्त्वकारस्तु स्वमतरक्षणापेक्षी 'वा'-शब्दं न पपाठ।

पुनरागन्तव्यम् इत्यर्थः। तदेवमागत्य प्रदक्षिणं यथा भवति तथा पत्नीमग्निं परिणयति परि सर्व्वतोभावेन नयति—अग्नेः प्रादक्षिण्येन भ्रामयेदित्येतत्। कन्यला—इत्यनेन मन्त्रेण। यातीयम्—इति मन्त्रलिङ्गात् मन्त्रं पठन् परिणयतीत्यर्थः। सोऽयं पतिरञ्जलि मविमुञ्चन्नेव पत्नीं परिणयति—इत्यवोचाम। कस्याञ्चिच्चापदि पत्युरसामर्थ्ये—अन्यो वा मन्त्रवानधीत वेदो ब्राह्मणः परिणयति। मन्त्रवान् वा ब्राह्मणः—इत्येकस्माद्वाशब्दादवगम्यते—जघन्योऽयं पक्षः—इति। अस्मिन्नपि कल्पे पतिरेव मन्त्रं पठति। कस्मात्?। 'त्वया वयं द्विषोऽतिगाहेमहि'—इति मन्त्रलिङ्गात्। तस्मात् मन्त्रलिङ्गविरोधादन्यो न परिणयति—इति रघुनन्दनमतमसङ्गतम्। अर्थवत्त्वोपपत्तेश्च। मन्त्रवान् वा ब्राह्मणः—इति वचनस्यार्थवत्त्वमेवं सत्युपपद्यते। अन्यथाऽनर्थकं स्यात्। यच्च—मन्त्रवान् ब्राह्मणः पतिः—इति वर्णितम्। तदप्यनर्थकमेव। न खल्वस्य विशेषणस्य कमप्यर्थमुपलभामहे। सोऽयमनर्थिकां योजनामनुजानानोऽर्थवतीञ्च प्रत्याचक्षाणः प्रेक्षावतामनपेक्षणीयवचनो भवति। यदपि—व्यवहारापरिगृहीतत्वादन्यो न परिणयति—इत्युक्तम्। तदप्ययुक्तम्। आपत्कल्पत्वादेव तस्य कादाचित्कत्वावगमात्। अनाचाररूपस्य च व्यवहारापरिगृहीतत्वस्य अप्रवर्त्तकत्वमेव परं, न प्रवृत्तिनिरोधकत्वम्। अनाचारस्य श्रुतिकल्पनानिमित्तत्वानुपपत्तेः। आचारस्यापि शास्त्रमपेक्ष्य दुर्व्वलत्वं वक्ष्यामः।

अत्र चाग्निप्रदक्षिणे लाजादीनामपि प्रदक्षिणम्। तथाच स्मरणम्।

"लाजानाज्यं स्रुवं कुम्भं प्राजनाश्मानमेव च।
प्रदक्षिणानि कुर्य्यातां दम्पती न विनाऽग्निकम्"।

इति ॥०॥ ८ ॥०॥

**परिणीता तथैवावतिष्ठते तथाऽऽक्रामति, तथा जपति, तथाऽऽवपति, तथा जुहोति ॥ ९ ॥**

परिणीता वधूः, तथैव अनु पृष्ठगमनेन दक्षिणस्यामुदङ्मुखावस्थितेन पत्या गृहीताञ्जलिका प्राङ्मुखी, अवतिष्ठते ऊर्द्धा तिष्ठति। तथा यथापूर्व्वं तेनैव प्रकारेण मात्रादिभिः प्रे णा दक्षिणेन प्रपदेन, आक्रामति अश्मानम्। तथा पूर्व्वव पति पाणिग्राहः—इममश्मानम्—इति मन्त्रम्। तथा त तेनैव प्रकारेण आवपति वध्वञ्जलौ माता भ्राता वा स गृहीतं लाजाञ्जलिम्। तथा पूर्व्ववत्, उपस्तीर्णाभिघारितं लाजाञ्जलिमविछिन्दती वधू जुहोति—इयं नार्य्युपब्रूते—इति मन्त्रेण वरेण पठितेन। तथा—इति पूर्व्वोक्तातिदेशात् जपादीनां प्राचीना एव कर्त्तारो भवन्ति—इत्यवगन्तव्यम् ॥०॥ ९ ॥०॥

**एवं त्रिः ॥ १० ॥**

एवम् अनन्तरोक्तं सर्व्वं त्रिः कर्त्तव्यम्। एवम्—इति प्रधानत्वादवस्थानादिका क्रिया भण्यते। तस्मात्—प्रथमेन सहैव

त्वित्वम्। उत्तरयो र्द्वयोरेव मन्त्रान्तरोपदेशाच्च जुहोतीनां त्रित्व-मवगम्यते। तत् सामान्यादन्यासामपि क्रियाणाम्, प्रागेव तु तदावृतामपि—इत्यवधेयम्। नाप्यन्यविधं त्रित्वं सम्भवति—इत्यवोचाम। अत्र च—इममश्मानम्—इति, कन्यला पितृभ्यः—इति च मन्त्रावावर्त्तनीयौ। उत्तरयो र्मन्त्रान्तरानुपदेशात्॥०॥।१०॥०॥

चतुर्थ्यान्तु वेलायाम्—

**शूर्पेण शेष मग्नावोप्य प्रागुदीचीमभ्युत्क्रामयन्त्यो-कमिष इति॥ ११॥**

शूर्पेण शूर्पकोणेन। कुतः?। सौकर्य्यात्। एवं हि सर्व्वेषां लाजानामग्नावावापः सुकरो भवति। इतरथा विकीर्णानामन-ग्नावपि पतनं स्यात्। "शूर्पपुटेन"—इति गृह्यान्तराच्च। शेषं लाजशेषम्—उपस्तीर्णाभिघारितम्—इति भवदेवभट्टादयः। शे-षम्—इति वचनात् सर्व्वावापोऽवगम्यते, न किञ्चिदवशेष्यमि-त्यर्थः। 'अग्नौ' समिद्धे, 'आप्य' आ उप्य—प्रक्षिप्य ज्वलत्येतत्। 'आरोप्य'—इति पाठेऽपि तथैवार्थः। कथमिदं होतव्यम्?। तूष्णीम्—इति भट्टनारायणोपाध्यायाः। कस्मात्?। मन्त्रदेव-तयोरनुपदेशात्। तस्मादत्र स्विष्टकृन्निवर्त्तते। इत्थमेव शेषलोप-त्त्यात्। तथा गृह्यान्तरम्। "शूर्पपुटेनाभ्यात्मं तूष्णीं चतुर्थम्" —इति। 'चतुर्थवचनादत्र स्विष्टकृन्न स्यात्',—इति गार्ग्यनारायणः।

'तूष्णीं वचनं प्रजापतिज्ञापनार्थम्'—इत्यपि स एव। युक्तञ्चैतत् कुतः?।

"मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः"।

इति कर्म्मप्रदीपस्मरणात्। "त्रिः परिणीता प्राजापत्यं जुहोति"—इति च गृह्यान्तरम्। तस्माद्वधूः शेषं जुहोति, वरश्च प्रजापतिं ध्यायति—इति सिद्धम्। स्मरन्ति च।

"शूर्पाग्रेणैव होतव्यं तूष्णीं निरवशेषतः।

तस्यां तूष्णीन्तु जुह्वत्यां वरो ध्यायेत् प्रजापतिम्"।

इति।

प्रजापतिं चतुर्थ्यन्तं स्वाहायुक्तं वरः स्मरेत्।

इति चैवमादि। तस्मात्—"अग्नये स्विष्टकृते स्वाहेति लाजशेषं जुहुयात्"—इति भवदेव रघुनन्दनादिमतमसङ्गतम्। प्रमाणविशेषाभावाच्च। एतदनन्तरं वामदेव्यगानम्—इति सरलाकल्पनायामपि प्रमाणं न पश्यामः।

तदेवं कृत्वा (पूर्व्वापरोभावमात्रं क्त्वाप्रत्ययार्थः) शेषहोमं कृत्वाऽवस्थितां वधूम्—इति वा वर्णनीयम्। प्रागुदीचीम्, अपराजितां दिशम्, अभ्युत्क्रामयन्ति—आभिमुख्येन वरगृहीताञ्जलिकामुत्क्रामयन्ति दक्षिणं पादमुन्नाम्य वामस्यानु—नयन्ति—एकमिषे—इत्येवमादिभिः सप्तभिर्मन्त्रैः, प्रतिमन्त्रमेकैकः पादन्यासः—इत्यर्थः। बहुवचनादनियतः कर्त्ता॥०॥ ११॥०॥

सप्तोत्क्रामन्ती—

**दक्षिणेन प्रक्रम्य सव्येनानुक्रामेत्॥ १२॥**

दक्षिणेन पादेन प्रक्रम्य गत्वा, अनु पश्चात् सव्येन क्रामेत् गच्छेत्। सव्यं पादमग्रतो न कुर्य्यादित्यर्थः ॥०॥ १२ ॥०॥

ताञ्च क्रामन्तीं पतिः—

मा सव्येन दक्षिणमतिक्रामेति ब्रूयात् ॥ १३ ॥

सव्येन पादेन दक्षिणं पादं मा अतिक्राम—अग्रतो वामपादन्यासं मा कुरु—इति कथयेत्। आक्राम इति पाठे, सव्यपादेन दक्षिणपादस्याक्रान्तिं मा कुरु,—दक्षिणपादस्योपरि सव्यपादं मा कुरु—इत्यर्थः ॥०॥ १३ ॥०॥

एवं वध्वा सप्तपदाक्रमणे कृते तथैवावस्थितः पाणिग्राहः,—

ईक्षकान् प्रतिमन्त्रयेत सुमङ्गलीरियं वधूरिति ॥१४॥

ईक्षकान् विवाहप्रेक्षकान्। प्रतिमन्त्रणमनुमन्त्रणमभिमन्त्रणमित्यनर्थान्तरम्। तच्चात्र ईक्षकानवलोकयता कर्त्तव्यम्। योग्यत्वात्। तदाह कर्म्मप्रदीपः।

"सृजन्ननामिकाग्रेण क्वचिदालोकयन्नपि।
अनुमन्त्रणीयं सर्व्वत्र सर्व्वैवानुमन्त्रयेत्"।

इति। स्वच्छन्यत् ॥०॥ १४ ॥०॥

अपरेणाग्निं मौदकोऽनुसंव्रज्य पाणिग्राहं मूर्द्धदेशेऽवसिञ्चति तथेतरां समञ्जन्त्वित्येतयर्चा ॥ १५ ॥

अपरेणाग्निम् अग्नेः पश्चिमया दिशा, अनु संव्रज्य आगत्य सप्त-

पद्दो-स्वानमिति भवदेवभट्टः। औदको गृहीतोदकुम्भः पूर्व्वावस्थितः पाणिग्राहं मूर्द्धदेशे उत्तमाङ्गे अवसिञ्चति,—कलसस्थाभिरद्भिरद्भिः। तथा तेनैव प्रकारेण इतरां वरेतरां वधूमपि अवसिञ्चति। समञ्जन्तु—इत्येतया ऋचा वरेण जप्यमानया—इत्यर्थः। कस्मात् पुनः कारणात् वर एव ऋचं जपति, न पुनरौदकः?। लिङ्गात्—इत्याह। 'समापो हृदयानि नौ'—इति 'नौ' आवयोरित्युच्यते। न चैतत् वध्वा सहौदकस्योपपद्यते।

यच्च वर्णयन्ति,—'करणत्वात् कुम्भधारिणोऽयं पाठः न सिच्यमानस्य, नाविति तु युवयोरित्यर्थे छान्दसो व्यत्ययः'—इति। तदसङ्गतम्। प्रमाणाभावात्। न खल्वौदकस्य मन्त्रपाठे प्रमाणमस्ति। करणत्वन्तु नानन्यथासिद्धम्—इत्यवोचाम। वाक्यमपि दुर्व्वलमेव लिङ्गात्। न च वाक्यस्यापि तथा सामर्थ्यम्। न खल्वियं श्रुतिरित्यपि शक्यते वक्तुम्। सोऽयमकाण्ड एव यदृच्छया छान्दसं व्यत्ययमभ्युपगच्छन् वाक्यस्यानुरोध्य लिङ्गमुपरुन्धन्ननभिनन्दनीय एव। 'मन्त्रलिङ्गाद् वर एवावसिञ्चति'—इति वीरेश्वरमतमप्यनादरणीयम्। औदकोऽवसिञ्चति—इति वचनविरोधात्। मन्त्रलिङ्गस्य च वर पाठमात्रेण कृतार्थत्वात्। तस्मादियमेवावधारणा—पाणिग्राहो मन्त्रं जपति औदकोऽवसिञ्चति—इति।

इदमिदानीं सन्दिह्यते। किं वरस्य वध्वाश्च तन्त्रेणैवावसेकः उत भेदेन—अन्योऽवसेको वरस्य अन्यश्च वध्वाः?—इति। भेदेन—इति ब्रूमः। कुतः?। तथेतराम्—इति भेदेनैवोपदेशात्। यदि

पुन स्तन्त्रेणैवाऽवसेकः स्यात्, तर्हि स वध्वा इव वरस्यापि भवति। तत्रेतरवचनमसमञ्जसम् आपद्येत। तन्त्रेण चावसेके समस्याभिधानं स्यात्। तथा शब्दाच्च। यथा वरस्यावसेक स्तेनैव प्रकारेण वध्वा अप्यवसेकः—इति भेदेनैवावसेक स्तथा शब्दादवगम्यते। अतएव मन्त्रोप्यावर्त्तनीयः। प्रधानावृत्तावङ्गावृत्ते र्युक्तत्वाच्च। तथाच सूत्रान्तरम्। "भेदे मन्त्रावृत्तिः सम्पातित्वात्"—इति। तथा चोक्तम्।

"कर्म्मावृत्तौ तु मन्त्रस्याप्यावृत्ति र्गृह्यकर्म्मणि"।

इति॥ १५॥ ०॥

**अवसिक्तायाः सव्येन पाणिनाऽञ्जलिमुपोह्य* दक्षिणेन पाणिना दक्षिणं पाणिं साङ्गुष्ठमुत्तानं गृहीत्वैताः षट् पाणिग्रहणीया जपति—गृभ्णामि त—इति॥ १६॥**

अवसिक्तायाः कृतावसेकायाः। नन्वेतदत्राच्यं अर्थादेव प्राप्तत्वात्?।

---

* उपोह्योत्क्षिप्य—इति तन्त्रकारः पठति। उत्क्षिप्य अञ्जलिसकाशात् दक्षिणं पाणिं विच्छिद्य—इति व्याख्याति च। परं सर्व्वेषु सूत्रग्रन्थेष्वस्मदवलोकितेषु भट्टभाष्ये च 'उत्क्षिप्य'—इति प्रतीकं न दृश्यते। नाप्यतीवसमीचीनम्। तथाहि सव्येनाञ्जलुपोहनस्य सूचणात् दक्षिणस्याञ्जलिसंयोग एव नास्ति, कुतस्तद्विच्छेदसूचनम्। प्राचीनपाञ्जलिग्रहणमिदानीं निष्टत्तं। दक्षिणेन पाणिना—इति परप्रतीकेन चास्य सतार्थता—इत्यवधेयम्।

देशलक्षणार्थम्—इत्याह। तेनावसेचनदेशस्थिताया एव वध्वाः पाणिग्रहणम्। अवसिक्तायाः—इति वचने श्रूयमाणे खल्ववसेचनं तावत् प्रतीयते, तत्प्रतीतौ च तस्य स्थानमप्यागच्छति हृदयं, तत्त्वं युज्यते विनाकारणमुत्स्रष्टुम्। यथा "अवभृतं यन्ति"—इत्यवभृतेन देशं लक्षयति; यस्मिन् देशेऽवभृतस्तं देशं यन्ति—इति, "देशार्था अवभृतश्रुतिः"—इति चतुर्थाध्याये निर्णीतं, तथाऽत्रापीत्यवगन्तव्यम्।

अवसिक्ताया वध्वा अञ्जलिं सव्येन पाणिना, उपोद्गृह्य—उपेति सामीप्ये, उप समीपे अञ्जलेः—'मणिबन्धप्रदेशे'—इति भट्टनारायणोक्तमादरणीयम्। यच्च—मणिबन्धसमीपे ग्रहणम्—इति मतम्। तदसङ्गतम्। उपस्थित मञ्जलिमपेक्ष्यैव सामीप्यवर्णनौचित्यात्। उद्गृह्य—उद्धृत्य गृहीत्वा, दक्षिणेन पाणिना स्वकीयेन, वध्वाः दक्षिणं पाणिं साङ्गुष्ठमङ्गुष्ठसहितम्, उत्तानम् ऊर्द्धतलं, गृहीत्वा, गृभ्णामि ते—इत्येवमादिकाः षट्संख्याकाः पाणिग्रहणीयाः पाणिग्रहणकर्मणि विनियुक्ताः ऋचः जपति पाणिग्राहः। 'उत्तानम्—इत्यनेन करस्य पृष्ठग्रहणं प्रतीयते'—इति रघुनन्दनवर्णनन्त्वसारमेव। नियमत स्तत्प्रतीतौ कारणविशेषाभावात्। नह्युत्तानस्य करस्योपरिष्टाद्ग्रहणं न सम्भवति—इति शक्यते वक्तुम्। मानाभावात्। "उत्तानेनोत्तानं गृह्णाति नीचेन चोत्तानम्"—इति शास्त्रान्तरे चोत्तानस्यापि करस्योपरिष्टादपि ग्रहणोपदेशात्॥ १६॥ ०॥

समाप्तासूद्वहन्ति* ॥ १७ ॥

समाप्तासु पाणिग्रहणक्रियासु रथेनाश्वादिना वा वधू मुद्वहन्ति उत्थाप्य नयन्ति। बहुवचनात् कर्त्तु रनियमः। समाप्तास्विति सूत्रणादत्रैव पाणिग्रहणक्रियायाः परिसमाप्तिः अत्रैव च तन्त्रसमापनम्।

दक्षिणाचानादेशात् पूर्णपात्रादिका। सोऽयं विवाहः। इतःपरमुत्तरविवाहः। केचित् 'समाप्तासु'—इति सूत्रच्छेदं मन्यन्ते। 'समाप्तासु पाणिग्रहणीयासु। किम्?। तन्त्रं समापयेदितिवाक्यशेषः'—इति व्याचक्षते च। उद्वहन्ति—इति तु उत्तरकाण्डिकायाः प्रथमसूत्रप्रतीकम्—इति मन्यन्ते॥ १७ ॥ ० ॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीय-गृह्यसूत्र-भाष्ये द्वितीयप्रपाठकस्य द्वितीया काण्डिका ॥०॥

---

* सर्व्वेषु सूत्रग्रन्थेषु इत्यमेव सूत्रमत्रैव च काण्डिका समाप्तिः। भट्टभाष्ये तु—समाप्तासु—इति सूत्रच्छेदः काण्डिका समाप्तिश्चात्रैव दृश्यते। उद्वहन्ति—इति परसूत्रावयवतया तत्रोपलभ्यते। तत्त्वकारेण तु समस्तमेव सूत्रमुत्तरसूत्रेण सहैकत्र लिखितम्।

द्वितीयप्रपाठके तृतीया खण्डिका।



उद्वहन्ति—इत्युक्तम्। कुत्र उद्वहन्ति?। तदभिधीयते,—

## प्रागुदीच्यां दिशि यद्ब्राह्मणकुलमभिरूपम्॥ १॥

प्रागुदीच्यामैशान्यां दिशि यद्ब्राह्मणकुलं ब्राह्मणगृहं, तपः स्वाध्याय व्रतादिभि रभिरूपं रमणीयं भवति, तत्र उद्वहन्ति—इति गतेन सम्बन्धः। प्रागुदीच्यामभिरूपब्राह्मणकुलस्यालाभे अन्यस्यामपि दिशि अन्यस्मिन्नपि ब्राह्मणकुले उद्वहेयुः। दिक् आभिरूप्यञ्च ब्राह्मणकुलं विशिंषदस्य गुणो भवति। स चेदुपादीयमानो प्रधानमुपरुणद्धि गुणत्वमस्य नावकल्पते। गुणो हि प्रधानमुपकर्त्तुं व्याप्रियते, नैतदुपरोद्धुम्। अतएव वेद्यामेवान्ततः कर्म कर्त्तव्यम्। कर्म्मणः प्रधानत्वात्। तथाच गृह्यान्तरम्। "अथोत्तरविवाहः प्रागुदीच्यामन्यत्र वा ब्राह्मणकुले मन्त्रवति वेद्यां वा"—इति। अस्मादप्यवगम्यते,—इतः प्रभृति उत्तरविवाह समाख्यानं कर्म—इति॥ १॥ ०॥

## तत्राग्निरुपसमाहितो भवति॥ २॥

तत्र ब्राह्मणकुले अग्निरुपसमाहितः लक्षणं कृत्वा स्थापितो भवति। लक्षणं कृत्वा—इति सूत्रशेषतयैव केचित् पठन्ति। वेद्याञ्च करणे

प्रधानमात्रस्यैव कर्त्तव्यता, आहोस्वित् तन्त्रेणैव स्यात्। कुतः ?। "गणेष्वेकं परिसमूहनम्"—इति वचनात्। एवञ्च वेद्यां करणपक्षे एतस्यापि कर्म्मणोऽनन्तरमेव तन्त्रसमापनं न तु पाणिग्रहणकर्म्मणः परत एव—इति बोद्धव्यम्॥ २ ॥ ० ॥

अपरेणाग्निमानडुहं रोहितं चर्म्म प्राग्ग्रीवमुत्तर* लोमास्तीर्णं† भवति ॥ ३ ॥

अपरेणाग्निम् अपरस्यान्दिश्यग्नेः, आनडुहं वार्षभं रोहितं लोहितवर्णं चर्म्म—शुष्कमित्यर्थः। प्राग्ग्रीवं पूर्व्वशिरस्कम्, उत्तरे उपरिष्टाल्लोमानि सन्त्यस्य—इत्युत्तरलोम, आस्तीर्णं प्रसारितं भवत्युपवेशनार्थं वध्वाः। कर्त्तु रनियमः। अत्रापि, लौहित्यस्य उपरिष्टाद्वा लोम्ना मलाभे अन्यादृशमपि चर्म्मास्तीर्णं भवति। चर्म्मणः प्रधानत्वात्॥ ३ ॥ ० ॥

तस्मिन्नेनां वाग्यतामुपवेशयन्ति ॥ ४ ॥

तस्मिन् चर्म्मणि एनां वधूं वाग्यतां नियमितवचनां कृतमौनाम्—इत्येतत्। उपवेशयन्ति, य एव केचित्॥ ४ ॥ ० ॥

सा खल्वास्त एवानक्षत्रदर्शनात् ॥ ५ ॥

सा खल्वेवमुपविष्टा वाग्यता अभुञ्जाना आस्त एव नोत्तिष्ठति,—

---

* उपरिलोम—इति तन्त्रकारः पठति।

† आस्तृतम्—इति तन्त्रकारः पठति।

मूत्रपुरीषकरणादन्यत्र—इत्यर्थः । खल्वित्यनर्थको निपातः । अभुञ्जाना—इति कुतोवर्ण्यते ? । एव शब्दादित्याह । कथन्नाम ? । आस्त एव नान्यत् किञ्चिदपि (भोजनादिकम्) कुर्य्यात्—इति । कियन्तं कालम् आस्ते ? । आ नक्षत्रदर्शनात् । नक्षत्रस्याभिमतस्य दर्शनपर्य्यन्तम् ॥ ५ ॥ ० ॥

प्रोक्ते नक्षत्रे षड़ाज्याहुती र्जुहोति—लेखासन्धिषित्येतत्प्रभृतिभिः ॥ ६ ॥

यस्य नक्षत्रस्य दर्शन मपेक्षितं तस्मिन् प्रोक्ते—दृश्यमिदानीं वर्त्तते—इति केनापि कथिते । प्रोद्गते—इति पाठे उदिते—इत्यर्थः । षड़ाज्याहुती र्जुहोति पतिः, लेखासन्धिष्वित्येतत् प्रभृतिभिः षड्भि र्मन्त्रैः । तदत्राज्यतन्त्रविहितो महाव्याहृतिहोमः पुरस्ताच्चोपरिष्टाच्च भवति, आज्यभागौ स्विष्टकृच्च न भवन्तीत्यवगन्तव्यम् । एव मन्यत्रापि ॥ ६ ॥ ० ॥

आहुते राहुते स्तु सम्पातं मूर्द्धनि वध्वा अवनयेत् ॥ ७ ॥

आहुते राहुते र्हुतायाः पश्चात् सम्पततीति सम्पातः स्रुवविगलित घृतविन्दु रुच्यते । तं सम्पातं (जात्यभिप्रायेणैकवचनम्) वध्वा मूर्द्धनि अवनयेत् पातयेत् । अथ, आहुते राहुतेः—इति शक्यमवक्तुम् ? । नैवम् । आहुते राहुतेः—इति सन्निहित परिग्रहात् अनन्तरोक्तायाः षड़ाहुतेरेव सम्पातानां शिरस्यवनयनं, न महा-

श्वाहृत्यादीनामपि—इत्येवमर्थत्वात्। अतएव, तु शब्द इतराषामाकृतीनां व्यवच्छेदकः सुखार्थो भवति ॥ ७ ॥ ० ॥

## हुत्वोपोत्थायोपनिष्क्रम्य ध्रुवं दर्शयति ॥ ८ ॥

हुत्वा यथोक्ताज्यहोमादनन्तरमेव, न तु तन्त्रसमापनादपि परम्—इत्यर्थः। उप—इति सामीप्ये। वध्वाः समीप एवोत्थानं न व्यवधाने—इत्ययमर्थः। अतएव लोके अञ्चलसन्दामनरूढ़िः। उपनिष्क्रम्य,—उप समीपे होमस्थानस्य, निष्क्रम्य वहिर्गत्वा ध्रुवं स्वनामख्यातनक्षत्रविशेषं बधूं दर्शयति पतिः। ध्रुवं पश्य—इति प्रैषोऽर्थादवगम्यते ॥ ८ ॥ ० ॥

सा खल्वेवमुक्ता बधू ध्रुवमवलोक्य—

## ध्रुवमसि ध्रुवाहं पतिकुले भूयास ममुष्यासाविति पतिनाम गृह्णीयादात्मनश्च ॥ ९ ॥

ध्रुवमसि—इत्येतं मन्त्रं पठति। तत्रव, अमुष्य—इति षष्ठ्यन्तस्थाने षष्ठ्यन्तं पतिनाम, असौ—इति प्रथमान्तस्थाने च प्रथमान्त मात्मनो नाम बधू गृह्णीयात्। अथ वाग्यताया मन्त्रपाठो विरुध्यते?। न विरोत्स्यते। कुतः?। वाचनिकत्वादस्यार्थस्य। मनसैव वा मन्त्रं पठिष्यति। प्रतिषिद्धेपि वाग्व्यापारे मनसो व्यापारस्याप्रतिषिद्धत्वात् ॥ ९ ॥ ० ॥

## अरुन्धतीच ॥ १० ॥

सप्तर्षिसमीपवर्त्तिनीं काञ्चित् सूक्ष्मतमां तारा मरुन्धती माचक्ष-

त। ताञ्च दर्शयति—इत्यनुवर्त्तते। अरुन्धतीं पश्य—इति प्रयोगः ॥ १० ॥ ० ॥

वधूश्चारुन्धतीं दृष्ट्वा जपति,—

रुद्धाहमस्मीत्येवमेव ॥ ११ ॥

ऋजु रक्षरार्थः। एवमेव—इति कोऽर्थः?। उच्यते। एवमेव जप्तव्यम्, न तु पूर्ववदूहं कृत्वा। सोऽयमस्यार्थः। एवं रघुनन्दन-भवदेवभट्टादयः। एवमेव—इत्यनेन पूर्ववदेव पत्युरात्मनश्च नाम ग्रहीतव्यम्। तत्रच, पत्युर्नाम्नः तृतीयान्तत्वम्—इत्ययमेव विशेषः। एवं भट्टनारायणोपाध्यायाः। इदमेव तावन्मत मनुमन्यामहे। कस्मात्?। यस्मात् एवमेवेत्यवचनेऽपि तावन्मात्रस्यैव पाठः स्यात्। पत्युरात्मनश्च नामग्रहणस्य प्रापकाभावात्। तद्व्यावर्त्तनार्थम् 'एवमेव' वचनमनर्थकमेव स्यात्। तस्मात् 'एवमेव' शब्दस्यार्थवत्त्वार्थं व्यवहितस्यापि नामग्रहणस्य बुद्ध्या सन्निकृष्य एवमा परामर्शः ॥ ११ ॥ ० ॥

अथैनामनुमन्त्रयते ध्रुवाद्यौरित्येतयर्चा ॥ १२ ॥

अथानन्तरमेव न तु तन्त्रसमापनमपि कृत्वा, ध्रुवाद्यौरिति मन्त्रेण एनां वधू मनुमन्त्रयते पति रनामिकाग्रेण स्पृशन्। 'वधूं पश्यन्' —इति भवदेवभट्टः ॥ १२ ॥ ० ॥

अनुमन्त्रिता गुरुं गोत्रेणाभिवादयते ॥ १३ ॥

अनुमन्त्रितैव वधू रभिवादयते, न तु तन्त्रसमापनमपि प्रतीक्षते—

इति पूर्व्ववदर्थः। अभिवादनं पादग्रहणमित्यनर्थान्तरम्। कम-भिवादयते?। गुरुम्। कः पुनरसौ?। पतिरित्याह। कुतः?। "पतिरेको गुरुः स्त्रीणाम्"—इति स्मरणात्। कथमभिवादयते?। गोत्रेण। वध्वा चाभिवादने कृते पत्या प्रत्यभिवादनं कर्त्तव्यम्। अभिवादनप्रयोगः परतो वक्ष्यते। प्रत्यभिवादनप्रयोगस्तु शास्त्रान्तरादुपादेयः, ग्रन्थगौरवभिया परमुपारम्यतेऽस्माभिः। इदमिदानीं सन्दिह्यते। किं पितृगोत्रेणाभिवादयते, उत पति-गोत्रेण?। पितृगोत्रेण—इति ब्रूमः। कस्मात्?। इदानीमपि तस्याः पितृगोत्रत्वात्। तत् कस्य हेतोः?।

"विवाहे चैव निर्वृत्ते चतुर्थेऽहनि रात्रिषु।
एकत्वमागता भर्त्तुः पिण्डे गोत्रे च सूतके"।

इति भवदेवभट्टधृतमनुवचनात्। लिखितसंहितायामप्येतत्। वक्ष्य-माणवृहस्पतिवचनाच्च। यत् पुनर्हारीतस्मरणम्—

"स्वगोत्राद्भ्रश्यते नारी विवाहात् सप्तमे पदे।
पतिगोत्रेण कर्त्तव्या तस्याः पिण्डोदकक्रिया"।

इति। तच्चतुर्थीतः पूर्व्वमन्येन पुनर्भूकरणे बोद्धव्यम्। तदेतदाह स एव।

"पदे तु सप्तमे यातु बलात् काचित् हृता भवेत्।
स्वामिगोत्रं भवेत्तस्या स्वञ्च भूयो विशिष्यते।
पैतृकन्त्वप्रसूतायास्ततः पौर्व्विकभर्तृकम्"।

इति। तच्च स्वामिगोत्रं भूयः पुनरपि विशिष्यते,—इति ब्रुवाणो विशेषान्तरमपि द्योतयति। तच्च प्राक्तनस्य वचनस्यैतद्वचनोक्तं

पुनर्भूकरणमेव—इत्यवधार्य्यते। अन्यस्य विशेषस्यानुपलम्भात्—इत्यवधेयम्। यच्च बृहस्पतिस्मरणम्—

"पाणिग्रहणिका मन्त्राः पितृगोत्रापहारकाः।
भर्तृगोत्रेण नारीणां देयं पिण्डादिकं ततः"।

इति। तदपि पाणिग्रहणमन्त्राणां पितृगोत्रापहारकत्वमाह, न तेषामेव। केषां तर्हि?। तेषां चतुर्थीहोममन्त्राणाञ्च। कस्मात्?। यस्मादनन्तरमेवाह बृहस्पतिः।

"चतुर्थीहोममन्त्रेण त्वङ्मांसहृदयेन्द्रियैः।
भर्त्रा संयुज्यते पत्नी तद्गोत्रा तेन सा भवेत्"।

इति। अथवा। पाणिग्रहणिका मन्त्राः—इति वचनं सप्तमे पदे गतायां वध्वामत्रगन्तव्यं हारीतसमानार्थम्। तथाच मनुः।

"पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम्।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे"।

इति—सप्तमे पदे गतायां वध्वां पाणिग्रहणमन्त्राणां निष्ठां स्मरति। तदिदं पाणिग्रहणात् परं सप्तपदीगमनमन्येषामेव नास्माकम्, अस्मदाचार्य्यैः पाणिग्रहणात् पूर्व्वमेतत्सूत्रणात्। आश्वलायनपारस्कराभ्यां हि पाणिग्रहणात् परं तत् सूचितम्। यदपि शातातपस्मरणम्—

"संस्थितायान्तु भार्य्यायां सपिण्डीकरणान्तिकम्।
पैतृकं भजते गोत्रमूर्द्धन्तु पतिपैतृकम्।
एकमूर्त्तित्वमायाति सपिण्डीकरणे कृते।
पत्नी पतिपितृणान्तु तस्मात्तद्गोत्रभागिनी"।

इति। तदपि चतुर्थीतः पूर्व्वमेव संस्थितायां बोद्धव्यम्। सपिण्डीकरणेनैकमूर्त्तित्वप्राप्ते रुत्तरवचने हेतुत्वकीर्त्तनात्। इत्थायां खलु चतुर्थ्यां तथैव त्वगादिसंसर्गादेकमूर्त्तित्वं पूर्व्वमेव निष्पन्नम्—इति, पुनरिदानीं सपिण्डीकरणस्य तत्र हेतुत्वोपन्यासो नोपपद्यते। एवमन्यान्यपि वचनानि व्याख्येयानि।

यत्तु सपिण्डीकरणपर्य्यन्तं पितृगोत्रभजनमासुरादिनिन्दितविवाहोढाविषयम्—इति स्मृतिमञ्जरीकारादिमतम्। तदसङ्गतम्। प्रमाणाभावात्। यच्च 'आसुरादिविवाहोढाया अप्रजाया मृतायाः सपिण्डीकरणपर्य्यन्तं पितृगोत्रभागित्वं; तद्धने पितुरधिकारस्मरणात्, गोत्र रिक्थयोश्च युगपद्भवाहित्वस्यौत्सर्गिकत्वात्'—इति नारायणोपाध्यायवर्णनम्। तदपि मन्दम्। सपिण्डीकरणादूर्द्ध्वमपि पितुरधिकारानिवृत्तेः। मरणात् प्रागेकतरगोत्रग्रहणामध्यवसायापत्तेश्च। कथम्?। यदि नामेयमप्रजैव संस्थास्यते, तर्हि सपिण्डीकरणादूर्द्ध्वं भर्तृगोत्रमेषा प्रतिपत्स्यते। अथ सप्रजा, तदा पूर्व्वमेव। न खल्वादितः एकतरदवधारयितुं शक्यते,—सप्रजा वा संस्थास्यते, अप्रजा वा—इति। तदिदानीमेकतरगोत्रपरिग्रहे न किञ्चित् कारणमस्ति। एतच्चानिष्टम्। तत्रैव व्यभिचाराच्च। अपुत्रस्य भर्त्तुरादितः संस्थाने खल्वेषैव तद्धनमधिकरोति—इति भवन्मते तस्यामेव गोत्ररिक्थयोर्युगपद्भवाहित्वं व्यभिचरति। तस्मा न्न किञ्चिदेतत्। अपरे पुनर्—अप्रजाया विवाहाष्टकोढाया एव भर्त्ता प्रेतकृत्ये क्रियमाणे तत्पितृगोत्रेण कर्त्तव्यम्—इति प्रस-

पत्ति। रघुनन्दनस्तु,—हारीतवचनमवलम्ब्य सप्तपदीगमनात्; बृहस्पतिवचनस्त्वाश्रित्य पाणिग्रहणात् गोत्रापहारमभिधाय, 'सपिण्डनस्य गोत्रापहारित्वप्रतिपादकवचनं शाखान्तरीयं शिष्टव्यवहाराभावात्'—इति कल्पयामास। तदप्यनादरणीयम्। शिष्टव्यवहाराभावस्य शाखान्तरीयत्वहेतुत्वे महाविप्लवापत्तेः। प्रादेशिकस्य च व्यवहाराभावस्याकिञ्चित्करत्वात्। मन्वादिवचनविरोधस्य तावताप्यपरिहाराच्च। सेयं शिष्टव्यवहाराभावव्यपदेशेन शाखान्तरीयत्वकल्पना, वचनविरोधभयात् सुखपरिहारत्वाद्वा समुन्नसिता, न शिष्टव्यवहाराभावात्—इति निश्चयते। शिष्टव्यवहारस्यापि शास्त्रीयमर्थमन्यथयितुं नास्ति सामर्थ्यम्—इति वक्ष्यामः। अपि च। पाणिग्रहणात् पूर्व्वमेव वध्वाः संस्थाने कतरद्गोत्रमेतस्या भवतामनुमतम्—इति नावगच्छामः। "ऊढाणां भर्त्तृगोत्रता"—इति सामान्यस्याभिधानं विशेषवचनमपेक्ष्यैव प्रवर्त्तमानं न स्वातन्त्र्येण कञ्चिदर्थं साधयितुं प्रभवति। विशेषवचनानर्थक्यप्रसङ्गात्। अपि च। विवाहादपि गोत्रापहारः सप्तमे पदे गतायामेव वध्वां भवति। कुतः?।

"स्वगोत्रात् भ्रश्यते नारी विवाहात् सप्तमे पदे"।

इति वचनात्। विवाहात् कारणात् यः स्वगोत्रभ्रंशः, स खल्वत्र सप्तमे पदे भवतीत्युच्यते। तत् कुत एव विवाहमात्राद्गोत्रभ्रंशः शक्यते वक्तुम्। न च भवत्कल्पनायां किञ्चित् प्रमाणमस्ति। तस्मादस्मदुक्त एव वचनार्थः।

यदपि पतिगोत्रेण पत्युरभिवादनं वर्णितं, तदपि पूर्व्वोक्त-

-चनामामनवलोकनेनेति ज्ञेयमेव। सप्तमे पदे गोत्रापहारबोधक-वचनस्य तु पुनर्भूविषयतया हारीतेनैव प्रतिपादनाच्च दृष्टच्छा-ल्पितोऽयमर्थः प्रमाणपरतन्त्रैरतन्मोकर्त्तव्य एव विद्वद्भिरित्यस्तु कं विस्तरेण ॥०॥ १३ ॥०॥

ाग्यताया वध्वा उपवेशनमुक्तमित्येतावन्तं कालं वाग्यतैवेयंमा-सीत्, अथेदानीं योऽयं पत्यभिवादो विहित.—

## सोऽस्या वाग्विसर्गः ॥ १४ ॥

सूत्रार्थः। अत्रोत्तरविवाहकर्मणः परिसमाप्तिः—इति केचित्। तदसत्। प्रमाणाभावात्। उत्तरसूत्रे ब्रह्मचर्यादिविधानात्—इति चेत्। एतदपि तादृगेव। न ह्युत्तरविवाहकर्मणः परत एव ब्रह्मचर्यादि विधातव्यम्—इत्यत्रापि किञ्चित्प्रमाणमस्ति। ब्रह्म-चर्यादिविधानञ्च तत्रैवोपपादयिष्यामः। अपि च। ब्रह्मचर्यादि सूत्रणादानुमानिकी खल्वत्र कर्मणः परिसमाप्तिः। समशनीय-चरुशेषप्रतिपत्तिस्तु परतः प्रत्यक्षामेव तामुपलभामहे। न खल्वनु-मानं प्रत्यक्षमपि बाधितुमीष्टे। अथापि स्यात्—तस्यैव कर्मणः सा परिसमाप्तिः न उत्तरविवाहकर्मण.—इति। न—इति ब्रूमः। कुतः?। समशनीयचरो र्होमस्य प्रतिपत्तेश्च सूत्रणादेव तदपवर्गस्य सुखमवगमात्। तदर्थमपवर्गसूत्रणस्यानतिप्रयोजन-त्वात्। तस्मात्रपरत्वे प्रमाणाभावाच्च। तस्मादुत्तरविवाहकर्मणो-ऽपवर्गस्यान्यत्राऽसूत्रितत्वात् तस्यैव सोऽपवर्गः—इत्यपगच्छामः। दक्षिणा च गौ रेवं सति कर्मणोऽनुरूपा स्यात्! अत इदानीं तत्समापनं न कर्त्तव्यम् ॥०॥ १४ ॥०॥

## तावुभौ ततःप्रभृति त्रिरात्रमक्षारलवणाशिनौ ब्रह्मचारिणौ भूमौ सह शयीयाताम् ॥ १५ ॥

तावुभौ दम्पती, ततःप्रभृति विवाहकर्म्मारभ्य। तदिति विप्रकृष्टस्य विवाहकर्म्मणः परामर्शः। नोत्तरविवाहस्य पत्यभिवादनस्य वा। एवं खल्वेतद्दो निर्देशः स्यात्। अतो यदि कुतश्चिदन्तरायाद्विवाहदिने पत्यभिवादनान्तं न क्रियते तदापि तत एवारभ्य यथासम्भवममी नियमा भवन्ति।

त्रिरात्रं तिस्रो रात्रयो यत्र, त्रीण्यहोरात्राणि—इत्येतत्। अक्षारलवणाशिनौ, क्षारं राजिकादि. लवणं सैन्धवादि (क्षारत्वेऽपि लवणस्य ब्राह्मणपरिव्राजकन्यायात् पृथगुपादानम्) क्षारञ्च लवणञ्च क्षारलवणं तन्न भवतीत्यक्षारलवणम्—

"गोक्षीरं गोघृतञ्चैव धान्यं मुद्गा तिला यवाः।
अक्षारलवणा ह्येते क्षारा स्त्वन्ये प्रकीर्त्तिताः"।

इति स्मृत्युक्तलक्षणं, अशितुं शीलं ययोः तौ अक्षारलवणाशिनौ स्याताम्। यत्तु अक्षारलवणमकृत्रिमलवणम्—इति रघुनन्दनवर्णनम्। तदसङ्गतम्। क्षारपदस्य कृत्रिमपरत्वे लक्षणाप्रसङ्गात्। अथ, क्षारमृत्तिकादिकृतं लवणं क्षारलवणम् उच्यते?। एवमपि लक्षणैव। अपि च। एवं खल्वकृत्रिमलवणाशनसमकालमेवान्यस्मिन्नपि क्षारादावशिते दोषा वा न स्यात्, अकृत्रिमलवणादन्यद्वा किमपि न अशितव्यं स्यात्।

भोजनकालः खल्विदानीमुपस्थितः—इति मध्येऽप्युत्तरविवाह-

कर्म्मणोऽक्षारलवणाशनमत्र सूचितम्। लाघवाद्ब्रह्मचर्य्यादिकमपि। ननु "हविष्यमन्नं ** भुञ्जीत"—इति सूत्रयिष्यति, तेनैवाक्षारलवणाशनं सेत्स्यति?। न—इति ब्रूमः। एतस्मिन्नसूचिते हि 'हैमन्तिकं सिताखिन्नम्'—इत्यादि पारिभाषिकस्य हविष्यस्य,—

"हविष्ये गोघृतं मुख्यं तदभावे तु माहिषम्"।

इत्येवमादिकस्य वा भोजनं स्यात् न अक्षारलवणस्य। अत इदानीमिदं सूचितम्। अन्यार्थत्वाच्च निर्देशस्य। तच्चोत्तरत्र वक्ष्यामः। 'ब्रह्मचारिणौ' च स्यातां दम्पती। 'तत्प्रभृति त्रिरात्रम्'—इत्यनुषज्यते। एवमुत्तरत्रापि। ब्रह्मचर्य्यमिह व्यवायवर्ज्जनमुच्यते। असमाप्तेऽप्युत्तरविवाहकर्म्मणि विवाहस्य वृत्तत्वात् व्यवायः प्राप्नोति, वेदेष्वेपु च मध्य एव व्यवायो दृष्टः, सोऽयमिदानीं प्रतिषिध्यते। लाघवञ्चैवमुपपद्यते।

"त्रिंशद्वर्षो वहेत् कन्यां हृद्यां द्वादशवार्षिकीम्"।

इत्येवमादिके च कल्पे व्यवायस्य नासम्भवः—इति द्रष्टव्यम्। 'भूमौ' अधस्तात् 'सह' मिलित्वा 'शयीयातां' दम्पती। भूमाविति पल्यङ्कादीनां प्रतिषेधो न स्तरकम्बलादीनाम्। सह—इत्येकस्तरनियमार्थम् ॥०॥ १५ ॥०॥

## अचार्य्यमित्याहुः ॥ १६ ॥

अत्रैतस्मिन्नवसरे अर्घ्यमर्हणं वरस्य, कन्या पित्रा कर्त्तव्यमित्याहुराचार्य्याः। 'षडर्घ्या भवन्ति'—इति वक्ष्यति। तत्र यो विवाह्यः, सोऽयम्। मध्येऽप्युत्तरविवाहकर्म्मणोऽर्घ्यं न विरुध्यते। यथा मध्येऽपि विवाहकर्म्मण औदकेनाभिषेकस्तद्वत् ॥०॥ १६ ॥०॥

आगतेष्वित्येके ॥ १७ ॥

विवाहार्थमागतमात्रेष्वेवार्हणं कर्त्तव्यमित्येके आचार्या मन्यन्ते। एवञ्च—

'भुक्त्वा समुद्वहेत् कन्यां साविचीग्रहणन्तथा।
उपोषितः सुतां दद्यादर्चिताय वराय तु'।

इति वचनमेतस्मिन् कल्पे मधुपर्कभोजनपरम्। तथा च शास्त्रान्तरम्।

"अशोककलिका पानं यज्ञे सोमलतारसम्।
विवाहे मधुपर्कञ्च भुक्त्वा कर्म्म समारभेत्"।

इति ॥०॥ १७ ॥०॥

हविष्यमन्नं प्रथमं परिजपितं भुञ्जीत ॥ १८ ॥

हविष्यं माषकोद्रव्यादिवर्ज्जमन्नम् अक्षारलवणमित्येतत्। हविषि साधु हविष्यं—इति भङ्ग्या वा होमोऽत्र सूच्यते इति होमावशिष्टमेव भुञ्जीत। युक्तञ्चैतत्।

"अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात्।
यज्ञशिष्टाशनं ह्येतत् सतामन्नं विधीयते"।

इति स्मरणात्। "केवलाघो भवति केवलादी"—इति च ब्राह्मणम्। अन्यथा पूर्व्वमेव त्रिरात्रमक्षारलवणाशनसूचणात् 'हविष्यमन्नम्'—इति पुनरुपादानम् अनर्थकं स्यात्। 'परिजपितम्' अन्नपाशेन मणिना—इत्यादिना इत्यर्थः। कुतः?। उत्तरत्र तथा

श्रवणात्। प्रथमं भुञ्जीत, वरः। तदिदमस्य विवाहात् परतः प्रथमं भोजनम्। यत्तु—श्वशुरगृहे प्रथममिदं भोजनम्—इति वर्णयन्ति। तन्मन्दम्। मानाभावात्। श्वशुरगृहादागत्य प्रागुदीच्यां ब्राह्मणकुले चेदानीमस्यावस्थानात्॥०॥ १८ ॥०॥

श्वोभूते वा समशनीयँ स्थालीपाकं कुर्व्वीत ॥१९॥

श्वः अनागतदिने भूते—प्रभाते जाते—इत्येतत्। वाशब्दो विकल्पार्थः। रात्रौ भोजनकालादुपरि विवाहे होमविधिना वा भोजनकालातिक्रमे एतद् बोद्धव्यम्। सम्यगशनार्थं क्रियते इति समशनीयं स्थालीपाकं कुर्व्वीत॥०॥ १९ ॥०॥

तस्य देवता अग्निः प्रजापति र्व्विश्वेदेवा अनुमतिरिति ॥ २० ॥

तस्य—इति तच्छब्देन पूर्व्वदिने परदिने वा करणेऽपि स्थालीपाकस्यैता देवताः—इति दर्शयति। स्पष्टमन्यत्। असमासकरणं पृथङ्‌निर्व्वापहोमप्रज्ञापनार्थम्। देवतानाञ्च प्राधान्यात् चिस्तण्डुलानां प्रक्षालनम्। देवताभ्यः खल्वेताभ्यो मेचणेनोपघातं होतव्यम्। तदिदमधस्तादुक्तम्॥ २० ॥०॥

उद्धृत्य स्थालीपाकं व्यूह्यैकदेशं पाणिनाऽभिमृशेदन्नपाशेन मणिनेति ॥ २१ ॥

उद्धृत्य पात्रान्तरे कृत्वा स्थालीपाकमवशिष्टम्। व्यूह्य पात्रान्तरे स्थापयित्वा एकदेशं न सर्व्वमपि भाण्डस्थमन्नं—स्थालीपाकशेषात् एकदेशं पात्रान्तरेणावदाय पात्रान्तरे स्थापयित्वा—इत्येतत्।

दक्षिणेन पाणिना अभिमृशेत् अन्नपाशेन मणिना—इति मन्त्र चयेणेत्यर्थः । अत्र असावित्यस्मिन् मन्त्रस्थाने सम्बोधनान्तं वधूनाम प्रयोक्तव्यम् । "असाविति नाम गृह्णाति"—इति सूत्रान्तरात् । अत्र, असावित्यूहं विनैव, विनैव होममशनमाचष्ट लिखन् भवदेवाऽनादरणीय एव ॥ २१ ॥०॥

## भुक्तोच्छिष्टं वध्वै प्रदाय यथार्थम् ॥ २२ ॥

परिजपितमन्नं पतिः किञ्चित् भुक्त्वा उच्छिष्टं वध्वै प्रदाय यथार्थम्—इत्युत्तरविवाहकर्म्मणः परिसमाप्ति रिह विज्ञायते । तदिदानीं तन्त्रं समापयितव्यम् । यच्चोक्तं तत्कारेण—"यद्यशक्तेः कुलाचाराद्वा तद्दिन एव धृतिहोमादि चतुर्थीहोमान्तं कर्म्म क्रियते, तदाऽभिमन्त्रितं कदलादिकं स्वयमाघ्राय वधूमाघ्रापयेत्"—इति । तदसङ्गतम् । कस्मात् ? । अशक्तेः स्वकालात् पूर्व्वं कर्म्मकरणे मानाभावात् । विहितकालाच्चार्व्वाक् कृतस्यापि कर्म्मणः स्वल्वागते काले पुनःकरणमेवानुशिष्यते ।

"अकाले चेत् कृतं कर्म्म काले तस्य पुनः क्रिया" ।

इत्यादिवचनैः । एतच्च स्वयमपि वर्णितम् । तत् कथमत्र विपरीतमुच्यते—इति स एव जानाति । अथास्तु कुलाचारादन्यत्रापि काले कर्म्मणः करणम् ? । नेत्युच्यते । न खल्वयमाजानिकः समाचारः । किन्तर्हि ? । आलस्यादर्व्वाचीनानां उपरिष्टादेव प्रवृत्तः—इत्यनुमीयते । नहि पूर्व्वेषाम् अयथा क्रिया युक्ता सम्भावयितुम् । सोयमाचारः चाराद्यशनाचार इव दुराचार एव न कुलाचारः । अपिच । स्मृतिमूलः खल्वाचारः तथा विरोधे स्वयमेव बाध्यते स

कदाचिदपि तां बाधितुमीष्टे। नहि पश्चिमसिद्धेनाचारेण पूर्व्वसिद्धं शास्त्रमुपरोद्धव्यं—इति युक्तम्। तथा चोक्तम्।

"स्मृतिमूलो हि सर्व्वत्र शिष्टाचारस्ततोऽत्र च।

अनुमेया स्मृतिः स्मृत्या बाध्या प्रत्यक्षया तु सा"।

इति। गोतमोपि स्मरति। "देशजातिकुलधर्म्मा आम्नायैरविरुद्धाः प्रमाणम्"—इति। तथा वशिष्ठः। "देशधर्म्मं जातिधर्म्मं कुलधर्म्मान् श्रुत्यभावादब्रवीन्मनुः"—इति।

येषामपि आचारमूलकत्वं स्मृतीनाम्—इति दर्शनम्, तेषामपि स्मृत्युक्त एव प्राक्तनाचारोऽनुसरणीयः नतूपरिष्टात् यदृच्छयाप्रवृत्तः—इत्यास्थेयम्। पूर्व्वं खल्वृषयः साक्षात्कृतधर्म्माणः सर्व्वज्ञकल्पा लोकस्थितिचिकीर्षया यम् आचारं प्रवर्त्तयन्तिस्म, नायमर्व्वाचीनाना मतयाभूतानां यदृच्छया कल्पितमात्रेणाचारेणोपरोद्धुमुचितः। "अथ खलूच्चावचा जनपदधर्म्मा ग्रामधर्म्माश्च तान् विवाहे प्रतीयात्" "यत्तु समानं तद्वक्ष्यामः"—इति गृह्यान्तरसूत्राभ्यामपि गृह्योक्तधर्म्माणां जनपदादिधर्म्माणाञ्च विरोधे गृह्योक्तधर्म्माणामेव करणम्—इति गृह्यकाराणां मतं विज्ञायते॥०॥ २२॥०॥

## गौ र्दक्षिणा॥ २३॥

उत्तरविवाहकर्म्मणः॥ २३॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये द्वितीयप्रपाठकस्य तृतीया काण्डिका॥०॥

## गोभिलीयगृह्यसूत्रे

### द्वितीयप्रपाठके चतुर्थी कण्डिका ।



अथ भर्तृगृहगमनार्थं वध्वाम्—

**यानमारोहन्त्याᳬ सुकिᳬसुकᳬ शाल्मलिमित्येता-मृचं जपेत् ॥ १ ॥**

पाणिग्राहः—इति सम्बध्यते । आरोहन्त्याम्—इति निर्देशादारो-हणकालीनत्वं जपस्य । एतामिति करणाच्च रथासम्भवे अश्वादि-यानपक्षेपि एताम्—एवम्भूतामेव जपेत् न विलोपन मूहं वा कुर्य्यादित्यर्थः ॥ १ ॥०॥

**अध्वनि चतुष्पथान् प्रतिमन्त्रयेत नदीश्च विषमाणि च महावृक्षान् श्मशानञ्च,—माविदन् परिपन्थिन इति ॥ २ ॥**

वध्वासह अध्वनि मार्गे वर्त्तमानः पाणिग्राहः माविदन्—इति मन्त्रेण चतुष्पथान् समीपस्थाननुमन्त्रयेत् अवलोकयन् । एवं नदीश्चेत्यादावपि व्याख्येयम् । नद्यः—

"धनुः सहस्राण्यष्टौ च गति र्यासां न विद्यते ।
न ता नदीशब्दवहा गर्त्तास्ते परिकीर्त्तिताः" ।

इति कर्म्मप्रदीपोक्तलक्षणाः। विषमाणि सिंहव्याघ्रचौरादिभयाकुलानि, उन्नतानतानि वा। महावृक्षा अतिप्रवृद्धास्तरवः ॥०॥
॥ २ ॥०॥

**अक्षभङ्गे नद्धविमोक्षे यानविपर्य्यासेऽन्यासु चापत्सु यमेवाग्निं हरन्ति तमेवोपसमाधाय व्याहृतिभिर्हुत्वाऽन्यत् द्रव्यमाहृत्य यच्छतेचिदभिश्रिषे—इत्याज्यशेषेणाभ्यञ्जेत् ॥ ३ ॥**

अध्वनि अक्षभङ्गे। अक्षो रथचक्रम्। नद्धस्य योक्त्रादिबद्धस्य अश्वादेर्वा विमोक्षे, यानस्य रथस्य विपर्य्यासे औत्तराधर्य्यप्रातिलोम्ये अन्यथागमने वा, अन्यासु च आपत्सु यानात् परिपतनादिकासु चौरव्याघ्रादिकृतासु वा, यमेवाग्निमौपासनं हरन्ति नयन्ति,—यमेव वा कञ्चिदग्निं लौकिकं सन्निधौ लब्ध्वा आनयन्ति। 'तमेव' अग्निम् 'उपसमाधाय' इन्धनादिना सन्धुक्ष्य। तदेतद् यथार्थमभिप्रेतम्। कथन्नाम? । शालाग्नि स्तत्रैव, अनग्नेस्तु यमेव लब्ध्वा आनयन्ति, तत्र—इति। ननु यमेवाग्निं हरन्ति—इत्येतत् शक्यमवक्तुं, नित्यनैमित्तिकहोमार्थमेव हि खल्वग्निरुपादीयते, अथोच्यते कारणं वक्तव्यम्?। उच्यते। "सायमाहुत्युपक्रम एवात ऊर्द्ध्वं गृह्येऽग्नौ होमो विधीयते"—इति स्मरणात् सायमाहुतेः पूर्व्वमक्षभङ्गादौ जाते होमोऽयं विवाहाग्नौ न प्राप्नोति। तदर्थं 'यमेवाग्निं हरन्ति'—इति सूचितम्। 'व्याहृतिभिः' आज्येन स्रुवेण 'हुत्वा'। "व्याहृतिभिरिति वचनं परि-

सङ्ख्यानार्थम्। तेन चिप्रहोमः स्यात् न तन्त्रहोमः। एवञ्च न्युप्तकरणपर्य्युक्षणे कृत्वा आज्यं संस्कृत्य समिधमाधाय प्रायश्चित्तार्थत्वात् व्याहृतिचतुष्टयं कृत्वा अनुपर्य्युक्षेत्"—इति भट्टभाष्यम्। ततश्च 'अन्यत्' अक्षादि 'द्रव्यं' आनीय, यच्चतेचिदित्यनया ऋचा न साम्ना ऋगधिकारात् साम्नेति चावचनात्। 'आज्यशेषेण' होमावशिष्टेनाज्येन अभ्यञ्जेत् अभ्यञ्जयेत्—इत्यर्थः। क्वचित्तथैव पाठः। अभ्यञ्जनमिह म्रक्षणम्। अञ्जु व्यक्तिम्रक्षणगतिषु—इति स्मरणात्। अभ्युक्षणम्—इत्यसङ्गता वर्णना ॥०॥ ३ ॥०॥

## वामदेव्यं गीत्वाऽऽरोहेत् ॥ ४ ॥

वामदेव्यं नाम साम गीत्वा वधूसहितः पति र्यानमारोहेत्। आरोहयेत्—इति पाठे वधूं यानमारोहयेत्—इत्यर्थः। ननु इदमवाच्यम् 'अपवृत्ते कर्म्मणि वामदेव्यगानम्'—इति सिद्धत्वात्। मैवम्। कर्म्मापवर्गविहिताद्वामदेव्यगानादपरस्यैव वामदेव्यगानस्यैतदर्थत्वात्। अन्ये त्वाहुः,—सिद्धस्यापि वामदेव्यगानस्य पुनरुपादानं क्रमार्थम् अन्यथा पर्य्युक्षणान्त एव स्यात्—इति ॥०॥ ४ ॥०॥

## प्राप्तेषु वामदेव्यम् ॥ ५ ॥

वध्वा प्राप्तेषु पतिगृहेषु वामदेव्यं गायेत् पतिः। वामदेव्यं गीत्वा प्रवेशयेत्—इति रघुनन्दनवर्णनायां प्रमाणं नास्ति। वधू स्चेदानीमपि यानस्थितैव वर्त्तते, ब्राह्मणाः खल्वेनां यानादवरोपयिष्यन्ति॥ ॥०॥ ५ ॥०॥

गृहागतां पतिपुत्रशीलसम्पन्ना ब्राह्मण्योऽवरोप्यानडुहे चर्म्मण्युपवेशयन्ति—इह गावः प्रजायध्वमिति ॥
॥ ६ ॥

पतिगृहागतां वधूम्। गृहं याताम्—इति पाठेऽपि पतिगृहं प्राप्तामित्येक एवार्थः। पतिः, पुत्राः, शीलं ब्रह्मण्यतादि त्रयोदशविधं हारीतोक्तम्, एतैः सम्पन्नाः—अवियुक्ताः ब्राह्मण्यः, अवरोप्य यानादवतार्य्य, आनडुहे चर्म्मण्युपवेशयन्ति—इत्युक्तार्थम्। इह गाव इतिमन्त्रेण वरेण पठितेनेत्यर्थः ॥०॥ ६ ॥०॥

तस्याः कुमारमुपस्थ आदध्युः ॥ ७ ॥

तस्या आनडुहे चर्म्मण्युपविष्टाया वध्वा उपस्थे उत्सङ्गे कुमारमकृतचूडं यं कञ्चिद्बालकमादध्युः स्थापयेयुः। ता एव ब्राह्मण्यः ॥
॥०॥ ७ ॥०॥

तस्मै शकलोटानञ्जलावावपेयुः ॥ ८ ॥

तस्मै—इति व्यत्ययेन षष्ठ्यर्थे चतुर्थी। तस्य वधूत्सङ्गोपविष्टस्य कुमारस्याञ्जलौ शकलोटान् आवपेयु र्दद्यु स्ता एव ब्राह्मण्यः। आह। क इमे शकलोटा नाम ?। उच्यते। शके कर्दमे लोटन्ति—इति शकलोटाः शालूकान्युच्यन्ते। तानि च कह्लारकुमुदनीलोत्पलमूलानि ॥०॥ ८ ॥०॥

फलानि वा ॥ ९ ॥

फलानि वा चूतादीनि तस्याञ्जलावावपेयुः ॥९॥०॥

उत्थाप्य कुमारं ध्रुवा आज्याहुती जुहोत्यष्टाविह धृतिरिति ॥ १० ॥

वधूत्सङ्गादुत्थाप्य कुमारम्, 'सन्निधावुपवेश्य'—इति भट्टनारायणः। ध्रुवाः ध्रुवफलकाः। ध्रुवत्वं स्थिरत्वं वा वध्वाः पतिगृहे जन्यते आभिरित्याहुतयो ध्रुवा इत्युच्यन्ते। अथवा। ध्रुवाः आवश्यकाः। यद्यपि सर्व्वासामप्याहुतीनामावश्यकत्वमस्ति, तथापि स्वगृहागमनात् परं सूचितत्वात् श्वशुरगृहावस्थानपक्षे एता आहुतयो न प्राप्नुवन्ति, इति, तत्राप्यवश्यमासां होतव्यत्वार्थन्तदुपादानम्। 'आज्याहुती जुहोति'—इत्युक्तार्थम्। कियत्यः पुन स्ताः?। अष्टौ। कथम् जुहोति?। इह धृतिरित्यष्टभिर्मन्त्रैः। अष्टाविति किमर्थम्?। आहुतीनामष्टत्वप्रज्ञापनार्थम्। इह धृतिरिति कतमे मन्त्राः इहाभिप्रेयन्ते, तन्नैवावधार्य्यते। तस्मादष्टाविति वचनं सुखेन तदवगमार्थम्। 'आम्नाये श्रूयमाणत्वान्मन्त्रस्याहुतिद्वयमेकैकेन मन्त्रेण माभूदित्यष्टावित्युक्तम्'—इति भट्टभाष्यम्।

तदत्र, इह धृतिः स्वाहा—इत्यादिः प्रयोगः। ननु स्वाहायोगे चतुर्थी प्राप्नोति?। सत्यं प्राप्नोति, आम्नायविरोधात्तु न क्रियते। चतुर्थ्यां हि कृतायाम्—इह धृतिः—इत्याम्नाय उपरुध्येत। 'मन्त्रान्ते स्वाहाकारः'—इति च सूचयन्नाचार्य्यः समाम्नायपठितस्य मन्त्रस्य स्वाहाकारान्तत्वमेव विशेषो नान्यः कश्चिदिति दर्शयति। तथाच कर्म्मप्रदीपः।

"धृतिहोमे न प्रयुञ्ज्या द्रोनामसु तथाऽष्टसु।
चतुर्थी मध्य इत्येत द्रोनामसु हि क्रयते"।

इति ॥०॥ १०॥०॥

**समाप्तासु समिधमाधाय यथावयसं गुरून् गोत्रेणाभिवाद्य यथार्थम्॥ ११॥**

समाप्तासु—इति, समिधमाधाय—इति च द्वयमपि क्रमार्थमुच्यते। कथन्नाम?। समाप्तासु भुवाहुतिषु अन्यास्वपि आज्यतन्त्रविहिताहुतिषु समिधमाधायैव अभिवादयेत् न त्वनुपर्य्युक्षणादिकमपि कृत्वा। यथावयसं वयसोऽनतिक्रमेण—यो यो वयसा वृद्ध स्तं तमित्यर्थः। गुरून् विद्यागुरुपितृमातृप्रभृतीन्। गोत्रेण अभिवाद्य—इत्युक्तार्थम्। तत्रापि प्रथमं विद्यागुरुमेवाभिवादयेत्। कुतः?।

"लौकिकं वैदिकं वापि तथाऽऽध्यात्मिकमेव च।
आददीत यतो ज्ञानं तं पूर्व्वमभिवादयेत्"।

इति।

"न चानिसृष्टो गुरुणा स्वान् गुरूनभिवादयेत्"।

इति च स्मरणात्। पित्रोस्तु प्रथमं मातरमेव।

"सहस्रेण पितृन् माता गौरवेणातिरिच्यते"।

इति गौरवातिरेकस्मरणात्।

"उत्पादकब्रह्मदात्रो र्गरीयान् ब्रह्मदः पिता"।

इति च गौरवातिरेकस्य गुरोः पितृभ्यामादितोऽभिवादनस्य दर्श-

मात्। तस्मात् मातुर्गौरवातिरेकस्मरणं पोषणरक्षार्थम्—इति मतमसङ्गतम्। अथ,—

"कृष्णोऽपि वसुदेवस्य पादौ जग्राह सत्वरम्।
देवक्याश्च महाबाहु र्बलदेव सहायवान्"।

इति पौराणिकलिङ्गात् क्रमः कल्प्यताम्?। उच्यते। कल्पनीयः क्रमः—इति सत्यम्। स च तावत् स्मार्त्तेनैव लिङ्गेन कल्पयितुमुचितः। न तु एतदनादृत्य पौराणिकेन लिङ्गेन। कस्मात्?। स्मृते र्बलवत्त्वात्, विशेषतस्तु मनुस्मृतेः। 'भगवानपि सर्व्वात्मा'—इत्युपक्रम्य—

"ननाम दण्डवद्भूमौ मातरं पितरन्तथा"।

इति पुराणान्तरगतेन लिङ्गेन सत्प्रतिपक्षितत्वाच्च।

"मातरं पितरञ्चोभौ दृष्ट्वा पुत्रस्तु धर्म्मवित्।
प्रणम्य मातरं पश्चात् पितरं प्रणमेद्गुरुम्"।

इति पुराण एव प्रथमं मातुः प्रणामाभिधानाच्च। तस्मात्—पितुरादौ पादग्रहणं ततो मातुः—इति तत्त्वकारमतमसङ्गतम्। यथार्थम्—इति कर्म्मणः परिसमाप्तिरुच्यते। दक्षिणा चानादेशात् पूर्णपात्रादिका स्यात् ॥०॥ ११ ॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये द्वितीयप्रपाठकस्य चतुर्थी काण्डिका ॥०॥

---

द्वितीयप्रपाठके पञ्चमी कण्डिका।



## अथात श्चतुर्थीकर्म्म ॥ १ ॥

अथेति पूर्व्वप्रकृतार्थम्। अथ विवाहरात्रे र्या चतुर्थी रात्रिः तस्यां कर्म्म चतुर्थीकर्म्म, वर्त्तिष्यते—इति सूत्रशेषः। अथ, अग्नि-स्थितरधृतिहोममेवापेच्य चतुर्थी स्यात्?। तर्हि अथशब्दो-ऽनर्थकः स्यात् सन्निधानादेव तदवगतेः। तस्मादथेति विवाहस्य परामर्शः। चतुर्थी—इति स्त्रीलिङ्गनिर्द्देशाच्च चतुर्थी रात्रिरित्य-वगम्यते। इतरथा चतुर्थकर्म्मेति निर्द्देशः स्यात्।

"विवाहे चैव निर्वृत्ते चतुर्थेऽहनि रात्रिषु।
एकत्वमागता भर्त्तुः पिण्डे गोत्रे च सूतके"।

इति।

"चतुर्थीहोममन्त्रेण त्वङ्मांसहृदयेन्द्रियैः।
भर्त्रा संयुज्यते पत्नी तद्गोत्रा तेन सा भवेत्"।

इति चानयो र्व्वचनयो स्तात्पर्य्यपर्य्यालोचनयाप्येतदवगम्यते। क-थम्?। इत्यम्। अत्र 'खल्वेकत्ववचने चतुर्थेऽनि रात्रौ गोत्रैक्यमनु-शिष्यते, अन्यत्र तु तस्य चतुर्थीहोममन्त्रफलत्वम्। तस्मादनु-मिनुमः,—विवाहाच्चतुर्थदिने रात्रावयं होमः—इति। एवं खल्वत्र

रात्रेरपेक्षा दृष्टार्था भवति। अन्यथा अदृष्टार्थत्वमस्याः कल्पनीयम्। तच्चानिष्टम्।

अतःशब्दो हेत्वर्थः। यस्मादेतस्मिन् कर्म्मण्यकृते यास्याः पापी लक्ष्मीः—इत्यादयो दोषाः शरीरादस्या नापयन्ति, अतः एतस्मात् कारणात् इदमवश्यं कर्त्तव्यम्—इत्यर्थः ॥०॥ १ ॥०॥

**अग्निमुपसमाधाय प्रायश्चित्ताज्याहुती र्जुहोति अग्ने प्रायश्चित्त इति चतुः ॥ २ ॥**

अग्निमुपसमाधाय—इत्युक्तार्थम्। प्रायश्चित्तलिङ्गे मन्त्रे राज्याहुतयः प्रायश्चित्ताज्याहुतयः, ताः जुहोति, अग्नेः प्रायश्चित्ते—इति मन्त्रेण। किं सकृत्?। न। कति तर्हि?। चतुः। अत्र, चतुरिति वीप्सितमवगन्तव्यम्। तत्र हेतुं वक्ष्यामः ॥०॥ २ ॥०॥

किं समाम्नायपठितमेव अग्ने प्रायश्चित्ते—इति मन्त्रम् अविशेषेण अभ्यस्य चतुस्तु होतव्यम्?। न। कथन्तर्हि?। उच्यते। प्रथमा तावदाहुति र्यथापठितेनैव मन्त्रेण होतव्या। अन्यासु पुन राहुतिषु—

**अग्नेः स्थाने वायु चन्द्र सूर्य्याः ॥ ३ ॥**

क्रमशः प्रयोक्तव्याः—इति सूत्रशेषः। समाम्नायपाठा देतावानेव विशेषः न पुनरपरः कोऽपि। कुतः?। प्रथमस्यैव मन्त्रस्याग्निपदस्थाने वायु चन्द्र सूर्य्यपदप्रक्षेपमात्रेणाभ्यासोपदेशात्। तस्मात्, चतसृष्वप्याहुतिषु पापीलक्ष्मीः—इति पदमेव स्यात् ॥ ० ॥ ३ ॥०॥

## समस्य पञ्चमीं बहुवदूह्य ॥ ४ ॥

समस्य अग्नि वायु चन्द्र सूर्य्याः—इत्युच्चार्य्य, बहुवदूह्य प्रायश्चित्तयो यूयम्—इत्येवमादि बहुवचनमूहित्वा पञ्चमीमाहुतिं जुहोति। अयमपि सूचितविशेषमात्रेण प्रथमस्यैव (अग्ने प्रायश्चित्ते—इत्यादि) मन्त्रस्याभ्यासोपदेशः। तेनात्रापि पापीलक्ष्मीः—इति पदमेव स्यात्। अत्रापि, पञ्चमीं पञ्चमीम्—इति वीप्सा बोद्धव्या।

अत्र किञ्चिद्वक्तव्यमस्ति। पठ्यमानमन्त्रकाण्डे प्रायश्चित्ता-ज्याहुतिलिङ्गाः पञ्चमन्त्राः पठ्यन्ते। तत्र, "अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मण स्त्वा नाथकाम उपधावामि याऽस्याः पापीलक्ष्मीस्तनू स्तामस्या अपजहि"—इति प्रथमो मन्त्रः। "वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मण स्त्वा नाथकाम उपधावामि यास्याः पतिघ्नी तनू स्तामस्या अप-जहि"—इति द्वितीयो मन्त्रः। "चन्द्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मण स्त्वा नाथकाम उपधावामि यास्याः अपुत्र्या तनू स्तामस्या अपजहि"—इति तृतीयो मन्त्रः। "सूर्य्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मण स्त्वा नाथकाम उपधावामि यास्या अपसव्या तनू स्तामस्या अपजहि"—इति चतुर्थो मन्त्रः। "अग्नि वायु चन्द्र सूर्य्याः प्रायश्चित्तयो यूयं देवानां प्रायश्चित्तयः स्थ ब्राह्मणो वो नाथकाम उपधावामि यास्याः पापीलक्ष्मीः पतिघ्नी अपुत्र्या अपसव्या तनू स्तामस्या अपहत"—इति पञ्चमो मन्त्रः। एवन्तावत् पञ्चमन्त्राः पठ्यन्ते।

चाचार्य्येण प्रथमेनैव मन्त्रेण पञ्च आहुतयः सूचिताः। प्रथमा तावदाहुति र्यथापठितेनैव मन्त्रेण होतव्या। 'अग्ने'—इत्यस्य स्थाने, 'वायो'—इत्युक्का तेनैव द्वितीया, 'चन्द्र'—इत्युक्का तेनैव तृतीया, 'सूर्य्य'—इत्युक्का तेनैव चतुर्थी, 'अग्नि-वायु-चन्द्र-सूर्य्याः'—इत्युच्चार्य्य बहुवदूहित्वा तेनैव पञ्चमी। एवं प्रथमपठितेनैव मन्त्रेण पञ्चमन्त्राः सम्पद्यन्ते, पञ्च चाहुतयोऽपि भवन्ति। अत्र मन्त्रपञ्चक एव पापीलक्ष्मीः—इति पदं स्यात्। सूचितविशेषमात्रेण प्रथमपठितस्यैव मन्त्रस्याभ्यासोपदेशात्—इत्यवोचाम। तत्र च, प्रथमपठितमन्त्रस्य अग्निपदस्थाने एकैकशो वायु-चन्द्र-सूर्य्यपदप्रक्षेपेण ये चत्वारो मन्त्राः सम्पद्यन्ते, याश्च चतस्र आहुतयो भवन्ति, तेषां चतुर्णां चतुर्धा अभ्यासः कर्त्तव्यः। कुतः?। चतुश्चतुरिति वीप्साबलात्। तत्र, चतुर्णां मन्त्राणां चतुष्के चत्वारो मन्त्राः चतुर्भि र्गुणिताः षोड़श सम्पद्यन्ते। आहुतयोऽपि षोड़शैव भवन्ति। एवं समस्ताग्नि-वायु-चन्द्र-सूर्य्य-पदवान् बहुवचनान्तः पञ्चमोऽपि मन्त्रः चतुर्धैवाभ्यसितव्यः, पञ्चमीं पञ्चमीमिति वीप्साबलादेव। एवञ्च समस्ताग्न्यादिपदवन्तो बहुवचनान्ता अपि मन्त्राश्चत्वार एव सम्पद्यन्ते। आहुतयश्च चतस्रो भवन्ति। एवं मिलित्वा प्रयोगकाले विंशतिर्मन्त्राः, विंशतिश्चाहुतयः सम्पद्यन्ते। तथाच "व्यस्तस्य चतुष्टयस्य समस्तस्य चैकस्य चतुर्धा आवृत्तिः सिद्धा"—इति नारायणोपाध्यायाः। तदेवं चत्वारि मन्त्रपञ्चकानि भवन्ति। समस्य पञ्चमीम्—इति सर्व्वेषामेव बहुवचनान्तमन्त्राणां पञ्चमीत्वानुरोधात्। तत्र प्रथमं

मन्त्रपञ्चकं यथा पठितव्यं, तथा पुरस्तादस्माभि र्दर्शितम्। उत्तरपञ्चकत्रयेऽपि प्रथमपञ्चकमन्त्रा एवाभ्यसितव्याः। तत्र द्वितीयपञ्चके पापोलक्ष्मीः—इति पदस्थाने पतिघ्नी—इति पठितव्यम्। अयमेव विशेषः, अन्यत् सर्व्वं पूर्व्ववत्। एवं तृतीयपञ्चके तत्रैव स्थाने 'अपुत्र्या'—इति, चतुर्थपञ्चके तत्रैव स्थाने 'अपसव्या'—इति विशेषः। सर्व्वमन्यत् पूर्व्ववदेव। कुतः पुनः पतिघ्नादि पदप्रयोगो वर्ण्यते? न खल्वेतत् सूचितम्। उच्यते। मन्त्रसमाम्नाये पतिघ्नादिपदपाठबलादेवमुन्नीयते। अन्यथा तत्र मन्त्रपञ्चकपाठोऽनर्थक एव स्यात्। प्रथमपठितेनैव मन्त्रेण पञ्चमन्त्राणां सूचितत्वात्। तस्मात् द्वितीय-तृतीय-चतुर्थमन्त्रपाठः, तत्तत्पञ्चके पतिघ्नादिपदप्रक्षेप प्रज्ञापनार्थः। पञ्चममन्त्रपाठ स्तु समस्ताग्न्यादिपदवतिमन्त्र (एकैकशः) पापोलक्ष्म्यादिप्रत्येकपदपाठसूचनार्थः। तदेतत् सर्व्वं कर्म्मप्रदीपकृता कात्यायनेन स्पष्टीकृतम्।

"मन्त्राम्नायेऽग्न इत्येतत् पञ्चकं लाघवार्थिभिः।
पठ्यते, तत् प्रयोगे स्यात् मन्त्राणामेव विंशतिः।
अग्नेः स्थाने वायु चन्द्र सूर्य्या बहुवदूह्य च।
समस्य पञ्चमीं सूत्रे चतुस्तुरिति श्रुतेः।
प्रथमे पञ्चके पापोलक्ष्मीरिति पदं भवेत्।
अपि पञ्चसु मन्त्रेषु इति मन्त्रविदो विदुः।
द्वितीये तु पतिघ्नी स्यादपुत्र्येति तृतीयके।
चतुर्थे त्वपसव्येति इदमाकृति विंशकम्"।

इति। "यद्यपि, सूत्रे वीप्सा न श्रूयते, तथापि कल्प्या। अन्यथा पापीलक्ष्मी पदावृत्त्या व्यस्तसमस्ताः पञ्चैवाहुतयः स्युः। तदा चाम्नायपठितस्य वायो—इत्यादि मन्त्रचतुष्टयस्य वधूदोषोपशमनार्थस्य प्रायश्चित्ताङ्गस्य बाधापत्तिः। आम्नायपठितस्य समस्ताग्न्यादियुतस्य पञ्चमस्यापि, पापीलक्ष्मीः—इत्याद्येकैकपदव्याहारेण वीप्सापक्षे अनुरोधात्"—इति नारायणोपाध्यायाः। व्याख्यानान्तराणि परेषां न दूषितानि ग्रन्थगौरवभयात् ॥०॥ ४ ॥०॥

आहुतेराहुते स्तु सम्पातमुदपात्रेऽवनयेत् ॥ ५ ॥

कृतभाष्यमेतत् ॥०॥ ५ ॥०॥

तेनैनां सकेशनखामभ्यज्य ह्रासयित्वाऽऽप्लावयन्ति॥ ॥ ६ ॥

तेन उदकपात्रस्थसम्पाताज्येन एनां वधूं, सकेशनखां सह केशैश्च नखैश्च वर्त्तमानाम्, अभ्यज्य म्रक्षयित्वा, ह्रासयित्वा उद्वर्त्तनादिना तदभ्यञ्जनमपनीय। अथवा। ह्रासति गतिकर्म्मा। तस्मात् प्रदेशात् प्रदेशमन्यं गमयित्वा। क्रामयित्वा—इति पाठे व्यक्त एवायमर्थः। आप्लावयन्ति स्नापयन्ति, मन्त्रानुपदेशादमन्त्रकमित्यर्थः। बहुवचनादनियतः कर्त्ता। अत्र चतुर्थीकर्म्मणः परिसमाप्तिः ॥०॥ ६ ॥०॥

ऊर्द्धं त्रिरात्रात् सम्भव इत्येके ॥ ७ ॥

प्रकृतात् त्रिरात्रादूर्द्धं परतः, सम्भवत्यनेन—इति सम्भवः सम्भोगः

व्यवायः कर्त्तव्यः—इत्येके आचार्य्या मन्यन्ते। अथ, सूत्रमिदं ग्रक्यमवक्तुम्, सम्भवस्य रागत एव प्राप्तेः। विवाहात् प्रभृति त्रिरात्रं ब्रह्मचर्य्यविधानाच्च तदूर्द्धं ब्रह्मचर्य्यनियमाभावस्यावगतेः। उच्यते। उपरिष्टात् स्नातकव्रतेषु सूत्रयिष्यति—"नाजातलोम्न्या सहोपहासमिच्छेत्"—इति, तदपवादार्थमिदमुच्यते। कथन्नाम?। यद्यजातलोम्न्येवातीव पुरुषोपभोगाभिलाषिनी भवति, तर्हि त्रिरात्रादूर्द्धं तद्रक्षार्थं सम्भवितव्यम्। अपि च। ऋतुकालादन्यत्र रागमात्राधीनत्वात् सम्भवस्य स्त्रीणां तदभिलाषेऽपि पुंसो रागाभावादकरणमपि प्राप्नोति। तदनेन निरस्यते। अन्यथा खल्वभिलाषपरवशा कदाचिदकार्य्यमपि कुर्य्यात्। तस्माद्विनापि ऋतुकालं स्त्रीणां रक्षार्थं सम्भवितव्यम्—इति। रक्षणं खल्वासामवश्यमेव कर्त्तव्यम्, अकुर्व्वतो दोषश्रवणात्। तथा च मनुः।

"सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या विशेषतः।
द्वयो र्हि कुलयोः शोक मावहेयु ररक्षिताः"।

इति। सोऽयं रक्षणोपायः सम्भवोऽपि नियम्यते। तथाच स्मरणम्।

"यथा कामी भवेद्वापि स्त्रीणां वरमनुस्मरन्।
स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः"।

इति।

"ऋतुकालाभिगमनं कार्य्यं पुंसा प्रयत्नतः।
सदैव वा, पर्व्ववर्ज्जं स्त्रीणामभिमतं हि यत्"।

इति चैवमादि ॥०॥ ७ ॥०॥

यदर्त्तुमती भवत्युपरतशोणिता तदा सम्भवकालः ॥ ॥ ८ ॥

यदा ऋतुमती भवति। ऋतुर्नाम गर्भधारणयोग्यावस्थोपलक्षितः कालविशेषः। स च शोणितनिःसरणादारभ्य षोड़शाहोराचात्मकः। तदाह मनुः।

"ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोड़श स्मृताः"*।

इति। किम् ऋतुमत्यां सत्यामेव सम्भवकालः?। न। कदा तर्हि?। यदा उपरतशोणिता अपगतरक्तयोनिद्वारा भवति तदा सम्भवकालः पर्व्ववर्जम्। कुतः?। पर्व्ववर्जं व्रजेदृतौ— इति स्मरणात्। अयमप्यकरणे दोषश्रवणान्नियम एव। तथाच स्मृत्यन्तरम्।

"ऋतुमतीन्तु यो भार्य्यां सन्निधौ नोपगच्छति।
आप्नोति स मन्दात्मा भ्रूणहत्या मृतावृतौ"।

इति। यच्च वर्णयन्ति—

"ऋतौ तु गर्भशङ्कित्वात् स्नानं मैथुनिनः स्मृतम्।
अनृतौ तु सदा कार्य्यं शौचं मूत्रपुरीषवत्।

इत्यनृतौ मैथुनिनः शौचविशेषोपदेशान्नेयं परिसंख्या, अपितु नियमसोऽयम्—इति। तदसङ्गतम्। अस्पृश्यस्पर्शनादिवत् यदृच्छोपनतमैथुनानुवादेन तस्य कृतार्थत्वात्। तस्मादस्मदुक्तादेवर्त्तौ नियमः ॥०॥ ८ ॥०॥

दक्षिणेन पाणिनोपस्थमभिमृशेद्विष्णुर्योनिं कल्पयत्वित्येतयर्चा गर्भं धेहि सिनीवालीति च ॥ ९ ॥

कुत्सितप्रदेशानां सव्येनैव पाणिना कर्त्तव्योपदेशात् प्रदेशस्य चास्य कुत्सितत्वात् सव्येनैवायमभिमर्शः स्यादिति दक्षिणेनेत्याह। दक्षिणेन पाणिना उपस्थं योनिमभिमृशेत् स्पृशेत् विष्णुर्योनिमित्येतयाऽनयर्चा गर्भं धेहीत्येतयाच। पृथङ्‌निर्देशात् पृथगेव स्पर्शः। स खल्वयं स्पर्शो मन्त्रपाठसमकाल मेव स्यात्। कुतः?। उत्तरसूत्रात्। अतएव, उपस्थं स्पृशन् जपति—इति भवदेवभट्टोप्याहस्म। तस्मात्, मन्त्रपाठानन्तरं स्पर्शः—इति रघुनन्दनमतमसङ्गमम्॥ ०॥ ८॥०॥

## समाप्यर्चौ सम्भवतः॥ १०॥

ऋजुरक्षरार्थः। ननु, समाप्यर्चौ—इति शक्यमवक्तुम्। उच्यते। 'समाप्य सम्भवत एव नेतरत् किमपि कुर्य्यात्। इतरथा कर्मापवर्गे विहितं वामदेव्यगान मत्र स्यात्'—इति भट्टनारायणः। नैतत् सारम्। कुतः?। यतो न खल्वभिमर्शोऽत्र कर्म्म, येन तदन्ते कर्म्मापवर्गविहितं वामदेव्यगानं प्रसज्येत। किन्तर्हि?। सम्भवः—इति ब्रूमः। कस्मात्?। तथैवोपक्रमात्। अतः सूत्राच्च। तत् कुत एवेदानीं वामदेव्यगानं प्रसज्येत, येन तन्निरासार्थमेतत् सूचितमुच्यते। सम्भवात् परतः खल्वेतत् स्यात्। "गर्भाधानवदुपेतो ब्रह्मगर्भं सन्दधाति"—इति शास्त्रान्तरमपि, गर्भाधानविधिना; विष्णुर्योनिं कल्पयत्वित्यादिना, उपेतः स्त्रियमुपगतः—इति सम्भवादन्यदाह्वदिति दर्शयति। तस्मात्, दर्शारम्भणीययोरिव कालार्थं—वचनं वर्णनीयम्। कथन्नाम?। ऋचौ समाप्य सम्भवत एव न

पुनरन्तरा किञ्चिदन्यत् कुर्य्यात्—इति। तेन पूर्व्वं सूचितो-ऽभिमर्शोऽपि ऋचोः परतो न स्यात्, किन्तु तत्पाठसमकालमेव—इति सिध्यति। यत्तु तत्त्वकारेण, ऋचोरन्ते स्पर्शं व्याख्यायापि, ऋचौ समाप्यैव संयोगं कुरुतः न मध्ये—इति वर्णितम्। तदप्य-सङ्गतम्। नहि तन्मते ऋचोरनन्तरभाविनोऽभिमर्शादपि पराचो-नस्य सम्भवस्य ऋचो मध्ये प्रसङ्गः शक्यते वक्तुं, येन तन्निरासार्थं समाप्यैव—इति नियमनमर्थवत्। तस्मादस्मदुक्तैवावधारणा।

तदस्य गर्भाधानस्य पुरस्ताच्चोपरिष्टाच्च महाव्याहृतिभिर्हो-तव्यम्। कस्मात्?।

"अग्निस्तु मारुतो नाम गर्भाधाने विधीयते"।

इति गृह्यासंग्रहोक्तस्याग्ने रर्थवत्तोपपत्तेः। यत्र यत्र खल्वग्निरुच्यते न होमः, तत्र तत्रैवमवोचाम, "आज्याहुतिष्वनादेशे पुरस्ताच्चो-परिष्टाच्च महाव्याहृतिभिर्होमः"—इत्यत्र। तदत्र पूर्णाहुतिर्न कर्त्तव्या। कुतः?।

"विवाहे व्रतबन्धे च शालायां चौलकर्म्मणि।
गर्भाधानादिसंस्कारे पूर्णाहुतिं न कारयेत्"।

इति स्मरणात्। केचिदत्र,—

"विवाहादिः कर्म्मगणो य उक्तो
गर्भाधानं शुश्रुम यस्य चान्ते।
विवाहादा वेकमेवात्र कुर्य्यात्
श्राद्धं नादौ कर्म्मणः कर्म्मणः स्यात्"।

इति कर्म्मप्रदीपवचनं पश्यन्तः श्राद्धं निषेधयन्ति। तदसङ्गतम्। यतो

न खल्वेतत् गर्भाधाने श्राद्धं निषेधयति। कुत्र तर्हि?। गर्भाधानादर्व्वाचीनेषु विवाहादिषु प्रत्येकम्—इति ब्रूमः। कुतः?। यस्य कर्म्मगणस्यान्ते गर्भाधानं शुश्रुम—इति गणाद्बहिर्भूतस्यैव गर्भाधानस्य गणलक्षणत्वावगमात्। ननु यथा विवाहो गणान्तर्भूत एव तदादित्वलक्षणः, तथा गर्भाधानमपि तथैवान्तलक्षणमस्तु। नैष दोषः। वैयधिकरण्येनोपदेशात्। यस्यान्ते गर्भाधानं शुश्रुम—इति वैयधिकरण्येनोपदिश्यते। तेनावगच्छामः, गणाद्बहिर्भूतमेव सद्गर्भाधानं तदन्तलक्षणम्—इति। अवयवार्थत्वे खल्वन्तशब्दस्य, यस्यान्ते गर्भाधानम्—इति न स्यात्, तस्यान्तावयवत्वे हि तदेवान्तः स्यात् न पुन रसावन्ते। नहि तदेव तस्मिन्निति शक्यते वक्तुम्। शुश्रुम—इति करणाच्च गर्भाधानस्य गणान्ते श्रवणमेव परं, न पुनरिदमपि तदन्तर्गतम् इति दर्शयति। सन्दिग्धश्च शास्त्रार्थः शास्त्रान्तरादवधार्य्यते। स्फुटमत्र शास्त्रान्तरेषु श्राद्धमुपलभ्यते।

"निषेककाले सोमे च सीमन्तोन्नयने तथा।
इष्टौ पुंसवने चैव श्राद्धं कर्म्माङ्गमेव च"।

इति।

"जन्मन्यथोपनयने विवाहे पुत्रकन्ययोः।
पितॄन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्व्वकम्।
देवव्रतेषु चाधानयज्ञपुंसवनेषु च।
नवान्नभोजने स्नाने ऊढायाः प्रथमार्त्तवे"।

इति चैवमादौ बहुलम्।

'गर्भसंस्कारश्चायं गर्भाधानाख्यः पात्रद्वारेण स्यात्। ततश्च, सकृत्संस्कृते स्त्रीद्रव्ये यो यो गर्भ उत्पद्यते, स स संस्कृत एव भवति। तस्मात् सकृदेव स्या न्न प्रतिगर्भमपि। एवं पुंसवन सीमन्तोन्नयनयोरपि द्रष्टव्यम्'—इति भट्टनारायणादयः। 'त्रयोऽप्यमी संस्काराः प्रतिगर्भमावर्त्तन्ते, अन्यथा परेषां गर्भाणा मसंस्कारः स्यात्'—इति कर्कोपाध्यायाः। गर्भाधानं प्रतिगर्भमावर्त्तते न पुंसवनसीमन्तोन्नयने—इति विज्ञानेश्वरः। सीमन्तोन्नयनं गतिगर्भं नावर्त्तते, गर्भाधानपुंसवने आवर्त्तेते एव—इति शूलपाणि गार्ग्यनारायणप्रभृतयः। किं पुनरत्र युक्तम्?। गर्भाधानपुंसवनयोः प्रतिगर्भमावृत्ति र्न सीमन्तकरणस्य—इति ब्रूमः। कुतः पुनरियमवधारणा?। परतो वक्ष्यामः। गर्भाधानमपि प्रतिगर्भं मावर्त्तते—इति तु विप्रतिषिद्धमेव। सम्भवद्रूपत्वादस्य। तदन्तरेण गर्भसंस्थितेरेवाभावात्। प्रतिऋतु खल्वेतदावर्त्तते। 'ऋतावृतौ'—इति स्मरणात्। अभिमर्शः स्यादावृत्तिरित्यवोचाम। परमन्वाहार्य्यश्राद्धस्य नावृत्तिः।

"असकृद्यानि कर्म्माणि क्रियेरन् कर्म्मकारिणा।

प्रतिप्रयोगं नैव स्यु र्मातरः श्राद्धमेव च"।

इति कर्म्मप्रदीपवचनात्। प्रतिमासकर्त्तव्यदर्शपौर्णमासादीनामिव प्रतिऋतुकर्त्तव्यगर्भाधानस्याप्यविशेषात्। 'उढायाः प्रथमार्त्तवे'—इति वचनाच्च ॥०॥ १० ॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीय गृह्यसूत्रभाष्ये द्वितीयप्रपाठकस्य पञ्चमी कण्डिका ॥०॥

## गोभिलीयगृह्यसूत्रे

### द्वितीयप्रपाठके षष्ठी कण्डिका ।



गर्भाधानानन्तरं पुंसवनमुपदिशन्निदमाह—

**तृतीयस्य गर्भमासस्यादिसदेशे पुंसवनस्य कालः ॥ ॥ १ ॥**

गर्भो यस्मिन् मासि जायते सोऽयं गर्भमासः । तस्य च तृतीयो-मासः । संबन्धलक्षणा षष्ठी । तृतीयो यो गर्भमासः—गर्भादारभ्य च तृतीयोमासः—इति वा व्याख्येयम् । तदस्य आदिसदेशे आदिसमीपप्रदेशे प्रथमे तृतीयभागे—इत्येतत् । 'आदिसदृशे'—इति पाठे व्यक्त एवार्थः । एतस्मिन् काले यत् पुण्यमहः, [illegible] । पुंसवनस्य कालः । पुमान् सूयते येन कर्म्मणा तदिदं पुंसवनं ग[illegible]व संस्कारकर्म्मणो नामधेयम् । अनेन हि कर्म्मणा अव्यक्तलिङ्गं [illegible] पुमांसं करोति । 'पुंसवनात् पुंसो करोति'—इति स्मरणात् यदि पुन दैवान्मानुषाद्वा कुतश्चिदन्तरायात् यथोक्तकालोऽतिपतति, तदा कालान्तरे प्रायश्चित्तं कृत्वा करणीयम् । तथाच कर्म्म-प्रदीपः ।

"देवतानां विपर्य्यासे जुहोतिषु कथं भवेत्? ।
सर्व्वप्रायश्चित्तं कृत्वा क्रमेण जुहुयात् पुनः ।
संस्कारा अतिपत्येरन् स्वकालाच्चेत् कथञ्चन ।
कृत्वैतदेव कर्त्तव्या येतूपनयनादधः" ।

इति। उपनयनादधः—इति करणात् चूड़ाकरणपर्य्यन्तमेव सर्व्वं प्रायश्चित्तहोमः प्रायश्चित्तम्। उपनयनातिपाते तु व्रात्यस्तोमः शाखान्तरे पठ्यते, स एव प्रायश्चित्तं दोषगुरुत्वात्—इत्यभिप्रायः ॥०॥ १ ॥०॥

**प्रातः सशिरस्काऽऽप्लुतोदगग्रेषु दर्भेषु,* पश्चादग्नेरुदगग्रेषु दर्भेषु प्राच्युपविशति ॥ २ ॥**

प्रातः उदयसन्निधौ। अन्यथा 'प्रागावर्त्तनात्'—इति प्राप्तत्वात् पुनरुक्तत्वापत्तेः। तथाच स्मरन्ति। "प्रातःकालो मुहूर्त्तां स्त्रीन्" —इति। 'उदगग्रेषु दर्भेषु' उपविश्य 'सशिरस्काऽऽप्लुता' सती, वधूः 'पश्चादग्नेरुदगग्रेषु दर्भेषु' 'प्राची' प्राङ्मुखी 'उपविशति',—दक्षिणतः पाणिग्राहस्य। कस्मात्?। "दक्षिणतः पाणिग्राहस्योपविष्टा"—इति दर्शनात् ॥०॥ २ ॥०॥

पविष्टायाः खल्वस्याः—

**पश्चात् पतिरवस्थाय दक्षिणेन पाणिना दक्षिणमꣳसमन्ववमृश्यानन्तर्हितं नाभिदेशमभिमृशेत् पुꣳमाꣳसौ मित्रावरुणावित्येतयर्चा ॥ ३ ॥**

'पश्चात्' पृष्ठदेशे 'पतिरवस्थाय' प्राङ्मुख ऊर्द्धः स्थित्वा, 'दक्षिणेन पाणिना' 'दक्षिण मंसं' तूष्णीम् 'अन्ववमृश्य' स्पृष्ट्वा, 'अनन्त-

---

* इत्य मेव सर्व्वत्र पाठः। मंस्कारतत्त्वेतु चात्र 'उदगग्रेषु दर्भेषु'—इति न दृश्यते।

ष्टिनम्' अव्यवहितं वस्त्रासना च्छादितम्,—इत्येतत्। 'नाभिदे-शम्' 'अभिमृशेत्' स्पृशेत्, पुमांसाविति मन्त्रेण। तूष्णीमंसस्याभि-मर्शनं मन्त्रेण नाभिदेशस्य—इति भट्टनारायणप्रभृतयः॥०॥३॥०॥

## अथ यथार्थम्॥४॥

अथानन्तरं यथार्थम्—इति कर्म्मणः परिसमाप्तिरुच्यते। तन्त्र-समापनमत्र कर्त्तव्यम् ॥०॥ ४ ॥०॥

## अथापरम्॥५॥

अथैतस्मात् पुंसवनकर्म्मणोऽनन्तरम्, अपर मन्यत् पुंसवनकर्म्म कर्त्तव्यम्। पाठादेवानन्तर्य्यलाभादथशब्दः पूर्व्वप्रकृतार्थो वा वर्णनीयः। पूर्व्ववदिदमपि पुंसवनं पूर्व्वप्रकृत एव काले करणीयम् —इत्यर्थः। तच्चैकदिने दिनद्वये वा—इति न गम्यते विशेषः। एकदिने चेत् द्वयं क्रियते, तर्हि नान्दीमुखश्राद्धमपि तन्त्रेणैव कर्त्तव्यम्। तथाच कर्म्मप्रदीपः।

"गणशः क्रियमाणे तु मातृभ्यः पूजनं सकृत्।
सकृदेव भवेत् श्राद्धमादौ न पृथगादिषु"।

इति ॥०॥ ५ ॥०॥

**प्रागुदीच्यां दिशि न्यग्रोधशुङ्गा मुभयतःफला मस्रामा मकृमिपरिसृप्तां त्रिःसप्तै र्यवै र्माषैर्व्वा परि-क्रीयोत्थापयेत् ॥ ६ ॥**

प्रागुदीच्यामैशान्यां दिश्यवस्थिता या न्यग्रोधस्य वटस्य शुङ्गा—

"लताग्रपल्लवो गूढ़ः शुङ्गेति परिगीयते"।
वृत्युत्कलचणा, मुकुलितपल्लवः—इत्येतत्। तामेतां शुङ्गां परि-
क्रीय क्रीत्वा उत्थापयेत् गृह्णीयात्। शुङ्गां विशिनष्टि। उभयतः
फलाम्, उभयतः पार्श्वद्वये फले यस्याः सेयमुभयतःफला।
ताम्। अस्रामाम् अम्लानाम्। अकृमिपरिसृप्ताम्, कृमिभिः
परिसृप्ता परिव्याप्ता—कृमिपरिसृप्ता, सा न भवतीत्यकृमिपरि-
सृप्ता। ताम्। कृमयः प्रसिद्धाः। कियता मूल्येन परिक्रयणम्?।
त्रिःसप्तैः त्रिरावृत्तैः सप्तभिः (केचित्तथैव पठन्ति) एकविंशति-
भिरित्येतत्। यवैर्माषैर्वा। यवान् माषान् वा वृत्तमूले निःक्षिप्य
परिक्रयणम्। एवमेके। क्रयस्य वृक्षस्वामिनो न वृक्षात् तेन
वृक्षस्वामिने यवा माषा वा देयाः। एवमपरे॥०॥ ६ ॥०॥
किमिदं परिक्रयणमुत्थापनञ्च तूष्णीमेव। न। कथन्तर्हि?।
मन्त्रैः। कतमे पुन स्ते मन्त्राः?। उच्यते। परिक्रयणन्तावत्—

यद्यसि सौमी सोमाय त्वा राज्ञे परिक्रीणामि,
यद्यसि वारुणी वरुणाय त्वा राज्ञे परिक्रीणामि, यद्यसि
वसुभ्यो वसुभ्य स्त्वा परिक्रीणामि, यद्यसि रुद्रेभ्यो
रुद्रेभ्य स्त्वा परिक्रीणामि, यद्यस्यादित्येभ्य आदित्येभ्य
स्त्वा परिक्रीणामि, यद्यसि मरुद्भ्यो मरुद्भ्य स्त्वा परि-
क्रीणामि, यद्यसि विश्वेभ्योदेवेभ्यो विश्वेभ्योदेवेभ्य स्त्वा
परिक्रीणामि ॥ ७ ॥

एतैः सप्तभिः क्रयत्रिकैर्मन्त्रैः प्रतिमन्त्रं यवत्रयेण माषत्रयेण वा कर्त्तव्यम् ॥०॥ ७ ॥०॥

ततस्तु,—

ओषधयः सुमनसो भूत्वाऽस्यां वीर्य्यं समाधत्तेयं कर्म्म करिष्यतीत्युत्थाप्य तृणैः परिधायाहृत्य वैहायसीं निदध्यात् ॥८॥

*ओषधय इत्यनेन मन्त्रेणेतिकारान्तेनेत्यर्थः। भट्टभाष्येप्येवम्। केचिदितिकारान्तत्वं नेच्छन्ति। उत्थाप्य उत्तोल्य, तृणैः परिधाय वेष्टयित्वा, आहृत्य आनीय, वैहायसीं विहायःस्था माकाशस्थां निदध्यात् धारयेत् ॥०॥ ८ ॥०॥

तां खल्वाहृतां शुङ्गाम्—

दृषदं प्रक्षाल्य ब्रह्मचारी व्रतवती वा ब्रह्मबन्धूः कुमारी वाऽप्रत्याहरन्ती पिनष्टि ॥९॥

दृषदं पेषणाधारात्मिकां शिलाञ्च पेषणकरणरूपां प्रक्षाल्य, पिनष्टि चूर्णीकरोति। कः पिनष्टि?। ब्रह्मचारी प्रथमाश्रमी। व्रतवती पतिव्रता योषिद्वा। गर्भवती—इति भवदेवलेखोऽप्रमाणः। ब्राह्मणान् बन्धून् व्यपदिशति न स्वयं ब्राह्मणवृत्तो यः, सोयं ब्रह्मबन्धूरनधीतवेदो भण्यते। तथा चोक्तम्।

"पतिव्रता व्रतवती ब्रह्मबन्धूस्तथाऽश्रुतः"।

इति। स वा। 'अब्रह्मबन्धूः'—इति केचित् पठन्ति। तदा ब्रह्म-

बन्धूर्यो न भवति सः, अधीत वेदः—इत्यर्थः। कुमारी अनूढ़ा स्त्री। सा वा। कथं पिनष्टि?। अप्रत्याहरन्ती प्रत्याहरण मकुर्व्वती। कथन्नाम?। तिर्य्यक् पुत्रकेण न पेषणं कर्त्तव्यम्। एवं खलु प्रत्याहरणं पुत्रकस्य स्यात्। कथन्तर्हि?। उच्छ्रित पुत्रकेण आहृत्याहृत्य पेषणं कर्त्तव्यम्। अथवा। सकृत् प्रयोगेनैव यथा पेषणं निर्व्वहति, तथा कर्त्तव्यम्—इत्यप्रत्याहरणस्यार्थः ॥०॥ ९ ॥०॥

बधूश्च—

**प्रातः स शिरस्काऽऽप्लुतोदगग्रेषु गर्भेषु, पश्चादग्नेरुदगग्रेषु दर्भेषु* प्राक् शिराः संविशति ॥ १० ॥**

प्राक् शिराः पूर्व्वदिगवस्थितशिरस्का। ईशानकोणमस्तका—इति भवदेवमतमसङ्गतम्। संविशति स्वपिति। इतभाष्य मन्यत्॥०॥ १० ॥०॥

एवं सन्निष्ठाया वध्वाः—

**पश्चात् पतिरवस्थाय दक्षिणस्य पाणे रङ्गुष्ठेनोपनिष्ठिककया चाङ्गुल्याऽभिसंगृह्य दक्षिणे नासिका श्रोतस्यवनयेत्—पुमानग्निः पुमानिन्द्र इत्येतयर्चा॥११॥**

पिष्टां शुङ्गामभिसंगृह्य गृहीत्वा, दक्षिणे सव्येतरे, नासिका

---

* संस्कारतत्त्वेतु, 'पश्चादग्नेरुदगग्रेषु दर्भेषु'—इति प्रतीकं नास्ति।

श्रोतसि नासापुटरन्ध्रे बध्वा एव, अवनयेत् क्षिपेत् पुमानग्निरिति-तिमन्त्रेण। व्याख्यात मन्यत्। वस्त्रबद्धां शुङ्गां गृहीत्वा निष्पीड्य दक्षिणनासापुटे रसं निक्षिपेत्—इति भवदेवभट्टः। तत्त्वकारस्तु—

श्रीफलस्य करे दत्वा स्थिरे भद्रासने तथा।
गृह्योदितेन होमञ्च शान्तिञ्चैवात्र कारयेत्।
ऊर्णासूत्रेण संग्रथ्य जीवं जातिञ्च विद्रुमम्।
गुवाकं रजतं हेम दद्यात् स्तनतटान्तरे"।

इति गृह्यानुक्रमपि लिलेख ॥०॥ ११ ॥०॥

## अथ यथार्थम् ॥ १२ ॥

कृतभाष्यं सूत्रम् ॥०॥ १२ ॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये द्वितीयप्रपाठकस्य षष्ठी काण्डिका ॥ ० ॥

---

द्वितीयप्रपाठके सप्तमी काण्डिका।

अथ सीमन्तकरणम्* प्रथमगर्भे ॥ १ ॥

अथानन्तरं सीमन्तकरणं वर्त्तिष्यते—इति सूत्रशेषः। सीमानमन्तति बध्नाति—इति सीमन्तः केशरचनाविशेषः (शकन्ध्वादित्वात् साधु) तस्य वक्ष्यमाणेन विधिना करणम्—इति कर्म्मणो नामधेयम्। तदिदं सीमन्तकरणं 'प्रथमगर्भे' प्रथमश्चासौ गर्भश्चेति प्रथमगर्भः तस्मिन् कर्त्तव्यम्, न द्वितीयादिष्वपि गर्भेषु। किं कारणम्?। संस्कारः खल्वयं स्त्रीपात्रस्य तत् द्वारेण च गर्भस्य स्यात्। कुतः?। सीमन्तकरणम्—इति समाख्यानात्। तस्मात् सकृदेव कर्त्तव्यम्। सकृत् संस्कृतपात्रजातानां सर्व्वेषामपत्यानां खल्वेवमेव संस्कारः सम्पद्यते। स खल्वयं सूत्रार्थ आचार्य्यपुत्रेणापि दर्शितः। तथाच गृह्यासंग्रहः।

"यथा सिमन्तिनी नारी पूर्व्वगर्भेण संस्कृता।
एवमाज्यस्य संस्कारः संस्कारविधिचोदितः"।

इति। तदिदं सीमन्तकरणं प्रथमगर्भे सूत्रयन्नाचार्य्यो गर्भाधान पुंसवनयोः प्रतिगर्भमावृत्तिं दर्शयति। तथा हारीतः।

---

* सीमन्तोन्नयनम्—इति तत्त्वकारः पठति।

"सकृच्च कृतसंस्काराः सीमन्तेन कुलस्त्रियः।
यं यं गर्भं प्रसूयन्ते स गर्भः संस्कृतो भवेत्"।

इति सीमन्तेन सकृत्कृतसंस्कारत्वे सर्व्वेषां गर्भाणां संस्कृतत्वं स्मरन् एतदेवाह। अन्यथा सीमन्तेनेत्यानर्थक्यापत्तेः।' तथा आश्वलायनगृह्यपरिशिष्टम्। "सीमन्तोन्नयनं प्रथमेगर्भे, सीमन्तोन्नयनसंस्कारो गार्भपात्रसंस्कार इति श्रुतिरिति"। गर्भस्य पात्रस्य गर्भपात्रे, तयोरयं गार्भपात्रः सचासौ संस्कारश्चेति स तथा। गर्भ उदरस्थमपत्यम्। पात्रं तदाधारः स्त्री। तदत्र 'सीमन्तोन्नयनं प्रथमेगर्भे'—इति सुव्यक्तमुपदेशात् गर्भाधान पुंसवनयोः प्रतिगर्भमावृत्ति रवगम्यते। अन्यथा सीमन्तोन्नयन पदस्य प्रमत्तगीतता स्यात्। श्रौ।तच्चास्य गार्भपात्रसंस्कारत्वमुपन्यस्यन्नृषि रन्ययोः पात्रसंस्कारत्वं नास्तीत्युपदिशति। 'यथा सिमन्तिनो'—इत्याचार्य्यपुत्रवाक्येपि सीमन्तिन्या नार्य्याः पूर्व्वगर्भेन संस्कारत्ववचनादेवमवगम्यते। "सीमन्तोन्नयनं प्रथमगर्भे"—इति च गृह्यान्तरम्। तथा स्मृत्यन्तरम्। "विज्ञाते गर्भे तिष्येण पुंसवनं, तत् तृतीयेमास्यन्यत्र गृष्टेः"—इति। गृष्टिः प्रथमगर्भः—गार्ग्यनारायणः। तदत्र, प्रथमगर्भादन्यत्र तृतीयेमासि पुंसवनम्—इति स्फुटमस्य प्रतिगर्भमावृत्तिः स्मर्य्यते। न चैतदसंस्कृतप्रथमगर्भ विषयमितिवाच्यं तन्मात्रपरत्वे प्रमाणाभावात्। 'तिष्येण पुंसवनम्'—इति शाखान्तरविषयं स्मरणम्। "तिष्येणोपोषितायाः"—इत्यादि शाखान्तरगृह्यकारसूचणात्। 'अन्यत्र गृष्टे स्तृतीये-

मासि'—इत्यपि नादरणीयम्। आचार्य्यसूत्रविरोधात्। केवल मस्यावृत्तिप्रदर्शनार्थमिदमुक्तम्।

तस्मात् गर्भाधानपुंसवनयोः गर्भसंस्कारकतैव परं न तु पात्रसंस्कारकतापि। तस्मात्ते प्रति गर्भमावर्त्तनीये। कुतः पुनर्गर्भसंस्कारतैव तयो र्न पात्रसंस्कारतापि?। पात्रसंस्कारतायां प्रामाणाभावात्। समाख्यानाच्च गर्भसंस्कारताऽवगतेः। "गर्भाधान पुंसवन सीमन्तोन्नयन जातकर्म्म नामकरणान्नप्राशन चौड़ोपनयनम्"—इति गोतमादिभिः पुरुषसंस्कारमध्ये गणनाच्च। तथाऽन्यच्च। "गर्भाधानवदुपेतो ब्रह्मगर्भं सन्दधाति, पुंसवनात् पुंसीकरोति"—इति।

"वैदिकैः कर्म्मभिः पुण्यै र्निषकादि र्द्विजन्मनाम्।
कार्य्यः शरीरसंस्कारः पावनः प्रेत्यचेह च।
गार्भै र्होमै र्जातकर्म्म चौड़मञ्जीनिबन्धनैः।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः"।

इति चैवमादिबहुलम्। ननु, उपस्थमभिमृशेत्—इति वचनादभिमर्श उपस्थमपि संस्करोति?। संस्करोतु नाम, किमतो भविष्यति?। यद्येवमेतदतो भविष्यति। उपस्थस्य संस्कृतत्वात् सीमन्तकरणस्येव गर्भाधानस्यापि न पुनरावृत्तिरिति। नैवम्। न ह्येतावता गर्भाधानस्यावृत्तिः शक्यते वारयितुं, तस्य गर्भसंस्कारत्वात् सम्भवरूपत्वाच्च। तदावृत्तौ तु प्रयोगवचनेन प्राप्तत्वात् दीक्षादिसंस्काराणामिवाभिमर्शनस्याप्यावृत्तिर्भवत्येव। शौचादिसंस्कारव चैतदवगन्तव्यम। यथा हि यागसाधनानां शौचा-

हीनां संस्कारकर्म्माणि प्रोक्षणादीन्यपूर्व्वप्रयुक्तानि—इति संस्कृता अपि व्रीहयः उपादीयमानाः प्रयोगवचनबलात् पुनः प्रोक्षणादिभिः संस्क्रियन्ते, यथा चावघातस्य वितुषीकरणार्थत्वेऽपि प्रयोगवचनेन प्राप्तत्वात् *तण्डुलमप्युपादीयमानमवहन्यते, तथात्रापि गर्भाधानसाधनस्योपस्थस्य संस्कारकर्म्मणोऽभिमर्शस्याप्यपूर्व्वप्रयुक्तत्वात् गर्भाधानान्तरे संस्कृतोऽप्युपस्थः प्रयोगवचनबलात् गर्भाधानान्तरे पुनः संस्कर्त्तव्यः। तस्मात् अङ्गत्वादेव यावत् प्रधानमभिमर्शोऽप्यावर्त्तनीयः—इति न किञ्चिदनुचितम्। पुंसवनेऽप्ययमेव न्यायश्चिन्तनीयः। सीमन्तकरणमपि तर्हि प्रतिगर्भं क्रियताम्? ननु प्रयोगवचनबलात् स्त्र्यपि पुनः संस्करिष्यते। न—इति ब्रूमः। कस्मात्?। यस्मात् सीमन्तकरणमिति समाख्यानात् प्राधान्येन स्त्रीसंस्कारकतैवास्यावगम्यते—इति नैतत् प्रतिगर्भं क्रियते। शास्त्रप्रामाण्याच्च। सोऽयं शास्त्रोपोद्बलितोऽर्थः शास्त्रैकशरणैरादरणीयः। यत् पुनर्देवलवचनम्—

"सकृच्च संस्कृता नारी सर्व्वगर्भेषु संस्कृता।
यं यं गर्भं प्रसूयेत स गर्भः संस्कृतो भवेत्"।

इति। तदपि सीमन्तकरणाभिप्रायमेव वर्णनीयम्। सकलवचनानां सामञ्जस्यात्। सकृत् संस्कृता नारी—इत्यस्योद्देश्यानुवादकतया च यथाप्राप्तानुवादस्यैव वर्णयितु मुचितत्वात्। न खल्वत्र सकृत् संस्कृतत्वं नार्य्या विधित्सितम्, अपि तु सकृत्संस्कृतायाः सर्व्वगर्भेषु संस्कृतत्वम्—इत्यनुवाद एवायम्। तस्मात् संस्कारोऽत्र सीमन्तकरणमेव। तत् हि सकृत् क्रियते। 'संस्कृता नारी'—इति

वचनाच। सीमन्तकरणेन हि सा संस्क्रियते, न गर्भाधानपुंसवना-भ्याम्—इत्यवोचाम। तस्माद्गर्भाधानपुंसवनयोः प्रतिगर्भमावृत्तिर्न सीमन्तकरणस्य—इति सिद्धम्।

दैवाच सीमन्तकरणादर्व्वागेव गर्भनाशे पुनर्गर्भोत्पत्तौ तत् करणीयम्। अन्यथा खल्वस्य संस्कारस्याभावेन असंस्कृतं पात्रमपत्यस्य स्यात्। न चैतदुचितम्। शास्त्रान्तरबलाच। तथाच स्मरणम्।

"पूर्व्वस्य श्राविता यस्य गर्भा यस्याप्यसंस्कृतः।
द्वितीये गर्भसंस्कार स्तेन शुद्धि र्विधीयते"।

इति। तदिदं सीमन्तकरणविषयं वचनम्। न खल्वत्र प्रतिगर्भमावृत्ति र्विधीयते संस्कारस्य, किन्तर्हि? प्रथमगर्भविहितस्य संस्कारस्य दैवादकरणे गर्भान्तरे करणमुपदिश्यते। सीमन्तकरणस्य प्रथमगर्भे विहितं। न गर्भाधान पुंसवने। तथा स्मृत्यन्तरम्।

"या नार्य्यकृतसीमन्ता प्रसूयेत कदाचन।
अङ्के निधाय तं बालं पुनः संस्कार मर्हति"।

इति। असंस्कृतगर्भप्रसवे द्वितीयगर्भे संस्कारस्तु प्रकृतबालविनाशविषयो बोद्धव्यः ॥०॥ १ ॥०॥

यस्मिन् काले सीमन्तकरणं कर्त्तव्यं, तदाह—

## चतुर्थे मासि षष्ठेऽष्टमेवा ॥२॥

स्पष्ट स्वरार्थः। वाशब्देकान्नेते कालास्तुल्यवद्विकल्प्यन्ते। तस्मादेतेषु कालेषु यत्रोदगयनादि सम्पद्यते, स कालद्रष्टव्यः

—इति भट्टभाष्यम्। अन्येत्वाहुः—पूर्व्वपूर्व्वकालासम्भवे अपरापरः कालः—इति।

केचित् पुन गर्भाधानपुंसवनयोरपि प्रतिगर्भमावृत्तिमसहमानाः 'प्रथमगर्भे'—इति पूर्व्वसूत्रप्रतीकेनास्य एकसूत्रतां कल्पयन्तोवर्णयन्ति। 'प्रथमगर्भे—इत्युपादानात् प्रथमगर्भे एव सीमन्तकरणे चतुर्थमासादि कालविकल्पः। कथञ्चिदज्ञात एवैतस्मिन् संस्कारे गर्भनाशे, गर्भान्तरोत्पत्तौ तु नायं कालविकल्पः। किन्तु "गर्भस्पन्दने सीमन्तोन्नयनं याव न्न वालप्रसवः"—इति शङ्खलिखितोक्तकाल एव ग्राह्यः। तदिदमर्थं प्रथमगर्भे—इतिवचनं न गर्भाधानपुंसवनकर्म्मणो रावृत्तिप्रज्ञापनार्थम्'—इति। तदप्रमाणमसङ्गतञ्च। यदि तावत् इयं वचनव्यक्तिराश्रीयते,—सीमन्तकरणस्य प्रथमगर्भे एते कालविकल्पाः—इति। तदा गर्भान्तरे सीमन्तकरणं न प्राप्नोत्येव। कुतः?। विहितस्य सीमन्तकरणस्य प्रथमगर्भे चतुर्थमासादिकालविधानात् तदपि प्रथमगर्भ एवावतिष्ठते। अङ्गाधिकरण न्यायात्। न हि विहितकालादन्यत्र कर्म्मणः करणमस्ति। सन्दिग्धोपक्रमं हि वाक्यमुपसंहारवशान्नीयते—इति च पूर्व्वोत्तरमीमांसयोरसकृदुपलभ्यते। तथाच सीमन्तकरणमात्रस्य प्रथमगर्भे विधानात् सिद्धा गर्भाधानपुंसवनयोः प्रतिगर्भमावृत्तिरित्यफलः प्रयासः। अथ, प्रथमगर्भ एवैते कालविकल्पाः, द्वितीये तु गर्भे नायं कालविकल्पः—इत्यभिप्रायः, तर्हि द्वितीयादिष्वपि गर्भेषु कालान्तरे सीमन्तकरणं स्यादेव। तथाच इद्धिमिष्टवतो मूलमपि ते

ग्रहम्—इत्ययोप्रमादः। स्याम्मतं—शास्त्रान्तरवशा च द्वितीयादिषु गर्भेषु सीमन्तकरणम्—इति। एवन्तर्हि प्रथमे एव गर्भे सीमन्तकरणं शास्त्रार्थः—इति 'प्रथमगर्भे'—इति पूर्व्वसूत्रस्यैव प्रतीकम्—इति सिध्यति। एतत्सूत्रप्रतीकत्वे खल्वभिप्रेयमाणे भवन्मते गर्भान्तरेष्वंयनेवंकाले नित्यवत् सीमन्तकरणमायाति। तचानिष्टम्। न चाकृते एव संस्कारे प्रथमगर्भविनाश विषयं तदितिवाच्यं तन्मात्रपरत्वे प्रमाणाभावात्। अथ, शास्त्रान्तरादन्यत्र सीमन्तकरणाभावावगमादगत्या एवं कल्प्यते। तर्हि शास्त्रान्तरे सीमन्तकरणमात्रस्य प्रथमगर्भे उपदेशात् गर्भाधानपुंसवनयोः प्रतिगर्भमावृत्तिरिष्यताम्। न हि तयोरनावृत्तावस्मच्छास्त्रमस्ति, येन तद्विरोधात् शास्त्रान्तरमनादरणीयं स्यात्। न च परशास्त्रमपि तयोरावृत्ति निषेधकमुपलभामहे। स्वशास्त्रस्य किञ्चिदस्यार्थस्योपोद्बलकमुदाहराम। प्रथमगर्भनाशे तु विशेषशास्त्रान्तरादपरगर्भे तत् करणमुक्तम्। तच भवतामप्यवलम्बनीयमेव। अन्यथा खल्वेतत् सीमन्तकरणं प्रथमगर्भविनाशेपि गर्भान्तरे वा न स्यात्, सर्व्वेष्वेव वा गर्भेष्वविशेषेण स्यात्। न चैवमिष्यते।

नापि गर्भान्तरे सीमन्तकरणे कालान्तरकल्पना युक्ता। प्रथमगर्भविनाशे लाघवेनापरगर्भमात्रविधिपरतया शास्त्रान्तरस्य वर्णयितुमुचितत्वात्। कालस्तावदिव स एवानुवर्त्तिष्यते। यदि पुनः प्रथमे एव गर्भे एष कालविकल्पो द्वितीयगर्भे नैवानुवर्त्तितु मर्हति—इति निर्ब्बन्धातिशयमुच्यते। तथाप्येष एव कालस्तत्र कल्पयितुमुचितः। स्वशास्त्रानुग्रहात्। प्रथमगर्भस्य नाशे द्वितीय

गर्भमात्रविधानेन तदनुवृत्तौ बाधकाभावाच्च। शङ्खलिखितोक्त-स्तु कालो नास्माकमाम्नायते। केषां तर्हि ? । येषामसौ सूत्रकारः येषां वा पारस्करीयादीनां संस्कार एव परमाम्नायते न कालः, तेषामिति ब्रूमः। न च तद्वचनस्य द्वितीयगर्भमात्रविषयतायां प्रमाणमस्ति। सीमन्तोन्नयनस्य खल्वेष कालो विहितः। तच्च शास्त्रान्तरबलात् प्रथमगर्भविषयमेव। न लेकस्यवचनस्य प्रथमगर्भे एकेषां कालविधायकत्वं, गर्भान्तरे तु तेषा मन्येषाञ्च—इत्यर्द्धजरतीयमुचितम्। तस्मादन्येषामेवैष कालविधिः। न खल्वयं कालोऽस्माकम् चिकल्पयिषितः। तदरं स्वशास्त्रोक्त एव कल्प्यताम्। तस्मात्, शास्त्रान्तरानुमतं स्वशास्त्रोपोद्दलितञ्च सूत्रच्छेदमननुजानानाः अन्यादृशमेव यदृच्छया कल्पयन्तो निरङ्कुशत्वमात्मनः ख्यापयन्ति। तदिदं शास्त्रैकशरणै रनादरणीयम्॥०॥ २॥०॥

प्रातः सशिरस्काऽऽप्लुतोदगग्रेषु दर्भेषु, पश्चादग्नेरुदगग्रेषु दर्भेषु प्राच्युपविशति॥ ३॥

स्पष्टार्थं सूत्रम्॥०॥ ३॥०॥

पश्चात् पतिरवस्थाय युग्मन्तमौदुम्बरं शलाटुग्रप्सम्मावध्नाति अयमूर्ज्जावतो वृक्ष इति॥ ४॥

पश्चात् पतिरवस्थाय—इत्युक्तार्थम्। युञ्जि युग्मानि फलानि यस्मिन्, सोऽयं युग्मान् तं युग्मन्तम्—इति भट्टनारायणोपा-

च्छायाः। (युजम्बद्दाम्नतुपासिद्धम्)। उदुम्बरः प्रसिद्धः तत्र भवमौदुम्बरम्। शलाटुग्रथ्नम्। शलाटु नीलं, ग्रथ्नः स्तवकः। तथा चोक्तम्।

"शलाटु नीलमित्युक्तं ग्रथ्नः स्तवक उच्यते"।

इति। शलाटुश्चासौ ग्रथ्नश्चेति शलाटु ग्रथ्नः तं, नीलस्तवकमित्यर्थः। वध्वाः कण्ठे आवध्नाति अयमूर्ज्जा—इत्यनेन मन्त्रेण ॥०॥ ४ ॥०॥

**अथ सीमन्तमूर्द्ध्वमुन्नयति* भूरिति दर्भपिञ्जली-भिरेव प्रथमं, भुवरिति† द्वितीयं, स्वरिति तृतीयम् ॥५॥**

अथेति स्थाननियमार्थम्। तत्रास्य एव पतिः (सीमन्तो व्याख्यातः) तम् ऊर्द्ध्वमुन्नयति भूरित्यनेन मन्त्रेण। केन उन्नयति?। दर्भ पिञ्जलीभिरेव।

"अनन्तर्गर्भिणं साग्रं कौशं द्विदल मेव च।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्।
एतदेव हि पिञ्जल्या लक्षणं समुदाहृतम्।
आज्यस्योत्पवनार्थं यत् तदप्येतावदेव तु।
एतत्प्रमाणा मेवैके कौशोमेवार्द्रमञ्जरीम्।
शुष्कां वा शीर्णकुसुमां पिञ्जलीं परिचक्षते"।

---

* 'ऊर्द्ध्वं नयति'—इति पाठान्तरम्।

† 'भुव इति'—इति पाठान्तरम्।

इति कर्मप्रदीपोक्तलक्षणाभिः। 'दर्भपिञ्जलीशब्देन प्रादेशप्रमाणं कुशपत्रत्रयं कुशान्तरेण वेष्टितमुच्यते'—इति स्वतन्त्राशा तु प्राशैरवगम्यैव। कतमाभिर्दर्भपिञ्जलीभिरुन्नयति?। तिसृभिरित्याह। कुतः?। कपिञ्जलन्यायेन बहुवचनस्य तदर्थत्वस्यौत्सर्गिकत्वात्। तदिदं प्रथममुन्नयनम्। भुवरिति द्वितीयं दर्भपिञ्जलीभिरेव। स्वरिति तृतीयं दर्भपिञ्जलीभिरेव। तदेवं तिसृभिस्तिसृभिरेकैकमुन्नयनमित्युन्नयनत्रित्वाद्दर्भपिञ्जल्योपि नवैव सम्पद्यन्ते। तासाञ्च तिसृभिरेकमुन्नयनं, तावतीभिरपरं, तावतीभिरेवापरम्—इति भवदेवभट्टोक्तमादरणीयम्। अतएव, 'भूरिति दर्भपिञ्जलीभिः'—इति सूत्रयित्वा 'प्रथमम्'—इति सूचितम्। यदि पुन स्तिस्र एव दर्भपिञ्जल्यः स्युः, तर्हि आदित एव 'दर्भपिञ्जलीभिः'—इति सूत्रयित्वा 'भूरिति प्रथमं भुवरिति द्वितीयम्'—इति विनियोगममूषामसूत्रयिष्यत्। न चैवम्। तस्मादनुमिमीमहे, भूरिति प्रथमएवोन्नयने तिस्रो दर्भपिञ्जल्यो व्याप्रियन्ते। एवमुत्तरयोः।

भट्टनारायणप्रभृतयस्तु वर्णयन्ति,—"दर्भपिञ्जलीभिरित्येवकारकरणात् यावन्त्युन्नयनानि तावतीभिरेव, तिसृभिरित्यर्थः। प्रथमं द्वितीयं तृतीयम्—इति व्याहृतीनां पिञ्जलीनाञ्च पृथग्विनियोगार्थम्। तथाचैकैकया पिञ्जल्या एकैकमुन्नयनम्"—इति॥ ०॥ ५॥०॥

## अथ वीरतरेण येनादितेरित्येतयर्चा ॥ ६ ॥

अथेति व्याख्यातम्। वीरा स्तरन्त्यनेन—इति वीरतरः शरः—

इत्येके । वीरतर स्तवविशेषः—इत्यपरे । तथाच कर्मप्रदीपः ।

"श्वाविच्छलाका शलली तथा वीरतरः शरः" ।

इति । अत्रापि 'वीरतरः शरः'—इत्येकेषां पाठः । 'वीरतर-स्तवः'—इति चापरेषाम् । वाजसनेयिनान्तु तृणविशेषे रूढ़िः । तदत्र भवन्तो भूमिदेवाः प्रमाणम् । तदनेन वीरतरेण, येनादि-तेरित्येतया ऋचा सीमन्तमूर्द्धमुन्नयति—इत्यनुवर्त्तते ॥०॥ ६ ॥०॥

## अथ पूर्णचात्रेण राकामहमित्येतयर्चा ॥ ७ ॥

सूत्रपूर्णेन चात्रेण तर्कुणा, सीमन्तमूर्द्धमुन्नयति—इति प्रकृतं ग्रन्थ-ध्यते । गतमन्यत् ॥०॥ ७ ॥०॥

## त्रिश्वेतया* च शलल्या यास्तेराके सुमतय इति ॥

त्रिश्वेतया त्रिषु स्थानेषु श्वेतया शुक्लवर्णया, शलल्या शलली व्याख्याता, तया, यास्ते—इति मन्त्रेण, सीमन्तमूर्द्धमुन्नयति—इति चशब्दस्यार्थः ॥०॥ ८ ॥०॥

## कृसरः स्थालीपाक उत्तरघृत स्तमवेक्षयेत् ॥ ९ ॥

कृसरः—

"तिलतण्डुलसम्पक्वः कृसरः सोऽभिधीयते" ।

इति कर्मप्रदीपोक्तलक्षणः । स्थाल्यां यः पच्यते सोऽयं स्थाली-

---

* इत्थमेव पाठो भाष्यपुस्तकद्वये । सूत्रपुस्तकेषु संस्कारतत्त्वे च 'त्रिः श्वेतया'—इत्याद्यकः पाठो दृश्यते ।

पाकः। सहनेन स्थालीपाकावृता कृसरस्य पाकोऽवगम्यते। अ-नुष्यार्थत्वाच्च द्वि स्तण्डुलानां प्रक्षालनम्। उत्तरे उपरि घृतं यस्य सोऽयमुत्तरघृतः, उपरिदत्तघृतः—इत्यर्थः। तमिमं कृसरं स्थाली-पाकं श्रवेक्षयेत् पत्नीं दर्शयेत् पतिः। स खल्वयं कृसरः, स्थाली-पाकावृता यत्र कुत्रचित् येन केनापि पक्तव्यः। सिद्धस्य तस्या-वेक्षणमात्रस्यैव सूत्रणात्। तस्मादवेक्षणार्थमेवास्यासादनम्—इति सिद्धम्। ननु—

"आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते।
मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः"।

इति कर्मप्रदीपवचनात् मन्त्रस्य देवतायाश्चानादेशाच्च प्राजापत्य एव स्थालीपाकः कुतो न स्यात्। नैषदोषः। यत्र हि होम-स्योपदेशो न मन्त्रस्य न वा देवतायाः, तत्रैव प्राजापत्यो मन्त्रः प्रजापतिश्च देवता—इति शास्त्रमर्य्यादा। अतएव जुहोतिषु—इति वचनमुपपद्यते। तदिदं वचनं सतोषु जुहोतिषु मन्त्रदेव-तयोः प्राजापत्यत्वमुपदिशति न पुन र्जुहोतिमपि चोदयति। जुहोतिषु—इति सिद्धवदुपदेशात्।

अथैवं वृथापक—इत्येव कुतो न सूचितम्?। चूड़ाकरणे खल्वेवं सूत्रयिष्यति,—"कृसरः स्थालीपाको वृथापकः"—इति। तस्मादेवमसूत्रणादत्र स्थालीपाकस्य प्रयोजनमित्यवगच्छामः। उच्यते। सत्यम् सप्रयोजनं स्थालीपाकस्य, अस्मादेवकारणात् वृथापकः—इति न सूचितम्। तच्च प्रयोजनं न होमः। अत्र-

-क्षणात्। किन्तर्हि? । अवेक्षणं भोजनञ्च । तथैव सूत्रणात् । तस्मात् यथोक्त एवार्थः ॥०॥ ६ ॥०॥

एवं स्थालीपाकं पश्यन्तीं बधूम्—

**किं पश्यसीत्युक्ता, प्रजामिति वाचयेत् ॥ १० ॥**

किं पश्यसि?—इतिमन्त्रभागं पतिरुक्त्वा, प्रजाम्—इति मन्त्रभागं बधूं भाषयेत् । एवञ्च, मन्त्रे मह्यं पत्युः—इति पदद्वयं वैयधिकरण्येन सम्बध्यते। मम बध्वाः;—पत्युः,—इत्यर्थः । तथाच लिङ्गस्य बलवत्त्वा दुक्त वाक्यं,'किं पश्यसि'—इति भागस्य प्रश्ने, 'प्रजाम्'—इत्यादि भागस्य च प्रतिवचने विनियोग आदरणीयः। भवदेवभट्टस्तु, किं पश्यसि—इत्यादि सर्व्वमेव मन्त्रं पतिः प्रश्नपूर्व्वमुच्चारयेत्। सर्व्वं भवदुक्तं पश्यामि—इति बधू ब्रूयादित्याह । तदत्र सूत्रसङ्गतिं नावगच्छामः । पत्युः सर्व्वमन्त्रपाठे च, किं पश्यसि—इत्युक्ता—इति, प्रजामिति वाचयेत्—इति च, पृथगुपदेशोऽसङ्गतः स्यात्। "किं पश्यसि प्रजां पशून् सौभाग्यं मह्यं दीर्घायुष्ट्वं पत्युः"—इति हि मन्त्रः ॥०॥ १० ॥०॥

**तं सा स्वयं भुञ्जीत ॥ ११ ॥**

समवेक्षितं तमरं स्थालीपाकम् । भुञ्जन्यत् ॥०॥ ११ ॥०॥

**वीरसू जीवसू जीवपत्नीति ब्राह्मण्यो मङ्गल्याभिर्व्वाग्भि रुपासीरन् ॥ १२ ॥**

वीरान् विक्रान्तान् सूते—इति वीरसूः । जीवान् जीवतः सूते—

इति जीवसूः । जीवस्य जीवतःपत्नी जीवपत्नी, अविधवेत्यर्थः ।
वाक्यत्रयेपि 'त्वं भव'—इति वाक्यशेषो बोद्धव्यः । इति एवंप्रकाराभि र्मङ्गल्याभिर्मङ्गलादनपेताभिर्व्वाग्भि र्ब्राह्मणो वधू मुपासीरन् गायेरन् अनुनयेयुरित्येतत् । "अविधवाः पुत्रवत्यो नार्य्यो वधूं वेद्यामुत्थाप्य कलसोदकेनाभ्युक्षणादिकं मङ्गलकृत्यं कुर्य्युः"—इति भवदेवकल्पनायान्तु प्रमाणं न पश्यामः । क्षसरभोजनमध्यस्मात् परं तेनोक्तं न युक्त मेव । पूर्वमेव तदुपदेशात् । 'इदानीमेव तन्त्रसमापनम्'—इति एके मन्यन्ते । कुतः ? । उत्तरत्र कर्म्मान्तरोपदेशेन पूर्वस्य कर्म्मणोऽपवर्गावगतेः । अन्ये तु 'प्रजाम्—इत्येतन्मन्त्रवाचनात् परमेव तन्त्रसमापनं ततः क्षसरभोजनमुपासनञ्च'—इति वर्णयन्ति ॥०॥ १२ ॥०॥

## अथ सोष्यन्तीहोमः ॥ १३ ॥

अथेत्ययमपूर्व्वप्रकरणोपन्यासार्थः । सोष्यन्ती शूलायन्ती आसन्नप्रसवा—इत्येतत् । सुप्रसवे—इत्यस्माद्धातोः । तामिमां सोष्यन्तीं ज्ञात्वा यो होमः, सोऽयं सोष्यन्तीहोमः । कर्त्तव्यः—इति वाक्यशेषः ॥०॥ १३ ॥०॥

कस्मिन् काले कथञ्च होमोऽयं कर्त्तव्यः ? । उच्यते ।

**प्रतिष्ठिते वस्तौ परिस्तीर्य्याग्निमाज्याहुती जुहोति, —या तिरश्चीत्येतयर्चा विपश्चित् पुच्छमभवदिति च ॥ १४ ॥**

वस्ति र्योनिद्वारम् । प्रतीत्यश्चमुपसर्गः । वस्तौ स्थिते गर्भे सतीत्ये-

तत्। 'अग्निं परिस्तीर्य्य' अग्निपरिस्तरणं व्याख्यातं, तत्कृत्वा, द्वे आज्याहुती जुहोति, या तिरश्चीत्येतया त्वया विपश्चिदित्येतया च। भेदेनोपदेशात् भेदेनैव होमः। अथ, अग्निं परिस्तीर्य्य—इति सिद्धत्वादवाच्यम्, अथोच्यते; कारणं वक्तव्यम्?। परिसंख्यानार्थमित्याह। किमनेनोक्तं भवति?। एतदनेनोक्तं भवति। अग्निपरिस्तरणमेव न तु ब्रह्मोपवेशनादिकमपि—इति। तस्मात् क्षिप्रहोमः स्यादितिसिद्धम्। परिस्तरणमात्रमेवात्राधिकम्। ननु, आज्यपदमप्यनर्थकं, हविषोऽनादेशे खल्वाज्येनैव हूयते। उच्यते। आज्यग्रहणमाज्यसंस्कारप्रज्ञापनार्थम्। तेनाज्यसंस्कारोऽपि कर्त्तव्यः॥०॥ १४ ॥०॥

**पुमानयं जनिष्यतेऽसौनामेतिनामधेयं गृह्णाति॥१५॥**

पुमानयं जनिष्यतेऽसौनाम—इत्यस्यामृचि तिमन्त्रस्थाने जनिष्यमाणस्य परिकल्पितं नामधेयम्—(नामैव नामधेयं, स्वार्थे धेयट्) गृह्णाति उच्चारयति॥०॥ १५ ॥०॥

**यत्तद्गुह्यमेव भवति॥ १६ ॥**

यन्नामधेयं गृह्णाति, तन्नामधेयं गुह्यम् अप्रकाशमेव भवति। एवकारात् सर्व्वदेवास्य गुह्यता वेद्धव्या ॥०॥ १६ ॥०॥

अथेदानीं जातकर्म्मोपदिदिक्षु रिदमाह—

**यदाऽसौ कुमारं जातमाचक्षीरन्नथ ब्रूयात्;—कालक्षत माभिक्षत्तनेन स्तनप्रतिधानेनचेति॥ १७॥**

यदा यस्मिन् काले अस्मै पित्रे कुमारं जातमाचक्षीरन् स्त्रियाः दयः कथयेयुः, अथ तदा अनन्तरं वा, पिता ब्रूयात् व्यक्तं कथयेत्—उच्चैरुच्चारयेदित्येतत्। किं ब्रूयात्?। उच्यते। काञ्चन प्रतिपालयत, नाभिकृन्तनेन स्तनप्रतिधानेन च। कथन्नाम?। नाभिकृन्तनं स्तनप्रतिधानञ्च मा तावत् कुरुत—इति। तदिदमुच्चैरुच्चारयेत्। नाभि र्नाभिकण्ठानाड़ी नालमित्यनर्थान्तरम् ॥०॥ १७ ॥०॥

## व्रीहियवौ पेषयेत्तयैवाऽऽवृता यया शुङ्गाम् ॥ १८ ॥

व्रीहिश्च यवश्च व्रीहियवौ। समासकरणादुभावपि मिलितौ युगपत् पेषयेत् नत्वेकैकशः। तयैव परिपाट्या पेषयेत्; यया परिपाट्या शुङ्गां पूर्व्वोक्तां पेषयेत्। अन्यतरालाभेपि तत्प्रतिनिधिरुपादेयः, न तु प्रत्येकमेवादाय कर्म्म करणीयम्। इतरेतरयोगस्यार्थवत्त्वात्। तथाच कर्म्मप्रदीपः।

"यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत्।
यवानामिव गोधूमा व्रीहीणामिव शालयः"।

इति। यच्च,—'उभयालाभे प्रत्येकम्—

"यथा लाभोपपन्नेषु रौप्येषु तु विशेषतः"।

इति याज्ञवल्क्यवचने पात्रे तथा दर्शनेनान्यत्राप्यनया. तथा कल्प्यते',—इति रघुनन्दनमतम्। तदयुक्तम्। कस्मात्?। यस्मात् न खलु याज्ञवल्क्येन आद्रुपात्राणि वचनान्तरेणोक्तानि। नापि मिलितानां पात्राणां प्रत्येकमुपादानमनेन वचनेनोच्यते। न हि

शाखान्तरेपि समुच्चयेन पाचविधि रस्ति। वैकल्पिकानां पात्राणां अन्यच यथा लाभोपपन्नत्व मुच्यते। ब्रीहियवौ खल्वाचार्य्येण भि-क्षितावुच्येते। तत् किमत्रदर्शनं कल्पनामूलम्—इति कल्पयितैव जानाति। नह्यत्रोदगयनादिवदेकैकानुगुण्यद्योतकं वचनमस्ति। अपिच। साहसिकः खल्वसौ, यः खल्वाचार्य्यवचनमुपरुध्य त-द्विरुद्ध मेव यदृच्छया कल्पयन्नापत्रपते। सेयमर्व्वाचीनानां यदृच्छाकल्पना आचार्य्यवचनविरोधात् बुद्धिमद्भि रनादरणीया ॥०॥ १८ ॥०॥

तदेवं पिष्टौ ब्रीहियवौ,—

दक्षिणस्य पाणे रङ्गुष्ठेनोपकनिष्ठिकया चाङ्गुल्या-ऽभिसंगृह्य कुमारस्य जिह्वायां निमार्ष्टीयमाज्ञेति॥१९॥

निमार्ष्टि निक्ष्योतयति। व्याख्यात मन्यत्। आह। कुमारग्रहणं किमर्थम्?। कुमारी निवृत्त्यर्थम्। एवमेके। तदसत्। कुतः?। एतयैवावृता स्त्रियाः—इति चूडाकरणान्तसंस्काराणां कुमार्य्या अपि सूचणात्। मन्त्र निवृत्त्यर्थं तर्हि?। न। तत्र 'तूष्णीम्'—इति करणात्। कुमारग्रहणं तर्हि न कर्त्तव्यम्, अथ क्रियते, प्रयोजनं वक्तव्यम्?। अधिकारार्थम्—इति ब्रूमः। तेनोपनयना-दीनि व्रतानि कुमारस्यैव भवन्ति न कुमार्य्याः। ननु, 'गर्भाष्टमेषु ब्राह्मणमुपनयेत्'—इति सूचयिष्यति। स खल्वयं पुंलिङ्गनिर्द्देशः स्त्रियं व्यावर्त्तयिष्यति?। न। कुतः?। यतो न खल्वच ब्राह्मणो

विधित्सितः। किन्तर्हि?। उपनयनव्रतम्। तदर्थं ब्राह्मणोऽनूद्यते। तस्मात् जातिनिर्देशाच्च लिङ्गमविवक्षितं स्यात्। यथा 'ब्राह्मणो न हन्तव्यः'—इति ब्राह्मण्यपि न हन्यते। तस्मात् कुमारग्रहणम् उपनयनादिव्रतेषु कुमारीव्यावर्त्तनार्थम्। मनुरपि—

"अमन्त्रिका तु कार्य्येयं स्त्रीणामावृदशेषतः।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम्।
वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः।
पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिष्क्रिया"।

इत्याभ्यां वचनाभ्यां जातकर्मादिसंस्कार मुपनयनादिव्रताभावञ्च स्त्रिया दर्शयति। अथवा। प्राधान्यात् कुमारग्रहणं क्रियते, अनुपादेयलिङ्गाविवक्षया तु कुमार्य्यपि अवगम्यमाना न निराक्रियते। उपनयनव्रतादिकमपि तर्हि कुमार्य्याः क्रियताम्?। न करिष्यते। अध्ययनार्थानि हि तानि व्रतानि। स्त्रियाः खल्वध्ययनं नास्ति। 'स्त्रीशूद्रौ नाधीयेताम्'—इति हि ब्राह्मणम्।

तदिदं जातकर्म। एवमेके। अपरे तु 'वक्ष्यमाणमपि सर्पिःप्राशनं जातकर्मान्तर्गतम्'—इति मन्यन्ते। तदत्र जातकर्मणि अभ्यादार्य्यश्राद्धाभिधानं भवदेवस्यासङ्गतम्। कस्मात्?।

"नाष्टाकासु भवेत् श्राद्धं न श्राद्धे श्राद्धमिष्यते।
न सोष्यन्ती जातकर्म प्रोषितागतकर्मसु"।

इति कर्मप्रदीपकृता निषेधात् ॥७॥ १८ ॥७॥

तथैव मेधाजननं सर्पिः प्राशयेत् ॥ २० ॥

तथैव—इयमाज्ञेतिमन्त्रेण, तथैव—दक्षिणस्य पाणे रङ्गुष्ठेनोपकनिष्ठिकया चाङ्गुल्या गृहीतं, मेधां धारणावतीं बुद्धिं जनयतीति मेधाजननं सर्पि घृतं प्राशयेत् पिता । सर्पिषो मेधाजननत्वञ्चायुर्व्वेद प्रसिद्धम् । अन्ये तु वर्णयन्ति,—'तन्त्रान्तरप्रोक्तं मेधाजननं ब्राह्म्यादि, सर्पिश्च प्राशयेत्'—इति ॥०॥ २० ॥०॥

जातरूपेण वाऽऽदाय कुमारस्य मुखे जुहोति,—मेधान्ते मित्रावरुणावित्येतयर्च्चा सदसस्पतिमद्भुतमिति च ॥ २१ ॥

जातरूपेण सुवर्णेन । वा शब्दः समुच्चये । केचित् चशब्द मेव पठन्ति । जातरूपेण सर्पिरादाय । स्पष्टमन्यत् । जुहोतिचोदनाबलात् स्वाहान्तता मन्त्रयो रवगम्यते । मन्त्रयो र्भेदेनोपदेशात् भेदेनैव होमः । केचित् पूर्वसूत्रेणास्यैकसूत्रतां मन्यमाना वर्णयन्ति । 'तथैव दक्षिणस्य पाणे रित्याद्युक्तप्रकारेण गृहीत्वा प्राशयेत, जातरूपेण वा जुहोति। सोयं विकल्पः,—'हस्तेन वा गृहीतव्यं जातरूपेण वा'—इति। परमत्रापि पक्षे वाशब्दस्य समुच्चयार्थतैव युक्ता । कुतः?। तथैव—इत्येवकारेण तन्नियमात्। विकल्पपक्षे स्वमयमुपहन्येत!। तस्मादेकसूत्रतापक्षे, 'दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां धृतेन जातरूपेण घृतं गृहीत्वा'—इति तत्त्वकारव्याख्यानमादरणीयम्। अपरेके वर्णयन्ति,—'अन्नप्राशनमेतदेव च्छन्दोगानाम्,

अन्यस्याविधानात्'—इति। तेषामयमाशयः। सर्पिषः प्राशनोपदेशः तावदिहोपलभ्यते। सर्पिश्चान्नम्। तस्मादन्नप्राशनमेतत्। तदिह कर्म्मान्तरोपदेशादितः पूर्व्वमेव जातकर्म्मणः परिसमाप्तिरवगम्यते। अतो नानयोरैक्यमाशङ्कणीयम्। शास्त्रप्रामाण्यबलाच्चैकेनापि कर्म्मणा संस्कारद्वयनिष्पत्तावपि न किमप्यनुचितम्। ननु, षष्ठेऽन्नप्राशनं मासि—इति नियतकालत्वमन्नप्राशनस्य स्मर्य्यते नामकरणेन व्यवहितत्वञ्च। उच्यते। अस्मच्छास्त्रे खल्विदानीमेवान्नप्राशनमुपदिश्यते,—इत्यन्येषामेव नियतकालत्वं नामकरणेन व्यवहितत्वञ्च, नास्माकम्। नापि नियतकालत्वमस्त्यन्नप्राशनस्य। अतएव यमः।

"ततोऽन्नप्राशनं षष्ठे मासि कार्य्यं यथाविधि।
अष्टमेवाथ कर्त्तव्यं यद्वेष्टं मङ्गलं कुले"।

इति कालद्वयमुपदिश्य कालान्तरमपि कुलानुगतमुपदिशति। आचार्य्यः किलोपदेष्टा च्छन्दोगकुलधर्म्माणाम्। मनुरपि—

"षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले"।

इति तथैवोपदिशति। अन्ये तु मन्यन्ते। 'जातकर्म्मरूपत्वादेतस्य नान्नप्राशनत्वम्। न खल्वेकेन कर्म्मणा संस्कारद्वयनिष्पत्ति र्युक्ता। नियतकालत्वादन्नप्राशनस्य नामकरणेन व्यवहितत्वाच्च प्राङ्नाभिवर्द्धनात् करणं न युक्ततरम्। स्वशाखायामन्यस्य विधानाभावेपि पारशाखिकमेवानुष्ठेयम्। तस्मादध्वर्य्युभ्यो गृह्णीयात्। प्रधानहोमदेवतामात्रमेवाध्वर्य्युभ्यो ग्रहीतव्यम्, पूर्व्वापरेतिक-

संख्यताकलापस्तु स्वशाखोक्त एव स्यात्'—इति। तदत्र भवन्तो-
भूमिदेवाः प्रमाणम् ॥०॥ २१ ॥०॥

एतस्मिन् कर्म्मणि कृते पिता—

**कृन्तत नाभि मितिब्रूयात् स्तनञ्च प्रतिधत्तेति॥२२॥**

कृन्ततनाभिम्—इति, स्तनञ्च प्रतिधत्त—इति च ब्रूयात् ॥०॥
२२ ॥०॥

**अत ऊर्द्धमसमालम्भनमादशरात्रात् ॥ २३ ॥**

अतः अस्मान्नाभिवर्द्धनात् स्तनप्रतिधानाच्च ऊर्द्धं परतः, असमालम्भनमस्पर्शनम् आदशरात्रात् दशरात्रपर्य्यन्तम्। तेन, "सूतिकां स्पृष्ट्वा सचेलः स्नायात्"—इति, "मृता शुद्ध्येद्दशाहेन"—इति चैवमादिस्मृतौ मातुरस्पृश्यत्वं यदभिहितं, तदस्मात् कर्म्मण ऊर्द्धमिति वोद्धव्यम् ॥०॥ २३ ॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये द्वितीयप्रपाठकस्य सप्तमी काण्डिका ॥०॥

---

जननाद् यस्तृतीयो ज्यौत्स्नस्तस्य तृतीयायां प्रातः सशिरस्कं कुमारमाप्लाव्यास्तमिते वीते लोहितिम्न्यञ्जलिकृतः पितोपतिष्ठते ॥ १ ॥

जननात् जन्मत आरभ्य तृतीयो यो ज्यौत्स्नः ज्योत्स्नायुक्तः पक्षः शुक्लपक्षः—इत्येतत्। तस्य तृतीयायान्तिथौ प्रातः सशिरस्कं कुमारमाप्लाव्य स्नापयित्वा। रात्रौ कर्म्मणो विधानात् रात्रावेव स्नानं माभूदित्येवमर्थं प्रातरितिसूचितम्। अस्तमिते सवितरि, वीते विगते लोहितिम्नि लौहित्ये सन्ध्योपरमे—इत्यर्थः। अञ्जलिकृतः कृतोऽञ्जलिर्येन सोऽयमञ्जलिकृतः। (आहिताग्न्यादिपाठात् कृतशब्दस्य परनिपातः)। पिता उपतिष्ठते आराधयति चन्द्रमसं तदभिमुखः सन्। कुतः?। 'पितोपतिष्ठते * * अभिमुखश्चन्द्रमसम्'—इति लिङ्गात्। यत्तु,—दिशोऽनादेशात् 'प्राङ्मुखकरणस्थानादेशे'—इति सूत्रकारवचनात् प्राङ्मुख उपतिष्ठते—इति वर्णनम्। तदसङ्गतम्। शुक्लतृतीयायां चन्द्रमसः पश्चिमदिगवस्थितत्वेन प्राङ्मुखेन पित्रा तदाराधनवर्णनस्यानुचितत्वात्। लिङ्गविरोधाच्च। 'उत्तिष्ठते'—इति पाठे चन्द्राभिमुख ऊर्द्धस्तिष्ठति—इति व्याख्येयम् ॥०॥ १ ॥०॥

अथ माता शुचिना वसनेन कुमारमाच्छाद्य दक्षिणत उदञ्चं पित्रे प्रयच्छत्युदक्शिरसम् ॥ २ ॥

अथानन्तरमेव माता शुचिना निर्णिक्तेन वसनेन कुमारम् आच्छाद्य । आङ्मर्य्यादायाम् ईषदर्थे वा । कथन्नाम? । मुखवर्ज्जं छादयित्वा । दक्षिणतः पितुर्दक्षिणस्यां दिशि भूत्वा उदङ्मुखमानम् उदक्शिरसञ्च कुमारं पित्रे प्रयच्छति प्रददाति ॥०॥ २ ॥०॥

प्रदाय च सा,—

अनुपृष्ठं परिक्रम्योत्तरतोऽवतिष्ठते ॥ ३ ॥

अनुपृष्ठं पत्युः पृष्ठदेशेन परिक्रम्य गत्वा उत्तरतः पत्युरुत्तरस्यां दिशि अवतिष्ठते ऊर्द्ध्वा तिष्ठति ॥०॥ ३ ॥०॥

अथ जपति,—यत्ते सुसीम इति; यथाऽयन्नप्रमीयेत पुत्रो जनित्र्या अधीति ॥ ४ ॥

अथेत्यानन्तर्य्यार्थम् । परिक्रम्योत्तरतः स्थितायां तस्याम् अनन्तरं पिता जपति, न तु परिक्रममाणायामेव । किं जपति? । यत्ते सुसीम—इति तृचम् । किमन्तः पुन रयं तृचः? । उच्यते । यथाऽयन्न प्रमीयेत पुत्रो जनित्र्या अधि—इत्यन्तमन्तः । तदिदं तृचस्यान्तप्रज्ञापनार्थमुक्तम् ॥०॥ ४ ॥०॥

एवं जपित्वा अथ कुमारम्—

उदञ्चं माते प्रदाय यथार्थम् ॥ ५ ॥

ऋजुरक्षरार्थः। यथार्थमिति कर्म्मणः परिसमाप्तिरुच्यते। तेन वामदेव्यगानमिदानीं कर्त्तव्यम्। तथाच कर्म्मप्रदीपः।

"अहोमकेष्वपि भवेत् यथोक्तं चन्द्रदर्शने।

वामदेव्यं गणेष्वन्ते बल्यन्ते वैश्वदेविके"।

इति। तदिदं कर्म्म चन्द्रदर्शनमिति निष्क्रमणमितिचाख्यायते। केचिदत्र,—

"वृहत्पत्र चुद्रपशु स्वस्त्यर्थं परिविश्यतोः।

सूर्य्येन्द्वोः कर्म्मणी येतु तयोः श्राद्धं न विद्यते"।

इति कर्म्मप्रदीपवचनपराद्धं पश्यन्तोऽन्वाहार्य्यश्राद्धं निषेधयन्ति। तदसङ्गम्। पूर्वार्द्धानवलोकनात्। वृहद्दाहनानां चुद्रपशूनाञ्च स्वस्त्ययनार्थं परिविश्यमाने सूर्य्ये चन्द्रमसिच ये कर्म्मणी (वच्यमाणे) तयोः श्राद्धं नास्ति—इति खल्वर्थोवचनस्य ॥०॥ ५ ॥०॥

अथ येऽत ऊर्द्ध ज्यौत्स्नाः प्रथमोद्दिष्ट एव तेषु पितोपतिष्ठतेऽपामञ्जलिं पूरयित्वाऽभिमुख श्चन्द्रमसम् ॥ ६ ॥

अथेत्यपूर्वकर्म्मोपन्यासार्थम्। अन्ये तु वर्णयन्ति,—'अथ शब्दोऽधिकारानुवृत्त्यर्थः। कथन्नाम?। पूर्ववदिदमपि चन्द्रदर्शन एव'—इति। अतोऽस्मात् तृतीयात् शुक्लपचादूर्द्धं ये ज्योत्स्नाः शुक्लपचाः, तेषु प्रथमोद्दिष्ट एव,—प्रथमं यः काल उद्दिष्टः कथितः तस्मिन्नेव काले तृतीयायामित्येतत्। प्रथमोदित एव,—इति पाठपि

प्रथममुदितः कथितो यः काल स्तस्मिन्निति स एवार्थः। अपरे-त्वाहुः,—'प्रथमोद्दिष्ट एव प्रथमोदित एव चन्द्रमसि प्रतिपदि द्वितीयायां वा, न यथापूर्वं तृतीयायाम्'—इति। पिता अभि-मुखःसन् चन्द्रमसं उपतिष्ठते आराधयति। किं कृत्वा?। अपाम-ञ्जिरञ्जलिं पूरयित्वा ॥०॥ ६ ॥०॥

तच्चाञ्जलिम्—

**यददश्चन्द्रमसीति सकृद्यजुषा द्विस्तूष्णीमुत्सृज्य यथार्थम्* ॥ ७ ॥**

यददश्चन्द्रमसि—इति मन्त्रेण सकृच्चन्द्रमसं प्रत्युत्सृज्य अञ्जलिद्वयं तूष्णीमुत्सृजेत्। यथार्थमिति कर्म्मणः परिसमाप्तिरुच्यते। एतच्च-कर्म्म देशान्तरस्थोऽपि कुर्य्यात्। मातृकुमारयो रस्मिन् कर्म्मण्यनङ्ग-त्वात्। कियन्तं कालं कुर्य्यात्?। सम्वत्सरपर्य्यन्तम्। कुतः?। तावतैव कृतत्वात्। वर्षान्तरेष्वपि तएव ज्यौत्स्नाः तएव मासाः तएव ऋत्तवः पुनरावर्त्तन्ते। 'अत ऊर्द्धं ज्योत्स्नेषु'—इत्यकृत्वा, 'ये अत ऊर्द्धं ज्यौत्स्नाः तेषु'—इति करणाच्चैवमवगच्छामः। सर्व्व-मात्मा खल्वभिमतेषु ज्यौत्स्नेष्वेतदुपदिश्यते। असमास गुरु क्रमभेद पुनर्व्वचनार्थापत्तयः खल्वर्थविशेषप्रतिपादनार्था भवन्ति। शिष्टा श्चैवमाचरन्ति ॥०॥ ७ ॥०॥

---

* एतत् सूत्रानन्तरं 'अत ऊर्द्धं ज्यौत्स्नेष्वेतत् कर्म्मासम्वत्सरम्'—इति सूत्रमप्येव संस्कारतत्त्वेऽधारि। परमस्मादवलोकितेषु भूर्य्येषु सूत्रग्रन्थेषु भाष्यपुस्तकद्वये च तददर्शनात् युक्त्या तन्निर्णयस्य भाष्ये दर्शनाच्च भाष्यप्रतीकमेव तत्।

जननाद्दशरात्रे व्युष्टे शतरात्रे सम्वत्सरे वा नामधेयकरणम् ॥ ८ ॥

जननात् जन्मदिवसात् आरभ्य दशरात्रे व्युष्टे अतिक्रान्ते, शतरात्रे व्युष्टे, सम्वत्सरे वा व्युष्टे नामधेयकरणं नामैवनामधेयम् तस्य करणम्—इति कर्म्मणो नामधेयम्। कर्त्तव्यम्—इति सूत्रशेषः। एकस्मा दाशब्दा न्नैते काला स्तुल्यवद्विकल्प्यन्ते, किन्तु यदि दैवान्मानुषाद्वा कुतश्चिदन्तरायात् दशरात्रे व्युष्टे नामधेयकरणं न सम्पद्यते तदा शतरात्रे व्युष्टे, तत्राप्यसम्पत्तौ सम्वत्सरे व्युष्टे—इति ॥०॥ ८ ॥०॥

अथ य स्तत् करिष्यन् भवति पश्चादग्नेरुदगग्रेषु दर्भेषु प्राङुपविशति ॥ ९ ॥

अथेति जातगृहनियमार्थम्। कथं नाम?। यस्मिन् गृहे कुमारो-जातः तस्मिन् एव गृहे एतत् कर्त्तव्यम्। अन्यथा प्रागेव चन्द्रदर्शनात् कुमारस्य वहिर्गमनं स्यात्। तथा चोक्तम् वक्ष्यव्याख्यायां। 'तन्मध्ये जुहुयात् यस्मिन् जातः स्यात्'—इति। यः—इति सामान्याभिधानात् पितुरभावेऽन्योप्यधिकारी—इति दर्शयति। यः कश्चित् पित्रादिः तत् नामधेयकरणं करिष्यन् कर्त्तुमिच्छन् भवति, स पश्चादग्नेरुदगग्रेषु दर्भेषु प्राङ्मुख उपविशति। स खल्वयमग्निः शालाग्नेरपि लौकिक एव वोद्धव्यो न पुनः स्वयमाहितः। गर्भसंस्कारहोमानामेव तत्रानुष्ठानात्। नामधेयादौ लौकिकाग्नेरुपदेशाच्च। तथाच कर्म्मप्रदीपः।

"न स्वेऽग्नावन्यहोमः स्यात् मुक्त्वैकां समिदाहुतिम्।
स्वगर्भसंस्क्रियार्थांश्च यावन्नासौ प्रजायते।
अग्निस्तु नामधेयादौ होमे सर्व्वत्र लौकिकः।
नहि पित्रा समानीतः पुत्रस्य भवति क्वचित्"।
इति ॥०॥ ९ ॥०॥

अथ माता शुचिना वसनेन कुमारमाच्छाद्य दक्षिणत उदञ्चं कर्त्रे प्रयच्छत्युदक्शिरसम् ॥ १० ॥

कृतभाष्यं सूत्रम् ॥०॥ १० ॥०॥

प्रदाय च माता,—

अनुपृष्ठं परिक्रम्योत्तरत उपविशत्युदगग्रेषु दर्भेषु ॥ ११ ॥

उक्तार्थमेतत् ॥०॥ ११ ॥०॥

अथ जुहोति प्रजापतये तिथये नक्षत्राय देवताया इति ॥ १२ ॥

अथेत्यानन्तर्य्यार्थम्। कथं नाम?। उपविष्टायां तस्यां कुमारं प्रदाय जुहोति। इतरथा गृहीतकुमारस्य हवनाऽसम्भवात्। एवमेके। गृहीतकुमार एव जुहोति। एवमपरे। कस्मै जुहोति?। प्रजापतये जुहोति। यस्यां तिथौ कुमारो जातः तस्यै तिथये जुहोति। यस्मिन् नक्षत्रे जातः तस्मै नक्षत्राय जुहोति।

तिथे नक्षत्रस्य च या देवता तस्यै च जुहोति। अनादेशादाज्यं द्रव्यम्। इति शब्दो होमस्य प्रकारविशेषं सूचयति। तत्र तिथयः प्रतिपदाद्याः। तासां देवता आमावस्यापर्य्यन्तानां ब्रह्म त्वष्ट विष्णु यम सोम कुमार मुनि वसु पिशाच धर्म्म रुद्र वायु मन्मथ यक्ष पितरः। पौर्णमास्यास्तु विश्वेदेवाः। तत्र तिथिहोमे प्रतिपदे स्वाहा—इत्यादिकः प्रयोगः। तिथिदेवताहोमे विशेषमाह कर्म्म-प्रदीपः।

"नामधेये मुनि वसु पिशाचा बहुवत् सदा।
यक्षाश्च पितरो देवा यष्टव्या स्तिथिदेवताः"।

इति। तेन मुनि वसु पिशाच यक्ष पितरो विश्वेदेवाश्च बहुवच-नान्ता होतव्याः, शेषा एकवचनान्ताः। नक्षत्राण्यश्विन्यादीनि। नक्षत्रहोमेपि विशेषमाह स एव।

"आग्नेयाद्येऽथ सर्पाद्ये विशाखाद्ये तथैव च।
आषाढ़ाद्ये धनिष्ठाद्ये अश्विन्याद्ये तथैव च।
द्वन्द्वान्येतानि बहुवदृक्षाणां जुहुयात् सदा।
द्वन्द्वद्वयं द्विवच्छेषमवशिष्टान्यथैकवत्"।

इति। कृत्तिकाद्ये द्वे नक्षत्रे, अश्लेषाद्ये द्वे, विशाखाद्ये द्वे, आषाढ़ाद्ये द्वे, धनिष्ठाद्ये द्वे, अश्विन्याद्ये द्वे,—एतानि द्विकानि;—कृत्तिकाभ्यः स्वाहा, रोहिणीभ्यः स्वाहा,—इत्यादि बहुवचनयुक्तानि जुहु-यात्। शेषमवशिष्टं द्वन्द्वद्वयं—भाद्रपदाद्वयं फल्गुनीद्वयञ्च;—पूर्व्व-भाद्रपदाभ्यां स्वाहा, उत्तरभाद्रपदाभ्यां स्वाहा,—इत्यादि द्विव-चनयुक्तं जुहुयात्। शेषाणि मृगशिरःप्रभृतीनि नक्षत्राणि,—मृग-

शिरसे स्वाहा,—इत्याद्येकवचनान्तानि जुहुयात्। तथापि लि-ङ्गनिर्णय स्मृत्यन्तरे ।

"हस्ता स्वाति श्रवणा अक्लीवे
मृगशिरो न पुंसि स्यात् ।
पुंसि पुनर्व्वसुपुष्यौ
मूलमघे स्त्रियः शेषाः" ।

इति। तस्मात्, मूलायै स्वाहा—इति प्रामादिकः प्रयोगः। नक्ष-त्रदेवतास्तु यथाक्रमम्, अश्वि यम अग्नि प्रजापति सोम रुद्र अदिति बृहस्पति सर्प पितृ भग अर्य्यमन् सवितृ त्वष्टृ वायु इन्द्राग्नि मित्र इन्द्र निर्ऋति अप् विश्वेदेव विष्णु वसु वरुण अजपाद् अहि-र्ब्रध्न पूषाणः। नक्षत्रदेवताहोमेपि विशेषमाह कर्म्मप्रदीपः ।

"देवता अपि हूयन्ते बहुवत् सर्पवस्वपः ।
देवाश्च पितरश्चैव द्विवद्देवाश्विनौ तथा" ।

इति । तेन सर्पवस्वपो विश्वेदेवाः पितरश्च बहुवचनान्ताहो-तव्याः। अश्विनौ द्विवचनान्तौ होतव्यौ। अर्थादन्यादेवता एक-वचनान्ता होतव्याः। सोऽयं विशेषः,—इतिशब्देन द्योतितः ॥०॥ १२ ॥०॥

**तस्य मुख्यान् प्राणान् संमृशन् कोऽसि कतमोऽसी-त्येतं मन्त्रं जपति ॥ १३ ॥**

तस्य कुमारस्य मुख्यान् मुखे भवान् प्राणान् प्राणनिर्गमोपाय-भूतान् सप्त [redacted]विशेषान्—मुखमध्यगौ नासिके कर्णाक्षिमेतद्र-

मानिति यावत्। संम्रृशन् संस्पृशन् (क्वचित्तथैवपाठः) कोऽसि—इत्येतं मन्त्रं जपति। अवसानोऽयं मन्त्रः ॥०॥ १३ ॥०॥

तस्मिंश्च मन्त्रे,—

आहस्पत्यं मासं प्रविशासावित्यन्ते च मन्त्रस्य घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानान्तं कृतं नाम दध्यात् ॥ १४ ॥

'आहस्पत्यं मासं प्रविशासौ'—इत्यत्र असावित्यस्मिन् मन्त्रस्थाने, अन्ते च मन्त्रस्य 'परिददात्वसौ'—इत्यसाविति सर्व्वनामस्थाने, कृतं कल्पितं पित्रादिकृतं वा, नाम दध्यात् उच्चारयेत्। अथवा। कृतं कृतप्रथमान्तम्। नाम विशिनष्टि। घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानान्तम्। घोषवदादि। वर्गाणां प्रथमद्वितीयाः शषसाश्चाघोषाः, तदन्ये व्यञ्जनवर्णा घोषवन्तः। घोषवदक्षरमादि यस्य नाम्नः, तत् घोषवदादि। अन्तरन्तस्थम्। अन्तस्थायरलवाः। अन्तर्मध्ये अन्तस्था यस्य तदन्तरन्तस्थम्। दीर्घाभिनिष्ठानान्तम्। दीर्घोद्विमात्रोवर्णः, अभिनिष्ठानं विसर्गः। दीर्घश्च अभिनिष्ठानश्च दीर्घाभिष्ठानौ, ते अन्ते यस्य तत् दीर्घाभिनिष्ठानान्तम्। एकस्मिन् नाम्नि, दीर्घस्य अभिनिष्ठानस्य च समुच्चयेनान्तत्वासम्भवादर्थादनयोर्व्विकल्पः;—दीर्घान्तम् अभिनिष्ठानान्तं वा। तद् यथा, बलिध्वंसी विश्वम्भरः—इत्यादिरूपम्। एवमेके। दीर्घान्तं नाम गोविन्दशर्म्मा—इत्यादिरूपं, विसर्गान्तञ्च गोविन्दः—इत्यादिरूपम्। एवमपरे।

तथाच आदिमध्यप्रतीकयोः पूर्व्वं सूचितत्वात् दीर्घाभिनिष्ठानान्तमित्यन्तप्रतीकाभिप्रायमेव वर्णनीयम्। अन्यथा खल्वनर्थिकैवाचार्य्यस्य न्यूनताऽभ्युपगता स्यात्। विशेषणत्वानुरोधेनान्तशब्दस्यावयवार्थतायाः वर्णयितुमुचितत्वाच्च। समीपार्थत्वे चोपलक्षणता स्यात्। तच्चानिष्टम्। तस्मात् शर्म्मादीनां नामभिन्नत्वेनोपपदत्वेन च प्रतीतिरित्यसङ्गतं वचनम्। 'अन्तशब्दोऽवयवार्थः दशान्तः पटः—इतिवत्। समीपार्थत्वे तु उपलक्षणता स्यात्। ततश्च विशेषणोपलक्षणत्वसन्देहे विशेषणत्वमेव न्याय्यम्'—इति प्रदेशान्तरे स्वव्याख्याऽप्येवं विरुध्येत।

एवं वा—

दीर्घान्तं नाम हरिशर्म्मा—इत्यादिरूपम्, विसर्गान्तञ्च हरिदेवः—इत्यादिरूपम्। तदनया भङ्ग्या शर्म्मादेर्नामप्रतीकत्वं देवशर्म्मणोर्व्विकल्पश्च आचार्य्येण सूचितम्—इत्यवगम्यते। अतएव कर्म्मप्रदीपे, "गिरिशर्म्मैवमुक्तवान्"—इति लिङ्गदर्शनमुपपद्यते। देवशर्म्मणोः समुच्चयपरत्वे खल्वेतदुपरुध्येत। तथा मनुः।

"माङ्गल्यं ब्राह्मणस्य स्यात् क्षत्रियस्य बलान्वितम्।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम्।
शर्म्मवद्ब्राह्मणस्य स्यात् राज्ञो रक्षासमन्वितम्।
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य तु जुगुप्सितम्"।

इति। अत्र सर्व्वस्मृतिप्रबलमनुस्मृतौ शर्म्मवदित्यादि निरपेक्षश्रुतिबलात् देवशर्म्मणोर्व्विकल्पो नामावयवत्वञ्चावगम्यते। अन्यथा

खल्वेतत् पीड्येत। मनुवादे त्वानुपपत्तिः स्यात्। 'माङ्गल्यं ब्राह्म-णस्य स्यात्'—इति वचनमभिधायाह शङ्खः।

"शर्म्मान्तं ब्राह्मणस्योक्तं वर्म्मान्तं क्षत्रियस्य च।
धनान्तञ्चैव वैश्यस्य दासान्तञ्चान्यजन्मनः"।

इति। शातातपस्याप्येतत्। अत्राप्यन्तशब्दः पूर्ब्बवदवयवार्थः। यच्च यमस्मरणम्—

"शर्म्मा देवश्च विप्रस्य वर्म्मा त्राता च भूभुजः।
भूति र्दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत्"।

इति। तदपि 'ब्राह्मणो वैल्वपालाशौ'—इत्यादिवद्वर्णनीयम्। अतएव व्याख्यातं कुल्लूकभट्टेन,—'वैल्वः पालाशो वा दण्डः—इति वाशिष्ठे विकल्पदर्शनात् एकस्यैव दण्डस्य धारणम्। विकल्पित-योरेवैकब्राह्मणसम्बन्धात् समुच्चयो द्वन्द्वेनानूद्यते'—इति। तद्वद्-त्रापि स्यात्। कस्यचिद्विप्रस्य देवः—इति, कस्यचिच्च शर्म्मा—इति, सर्व्वथापि खलु द्वयमेतत् ब्राह्मणजातेरेव परं भवति, न क्षत्रियादि-जातेः। अन्यथा 'वर्म्मा त्राता च भूभुजः'—इत्यादावपि समुच्चया-पत्तेः। नचैवमिष्यते। विरोधे च बहूनां वचनानामनुरोधः कर्त्तुमुचितः। विशेषतस्तु मनुस्मृतेः। तस्मात्—एकस्मिन्नेव नाम्नि देवशर्म्मणोः समुच्चयः—इति तत्त्वकारमतमपकृतम्। 'चका-रस्य विकल्पार्थकत्वम्'—अपि प्रदेशान्तरे स्वयमेव वर्णितम्। यदपि पुराणवचनद्वयम्—

"ततश्च नाम कुर्व्वीत पितैव दशमेऽहनि।
देवपूर्व्वं नराख्यं हि शर्म्मवर्म्मादिसंयुतम्।
शर्म्मेति ब्राह्मणस्योक्तं वर्म्मेति क्षत्रियस्य च।
गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः"।

इति। तत्रापि देवपूर्व्वमित्यस्य, देवः पूर्व्वो यस्येति व्युत्पत्त्या देववाचकशब्दस्य पूर्व्वप्रतीकत्वमर्थः। शर्म्मवर्म्मादेश्चोत्तरप्रतीकत्वम्। यच्च स्वयं वर्णितम्,—देवात् पूर्व्वमितिव्युत्पत्त्या देवशब्दपूर्व्ववर्त्तिनो नाम्नः शर्म्मवर्म्मादिसंयुतत्ववचनात् एकस्मिन्नाम्नि देवशर्म्मणोः समुच्चयः,—इति। तदप्यनुचितम्। विप्रनाम्नामेव देवशब्दपूर्व्ववर्त्तित्वात् वर्म्मादेश्च क्षत्रादिनाममात्रविषयत्वात् देवपूर्व्वस्य नाम्नः शर्म्मवर्म्मादिसंयुतत्वानुपपत्तेः। परवचने च शर्म्मादिपदोत्तरमितिकारकरणात् गुप्तदासात्मकमित्यात्मपदप्रयोगाच्च तावन्मात्रस्यैव परप्रतीकत्वमवगम्यते, न देवादिशब्दसमुच्चितस्य। एतेन, ततश्च नाम कुर्व्वीत—इति वचनादुपपदत्वं नामभिन्नत्वञ्च शर्म्मादीनां यदुपवर्णितम्, तदपि परवचनानवलोकनेनेतिहेयमेव। शर्म्मवर्म्मादिके कार्य्यम्—इत्यस्य 'शर्म्मन्नित्यनेन गोत्रसम्बन्धनामानि—इत्येकवाक्यतया शर्म्मान्तं नाम प्रतीयते,'—इति स्वव्याख्या च विरुद्धा स्यात्। केचित्तु सूत्रे 'दीर्घाभिनिष्ठानम्'—इति पठन्तो वर्णयन्ति,—दीर्घेण अभिनिस्तिष्ठते समाप्यते यन्नाम तत्तथा, यथा गोविन्दशर्म्मा—इति। तदनाकरम्।

"आदौ घो दन्तरान् यरलवान् मध्ये पुनःस्थापये—

दन्ते दीर्घं विसर्जनीय सहितं नाम प्रयत्नात् कृतम्"।
इति वचनविरुद्धञ्च ॥०॥ १४ ॥०॥

## एतदतद्धितम् ॥ १५ ॥

एतदिति नाम्नः परामर्शः। सूचितनाम्न स्तद्धितत्वासम्भवादेतद-तद्धितान्तमिति व्याख्येयम्। दीर्घाभिनिष्ठानान्तलक्षणादेवा तद्धितान्तत्वे सिद्धे पुनरुपादानं नियमार्थम्। एतदेव नामाऽतद्धितान्तं न पुनरन्यदिति नियम्यते। तेन, 'यत्तद्गुह्यमेव भवति'— इति 'अभिवादनीयं नामधेयं कल्पयित्वा'—इति चैवमादिनाम्नां तद्धितान्तत्वमपि स्यात्। पूर्वप्रतीकाभिप्रायं वा सूत्रं वर्णनीयम्। तथाप्येतदितिकरणादन्येषां नाम्नां तद्धितान्तत्वमनिषिद्धम् ॥०॥ १५ ॥०॥

## अयुग्दान्तः स्त्रीणाम् ॥ १६ ॥

अयुक् अयुग्माक्षरम्, दान्तं दाकारान्तं नाम स्त्रीणां दध्यादित्य-नुवर्त्तते। अयमेव विशेषः। सर्वमन्यत् पूर्ववत् ॥०॥ १६ ॥०॥

## मात्रे चैव प्रथमं नामधेयमाख्याय यथार्थम् ॥ १७ ॥

तच्च नामधेयं प्रथमं पूर्वं मात्रे आख्याय कथयित्वा यथार्थं तत्सम्पादनं कुर्य्यात्। चशब्दात् पुरुषनाम्नः स्त्रीनाम्नश्च प्रथमं मात्रे कथनम्। एवशब्दो मातुरेव प्राथम्यं नियमयति। चैवेति वा निपातसमुदायः ॥०॥ १७ ॥०॥

गौ र्दक्षिणा ॥ १८ ॥

नामधेयकरणकर्म्मणः ॥०॥ १८ ॥०॥

कुमारस्य मासिमासि सम्वत्सरे साम्वत्सरिकेषु वा पर्व्वस्वग्नीन्द्रौ द्यावापृथिवी विश्वान्देवांश्च यजेत ॥१९॥

जननाद्यस्तूतीयोज्योत्स्नः—इति जननाद्दशरात्रे व्युष्टे—इति च अग्रन्तःप्रकृतत्वात् 'कुमारस्य' जन्मतिथौ वक्ष्यमाणादेवता 'यजेत'। कियन्तं कालं यजेत?—इत्यत्राह 'मासिमासि', प्रतिमासमित्यर्थः। तेन वत्सरपर्य्यन्तं यागः। ऊर्द्ध्वं हि वत्सरात् तएव मासा आवर्त्तन्ते। 'सम्वत्सरे' वा, पूर्णे—इति वाक्यशेषः। अत्रापि जन्मतिथौ यजेत,—इति द्रष्टव्यम्। 'साम्वत्सरिकेषु वा पर्वसु' यजेत। सम्वत्सरस्य इमानि साम्वत्सरिकानि तेषु पर्वसु त्रयाणां ऋतूनामवसान तिथिषु—कार्त्तिकीफाल्गुन्याषाढीषु। अथवा। द्वावत्र कालविकल्पौ। सम्वत्सरपर्य्यन्तं मासिमासि कुमारस्य जन्मतिथौ यजेत, साम्वत्सरिकेषु वा पर्वसु यजेत। कतमाः पुनस्तादेवताः?। उच्यते। 'अग्नीन्द्रौ'। 'द्यावापृथिव्यौ'। एते द्वन्द्वदेवते। 'विश्वान्देवांश्च' यजेत ॥०॥ १९ ॥०॥

दैवतमिष्ट्वा तिथिं नक्षत्रञ्च यजेत ॥ २० ॥

जन्मतिथेर्दैवतमिष्ट्वा जन्मतिथिम्, जन्मनक्षत्रस्य दैवतमिष्ट्वा जन्मनक्षत्रञ्च यजेत ॥०॥ २० ॥०॥

विप्रोष्य ज्येष्ठस्य पुत्रस्योभाभ्यां पाणिभ्यां मूर्द्धानं परिगृह्य जपेत्, यदा वा पिताम इति विद्यादुपेतस्य वांऽङ्गादङ्गात् सम्‌स्रवसीति ॥ २१ ॥

विप्रोष्य प्रवासमनुभूय गृहमागतः पिता, ज्येष्ठस्य पुत्रस्य मूर्द्धानम्, उभाभ्यां पाणिभ्यां परिगृह्य अङ्गादङ्गादिति षड्वचानं ऋचं जपेत्। यदा वा कुमारः, अयं मे पिता जनयिता,—इत्येवं विद्यात् जानीयात्, (शक्यर्थे लिङ्) ज्ञातुं शक्नोतीत्येतत्। तदा वा जपेत्। उपेतस्य उपनीतस्य वा कुमारस्य मूर्द्धानं परिगृह्य जपेत्। त इमे त्रयः कालविकल्पाः ॥०॥ २१ ॥०॥

पशूनां त्वा हिङ्कारेणाभिजिघ्रामीत्यभिजिघ्र यथार्थम् ॥ २२ ॥

पशूनामिति मन्त्रेण अभिजिघ्र आभिमुख्येनाघ्राय,—मूर्द्धानमिति प्रकृतेन सम्बन्धः। यथार्थमिति कर्मणः परिसमाप्तिरुच्यते। तेन वामदेव्यमिदानीं गातव्यम्। अत्रापि मन्त्रे असावित्येतस्मिन् सर्वनाम्नि सम्बोधनविभक्त्या पुत्रनाम प्रयोक्तव्यम्। तदिदं प्रोषितागतकर्मेत्युच्यते ॥०॥ २२ ॥०॥

एवमेवावरेषाम् ॥ २३ ॥

अवरेषां कनिष्ठानामप्येवमेव मूर्द्धालम्भनमादभिघ्राणञ्च कर्त्तव्यम् ॥ ॥०॥ २३ ॥०॥

यथाज्येष्ठं यथोपलम्भं वा ॥ २४ ॥

यो यो वयसा ज्येष्ठ स्तस्य तस्य प्रथमं कर्त्तव्यम्, योयः पूर्वं स-न्निधानमागच्छति तस्य तस्य वा ॥०॥ २४ ॥०॥

स्त्रियास्तूष्णीं मूर्द्धन्यभिजिघ्रणं मूर्द्धन्यभिजिघ्रणम् ॥ २५ ॥

स्पष्ट एवार्थः। ननु तूष्णीं मूर्द्धन्यभिजिघ्रणमिति सूत्रणात् मूर्द्धा-लम्भः समन्त्रकः प्राप्नोति? । न । मन्त्रलिङ्गविरोधात् । तस्मा-न्मन्त्रलिङ्गविरोधादेव मूर्द्धालम्भोऽमन्त्रकः सिद्धः । अतोऽभि-घ्राणमात्रस्य तूष्णीन्त्वं सूचितम् । तर्हि स्त्रियास्तूष्णीमित्येव कर्त्तु-मुचितम्, अलं मूर्द्धन्यभिजिघ्रणमित्यनेन? । उच्यते । एवं कुर्वन् अभिघ्राणादन्यत् होमादिकं समन्त्रकमेवस्यादिति दर्शयति। तथाच वक्ष्यति "मन्त्रेण तु होमः"—इति । तस्मा न केवलं प्रोषितागतकर्म्मैव स्त्रियाः स्यात्, अपितु जातकर्म्मादिकमपि—इति सिद्धम्। ननु तथाप्यनर्थकम्। मन्त्रेण तु होमः—इति सूत्रणादेव तत् सिद्धेः। उच्यते। तस्य चूड़ाकरणकर्म्मणोऽनन्तरं सूचितत्वात् तन्मात्रविषयत्वमप्याशङ्कोत कश्चिन्मन्दमतिः कदा-चिदिति तन्निरासार्थमेतत् सूचितम्। द्विर्वचनं प्रकरणसमाप्त्यर्थ-मादरार्थं वा ॥०॥ २५ ॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्या-त्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये द्वितीयप्रपाठकस्य अष्टमी काण्डिका ॥ ० ॥

---

द्वितीयप्रपाठके नवमी काण्डिका।

## अथात स्तृतीये वर्षे चूड़ाकरणम्॥ १॥

अथशब्दः पूर्व्वप्रकृतार्थः। अथ पूर्व्वप्रकृतात् जन्मन स्तृतीये वर्षे वर्त्तमाने उदगयनादीनां समुच्चयोपलब्धौ चूड़ाकरणं कर्त्तव्यमिति सूत्रशेषः। कपुष्णिका कपुच्छलाख्याः केशा चूड़ा इति कथ्यन्ते। तासां वक्ष्यमाणेन विधिना संस्करणं चूड़ाकरणमिति कर्म्मणो नामधेयम्। अतःशब्दो हेत्वर्थः। यस्माद्बैजिकं गार्भिकञ्च पापमनेन कर्म्मणाऽपमृज्यते, तस्मादिदमवश्यं कर्त्तव्यमित्यर्थः। यथा मनुः।

"गार्भैर्होमै र्जातकर्म्म चौड़ मञ्जीनिबन्धनैः।
बैजिकं गार्भिकञ्चैनो द्विजानामपमृज्यते"।

इति। अन्ये तु वर्णयन्ति। 'अतःशब्दो हेत्वर्थे। यस्मात् श्रुत्यन्तरे अन्योपि पक्षः श्रूयते;—प्रथमाब्दे—इति, सोऽपि द्रष्टव्यः। तथाच मनुः।

"चूड़ाकर्म्म द्विजातीनां सर्व्वेषामेव धर्म्मतः।
प्रथमाब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात्"।

इति' ॥०॥ १ ॥०॥

**पुरस्ताच्छालाया उपलिप्तेऽग्निरुपसमाहितो भवति ॥ २ ॥**

व्याख्यातार्थमेतत् ॥०॥ २ ॥०॥

**तत्रैतान्युपक्लृप्तानि भवन्ति ॥ ३ ॥**

तत्र तस्मिन्नुपलिप्ते देशे एतानि वक्ष्यमाणानि उपसमीपे अग्नेः, क्लृप्तानि आसादितानि भवन्ति। कर्त्तुरनियमः ॥०॥ ३ ॥०॥

कानि पुनस्तानि? कस्यां वा दिशि अग्नेरासादयितव्यानि?। उच्यते।

**एकविंशतिर्दर्भपिञ्जूल्य उष्णोदककंस औदुम्बरः क्षुर आदर्शो वा क्षुरपाणिर्नापित इति दक्षिणतः ॥ ४ ॥**

एकविंशति स्त्रिःसप्त। दर्भपिञ्जूल्यो व्याख्याताः। सप्त सप्त कृत्वा-दर्भपिञ्जूल्यः स्थानत्रये आसादयितव्याः। एवमेकविंशति स्ता भवन्ति। कुतः पुनर्भेदेनासादनम्?। भेदेनैव विनियोगोपदे-शात्। उदगग्राणाञ्चामूषामासादनं स्यात्। 'प्राची सौम्यापरा-जिताः'—इति वचनात्। उष्णमुदकं यस्मिन् स उष्णोदकः; स चासौ कंसः—पात्रविशेषश्चेति उष्णोदककंसः। उदुम्बरस्याय-मौदुम्बरः क्षुरः। स खल्वयमौदुम्बरः क्षुर स्ताम्रमय एव न दारु-मयः। कुतः?। 'प्रोह्यप्रच्छिन्दन्'—इत्युपरिष्टादनेनन छेदनस्या भिधीयमानत्वात्। सा खल्वाग्रहैवमुपपन्ना भवति। न हि दारवेण

केशच्छेदनं शक्यं कर्त्तुम्। तदभावे, आसम्यक् दृश्यते मुखमस्मिन्— इत्यादर्शो दर्पणो वा। क्षुरं पाणौ यस्यासौ क्षुरपाणि र्नापितः। इत्येतानि दक्षिणतोऽग्नेरुपकॢप्तानि भवन्ति। प्राक् संस्थानाञ्चामीषामासादनं स्यात्। कुतः?। प्रादक्षिण्योपपत्तेः। एवमुत्तरत्रापि प्रादक्षिण्येनासादनं बोद्धव्यम्॥०॥ ४ ॥०॥

आनडुहो गोमयः कृसरः स्थालीपाको वृथापक्व इत्युत्तरतः ॥ ५ ॥

अनड्वान् वृषभ स्तस्यायमानडुहोगोमयः, कृसरः स्थालीपाकः— इति पूर्व्वं व्याख्यातम्। स खल्वयं स्थालीपाको वृथापक्वः, संस्काररहितत्वात्, कर्म्मण्यव्याप्रियमाणत्वाच्च। इत्येतद्‌द्वयमुत्तरतोऽग्नेरासादयितव्यम् ॥०॥ ५ ॥०॥

व्रीहियवै स्तिलमाषैरिति पृथक् पात्राणि पूरयित्वा पुरस्तादुपनिदध्युः ॥ ६ ॥

व्रीह्यादयः प्रसिद्धाः। व्रीहियवैः,—इतरेतरयोगनिर्द्देशात् मिश्रितैः। तिलमाषै र्म्मिश्रितैरेव। इति शब्दादेषामलाभे अन्यैरप्येवं विधैः। पृथक् नाना, पात्राणि,—बहुवचनस्यार्थवत्त्वार्थं त्रीणि, पूरयित्वा, पुरस्तात् पूर्व्वस्यां दिश्यग्नेः, उपनिदध्युः स्थापयेयुः॥ ०॥ ६ ॥०॥

कृसरो नापिताय सर्व्वबीजानि चेति ॥ ७ ॥

कृसरो नापिताय दातव्यः। सर्व्वबीजानि च तस्मै दातव्यानि।

इतिना अन्यदपि पारितोषिकं देयमित्युपदिशति । या खल्वियं प्रतिपत्तिः कृसरस्य वीजपात्राणाञ्च प्रसङ्गादेव सूचिता । कर्म्मक्रम एवायं कुतो न स्यात्? । न—इत्युच्यते । कुतः? । प्रतिपत्तिवे नापितस्य कर्म्ममूल्यतया दृष्टार्थत्वसम्भवात् । अन्यथा अदृष्टार्थत्व मस्यकल्पनीयम् । तच्चानिष्टम् । कृते च कर्म्मणि तन्मूल्यदान-प्रसिद्धेः कर्मणोऽवसान एवैतानि नापिताय देयानि ॥०॥ ७ ॥०॥

**अथ माता शुचिना वसनेन कुमारमाच्छाद्य पश्चा-दग्नेरुदगग्रेषु दर्भेषु प्राच्युपविशति ॥ ८ ॥**

अथेत्यानन्तर्य्यार्थम् । आज्यसंस्कारानन्तरमित्यर्थः । अथवा । अ-थेति द्रव्यासादनानन्तर्य्यमभिधत्ते । तथाच पूर्व्वसूत्रोक्तं कृसरादि-दानं प्रतिपत्तिरेवेत्यवधार्य्यते । व्याख्यात मन्यत् ॥०॥ ८ ॥०॥

**अथ य स्तत्करिष्यन् भवति, पश्चात् प्राङवति-ष्ठते ॥ ९ ॥**

अथेति किञ्चित् पूर्व्वप्रकृतं स्मारयति । किन्तत्? । 'यथा पाणि-ग्रहणे तथा चूड़ाकर्म्मणि'—इत्यतिदेशम् । तेनात्र परस्ताच्चोपरि-ष्टाच्च सततस्य आहुतयो भवन्ति । यः कश्चित् पित्रादिः तत्कर्म करिष्यन् भवति, स महाव्याहृतिभिर्व्यस्तसमस्ताभि स्ततस्य आहु-तीर्हुत्वा अथानन्तरम्, गृहीतकुमारायामातुः पश्चात्, प्राङ् प्राङ्मुखः (क्वचित्तथैवपाठः) अवतिष्ठते ऊर्द्धस्तिष्ठति । ननु अग्नेः पश्चादित्येव कुतो न वर्ण्यते? । आनर्थक्यादित्याह । एवं सत्यन-

र्थकमेव पश्चादितिपदं स्यात्। पश्चादग्नेरिति स्वत्वनुवर्त्ततएव। तस्माद् यथोक्त एवार्थः ॥०॥ ६ ॥०॥

अथ अपत्यायमगात् सविता क्षुरेणेति सवितारं मनसाध्यायन् नापितं प्रेक्षमाणः ॥ १० ॥

अथ तथाविधावस्थानानन्तरमेव, सवितारं सूर्य्यम्, मनसा श्रद्धादिगुणयुक्तेनेत्यर्थः। अन्यथा ध्यानस्य मानसिकत्वप्रसिद्धे र्मनसेत्यनर्थकं स्यात्। ध्यायन् चिन्तयन्, नापितं क्षुरपाणिं प्रेक्षमाणोऽवलोकयन् आयमगादित्येतं मन्त्रं जपति ॥०॥ १० ॥०॥

उष्णेन वाय उदकेनैधीति वायुं मनसाध्यायन्नुष्णोदककंसं प्रेक्षमाणः ॥ ११ ॥

वायुं मनसा चिन्तयन्, उष्णोदकयुक्तं कंसपात्रञ्चावलोकयन् उष्णेन वायो—इति मन्त्रं जपति ॥०॥ ११ ॥०॥

दक्षिणेन पाणिनाऽप आदाय दक्षिणां कपुष्णिकामुन्दत्याप उन्दन्तु जीवस इति ॥ १२ ॥

दक्षिणेन पाणिना प्रकृतादुष्णोदककंसाद् उष्णोदकमादाय गृहीत्वा कुमारस्य दक्षिणां कपुष्णिकामुन्दति क्लेदयति, आर्द्रां करोति—इत्येतत्। आप उन्दन्तु—इति मन्त्रेण। कं शिरः पुष्णाति शीतातपादितो रक्षणेन,—इति कपुष्णिका शिरसः पार्श्वद्वयावस्थिता केशजुटिका भण्यते। तथा चोक्तम्।

"कपुष्णिकाऽभितः केशा मूर्द्धि पश्चात् कपुच्छलम्" ।
इति ॥०॥ १२ ॥०॥

**विष्णोर्दंष्ट्रोऽसीत्यौदुम्बरं क्षुरं प्रेक्षत आदर्शं वा ॥ १३ ॥**

प्रेक्षते अवलोकयति । प्रेक्षेत इति पाठे अवलोकयेदित्यर्थः । स्पष्ट मन्यत् ॥०॥ १३ ॥०॥

**ओषधे त्रायस्वैनमिति सप्तदर्भपिञ्जली दक्षिणायां कपुष्णिकायामभिशिरोग्रा निदधाति ॥ १४ ॥**

आसादितानामेकविंशतिदर्भपिञ्जलीनां मध्यात् सप्त दर्भपिञ्जली गृहीत्वा कुमारस्य दक्षिणायां कपुष्णिकायाम्, ओषधे त्रायस्वेति मन्त्रेण निदधाति स्थापयति । कथम्?। उच्यते। अभिशिरोऽग्राः, शिरसोऽभिमुखान्यग्राणि यासां तथाविधाः ॥०॥ १४ ॥०॥

**ता वामेन पाणिना निगृह्य दक्षिणेन पाणिनौदुम्बरं क्षुरं गृहीत्वाऽऽदर्शं वाऽभिनिदधाति स्वधिते मैनंहिंसीरिति ॥ १५ ॥**

ताः दर्भपिञ्जली दक्षिणकपुष्णिकास्थ, 'वामेन पाणिना' 'निगृह्य' निःशेषेण गृहीत्वा, 'दक्षिणेन पाणिना' 'औदुम्बरं क्षुरमादर्शं वा' पूर्व्वमासादितम्, 'अभि' सर्व्वतोभावेन, 'निदधाति' संलग्नं धारयति,—स्वधिते मैनमितिमन्त्रेण । क्षुर आदर्शो वा तथा निधा-

तव्यो यथा सर्व्वाः पिञ्जल्यः सर्व्वाश्च दक्षिणकपुष्णिका समग्राः स्युरित्यर्थः ॥०॥ १५ ॥०॥

निधाय च,—

**येन पूषा बृहस्पतेरिति त्रिः प्राञ्चं प्रोहत्यप्रच्छि-न्दन् सकृद्यजुषा द्वि स्तूष्णीम् ॥ १६ ॥**

त्रि स्त्रीरत्नयं प्राञ्चं प्रागगतं प्रोहति प्रेरयति—प्रसारयतीत्येतत्। किं कुर्व्वन्?। अप्रच्छिन्दन् केशच्छेदनमकुर्व्वन्। चुर स्तथा प्रसा-रयितव्यो यथा केशा न च्छिद्यन्ते,—इत्यर्थः। किं तूष्णीमेव प्रोहति?। न। कथन्तर्हि?। येन पूषा इति यजुषा सकृदेकवारं प्रोहति, तूष्णीं वारद्वयम् ॥०॥ १६ ॥०॥

**अथायसेन प्रच्छिद्यानडुहे गोमये निदधाति ॥१७॥**

अथेति पूर्वप्रकृतार्थम्। यः पूर्वप्रकृतः क्षुरपाणि र्नापितः, तदी-येन आयसेन लोहमयेन क्षुरेण, प्रच्छिद्य प्रकर्षेण पिञ्जलीभिः सहैव दक्षिणां कपुष्णिकां छित्वा, आनडुहे गोमये पूर्वमग्नेरु-त्तरतः समासादिते, निदधाति स्थापयति। मन्त्रानुपदेशाद-मन्त्रकम् ॥०॥ १७ ॥०॥

**एतयैवावृता कपुच्छलम् ॥ १८ ॥**

एतया अनन्तरोक्तयैवावृता परिपाट्या कपुच्छलं संस्कुर्य्यादिति वाक्यशेषः। के शिरसि पश्चाद्भागे पुच्छवत् लम्बते यः केशपाशः, स कपुच्छलः—इत्याख्यायते ॥०॥ १८ ॥०॥

एतयोत्तरां कपुष्णिकाम् ॥ १९ ॥

उत्तरशब्दो वामवचनः। वामामपि कपुष्णिका मेतयैवावृता संस्कुर्य्यात् ॥०॥ १९ ॥०॥

किमेतया समस्तयैवावृता,—अथ अपत्यायमगादित्येवमादिकया संस्कुर्य्यात्?। न। कतमया तर्हि?। उच्यते।

उन्दनप्रभृति त्वेवाभिनिवर्त्तयेत् ॥ २० ॥

प्राक्तनं सूत्रद्वयमनेन विशिष्यते। उन्दनप्रभृति क्लेदनप्रभृत्येव आवृतम्, अभि सर्वतोभावेन निवर्त्तयेत् आवर्त्तयेत्, न पुनः सर्वा-प्यावृदावर्त्तनीया। तस्मात् 'दक्षिणेन पाणिनाऽप आदाय'— इत्येवमादिकामावृतमावर्त्तयेत, न ततः पूर्वामपीत्यर्थः। तुशब्दो विशेषणार्थः। कथन्नाम?। कपुच्छले संस्क्रियमाणे कुमारमुदङ्मुखं धारयेत्; यथा प्राङ्मुखं प्रोक्षणादि कर्त्तुं शक्यते। 'उन्दनप्रभृति द्वेधा अभिनिर्वर्त्तयेत्'—इति केचित् पठन्ति। तत्र व्यक्त एवार्थः ॥०॥ २० ॥०॥

उभाभ्यां पाणिभ्यां मूर्द्धानं परिगृह्य जपेत् त्र्यायुषं जमदग्नेरिति ॥ २१ ॥

मूर्द्धानं कुमारस्य। स्पष्टमन्यत् ॥०॥ २१ ॥०॥

एतयैवावृता स्त्रियाः ॥ २२ ॥

एतया प्रकृतया आवृता स्त्रियाः सर्वे प्रथमगोचराः संस्कारा

भवन्ति। न पुनरानन्तर्य्याच्चूडाकरणाभिप्रायमेव वचनं वर्णनीयम्। कुतः?। एवकारेण व्याप्त्यवगमात्।

"अमन्त्रिका तु कार्य्येयं स्त्रीणामावृदशेषतः"।

इत्यादि वचनाच्च ॥०॥ २२ ॥०॥

किमेवम्भूतयैवावृता?। न। कथन्तर्हि?।

## तूष्णीम् ॥ २३ ॥

मन्त्रवर्ज्जमित्यर्थः ॥०॥ २३ ॥०॥

किं सर्वमेव कर्म तूष्णीं भवति?। न। कथन्तर्हि?। उच्यते।

## मन्त्रेण तु होमः ॥ २४ ॥

यो यो होमः पूर्वमभिहितः, स मन्त्रेणैव भवति। तुशब्द अप्यर्थः समुच्चये। तेनान्वाहार्य्यश्राद्धमपि मन्त्रवदेव स्यात्। तदन्य तूष्णीं कर्त्तव्यमित्यर्थः ॥०॥ २४ ॥०॥

## उदगग्ने रुत्सृप्य कुशलीकारयन्ति यथागोत्रकुलकल्पम् ॥ २५ ॥

अग्नेरुत्तरत उत्सृप्य गत्वा कुमारं कुशलीकारयन्ति नापितेन मुण्डयन्ति। कर्त्तु रनियमः। कथम्?। यथागोत्रकुलकल्पम्। कल्पो विधिरित्यनर्थान्तरम्। यथा गोत्रविधिं यथा च कुलविधिं स्यादनतिक्रमेणेत्यर्थः। गोत्रकल्पस्तावत्,—

"वाशिष्ठाः पञ्चचूड़ाः स्यु स्त्रिचूड़ाः कुण्डपायिनः।

इत्याद्युक्तः। कुलकल्पोऽपि, यथा। भद्रादित्याना मायतनस-न्निधाविति। कौथुमराणायणादीनां प्राक् समावर्त्तनात् सशिख-मेव वपनम्। कुतः?। "केश श्मश्रु रोम नखानि वापयीत शिखावर्ज्जम्"—इति तत्र विशेषोपदेशादर्व्वाक् सशिखवपनावगतेः। उक्तञ्च कर्म्मप्रदीपकृता।

"सशिखं वपनं कार्य्यमास्नानाद्ब्रह्मचारिणाम्।
आ शरीरविमोक्षाय ब्रह्मचर्य्यं न चेद्भवेत्"।

इति ॥०॥ २५ ॥०॥

आनडुहे गोमये केशान् कृत्वाऽरण्यं हृत्वा नि-खनन्ति ॥ २६ ॥

पूर्व्वमासादिते आनडुहे गोमये समस्तान् केशान् निधाय, अरण्यं हृत्वा नीत्वा, निखनन्ति अरण्यएव। बहुवचनादनियतः कर्त्ता। 'अरण्यं गत्वा'—इति, 'अरण्ये गत्वा'—इति च पाठान्तरम्। तत्र व्यक्त एवार्थः ॥०॥ २६ ॥०॥

स्तम्बे हैके निदधति ॥ २७ ॥

ह—इत्यैतिह्यार्थको निपातः। एके किलाचार्य्याः ओषिध्यादि स्तम्बे तान् केशान् निदधति ॥०॥ २७ ॥०॥

## यथार्थम् ॥ २८ ॥

तन्त्रसमापनं कर्त्तव्यमित्यर्थः। एवमेके। अपरे तु मन्यन्ते,—"यथार्थमिति यस्य येनार्थः प्रयोजनं स तं कुर्य्यात्—इति। कथन्नाम?। आयुषमित्यादिना मूर्द्धपरिग्रहे कृते उत्तरतोऽग्नेः कुशलीकारयन्ति, असावपि कर्म्मशेषं समापयेत्"—इति ॥०॥ २८॥०॥

## गो दक्षिणा ॥ २९ ॥

चूडाकरणकर्म्मणः ॥०॥ २९ ॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये द्वितीयप्रपाठकस्य नवमी काण्डिका ॥०॥

# गोभिलीयगृह्यसूत्रे

द्वितीयप्रपाठके दशमी कण्डिका।

---

अत ऊर्द्धमुपनयनलिङ्गाः मन्त्राः, तेषां विनियोगं विवक्षुरिद-माह,—

**गर्भाष्टमेषु ब्राह्मणमुपनयेत् ॥ १ ॥**

गर्भाष्टमेषु, गर्भत आरभ्य गणनया ये अष्टमावर्षा स्तेषु। बहुवचनं व्यक्त्यभिप्रायम्। तेषु वर्षेषु वर्त्तमानेषु यदोदगयनादीनां समु-च्चय स्तदैव ब्राह्मणमुपनयेत् उपनयनकर्म्मणा योजयेत्। उपन-यनं नाम वेदाध्ययनार्थम् उप समीपे (गुरोः) नीयते येन कर्म्मणा तदुच्यते। तथाचाहुः।

"गृह्योक्तकर्म्मणा येन समीपं नीयते गुरोः।
बालो वेदाय तद्योगाद् बालस्योपनयं विदुः"।

इति ॥०॥ १ ॥०॥

**गर्भैकादशेषु क्षत्रियम् ॥ २ ॥**

उपनयेदितिवर्त्तते ॥०॥ २ ॥०॥

**गर्भद्वादशेषु वैश्यम् ॥ ३ ॥**

उपनयेत् ॥०॥ ३ ॥०॥

यदि दैवान्मानुषाद्वा कारणादुक्तकालातिपातः स्यात्, तदा कथम्?। उच्यते।

**आषोड़शाद्वर्षाद्ब्राह्मणस्यानतीतः कालोभवत्या-द्वाविंशात् क्षत्रियस्याचतुर्व्विंशाद्वैश्यस्य ॥ ४ ॥**

ऋजुरक्षरार्थः। अत्र किञ्चिद्वक्तव्यमस्ति। आङ्शब्दोऽत्राभि-विधौ न मर्य्यादायाम्। कुतः?। अभिविध्यर्थसम्भवे मर्य्यादा-र्थस्यान्याय्यत्वात्। तथाच स्मृत्यन्तरम्।

"औपनायनिकः कालः परः षोड़शवार्षिकः।
द्वाविंशतिः परोऽन्यस्य स्याच्चतुर्व्विंशतिः परः"।

इति।

"विप्रस्य षोड़शाद्वर्षात् राज्ञो द्वाविंशतेः परम्।
वैश्यस्याष्टत्रिकादब्दात् सावित्रीपतनं भवेत्"।

इति।

"षोड़शाब्दो हि विप्रस्य राजन्यस्य द्विविंशतिः।
विंशतिः सचतुर्थी च वैश्यस्य परिकीर्त्तिता।
सावित्री नातिवर्त्तेत अत ऊर्द्ध्वं निवर्त्तते"।

इति चैवमादि। यच्च यमवचनम्—

"पतिता यस्य सावित्री दशवर्षाणि पञ्च च।
ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः।
प्रायश्चित्तं भवेदेषां प्रोवाच वदताम्वरः।
विवस्वतः सुतः श्रीमान् यमो धर्म्मार्थतत्त्ववित्।

सशिखं वपनं कृत्वा व्रतं कुर्य्यात् समाहितः ।
हविष्यं भक्षयेदन्नं ब्राह्मणान् पञ्च सप्त वा ।
एकविंशतिरात्रन्तु पिवेत् प्रसृतियावकम् ।
अतो यावकशुद्धस्य तस्योपनयनं स्मृतम्" ।

इति । तत् पतितसावित्रीकत्वाभावेपि पञ्चदशवर्षोपरि प्रायश्चित्त विशेषोपदेशार्थम् । न पुनः पञ्चदशवर्षोपरि पतितसावित्रीकत्व-मस्यार्थः । तथाविधवचनव्यक्तेरभावात् । लघुनः प्रायश्चित्तस्यो-पदेशाच्च । पतितसावित्रीकाणां हि व्रात्यस्तोमः क्रतुः प्रायश्चि-त्तम् । राजन्यवैश्ययो श्चाविशेषात् । तथा राजन्यवैश्ययोः,—इति ब्राह्मणवत् क्षत्रियवैश्ययोरपि पञ्चदशवर्षोपरि तत् प्रायश्चित्तमवि-शेषेणोपदिश्यते । तयोश्च पतितसावित्रीकत्वाभावेपि वचनबलात् तत्प्रायश्चित्तमित्यकामेनापि वाच्यम् । तत्सामान्यात् ब्राह्मण-स्यापि तथैव वर्णयितुं युक्तम् । तस्मात् 'पतिता यस्य सावित्री'— इत्यस्य यस्य सावित्रीग्रहणं न सम्पन्नमित्ययमर्थः । नहि दश पञ्च च वर्षाणि सावित्री पततीति शक्यते वक्तुम् । भवतामपि तदूर्द्धमेव पतनस्यानुमतत्वात् । विज्ञानेश्वरेणापि,—यस्योपनयने आपद्भावेन तत्कालातिक्रम स्तस्य यमोक्तप्रायश्चित्तमभिधाय,—अनापद्यति-क्रमेतु मानवं त्रैमासिकम्, तत्रैव पञ्चदशवर्षादूर्द्धमपि कियत्-कालातिक्रमेतुद्दालकव्रतं व्रात्यस्तोमोवा,—इति वदता एतदेव-मतमङ्गीकृतमित्यवगम्यते । तस्मात्, अस्माद् यमवचनादाकोल-मर्य्यादार्थता ध्रुवम् शूद्रवद्दसः पराहतः । व्रात्यस्तोमे सपादगवधेनू-नाम्, अत्र तु सप्तादधेनुत्रयाणां स्वयमेव सङ्कलितत्वेन वैषम्या-

पत्तेः। याज्ञवल्क्यटीकायां स्वयमेवाभिविध्यर्थतायावर्णनाच्च। पतितसावित्रीकपरतयावर्णने च क्षत्रियवैश्ययोरपि तावतैव पतितसावित्रीकतापत्तेः। न चैवमिष्यते। रघुनन्दनस्तु,—यम-वचनस्य प्रथमश्लोकार्द्धत्रयमात्रमुपन्यस्यन् परप्रतीकस्थापकृवानः 'एभिः षोड़शवर्षोपरि यमेन पञ्चदशवर्षोपरि यत् पतनमभिहितं, तद्गर्भजन्मप्रभृतिगणनयाऽविरुद्धम्'—इत्यात्मनः स्मृतिनैपुण्यमुपद-र्शितवान्। तदप्यनादरणीयम्। पूर्व्वोक्तयुक्त्या यमेन पञ्चदश-वर्षोपरिपतनस्यानभिहितत्वात्। गर्भप्रभृतिगणनयापि षोड़श-वर्षान्तिममासत्रयस्याऽसंग्रहाच्च। किञ्च। पतितसावित्रीकत्वा-भावेपि "द्वादशषोड़शविंशतीश्चेदतीता अवरुद्धकाला भवन्ति"—इति पैठिनसिवचनात् द्वादशवर्षाद्युपरि प्रत्यवायाल्पत्वज्ञापनं स्वयमेव वर्णितम्। तत् किमत्रापि तथैव न वर्णितमिति स एव जानाति!। तस्मात्, तन्मतेपि द्वादशवर्षोपरि ब्राह्मणस्य महाव्याहृतिहोमः प्रायश्चित्तम्, पञ्चदशवर्षोपरि यमोक्तमेक-विंशतिरात्रव्रतम्, ब्रात्यप्रायश्चित्तं पुनरतोप्यूर्द्धं भवितुं युक्तम्। ब्राह्मणस्य द्वादशवर्षोपरि महाव्याहृतिहोमः प्रायश्चित्तमपि स्वयमेवोक्तम्। ब्राह्मणस्य विशेषेण प्रायश्चित्तम्—इति वदन् यमोऽपि पुरस्तात् सामान्यप्रायश्चित्तमस्य बोधयति।

वयन्तु पश्यामः। ब्राह्मणस्य द्वादशवर्षोपरि महाव्याहृति होमप्रायश्चित्ताभिधानमप्यनुचितमेव। अष्टवर्षोपरि खल्वेतत् स्यात्। कस्मात् कारणात्?। तस्य मुख्यकालत्वात्। कुतस्तस्य मुख्यकालत्वम्?। प्रथमोपदिष्टत्वात्। 'समर्थस्य चोपायोगः'—

इति न्यायाच्च। तस्मात् ब्राह्मणस्याष्टवर्षोपरि, क्षत्रियस्यैकादश-वर्षोपरि, वैश्यस्य द्वादशवर्षोपरि महाव्याहृतिहोमः प्रायश्चित्तम्। तथाच स्मरणम्।

"गौणेषु तेषु कालेषु कर्म्म चोदितमारभेत्।
प्रायश्चित्तप्रकरणप्रोक्तां निष्कृतिमाचरेत्"।

इति। यत्तु,—

"संस्कारा अतिपत्येरन् स्वकालाच्चेत् कथञ्चन।
हुत्वैतदेव कुर्व्वीत ये तूपनयनादधः"।

इति कर्म्मप्रदीपे, उपनयनादधः,—इति करणादुपनयनकालातिपाते न महाव्याहृतिहोमः प्रायश्चित्तमिति प्रतीयते। तद् गौणकालस्याप्यतिपाते बोद्धव्यम्। कुतः?। अविरोधात्। उपनयनकालातिपाते च तदभावावगतेः। षोड़शवर्षादिपर्य्यन्तं खल्वतीतकालता उपनयनस्यात्र सूच्यते। अथवा। एतदेवेत्येवकारकरणात् उपनयनात् पूर्व्वं महाव्याहृतिहोम एव प्रायश्चित्तम्, उपनयने तु न तावन्मात्रम्, अपितु व्रात्यस्तोमोऽपीति वर्णनीयम्। एतच्च भवतोऽप्यनुमतम्।

पैठिनसिवचनेन तु ब्राह्मणस्य द्वादशवर्षोपरि प्रायश्चित्तान्तरम्। यमवचनात् तु सर्व्वेषामेव पञ्चदशवर्षोपर्य्येकविंशतिरात्रव्रतम्। क्षत्रियवैश्ययोः पुनः षोड़शविंशतिवर्षादूर्द्धं प्रायश्चित्तान्तरं पैठिनसिवचनादूह्येयम्। सर्व्वेषामूत्तरावधेरूर्द्धं व्रात्यस्तोमः,—इति बोद्धव्यम्। अस्मिंस्तुपक्षे, पञ्चदशवर्षोपरि यथा ब्राह्मणस्य विशेषेण प्रायश्चित्तं भवेत्, तथा राजन्यवैश्ययोरपि विशेषेण

प्रायश्चित्तं भवेदिति यमवचनस्यार्थः। तदनेन सर्व्वेषामेव सामान्य प्रायश्चित्तं पुरस्तादस्ति,—इति दर्शयति। प्रायश्चित्तान्तरन्तु विस्तरभयान्नेह प्रस्तूयते।

वस्तुतस्तु पैठिनसिवचनं शाखान्तरविषयमेव नास्मच्छाखाविषयम्। विभिन्नशाखिनः खल्वाचार्य्या भिन्नानि वचनानि रचयाम्बभूवुः। तन्नास्ति सर्व्वेषामेकविषयत्वम्। अतएव, अत्यन्तकाला भवन्ति,—इत्युक्तम्। भिन्नौ खल्विमावर्थौ—यस्य कालावरोधः यश्चास्यप्रायश्चित्तम्—इति। एव मन्यान्यपि वचनानि व्याख्येयानि,—इत्ययं मामकोनः पन्थाः। केचित् पुनर्निबन्धारः एतदननुसन्धानाद्वा लोकप्रशंसाग्रहाद्वा पाण्डित्यातिशयख्यापनाद्वा विभिन्नशाखाविषयाणामपि वचनानां सामञ्जस्याय बह्वायासमकुर्व्वन्त। तदस्माभिरपि कथञ्चित् सामञ्जस्यकरणाय प्रयत्नः कृतः। अन्यथा खल्वर्वाचीनाः प्राचीननिबन्धृषु बहुमानात् पक्षपाताच्चास्मत्कृते व्याख्याने न श्रद्दध्यु रुपालम्भञ्च कुर्य्युरिति। परमार्थतस्तु विभिन्नविषयाणां वचनानां नास्त्येकविषयत्वम्। अशक्यमप्यादञ्च सर्व्वेषां सामञ्जस्यमिति शक्नुमो वयं प्रदर्शयितुम्। परन्तु ग्रन्थगौरवभयादत्र मूकीभवामः। धीमद्भिरेव तदूहनीयमित्यस्तु किं विस्तरेण? ॥०॥ ४ ॥०॥

## अत ऊर्द्ध्वं पतितसाविचीका भवन्ति ॥ ५ ॥

अतोऽस्मात् कालादूर्द्ध्वं त्रयोप्येते पतितसावित्रीका भवन्ति। स्वकाले सावित्र्याम्—गायत्र्यामनुच्यमानायां ये पतन्ति प्रायश्चि-

त्वविशेषभागिनो भवन्ति, त इमे पतितसावित्रीका व्रात्याश्च भवन्ति ॥०॥ ५ ॥०॥

नैनानुपनयेयु र्नाध्यापयेयु र्नयाजयेयु र्नैभिर्व्विवहेयुः ॥ ६ ॥

एनः प्रकृत्यन्तर मतदर्थः। नैतान्—इति केचित् पठन्ति। एतान् पतितसावित्रीकान् (त्रयाणां प्रकृतत्वाद्बहुवचनम्) नोपनयेयु र्व्रात्यस्तोमात् क्रतोर्व्विना। तथाच स्मृत्यन्तरम्।

"अत ऊर्द्ध्वं त्रयोऽप्येते यथाकाल मसंस्कृताः।

सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः"।

इति। उपनयेयुरिति बहुवचनं तत्कर्त्तृसंसर्गिणामपि प्रायश्चित्तप्रज्ञापनार्थम्। तथाच स्मरणम्।

"व्रात्याचार्य्यस्य भुक्ताऽन्नं कृच्छ्रपादेन शुध्यति।

यस्तोपनयते व्रात्यान् त्रिभिः कृच्छ्रैः स शुध्यति"।

इति। एवमुत्तरत्रापि बोद्धव्यम्। नैनानध्यापयेयुः। नैनान् याजयेयुः। अविशेषात् पाकयज्ञैरपि। न एभिःसह विवहेयुः—विवाहं कुर्य्युः। विवाहयेयुरितिपाठे, एभिःसह विवाहं न कारयेयुरिति व्याख्येयम्। उपनयनप्रतिषेधादेव सर्व्वत्र प्रतिषेधे सिद्धे यदि केनचिल्लोभादज्ञानाद्वा उपनीताः स्युः, तथापि नैवोत्तराणि कर्म्माणि पतितसावित्रीकाणां कुर्य्यात्—इति सर्व्वेषां पाठः क्रियते ॥०॥ ६ ॥०॥

**यदह रुपैष्यन्माणवको भवति प्रग एवैनं तदहर्भोजयन्ति कुशलीकारयन्त्याप्लावयन्त्यलङ्कुर्व्वन्त्यहतेन वाससाऽऽच्छादयन्ति ॥ ७ ॥**

यदह यस्मिन्नहनि । माणवकः—इत्यनधीतवेदो भण्यते । तथा चोक्तम् । "अनृचो माणवको ज्ञेयः"—इति । यदहर्माणवक उपैष्यन् उपनयनं कारयिष्यन् भवति,—यस्मिन्नहन्युपनयनमस्य करिष्यते—इत्यर्थः । तदह तस्मिन्नहनि, प्रगे एव प्रातरेव, एनं माणवकं भोजयन्ति । एवकारकरणात् प्रग एवैनं भोजयन्ति, न तु भोजनात् परं कथं कर्म्म,—इत्याशङ्कनीयमित्युपदिशति । किं भोजयन्ति? । क्षीरादिकम् । कस्मात्? । "पयोयवाग्वामिक्षाहाराः क्रमशो द्विजातीनाम्"—इति तन्त्रान्तरदर्शनात् । कुशलीकारयन्ति मुण्डयन्ति । आप्लावयन्ति स्नपयन्ति । अलङ्कुर्व्वन्ति केयूरकुण्डलादिभिः । अहतेनाचुण्णेनाम्लदितेन वाससा वसनेन आच्छादयन्ति । आङ्शब्दो व्याख्यातः । वाससा,—इत्येकवचननिर्देशात् अधरीयवसनमेवैतत् । उत्तरीयन्तु,—उपरिष्टात् यदजिनं सूचयिष्यति, तदेव स्यात् । सर्व्वत्र बहुवचनात् कर्त्तुरनियमः । असमासकरणादुपन्यासमात्रमेवैतत्, न पुनरेष एव क्रमः । ज्योतिः शास्त्रविरोधात् । तत्र हि भुक्तस्य क्षौरप्रतिषेधोऽनुश्रिष्यते । यथा ।

"न स्नातमात्र गमनोन्मुख भूषितानां
नाभ्यक्त भुक्त रणकाल निरासनानाम् ।

सन्ध्या निशा कुजदिने च तिथौ च रिक्ते
घोरं स्मृतं न नवमेऽह्नि तथाच विद्याम्" ॥

इति। तस्मादादौ कुशलीकारयन्ति, तत आप्लावयन्ति, ततो भोजयन्ति। एवमके। असमासकरण मेकैकक्रियापरिसमापनानन्तरमपरापराक्रिया यथा स्यादित्येवमर्थम्। तेन पाठक्रमादेवामूषां क्रियाणां क्रमः प्रत्येतव्यः। ज्योतिः शास्त्रनिषेधस्तु नात्र निविशते। कुतः?। आचार्य्यक्रमविरोधात्। सामान्यशास्त्रस्य विशेषेतरपरताया न्याय्यत्वाच्च। अतएव समावर्त्तनेऽप्यमुमेवक्रममसूषां क्रियाणां सूचयिष्यति। सोऽयमस्मत् सिद्धान्तो बुद्धिमद्भिश्चिन्तनीयः।

'यज्ञोपवीतमपि इदानीमेव देयम्। कुतः?। यज्ञोपवीतिनाचान्तोदकेन कृत्यम्—इति वचनात्'—इति केचित्। तदसङ्गतम्। प्रमाणाभावात्। यज्ञोपवीतिनाकृत्यम्—इति वचनञ्च पुरुषार्थस्यैव सतो यज्ञोपवीतस्य कर्म्मार्थतामात्रमुपदिशति न तु तदपि विदधाति,—इति खल्ववोचाम। किन्तु द्विराचमनमिदानीं कर्त्तव्यम्। "सुप्त्वा भुक्त्वा क्षुत्वा स्नात्वा विपरिधाय च"—इति वचनात्। यज्ञोपवीतधारणक्रमं परतोवक्ष्यामः ॥०॥ ७ ॥०॥

वाससाऽऽच्छादयन्ति,—इत्युक्तम्। इदानीं ब्राह्मणादीनां वासांसि विशेषतो विधातुमाह,—

## क्षौमशाणकार्पासौर्णान्येषां वसनानि ॥ ८ ॥

क्षुमा अतसी तस्या इदं क्षौमं तसरादि, शणस्येदं शाणम्, कार्पासस्येदं कार्पासम्, ऊर्णा मेषादिलोम तस्या इद मौर्णम्। पश्चात् द्वन्द्वसमासः। एषां ब्राह्मणादीनामेतानि वसनानि भवन्ति। ब्रह्मचारिणां त्रित्वेपि वसनानां चतुष्टमुपरिष्टादुपपादयिष्यति। तदिदमधरीयवसनविषयं सूत्रम्॥०॥ ८॥०॥

## ऐणेयरौरवाजान्यजिनानि ॥ ९ ॥

एणः कृष्णमृगः कृष्णसारश्च भण्यते। रुरु गौरमृगः। तथा चोक्तम्।

"अमृचो माणवको ज्ञेयः एणः कृष्णमृगः स्मृतः।
रुरु गौरमृगः प्रोक्त स्ताम्बलः शण उच्यते"।

इति। अज च्छागः। एणस्येदमैणेयम्, रुरोरिदं रौरवम्, अजस्येदमाजम्। एतान्यजिनानि चर्म्माणि यथाक्रमं ब्राह्मणादीनां भवन्ति। तदिदमुत्तरीयाभिप्रायं सूत्रम्। कुतः ?। "चर्म्माण्युत्तरीयाणि"—इति गृह्यान्तरसूत्रणात्॥०॥ ९॥०॥

## मुञ्ज काश ताम्बल्यो रशनाः ॥ १० ॥

मुञ्जकाशौ प्रसिद्धौ। ताम्बलः शणः। कुतः ?। 'ताम्बलः शण उच्यते'—इति वचनात्। केचित्तु,—'मुञ्ज काश ताम्बल्यो रशनाः'—इति सूत्रपाठं मन्यन्ते। ताम्बलः शण उच्यते—इत्यत्रापि,

तात्स्नः शण उच्यते,—इति पठन्ति। उभयथाप्यर्थो न भिद्यते। तदेतन्मय्यो रशनाः मेखलाः यथाक्रमं ब्राह्मणादीनां भवन्ति। तत्र मनुः।

"मौञ्जी त्रिवृत् समा श्लक्ष्णा कार्य्या विप्रस्य मेखला।
क्षत्रियस्य च मौर्व्वी ज्या वैश्यस्य शणतान्तवी।
मुञ्जालाभे तु कर्त्तव्या कुशाश्मान्तकवल्वजैः।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा"।

इति ॥०॥ १० ॥०॥

## पार्णवैल्वाश्वत्थादण्डाः ॥ ११ ॥

पर्णः पलाशः। विल्वाश्वत्थौ प्रसिद्धौ। ब्राह्मणादीनां यथाक्रमं पार्णादयोदण्डा भवन्ति। अत्रापि स्मृत्यन्तरोक्तो विशेषो द्रष्टव्यः। यथा मनुः।

"केशान्तिको ब्राह्मणस्य दण्डः कार्य्यः प्रमाणतः।
ललाटसम्मितो राज्ञः स्यात्तु नासान्तिको विशः।
ऋजव स्ते तु सर्व्वे स्यु रव्रणाः सौम्यदर्शनाः।
अनुद्वेगकरा नॄणां सत्वचो नाग्निदूषिताः"।

इति ॥०॥ ११ ॥०॥

इदानीमुक्तानां वसनानां विषयव्यवस्थामुपदिशति,—

## क्षौमं शाणं वा वसनं ब्राह्मणस्य कार्पासं क्षत्रियस्याविकं वैश्यस्य ॥ १२ ॥

स्पष्टार्थं सूत्रम् ॥०॥ १२ ॥०॥

एतेनैवेतराणि द्रव्याणि व्याख्यातानि ॥ १३ ॥

एतेनैवानुसारेण इतराण्यपि द्रव्यानि,—अजिन रशना दण्डरू-पाणि, ब्राह्मणादीनां यथाक्रमं व्याख्यातान्युक्तानि। तथाच, ऐणेयमजिनं मौञ्जी रशना पार्णोदण्डश्च ब्राह्मणस्य, रौरवमजिनं काशी रशना वैल्वोदण्डश्च चत्रियस्य, आजमजिनं ताम्बली रशना आश्वत्थोदण्डश्च वैश्यस्य ॥०॥ १३ ॥०॥

अलाभे वा सर्वाणि सर्वेषाम् ॥ १४ ॥

स्वस्वजात्युक्तवसनादीनामलाभे सर्वाणि वसनादीनि सर्व्वेषां भवन्ति यथालाभम् ॥०॥ १४ ॥०॥

पुरस्ताच्छालाया उपलिप्तेऽग्निरुपसमाहितो भवति ॥ १५ ॥

कृतभाष्यं सूत्रम् ॥०॥ १५ ॥०॥

अग्ने व्रतपत इति हुत्वा पश्चादग्नेरुदगग्रेषु दर्भेषु प्राङाचार्य्योऽवतिष्ठते ॥ १६ ॥

'यथा पाणिग्रहणे तथा चूड़ाकर्म्मण्युपनयने'—इत्यतिदेशादुपनय-नकर्म्मणः पुरस्ताच्चोपरिष्टाच्च महाव्याहृतिभि स्तत्तस्र आहुतयो भवन्ति। तदाहुतिचतुष्टयं हुत्वा, अग्ने व्रतपते—इत्यादि पञ्च-भि र्मन्त्रैः (अनादेशादाज्येन) पञ्चाहुतीश्च हुत्वा आचार्य्यः पश्चाद-ग्नेरुदगग्रेषु दर्भेषु प्राङ्मुख ऊर्द्ध्वं स्तिष्ठति। हुत्वा आचार्य्योऽवति-

हते—इति श्रवणात् कर्त्रन्तरानुपदेशाच्च आचार्य्य एव जुहोति। मन्त्रन्तु माणवक एव जपति। कस्मात्?। व्रतं चरिष्यामि—इत्यादि मन्त्रलिङ्गात्। तस्मात्,—'करणत्वादाचार्य्य एव मन्त्रं जपति'—इति श्रुवतो सरला सरलैव। व्रतान्ते व्रतमचारिषमित्यादेर्ब्रह्मचारिपाठस्य स्वयमेव वर्णनादत्रापि तथैव वर्णयितु मुचितत्वाच्च। 'व्रतं चरिष्यामि—इति मन्त्रलिङ्गे तु ऋत्विक् स्थानीयत्वादाचार्य्यस्य याज्यस्थानीयत्वाच्च माणवकस्य मन्त्रे रम्यादि प्रार्थना ब्रह्मचारिणो नाचार्य्यस्य। तथाच, यां वै काञ्चन यज्ञ-ऋत्विज आशिषमाशासते सा यजमानस्यैव'—इत्यपस्थान एव तस्याः संरम्भः। आचार्य्यमाणवकयोः ऋत्विग् यजमानस्थानीयत्वे आचार्य्यस्य मन्त्रपाठे च प्रमाणस्यैवाभावात्। अधिकञ्च पूर्वमेवोक्तमिति नेह पुनरुच्यते।

अत्रच, व्रतं चरिष्यामि—इति मन्त्रस्य साकाङ्क्षत्वान्निराकाङ्क्षीकरणाय व्रतनामकालपरिणामयोरादेशः कर्त्तव्यः;—एतद्व्रतमियत्कालिकम्—इति। कुतः?।

"ब्रह्मचारी व्रतादेशे व्रतनाम प्रवाचयेत्।
चरिष्ये यावदन्ताय सावित्रे चाप्तकीर्त्तनम्"।

इति वचनात्॥०॥ १६ ॥०॥

**अन्तरेणाग्न्याचार्य्यौ माणवकोऽञ्जलिकृतोऽभिमुख आचार्य्यमुदगग्रेषु दर्भेषु॥ १७॥**

अन्तरेणशब्दो मध्यवचनः। तद्योगाच्च 'अग्न्याचार्य्यौ'—इति

षष्ठ्यर्थे द्वितीया। अग्न्याचार्य्ययो र्मध्यदेशे माणवकोऽञ्जलिकृतः कृताञ्जलिः, अभिमुख आचार्य्यम् आचार्य्याभिमुखः—प्रत्यङ्मुखः —इत्येतत्। उदगग्रेषु दर्भेषु 'अवतिष्ठते'—इत्यनुवर्त्तनीयम् ॥०॥ १७ ॥०॥

तस्य दक्षिणतोऽवस्थाय मन्त्रवान् ब्राह्मणोऽपामञ्जलिं पूरयति ॥ १८ ॥

तस्य अनन्तरोक्तस्य माणवकस्य, दक्षिणतो दक्षिणस्यां दिशि न दक्षिणपार्श्वे। कस्मात्?। माङ्गलिकत्वात्। प्रत्यङ्मुखस्य माणवकस्य दक्षिणपार्श्वे खल्ववस्थाने दक्षिणामुखत्वमवस्थातुः स्यात्। तच्चामङ्गलम्। तस्मात्, प्राचीसौम्यापराजिता—इति परिशिष्टानुग्रहाच्च, यथोदङ्मुखत्वं भवति तथाऽवस्थातव्यम्—इति यथोक्त एवार्थः। अवस्थाय ऊर्द्धः स्थित्वा। कः?। मन्त्रवान् अधीतवेदो ब्राह्मणः। किं करोति?। अपामद्भिरञ्जलिं माणवकस्य पूरयति। मन्त्रानुपदेशादमन्त्रकम् ॥०॥ १८ ॥०॥

उपरिष्टाच्चाचार्य्यस्य ॥ १९ ॥

उपरिष्टात् माणवकाञ्जलिपूरणात् परस्तात्, आचार्य्यस्याप्यञ्जलिमद्भिः पूरयति। स एव ब्राह्मणः ॥०॥ १९ ॥०॥

प्रेक्षमाणोजपत्यागन्त्रा समगन्महीति ॥ २० ॥

माणवकं प्रेक्षमाणः आगन्त्रा—इति मन्त्रं जपति। कोजपति?।

आचार्यः। कस्मात्?। स्वस्ति चरतादयम्—इति मन्त्रलिङ्गात्। परस्मात् सिंहावलोकितन्यायेनानुषङ्गाच्च ॥०॥ २० ॥०॥
अपिलाचाचार्य्यः,—

ब्रह्मचर्य्यमागामिति वाचयति ॥ २१ ॥

ब्रह्मचर्य्यमिति मन्त्रं माणवकं पाठयति ॥०॥ २१ ॥०॥

कोनामासीति नामधेयं पृच्छति तस्याचार्य्यः ॥ २२ ॥

कोनामासि,—इति तस्य माणवकस्य नामधेयमाचार्य्यः पृच्छति ॥०॥ २२ ॥०॥
किं कृत्वा?—

अभिवादनीयं नामधेयं कल्पयित्वा ॥ २३ ॥

अभिवादनं पादग्रहणमित्यनर्थान्तरम्। तत्र हितमभिवादनीयं नामधेयं तदानीमेवाचार्य्यः कल्पयित्वा। अभिवादनीयमितिकरणात् सर्व्वत्रैवाभिवादनकाले इदमेव नामोच्चारणीयमिति गम्यते ॥०॥ २३ ॥०॥
अभिवादनीयं नाम विशिनष्टि,—

देवताश्रयं वा नक्षत्राश्रयं वा ॥ २४ ॥

देवताश्रयं हरिप्रभृतिकं वा, नक्षत्राश्रयं शतपदचक्रोक्तजन्मकालीननक्षत्रपादानुसारि वा ॥०॥ २४ ॥०॥

गोत्राश्रयमप्येके ॥ २५ ॥

गोत्राश्रयं शाण्डिल्यः—इत्यादिरूपमपि नामैके आचार्य्या मन्यन्ते। 'गोत्राश्रयमित्येके'—इति पाठेपि व्यक्त एवार्थः। एवञ्च, इदानीमेवाभिवादनीयनाम-कल्पनानन्तरं नाम-पृच्छासूत्रणान्माणवकोप्येतदेव नाम कथयेदित्यर्थादवगम्यते ॥०॥ २५ ॥०॥

माणवकेन अमुकनामास्मीति नाम्नि कथिते,—

उत्सृज्यापामञ्जलिमाचार्य्यो दक्षिणेन पाणिना दक्षिणं पाणिꣳ साङ्गुष्ठं गृह्णाति;—देवस्य ते सवितुः प्रसवेऽश्विनोर्व्बाहुभ्यां पूष्णोहस्ताभ्याꣳ हस्तं गृह्णाम्यसाविति ॥ २६ ॥

अपामञ्जलिमुत्सृज्य त्यक्त्वा आचार्य्यः स्वेन दक्षिणेन पाणिना माणवकस्य दक्षिणं पाणिं साङ्गुष्ठमङ्गुष्ठसहितं गृह्णाति देवस्य ते—इति मन्त्रेण। मन्त्रपाठानन्तरं हस्तग्रहणं बोद्धव्यम्। असाविति सर्वनामस्थाने च सम्बोधनविभक्त्यन्तं माणवकनाम प्रयोज्यम्। अत्र च, आचार्य्यस्येव माणवकस्यापि जलाञ्जल्युत्सर्गो बोध्यः। कुतः?। अविशेषेणोपदेशात्। अतएव माणवकस्य साङ्गुष्ठदक्षिणपाणिग्रहणमाञ्जस्येनोपपद्यते। क्त्वा प्रत्ययस्य तु पूर्वापरीभावमात्रमर्थो न पुनरेककर्तृकत्वमपि,—इत्यधस्तादुपपादितम्। आचार्य्यस्यापि जलाञ्जल्युत्सर्गादन्नेककर्तृकत्वमप्यस्त्येव, परमेकमात्रकर्तृकत्वमेव नास्ति,—इति न किञ्चिदनुचितम्।

इदानीं गृहीतमाणवकहस्तस्याचार्य्यस्य, अग्निस्ते हस्तमग्रही-दितिमन्त्रजपो भवदेवभट्टाद्यनुमतः। प्रमाणन्तु मृग्यम्। मन्त्र-ब्राह्मणेऽप्यस्मिन्नवसरे मन्त्रोऽयं न पठ्यते ॥०॥ २६ ॥०॥

अथैनं प्रदक्षिणमावर्त्तयति सूर्य्यस्यावृतमन्वावर्त्त-स्वासाविति ॥ २७ ॥

अथेति तद्देशनियमार्थम्। अथ तस्मिन्नेव देशे प्रत्यङ्मुखमवस्थितम् एनं माणवकं प्रदक्षिणं यथा भवति तथा आवर्त्तयति—प्राद-क्षिण्येन प्राङ्मुखं करोति, आचार्य्यः, सूर्य्यस्येतिमन्त्रेण। तस्मि-न्नेव देशेऽवस्थित आचार्य्यः—इति वा वर्णनीयम्। अत्राप्यसावि-त्यत्र पूर्ववन्नामग्रहणम् ॥०॥ २७ ॥०॥

दक्षिणेन पाणिना दक्षिणमंसमन्ववमृश्यानन्त-र्हितां नाभिमभिमृशेत् प्राणानां ग्रन्थिरसीति ॥ २८ ॥

आचार्य्यः स्वेन दक्षिणेन पाणिना माणवकस्य दक्षिणमंसम् अन्वव-मृश्य स्पृष्ट्वा तूष्णीमित्यर्थः। अनन्तर्हितामन्तर्धानरहिताम्—वसनाद्यनाच्छादितामित्येतत्। नाभिं अभिमृशेत् आभिमुख्येन स्पृशेत्, प्राणानामितिमन्त्रेण। अत्रामुमितिमन्त्रस्थाने द्वितीयान्तं माणवकनाम ग्रहीतव्यम् ॥०॥ २८ ॥०॥

उत्सृप्य नाभिदेशमहुर इति ॥ २९ ॥

सर्पति गतिकर्म्मा। नाभिदेशमिति द्वितीया समीपार्था। उत्सृप्य

करं नाभिदेशसमीपमूर्द्धं नीत्वा,—माणवकस्योदर एवावस्थाप्ये-त्येतत्।

एवं वा—

नाभिदेशमिति व्यत्ययात् पञ्चम्यर्थे द्वितीया। नाभिदेशात् कर-मुत्सृज्य,—ऊर्द्धमुदरं नीत्वा—इत्यर्थः। परतो हृदयदेशोत्सर्पणस्य सूचनात् इदानीं नाभिदेशादूर्द्धं हृदयदेशाच्चाधस्तात् करस्याव-स्थानमवगम्यते। तदेवं कृत्वा, अकुर इति मन्त्रं जपत्याचार्य्यः। केचित् 'अभुर' इति पठन्ति। 'अभुर इति जाठरोऽग्निरुच्यते। तस्मात् नाभिदेशोपरि जाठराग्निस्थानमुदरमालभ्य जपेत्। तद-धिष्ठातृत्वात्तस्य'—इति वर्णयन्ति च। अभुर—इति वायुनाम—इत्यपरे। अत्राप्यमुमित्यत्र द्वितीयान्तं माणवकनामोच्चार्य्यम् ॥०॥ २९ ॥०॥

## उत्सृप्य हृदयदेशं कृशन इति ॥ ३० ॥

उत्सृप्य जठरादूर्द्धं हृदयदेशं करं नीत्वा,—तमालभ्येत्यर्थः। कृशन इति मन्त्रं जपत्याचार्य्यः। कृशनशब्देन हृदयपुरुषो भण्यते। तस्मात् हृदयमालभ्य जपति। अत्राप्यमुमिति मन्त्रस्थाने द्विती-यान्तं माणवकनाम गृह्णीयात् ॥०॥ ३० ॥०॥

## दक्षिणेन पाणिना दक्षिणमंऽसमन्वालभ्य प्रजापत-ये त्वा परिददाम्यसाविति ॥ ३१ ॥

आचार्य्यो दक्षिणपाणिना माणवकस्य दक्षिणमंसं स्पृष्ट्वा प्रजापतये

इति मन्त्रं जपति। अत्रासावित्यत्र सम्बोधनविभक्त्या माणवकनाम-ग्रहणम् ॥०॥ ३१ ॥०॥

सव्येन सव्यं देवाय त्वा सवित्रे परिददाम्यसाविति ॥ ३२ ॥

आचार्य्यः सव्येन वामेन पाणिना माणवकस्य सव्यमंसमन्वालभ्य देवाय त्वा—इति मन्त्रं जपति। अत्रापि पूर्ववन्नामग्रहणम् ॥०॥ ३२ ॥०॥

अथैनꣳसंप्रेष्यति ब्रह्मचार्य्यस्यसाविति ॥ ३३ ॥

अथेति पूर्वप्रकृतार्थम्। अथ पूर्वप्रकृतमंसयोर्गृहीतमेवैनं माणवकं संप्रेष्यति समादिशति आचार्यः। संप्रेषयति,—इति पाठेपि तथैवार्थः। किं समादिशति?। ब्रह्मचार्यस्यसाविति। इतः प्रभृति त्वं ब्रह्मचार्यसि, अतो ब्रह्मचर्यनियमं मधुमांसवर्जनादिकं कुरु आब्रह्मचर्यपरिसमाप्तेरित्यर्थः। अत्रापि पूर्ववन्नामग्रहणम् ॥०॥ ३३ ॥०॥

किमेष एवादेशः?। न। किन्तर्हि?—

समिधमाधेह्यपोऽशान कर्म्मकुरु मादिवा स्वाप्सीरिति ॥ ३४ ॥

यत्तु वक्ष्यति,—अस्तमिते समिधमादधाति,—इति; तां समिधं सायं प्रातराधेहि। यच्च श्रुतावभिहितम्,—'तस्माद्वा एतद्ब्रह्म-

श्यिष्यन् पुरस्ताचोपरिष्टाच्चाद्भिः परिदधाति'—इति; तदिदमादिश्यते,—अपोऽशान—इति। अप उदकम् अशान भक्षय भोजनकालात्पुरस्तादुपरिष्टाच्चेत्यर्थः। मन्त्रौ तु शाखान्तरादुपादेयौ,—अमृतस्योपस्तरणमसि स्वाहेति पुरस्तात्, अमृतस्यापिधानमसि स्वाहेतिचोपरिष्टात्। अपर आह,—'अपोऽशान—इत्याचमनमेवसमादिश्यते तेषु तेषु निमित्तेषु'—इति। अन्ये तु, 'आपोशान'—इति पठन्तः 'कर्म्मकुरु'—इत्युत्तरेणास्यैकवाक्यतां मन्यमाना वर्णयन्ति,—'भोजनपूर्व्वापरयो र्जलपानरूपं यदापोशानं विहितम्, तत्कर्म्म कुरु'—इति। तदनाकरम्। कर्म्मपदञ्चैवमनर्थकं स्यात्। पठ्यमानमन्त्रकाण्डेऽपि 'अपोशान'—इत्येवायमादेशः पठ्यते। तस्मात्, अन्यच्च यत् किञ्चिद्विहितं कर्म्म—गुरुशुश्रूषादिलक्षणम्, तत् कुरु,—इत्यपर एवायमादेशः। मा दिवा स्वाप्सीः, दिवा स्वापं माकार्षीरिति। गुरुणा चैवमादिष्टो ब्रह्मचारी सर्व्वत्रैव वाढ़म्—इति ॐ—इति वा ब्रूयात्। तच्चादेशमनुपालयेत्। तदाह कर्म्मप्रदीपः।

"ब्रह्मचारी समादिष्टो गुरुणा व्रतकर्म्मणि।
वाढ़मोमिति वा ब्रूया त्तत्तथैवानुपालयेत्"।

इति ॥०॥ ३४ ॥०॥

उदगग्नेरुत्सृप्य प्राङाचार्य्य उपविशत्युदगग्रेषु दर्भेषु ॥ ३५ ॥

उदगुत्तरस्यामग्नेरुत्सृप्य गत्वा। प्राङ् प्राङ्मुखः। स्पष्टमन्यत्। उद-

ङ्ग्नेरितिपाठे उदङ्मुखोऽर्थादग्नेरुत्तरतो गत्वा प्राङ्मुख उपविशतीति व्याख्येयम् ॥०॥ ३५ ॥०॥

प्रत्यङ्माणवको दक्षिणजान्वक्तोऽभिमुख आचार्य्यमुदगग्रेष्वेव दर्भेषु॥ ३६ ॥

माणवकस्तु दक्षिणजान्वक्तोभूमिगतदक्षिणजानुकः आचार्याभिमुखः प्रत्यङ्मुख उदगग्रेषु दर्भेषु उपविशति। अग्नेरुत्तरत एव ॥०॥ ३६ ॥०॥

अथैनं त्रिः प्रदक्षिणं मुञ्जमेखलां परिहरन् वाचयतीयं दुरुक्तात् परिवाधमानेत्यृतस्य गोप्त्रीति च॥३७॥

अथ अनन्तरमेव—उपरिष्टमेव, एनं माणवकं वाचयत्याचार्यः। किं वाचयति?। इयं दुरुक्तादिति ऋतस्य गोप्त्रीति च मन्त्रद्वयम्। किं कुर्व्वन् वाचयति?। मुञ्जमेखलां तस्य कटिदेशे त्रिःप्रदक्षिणं परिहरन् प्रादक्षिण्येन वारत्रयं परिवेष्टयन्। परिहरन्—इति वर्त्तमाननिर्देशात् परिहरणसमकालत्वं मन्त्रवाचनस्य। सत्यामपि परिहरणावृत्तौ सकृदेव मन्त्रपाठः स्यात्। कस्मात्?। "एकद्रव्ये कर्म्मावृत्तौ सकृन्मन्त्रवचनं कृत्वा"—इति वचनात्।

"अस्मिन्नवसरे प्रसिद्धा यज्ञोपवीतमिच्छन्ति"—इति कर्कोपाध्यायाः। "गृह्यानुक्तमपि यज्ञोपवीतमस्मिन्नेव समये परिधापयेत्। मेखलाऽनन्तरम्—'कार्पासमुपवीतं स्यात्'—इति मनूक्तेः। 'पवि-

चन्द्वासे प्रयच्छति'—इति जातूकर्णात्। 'यज्ञोपवीतिनं कृत्वा'—इति शांख्यायनाच"—इति तत्त्वकारः। भवदेवभट्टप्रभृतयोऽप्येवम्। तत्र,—

"मेखलामजिनं दण्डमुपवीतं कमण्डलुम्।

अप्सु प्राश्य विनष्टानि गृह्णीतान्यानि मन्त्रवत्"।

इति मनुनोपवीतग्रहणस्यापि मन्त्रवत्त्वाभिधानात् गृह्ये च तदनुपदेशात् शाखान्तरान्मन्त्रमुपादद्यात्—यज्ञोपवीतमसि—इत्येवमादिम्। अजिनमपि इदानीमेव परिधापयेत्—इति भवदेवरघुनन्दनौ। वस्तुतस्तु अजिनधारणक्रमं वक्ष्यामः॥०॥ ३७ ॥०॥

**अथोपसीदत्यधीहि भोः! सावित्रीं मे भवाननुब्रवीत्विति ॥ ३८ ॥**

अथेति पूर्वोक्तशिष्टानन्तर्यद्योतनार्थम्। अथ यज्ञोपवीतधारणानन्तरम्। माणवक आचार्यमुपसीदति—कृताञ्जलिपुट आचार्यगतचक्षु रुपसन्नो भवति। अधीहि—इत्यनेन। अधीहि अध्यापय। भोरिति आचार्यसम्बोधनम्। अध्ययनस्यानेकत्वात् विशेषप्रतिपत्तये पुनरुच्यते,—सावित्रीम्—इति। सावित्रीं गायत्रीम् ॥०॥ ३८॥०॥ माणवकेनैवमभिहितः खल्वाचार्यः,—

**तस्मा अन्वाह,—पच्छोऽर्द्धर्चश ऋक्श इति ॥ ३९ ॥**

तस्मै माणवकाय, अन्वाह अनुब्रूयात्। अनुरुपसर्गः। काममनुब्रूयात्?।—सावित्रीम्। कथम्?। प्रथमन्तावत्, पच्छः—पदशः

पादं पादं कृत्वा। ततोऽर्द्धर्चशः—ऋचोऽर्द्धमर्द्धं कृत्वा। ततः ऋकशः—सर्व्वामृचम्। ऋकशः—इत्यत्र, 'सर्व्वाम्'—इत्येव केचित् पठन्ति। एवन्तावत् सावित्री मनुब्रूयात् ॥०॥ ३९ ॥०॥

·महाव्याहृतीश्च विहृता ॐकारान्ताः ॥ ४० ॥

महाव्याहृतीश्च अन्वाह—इत्यनुषज्यते। कथम्भूताः?। विहृताः विशेषेण हृताः पृथक् कृताः—पृथक् पृथगित्येतत्। विहृताः,—इति पाठे, विहृताः पृथग्भूताः न संहताः—इति स एवार्थः। विकृताः—इति केचित् पठन्ति। तत्रापि तथैव व्याख्येयम्। ॐकारान्ताः। ॐकारः प्रणवोऽन्ते यासां तादृशा ॐकारान्ताः। महाव्याहृतीः—इति कृत्वा ॐकारान्ताः—इति करणात्तासामन्त एव ॐकारोऽवगम्यते। पद्यमानमन्त्रकाण्डेऽपि, अस्मिन्नेवावसरे व्याहृतीनां परत एव ॐकारः पद्यते। तथाच, भूः ॐ, भुवः ॐ, स्वः ॐ—इत्येव मनुब्रूयादिति भट्टनारायणोपाध्यायाः। ॐ भूः,—इत्यादिरूपमिति भवदेवभट्टाः। उभयमतानुरोधी वीरेश्वरस्तु ॐ भूः ॐ,—इत्यादिरूपम्—इत्याहस्म ॥०॥ ४० ॥०॥

वार्क्षञ्चास्मै दण्डं प्रयच्छन् वाचयति—सुश्रवः सुश्रवसं माकुर्विति ॥ ४१ ॥

वृक्षस्यायं वार्क्षः तं वार्क्षम्, प्राप्तदण्डानुवादेन प्रदानमात्रविधानात् पार्णादिरूपम्—इत्यर्थः। तमिमं दण्डम् अस्मै ब्रह्मचा-

रिणे प्रयच्छन् ददत् सुश्रवः—इत्येतं मन्त्रं वाचयति ब्रह्मचारिणमेव। चशब्दादजिनमपि इदानीमेव प्रयच्छति। कस्मात्?। "सुश्रव इति दण्डं प्रदाय अजिनं प्रयच्छति"—इति स्वशाखाभेदे पठितत्वात्। तस्मात्—आचार्य्येणानुपदेशादिच्छया यस्मिन् कस्मिंश्चित् क्रमे धारणमजिनस्य,—इत्यसङ्गतं वचनम्। अजिनधारणस्यापि मनुना मन्त्रवत्त्वोपदेशात् तन्मन्त्रश्च स्वशाखायामभावात् 'मित्रस्य चक्षुर्व्वरुणं बलीयः'—इति तैत्तिरीयशाखापरिपठितो द्रष्टव्यः। अपरे पुन रेतदविद्वांसोभाषन्ते,—मन्त्रानुपदेशादमन्त्रकमजिनस्य धारणम्—इति।

"वार्क्षञ्चास्मै दण्डं प्रयच्छन्नादिशति"—इत्युपरिष्टाद्गोदानादिषु दण्डप्रदानादेशयोः सहोपदेशादिहापि इदानीमाचार्य्य आदिशति—इति बोद्धव्यम्। तस्मात्तदपि चकारेण समुच्चीयते अविशेषात्। ते चादेशाः परतो वक्ष्यन्ते। ब्रह्मचारी च सर्व्वत्र पूर्व्ववत् वाढम्—इति ॐ—इति वा ब्रूयात्। अन्ये तु मन्यन्ते, स्वशाखाभेदे पाठादेव इदानीमजिनप्रदानं सिध्यति, तदर्थं चशब्दो नातीव प्रयोजनवान्, तस्मात् वक्ष्यमाणादेशसमुच्चयार्थ एव चशब्दः—इति ॥०॥ ४१ ॥०॥

## अथ भैक्ष्यं चरति ॥ ४२ ॥

अथशब्दो विशिष्टमानन्तर्य्यं द्योतयति। कथन्नाम?। दण्डमजिनञ्च प्रतिगृह्यादेशांश्चाङ्गीकृत्य भास्करमुपस्थाय अग्निं प्रदक्षिणीकृत्य अथानन्तरं भैक्षं भिक्षाकदम्बकं चरति आहरति। तथाच मनुः।

"प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम्।
प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं यथाविधि"।

इति ॥०॥ ४२ ॥०॥

किं यामेव काञ्चिदग्रे भिक्षेत?। न। कान्तर्हि?।

**मातरमेवाग्रे, द्वे चान्ये सुहृदौ, यावत्यो वा सन्निहिताः स्युः ॥ ४३ ॥**

मातरं जननीमेव अग्रे प्रथमं भिक्षेत। द्वे च अन्ये सुहृदौ—स्निग्ध हृदये स्वस्रादी भिक्षेत। यावत्यो वा योषितः सन्निहिताः सन्निधौ स्थिताः स्युः भवेयुः न चैनं विमानयन्ति, तावतीर्व्वा भिक्षेत। तथाच मनुः।

"मातरं वा स्वसारं वा मातुर्व्वा भगिनीं निजाम्।
भिक्षेत भिक्षां प्रथमं या चैनं न विमानयेत्"।

इति। सन्निहिताः—इति करणात् तत्रस्थ एव भिक्षेत न पुनः स्थानान्तरं गत्वा—इति बोद्धव्यम्। 'भवति! भिक्षां मे देहि'—इति ब्राह्मणस्य भैक्षचरणप्रयोगः। 'भिक्षां भवति! मे देहि'—इति क्षत्रियस्य। 'भिक्षां मे देहि भवति!'—इति वैश्यस्य। तथाच गृह्यान्तरम्। "भवत्पूर्वां ब्रह्मणोभिक्षेत, भवन्मध्यां राजन्यो, भवदन्त्यां वैश्यः"—इति।

"आदिमध्यावसानेषु भवच्छब्दोपलक्षिता।
ब्राह्मणक्षत्रियविशां भैक्षचर्य्या यथाक्रमम्"।

इति च स्मृत्यन्तरम् ॥०॥ ४३ ॥०॥

आचार्याय भैक्षं निवेदयति ॥ ४४ ॥

ब्रह्मचारी—इत्येव। ऋजुरक्षरार्थः। संस्कारार्थं भैक्षस्य निवेदनमात्रं न पुनराचार्याय दानमेव। कस्मात्?। वृत्त्यर्थत्वाद्भैक्षचरणस्य। मनुरपि स्मरति।

"समाहृत्याथ तद्भैक्षं यावदन्नममायया।

निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखः शुचिः"।

इति। अश्नीयात्—इत्यत्रापि प्राचीनमेव कर्म्मपदमनुषञ्जनीयं निराकाङ्क्षत्वार्थम्। 'भैक्षं भोः'—इत्ययं भैक्षनिवेदनप्रयोगः। तथाच गृह्यान्तरम्। "भैक्षं भोरित्याचार्याय भैक्षं निवेद्य दत्तं प्रतिगृह्णीयात्"—इति। तस्मात् आचार्यः पुनरस्मै भैक्षं प्रदाय कर्म्मशेषं समापयेदिति बोद्धव्यम्। कुतः?। परतो ब्रह्मचारिण एव कर्म्मोपदेशादिदानीमाचार्यकर्म्मणोऽवसानावगतेः ॥०॥४४॥

अवसितमुपनयनकर्म्म। प्रासङ्गिकमिदानीं ब्रह्मचारिणः कर्त्तव्यमनुवर्त्तामहे। स खल्वयं ब्रह्मचारी,—

तिष्ठत्यहः शेषं वाग्यतः ॥ ४५ ॥

वाग्यतः संयतवागङ्गः शेषमवशिष्टं तिष्ठति,—वक्ष्यमाणकर्म्मार्थम् ॥०॥ ४५ ॥०॥

अस्तमिते समिधमादधात्यग्नये समिधमहार्षमिति ॥ ४६ ॥

अस्तमिते सवितरि, (स्मृत्यन्तरप्राप्तं सन्ध्योपासनं कृत्वा)। अग्नये

समिधमितिमन्त्रेण समिधमुक्तलक्षणामादधाति अग्नौ प्रक्षिपति। इयमेवात्र प्रधानाहुतिः। ततश्चात्रापि पुरस्ताच्चोपरिष्टाच्च इन्धनार्थं समिद्भवति। तथाच कर्म्मप्रदीपः।

"समिदादिषु होमेषु मन्त्रदैवतवर्जिता।
पुरस्ताच्चोपरिष्टाच्च इन्धनार्थं समिद्भवेत्"।

इति। स खल्वयं चिप्रहोमः स्यादिति द्रष्टव्यम्। अत्रच अस्तमिते अस्तमिते,—इति वीप्सा बोद्धव्या। कस्मात्?। समावर्त्तनपर्य्यन्तमेवाग्नौ समिदाधानस्य स्मृत्यन्तरे उपदेशात्। तथाच मनुः।

"अग्नीन्धनं भैक्षचर्य्यामधः शय्यां गुरोर्हितम्।
आसमावर्त्तनात् कुर्य्यात् कृतोपनयनो द्विजः"।

इति। आचार्य्योऽप्युपरिष्टाद्वक्ष्यति,—"मेखलाधारण भैक्षचर्य्य दण्ड समिदाधानोदकोपस्पर्शन प्रातरभिवादा इत्येते नित्यधर्म्माः"—इति।

सायमारम्भत्वात् कर्म्मणः अस्तमिते,—इत्येवसूचितं न प्रातरित्यपि। प्रातः खल्वपवर्गः कर्म्मणः—इत्यारम्भे सूचिते असूचितोपि तदपवर्गोऽवगम्यत एव। अतो लाघवार्थं प्रातरित्यवचनं न प्रातर्होमाननुष्ठानार्थम्। तस्मात् सायं प्रातश्च समिधमादध्यात्। तथाच मनुः।

"प्रातराहृत्य समिधं सन्निदध्यात् दिहायसि।
सायं प्रातश्च जुहुयात्ताभिरग्निमतन्द्रितः"।

इति। "सायं प्रातः समिधमादध्यात्"—इति च गृह्यान्तरम्। तस्मात् प्रातः समिदाधानं नास्ति,—इत्ययुक्तं वचनम्। समि-

दाधानानन्तरञ्चाग्निमाचार्यञ्चाभिवादयेत्। तथाच गृह्यान्तरम्। "उभयत्राग्निं समिध्य गोत्रनामनी प्रोच्याग्निमभिवाद्याचार्यमभिवादयेत्"—इति ॥०॥ ४६ ॥०॥

अथेदानीं ब्रह्मचारिणो भोजनकालः। कुतः?।

"कृताग्निकार्य्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया"।

इति स्मरणात्। स खल्वयं ब्रह्मचारी उपनयनकर्म्मण ऊर्द्धम्—

## त्रिरात्रमक्षारलवणाशी भवति ॥ ४७ ॥

व्याख्यातं सूत्रम् ॥०॥ ४७ ॥०॥

## तस्यान्ते सावित्रश्चरुः ॥ ४८ ॥

तच्छब्देनोपनयनव्रतस्य परामर्शः। तस्योपनयनव्रतस्य न पुनरुपनयनकर्म्मणः, न वा सन्निहिततरस्य त्रिरात्रस्य। कुतः?। तस्येत्यानर्थक्यापत्तेः। अन्ते—इत्येतावतैव निर्व्वाहात्। गोदानादिव्रतान्तराणामन्ते होमान्तरस्य वक्ष्यमाणत्वादुपनयनव्रतान्तेपि कस्यचिदभ्युपगन्तुमुचितत्वाच्च। तथाच गृह्यान्तरम्। "सद्यप्रवचनव्रतान्ते सावित्रश्चरुः गोदानादीन्यनुप्रवचनीयानि व्रतान्यैन्द्रस्थालीपाकान्तानि भवन्ति"—इति। तस्मात्—उपनयनकर्म्मणश्चतुर्थेऽह्नि सावित्रीचरुहोमः—इति भवदेवभट्टमतम्, उपनयनकर्म्मदिन एव आचार्यो माणवकाय भैक्षं प्रदाय सावित्रचरुहोमं कुर्यात्—इति रघुनन्दनमतञ्चासङ्गतमेव। 'उपनयनरूपव्रतस्यान्ते सावित्रश्चरुः'—इति रघुनन्दनस्य स्वव्याख्याप्येवं

व्याकुप्येत। किञ्च। स खल्वयं व्रतान्ते सावित्रं चरुं व्याख्याय पुनरुपनयनकर्म्मणोऽनन्तरमेव तं वर्णयन् व्रतकर्म्मणोर्व्विवेकमविद्वांसमिवात्मानं ख्यापयति। भट्टभाष्येप्युक्तम्—'तस्य व्रतस्य न कर्म्मणः स च सन्निधानात्त्रिरात्रस्य। कुतः?। अव्यक्तं प्रधानगामि,—इति वचनात्। अन्यथा व्रतान्ते—इति ब्रूयात्'—इति। अलमति प्रसङ्गेन।

सविता देवता अस्येति सावित्रश्चरुः कर्त्तव्यः,—इति प्रसङ्गादिहोच्यते। सवित्रे त्वा जुष्टं निर्व्वपामीति निर्व्वापः। सवित्रे स्वाहा—इति प्रधानहोमः ॥०॥ ४८ ॥०॥

अवसिता प्रासङ्गिकी कथा। प्रकृतमिदानी मनुवर्त्तामहे—

## यथार्थम् ॥ ४९ ॥

उपनयनकर्म्मणः परिसमाप्तिरनेनोच्यते ॥०॥ ४९ ॥०॥

## गौ र्दक्षिणा ॥ ५० ॥

उपनयनकर्म्मण एव नोपनयनव्रतस्य। कुतः?। उपनयनकर्म्मणोऽनन्तरम् "आचार्याय वरोदक्षिणा"—इति गृह्यान्तरस्मरणात्। अस्माच्च गृह्यान्तरात् दक्षिणेयमाचार्याय दातव्या। तस्मात् ब्रह्मचारिणो भैक्षप्रदानानन्तरमेवाचार्यः कर्म्मशेषं समापयेत्—इति भट्टनारायणाद्यनुमतं समीचीनमस्माकम्। समिदाधानस्य प्रधान कर्म्मान्तरतयोपनयनकर्म्मानङ्गत्वात् अहःशेषस्थिते स्तादर्थ्याच्च ॥०॥ ५० ॥०॥

इयमपरा सूत्रद्वययोजना,—

## यथार्थम् ॥ ४९ ॥

प्रकृतस्य सावित्रचरोरवसाने यथार्थं यथाप्रयोजनं यथाप्राप्तमित्येतत्। किमनेनोक्तं भवति? । एतदनेनोक्तं भवति । उपनयनव्रतान्ते सावित्रहोमं कृत्वा, अग्ने व्रतपते—इत्यादिमन्त्रैः सूचयिष्यमाणविशेषै राज्येन व्रतसमापकहोमञ्च कृत्वा, तन्त्रं समापयेत्—इति। स खल्वयमाज्यहोमः सर्व्वेष्वेव व्रतान्तेषु स्यादिति वक्ष्यामः ॥०॥ ४९ ॥०॥

## गौ र्दक्षिणा ॥ ५० ॥

इयं दक्षिणाप्युपनयनव्रतस्यैव। एतदपि परस्तादुपपादयिष्यामः। अस्यामपि वर्णनाया मुपनयनकर्म्मणः प्राचीनैव परिसमाप्तिः, दक्षिणा च गौरेव स्यात्, पूर्व्वोक्तकारणात्—इति न कश्चिद्विरोधः ॥०॥ ५० ॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये द्वितीयप्रपाठकस्य दशमी काण्डिका ॥०॥ समाप्तश्चायं द्वितीयः प्रपाठकः ॥०॥

---

## गोभिलीयगृह्यसूत्रे

तृतीयप्रपाठके प्रथम काण्डिका।



एवन्तावत् द्वितीये प्रपाठके शिष्यजिज्ञासानुरोधाद्विवाहमेवादितः सूचयित्वा गर्भाधानाद्युपनयनान्तः संस्कारकलापः सूचितः। अथेदानीमुपनयनान्तसंस्कारसंस्कृतेन ब्रह्मचारिणा गुरौ वसता साङ्गोवेदोऽधिगन्तव्यः। तथाच मनुः।

"कृतोपनयनस्यास्य व्रतादेशन मिष्यते।
ब्रह्मणो ग्रहणञ्चैव क्रमेण विधिपूर्वकम्"।

इति।

"अनेन क्रमयोगेन संस्कृतात्मा द्विजः शनैः।
गुरौ वसन् सञ्चिनुयाद् ब्रह्माधिगमिकन्तपः"।

इति च। तथा चोक्तम्। "संस्कारस्य तदर्थत्वाद्विद्यायां पुरुषश्रुतिः"—इति। अतस्तस्य प्रतिपिपादयिषया तावदिदमुपक्रमते,—

**अथातः षोड़शे वर्षे गोदानम्॥ १॥**

अथ शब्दः पूर्वप्रकृतजन्मकालानुकर्षणार्थः। अथ,—जन्मकालादारभ्य षोड़शे वर्षे गोदानम्, न पुनरानन्तर्य्यादुपनयनकालात्—इति। अथवा। "गर्भादिसङ्ख्या वर्षाणाम्"—इति सूत्रान्तराद् गर्भकाल एवाथशब्देन परामृश्यते। तेनोपनयनवदिदमपि गर्भावधिगणनयैव षोड़शे वर्षे स्यात्। षष्ठियादेः कालविशेषद्योत-

गार्थो वा अथशब्दो वर्णनीयः। कथन्नाम? । ब्राह्मणस्य षोड़शे-वर्षे गोदानम्, क्षत्रियस्य द्वाविंशे, वैश्यस्य चतुर्व्विंशे,—इति। तथाच मनोः स्मरणम्।

"केशान्तः षोड़शे वर्षे ब्राह्मणस्य विधीयते।

राजन्यबन्धो र्द्वाविंशे वैश्यस्य द्व्यधिके ततः"।

इति। अतः शब्दो हेत्वर्थः। यस्मात्,—

"योऽनधीत्य द्विजो वेद मन्यत्र कुरुते श्रमम्।

स जीवन्नेव शूद्रत्व माशु गच्छति सान्वयः"।

इत्येवमादिस्मरणाद् वेदाध्ययनमवश्यं कर्त्तव्यम्। यस्माच्च,—

"तपोविशेषै र्व्विविधै र्व्रतैश्च विधिदेशितैः।

वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना"।

इत्यादिवचनाद् व्रताचरणपूर्व्वकत्वं तदध्ययनस्य। अतः एतस्मात् कारणात्, षोड़शे वर्षे गोदानं नाम व्रतं कर्त्तव्यम्। गोदानमिति व्रतस्य नामधेयम्—इति व्याख्यातारः। ततश्च, इतः पूर्व्वमुपात्त-स्योपनयनव्रतस्यायमवधिः—इत्यवगम्यते। एवञ्च, ब्राह्मणस्याष्ट-वार्षिकमुपनयनव्रतं भवति, क्षत्रियस्यैकादशवार्षिकम्, वैश्यस्य द्वादशवार्षिकम्,—इति सिद्ध्यति।

"ब्रह्मवर्च्चसकामस्य कार्य्यं विप्रस्य पञ्चमे।

राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे"।

इत्येतस्मिंश्च पक्षे ब्राह्मणस्यैकादशवार्षिकम्, क्षत्रियवैश्ययोश्च षोड़शवार्षिकमुपनयनव्रतम्। उपनयनकालातिपाते तु सर्व्वेषां न्यूनतरमपि,—इत्यवगन्तव्यम्। अथवा। यतः "नाचरिष्यन्तं

सम्वत्सरमुपनयेत्"—इति सम्वत्सरमात्रव्रताचरणस्यात्यन्तमावश्य-कत्वं सूचयिष्यति, अतः कारणात् सम्वत्सरव्रताचरणात् परमर्व्वा-गपि षोड़शाद्वर्षात्, षोड़शवर्षोपनीतस्य च सम्वत्सरव्रताचरणानु-रोधात् परतोपि षोड़शाद्वर्षात् गोदानं कर्त्तव्यम्। तस्मान्नाय-मवश्यं कालनियमः,—षोड़शे वर्षे गोदानम्—इति। एवञ्च पुरु-षशक्तिशीलदेशकालवयोऽवस्थाविशेषेण कालव्यवस्था बोद्धव्या। एवं चत्रियवैश्ययोरपि द्रष्टव्यम्—इत्यतः शब्दस्यार्थः। तत्र तावदुपनयनव्रतं साविच्या अध्ययनार्थं सहप्रवचनस्याख्यायते। उपनयनव्रतसमकालमेव सावित्रीप्रवचनोपदेशात्। गोदानादीनि व्रतानि देवपर्व्वादीनां वेदानामध्ययनार्थानि अनुप्रवचनीयानि प्रोच्यन्ते। अमीषां व्रतानां पश्चादेव तत्तद्वेदभागानां प्रवच-नस्योपदेशात्। गुरुश्चैतावता कालेन ब्रह्मचारिणं शौचाचा-रादिकं शिक्षयेत्। तथाच मनुः।

"उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः।
आचारमग्निकार्य्यञ्च सन्ध्योपासनमेवच"।

इति ॥०॥ १ ॥०॥

## चूड़ाकरणेन केशान्तकरणं व्याख्यातम् ॥ २ ॥

गोदानव्रते यत् केशान्तकरणं केशानामन्तकरणं विनाशकरणं छेदनमित्येतत्। तत् चूड़ाकरणेन पूर्व्वोक्तेन व्याख्यातं कथितम्—इति केशान्तकरणे चूड़ाकरणधर्म्मा अतिदिश्यन्ते। तेनात्रापि शिरोऽभितः पश्चाद्भागकेशानां कपुष्णिकाकपुच्छलाख्यानां

चूड़ाकरणोक्तरीत्या च्छेदनं कर्त्तव्यम्। एवञ्चोपनयनव्रतान्ते ब्रह्मचारिणः कियन्तमपि कालं वपनं न कर्त्तव्यम्। अन्यथा पिञ्जूलीभिः सह कपुष्णिकाकपुच्छलग्रहणच्छेदनादि कर्त्तुमशक्यं स्यात्। अथाच कर्म्मप्रदीपः।

"वपनं नास्यकर्त्तव्यमर्व्वाक् गोदानिकाद्व्रतात्।
व्रतिनो वत्सरं यावत् षण्मासानिति गोतमः"।

इति ॥०॥ २ ॥०॥

समस्तचूड़ाकरणधर्म्मातिदेशे प्राप्ते विशेषोऽभिधीयते,—

## ब्रह्मचारी केशान्तान् कारयते ॥ ३ ॥

ब्रह्मचारी स्वयमेव केशान्तान् कारयते न माता। कथन्नाम?। चूड़ाकरणे तावत् माता कुमारमङ्के कृत्वोपविशति, तथागतञ्च तमन्यः संस्करोति। केशान्तकरणे तु न ब्रह्मचारी मातुरङ्कगतो भवति। अकुमारत्वेनायुक्तत्वात्। गुरुकुले चेदानीमस्यावस्थानात्। स खल्वयं स्वयमेव कारयते न मातेत्ययमर्थः।

एवं वा—

चूड़ाकरणे कुशलीकारयन्ति—इति बहुवचनाद् वापनकर्त्तुर नियम उक्तः। केशान्तकरणे तु ब्रह्मचारिणः स्वयमेव वापन क्रिया नियम्यते ॥०॥ ३ ॥०॥

अयञ्च विशेषः,—

**सर्व्वाण्यङ्गलोमानि संहारयते ॥ ४ ॥**

संहारो विनाशोवपनमित्यनर्थान्तरम्। ऋज्वन्यत् ॥०॥ ४ ॥०॥

अयमपि विशेषः,—

**गोमिथुनं दक्षिणा ब्राह्मणस्य ॥ ५ ॥**

मिथुनं स्त्रीपुंसौ ॥०॥ ५ ॥०॥

**अश्वमिथुनं क्षत्रियस्य ॥ ६ ॥**

दक्षिणा ॥०॥ ६ ॥०॥

**अविमिथुनं वैश्यस्य ॥ ७ ॥**

दक्षिणा—इत्येव। अवि मेषः ॥०॥ ७ ॥०॥

**गौर्व्वैव सर्व्वेषाम् ॥ ८ ॥**

यथोक्तदक्षिणाया अलाभे गौरेव वा सर्वेषां ब्राह्मणादीनां दक्षिणा भवति। दक्षिणा चेयमाचार्य्यस्यैव न ब्रह्मणः। कस्मात्?। तस्यैवोपनयन केशान्तकरणादि कर्म्मोपदेशात्। कर्म्ममूल्यत्वाच्चास्याः। वक्ष्यतिचाचार्य्यः,—"आच्छादयेद्गुरुमित्येके"—इति। "आचार्य्य सकाशे वाचं विसृजेत,—वरं ददामीति, गोमिथुनं दक्षिणा"—इति ग्रन्थान्तरे चाचार्य्यायैव केशान्तकरणदक्षिणादानावगतेः। ब्रह्मणस्तु पूर्णपात्रादिका दक्षिणा स्यात्। भिक्षोरपि ब्रह्मचारिणः प्रावरणादिव द्गोमिथुनादे र्नासम्भवः—इति द्रष्टव्यम् ॥०॥ ८ ॥०॥

अयमप्यपरो विशेषः,—

अजः केशप्रतिग्राहाय॥ ९ ॥

केशान् यः प्रतिगृह्णाति वपनार्थम्, स खल्वयं केशप्रतिग्राहो-वपनकर्त्ता नापितो भण्यते। तस्मै कर्म्ममूल्यमजो देयः। एवञ्च अत्र ओदनादिपाचकस्वरासादनं न स्यात्, तेषां मूल्यार्थत्वात् इह च मूल्यान्तरस्योपदेशात्। अत्र गोदानव्रताङ्गस्य केशान्त-करणकर्म्मणः परिसमाप्तिः॥०॥ ९ ॥०॥

इदानीं गोदानादीनां सर्व्वेषामेव व्रतानां साधारणीं परिभाषां वक्तुमारभते,—

उपनयनेनैवोपनयनं व्याख्यातम्॥ १० ॥

उपनयनेनैव पूर्व्वोक्तेन उपनयनं गोदानादिव्रताङ्गं व्याख्यातं कथितम्॥०॥ १० ॥०॥

तत्रापि कश्चिद्विशेषमाह,—

न त्विहाहतं वासो नियुक्तम्॥ ११ ॥

इह गोदानादिव्रताङ्गोपनयने पुन रहतं वासो न नियुक्तं न नि-यमितम्—इति नियमे प्राप्ते अनियम उच्यते। तेन पूर्वस्मिन्नुप-नयनेऽहतस्य वाससो नियमोऽवगम्यते॥०॥ ११ ॥०॥

नालङ्कारः॥ १२ ॥

इह नियुक्तः॥०॥ १२ ॥०॥

## नाचरिष्यन्तं सम्वत्सरमुपनयेत् ॥ १३ ॥

सम्वत्सरमपि यो न व्रतं चरिष्यति तं नोपनयेदित्याचार्य्यस्यायं नियमश्चोद्यते। ब्रह्मचारिणोऽप्यर्थान्नियमः सिध्यति। स खल्वयं नियमो गोदानिकएवोपनयने स्यात्। कुतः?। अत्रैवोपदेशात्। तस्मात् सम्वत्सरमपि व्रतं यो न चरिष्यति, तस्यापि प्राचीनमुपनयनं भवति॥ अथवा। प्रकरणादेवैतस्मिन्नुपनयने प्राप्ते पुनरुपनयनग्रहणं सामान्यार्थम्। तस्मात् प्राचीनेऽप्युपनयनेऽयं नियमः। तेन यस्यापि षोड़शे वर्षे उपनयनं, तस्यापि सम्वत्सरव्रतचरणात् परत उपरिष्टादपि षोड़शाद्वर्षाद्गोदानं स्यात्, न तु षोड़श एव वर्षे—इति बोद्धव्यम्। परतो वक्ष्यमाणा अपि धर्म्माः सामान्यगोचरा एवेति वक्ष्यामः ॥०॥ १३ ॥०॥

## वार्क्षञ्चास्मै दण्डं प्रयच्छन्नादिशति ॥ १४ ॥

ऋजु रक्षरार्थः। दण्डं प्रयच्छन्—इत्यनूद्यते क्रमार्थम्। कथं नाम?। दण्डं प्रकर्षेण यच्छन्नेवादिशति, न तु विलम्बेत—इत्यर्थः। दण्डमन्त्रवाचनात् परतः खल्वादेशा बोद्धव्याः। कुतः?। प्रशब्दस्वरसात्। दण्डं प्रयच्छन्नित्येतावतैव निर्व्वाहे गुरुकरणं निर्द्देशसामान्यात् पूर्व्वोक्तस्मारणार्थम्। तेन प्राचीनेऽप्युपनयने दण्डप्रदानात् परममी आदेशा भवन्ति। तस्मात् सामान्यधर्म्मत्वममीषामिति सिद्धम्॥ १४ ॥

ते खल्वादेशाः द्वादशभिः सूत्रै रभिधीयन्ते,—

## आचार्य्याधीनो भवान्यत्राधर्म्मचरणात् ॥ १५ ॥

अधीनो निघ्न आयत्तः—इत्यनर्थान्तरम्। अधर्म्मचरणादन्यत्राचार्य्यस्याधीनो भव,—अधर्म्मसंयुक्तमाचार्य्यस्यादेशमपि माकार्षीरित्यर्थः ॥०॥ १५ ॥०॥

## क्रोधानृते वर्ज्जय ॥ १६ ॥

स्पष्टार्थं सूत्रम् ॥०॥ १६ ॥०॥

## मैथुनम् ॥ १७ ॥

वर्ज्जय—इतोदमितः प्रभृतिसर्व्वत्रानुषञ्जनीयम्। मैथुनं व्यवायः ॥०॥ १७ ॥०॥

## उपरि शय्याम् ॥ १८ ॥

उपरि शय्याम् आचार्य्यशय्याया उच्चतरां शय्यां वर्ज्जय। तथाच मनुः।

"नीचं शय्यासनञ्चास्य सर्व्वदा गुरुसन्निधौ"।

इति। एवं वा—

उपरि खट्टादौ शय्यां वर्ज्जय। तदनेनाधोभूमावेव शय्या कर्त्तव्येत्युपदिशति। तदप्याह मनुः।

"अग्नीन्धनं भैक्षचर्य्या मधःशय्यां गुरोर्हितम्।
आसमावर्त्तनात् कुर्य्यात् कृतोपनयनो द्विजः"।

इति ॥०॥ १८ ॥०॥

## कौशीलवगन्धाञ्जनानि ॥ १९ ॥

कौशीलवं नृत्यगीतवादित्रम्। गन्धो घृष्टोमलयजः। अञ्जनम-क्ष्णोर्यद्दीयते। एतानि वर्ज्जयं। तथाच मनुः।

"अभ्यङ्ग मञ्जनञ्चाक्ष्णोरुपानच्छत्रधारणम्।
कामं क्रोधञ्च लोभञ्च नर्त्तनं गीतवादनम्"।

इति ॥०॥ १९ ॥०॥

## स्नानम् ॥ २० ॥

वर्ज्जयं। सुखार्थस्नानस्यायं प्रतिषेधो न वैधस्य। तेन वैधस्नानं कर्त्तव्यमेव। तथाच सूत्रान्तरम्। "नाप्सु श्लाघमानः स्नायात्" —इति। "कालद्वयमभिषेकाग्निकार्य्यकरणम्"—इति चैवमादि। वक्ष्यति चाचार्य्यो नित्यधर्म्मेषु,—"उदकोपस्पर्शन प्रातरभिवादाः" —इति। अथवा। स्नाने गात्रोत्सादनादिकमेवानेन निषिध्यते न तु स्नानमिति बोद्धव्यम्। कुतः ?। "अप्सु दण्डवन्मज्जनम्"— इति सूत्रान्तरात्। तथाच कर्म्मप्रदीपः।

"नगात्रोत्सादनं कुर्य्यादनापदि कथञ्चन।
जलक्रियामलङ्कारं व्रती दण्डइवाप्लवेत्"।

इति ॥०॥ २० ॥०॥

## अवलेखन दन्तप्रक्षालन पादप्रक्षालनानि ॥ २१ ॥

वर्ज्जयं। अवलेखनं कङ्कतिकादिना शिरसः, भूमेर्व्वा नि-ष्प्रयोजनम्। दन्तप्रक्षालनं दन्तानां प्रकर्षेण क्षालनं दन्तधावनं—

पत्रकाष्ठादिना दन्तघर्षणमित्येतत्। पादप्रक्षालनम्—उद्वर्त्तन-पूर्व्वकं सुखार्थं यत् क्रियते। पादेन वा पादस्य प्रक्षालनं वर्ण-नीयम्। "पादेन नाक्रमेत् पादम्"—इति स्मरणात्॥०॥२१॥०॥

## क्षुरकृत्यम्॥ २२॥

वर्ज्जय। पाक्षिकोऽयं क्षुरकृत्यप्रतिषेधो बोद्धव्यः। कुतः?।

"सशिखं वपनं कार्य्यमास्नानाद्ब्रह्मचारिणाम्"।

इति कर्म्मप्रदीपे सशिखवपनस्योपदेशात्।

"वपनं नास्य कर्त्तव्यमर्व्वाक् गोदानिकाद्व्रतात्।

व्रतिनोवत्सरं यावत् षण्मासानितिगोतमः"।

इति च वपनावगतेः। स खल्वयमाचार्य्यस्यास्पष्टोऽभिप्रायः परिशिष्टकृता स्पष्टीकृतः। तथाच गोतमसूत्रम्। "मुण्डजटिल शिखाजटाश्च"—इति। मनुरपि स्मरति।

"मुण्डो वा जटिलो वा स्यादथवा स्याच्छिखाजटः"।

इति। अथवा। क्षुरकृत्यप्रतिषेधान्मुण्डनविधानाच्च मुण्डनं कर्त्त-व्यमेव, तदन्यत् क्षुरकृत्यम् (अङ्गलोमसंहारादिकम्) नकर्त्तव्य-मित्ययं सूत्रार्थः॥०॥ २२ ॥०॥

## मधुमांसे॥ २३॥

वर्ज्जय॥०॥ २३ ॥०॥

## गोयुक्तारोहणम्॥ २४॥

गोयुक्तस्य शकटादेरारोहणं वर्ज्जय॥०॥ २४ ॥०॥

अन्तर्ग्राम उपानहोर्धारणम् ॥ २५ ॥

अन्तःशब्दो मध्यवचनः। अन्तर्ग्रामे ग्राममध्ये, उपानहौ प्रसिद्धे, तयोर्धारणं वर्ज्जय। ग्राममध्ये उपानद्धारणं माकार्षीरित्यर्थः ॥०॥ २५ ॥०॥

बहुत्वाद्ब्रह्मचारिधर्म्माणां प्रत्येकमुपदेशे ग्रन्थगौरवं मन्यमानः खल्वाचार्य्यो लाघवार्थमिदमुपदिशति,—

स्वयमिन्द्रियमोचनमिति ॥ २६ ॥

स्वयमात्मना कामतः—इत्येतत्। इन्द्रियमोचनम्। इन्द्रियाणि श्रोत्रादीन्येकादश प्रसिद्धानि। तेषां मोचनं मोक्षणं—प्रतिषिद्धस्वगोचरकर्म्मस्वनिवारणबुद्ध्या प्रवर्त्तनम्—इति यावत्। तत् वर्ज्जय। तदनेनैतदुक्तं भवति। 'नाचार्य्यनिन्दां शृणुयात्'—इति प्रतिषिद्धः खल्वसौ ब्रह्मचारी न केवलं तामेव कामतो न शृणुयात्, अपितु यत्र तत्श्रवणमेव न स्यात् तत्र तिष्ठेत्। तथाच मनुः।

"गुरोर्यत्र परीवादो निन्दा वाऽपि प्रवर्त्तते।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः"।

इति। एवं चक्षुरादीन्यपि परस्त्रीप्रेक्षणाद्यर्थं प्रवृत्तानि निवर्त्तयेत्। तदप्याह स एव।

"द्यूतञ्च जनवादञ्च परिवादं तथाऽनृतम्।
स्त्रीणाञ्च प्रेक्षणालम्भमुपघातं परस्य च"।

इति। एवं वा,—

स्वयमिन्द्रियमोचनं कामतो रेतःस्कन्दनं वर्ज्जयेत्। यद्यपि,—

"स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः।
स्नात्वाऽर्कमर्च्चयित्वा त्रिः पुनर्म्मामित्यृचं जपेत्"।

इत्यकामतोऽपि रेतःस्कन्दनं मनुना निषिद्धम्। तथाप्येतदधिकदोषकरं व्रतहानिकरं वा वर्णनीयम्। यस्मान्मनुरेवाह।

"एकः शयीत सर्वत्र न रेतः स्कन्दयेत् क्वचित्।
कामाद्धि स्कन्दयन् रेतो हिनस्ति व्रतमात्मनः"।

इति। इतिकरणमादेशपरिसमाप्त्यर्थम् ॥०॥ २६ ॥०॥

इदानीं मन्यानपि व्रतधर्म्मानुपदिशति,—

**मेखलाधारणभैक्षचर्य्यदण्डधारणसमिदाधानोदकोपस्पर्शनप्रातरभिवादा इत्येते नित्यधर्म्माः॥२७॥**

मेखलायाः—विशेषानुपदेशात् पूर्व्वोक्तलक्षणाया धारणम्। तथाच मनुः।

"यत् यस्य विहितं चर्म्म यत् सूत्रं या च मेखला।
यो दण्डो यच्च वसनं तत्तदस्य व्रतेष्वपि"।

इति। भैक्षचर्य्यं भैक्षचरणम्—वेदयज्ञादिमतां गृहेषु। भैक्षचर्य्या—इति पाठे व्यक्त एवार्थः। तदाह मनुः।

"वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्म्मसु।
ब्रह्मचार्य्याहरेद्भैक्षं गृहेभ्यः प्रयतोऽन्वहम्।
गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु।
अलाभे त्वन्यगेहानां पूर्वं पूर्वं विवर्ज्जयेत्।

सर्वं वाऽपि चरेद्ग्रामं पूर्वोक्तानामसम्भवे।
नियम्य प्रयतोवाचमभिशस्तांस्तु वर्ज्जयेत्" ।

इति। तस्मात्,—अत्रापि पूर्वोक्तोपनयनवत्तत्रस्थस्यैव ब्रह्मचारिणो भैक्षचर्य्या न स्थानान्तरं गतस्य—इत्यसङ्गतं वचनम्। दण्डधारणं दण्डस्य पूर्वोक्तलक्षणस्य धारणम्। समिदाधानमधस्ताद्व्याख्यातम्। उदकोपस्पर्शनं स्नानम्। तच्च सायंप्रातर्दण्डवदाप्लवनम्। वक्ष्यतिचाचार्य्यः "तेषु सायं प्रातरुदकोपस्पर्शनम्"—इति। प्रातरभिवादः पादग्रहणं गुरोरित्येतत्। तच्च,—

"व्यत्यस्तपाणिना कार्य्यमुपसंग्रहणं गुरोः।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः" ।

इति।

"उत्तानाभ्याञ्च हस्ताभ्यां पादावस्य मृदु स्पृशेत्।
दक्षिणं दक्षिणेनैव सव्यं सव्येन पीड़येत्" ।

इति चैवमादि स्मृत्यन्तरोक्तप्रकारेण करणीयम्। अभिवादनविधिरपि मनूक्त एवादरणीयः। यथा मनुः।

"अभिवादात् परं विप्रो ज्यायांसमभिवादयन्।
असौनामाहमस्मीति स्वं नाम परिकीर्त्तयेत्" ।

इति।

"भोः शब्दं कीर्त्तयेदन्ते स्वस्य नाम्नोऽभिवादने।
नाम्नां स्वरूपभावो हि भोभाव ऋषिभिः स्मृतः"।

इति च। ज्येष्ठमभिवादयन् विप्रः अभिवादात्—पादग्रहणात् परम् अमुकनामाहमस्मि—इति स्वं नाम कीर्त्तयेत्, अन्ते च

भोःशब्दम्—इति वचनयोरर्थः। तेन पादग्रहणानन्तरं अमुक नामाहमस्मि भोः—इति कथयेत्। यच्च,—अभिवादये अमुक शर्म्माहमस्मि भोः—इत्युच्चार्य्य अभिवादनं कर्त्तव्यम्—इति रघुनन्दनादीनां मतम्। तदसङ्गतम्। अभिवादये—इत्युल्लेखे प्रमाणाभावात्। 'अभिवादात् परम्'—इत्यादिना पादग्रहणादनन्तरमेव नामकीर्त्तनस्योपदेशाच्च। यदपि,—अभिवादात् परम्—इत्यस्य अभिवादये—इति शब्दोच्चारणात् परम्—इति व्याख्यानम्। तदप्यसङ्गतम्। प्रमाणाभावात्। लक्षणाप्रसङ्गाच्च। श्रुतिलक्षणा विषये च श्रुतिं ज्यायसीमवोचाम। सा खल्वियं वर्णना भवतामेव यदृच्छापरिकल्पिता भवेत्, न तु मुनेरनुमता। मुनिवचनस्योपरुध्य यदृच्छया परिकल्पनं भवतामप्यनुचितमेव। अतएव "असावहम्भोः—इत्यात्मनो नामादिशेत्"—इत्येवमादि स्मृत्यन्तरेष्वपि अभिवादनवाक्ये, अभिवादये—इति पदप्रयोगो नानुशिष्यते। मिताक्षरादीपकलिकादिष्वपि अभिवादये—इति प्रयोगो न दृश्यते।

अभिवादयन्—इति तु वर्त्तमानसामीप्ये वर्त्तमानवदुपदेशः। एतच्च भवतापि वाच्यम्। हेत्वर्थे वा शता वर्णनीयः। ततश्चाभिवादनस्य नामकीर्त्तनहेतुत्ववचनात् हेतोश्च पूर्ववर्त्तित्वनियमात् अभिवादात् परमित्यस्यास्मदुक्तमेव व्याख्यानमादरणीयम्। यच्च गौतमसूत्रम्—"स्वनाम प्रोच्यायमहमित्यभिवादोऽज्ञसमवाये"—इति। तदज्ञाभिवादनविषयत्वादेव न प्राज्ञाभिवादनविषयम्। अतएव मनुनापि,—

"नामधेयस्य ये केचिदभिवादं न जानते ।
तान् प्राज्ञोऽहमिति ब्रूयात् स्त्रियः सर्वा स्तथैवच" ।

इत्यत्राभिवादे भोःशब्दो नाभिहितः । ततश्च अमुकोऽयमहम्— इत्यत्राभिवादनप्रयोगः । इदं गोतमसूत्रं कैश्चित् कल्पनाकुशलै राकुलीकृत्य पठितम्—'स्वनाम प्रोच्याहमभिवादये इत्यभिवदेत्'—इति । तदनाकरम् ।

यच्चापरमुक्तम्,—मनुवचने नामशब्दस्य नामविशेषार्थत्वात् अभिवादनवाक्ये नामशब्दोल्लेखोऽप्रमाणः—इति । तदप्ययुक्तम् । स्वं नाम—इति नामशब्दस्य नामविशेषार्थत्वेपि, असौनामाहम्—इति नामशब्दस्यानन्यप्रयोजनत्वात् । अन्यथा नामशब्दस्य द्विरुच्चारणानुपपत्तेः । कण्ठतश्चाभिधानात् । असौनामाहमस्मि—इति—एवं स्वं नाम कीर्त्तयेत्—इति कण्ठत एव नामशब्दस्याप्युल्लेखोऽनुशिष्यते । तस्मा न्न किञ्चिदेतत् । अलमतिप्रसङ्गेन ? । सूत्रशेषमिदानीं वर्णयामहे ।

एते मेखलाधारणादयोऽभिवादान्ताः नित्यधर्म्मा अहरहरनुष्ठेयाः—इत्यर्थः । धर्म्मपदोपादानाच्च व्रतस्यैवैते नित्यधर्म्माः न पुन र्यावज्जीवमनुष्ठेयाः—इत्यवगम्यते । इति करणादन्येपि,—

"नित्यं स्नात्वा शुचिः कुर्य्याद्देवर्षिपितृतर्पणम्" ।

इत्येवमादयः स्मृत्यन्तरोक्ता धर्म्माः संगृह्यन्ते ॥०॥ २७ ॥०॥

कानि पुन स्तानि व्रतानि—येषां गोदानप्रसङ्गेनायं साधारणधर्म्मोपदेशः ? । कियन्तञ्च कालं कर्त्तव्यानि ? । उच्यते ।

गोदानिकव्रातिकादित्यव्रतौपनिषदज्यैष्ठसामिकाः सम्वत्सराः ॥ २८ ॥

ऋजु रचरार्थः। ननु 'नाचरिष्यन्तं सम्वत्सरमुपनयेत्'—इत्यनेन गतार्थत्वात् किमर्थमत्र गोदानग्रहणम्?। दृष्टान्तार्थम्—इति ब्रूमः। कथन्नाम?। यथा गोदानिके व्रतादेशादि, तथा एतेष्वपि स्यात्—इति। अथवा। नाचरिष्यन्तम्—इत्यनेन सर्वत्रैव सम्वत्सरव्रते प्राप्ते गोदानादीनां परिगणना क्रियते; सुखाववोधार्थम् आदरार्थम् महानाम्निकव्रतस्य कालविशेषद्योतनार्थञ्च—इति न किञ्चिदनुचितम्। तत्र, उपनयनव्रतन्तावत् सावित्र्या अध्ययनार्थमुक्तम्। गोदानव्रतमाग्नेयैन्द्रपावमानानां देवपर्वणाम्, व्रातिकव्रतमारण्यकस्य शुक्रियवर्ज्जस्य, आदित्यव्रतं शुक्रियाणाम्, औपनिषदव्रतमुपनिषद्ब्राह्मणस्य, ज्यैष्ठसामिकव्रतमाज्यदोहानामध्ययनार्थम्—इति बोद्धव्यम्। ननु, 'चत्वारि वेदव्रतानि'—इति गौतमेन पुरुषसंस्कारमध्ये पाठात् कथममीषामध्ययनार्थत्वमुच्यते?। नैष दोषः।

"तपोविशेषै र्विविधै र्व्रतैश्च विधिदेशितैः।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना"।

इति मनुनाऽध्ययनार्थत्वस्याप्यमीषामुपदेशात्। तस्मात् पुरुषार्थानामेव सतामेषां संयोगपृथक्त्वन्यायेनाध्ययनार्थत्वमप्यादरणीयम् ॥०॥ २८ ॥०॥

पुनरपि साधारणधर्ममुपदिशति,—

तेषु सायं प्रातरुदकोपस्पर्शनम् ॥ २९ ॥

व्याख्यातोऽक्षरार्थः। सायं प्रातः—इति गुणविधानार्थमुदकोपस्पर्शनमिति विहितमनूद्यते,—इति बोद्धव्यम्। पूर्वमुदकोपस्पर्शनं कृतमूत्रपुरीषस्य मूत्रपुरीषलिप्ताङ्गस्य वा शौचसम्पत्त्यर्थम्, अयन्तु स्नानविधिः—इति वा वर्णनीयम् ॥०॥ २९ ॥०॥

आदित्यव्रतन्तु न चरन्त्येके ॥ ३० ॥

एके शाखिन आदित्यव्रतं न चरन्ति। तुशब्दो विशेषद्योतनार्थः। कः पुनरसौ?। उच्यते। येषां किल शाखिनामारण्यकान्तर्भूतानि शुक्रियाणि व्यस्तानि पठ्यन्ते, ते तावदादित्यव्रतं न चरन्ति। कस्मात्?। आरण्यकाध्ययनेनैव तेषामधीतत्वात्। येषान्तु पुनः कौथुमादीनामारण्यकात् पृथगेव शुक्रियाणि पठ्यन्ते, ते खलु शुक्रियाणामध्ययनार्थं मादित्यव्रतं चरन्ति। स खल्वयं विनिवेशविकल्पः तुशब्देन द्योत्यते ॥०॥ ३० ॥०॥

ये पुनरादित्यव्रतं चरन्ति, तेषां विशेषधर्मानुपदिशति,—

ये चरन्त्येकवाससो भवन्ति ॥ ३१ ॥

ये शाखिन चरन्त्यादित्यव्रतं ते खल्वेकवाससो भवन्ति। एकमेव वासो येषां त इमे एकवाससः। अधरीयमेकमेव तेषां वासः, न पुनरुत्तरीयमजिनमपीत्यर्थः ॥०॥ ३१ ॥०॥

आदित्यञ्च नान्तर्दधतेऽन्यत्र वृक्षशरणाभ्याम् ॥३२॥

वृक्षः प्रसिद्धः। शरणं गृहम्। वृक्षशरणाभ्यामन्यत्रादित्यं नान्तर्दधते नापवारयन्ति नाच्छादयन्ति,—इत्येतत्। के?। ये चरन्त्यादित्यव्रतम्। एवमुत्तरत्रापि। तथाच, वृक्षशरणयोश्छायां वर्ज्जयित्वा ग्रीष्मधर्म्मतप्तैरप्यादित्यव्रतचारिभि श्छत्रादिना नादित्योऽन्तर्धातव्यः—इत्यर्थः ॥०॥ ३२ ॥०॥

नापोऽभ्यवयन्त्यूर्द्धं जानुभ्यामगुरुप्रयुक्ताः ॥ ३३ ॥

जानुभ्यामूर्द्धं अप उदकं नाभ्यवयन्ति नावतरन्ति। किं नित्यवदेव नावतरन्ति?। न। किन्तर्हि?। उच्यते। अगुरुप्रयुक्ताः। गुरुभिः प्रयुक्ताः गुरुप्रयुक्ताः ते न भवन्ति,—इत्यगुरुप्रयुक्ताः। अगुरुप्रयुक्ताः खल्वादित्यव्रतचारिणो जानुभ्यामुर्द्धमपो नाभ्यवयन्ति। गुरुप्रयुक्तास्तु तदभ्यवयन्तोपि न प्रत्यवायभाजो भवन्ति,—इति गुर्व्वाज्ञया दोषाभावं दर्शयति ॥०॥ ३३ ॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये तृतीयप्रपाठकस्य प्रथमकाण्डिका ॥०॥

---

तृतीयप्रपाठके द्वितीया काण्डिका।

---

आदित्यव्रतात् परमध्ययनक्रमा न्माहानाम्निकेन व्रतेन भवितव्यम्। औपनिषदज्येष्ठसामिकव्रतयोस्तु कालादीनां सामान्यात् लाघवार्थः प्रासङ्गिक एवास्मिन् क्रमे उपन्यासः। महानाम्निकव्रतस्य तु कालक्रियाकलापयोर्वैशिष्ट्यात् स्वे क्रमे उपन्यासो न कृतः। अतः पृथगुपदिशति,—

द्वादश महानाम्निकाः सम्वत्सराः॥ १॥

महानाम्नीनामध्ययनार्था महानाम्निकाः द्वादश सम्वत्सराः भवन्ति ॥०॥ १ ॥०॥

नव षट् त्रयः॥ २॥

महानाम्निकाः सम्वत्सराः भवन्ति ॥०॥ २ ॥०॥

इति विकल्पः॥ ३॥

इत्येतेषां चतुर्णां पक्षाणां विकल्पो बोद्धव्यः। स खल्वयं विकल्पो-नैच्छिकः दोषाष्टकयोगात्। किन्तु व्यवस्थितः। कथन्नाम?। पुरुषशक्तिशीलकालवयोऽवस्थाविशेषापेक्षया एते विकल्पा भवन्ति।

अथवा। पूर्वपूर्वकल्पेषु कृच्छ्रभूयस्त्वात् फलभूयस्त्वं कल्पनीयम्। तथाच कर्म्मप्रदीपः।

"यत्र स्यात् कृच्छ्रभूयस्त्वं श्रेयसोऽपि मनीषिणः।
भूयस्त्वं ब्रुवते तत्र कृच्छ्रात् श्रेयो ह्यवाप्यते"।

इति। एवञ्च सर्वान् पुरुषान् प्रत्यविशेषेणामी विकल्पा भवन्ति न तु पुरुषशक्त्याद्यपेक्षया—इति सिद्धम्। अस्मिंस्तु पक्षे पूर्वत्र प्रत्येकं वाशब्दा लुप्तवत् द्रष्टव्यः। कथन्नाम?। द्वादश वा नव वा षट् वा त्रयो वा महानाम्निकाः सम्वत्सरा भवन्ति—इति ॥०॥ ३ ॥०॥

## सम्वत्सरमप्येके ॥ ४ ॥

सम्वत्सरमात्रमपि महानाम्निकव्रतमेके आचार्य्या मन्यन्ते ॥०॥ ४ ॥०॥

## व्रतन्तु भूयः ॥ ५ ॥

तुशब्दः पूर्व्वेषां पक्षाणां व्यवच्छेदार्थः। कथन्नाम?। सम्वत्सरमात्र पक्षे व्रतं भूयो बहुतरं भवति न पूर्व्वेषु पक्षेषु। किमनेनोक्तं भवति?। एतदनेनोक्तं भवति। येऽप्यत्रानियता धर्म्मा वक्ष्यन्ते,—"अनियमो वा कृष्णस्थानाशनपन्थभक्षेषु"—इति, तेऽपि वार्षिकव्रतचर्य्यापक्षे नियमेनानुष्ठेयाः, पूर्व्वेषु तु पक्षेष्वनियम एव—इति। तुशब्दो विशेषार्थो वा। सम्वत्सरव्रतचर्य्यापक्षे विशेषेण नियमेन बहुतरं व्रतं भवति—इत्यत्रापि पूर्व्ववदेवार्थः। अन्येतु तुशब्दं हेत्वर्थं मन्य-

आना वर्णयन्ति,—यस्मात् "तिष्ठेद्दिवा, आसीत नक्तम्"—इत्येवमादि विषमधर्म्मवत्त्वात् दुरनुष्ठेयं बहुकालमेतद्व्रतं, तस्मात् सम्वत्सरमात्रमनुष्ठेयम्—इत्येकेषां मतम्—इति ॥०॥ ५ ॥०॥

किं य एव कश्चित् सम्वत्सरपक्षेऽप्यधिक्रियते ?। न। कस्तर्हि ?। उच्यते।

## पूर्व्वैः श्रेक्रुतामहानाम्न्यः ॥ ६ ॥

पूर्वैः—बहुवचनात् पित्रादिभिः त्रिभिः पुरुषैः, यथोक्तव्रतचर्य्यापूर्वकमाचार्य्यस्यानुगमनं कुर्वद्भि र्महानाम्न्योऽध्ययनविशेषाः श्रुताश्चेदभूवन्, तदा खल्वसौ सम्वत्सरपक्षेऽप्यधिक्रियते, न य एव कश्चित् ॥०॥ ६ ॥०॥

## अथापि रौरुकिब्राह्मणं भवति ॥ ७ ॥

अथ एतस्मिन् महानाम्निकव्रतविषये रौरुकिब्राह्मणमपि भवति,—व्रतचर्य्याप्ररोचनार्थम्। (आभाषान्तं सूत्रम्) ॥०॥ ७ ॥०॥

## कुमारान् ह स्म वै मातरः पाययमाना आहुः ॥८॥

ह वै—इत्यनर्थकाविति ह्यार्थकौ वा निपातौ। कुमारान् उत्सङ्गगतान् स्तनन्धयान्, स्तन्यं पाययमाना मातरः आहुःस्म ब्रुवन्तिस्म किल। स्म—इत्ययमपि वाऽनर्थक एव निपातः ॥०॥ ८ ॥०॥

## शक्करीणां पुत्रका व्रतं पारयिष्णवो भवतेति ॥ ९ ॥

हे पुत्रकाः! शक्करीणां महानाम्नीनामध्ययनार्थं यदेतद्व्रतम्, तस्य

पारयिष्याव: समापयितारो भवत यूयम्। अनया अस्मदाशिषा महानाम्निकव्रतस्य पारं गन्तुं समर्था भवत,—इत्यर्थः। इति: ब्राह्मणवाक्यपरिसमाप्त्यर्थः ॥०॥ ९ ॥०॥

अथेदानीं महानाम्निकव्रतधर्मानाह,—

तास्वनुसवनमुदकोपस्पर्शनम् ॥ १० ॥

तासु शक्करीषु विषये—महानाम्निकव्रते—इत्येतत्। तासु शक्करीषु अधीयमानासु—इति केचित्। अनुसवनम्—सवनमनु लक्षी-कृत्यानुसवनम्—त्रिसन्ध्यमित्यर्थः। उदकोपस्पर्शनं स्नानं कर्त्तव्यम् ॥०॥ १० ॥०॥

नानुपस्पृश्य भोजनं प्रातः ॥ ११ ॥

अनुपस्पृश्य अस्नात्वा प्रातर्भोजनं न कर्त्तव्यं। प्रातःशब्दो दिवाव-चनः। उक्तमप्युपस्पर्शनं पुनरुच्यते,—अनुपस्पृश्य प्रातर्भोजने दोषातिशयप्रज्ञापनार्थमुपस्पर्शस्यावश्यकत्वोपदेशार्थञ्च ॥०॥ ११ ॥०॥

सायमुपस्पृश्याभोजनमासमिदाधानात् ॥ १२॥

उपस्पृश्य स्नात्वा आसमिदाधानात् समिदाधानपर्य्यन्तं सायमभोजनं कर्त्तव्यम्। सायं शब्दो रात्रिपरः ॥०॥ १२ ॥०॥

कृष्णवस्त्रः ॥ १३ ॥

कृष्णं मेचकं वस्त्रं यस्य सोऽयं कृष्णवस्त्रः, भवेत्—इति सूत्रशेषः ॥०॥ १३ ॥०॥

## कृष्णाभक्षः ॥ १४ ॥

भवेत्। केनाप्युपायेन ॥०॥ १४ ॥०॥

## आचार्य्याधीनः ॥ १५ ॥

भवेत्। उक्तमपि पुनरुच्यते, अतिशयेनाचार्य्याधीनत्वप्रज्ञापनार्थम्। कथन्नाम?। व्रतकर्म्माण्याचार्य्याविरोधेनैव कर्त्तव्यम्, मातृपितृ शुश्रूषाप्याचार्य्यानिसृष्टेन न कर्त्तव्या—इति। तथाच मनुः।

* "न चानिसृष्टो गुरुणा स्वान् गुरूनभिवादयेत्"।

इति। अथवा। अधर्म्मचरणादन्यत्राचार्य्याधीनत्वं पूर्वमुक्तम्, इह पुनरधर्म्मसंयुक्तस्याप्याचार्य्यादेशस्य परिपालनमनुशिष्यते—इति न किञ्चिदनुचितम्। आचार्य्येणानिसृष्टो ब्रह्मचारी स्वान् गुरून् नाभिवादयेत्—इत्यपि पूर्व्वेणैव गतार्थमितिबोद्धव्यम्। अतएव मनुना गुरौ वसतो ब्रह्मचारिणः सामान्यत एव तदभिहितम्॥०॥ १५ ॥०॥

## अपन्थदायी ॥ १६ ॥

पन्थानं दातुं शीलमस्येति पन्थदायी स न भवतीत्यपन्थदायी भवेत्। येषामपि,—

"चक्रिणो दशमीस्थस्य रोगिणो भारिणः स्त्रियाः।
स्नातकस्य च राज्ञश्च पन्था देयो वरस्य च"।

इत्येवमादि स्मृत्यन्तरेष पन्थदानमुपदिष्टं तेषामपि पन्था न देयः—इत्यर्थः ॥०॥ १६ ॥०॥

## तपस्वी ॥ १७ ॥

भवेत्। व्रतस्यापि तपस्त्वात् पुनरुपादानं व्रतव्यतिरिक्तमन्यदप्युपवासादिकन्तपः कुर्य्यादित्येवमर्थम्। अथवा।

"तपोविशेषै र्विविधै र्व्रतैश्च विधिदेशितैः"।

इति मनुना व्रततपसोर्भेदेनोपन्यासात् अन्यथा व्याख्यास्यामः। तपस्वी—चान्द्रायणादि तपोविशेषवान्, इन्द्रियसंयमादिरूप तपो विशेषवान् वा भवेत्—इति। यद्यप्येतदपि,—

"सन्नियम्येन्द्रियग्रामं तपो वृद्ध्यर्थमात्मनः"।

इति मनुना, "स्वयमिन्द्रियमोचनम्"—इत्याचार्य्येण च गुरौ-वसतो ब्रह्मचारिणः सामान्यतोऽभिहितम्, तथाप्यत्र पुनरुपादानं व्यतिरेके दोषातिशयार्थं व्रतवैगुण्यार्थं वा ॥०॥ १७ ॥०॥

## तिष्ठेद्दिवा ॥ १८ ॥

दिवा अहनि, तिष्ठेदूर्द्ध्वो भवेत् नोपविशेत् न च पर्य्यटेत्—अन्यत्र सन्ध्योपासनादे र्भिक्षाचर्य्यातश्च ॥०॥ १८ ॥०॥

## आसीत नक्तम् ॥ १९ ॥

नक्तं रात्रौ, आसीत उपविशेत् न शयीत ॥०॥ १९ ॥०॥

## वर्षति च नोपसर्पेच्छन्नम् ॥ २० ॥

वर्षति पर्ज्जन्ये, छन्नं मनुष्यैराच्छादितं गृहादिकमित्येतत्। नोपसर्पेत् न गच्छेत् न प्रविशेदिति यावत्। कियन्तं कालम्?।

याव न्न वर्षोपशमः। कुतः?। वर्षति,—इति वर्त्तमानवदुपदेशात्। गृहाद्युपसर्पणप्रतिषेधात् वृक्षमूलमुपसर्पतोऽपि न दोषः—इति वर्णयन्ति। चशब्दा दर्शनसम्भावनायामपि गृहोपसर्पणं निषिध्यते। अथवा। चशब्दा दाति च वायौ नोपसर्पेच्छन्नमिति बोद्धव्यम्। गृहावस्थितस्तु वर्षत्यपि न निष्क्रामेत्। कस्मात्?। नोपसर्पेदितिकरणात्। बहिरवस्थितस्य खल्वेतत् सम्भवति। न च गृहान्निष्क्रमे प्रमाणं पश्यामः। अन्ये पुनरध्याहाररसिका व्याचक्षते,—वर्षति निष्क्रामेत्, न पुनः प्रविशेत्—इति ॥०॥ २० ॥०॥

## वर्षन्तं ब्रूयादापः शक्वर्य्य इति ॥ २१ ॥

एतावन्तौ वा अहनि रात्रौ वा यस्मिन् कस्मिंश्चित् काले वर्षन्तं पर्ज्जन्यं ब्रूयात्—आपः शक्वर्य्य इति मन्त्रम्। वर्षन्तमिति वर्त्तमानवदुपदेशात् यावद्वर्षं पौनःपुण्येन मन्त्रपाठोऽवगम्यते। अन्यथा वर्षति नोपसर्पेदित्ययमपि निषेधो वर्षप्रारम्भ एव स्यात्। परतस्तु गृहोपसर्पणेऽपि न दोषः स्यात्। दृश्यते च। तस्माद् यथोक्त एवार्थः। अन्येत्वाहुः,—वर्षस्य प्रारम्भे सकृदेव मन्त्रपाठो न तु सततवर्षे पौनःपुण्यं मन्त्रावृत्तिर्वा—इति। उत्तरमन्त्रद्वयपाठोऽप्यनेनैव व्याख्यातः ॥०॥ २१ ॥०॥

## विद्योतमानं ब्रूयादेवंरूपाः खलु शक्वर्य्यो भवन्तीति ॥ २२ ॥

स्पष्टार्थम् ॥०॥ २२ ॥०॥

स्तनयन्तं ब्रूयान्मह्यामहान् घोष इति ॥ २३ ॥

स्तनयन्तं गर्ज्जन्तम् ॥०॥ २३ ॥०॥

न स्रवन्तीमतिक्रामेदनुपस्पृशन् ॥ २४ ॥

स्रवन्तीं निम्नगामनुपस्पृशन् स्नानमकुर्व्वन् (वर्त्तमानसामीप्ये वर्त्तमानवद्‌पदेशः) नातिक्रामेत्। स्रवन्तीमतिक्रमिष्यन् स्नात्वाऽतिक्रामेदित्यर्थः। तथाच स्मरणम्।

"असन्तर्प्य पितॄन् देवान् नदीपारन्तु न व्रजेत्"।

इति। तदनेन स्नानमप्यर्थात् सिद्ध्यति। यच्च, "स्नात्वा न च नदीं तरेत्"—इति वचनान्तरम्, तदस्मच्छाखिव्यतिरिक्तविषयम्। अथवा। प्रमाणस्योभयथादर्शनात् वर्त्तमानसामीप्यमप्युभयथैव व्याख्येयम्। सोऽयं विकल्पः,—स्नात्वा वा स्रवन्तीमतिक्रामेत्, अतिक्रम्य वैनां तत्रैव स्नायात्—इति ॥०॥ २४ ॥०॥

न नावमारोहेत् ॥ २५ ॥

स्पष्टार्थं सूत्रम् ॥०॥ २५ ॥०॥

प्राणसंशये तूपस्पृश्यारोहेत् ॥ २६ ॥

नावारोहणमकुर्व्वत स्चौरव्याघ्रादिभिः प्राणसंशये,—नावारोहणमन्तरेण स्रवन्त्यतिक्रमे प्राणसंशये सम्भाव्यमाने वा,—उपस्पृश्य स्नात्वा, नावमारोहेत्। तु—इत्यनर्थको निपातः ॥०॥ २६ ॥०॥

तथा प्रत्यवरुह्य ॥ २७ ॥

प्रत्यवरुह्य नावोऽवतीर्य्य, तथैव उपस्पृशेत् स्नायादित्यर्थः ॥०॥ २७ ॥०॥

कस्मात् पुनः कारणात् त्रिषवनोपस्पर्शादयो बाहुल्येनोदकाश्रया एव धर्म्मा महानाम्निकव्रते विधीयन्ते? । उच्यते ।

उदकसाधवो हि महानाम्न्य इति ॥ २८ ॥

हिशब्दो यस्मादर्थे। इतिः प्राकाश्ये। उदकं साधु अधीनं यासाम्, उदकेषु विषये साधवः कुशला हिता वा या स्ताः खल्विमा उदकसाधव उदकदाच्यः कथ्यन्ते। यस्मान्महानाम्न्य उदकसाधव इति प्रसिद्धं तस्मात्तदीयव्रते बाहुल्येनोदकाश्रयाणां धर्म्माणां विधानं युक्तमित्यभिप्रायः ॥०॥ २८ ॥०॥

यस्मादुदकसाधवो महानाम्न्य स्तस्मात्तदीयव्रतमाचरतः फलमपि तदनुरूपमेव भवति,—इत्याह,—

एवं खलु चरतः कामवर्षी पर्ज्जन्यो भवति ॥ २९ ॥

खल्वित्यनर्थकोनिपातः । एव मुक्तप्रकारेण व्रतं चरतः, पर्ज्जन्यः इन्द्रः, कामवर्षी भवति। काम्यन्ते—इति कामाः, तान् वर्षितुं शीलं यस्य स खल्वयं कामवर्षी भण्यते। यत्किञ्चिदसौ कामयते तत्तत्सर्व्वमिन्द्रो वर्षति सम्पादयतीत्यर्थः। अथवा। पर्ज्जन्यशब्दो मेघवचनः। यत्र यत्र यदा यदा असौ वर्षं कामयते, तत्र तत्र तदा तदा मेघोवर्षति—इति वाक्यार्थः ॥०॥ २९ ॥०॥

अथेदानीं नियमबाहुल्यात् दुरनुष्ठेयत्वं व्रतस्य मन्यमानः परम-दयालुः सूत्राचार्य्यः केषुचिद्धर्म्मेष्वनियममुपदिशति,—

अनियमो वा कृष्णस्थानासनपन्थभक्षेषु ॥ ३० ॥

कृष्णवस्त्रं, दिवा ऊर्द्धावस्थानं, रात्रौ आसनमुपवेशनम्, पन्थाऽ-प्रदानं, कृष्णभक्षम्—इत्येतेषु अनियमो नियमाभावो वा। विकल्पेनामीषामनुष्ठानमित्यर्थः ॥०॥ ३० ॥०॥

अधुना महानाम्नीनां श्रावणकालमुपदिदिक्षुरिदमाह,—

तृतीये चरिते स्तोत्रीयामनुगापयेत् ॥ ३१ ॥

तृतीये व्रतभागे चरिते,—व्रतस्य तृतीयेभागे चीर्णे सतीत्यर्थः। स्तोत्रीयामेकामनुगापयेत् ब्रह्मचारिणे श्रावयेदाचार्य्यः॥०॥३१॥०॥

एवमितरे स्तोत्रीये ॥ ३२ ॥

एव मनेन प्रकारेण इतरे अपरे अपि द्वे स्तोत्रीये अनुगापये-दित्यनुवर्त्तते। तथाच व्रतस्य एकस्मिन् तृतीयभागे चीर्णे एकाम्, अपरस्मिन् तृतीयभागे चीर्णे अपराम्, अन्यस्मिन् तृतीयभागे चीर्णे चान्यां स्तोत्रीयामनुगापयेदित्यर्थः ॥०॥ ३२ ॥०॥

सर्व्वा वाऽन्ते सर्व्वस्य ॥ ३३ ॥

सर्व्वस्य व्रतस्यान्ते वा सर्व्वाः स्तोत्रीयाः युगपदेवानुगापयेत् ॥०॥ ३३ ॥०॥

अनुगापनस्य कालमभिधाय प्रकारमाह,—

उपोषिताय संमीलितायानुगापयेत् ॥ ३४ ॥

'वाग्यतो न भुञ्जीत त्रिरात्रं महोरात्रौ वा'—इति वक्ष्यमाणेन विधिना उपोषिताय कृतोपवासाय, संमीलिताय परिणद्धाक्षाय ब्रह्मचारिणे अनुगापयेत् ॥०॥ ३४ ॥०॥

कथं पुनर्ब्रह्मचारिणोऽक्ष्णोः परिणहनं कर्त्तव्यम्?। तदुच्यते।

कंसमपां पूरयित्वा सर्व्वौषधीः कृत्वा हस्ताववधाय प्रदक्षिणमाचार्य्योऽहतेन वसनेन परिणह्येत् ॥ ३५ ॥

कंसं कांस्यभाजनं अपां पूरयित्वा अद्भिर्वर्द्धयित्वा, सर्व्वौषधीः कृत्वा सर्व्वाश्च ता ओषधयश्च ताः सर्व्वौषधीः व्रीह्यादीः सप्त, कृत्वा,—उपस्थितत्वात् कंसस्थितास्वेवाप्सु स्थापयित्वा, तास्वेव सर्व्वौषधिमिश्रास्वप्सु हस्ताववधाय ब्रह्मचारिणो हस्तौ निमज्य, प्रदक्षिणं यथा भवति तथा अहतेन वसनेन ब्रह्मचारिणोऽक्षिणी आचार्य्यः परिणह्येत् परिवेष्टयेत्। एवन्तावत् निमग्नहस्तः परिणद्धाक्षो वाग्यतो ब्रह्मचारी अरण्ये त्रिरात्रमहोरात्रं वा उपवसेत्। तत उपोषिताय वाग्यताय तथैव निमग्नहस्ताय परिणद्धाक्षाय ब्रह्मचारिणे अरण्य एवाचार्य्योऽनुगापयेत्। अयन्तावदेकः पक्षः ॥०॥ ३५ ॥०॥

अयञ्चापरः पक्षः,—

## परिणहनान्ते वाऽनुगापयेत् ॥ ३६ ॥

परिणहनस्यान्ते अवसाने तदनन्तरमित्येतत्। पूर्वत्राप्येतदविशेषात् परिणहनान्त एवेति व्याख्येयम्। तदानीमेव वा अनुगापयेत्। एतस्मिन्नपि पक्षे वाग्यताय निमग्नहस्ताय परिणद्धाक्षाय 'अरण्य एवानुगापनं भवति, किन्तु अनुपोषिताय,—इत्येतावानेव विशेषः। ततश्चात्र पक्षे अनुगापनात् पश्चादुपोषणं प्रत्येतव्यम्। हस्तोन्मज्जनोत्थान चंक्रमणानि तु स्नान सन्ध्योपासन मूत्रपुरीष-करणमन्तरेण न कर्त्तव्यानि। परिणहनस्रंसस्तु तत्रापि न कर्त्तव्य एव। तथा चोक्तम्।

"न हस्तोन्मज्जनोत्थाने कार्य्ये स्नानादिकं विना।
अक्षिसन्नहनत्याग स्तत्रापि न भवेत् क्वचित्"।

इति ॥०॥ ३६ ॥०॥

यदि उपोषितायानुगापनं यदि वा अनुपोषिताय, उभयथा-प्युपवासोऽस्त्येव। अतस्तद्विधिमाह,—

## परिणद्धो वाग्यतो न भुञ्जीत त्रिरात्रमहोरात्रौ वा ॥ ३७ ॥

तथैव निमग्नहस्तः परिणद्धाक्षो वाग्यतो ब्रह्मचारी अरण्ये निवसन् त्रिरात्रं—त्रीण्यहोरात्राणि न भुञ्जीत। त्रिरात्राशक्तौ अहोरात्रौ वा न भुञ्जीत। अहश्च रात्रिश्च अहोरात्रौ—अहो-रात्रमित्यर्थः। अथवा। उपोषितायानुगापनपक्षे अनुगापनात् पूर्व्वमुपवासः,—'उपोषिताय संमीलितायानुगापयेत्'—इत्यमेमेव-

ग्रामः। तस्मादनुपोषितायामुपापमपच एवानुगापगमात् परमुपवासविधायकमेतत् सूत्रं वर्णनीयम्। अस्यामपि वर्णनायां प्राकृतोऽप्युपवासः चिरात्र मद्दोरात्रं वा बोद्धव्यः। कस्मात्?। अस्मादेव दर्शनात्। अरण्ये निवसन्—इति कुतो व्याख्यायते?। उत्तरसूत्रानुसारात् ॥०॥ ३७ ॥०॥

यदि व्याघ्रादिभयादरण्ये चिरात्र मद्दोरात्रं वा निवस्तुं न शक्यते, तदा किं कर्त्तव्यम्?। उच्यते।

अपिवाऽरण्ये तिष्ठेदाऽस्तमयात् ॥ ३८ ॥

अपिवा अथवा, आस्तमयात् आ अस्तमयात्—अस्तमयपर्य्यन्तमित्येतत्। तावन्तं कालमरण्ये तिष्ठेत् रात्रै तु ग्राम एव ॥०॥ ३८ ॥०॥

श्वोभूतेऽरण्येऽग्निमुपसमाधाय व्याहृतिभिर्हुत्वाऽथैनमवेक्षयेत् ॥ ३९ ॥

श्वः अनागतदिने भूते, प्रभाते जाते,—इत्यर्थः। अरण्ये अग्निमुपसमाधाय,—इत्युक्तार्थम्। प्रकृतत्वादरण्येप्राप्ते पुनररण्यग्रहणं ग्रामनिवासपक्षेऽप्यरण्यं गत्वैवैतत् कर्म्म कर्त्तव्यमित्येवमर्थम्। व्याहृतिभिर्हुत्वा, द्रव्यानादेशादाज्येन,—इत्यर्थः। हुत्वा,—इत्यवचने अनादेशात् पुरस्ताच्चोपरिष्टाच्च होमः प्राप्नोति, अतो हुत्वा—इत्युक्तम्। व्याहृतिभिरितिवचनं क्रमार्थम्। कथन्नाम?। व्याहृतिभिर्हुत्वैव एनमवेक्षयेत्, न तु तन्त्रसमापनमपि कृत्वा,—इति। एवमेके।

व्याहृतिभिरितिवचनं परिसंख्यानार्थम्। तेन चिप्रहोमः स्यात्। एवमपरे। अथ शब्दः पूर्वप्रकृतार्थः। होमानन्तरमथ पूर्वप्रकृतमेनं ब्रह्मचारिणं अवेक्षयेदाचार्य्यः। अथ शब्द आनन्तर्य्यार्थो वा। तदयमर्थः। व्याहृतिभिर्हुत्वा अथ अग्निपरिणहनमोचनानन्तरं मेनमवेक्षयेत्—इति॥०॥ ३९ ॥०॥

किमवेक्षयेत्?। तदाह,—

अग्निमाज्यमादित्यं ब्रह्माणमनड्वाहमन्नमपोदधीति ॥ ४० ॥

इत्येतान्यवेक्षयेत्। अग्न्यादयः प्रसिद्धाः। ब्रह्माणं विप्रम्। ब्राह्मणमितिपाठे व्यक्त एवार्थः। असमासकरणात् पृथक् पृथगवेक्षणम् ॥०॥ ४० ॥०॥

किन्तूष्णीमवेक्षयेत्?। न। कथन्तर्हि?—

स्वरभिव्यख्यं ज्योतिरभिव्यख्यमिति ॥ ४१ ॥

स्वरभिव्यख्यमित्यनेनमन्त्रेण। मनसैव मन्त्रपाठो बोद्धव्यः। कुतः?। परतोऽस्य वाग्विसर्गस्मरणादिदानीमपि वाग्यतत्वावगतेः। प्रतिदर्शनं मन्त्रावृत्ति र्व्याख्याता ॥०॥ ४१ ॥०॥

किं सकृदवेक्षयेत्?। न। किन्तर्हि?—

एवं त्रिः सर्व्वाणि ॥ ४२ ॥

एव मनेन प्रकारेण प्रत्येकेनेत्यर्थः। सर्वाणि अग्न्यादीनि त्रिरवेक्षयेत्। प्रथमेन सहैव त्रित्वं बोद्धव्यम्। सर्वाणि—इत्येतावति कृते

ल्लिखितानामन्वादीनामवेक्षणमप्यास्तीति कश्चिदित्येवमध्वर्निर्देशः क्रियते। अथैवं, सर्वाणि—इति अक्यमवक्तुम् एवमित्येतावतैव गतार्थत्वात्। उच्यते। एवं चि:—इत्येतावति कृते सन्निहित-तरस्य मन्त्रस्यैवैवमा परामर्शान्मन्त्रस्यैव त्रि: पाठोऽवेक्षणन्तु सकृदेव,—इत्यपि भवत्याशङ्का कदाचित् कस्यचिदिति तां निर-सितुं सर्वाणीत्याह। सर्वाणीत्यनेनान्वादीनामवगमात् प्रत्यासत्त्या तदन्विताया एवावेक्षणक्रियाया वाराभिधानं चिरित्यनेन स्यात्, न मन्त्रपाठक्रियायाः ॥०॥ ४२ ॥०॥

## शान्तिं कृत्वा गुरुमभिवादयते ॥ ४३ ॥

शान्तिं कृत्वा,—इति सिद्धमपि पुनरुच्यते क्रमार्थम्। तेन वाम-देव्यगानान्तमिदानीमाचार्य्यः कुर्य्यात्, तदनन्तरं ब्रह्मचारी गुरु-मभिवादयते। व्याख्यातः क्त्वाप्रत्ययार्थः पूर्वापरीभावमात्रम्। अथवा। ब्रह्मचारी स्वयमेव शान्तिं कृत्वा गुरुमभिवादयते। सेयं शान्ति र्व्रतापवर्गविहिता। अतएवानन्तरं दक्षिणासूत्रणमु-पपद्यते। स्थालीपाकादयस्तु व्रतान्तकर्त्तव्या एव। अन्यैव वा शान्तिरिह विधीयते,—इति न किञ्चिदनुचितम्॥०॥ ४३ ॥०॥ योऽयं गुरोरभिवादः,—

## सोऽस्य वाग्विसर्गः ॥ ४४ ॥

अस्य ब्रह्मचारिणः परिग्रहणात् प्रभृति वाग्यतस्यासीनस्य ॥०॥ ४४ ॥०॥

अनड्वान् कंसो वासो वर इति दक्षिणाः ॥ ४५ ॥

अनड्वान् बलीवर्द्दः। कंसः कांस्यभाजनम्। एतच्चानडुत् सन्निधावुक्तत्वात्तन्मूल्यरूपमिच्छन्ति। वासो वसनम्। इदमपि पूर्ववत्। वरो गौः। तथा चोक्तम्।

"गौ र्व्विशिष्टतमा विप्रै र्व्वेदेष्वपि निगद्यते।
न ततोऽन्यद्वरं यस्मा त्तस्मा द्गौ र्व्वर उच्यते"।

इति। इत्येता महानाम्निकव्रते आचार्य्यस्य दक्षिणा भवन्ति ॥०॥ ४५ ॥०॥

तिस्र एव स्तोत्रीयाः, दक्षिणा स्त्वेमास्तस्य उपदिश्यन्ते। का पुनरत्रगतिः?। उच्यते।

प्रथमे विकल्पः ॥ ४६ ॥

प्रथमे द्रव्यद्वये विकल्पो बोद्धव्यः। तस्मात् प्रथमायां स्तोत्रीयायां श्रुताया मनड्वान् कंसो वा दक्षिणा, द्वितीयायां वासः, तृतीयायां वरः—इति। सेयं गतिः ॥०॥ ४६ ॥०॥

आच्छादयेद्गुरुमित्येके ॥ ४७ ॥

महानाम्निकव्रतदक्षिणाप्रस्तावात् प्रासङ्गिकमिदमुच्यते। येषां व्रतानां आतिकौपनिषदिकानामन्ते दक्षिणा न सूचिता, तेषु गुरुमाच्छादयेत् प्रीणयेत्। यावता वस्तुना गुरुः प्रीयते, तावदल्पमपि किञ्चित् दक्षिणा भवति—इत्येके आचार्य्या मन्यन्ते। एक-

ग्रहणम्,—एकेषां मुख्यानामाचार्य्याणामिदं मतमित्येकानाचार्य्यान् पूजयितुं नात्मीयं मतं पर्य्युदसितुम्। तथा चोक्तम्।

"येषां व्रतानामन्तेषु दक्षिणा नाभिधीयते।

वर स्तत्र भवेद्दानमपिवाऽऽच्छादयेद्गुरुम्"।

इति। अस्मादपिकारणात् उपनयनव्रतान्तेऽपि गौरेव दक्षिणा वाच्या। अन्येतु,—महानाम्निकव्रत एव यथोक्तदक्षिणाया अलाभे सूत्रमिदं योजयन्ति ॥०॥ ४७ ॥०॥

प्रासङ्गिकमभिधाय महानाम्निकव्रतशेषमेवानुसरति,—

**ऐन्द्रः स्थालीपाक स्तस्य जुहुयादृचंसाम यजामह इत्येतयर्चा सदसस्पतिमद्भुतमिति वोभाभ्यां वा ॥४८॥**

इन्द्रो देवता यस्य सोऽयमैन्द्रः, स्थालीपाकः। तस्य जुहुयादेकामाहुतिमित्यर्थः। तस्येत्यवयवलक्षणा षष्ठी। तेन सर्वहुतत्वं न कर्त्तव्यम्। केन मन्त्रेण जुहुयात्?। ऋचं साम यजामहे—इत्येतया ऋचा। सदसस्पतिम्—इत्येतया वा। उभाभ्यां वा आभ्यामृग्भ्यां मिलिताभ्यामित्यर्थः ॥०॥ ४८ ॥०॥

तदिदमन्यत्राप्यतिदिशति,—

**अनुप्रवचनीयेष्वेवम् ॥ ४९ ॥**

अनु पश्चात् व्रतान्ते—इत्येतत्। प्रवचनं प्रकृतग्रन्थश्रावणं येषु व्रतेषु क्रियते, तानि खल्विमान्यनुप्रवचनीयानि गोदानादीनि व्रतानि भण्यन्ते। तेषु अनुप्रवचनीयेषु सर्व्वेष्वेव व्रतेषु, एवम्—अन्ते ऐन्द्रः

स्थालीपाक स्तस्य जुहुयादित्यतिदिश्यते। अनुप्रवचनीयेष्विति-करणाच्च उपनयनव्रतान्ते न भवति ऐन्द्रः स्थालीपाकः। कुतः?। तस्य सहप्रवचनीयत्वात्। किन्तु तदन्ते सावित्रस्तु-र्भवतीत्यवोचाम ॥०॥ ४९ ॥०॥

इदानीं सकलव्रतान्तमेवाधिकृत्य किञ्चिदुपदिशति,—

## सर्व्वत्राचार्षं तदशकं तेनारात्समुपागामिति मन्त्र-विशेषः ॥ ५० ॥

सर्वत्र सर्वेषु व्रतान्तेषु। इति,—अयं, मन्त्रविशेषः कर्त्तव्यः। कः पुनरसौ?। उच्यते। यत्र 'चरिष्यामि'—इति पदं, तत्र 'अचार्षम्'—इति पदं कर्त्तव्यम्। 'अचारिषम्'—इति पाठान्तरम्। एवं यत्र 'तच्छकेयम्'—इति पदं, तत्र 'तदशकम्'—इति, यत्र 'तेनर्ध्यासम्'—इति पदं, तत्र 'तेनारात्सम्'—इति, यत्र 'उपैमि'—इति पदं, तत्र 'उपागाम्'—इति। सर्वत्र,—इति करणादुप-नयनव्रतान्तेऽप्ययं विशेषः स्यात्। कुतः?। सर्वत्रै ग्रहणस्यैवमर्थ-त्वात्। अन्यथा तदनर्थकं स्यात्। अनुप्रवचनीयेषु—इति खल्व-नुवर्त्तत एव। तस्मात् सहप्रवचनीयस्यापि संग्रहार्थं सर्वत्र-ग्रहणम्।

स खल्वयं होम श्चरुहोमात् परतः स्विष्टकृतश्च पूर्वं स्यात्। कस्मात्?। चरुहोमात् परतः सूत्रणात्। प्राक् स्विष्टकृत आ-वापः—इति वचनाच्च। द्रव्यानुपदेशादाज्यद्रव्यकश्च स्यात्। यच्च,—ब्रह्मचारिणां जपमात्रं न होमो वचनाभावात् स्नाहान्तानामपि

होमदैवत—इत्यादौनां होमादर्शनात्—इति सत्ताव्यर्णनम्। तदयुक्तम्। जपेऽपि वचनाभावस्याविशेषात्। 'अग्ने व्रतपते इति हुत्वा'—इति पूर्वञ्च होमकरणतया सूचितानां मन्त्राणां व्रतञ्चार्ष-मित्यादि पदोद्दमात्रसूचणेन होमस्यावगतेश्च। व्रतारम्भे होमवत् व्रतसमाप्तावपि होमस्य वर्णयितुमुचितत्वाच्च। एवञ्च, समावर्त्तन-मध्ये एतद्धोमाभिधानं भवदेवस्यायुक्तम्। कुतः?। व्रतान्त-विहितत्वादस्य। कर्म्मान्तरत्वाच्च समावर्त्तनस्य। व्रतञ्चरिष्यामी-त्यादेर्व्रतारम्भकत्ववत् व्रतमचारिषमित्यादेरपि व्रतसमापकतया तस्यै-वान्ततायां वक्तुमुचितत्वाच्च ॥०॥ ५० ॥०॥

**आग्नेयेऽज ऐन्द्रे मेषो गौः पावमाने पर्वदक्षिणाः ॥ ५१ ॥**

आग्नेये देवपर्वणि आविते अजो दक्षिणा आचार्य्यस्य। ऐन्द्रे देव-पर्वणि आविते मेषः। पावमाने देवपर्वणि आविते गौः। एव-मेताः पर्वदक्षिणाः,—पर्वणामध्ययनार्थं दक्षिणाः पर्वदक्षिणाः ज्ञेयाः। सामर्थ्याद्गोदानव्रतान्त एवैतादक्षिणा भवन्ति। अथ सुखावबोधार्थं कर्म्मक्रमः प्रदर्श्यते। उपनयनव्रतान्ते सावित्र-चरुः। चरुहोमात् परतः स्विष्टकृतश्च प्राक् अग्ने व्रतपते व्रतमचारिष-मित्यादिविशेषमुक्त्वा पञ्चभि र्मन्त्रै राज्येन होमः। कर्म्मसमाप्तौ गौ र्दक्षिणा। नान्दीमुखश्राद्धं, केशान्तकरणम्, गोदानार्थं पुन-रुपनयनम्, व्रतान्ते आग्नेयैन्द्रपावमानानां देवपर्वणां समस्तानां साङ्गाध्यायश्रावणम्, ऐन्द्रचरुः, तस्य च यथोक्तरीत्या होमः, अन्यापि

प्राक् स्विष्टकृतः, अग्ने व्रतपते व्रतमचार्षमित्यादि पूर्ववद्धोमः, कर्मान्ते अजगोमेषदक्षिणादानम्। पुनर्नान्दीमुखश्राद्धं, प्रातिकार्थं पुनरुपनयनम्। उत्तरोत्तरव्रतचर्य्याकाले पूर्वपूर्वव्रतान्तश्रावितस्याध्ययनम्। एवं सर्वेषु व्रतेषु द्रष्टव्यम् ॥०॥ ५१ ॥०॥

अवसिता प्रासङ्गिकीकथा। महानाम्निकव्रतशेषमेवेदानीमनुवर्त्तामहे,—

## प्रत्येत्याचार्य्यं सपर्षत्कं भोजयेत् ॥ ५२ ॥

प्रत्येत्य अरण्यात् प्रत्यागत्य, आचार्य्यं भोजयेत्। किमेकाकिनमेव?। न। सपर्षत्कम्। सह पर्षदा वर्त्तते—इति सपर्षत्क स्तम्—शिष्यवर्गसहितमित्यर्थः। सपरिषत्कमिति पाठेऽपि तथैवार्थः ॥५२॥

## सब्रह्मचारिणश्चोपसमेतान् ॥ ५३ ॥

समानं तुल्यवेदाध्ययनार्थं ब्रह्मचर्य्यं व्रताचरणं येषां, त इमे सब्रह्मचारिणः स्वशाखिनो भण्यन्ते। अपि वा। समानं तुल्यकालं ब्रह्मचर्य्यं येषां ते खल्विमे सब्रह्मचारिणो भिन्नशाखिनोऽप्युच्यन्ते। तांश्च उप समीपे समेतान् भोजयेत्। यत्र स्वयं ब्रह्मचर्य्यमाचरति तत्समीपे भिन्नगुरवोऽपि ये ब्रह्मचारिणः समेताः स्युः, तानपि भोजयेदित्यर्थः। उपसमेतानितिकरणात् भिन्नगुरवोऽपि लभ्यन्ते ॥०॥ ५३ ॥०॥

ज्येष्ठसाम्नो महानाम्निकेनैवानुगापनकल्पो व्याख्यातः ॥ ५४ ॥

ज्येष्ठसाम्नोऽनुगापनकल्पोऽनुगापनविधि र्महानाम्निकेनैवानुगापनविधिना व्याख्यातः,—इति पूर्व्वोक्तं सर्व्वमतिदिश्यते। ननु त्रीणि तावत् ज्येष्ठसामानि पठ्यन्ते, तत् कथमत्र ज्येष्ठसाम्नः—इत्येकवचनम्?। उच्यते। जात्याश्रयणात् त्रयाणामपि ज्येष्ठसाम्नामेकस्यामृचि गीतत्वाभिप्रायाद्वा एकवचनम्—इति न दोषः॥ ॥०॥ ५४ ॥०॥

तत्रैतानि नित्यव्रतानि भवन्ति ॥ ५५ ॥

तत्र ज्येष्ठसाम्नि विषये एतानि वक्ष्यमाणानि नित्यव्रतानि यावज्जीवनमनुपालनीयानि व्रतानि भवन्ति। न तु यावद्व्रतमेव। कुतः?। नित्यशब्दस्यैवमर्थ्यात्। अन्यथा, व्रतानि भवन्ति—इत्येतावति कृतेऽपि व्रतान्तरसूचितानामिवामीषामपि यावद्व्रतमनुपालनं स्यादेवेति नित्यपदमनर्थकं स्यात्। समावर्त्तनोत्तरभाविनः शूद्रोपयमस्य निषेधाच्च। नित्यधर्म्माः—इत्यकृत्वा नित्यव्रतानि,—इतिकरणाच्चैवमवगन्तव्यम्। यत्र हि यावद्व्रतमनुष्ठेयत्वमभिप्रेयते, तत्र नित्यधर्म्माः—इति क्रियते। यथा गोदानादौ ॥ ५५ ॥

न शूद्रामुपेयात् ॥ ५६ ॥

शूद्रां नोद्वहेत्। 'चतस्रो ब्राह्मणस्य भार्य्या भवन्ति तिस्रो वै

चैका चेतरेषाम्'—इति शूद्रोपयमस्यापि प्राप्तत्वात् प्रतिषिध्यते॥
॥०॥ ५६ ॥०॥

न पक्षिमांसं भुञ्जीत॥५७॥

स्पष्टार्थं सूत्रम्॥०॥ ५७ ॥०॥

एकधान्यमेकदेशमेकवस्त्रञ्च वर्ज्जयेत्॥५८॥

एकञ्च तत् धान्यञ्चेति एकधान्यं वर्ज्जयेत्। यस्मिन् देशे यानि धान्यानि भवन्ति तत्र तेषां मध्यादेकं वर्ज्जयेत्,—कदाचिदपि न भुञ्जीत। एकदेशं वर्ज्जयेत्। गन्तव्यदेशानां मध्यादेकदेशं वर्ज्जयेत्,—कार्य्यार्थमपि न गच्छेत्। एकवस्त्रञ्च वर्ज्जयेत्। कार्पासशाणकौशेयानां मध्यादेकं वस्त्रं वर्ज्जयेत्,—न जातुचिदपि परिदध्यात्।

एवं वा—

एकधान्यं वर्ज्जयेत्,—एकमेव धान्यं सर्व्वदा न भक्षयेत्। एकदेशं वर्ज्जयेत्,—न यावज्जीवमेकस्मिन्नेव देशे निवसेत्। एकवस्त्रमेकवस्त्रत्वमित्यर्थः। (धर्म्मप्रधानो निर्द्देशः)। तदपि वर्ज्जयेत्। कथन्नाम?। येष्वपि प्रेतस्नानप्रेतोदकदानादिषु एकवस्त्रत्वं स्मृत्यन्तरेषूपदिष्टं तेष्वप्येकवस्त्रत्वं—वर्ज्जयेत्,—एकवासा न भवेदित्येतत्। अन्ये तु वर्णयन्ति,—'अधरीयोत्तरीयभेदात् प्राप्तयोर्द्वयो र्वाससो रेकं वासः प्रेतोदकदानादिकालेषु वर्ज्जयेत्,—तदानीमेकवासा भवेदित्यर्थः'—इति। तदसङ्गतम्। कस्मात्?।

यस्मादेवं खल्वन्येषां प्रेतोदकदानादिष्वेकवस्त्रत्वं यस्मात्। दृश्यते च। तस्मादस्मदुक्तैव व्याख्या ॥०॥ ५८ ॥०॥

उद्धृतादिरद्भिरुपस्पृशेत् ॥ ५९ ॥

जलाशयादुद्धृताभिरद्भिरुपस्पृशेदाचामेत्। यद्वा। कृतमूत्रपुरीषस्य मलादिग्धाङ्गस्य वा यच्छौचं तदिहोपस्पर्शः। तदुद्धृताभिरद्भिः कुर्य्यान्नाशयस्थाभिः। स्नानमेव कस्मान्न व्याख्यायते। उच्यते। एवं किल वर्णनायां पुण्यसलिलावगाहनमपि यावज्जीवनमस्य निषिद्धं स्यात्। तथाऽन्यत्रापि नित्यनैमित्तिकबहिःस्नानमस्य न स्यात्। तच्चानिष्टम्। तस्माद् यथोक्त एवार्थः ॥०॥ ५९ ॥०॥

आदेशनात्प्रभृति न मृण्मयेऽश्नीयात् ॥ ६० ॥

प्राथमिकोपनयने यदिदमादेशनम्,—समिधमाधेह्यपोऽशान— इत्यादिरूपं, तस्मादादेशनात् प्रभृति मृण्मये शरावादौ नाश्नीयात्;—ज्येष्ठसामिकव्रतं करिष्यमाणः। अथवा। ज्येष्ठसामिकव्रतार्थं यदुपनयनं क्रियते, तत्र यदादेशनं समिधमाधेहि— इत्यादिकं तस्मात् प्रभृति,—इत्यर्थः ॥०॥ ६० ॥०॥

न पिबेत् ॥ ६१ ॥

आदेशनात् प्रभृति मृण्मये न पिबेत्। चशब्दो लुप्तवत् द्रष्टव्यः, —न च पिबेदिति ॥०॥ ६१ ॥०॥

श्रवणादित्येके ॥ ६२ ॥

ज्यैष्ठसामिकव्रततृतीयभागे चीर्णे, व्रतान्ते वा ब्रह्मचारिणे ज्यैष्ठसाम्नां यत् श्रावणमाचार्य्येण क्रियते, तस्मात् श्रवणात् प्रभृति न मृण्मयेऽश्नीयात् न च पिबेदित्येके आचार्य्या मन्यन्ते ॥ ० ॥ ॥ ६२ ॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये तृतीयप्रपाठकस्य द्वितीया काण्डिका ॥०॥

---



गोदानव्रतान्ते देवपर्व्वणि श्रावणविधानात् श्रवणादूर्द्ध्वमेवाध्ययने प्राप्ते वेदारम्भस्य कालो विधातव्यः। उपाकरणञ्च छन्दसां वक्तव्यम्। कस्मात्?। एवं हि स्मरन्ति। 'छन्दांस्युपाकृत्याधीयीत'—इति। अतस्तद्विधानार्थमिदमाह,—

प्रौष्ठपदीं हस्तेनोपाकरणम्॥ १॥

प्रोष्ठपदो भाद्रपदः। तस्येयं पौर्णमासी प्रोष्ठपदी। तां प्रोष्ठपदीं प्रति। हस्तेन—इति, "नक्षत्रेण युक्तः कालः"—इत्यण्। "लुबविशेषे"—इति तस्य लुप्। "नक्षत्रे च लुपि"—इति सप्तम्यर्थे तृतीया। तेन हस्तयुक्ते काले—इत्यर्थः। स खल्वयं विकल्पः,—प्रोष्ठपदीं वा हस्तेन वा—इति। कस्मात्?। प्रोष्ठपद्यां हस्तस्यासम्भवात् समुच्चयानुपपत्तेः। कथमसम्भवः?। पौर्णमास्यां सूर्य्याचन्द्रमसोः परमविप्रकर्ष-नियमात्। तथा चोक्तम्। "यः परमो विकर्षः सूर्य्याचन्द्रमसोः सा पौर्णमासी"—इति। हस्तयुक्तकालोऽपि भाद्रपदशुक्लपक्ष एव ग्राह्यः। कुतः?। उपस्थितत्वात्। अथवा। प्रोष्ठपदस्येयं तिथिः प्रोष्ठपदी तिथिसामान्यं भण्यते।

न पुन र्भाद्रपदपूर्णिमैव। कस्मात्?। "प्रोष्ठपदशुक्लपक्षे हस्तेनाचार्य्यः शिष्यः प्राङ्मुखः उदङ्मुखो वा"—इत्यादिगृह्यपरिशिष्टवचनात्। सोऽयमेकः कालो न कालद्वयम्। तदेतस्मिन् काले उपाकरणम्। उपाक्रियते प्रारभ्यते वेदस्याध्ययनं येन कर्म्मणा तदुपाकरणं नाम कर्म्मविशेषो वेदाध्ययनार्थं, कर्त्तव्यम्—इति सूत्रशेषः। उपाकरणं प्रशस्तग्रन्थाध्ययनम्—इति केचित्।

अत्र च प्रोष्ठपद्याम्—इति सप्तम्यां प्राप्तायां द्वितीयाकरणं प्रतिशब्दाध्याहारार्थम्। तेन प्रति प्रोष्ठपदीं हस्तेनोपाकरणम्—इति सिध्यति। यद्येवं किमतः?। उत्सृष्टस्योत्सृष्टस्य छन्दसः भाद्रपदशुक्लपक्षे प्रतिवर्षमुपाकरणं कर्त्तव्यम्। एतदतः। कथं पुनरेतदवगम्यते,—यत् प्रतिशब्दमध्याहृत्य प्रतिवर्षमुपाकरणम्—इति?। लिङ्गादित्याह। "अतः आपुनरुपाकरणाद्वेदं न व्याहरेयुः"—इति कर्म्मप्रदीपवचने खल्वापुनरुपाकरणादिति वचनादवगम्यते;—पुनः पुनरिदमुपाकरणं कर्त्तव्यम्—इति। यद्यपि एतदुद्गयनोपाकरणाभिप्रायं वचनं, तथाप्युपाकरणसामान्यादत्रापेवं कल्पयितुमुचितम्। अध्यापयितुराचार्य्यस्याध्ययनं कुर्व्वताञ्च शिष्याणां खल्वस्वानोच्छ्वास विच्छेदादिभिः प्रमादकृते च्छन्दसां यातयामत्वं भवति। यातयामैश्च छन्दोभिः कृतमपि कर्म्म न यथोक्तं फलं जनयति। तत् खल्वेतत् यातयामत्वमुपाकरणोत्सर्गलक्षणेन कर्म्मणाऽपनुद्यते। अस्मादपि कारणात् प्रतिवर्षमेवैतत् कर्त्तव्यम्। तथा चोक्तम्।

"अस्वानोच्छ्वास विच्छेद घोषणाध्यापनादिकम्।

प्रमादिकं श्रुतौ यत् स्यात् यातयामत्वकारि तत् ।
प्रत्यब्दं यदुपाकर्म्म सोत्सर्गं विधिवत् द्विजैः ।
क्रियते छन्दसां तेन पुनराप्यायनं भवेत् ।
अयातयामै श्छन्दोभि र्यत् कर्म्म क्रियते द्विजैः ।
क्रीड़मानैरपि सदा तत्तेषां सिद्धिकारकम्" ।

इति ॥०॥ १ ॥०॥

उपाकरणविधिविवक्षया इदमाह,—

**व्याहृतिभि र्हुत्वा शिष्याणाᳬं सावित्र्यनुवचनं यथोपनयने ॥ २ ॥**

व्याहृतिभिर्हुत्वा सर्व्वेषामेव शिष्याणां सावित्र्यनुवचनमाचार्य्येण कर्त्तव्यम् । यथोपनयने पच्छोऽर्द्धर्चश ऋक्श स्तथैवानुवचनमत्रापि कर्त्तव्यमित्यर्थः । अत्र किञ्चिद्वक्तव्यमस्ति । हुत्वा—इत्येतावतिकृतेऽपि विशेषानुपदेशात् व्याहृतिभिरेव होमो भविष्यति । तस्माद्व्याहृतिभिरिति वचनं कर्म्मक्रमार्थम् । कथन्नाम ? । व्याहृतिभिर्हुत्वा अनन्तरं सावित्र्यनुवचनं कर्त्तव्यमिति । किमतो भवति ? । एतदतो भवति,—व्याहृतिहोमादनुपदमेवानुवचनमुपदिशन् अन्योऽपि होमो व्याहृतिहोमात् पुरतः स्यात्—इति दर्शयति । व्याहृतिभिरित्यवचने हि व्याहृतिभिरेव होमः स्यात् न पुनरन्योऽपि । तस्माद्व्याहृतिभिरिति वचनमादितो होमान्तरद्योतनार्थम् । न चेदानीं तन्त्रसमापनाभावद्योतनार्थमेव कुतो न स्यादिति वाच्यम् । आचार्य्येणैव परतः कर्म्मापवर्गस्य

सूचितत्वादिदानीं तत्समयमावत्स्यप्रसक्तेः। कस्मात् पुनः कारणात् सूचितोऽयमन्यो होमो वेदारम्भात् परत एव न भवति?। नैष दोषः। वेदारम्भात् परमेव कर्म्मापवर्गस्य सूचणात्तदानीमन्यस्य होमस्याभिनिवेशस्यासम्भवात्। किञ्चित् पुरस्तात् किञ्चिच्च परस्ताद्धोतव्यमित्यर्द्धजरतीयस्यानुचितत्वाच्च। अत एव नियमार्थतापि वचनस्य नोच्यते। वाक्यभेदस्यैवमापद्येत। कुतः?। त्रिव्याणां सावित्र्यनुवचनं, तच्च व्याहृतिभिरेव कृत्वा—इत्यर्थभेदात्। अगत्या हि क्वचित्तथा। न चात्रागतिरस्ति। नियमे च गौरवमपि स्यात्। तस्माद् व्याहृतिहोमात् पुरस्तादेवान्यो होमः—इति सिद्धम्। कर्म्मप्रदीपवचनाच्चैवमाचार्य्यस्याभिप्रायोऽवधार्य्यते। तच्चोदाहरिष्यामः।

आह। कः पुनरयमन्यो होमो नाम?। छन्दःप्रभृत्याकृतिपङ्क्तिरूपः,—इति ब्रूमः। कथम्?—इति चेत्। उच्यते। संहितायां गायत्रीछन्दस्का या ऋचः पठ्यन्ते, तासामाद्यया ऋचा तावदेकामाहुतिं जुहुयात्। एवमुष्णिगनुष्टुप् बृहती पङ्क्ति त्रिष्टुप् जगतीछन्दस्कानामपि ऋचामादिभूताभिरेकैकाभिः ऋग्भिरेकैकामाहुतिं जुहुयात्। एवन्तावत् सप्त छन्द आहुतयो भवन्ति। अनयैव रीत्या अतिच्छन्द आहुतयोऽपि सप्तैव भवन्ति। सप्तैव च विच्छन्द आहुतयः। तत्रातिच्छन्दविच्छन्दसामपि छन्दोभेदत्वात् मिलित्वा एकविंशतिरेव छन्द आहुतयः सम्पद्यन्ते। एवं ग्रामादीन् पञ्च, पर्व्वादीन् सप्तदश, संहितादीन् त्रीन्, ब्राह्मणादीनष्टौ, पञ्चाङ्गादीन् षट्, जुहुयात्। स खल्वयमाहुतिपङ्क्ति-

हुतोऽन्यो होमः। ततो व्याहृतिभिर्हुत्वा सावित्र्यनुवचनम्। तदाह कर्म्मप्रदीपः। "पुरस्तात्शालाया उपलिप्तेऽग्नेः पश्चादासीनोपविश्य छन्दांसि विच्छन्दांसि सर्पिषा हुत्वा गानेषु पर्व्वादीन् वेदे षडङ्गे च ग्रन्थादीन्, ये वाऽधीताः येषां वा श्रायते तान् जुहोति व्याहृतीश्च"—इति। अत्र 'छन्दांसि'—इत्यतिच्छन्दसामप्युपलक्षणम्—इति नारायणोपाध्यायाः। अत्र खल्वाहितच्छन्दोहोमादिकमभिधाय व्याहृतीश्च—इति करणात् व्याहृतिहोमात् प्राक्तनत्वमेव छन्दोहोमादीनां सुव्यक्तमवगम्यते। स खल्वयमाचार्य्यस्यास्पष्टोऽभिप्रायः कात्यायनेन स्पष्टीकृतः। स खल्वाचार्य्यस्यास्पष्टस्याभिप्रायस्य प्रदीप इव स्पष्टमुपदेष्टा,—इत्यवोचाम। न च "व्याहृतीश्चेति सर्व्वप्रायश्चित्तहोमपरम्"—इति नारायणोपाध्यायमतं युक्तमिति वाच्यम्। अवचनेऽपि तस्य प्राप्तत्वादानर्थक्यापत्तेः। एकस्य जुहोतिशब्दस्यैकत्र प्रधानहोमवचनत्वमन्यत्र च प्रायश्चित्तहोमपरत्वमिति तात्पर्य्यभेदस्यान्याय्यत्वात्। तन्त्रसमाप्तस्यान्यथाचार्य्येणोपदेशाच्च। तस्मात् कर्म्मक्रमार्थमेव तदुपादानम्। उपविश्य—इति करणमपि कर्म्मक्रमप्रदर्शनार्थमेव। कथन्नाम?। उपवेशनानन्तरमेव छन्दोहोमादयो भवन्ति न तु परस्तादपि—इति। अन्यथोपवेशनस्यापि परिभाषाप्राप्तत्वात्तदप्यनर्थकं स्यात्।

अथ,—'व्याहृतीश्च'—इत्यनन्तरम्, 'ततः प्रतिसराम्'—इत्यादिना प्रतिसरबन्धनादिकमुक्तम्। तत्र, 'उत्सर्गेणैवोपाकरणं व्याख्यातम्'—इति व्यवहितमप्युपाकरणं ततः शब्देन परामृश्यते। तेन, उपाकरणकर्म्मणः परं प्रतिसरबन्धनादिकमिति तत्त्वार्थः।

कस्मात् ?। अथातः प्रधानमासि,—इति वचनात्। व्याहृतिहोमात् परमेवाचार्य्येण सावित्र्यनुवचनादेः स्मरणाच्च। अपि च। व्याहृतिहोमान्तस्यास्पष्टत्वात् तत् स्पष्टोकृत्य, व्याहृतिहोमात् पराचोनस्य कर्म्मकलापस्याचार्य्येणेव स्पष्टमुपदेशात् न पुनः स्पष्टीकरणमपेक्षितमिति तदनुक्त्वा, वक्ष्यमाणदर्भ्यनतधानाभक्षणात् प्राक् प्रतिसरबन्धनमुपदिष्टं कात्यायनेन। तस्याचार्य्येणानुपदिष्टत्वात्। एवञ्च, व्याहृतिहोमात् पराचोनस्याचार्य्योपदिष्टस्य कर्म्मकलापस्य बुद्धिस्थत्वात् तस्यैव 'ततः प्रतिसरान्'—इति ततःशब्दात् परामर्शः,—इति न किञ्चिदनुचितम्। यदपि केचिदाहुः,—छन्दांसीत्यादि द्वितीया निर्द्देशात् छन्दःप्रभृतीनामेवाच देवतात्वम्। ततश्च छन्दोभ्यः स्वाहा—इति वा, गायत्र्यै स्वाहा—इति वा जुहुयात्,—इति। तदप्यसङ्गतमेव। कुतः ?। षष्टिसङ्ख्यावचनात्। ऋगादिभिरेव होमस्याभिधानाच्च। तथा चोक्तम्।

"छन्दसामेकविंशानां संहितायां यथाक्रमम्।
तच्छन्दस्काभिरेवर्ग्भिराद्याभिर्होम इष्यते।
पर्व्वभिश्चैव गानेषु ब्राह्मणेषूत्तरादिभिः।
अङ्गेषु च तथा मन्त्रैरिति षष्टि र्जुहोतयः"।

इति ॥०॥ २ ॥०॥

## सामसावित्रोव्रतम् ॥ ३ ॥

अनुसूयादित्यनुवर्त्तनीयम्। सावित्रीं ऋचमाश्रित्य यत् साम गोयते, तदिह सामसावित्रीमित्युच्यते। साम अधिकाशेति वक्ष्ये

सामसावित्रीस्येति विभक्तिव्यत्ययः क्रियते,—द्वितीया निर्देश-बलात् समस्तस्यैव साम्नोऽनुवचनं यथा स्यादित्येवमर्थम्। इतरथा यत्रापि यथोपनयने—पच्छोऽर्द्धर्चशः ऋक्शः, तथैवानुवचनं स्यात् ॥०॥ ३ ॥०॥

## सोमꣳ राजानं वरुणमिति च ॥४॥

सोमं राजानमित्येतस्यामृचि गीयमानं साम चानुब्रूयात्। सामेति कस्मादवगम्यते?। अधिकारात्। 'वार्हस्पत्यमिति त्रिकम्'—इति वचनाच्च। सोमं राजानमित्येतस्यां खल्वृचि गीयमानं साम वार्हस्पत्यमित्याख्यायते। तच्च गेयगाने पठ्यते। केचित्तु पूर्व्वेण सूत्रेणास्यैकसूत्रतां कल्पयन्तो वर्णयन्ति। 'साम सावित्रीं चानुब्रूयात्। काम्?। सोमं राजानमिति'—इति। तदयुक्तम्। कस्मात्?। यस्मात् सवितृदेवताका ऋक् सावित्री भवति, इयं त्वाग्नेयी। अपि च। अस्यां वर्णनायां त्रिकस्यानुवचनं न प्राप्नोति, द्विकस्यैव स्यात्। तच्चानिष्टम्। कुतः?।

"गायत्रीं साम सावित्रीं वार्हस्पत्यमिति त्रिकम्।
शिष्येभ्योऽनूच्य विधिवदुपाकुर्य्यात्ततः श्रुतम्"।

इति वचनात्। तस्मादस्मदुक्त एवार्थः ॥०॥ ४ ॥०॥

## आदितश्छन्दसोऽधीत्य यथार्थम् ॥ ५ ॥

छन्दसः प्रकृतस्य ग्रन्थस्य आदित अधीत्य आरभ्य यथार्थमिति कर्म्मणः परिसमाप्तिरुच्यते। तत्समापनमिदानीं कर्त्तव्यमित्यर्थः।

यच,—यथार्थमिति वचनादिदानीं छन्दोहोमादिकमिति वर्ण-यन्ति। तदयुक्तम्। यथार्थशब्दस्य कर्मापवर्गमात्रार्थताया एव सर्व्वत्रावगतेः। व्याहृतिहोमात् पूर्व्वमेव कर्म्मप्रदीपे तदुपदेशाच्च। तत् खल्वधस्तान्निवेदितमस्माभिः। एतस्मिन्नवसरे वाह्वोः प्रतिसर-बन्धनम्। तदाह कर्म्मप्रदीपः। "ततः प्रतिसरान् दक्षिणे बाह्वावावध्नीरन्। अथ दध्यक्षतधाना भक्षयन्ति"—इति ॥०॥ ॥ ५ ॥०॥

## अक्षतधाना भक्षयन्ति धानावन्तं करम्भिणमिति ॥ ॥ ६ ॥

अक्षता यवाः, त एव भृष्टा धाना भवन्ति। तथा चोक्तम्।

"अक्षतास्तु यवाः प्रोक्ताः भृष्टा धाना भवन्ति ते"।

इति। अक्षतधानाग्रहणं गोधूमादिधाना प्रतिषेधार्थम्। धाना-वन्तमिति ऋचा न साम्ना। कुतः?। ऋगधिकारात्। भक्षयन्ति सर्व्वे प्राश्नन्ति ॥०॥ ६ ॥०॥

## दध्नः प्राश्नन्ति दधिक्राव्णोऽकारिषमिति ॥ ७ ॥

दध्नः—इत्यवयवार्था षष्ठी। दध्नोऽवयवं सर्व्वे प्राश्नन्ति, दधिक्राव्ण इति मन्त्रेण। तदत्र धानानां दध्नश्च पृथगेव प्राशनम्। कस्मात्?। सूत्रभेदेनैवोपदेशात्। भक्षयन्ति—इति; प्राश्नन्ति—इति च; क्रिययोः पृथगेव निर्देशाच्च। दधिप्राशनमन्त्रस्योच्छिष्टा एव पठेयुः प्राणाग्निहोत्रमन्त्रवत्। ननु कृताचमना एव दधि प्राश्नन्ति?।

च। आचान्तोदकाः—इति पदतः करणादिदानीमाचमनाभा-वस्यावगमात्। अथवा। इदानीमाचमनस्यानुपदेशादिहोच्छि-ष्टतैव नास्ति—इत्यवगम्यते। यत्र स्वाचमनं नोपदिशति, तत्रो-च्छिष्टत्वमेव शिष्टा नेच्छन्ति। यथा प्रातरग्निहोत्रे सोमभक्षणादौ च। धाना दधि चाखादयन्तो निगिरन्ति। तथाच कर्म्मप्रदीपः। “अथ दध्यक्षतधाना भक्षयन्ति, दधिक्राव्णेन दधि धानावन्तेति धानाः, अखादयन्तो लेलिहन्ति, निगीर्य्याचम्योपविश्यानुवचन-मनुगानम्”—इति। अपरे तु,—धानादध्नो र्म्मिलितयोः प्रा-शनमिच्छन्ति;—शुष्काणां धानानामभक्षयित्वा निगिरणमशक्यं मन्यमानाः। तदयुक्तम्। पृथक् प्राशनस्योक्तत्वात्। तन्त्रान्तरे-ऽपि ‘दधिक्राव्णेन दधि धानावन्तेति धानाः’—इति भेदेनैवोप-न्यासाच्च ॥०॥ ७ ॥०॥

आचान्तोदकाः खाण्डिकेभ्योऽनुवाक्या अनुगेयाः कारयेत् ॥ ८ ॥

यदा सर्व्वे शिष्या आचान्तोदकाः सन्त उपविशन्ति, तदा खाण्डिकेभ्यः शिष्यसमूहेभ्यः अनुवाक्या अनुगेयाश्च कारयेत्। आचार्य्यः स्वयमुक्त्वा अनु पश्चात् शिष्यान् वाचयेत्, स्वयञ्च गीत्वा शिष्यान् गापयेदित्यर्थः। सेयं खाण्डिकेभ्यः—इति—चतुर्थी व्यत्ययात् द्वितीयार्थे वर्णनीया। खाण्डिकः समूहो घटेत्यनर्थान्तरम्। तथा चोक्तम्। “घटा खाण्डिक उच्यते”—

इति। काः पुनरनुवाक्या अनुगेयाश्चाभिप्रेयन्ते?। उच्यते, आ-चाचार्य्यवचनादनु पश्चात् शिष्यैरुच्यन्ते—इत्यनुवाक्याः बहुवचन-स्यार्थवत्त्वात् याः काश्चन तिस्र ऋचो भण्यन्ते। ता एव ऋचः आचार्य्यगानात् परतः शिष्यैः गीयन्ते इत्यनुगेयाः,—तास्वेवर्क्षु-गीयमानानि त्रीणि सामानि कथ्यन्ते। अन्ये तु, अनुगेयाः— इति व्यत्ययात् स्तोत्रमभ्युपगच्छन्तो यानि कानिचित् त्रीणि सामानि वर्णयन्ति, न तास्वेवर्क्षु गीयमानानि—इति।

एवं वा—

आचान्तोदका इति व्यत्ययात् द्वितीयार्थे प्रथमा। खाण्डिकेभ्य इत्यत्रापि तथैव द्वितीयार्थे चतुर्थी। तथाच, आचान्तोदकान् खाण्डिकान् अनुवाक्या अनुगेयाः कारयेदिति पूर्व्ववदर्थः॥०॥ ॥ ८॥०॥

एवमुपाकरणात् परं किं तस्मादेवाह्न आरभ्याधीयते?। न। किन्तर्हि?—

## सावित्रमहः काङ्क्षन्ते॥ ९॥

सविता देवता यस्य, तत् सावित्रं हस्तनक्षत्रम्। तद्युक्तमहोऽपि सावित्रमित्याख्यायते। तद्योगात्तच्छब्दः। तदहः काङ्क्षन्ते प्रतिपालयन्ति,—तस्मिन्नह्नि नाधीयते—इत्यर्थः॥०॥ ९॥०॥

## उदगयने च पक्षिणीं रात्रिम्॥ १०॥

उदगयने उदञ्चं मार्गं प्रवृत्ते सवितरि। चशब्दात् पूर्व्वकल्पेनोपा-

मध्य अपिर्णी रात्रिं काङ्क्षन्ते। पञ्चाविव दिवसावभितो यस्या रात्रेः सेयं दिनद्वयसहिता रात्रिः पक्षिणी—इत्युच्यते।

"द्वावह्नावेकरात्रिश्च पक्षिणीत्यभिधीयते"।

इति वचनात्। इदञ्चोदगयनेपाकरणं येषामुत्तरारण्यकादीनां दक्षिणायनेऽध्ययनं प्रतिषिद्धं, तेषामध्ययनार्थं बोद्धव्यम्। तथा चोक्तम्।

"नाधीयीतरहस्यानि सोत्तराणि विचक्षणः।
न चोपनिषदश्चैव षण्मासान् दक्षिणायनान्।
उपाकृत्योदगयने ततोऽधीयीत धर्म्मवित्।
उत्सर्गश्चैव एतेषां तैष्यां प्रौष्ठपदेऽपि च"।

इति ॥०॥ १० ॥०॥

## उभयत एके त्रिरात्रम् ॥ ११ ॥

उभयत उभयस्मिन्नप्युपाकरणे त्रिरात्रमनध्यायमेके आचार्य्या मन्यन्ते। त्रिरात्रं खल्वेतदुपाकरणदिनेन सहैव बोद्धव्यम् ॥०॥ ११ ॥०॥

## आचार्य्याणाञ्चोदकोत्सेचनमुभयत्र ॥ १२ ॥

उभयत्र उभयोरप्युपाकरणयोराचार्य्याणामुदकोत्सेचनं उदकाञ्जलिप्रक्षेपेण तर्पणं कर्त्तव्यम्। आचार्य्याणाम्—इति पूजायां बहुवचनम्। चशब्दादन्येषामपि ऋष्यादीनाम्। वक्ष्यति च, "छन्दांस्यृषीनाचार्य्यांश्च तर्पयेयुः"—इति।

एवं वा—

आचार्य्याणां बहुवचनादन्येषाञ्च ऋष्यादीनां तर्पणं कर्त्तव्यम्। चशब्दात् ऋष्यादिपूजनमपि कर्त्तव्यम्। अन्ये तु वर्णयन्ति आचार्य्याणामित्यादिशब्दो लुप्तवद्द्रष्टव्यः—इति। तदिदं तर्पणादिकं होमात् पूर्व्वं कर्त्तव्यम्। तदाह कर्म्मप्रदीपः। "उत्सर्गेणैवोपाकरणं व्याख्यातम्। ऋषि सामान्याश्रावयन्त स्तथैव निमज्ज्याचम्य ऋषि सामानि गायन्त ऋषींश्च निगमादिभिः सम्पूज्य पुरस्ताच्छालाया उपलिप्तेऽग्नेः पश्चादाचम्योपविश्य छन्दांसि विछन्दांसि कृत्वा"—इत्यादि। अत्र यद्यपि ऋषिपूजा निमज्जनानन्तरपठिता, तथाप्युत्सर्गवन्निमज्जनतर्पणयोः पूर्व्वं प्रत्येतव्या। निमज्ज्य—इति पूर्व्वकालता जुहोत्यपेक्षया—इति नारायणोपाध्यायाः। युक्तञ्चैतत्। "उत्सर्गेणैवोपाकरणं व्याख्यातम्"—इत्यतिदेशस्यार्थवत्त्वात्। किमन्यत् कुर्य्यादतिदेशः क्रमं विना। ऋष्याद्याश्रावणादीनि हि स्वपदेनैव निर्दिश्यन्ते।

अन्ये तु व्याचक्षते,—आचार्य्याणां गुरूणां बहुवचनात् तत्पुत्रादीनामपि उदकोत्सेचनं गन्धोदकोद्वर्त्तनेनाङ्गोत्सादनं कर्त्तव्यम्—इति। तदसङ्गतम्। कस्मात्?। अशब्दत्वात्। तर्पणस्य च स्फुटमुपदेशात्।

"उत्सादनञ्च गात्राणां स्नपनोच्छिष्टभोजने।
न कुर्य्याद्गुरुपुत्रस्य पादयोश्चावनेजनम्"।

इति मनुना गुरुपुत्रस्य गात्रोत्सादननिषेधाच्च ॥०॥ १२ ॥०॥

**श्रवणामेक उपाकृत्यैतमासाविचात् कालं काङ्क्षन्ते ॥ १३ ॥**

श्रवणां श्रवणयुक्तां श्रावणस्य पौर्णमासीम्—इति केचित्। कस्मात्?। "श्रवणेन श्रावणीं पौर्णमास्याम्"—इति गृह्यान्तरात्। "श्रवणां श्रवणनक्षत्रम्"—इत्यपरे। कस्मात्?। "श्रवणेन श्रावणस्य"—इति गृह्यान्तरात्। तदत्र भवन्तो भूमिदेवाः प्रमाणम्। द्वितीया व्याख्याता। श्रवणां प्रत्युपाकृत्य, आसावित्रात् हस्त-नक्षत्रपर्य्यन्तम्, एतं कालम् एके काङ्क्षन्ते। अत्रणामुपाकृत्य तावन्न पठन्ति, यावद्भाद्रपदे हस्तः—इति ॥०॥ १३ ॥०॥

## तैषीमुत्सृजन्ति ॥ १४ ॥

तिष्यः पुष्यनक्षत्रम्, तद्युक्ता या काचित्तिथिः सा तैषी। तां प्रत्युत्सृजन्ति उत्सर्गाख्यं कर्म्म कुर्व्वन्ति। तैषीं पौर्णमासीमिति केचित्। तदयुक्तम्। कुतः?। सर्व्वत्राविगानेनानुष्ठानात्।

"पुष्ये तु छन्दसां कुर्य्याद्बहिरुत्सर्ज्जनं द्विजः"।

इति मनुवचनाच्च। सा खल्वियं तैषी द्वयी बोद्धव्या। कथन्नाम?। प्रौष्ठपदोपाकरणपक्षे उदगयनप्रथमतैषीम्, उदगयनोपाकरण-पक्षे तु प्रौष्ठपदतैषीं प्रत्युत्सर्गः। एवञ्च "प्रौष्ठपदे तिष्येण वहिः" —इत्यादि कर्म्मप्रदीपवचनमपि उदगयनोपाकरणपक्ष एव प्रौष्ठ-पदे उत्सर्गविधायकं मन्तव्यम्। आरण्यकादीनां खल्वध्ययनार्थ-मुदगयनोपाकरणम्। तस्यैव च प्रौष्ठपदे उत्सर्गः।

"उपाकृत्योदगयने ततोऽधीयीत कर्म्मवित्।
उत्सर्गश्चैव एतेषां तैष्यां प्रौष्ठपदेऽपि च"।

इति वचनात्। प्रोष्ठपदोपाकरणे तु न प्रोष्ठपद एवोत्सर्गः। तत्र हस्तेनोपाकरणकर्त्तुं स्तत्रैव पुनस्तिष्येणोत्सर्गासम्भवात्। अतएव मनुनापि,—

"तिष्ये तु छन्दसां कुर्य्याद्वहिरुत्सर्ज्जनं द्विजः।
माघमासस्य वा शुक्ले पूर्व्वाह्णे प्रथमेऽहनि"।

इति वचनोत्तरार्द्धेन प्रोष्ठपदोपाकरणपक्षाभिप्रायेणैवोदगयने उत्सर्गोऽभिहितः।

प्रोष्ठपदोत्सर्गात् परतस्तु यावदन्यदुपाकरणं न क्रियते, तावदारण्यकादीनामध्ययनं न कर्त्तव्यम्। कस्मात्?। "प्रोष्ठपदे तिष्येण वहिः"—इत्यादिना उत्सर्गमभिधाय, "अत आपुनरुपाकरणाद्वेदं न व्याहरेयु रन्यत्र ब्रह्मयज्ञात्"—इति कर्म्मप्रदीपवचने अतःशब्देन प्रकृतस्यैवोत्सर्गस्यावगतेः।

"नाधीयीत रहस्यानि सोत्तराणि विचक्षणः।
न चोपनिषदश्चैव षण्मासान् दक्षिणायनान्"।

इति वचनेन दक्षिणायणे सर्व्वदैवारण्यकादीनामध्ययननिषेधाच्च। अन्यानि तु छन्दांसि उत्सर्गात् परमपि शुक्लपक्षेऽध्येतव्यानि। तदाह मनुः।

"यथाशास्त्रन्तु कृत्वैवमुत्सर्गं छन्दसां वहिः।
विरमेत् पक्षिणीं रात्रिं तदेवैकमहर्निशम्।
अत ऊर्द्धन्तु छन्दांसि शुक्लेषु नियतः पठेत्।
वेदाङ्गानि च सर्व्वाणि कृष्णपक्षेषु सम्पठेत्"।

इति। तदिदं वचनं परिशेषादारण्यकादिव्यतिरिक्तविषयमेवा-

धार्य्यते। तस्मादारण्यकादीनामेवापुनरुपाकरणादूनमध्यायो मा-न्येवाभित्याहरणीयम्। केचिदेतदबुद्धा बह्वविरुद्धं ब्रुवन्ति स्म। अलं ग्रन्थगौरवजनकेन तदीयदूषणोपन्यासेन ?।

एवं वा—

तैषः पौषः। तस्येयं तिथिः तैषी। तां प्रत्युत्सृजन्ति,—एके—इत्यनुषज्यते। तथा च गृह्यान्तरकारः। "श्रवणेन श्रावण्यां पौर्णमास्याम्"—इत्युपाकरणं सूचयित्वा, "पौषस्य रोहिण्यां मध्यमायां वाऽष्टकायामध्यायानुत्सृजन्ति"—इति पौषे मास्युत्सर्गं सूचयाञ्चकार। उत्सर्गविधिश्च कर्म्मप्रदीपादवगन्तव्यः॥ ० ॥ १४ ॥०॥

अथेदानीमाचार्य्यादीनामुदकोत्सेचनविधि रभिधीयते,—

**प्राङ्वोदङ्वा ग्रामान्निष्क्रम्य या आपोऽनवमेहनीया स्ता अभ्येत्योपस्पृश्य च्छन्दांस्यृषीनाचार्य्यांश्च तर्पयेयुः॥ १५॥**

प्राङ्मुखो वा उदङ्मुखो वा ग्रामान्निष्क्रम्य। सोऽयं ग्रामान्निष्क्रमण एव प्राङ्मुखत्वादिनियमः। न पुनरपामपि प्रागादिदिगवस्थितत्वम्। या आपोऽनवमेहनीयाः। मेहनं मेढ्रं तस्मादवाचीनाः अवमेहनीयाः ताः न भवन्ति—इत्यनवमेहनीयाः, नाभिदघ्नाः—इत्येतत्। तथा चोक्तम्। "नाभिदघ्न उदकेऽनुपविष्टाः"—इति। ता एवम्भूता अपोऽभ्येत्य प्राप्य, उपस्पृश्य स्नात्वा, च्छन्दःप्रभृतींस्तर्पयेयुः सर्वे। चशब्दाद्ब्रह्मादींश्च तर्पयेयुः। तर्पण-

ष्वेदं कुशमयान् ऋषीन् स्थलस्थान् गन्धादिभिः सम्पूज्य कर्त्तव्यम्। तर्पणानन्तरञ्च स्थलस्थानामृषीणां जलाञ्जलिप्रक्षेपेणाभिषेकः कर्त्तव्यः। तथाच कर्म्मप्रदीपः। "कौशानृषीन् स्थलस्थान् गन्धमाल्यादिभिः सत्कृत्य नाभिदघ्न उदकेऽनुपविष्टा ब्रह्माणं वेदान् देवानृषींश्छन्दांस्याचार्य्यांश्च तर्पयेयुः, उद्धैर्ऋषीनभिषिञ्चन्ति"—इत्यादि। "ऋषीणां सिच्यमानानाम्"—इति च। अत्र च श्रुतचैव विभक्त्या तर्पणं बोद्धव्यम्। तेन ॐ ब्रह्माणं तर्पयामि—इत्यादिकः प्रयोगः। तथाच नित्यतर्पणे कर्म्मप्रदीपः।

"यवाद्भि स्तर्पयेद्देवान् सतिलाद्भिः पितॄनपि।
नामाऽन्ते तर्पयामीति आदावोमिति च ब्रुवन्"।

इति। तदिदमुपाकरणादुत्सर्गाच्च परं स्नानयज्ञाचार्य्य उत्सर्गेऽपि तर्पणं दर्शयति। एतच्च कर्म्मप्रदीपकृता स्पष्टीकृतम्। तदिदमुपाकरणमुत्सर्गश्च गृहस्थादिभिरपि कर्त्तव्यम्। अन्यथा खल्वयातयामता छन्दसां न भवेत्। तथाच स्मरणम्।

"उपाकर्म्मोत्सर्ज्जनञ्च वनस्थानामपीष्यते।
धारणाध्ययनाङ्गत्वात् गृहिणां ब्रह्मचारिणाम्"।

इति ॥०॥ १५ ॥०॥

अथेदानीमनध्यायविवक्षयेदमाह,—

तस्मिन् प्रत्युपाकरणेऽधानाध्याय आपुनरुपाकरणाच्छन्दसः ॥ १६ ॥

उदगयनोपाकरणं प्रत्युपाकरणमुच्यते। तस्मिन् प्रत्युपाकरणे कृते

यति। अभ्रागनाध्यायः। अभ्रदर्शनेऽनाध्यायोऽभ्रानाध्यायः। यदेवाभ्राणां सद्भावादभ्रदर्शनातिशयिकं गृह्यते,—इति कर्कोपाध्यायाः। अभ्रदर्शनश्चेदं सर्वरूपोपपन्नम्—इति भट्टनारायणोपाध्यायाः। किं पुनरत्र तत्त्वम्?। उत्तरं तत्त्वमिति ब्रूमः। कस्मात्?। "अभ्रदर्शने च सर्वरूपे"—इति गृह्यान्तरात्। कतमानि पुन स्तानि रूपाणि कियन्ति च?। उच्यते। उल्का वायु स्तनित विद्युद् वर्षाणि पञ्चैव।

अध्ययनमध्यायः, आ अध्यायः आध्यायः, न आध्यायः, अनाध्यायः। एवञ्च सम्यगध्ययननिषेधात् गुरुमुखाद् यदध्ययनं क्रियते, तत्रैवानध्यायो न तु व्याख्यानचिन्तनादावपि,—इति बोद्धव्यम्। कियन्तं कालं यावदनाध्यायः?। आ पुनरुपाकरणात्। पुनरुपाकरणपर्य्यन्तम्। कस्य अनाध्यायः?। छन्दसः वेदस्य। तेन वेदाङ्गादीनामध्ययनेऽप्यदोष एव। तथाच स्मरन्ति।

"वेदोपकरणे चैव स्वाध्याये चैव नैत्यिके।
नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि"।

इति।

"तस्मादहरहर्वेदमनध्यायस्तते पटेत्।
यदङ्गं तदनध्याये गुरोर्वचनमाचरन्"।

इति चैवमाह ॥०॥ १६ ॥०॥

## विद्युत्स्तनयित्नुपृषितेष्वाकालम् ॥ १७ ॥

विद्युत् प्रसिद्धा। स्तनयित्नुः सशब्दो मेघः। पृषन्ति विन्दवः

संजातान्यस्मेति दूषितं वर्षणमित्येतत्। एतेषु समासकरणान्मि-लितेषु जातेषु, आकालं—निमित्तकालादारभ्य अपरेद्युर्यावत् स एव काल स्तावन्तं कालम्। छन्दसोऽनाध्यायः—इत्यनुवर्त्तते। तानि खल्वेतान्यनृतौ यदैव जायन्ते तस्मादेव कालादारभ्यं आ-कालमनध्यायं कुर्व्वन्ति, ऋतौ तु प्रादुष्कृताग्निसमय एव,—इति भेद्धव्यम्। तथा च मनुः।

"विद्युत्स्तनितवर्षेषु महोल्कानाञ्च संप्लवे।
आकालिकमनध्यायमेतेषु मनु रब्रवीत्।
एतांस्त्वभ्युदितान् विद्याद् यदा प्रादुष्कृताग्निषु।
तदा विद्यादनध्यायमनृतौ चाभ्रदर्शने"।

इति। अत्र खलु, अनृतौ चाभ्रदर्शने,—इति परतः कुर्व्वन् प्रा-दुष्कृताग्निष्वमीषामभ्युदये ऋतावप्याकालिकमनध्यायं बोधयति। सन्ध्यासु विद्युत्स्तनितयोः सन्निपाते पुनः सज्योतिरनध्यायः, वर्षणे त्वहोरात्रम्। कस्मात्?।

प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितनिस्वने।
सज्योतिः स्यादनध्यायः शेषे रात्रौ यथा दिवा"।

इति मनुवचनात्। तदत्र, विद्युत्स्तनितनिस्वने,—इति समास-करणात् द्वयोः सन्निपातं दर्शयति। शेषे, विद्युत्स्तनितवर्षेषु,—इति त्रयाणां पूर्व्वोक्तानां शेषे—वर्षे सति, यथा दिवाऽनध्यायस्तथा रात्रावपीत्यहोरात्रमित्यर्थः। रघुनन्दनस्त्वेतद्विशेषमजानानः,—महोल्कासहचरितत्वेन महागर्ज्जनमाकालिकम्, अल्पगर्ज्जने तु सज्योतिरनध्यायः,—इत्येकत्र, वर्षासु सज्योतिरिति चान्यत्र,

अप्रमाणमेव यदृच्छया ब्रुवाणोऽनादेयवचन एव विदुषाम्। यत् पुनर्हारीतवचनम्—"सायंसन्ध्यास्तनिते रात्रिं प्रातःसन्ध्याया-महोरात्रम्"—इति केवलस्तनितेऽप्यनध्यायं विदधाति, तदपि आपनिकत्वादविरुद्धम्। यदि पुन र्विद्युत्स्तनितयोः सन्निपाते सज्योतिः, केवलस्तनिते अहोरात्रमिति वैषम्यादयुक्तमिति विभाव्यते, तदा तद्वचनं धर्म्मनैपुण्यकामं प्रति बोद्धव्यम्। कुतः ?।

"नित्यानध्याय एव स्याद्ग्रामेषु नगरेषु च।

धर्म्मनैपुण्यकामानां पूतिगन्धे च सर्व्वदा"।

इति मनुवचने धर्म्मनैपुण्यकामनयाप्यनध्याये विशेषदर्शनात्। विद्यानैपुण्यकामस्य तु नैषोऽनध्यायः—इति द्रष्टव्यम्। अनदेव दिशा,—

"सन्ध्यायां गर्ज्जिते मेघे शास्त्रचिन्तां करोति यः।

चत्वारि तस्य नश्यन्ति आयु र्विद्या यशो बलम्"।

इत्येवमाद्याः स्मृतयोऽपि व्याख्याताः। सोऽयं मनोः स्वरसलभ्यः शास्त्रार्थः। अथात्रापरितोषोऽनध्यायरुचीनाम्;—प्रत्येकमेवामीषामनध्यायनिमित्तत्वमस्तु। तथापि वचनान्तराणि धर्म्मनैपुण्य विद्यानैपुण्यकामविषयतयैव व्याख्येयानि। तत्राप्यतिशयविशेषाद् विशेषः, इति वक्तुमुचितं—न पुन र्यदृच्छया प्रलपितुम्। अथवा। अस्मदाचार्य्यस्यैतावदेव मतं, मतान्तराणि चान्येषामिति न किञ्चिदनुचितम्। सा चेयं रीतिरन्यत्रापि यथासम्भवमनुसरणीया॥ ॥०॥ १७ ॥०॥

उल्कापातभूमिचलनज्योतिषोरुपसर्गेषु ॥ १८ ॥

उल्का,—

"वृहच्छिखा च सूक्ष्माग्रा रक्तनीलशिखोज्ज्वला।

पौरुषी च प्रमाणेन उल्का नानाविधा मता"।

इत्युल्कालक्षणा। तासां पाते इतस्ततोऽनेकमहोल्कानां सम्पाते। कुतः?। "महोल्कानाञ्च संप्लवे"—इति वचनात्। एतेनोल्कापातेऽहोरात्रानध्यायविधायिकाः स्मृतयोऽपि व्याख्याताः। भूमिचलने पृथिव्यां चलितायाम्। तत्राहोरात्रानध्यायपरं स्मृत्यन्तरं विद्यानैपुण्यकामविषयं वर्णनीयम्। ज्योतिषोश्च सूर्य्याचन्द्रमसोरुपसर्गे ग्रहणे। एतेषु निमित्तेषु आकालं छन्दसोऽनध्यायः—इति वर्त्तत एव। समासकरणमत्र लाघवार्थम्। एकैकशः खल्वमीषामनध्यायनिमित्तत्वम्। तच्च स्मृतावप्यविशिष्टम्। तथाच मनुः।

"निर्घाते भूमिचलने ज्योतिषाञ्चोपसर्ज्जने।

एतानाकालिकान् विद्यादनध्यायानृतावपि"।

इति। अत्र खल्वसमासकरणात् बहुवचननिर्देशाच्च प्रत्येकमेषामनध्यायनिमित्तत्वमवगम्यते। यत्तु,—

"त्र्यहं न कीर्त्तयेद्ब्रह्म राज्ञो राहोश्च सूतके"।

इति मनुवचनम्। तद्धर्म्मनैपुण्यकामविषयम्। यदपि,—

"समाप्य वेदं द्युनिशमारण्यकमधीत्य च।

पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके"।

इति याज्ञवल्क्यवचनम्। तद्विद्यानैपुण्यकामपरमित्यविरोधः। अपरे त्वाहुः। द्युनिशमिति प्रकृतेऽपि "कृतेऽन्तरे त्वहोरात्रम्"

—इति तत्रैव परतोऽपि अहोरात्रग्रहणं राहुसूतकादीनामाकालिकत्वप्रज्ञापनार्थम्—इति। यच्च, त्रिरात्रमनध्ययनं यस्मोदयप्रश्नविषयम्—इति तत्त्वकारादिभिर्वर्णितम्। तदप्रमाणम्। अनिष्टाधिक्यमिति चेन्नाविशेषात्। इति चेत् पश्यसि,—यस्मोदयपक्षे अनिष्टाधिक्यादनध्यायाधिक्यम—इति। तन्न। कस्मात्?। अविशेषात्। न खल्वनिष्टाधिक्यस्यानध्यायाधिक्यहेतुत्वे वचनमस्ति,—इति तत्राप्यविशिष्टः प्रमाणाभावः। तदभावेऽप्युपदेशाद्युक्तम्। वसन्तादिषु खल्वृतुषु निर्घातादयः किञ्च न दोषमावहन्ति। परमेषामनिष्टजनकत्वाभावेऽप्यनध्ययनमुपदिश्यते। तथा चोक्तम्। "अनध्यायानृतावपि"—इति। अनिष्टाधिक्यस्यानध्यायाधिक्यहेतुत्वे त्वनिष्टाभावेऽनध्याय एव न स्यात्। तस्मादनिष्टजनकत्वाभावेऽप्यनध्यायोपदेशात् अनिष्टाधिक्यादनध्यायाधिक्यमित्येतदयुक्तम्।

यच्चापरमुक्तम्,—चैत्रश्रावणमार्गशीर्षाणामादिप्रतिपदां नित्यानध्यायत्वात् राहुसूतके,—इत्यपि नित्यत्वार्थम्। अन्यथा तदहोरात्रस्य पञ्चदशीप्रतिपद्घटितत्वादनध्यायप्राप्तौ राहुसूतक इत्यनेन पुनरनध्यायाभिधानेऽनुवादापत्तेः,—इति। तदप्यसङ्गतम्। कस्मात्?। प्रमाणविशेषस्याभावात्। अपि च।

"इमान् नित्यानध्यायानधीयानो विवर्ज्जयेत्"।

इत्युपक्रम्य मनुना पञ्चदश्यादीनामप्युपदेशात् पञ्चदश्यादीनामपि नित्यानध्यायत्वमेवेति तत्रापि पञ्चदश्यंशे अनुवादोऽवर्ज्जनीयः स्यात्। आकालिकानध्यायस्याप्येवमनुपपत्तिः स्यात्। तदरं

राजसूतके—इत्याकालिकाभिप्रायमित्येव मतमाद्रियताम्। पञ्च-दशीप्रतिपदोः सन्ध्यावुपरागस्य सम्भवेन चैत्राद्यतिरिक्तप्रतिपदां काम्यानध्यायत्वाभ्युपगमेन च पुनरुक्तेरनवकाशादिति धीमद्भि-रवधेयम्। ब्राह्मणपरिव्राजकन्यायेन समाधानन्त्वस्मत्पक्षेऽपि समानम्। एवमपरापराण्यपि वचनानि व्याख्येयानि। अल-मालपितेन प्रकृतमनुसरामः ॥०॥ १८ ॥०॥

## निर्घाते च ॥ १९ ॥

आकालं छन्दसोऽनाध्यायः—इत्यनुवर्त्तते। निर्घातस्तु,—

"यदाऽन्तरीक्षे बलवान्मारुतो मरुताऽऽहतः।
पतत्यधः स निर्घातो जायते वायुसम्भवः"।

इत्युक्तलक्षणः। यत्तु,—निर्घातः सशब्द उल्कापातः,—इति वर्णितम्। तदुक्तवचनानवलोकनेन ॥०॥ १९ ॥०॥

## अष्टकामावस्यासु नाधीयीरन् ॥ २० ॥

अष्टकाश्च अमावस्याश्च अष्टकामावस्याः, तासु नाधीयीरन्। बहुवचनं व्यक्तिभेदाभिप्रायम्। अमावस्यासाहचर्यादष्टकापदमष्ट-मीमात्रपरम्। न पुनरपूपाष्टकादीनामष्टकापदेन ग्रहणम्।

"चतुर्दश्यां पञ्चदश्यामष्टम्यां राजसूतके"।

इति।

"पचद्वये चतुर्दश्योरष्टमीद्वितये तथा ।
प्रथादावपि पचान्ते ब्रह्म नाधीयते नरैः"।

इति चैवमादिवचनान्तरेषु अष्टम्या एव बहुलमुपलम्भाच्च। अपूपाष्टकादिषु किल त्रिरात्रमनध्यायमिच्छन्ति। कस्मात्?। "त्रिरोऽष्टकास्त्रिरात्रम्"—इति गौतमसूत्रात्। अत्र खल्वेक-रात्रिमनध्ययनं वच्यामः। आह। अनाध्यायः,—इत्यनुवर्त्तेत एव, किमर्थं पुनरिह 'नाधीयीरन्'—इति सूचितम्?। उच्यते। अनाध्यायः—इति प्रकृते यत् पुनर्व्वचनं तदित आरभ्याहोरात्रि-कानध्यायाः अधस्तादाकालिकाः,—इति प्रज्ञापनार्थम्। अपिच। अनाध्यायः—इत्यनुवर्त्तने छन्दसः—इत्यप्यनुवर्त्तेत। अतस्त्रिरा-त्रार्थं नाधीयीरन्—इति वचनम्। एवञ्च, इह छन्दसः,— इति विशेषाभावादङ्गादीनामप्येवमादयोऽनध्याया भवन्ति। तथा च स्मृत्यन्तरम्। "वातेऽमावस्यायामिति सर्व्वानध्यायाः" —इति। सर्व्वशब्दादङ्गानामपि न च्छन्दसामेव,—इति कर्क-भाष्यम्। सर्व्वग्रहणेन शिल्पाद्यपि गृह्यते, शिल्पिनामपि स्वन-ध्यायप्रसिद्धिरस्ति,—इति चाङ्गः। तथा च पुराणस्मरणम्।

"अनध्यायस्तु नाङ्गेषु नेतिहासपुराणयोः।
न धर्म्मशास्त्रेष्वन्येषु पर्व्वस्वेतानि वर्ज्जयेत्"।

इति। यत् पुनर्व्वचनान्तरम्,—"उल्कायामग्न्युत्पाते सर्व्वासां विद्यानामाकालिकम्"—इति सर्व्वग्रहणादङ्गादीनामप्यनध्यायमुप-दिशति। तद्दुर्लभपुण्यकामविषयम्। अष्टम्यादिष्वपि विशेषः स्मृत्यन्तरेऽभिहितः। तथा चापस्तम्बः।

"उदयेऽस्तमये वापि मुहूर्त्तत्रयगामि यत्।
तद्दिनं तदहोरात्रमनध्यायविधौ विदुः।
केचिदाहुः क्वचिद्देशे यावत्तद्दिननाड़िकाः।
तावदेव त्वनध्यायो न तन्मिश्रे दिनान्तरे"।

इति। 'तत्र पूर्व्ववचनमुत्तरमीमांसाध्यायिभिः परिगृहीतं पर-वचनन्त्वन्यग्रन्थपरम्। यत्तु निर्णयामृतधृतम्,—

"प्रतिपल्लेशमात्रेण कलामात्रेण चाष्टमी।
दिनं दूषयते सर्व्वं सुरा गव्यघटं यथा"।

इति। तद्दूषयते,—इत्यभिधानात् पूर्व्ववर्त्तितामात्रेण सर्व्वदिन-दूषणाय'—इति तत्त्वकारः ॥०॥ २० ॥०॥

## पौर्णमासीषु च ॥ २१ ॥

नाधीयीरन्—इत्यनुवर्त्तते। चशब्दाच्चतुर्दशीषु च। तथाच मनुः।

"अमावस्या गुरुं हन्ति शिष्यं हन्ति चतुर्दशी।
ब्रह्माष्टकापौर्णमास्यौ तस्मात्ताः परिवर्ज्जयेत्"।

इति। अमावस्यापौर्णमासीग्रहणात् प्रतिपदोऽपि ग्रहणमिच्छन्ति। कस्मात्?। "द्वे ह्वे पौर्णमास्यौ द्वे अमावस्ये"—इति श्रुतेः। गौतमोऽपि। "अमावस्यायाञ्च द्व्यहं वा"—इति सूचयन्नेतदेव दर्शयति। यत् पुनर्हारीतस्मरणम्। "चैत्रश्रावणमार्गशीर्षाणामादिप्रतिपदो नित्याः"—इति। तत्तासां नित्यत्वमात्रार्थं न पुनरन्यासामध्यायत्वज्ञापनार्थम्। विद्यानैपुण्यकामविषयं वा ॥०॥ २१ ॥०॥

तिसृषु कार्त्तिक्यां फाल्गुन्यामाषाढ्याञ्च ॥ २२ ॥

तिसृषु च पौर्णमासीषु कार्त्तिक्यादिषु नाधीयीरन्। स खल्वयं विद्याविपुण्यकामं प्रत्युपदेशो बोद्धव्यः। एवञ्च तस्यान्यासु पौर्णमासीष्वध्ययनमनिषिद्धम्।

एवं वा—

कार्त्तिक्यादीनामनध्यायत्वस्य सिद्धत्वात् तासु गतासु अनध्ययनमिहोपदिश्यते। तत्र च कार्त्तिक्यादीनां शुक्लपक्षीयत्वात् तदुत्तरा शुक्लपक्षीयैव काचित्तिथिरिहाभिप्रेतेत्यवगम्यते। उपस्थितस्य शुक्लपक्षस्य परित्यक्तुमनुचितत्वात्। तेन, मार्गशीर्षचैत्रश्रावणशुक्लप्रतिपदामनध्यायत्वमनेनोच्यते। तदिदं सूत्रम्,— 'चैत्रश्रावणमार्गशीर्षाणामादिप्रतिपदो नित्याः'—इति हारीतसमानार्थम्।

एवं वा—

सर्वासामेव पौर्णमासीनामनध्यायत्वस्य पूर्व्वमुक्तत्वादेतासु कश्चिद्विशेषो वाच्यः। कः पुनरसौ?। आसामुत्तरासु द्वितीयास्वप्यनध्यायः। सोऽयम्। कस्मात् पुनरिदमवगम्यते,—यदासामुत्तरासु द्वितीयास्वप्यनध्यायः?—इति। यस्मात् पौर्णमासीग्रहणेनैव तदुत्तराः प्रतिपदोऽपि दृश्यन्ते। तदिदं विशेषोपादानमतोऽप्युत्तरस्यास्तिथेर्ग्रहणार्थमित्यवगच्छामः।—गौतमोऽपि। "कार्त्तिकी फाल्गुन्याषाढी पौर्णमासी तिस्रोऽष्टकास्त्रिरात्रम्"— इति सूत्रयन्नेतदेवाह।

"कृष्णपक्षे द्वितीयायां फाल्गुनाषाढ़कार्त्तिके।
शुक्लाश्वयुक् द्वितीयायां नैवाध्ययनमाचरेत्"।

इति च वचनान्तरम् ॥०॥ २२ ॥०॥

कियन्तं कालं पुनरष्टम्यादिष्वनध्ययनम्?। उच्यते।

## अहोरात्रम् ॥ २३ ॥

स्वच्छार्थं सूत्रम् ॥०॥ २३ ॥०॥

## सब्रह्मचारिणि च प्रेते ॥ २४ ॥

सब्रह्मचारिणि, चकारादसब्रह्मचारिण्यपि समानग्रामीये श्रोत्रिये प्रेते मृते सत्यहोरात्रं नाधीयीरन्। तथाच गृह्यान्तरम्। "एकाहं सब्रह्मचारिणि समानग्रामीये च श्रोत्रिये"—इति ॥०॥ ॥ २४ ॥०॥

## स्वे च भूमिपतौ ॥ २५ ॥

स्वे स्वकीये भूमिपतौ राज्ञि प्रेते अहोरात्रं नाधीयीरन्। यस्य विषये निवसति, सोऽयं स्वो भूमिपतिः। चकारादस्वकीये च पृथिवीश्वरे प्रेतेऽहोरात्रम् ॥०॥ २५ ॥०॥

## त्रिरात्रमाचार्य्ये ॥ २६ ॥

आचार्य्ये,—

"उपनीय स्वयं शिष्यं वेदमध्यापयेत्तु यः।
सकल्पं सरहस्यञ्च तमाचार्य्यं प्रचक्षते"।

इत्युक्तलक्षणे प्रेते, त्रिरात्रं नाधीयीरन् ॥०॥ २६ ॥०॥

उपसन्ने त्वहोरात्रम् ॥ २७ ॥

उपसन्नः शिष्यो भण्यते। तस्मिन् प्रेतेऽहोरात्रं नाधीयीरन्। तुशब्दाद्विधेये शिष्ये न तु प्रतिकूले गुरुत्यागिनि ॥०॥ २७ ॥०॥

गीतवादित*रुदितातिवातेषु तत्कालम् ॥ २८ ॥

नाधीयीरन्। यावन्तं कालमेतानि तिष्ठन्ति तावन्तं कालमित्यर्थः। गीतादीनि प्रसिद्धानि। अतिवातस्तु स्मृत्यन्तरादुन्नेयः। तथाच मनुः।

"कर्णश्रावेऽनिले रात्रौ दिवापांशुसमूहने।
एतौ वर्षास्वनध्यायावध्यायज्ञाः प्रचक्षते"।

इति। "वायौ दिवा पांशुहरे कर्णश्राविणि नक्तम्"—इति च गौतमसूत्रम् ॥०॥ २८ ॥०॥

शिष्टाचारोऽतोऽन्यत्र ॥ २९ ॥

अतोऽन्यत्र उक्तादतिरिक्तेषु शिष्टाचारः,—उक्तादतिरिक्तेष्वपि येषु शिष्टा अनध्यायमाचरन्ति, तेष्वप्यनध्यायं कुर्य्युरित्यर्थः। शिष्टाश्च,—

"धर्म्मेणाधिगतो यैस्तु वेदः सपरिवृंहणः।
ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः"।

* 'वादित्र'—इति पाठान्तरम्।

इत्युक्तलक्षणाः। तेन वीणाखनादावपि तत्कालमनध्यायो बोद्धव्यः। तानि च "वेणु वीणा भेरी मृदङ्ग गव्यार्त्तशब्देषु"—इत्येवमादीनि स्मृत्यन्तरेभ्यो बहुलमुपलभ्यानि।

एवं वा—

अतः उक्तात् अन्यत्र शिष्टाचारः। तेनानुक्तेष्वपि यत्र शिष्टा अनध्यायमाचरन्ति, तत्राप्यध्ययनं न कुर्युः। यथा, आरण्यकादीनां भोजनादूर्द्ध्वमनध्यायः ॥०॥ २९ ॥०॥

अथेदानीं प्रकरणान्तरमारभते,—

## अद्भुते कुलपत्योः प्रायश्चित्तम् ॥ ३० ॥

अद्भुतं प्रकृतेर्व्विपर्य्यासः उत्पातः,—इत्यनर्थान्तरम्। तथा चाथर्व्वणाद्भुते। "प्रकृतिविरुद्धमद्भुतमापदः प्राक् प्रबोधाय देवाः सृजन्ति"—इति। तदिदमद्भुतं पूर्व्वकृतासत्कर्म्मजन्यं सञ्चितपापस्य सूचकमेव, न पापजनकम्। अतएव प्रायश्चित्तविधानमुपपद्यते। पापजनकत्वे तु तन्नस्यात्। उक्तञ्च।

"अतिलोभादसत्याद्वा नास्तिक्याद्वाप्यधर्म्मतः।
नरापचारान्नियतमुपसर्गः प्रवर्त्तते।
ततोऽपचारान्नियतमपवर्ज्जन्ति देवताः।
ताः सृजन्त्यद्भुतांस्तांस्तु दिव्यनाभसभूमिजान्।
त एव त्रिविधा लोके उत्पाता देवनिर्म्मिताः।
विचरन्ति विनाशाय रूपैः संबोधयन्ति च"।

इति। तत्र, दिव्यं ग्रहर्क्षवैकृतम्, आन्तरीक्षमुल्कापातादि, भौमं

चरस्थिरभवमित्यन्यत्रानुसन्धेयम्। तदेतस्मिन्नद्भुते जाते सति, तत् सूचितपापक्षयार्थं कुलपत्योः प्रायश्चित्तं भवति। प्रायश्चित्तन्तु, —"अथातो रजस्वलाऽभिगमने"—इत्यादिना परिशिष्टकारेणोक्तमादरणीयम्। कुतः?। आचार्य्येण विशेषानुपदेशात्। तच्च तत एवोपलब्धव्यम्। यथाच, 'प्रायश्चित्तं व्याहृत्याहुतिचतुष्टयम्, अन्यदपि वहिःस्नान तीर्थाभिषेक पुण्यसूक्तजप देवगुरुदर्शन हिरण्य-तिलदान भारतकीर्त्तनादि यथासम्भवम्'—इति वर्णितम्। तदस्मत्परिशिष्टानवलोकनेन ॥०॥ ३० ॥०॥

वंशमध्यमयो र्मणिके वा भिन्ने व्याहृतिभि र्जुहुयात् ॥ ३१ ॥

वंशो वेश्मनिभवः—यः स्थूणाया उपर्य्याधीयते। मध्यमश्च स्तम्भोऽभिप्रेतः। तयोरकस्मादनिमित्ततो भिन्नयोः। मणिको व्याख्यातः, वाशब्दः चशब्दार्थः। मणिके चानिमित्तत एव भिन्ने, व्याहृतिभिः प्रायश्चित्तरूपत्वाच्चतसृभिः, जुहुयात् आज्यम्। इह व्याहृतिभिर्जुहुयात्—इति कुर्व्वन् पूर्व्वत्र प्रायश्चित्तान्तरं दर्शयति। अतएव, भौमत्वेऽप्यमीषां पृथक् सूत्रणं दोषाल्पत्वेन अल्पप्रायश्चित्तोपदेशार्थम्। पूर्व्वेषु पुनः परिशिष्टोक्तं गुरुप्रायश्चित्तमेव दोषगुरुत्वादित्यभिप्रायः ॥०॥ ३१ ॥०॥

दुःस्वप्नेष्वद्य नो देवसवितरित्येतामृचं जपेत् ॥ ३२ ॥

दुःस्वप्नेषु स्वप्नेष्वनिष्टदर्शनेषु, अद्य नो देव—इति ऋचं जपेत्।

सूत्रम्—इति सामप्रतिषेधार्थम्। एताम्—इति स्वरवर्णसम्पाद-नार्थम्। इदमपि पूर्व्वकृतपापसूचकमेव। तथाच शारीरक-सूत्रम्। "सूचकश्च हि श्रुते राचचते च तद्विदः"—इति ॥०॥ ॥०॥ ३२ ॥०॥

## अथापरम् ॥ ३३ ॥

अथेति पूर्व्वप्रकृतार्थम्। कथं नाम?। अद्भुतप्रायश्चित्तवदत्रापि कल्पदृष्टेन विधिना अग्नेरुपसमाधानम्—इति। तथाचाद्भुत-प्रायश्चित्ते परिशिष्टकारेणोक्तम्। "कल्पदृष्टेन विधिनाऽग्निमुप-समाधाय"—इति। अपरं निमित्तं वर्त्तिष्यते,—इति सूत्र-शेषः ॥०॥ ३३ ॥०॥

## चित्ययूपोपस्पर्शनकर्णक्रोशाक्षिवेपनेषु सूर्य्याभ्युदितः सूर्य्याभिनिम्लुप्त इन्द्रियैश्च पापस्पर्शे पुनर्म्मामैत्विन्द्रियमित्येताभ्यामाज्याहुती जुहुयात् ॥ ३४ ॥

चित्ययूपः श्मशाने यो निखन्यते स उच्यते। अथवा। चित्यं चषकं सोमे क्रियते। यूपः पशौ क्रियते। तयोरुपस्पर्शनं स्पर्शनम्। तच्च चित्यस्यावदशनीयात् परतः, यूपस्यापि वहिःकर्म्मण ऊर्द्ध-मिति बोद्धव्यम्। कर्णयोः क्रोशः शब्दः कर्णक्रोशः। अक्ष्णोर्वेपनं स्फुरणम्—अक्षिवेपनम्। वामस्य खल्वक्ष्णो वेपनमत्राभिप्रेतं न तु दक्षिणस्यापि। कथं ज्ञायते?। तस्य शुभसूचकत्वात्। तथाच स्मरन्ति।

"दक्षिणं स्पन्दते नेत्रं बाहुः स्फुरति दक्षिणः।
नराणां धनलाभाय बन्धुसन्दर्शनाय च"।

इति। तदेतेषामेकैकेषु निमित्तेषु पुनर्म्मामिति इन्द्रियमित्येताभ्यां ऋग्भ्यां द्वे आज्याहुती जुहुयात्,—इति सम्बन्धः। यस्य शयानस्य सूर्य्योऽभ्युदेति सोऽयं सूर्य्याभ्युदितः। सोऽपि पूर्व्वोक्ताभ्यामृग्भ्यामाज्याहुतिद्वयं जुहुयात्। यस्य शयानस्य सूर्य्योऽभिनिम्लोचति—अस्तमेति, सोऽयं सूर्य्याभिनिम्लुप्तः। सोऽप्याज्याहुतिद्वयं पूर्व्ववज्जुहुयात्। इन्द्रियैश्च चक्षुःश्रवणादिभिः पापस्पर्श्शे परस्त्रीप्रेक्षणादौ पूर्व्ववदाज्याहुतिद्वयं जुहुयात्॥०॥ ३४ ॥०॥

## आज्यलिप्ते वा समिधौ ॥ ३५ ॥

आज्येन लिप्ते द्वे समिधौ वा प्रकृताभ्यामृग्भ्यां जुहुयात्,—चित्यूपोपस्पर्शनादिषु प्रत्येकम्। स खल्वयमाज्याहुतिद्वयस्यासम्भवे विधिर्बोद्धव्यः ॥०॥ ३५ ॥०॥

## जपेद्वा लघुषु ॥ ३६ ॥

इतोऽपि लघुषु निमित्तेषु अमेध्यस्पर्शनादिषु मानसापचारादिषु वा, प्रकृतमृग्द्वयं जपेद्वा। सोऽयं वाशब्दो व्यवस्थार्थः॥०॥ ३६ ॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये तृतीयप्रपाठकस्य तृतीया काण्डिका ॥०॥

---

## गोभिलीय-गृह्यसूत्रे

तृतीयप्रपाठके चतुर्थी काण्डिका।



### ब्रह्मचारी वेदमधीत्य ॥ १ ॥

ऋजुरर्थार्थः। उक्तं सत् पुनरुच्यते। किमर्थम्?। विशेषव्रताशक्तो ब्रह्मचर्य्यमात्रेणापि वेदाध्ययनार्थम्। आदरार्थम्। वक्ष्यमाण-विधानार्थं वा।

एवं वा—

देवपर्व्वादीनां तत्तद्व्रताचरणपूर्व्वकमध्ययनमुपदिष्टं स्तोभग्रन्था-दीनां तद्व्रतनियमेनाध्ययनं प्राप्नोति, तन्निरासार्थमिदमुच्यते,—ब्रह्मचारी वेदमधीत्य,—इति।

एवं वा—

वेदाध्ययन एव तत्तद्व्रतोपदेशादितरग्रन्थानां यथेष्टमध्ययनं माभूदिति कृत्वा खल्वेतत् सूचितम्। अस्याञ्च वर्णनायां वेदशब्दो ऽयं साङ्गस्य वेदस्याभिधायको बोद्धव्यः, अङ्गानामेव वा ॥०॥ ॥ १ ॥०॥

### उपन्याहृत्य गुरवे ॥ २ ॥

उप नी आहृत्य। नीशब्दात् नीचैः क्षितितलविलग्नशिराः गुरवे उपाहृत्य निवेद्य दक्षिणामित्यर्थात् लभ्यते ॥०॥ २ ॥०॥

ततश्च गुरुणा गृहाश्रमाय,—

अनुज्ञातो दारान् कुर्व्वीत ॥ ३ ॥

स्पष्टार्थः। उक्तमपि दारकरणं पुनरुच्यते अनुज्ञातत्वादि-गुणविधानार्थम्। आदरार्थं वा। अथवा। दारान् कुर्व्वीत;—दारान् कर्त्तुं प्रयतेत इत्यर्थः। तदनेन दारकरणाय प्रयत्नो विधीयते, न तु दारकरणम्। कस्मात्?। स्नानोत्तरभावित्वा-त्तस्य। तथाच मनुः।

"गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि।
उद्वहेत द्विजो भार्य्यां सवर्णां लक्षणान्विताम्"।

इति। ननु, विप्रतिषिद्धमिदमुच्यते;—दारकरणाय प्रयत्नो विधीयते, न दारकरणम्—इति। कथम्?। यदि नाम दार-करणाय प्रयतेत, नूनमयं दारानपि कुर्व्वीत—दारकरणमस्य निष्पद्येत। अथ तु न निष्पद्यते, नासौ दारकरणाय प्रयतते। नैष दोषः। यतो यथा दारकरणं निष्पद्यते, तथा यतितव्यम्—दारकरणाय कन्या प्रार्थयितव्या,—इत्ययमर्थोऽत्र विवक्षितः। एतदनेनोक्तं भवति। दारकरणाय गुरुणाऽनुज्ञातो दारान् करिष्यन् स्नास्यन्नसौ ब्रह्मचारी व्रतस्थ एव तावत् काञ्चित् कन्यां प्रार्थयेत, तस्याञ्च वाग्दत्तायां सत्यां विवाहसन्निधौ यत् पुण्यमहस्तत्र स्नात्वा-ऽथ दारान् कुर्व्वीत,—इति। तथाच कर्म्मप्रदीपः।

"यस्य दत्ता भवेत् कन्या वाचा सत्येन केनचित्।
सोऽन्त्यां समिधमाधास्यन्नाददीतैव नान्यथा"।

इति। अन्यथा खल्वनुपलभ्यैव कन्यां स्नानं कुर्वन् परस्तात् कञ्चित् कालं कन्याया अलाभे अनाश्रमी स्यात्। तच्चानिष्टम्। कुतः?।

"अनाश्रमी न तिष्ठेत क्षणमेकमपि द्विजः"।

इति स्मरणात्। तस्माद् व्रतस्यैव कन्याप्रार्थनं दारकरणार्थमिहोपदिश्यते,—इत्यादरणीयम् ॥०॥ ३ ॥०॥

कीदृशान् दारान् कुर्व्वीत?। उच्यते,—

## असगोत्रान् ॥ ४ ॥

गोत्रं प्रसिद्धम्। समानं गोत्रं येषां ते सगोत्राः, न सगोत्राः असगोत्राः, तान् दारान् कुर्व्वीत ॥०॥ ४ ॥०॥

## मातुरसपिण्डान् ॥ ५ ॥

मातुः सपिण्डा ये न भवन्ति, तान् दारान् कुर्व्वीत। सापिण्ड्यमन्यत्रानुसन्धेयम्। सोऽयं सङ्क्षेपतः सूत्रार्थः। विस्तरस्त्वस्माभिर्ग्रन्थगौरवभयादिहोपेक्षितः ॥०॥ ५ ॥०॥

## नग्निका तु श्रेष्ठा ॥ ६ ॥

नग्निकेत्यनागतार्त्तवोच्यते। सा तु श्रेष्ठा। अतस्तामुद्वहेत्। नैतत् सुन्दरम्। कस्मात्?। यस्मात् दारान् कुर्व्वीत—इत्यस्य विशेषणत्वविवक्षया असगोत्रान्—इति, असपिण्डान्—इति च सूत्र-

यित्वा, नग्निका तु श्रेष्ठा—इति विभक्तिवचनातिक्रमः क्रियते, तस्मादवगच्छामः,—दारकरणेन सममस्य सम्बन्धो नास्ति—इति। एवन्तर्हि अन्यथा व्याख्यास्यामः।

"एष्टव्या बहवः पुत्रा यद्यप्येको गयां व्रजेत्।
गौरीं वाप्युद्वहेद्भार्य्यां नीलं वा वृषमुत्सृजेत्"।

इति वचनात् दारान् करिष्यता तावद्गौरीप्राप्तावेव यतनीयम्। दातुस्तु नग्निका श्रेष्ठा,—इति। तथाच वशिष्ठः। "तस्मान्नग्निका दातव्या"—इति। नग्निका तु,—

"याव न्न लज्जाशालिनी कन्या पुरुषसन्निधौ।
योन्यादि नावगूहेत तावद्भवति नग्निका"।

इत्युक्तलक्षणा। यच्च वचनान्तरम्,—

"सप्तसम्वत्सरादूर्द्ध्वं विवाहः सार्व्ववर्णिकः।
कन्यायाः शस्यते राजन्नन्यथा धर्म्मगर्हितः"।

इति। तद्विवाहयितुः कन्यायाः सप्तसम्वत्सरादूर्द्ध्वं विवाहः शस्यते—इत्येतत्परं न पुनर्दात्रभिप्रायम्। "अष्टवर्षा भवेद्गौरी"—इति वचनात्। मनुरप्याह।

"त्रिंशद्वर्षो वहेद्भार्य्यां हृद्यां द्वादशवार्षिकीम्।
अष्टवर्षोऽष्टवर्षां वा धर्म्मे सीदति सत्वरः"।

इति। यत् पुनः स्मरणम्,—

"सर्व्वेषामेव दानानामेकजन्मानुगं फलम्।
हाटकक्ष्मागौरीणां सप्तजन्मानुगं फलम्"।

इति। नैतेन गौरीदानं विधीयते। किन्तर्हि?। यदृच्छया कृतं

गौरीप्रदानमनेन स्तूयते। तस्माददोषः। विधीयतां वा गौरी-प्रदानं, तथापि नानुपपत्तिः। कथम्?। गौरीप्रदाने तावत् सप्तजन्मानुगं फलं भवति, नग्निका पुनरतोऽपि विशिष्टफलदात्री,—इति वचनव्यक्तेः सम्भवात्। स खल्वयमर्थः सूत्रे तुशब्दं प्रयुञ्जता आचार्य्येण सूचितः। सेयं पूर्व्वेषां भाष्यकाराणां मतानुसारिणी वर्णना। अस्मच्छास्त्रे पुनरन्यविधैव नग्निका पठ्यते। तथाच गृह्यासंग्रहः।

"नग्निकान्तु वदेत् कन्यां यावन्नर्त्तुमती भवेत्।
ऋतुमती त्वनग्निका तां प्रयच्छेत्तु नग्निकाम्।
अप्राप्ता रजसो गौरी प्राप्ते रजसि रोहिणी।
अव्यञ्जिता भवेत् कन्या कुचहीना च नग्निका।
व्यञ्जनैस्तु समुत्पन्नैः सोमो भुञ्जीत कन्यकाम्।
पयोधरैस्तु गन्धर्व्वा रजसाऽग्निः प्रकीर्त्तितः।
तस्माद्व्यञ्जनोपेतामरजामपयोधराम्।
अभुक्ताञ्चैव सोमाद्यैः कन्यकां तु प्रशस्यते"।

इति। तदनेन, अव्यञ्जना अरजस्कपयोधरा सोमाद्यैरभुक्ता कन्या आचार्य्येण प्रशस्यते,—इति सुव्यक्तमुक्तवता आचार्य्यपुत्रेणेदमेव सूत्रं व्याख्यातमित्यवगच्छामः। तस्मात् नात्र स्मृत्यन्तरविरोधः शङ्कनीयः, गौर्य्या अपि निरुक्तनग्निकात्वानपायात्,—इत्ययमस्मदीयः पन्थाः।

अथापि स्यात्;—दारकरणेनैवास्य सम्बन्धः, तथापि नानुपपत्तिः। कस्मात्?। अनियतत्वाद्विभक्तिवचनातिक्रमोपपत्तेः।

नियता खल्वसगोत्रा मातुरसपिण्डा च दारकरणे, नग्निका पुन-रनियता, श्रेष्ठत्वात्। एतस्मात् कारणाद्य विभक्तिवचनातिक्रमः क्रियते,—इति न किञ्चिदनुचितम्। अस्याञ्च वर्णनायां आपात-विरुद्धानि स्मृत्यन्तरवचनानि बुद्धिमद्भिर्व्याख्येयानि। ग्रन्थगौरव-भयादुपारम्यतेऽस्माभिः ॥०॥ ६ ॥०॥

अथाप्लवनम् ॥ ७ ॥

अथेत्यानन्तर्य्यार्थम्। कथन्नाम ?। कन्याप्रार्थनानन्तरं कन्यायां वाचा दत्तायां सत्यामथानन्तरमाप्लवनं स्नानं कुर्य्याद्ब्रह्मचारी। अथ व्रतान्तविहितेन्द्रस्थालीपाकादिकर्म्मानन्तरम्—इति केचित् ॥ ॥०॥ ७ ॥०॥

तद्विधिविवक्षया इदमाह,—

उत्तरतः पुरस्ताद्वाऽऽचार्य्यकुलस्य परिवृतं भवति ॥ ॥ ८ ॥

आचार्य्यकुलस्याचार्य्यगृहस्य, उत्तरतः उत्तरस्यां पुरस्तात् पूर्व्वस्यां वा दिशि, परिवृतं—परि सर्व्वतोभावेन वृतमाच्छादितं भवति ॥०॥ ८ ॥०॥

तत्र प्रागग्रेषु दर्भेषूदङाचार्य्य उपविशति ॥ ९ ॥

तत्र परिवृते स्थाने पूर्व्वाग्रेषु कुशेषु उदङ्मुख आचार्य्य उप-विशति ॥०॥ ९ ॥०॥

तस्मिन्नेव परिवृतस्थाने, आचार्य्यसन्निधौ,—

प्रागब्रह्मचार्य्युदगग्रेषु दर्भेषु ॥ १० ॥

उपविशति। प्राक् प्राङ्मुखः ॥०॥ १० ॥०॥

सर्व्वौषधिविफाल्टाभिरद्भिर्गन्धवतीभिः शीतोष्णाभिराचार्य्योऽभिषिञ्चेत् ॥ ११ ॥

सर्व्वौषधयो व्याख्याताः। ताभिः सह विफाल्टाभि र्विपक्काभिः, गन्धवतीभिः प्रशस्तगन्धयुक्ताभिः, शीतोष्णाभिः शीतोदकमिश्राभिरुष्णाभिः। अथवा। शीताश्च ता उष्णाश्च,—इति शीतोष्णाभिः, नातिशीताभि र्नाप्यत्युष्णाभिरद्भिराचार्य्यो ब्रह्मचारिणमभिषिञ्चेत्। सोऽयं परमतोपन्यासः ॥०॥ ११ ॥०॥

स्वमतमिदानीमभिधीयते,—

स्वयमिव तु ॥ १२ ॥

तुशब्दात् पक्षो विपरिवर्त्तते। इवशब्द एवकारार्थः। स्वयमेव ब्रह्मचार्य्यात्मानमभिषिञ्चेत् न पुनराचार्य्योऽभिषिञ्चेत्। अतएव वक्ष्यति। 'आत्मानमभिषिञ्चति'—इति। तस्मात्, आचार्य्योऽभिषिञ्चेदित्येतत् परमतम्—इति तत्त्वकारोक्तमादरणीयम् ॥ ० ॥ ॥ १२ ॥०॥

कस्मात् पुनः कारणात् स्वयमेव ब्रह्मचर्य्यात्मानमभिषिञ्चेत, न पुनराचार्य्यः?। उच्यते,—

मन्त्रवर्णो भवति ॥ १३ ॥

यस्मात् स्वयमेवाभिषेके मन्त्रवर्णो भवति, तस्मात् स्वयमेवाभि-

षिञ्चेदित्यर्थः। कः पुनरसौ मन्त्रवर्णः?। 'तेनासौ मामभिषिञ्चामि'—इति, 'तेन मामभिषिञ्चतम्'—इतिच। तस्मात् स्वयमेवाभिषिञ्चेत् नाचार्य्यः—इति सिद्धम्। अपरे तु, आचार्य्योऽभिषिञ्चेदित्यस्य परमतत्वमसहमानाः आचार्य्यः—इति प्रथमां विभक्तिं तृतीयारूपेण विपरिणमयन्तोऽध्याहारञ्च कुर्व्वन्तो वर्णयन्ति,—आचार्य्येणानुज्ञातो ब्रह्मचारी अभिषिञ्चेत्—इति ॥ ॥०॥ १३ ॥०॥

ब्रह्मचारी स्वयमभिषिञ्चेत्,—इति स्थिते, अभिषेकप्रकार इदानीमभिधीयते,—

ये अप्स्वन्तरग्नयः प्रविष्टाः इत्यपामञ्जलिमवसिञ्चति ॥ १४ ॥

ये अप्सु—इति मन्त्रेण, अपां प्रकृतानाम्, अञ्जलिम् अवसिञ्चति अवाचीनं सिञ्चति त्यजति ब्रह्मचारी। भूमावित्यर्थः। एवञ्च सति, 'अभितान् सृजामि'—इति मन्त्रलिङ्गमप्यनुगृह्यते। एवमुत्तरत्रापि ॥०॥ १४ ॥०॥

यदपां घोरं यदपां क्रूरं यदपामशान्तमिति च ॥ ॥ १५ ॥

अपामञ्जलिमवसिञ्चति। तस्मादत्रापि पूर्व्ववत् भूमावेवाञ्जलिपरित्यागः ॥०॥ १५ ॥०॥

यो रोचन स्तमिह गृह्णामीत्यात्मानमभिषिञ्चति ॥ ॥ १६ ॥

यो रोचनः—इति मन्त्रेणात्मानमभिषिञ्चति अभि सर्व्वतोभावेन सिञ्चति, प्रकृतानामेवापामञ्जलिना। स खल्वयमभिषेकः शिरसि कर्त्तव्यः। कथं ज्ञायते?। 'अभिषिञ्चति'—इति वचनात्। 'अथाप्लवनम्'—इति चोपक्रमात्। एवं खल्वाम्नायते। "शिरः प्रधानमङ्गानाम्'—इति वचनाच्च। सन्देहे हि प्रधानानुसरणं कर्त्तुमुचितम्। एवमग्रेऽपि ॥०॥ १६ ॥०॥

## यशसे तेजसे इति च ॥ १७ ॥

यशसे—इत्यादिना मन्त्रेण च पूर्व्ववदात्मानमभिषिञ्चति ब्रह्मचारी, प्रकृतानामपामञ्जलिना ॥०॥ १७ ॥०॥

## येन स्त्रियमकृणुतमिति च ॥ १८ ॥

येन स्त्रियमिति मन्त्रेण च पूर्व्ववदात्मानमभिषिञ्चति ॥०॥१८॥०॥

## तूष्णीं चतुर्थम् ॥ १९ ॥

पूर्व्ववदात्मानमभिषिञ्चति ॥०॥ १९ ॥०॥

## उपोत्थायादित्यमुपतिष्ठेतोद्यन्भ्राजभृष्टिभिरित्येतत्प्रभृतिना मन्त्रेण ॥ २० ॥

उपेति सामीप्ये। आचार्य्यस्य समीपादुत्थाय, (आदित्याभिमुखः सन्) आदित्यमुपतिष्ठेत आराधयेत्। केन?। उद्यन् भ्राजभृष्टिभिरित्येवमादिना मन्त्रेण मा माहिंसीरित्यन्तेन मन्त्रचतुष्टयेनेत्यर्थः ॥०॥ २० ॥०॥

## यथालिङ्गं वा विहरन् ॥ २१ ॥

यथालिङ्गं वा मन्त्रं विहरन् विहृतं कुर्व्वन् आदित्यमुपतिष्ठेत। कथन्नाम?। प्रातर्लिङ्गेन प्रातरुपतिष्ठेत, माध्यन्दिनलिङ्गेन मध्यन्दिने, सायंलिङ्गेन सायमुपतिष्ठेत,—इति। विहारो विकर्षणं पृथक्करणमित्येतत् ॥०॥ २१ ॥०॥

विहारपक्षे तावत् त्रयाणां मन्त्राणामेकैकस्य मन्त्रस्य खल्वेवमेकैकस्मिन्नुपस्थाने विनियोगः उक्तः, चतुर्थस्य तु मन्त्रस्य सन्ध्यात्रयेऽपि विनियोगमाह,—

## चक्षुरसीत्यनुबध्नीयात् ॥ २२ ॥

चक्षुरसीति चरमं मन्त्रम्, अनु प्रातरादिलिङ्गानां मन्त्राणां पश्चात्, बध्नीयात् ग्रथयेदित्यर्थः। तथाच, यथालिङ्गं मन्त्रमुच्चार्य्य चक्षुरसीति च पश्चादुक्त्वा सर्व्वत्रोपतिष्ठेत ॥०॥२२॥०॥

## मेखलामवमुञ्चत उदुत्तमं वरुणपाशमिति ॥२३॥

मेखलामवमुञ्चते अवाचीनं मुञ्चति उदुत्तममिति मन्त्रेण। मुञ्चते—इति च्छेदप्रतिषेधार्थम्। अव—इत्यधस्तान्मोचनार्थम् ॥ ॥०॥ २३ ॥०॥

## ब्राह्मणान् भोजयित्वा स्वयं भुक्त्वा केशश्मश्रुरोमनखानि वापयीत शिखावर्जम् ॥ २४ ॥

ब्राह्मणान् भोजयित्वा—इत्यनेनाम्नाहार्य्यश्राद्धमुक्तम्। एवमेके।

कर्म्मापवर्गविहितं ब्राह्मणभोजनमनेनोच्यते। एवमपरे। न च परस्तादपि कर्म्मापदेशादेतदयुक्तमिति केनचिदुक्तं युक्तमिति वाच्यम्। पुरस्तादपि कर्म्मापदेशादन्वाहार्य्यश्राद्धस्याप्येतर्हि विधानस्यानुचितत्वात्। तत् खल्वादितः कर्म्मणो विहितम्। तस्माद् वचनबलाददोषः,—इत्युभयत्रापि समानः परिहारः। तथापि, कतरः पुनरत्र पक्षो युक्तः?। अन्वाहार्य्यश्राद्धमनेनोच्यते,—इत्ययम् —इत्याह। कस्मात्?। यस्मात् समानेऽपि क्रमभेदे प्रधानकर्म्मणः स्नानस्यादितः कदाचिदुपरमन्वाहार्य्यश्राद्धमभ्युपगन्तुं युक्तम्, न पुनः कर्म्मापवर्गविहितं ब्राह्मणभोजनं जातुचिदपि प्रधानकर्म्मणः पूर्व्वं वर्णयितुमुचितम्। स्नानं खल्वत्र प्रधानं कर्म्म। कुतः?। 'अथाप्लवनम्'—इत्युपक्रमात्। 'स्नानं सहधर्म्मचारिणीसंयोगः'—इति च गौतमेन पुरुषसंस्कारमध्ये तस्य गणनात्। तस्मादन्वाहार्य्यश्राद्धमिदानीमुच्यते,—इत्यादरणीयम्। उभयस्मादपि ब्राह्मणभोजनादन्यदेव वा ब्राह्मणभोजनमनेन वाच्यम्। इदानीमेव कर्म्मापवर्गं मन्यमानो भवदेवस्तु गादेयवचन एव।

तदेवं ब्राह्मणान् भोजयित्वा स्वयञ्च भुक्त्वा शिखावर्ज्जं केशादीनि वापयीत। अत्र शिखावर्ज्जमिति करणात् पुरस्तात् सशिखमेव वपनं कार्य्यमित्यभिहितमस्माभिः ॥०॥ २४ ॥०॥

**स्नात्वाऽलङ्कृत्याहते वाससी परिधाय स्रजमाबध्नीत, —श्रीरसि मयि रमस्वेति ॥ २५ ॥**

स्नात्वा कुण्डलादिभिरात्मानमलङ्कृत्य, अहते वाससी परिधाय,

स्रजं पुष्पमालाम्, शिरःप्रधानत्वादङ्गानां शिरस्याबध्नीत, श्री-रसीतिमन्त्रेण ॥०॥ २५ ॥०॥

नेत्र्यौ स्थो नयतं मामित्युपानहौ ॥ २६ ॥

नेत्र्यौ—इति मन्त्रेणोपानहौ आबध्नीत। योग्यत्वात् प्रसिद्धेश्च पादयोः ॥०॥ २६ ॥०॥

गन्धर्व्वोऽसीति वैणवं दण्डं गृह्णाति ॥ २७ ॥

वेणुर्वंशः। तत्प्रभवं वैणवं दण्डं गृह्णाति गन्धर्व्वोऽसीति मन्त्रेण ॥ ॥०॥ २७ ॥०॥

आचार्य्यं सपरिषत्कमभ्येत्याचार्य्यपरिषदमीक्षते,—यक्षमिव चक्षुषः प्रियो वो भूयासमिति ॥ २८ ॥

परिषत् सभा—इत्यनर्थान्तरम्। सपरिषत्कं शिष्यादिसभासहितमाचार्य्यम्, अभ्येत्य आभिमुख्येनागत्य, आचार्य्यपरिषदमीक्षते यक्षमिवेति मन्त्रेण। पुनराचार्य्यग्रहणमाचार्य्यसहितायाः परिषद ईक्षणार्थम्। इतरथा परिषद एवेक्षणं स्यान्नाचार्य्यस्य ॥ ॥०॥ २८ ॥०॥

उपोपविश्य मुख्यान् प्राणान् संमृशन्नोष्ठापिधाना नकुलीति ॥ २९ ॥

उप आचार्य्यस्य समीपे उपविश्य, मुख्यान् मुखभवान् प्राणान् वायून्—(तेषाममूर्त्तत्वात्) तदायतनानि—मुखनासिकाऽक्षिकर्ण-

च्छिद्राणीत्यर्थः। मंहमन् सृशन् श्रोत्रापिधानेति मन्त्रं जपेत्॥ ॥०॥ २९ ॥०॥

**अथैनमाचार्य्योऽर्हयेत्॥ ३०॥**

अथैतस्मिन्नवसरे एनं स्नातकमाचार्य्योऽर्हयेत् वक्ष्यमाणेन विधिना। तत्र 'स्नातकः'—इति यो वक्ष्यते, सोऽयम्॥०॥ ३०॥०॥

**गोयुक्तꣳ रथमुपसंक्रम्य पक्षसी कूवरबाहू वाऽभिमृशेत् वनस्पते विड्वङ्गो हि भूया इति॥ ३१॥**

गोभिर्युक्तं रथमुपसङ्क्रम्य,—उप समीपे सम्यक् गत्वा। पक्षसी चक्रे। कूवरबाहू वा। कूवरो युगन्धरः—इत्यनर्थान्तरम्। तस्य बाहू इव बाहू. कूवरबाहू कूवरपार्श्वे—इत्येतत्। तौ वा। अभिमृशेत् स्पृशेत् वनस्पते—इति मन्त्रेण॥०॥ ३१॥०॥

ततो रथमारुह्य,—

**आस्थाता ते जयतु जेत्वानीत्यातिष्ठति॥ ३२॥**

वनस्पते इति मन्त्रस्य चतुर्थपादेन आस्थाता—इत्यनेन, आतिष्ठति तस्मिन् रथे सम्यक् तिष्ठति॥०॥ ३२॥०॥

ततश्च तेनैव रथेन,—

**प्राङ् वोदङ् वाऽभिप्रयाय प्रदक्षिणमावृत्त्योपयाति॥ ॥ ३३॥**

प्राङ्मुखो वा उदङ्मुखो वा, अभिप्रयाय सर्व्वतोभावेन प्रकर्षेण

गत्वा, प्रदक्षिणं यथा भवति तथा आवृत्त्य आवर्त्तनं कृत्वा उपयाति आचार्य्यसमीपं गच्छति ॥०॥ ३३ ॥०॥

उपयातायार्घ्यमिति कौहलीयाः ॥ ३४ ॥

रथादवरुह्योपयातायाचार्य्यसमीपं गताय स्नातकाय अर्घ्यमर्हणमाचार्य्येण कर्त्तव्यम्, न तु पूर्व्वमिति कौहलीयाः कौहलीयशाखाविशेषाध्यायिन आचार्य्या मन्यन्ते ॥०॥ ३४ ॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये तृतीयप्रपाठकस्य चतुर्थी काण्डिका ॥०॥

---

तृतीयप्रपाठके पञ्चमी काण्डिका ।



स्नानविधिमभिधाय, अथेदानीं स्नातकव्रतविवक्षया इदमाह,—

**अत ऊर्द्ध्वं वृद्धशीली स्यादिति समस्तोद्देशः ॥ १ ॥**

अतोऽस्मात् स्नानादूर्द्ध्वं परतः, वृद्धशीली स्यात् । वृद्धाः,—

"न तेन वृद्धो भवति येनास्य पलितं शिरः ।

यो वै युवाप्यधीयान स्तं देवाः स्थविरं विदुः" ।

इत्युक्तलक्षणाः । वृद्धानां शीलं वृद्धशीलम्, तदस्य अस्ति,—इति वृद्धशीली, तथाविधो भवेत् । वृद्धाः खल्वधिगतवेदाः साचात् कृतधर्म्माणोऽनिष्टफलकं कर्म्मजातं परिहृत्य श्रेयःसाधनान्येव कर्म्माणि यत्नतः परिशीलयन्ति, अतोऽयमपि स्नातको वृद्धशीली भवेत् । अन्ये त्वाहुः,—'वृद्धाः स्थविराः, ते हि चिरजीवितया विदितबहुधर्म्ममार्गा भवन्ति, अतो युक्तं तच्छीलित्वम्'—इति । 'इति' अयम्, समस्तोद्देशः समस्तानां स्नातकव्रतानाम् उद्देशः संक्षेपेणोपदेशः । शिष्यहितार्थस्तु उत्तरः प्रपञ्चः । श्लोकमपि उदाहरन्ति ।

"वितीर्य्यं हि मह्ज्ज्ञानमृषिः संविश्य चाब्रवीत्।
दृष्टं हि विदुषां लोके समासव्यासधारणम्"।

इति ॥०॥ १ ॥०॥

## तच्चैतान्याचार्य्याः परिसञ्चक्षते ॥ २ ॥

तत्र तस्मिन् वृद्धशीलविषये स्नातकव्रतविषये वा एतानि वक्ष्यमाणानि व्रतानि आचार्य्याः परिसञ्चक्षते सर्व्वतोभावेन सम्यग् वदन्ति ॥०॥ २ ॥०॥

कानि पुनस्तानि ?। उच्यते,—

## नाजातलोम्न्योपहासमिच्छेत् ॥ ३ ॥

यस्या यौवनोद्भेदव्यञ्जिका श्यामा रोमराजिरल्पापि न जाता, सेयमजातलोम्नी अजातव्यञ्जना चोच्यते। तया सह उपहासं सनमापि नेच्छेत्। उपहासः सम्भोगो भोगो मैथुनमित्येकोऽर्थः। तथा चोक्तम्।

"अजातव्यञ्जनाऽलोम्नी, न तया सह संविशेत्"।

इति ॥०॥ ३ ॥०॥

## नायुग्वा ॥ ४ ॥

काकबन्ध्यायां या जायते, सेयमयुगूः। तया सह नोपहासमिच्छेत्। अर्थादुपयमनसेवास्या निषिध्यते। तथा चोक्तम्।

"अयुगूः काकबन्ध्याया जाता, तां न विवाहयेत्"।

इति ॥०॥ ४ ॥०॥

न रजस्वलया ॥ ५ ॥

रजस्वलया उदक्यया सह नोपहासमिच्छेत् ॥०॥ ५ ॥०॥

न समानर्ष्या ॥ ६ ॥

समाना ऋषयः प्रवराः यस्याः, सेयं समानर्षी। तया सह नोपहासमिच्छेत्। अयमपर्य्यादुपयमनस्यैव प्रतिषेधः। तथा च स्मरणम्। "असमानप्रवरां विवाहयेत्"—इति। "न सगोत्रां न समानप्रवरां भार्य्यां विन्देत"—इति चैवमादि ॥०॥ ६ ॥०॥

नापरया द्वारा प्रपन्नमन्नं भुञ्जीत ॥ ७ ॥

द्वार्शब्दो द्वारशब्दपर्य्यायः। अपरया द्वारा गवाक्षादिद्वारेण प्रपन्नमाहृतमन्नं न भुञ्जीत नाश्नीयात्। अन्नमितिकरणात् धान्यादीनामप्रतिषेधः,—इति वदन्ति ॥०॥ ७ ॥०॥

न द्विःपक्वम् ॥ ८ ॥

द्विःकृत्वो यत् पच्यते, तदिदं द्विःपक्वं, द्विःखिन्नमाख्यायते। तथाविधमन्नं न भुञ्जीत। द्विःखिन्नञ्च तदेव;—यत् सूपकार-शास्त्रापेक्षितपाकनिष्पत्त्यनन्तरं शैत्यादिनिवृत्तये पुनः पच्यते। न पुन रर्द्धपाकानन्तरं तत्शास्त्रोक्तसम्भारणरूप-पाकान्तरसिद्धं व्यञ्जनादि। अतीतार्थ-क्तनिर्देशात् ॥०॥ ८ ॥०॥

न पर्य्युषितम् ॥ ९ ॥

पर्य्युषितमन्नं न भुञ्जीत ॥०॥ ९ ॥०॥

किं सर्व्वमेव पर्य्युषितं न भोक्तव्यम्?। न। किन्तर्हि?—

अन्यत्र शाकमांसयवपिष्टविकारेभ्यः ॥ १० ॥

यवविकाराः सक्तुप्रभृतयः। पिष्टविकाराः पिष्टकादयः। प्रसिद्ध-मन्यत्। यवग्रहणं गोधूमस्याप्युपलक्षणार्थम्। एभ्योऽन्यत्र पर्य्युषितं न भुञ्जीत। एतानि तु पर्य्युषितान्यपि भुञ्जीत। अत्र द्वन्द्वैकवद्भावादेव सिद्धे बहुवचनमन्यस्यापि संग्रहार्थम्। तथाच मनुः।

"यत्किञ्चित् स्नेहसंयुक्तं भक्ष्यं भोज्यमगर्हितम्।
तत्पर्य्युषितमप्याद्यं हविःशेषञ्च यद्भवेत्।
चिरस्थितमपि त्वाद्यमस्नेहाक्तं द्विजातिभिः।
यवगोधूमजं सर्व्वं पयसश्चैव विक्रिया"।

इति। तथा यमः।

"मसूरमाषसंयुक्तं तथा पर्य्युषितञ्च यत्।
तत्तु प्रक्षालितं कृत्वा भुञ्जीत ह्यभिघारितम्"।

इति। तस्मात् पर्य्युषितमप्येवमादि भोक्तव्यम्। विकारान्तरप्राप्तन्तु सर्व्वथैव वर्ज्जनीयम्। कुतः?।

"अपूपाश्च करम्भाश्च धाना वटकसक्तवः।
शाकं मांसञ्च पूपञ्च सूपं कृसर एव च।
यवागूं पायसञ्चैव यच्चान्यत् स्नेहसम्भवम्।
सर्व्वं पर्य्युषितं भक्ष्यं शुक्तञ्च परिवर्ज्जयेत्"।

इति वचनात्। शुक्तं यन्मधुरं कालवशादम्लतां गतम्—इति शूलपाणिः। तत्रापि विशेषो मनुनोक्तः।

"दधिभक्ष्यञ्च सूक्तेषु सर्व्वञ्च दधिसम्भवम्"।

इति। खण्डादिपक्वस्य तु पर्य्युषितत्वमेव नास्ति। तथा च स्मरणम्।

"खण्डाज्यादिकृतं पक्वं नैव पर्य्युषितं भवेत्"।

इति। सोऽयं संक्षेपतः शास्त्रार्थः। विस्तरस्तु बुद्धिमद्भिरूहनीयः॥ ॥०॥ १० ॥०॥

## न वर्षति धावेत् ॥ ११ ॥

वर्षति पर्ज्जन्ये न धावेत् न वेगेन गच्छेत् ॥०॥ ११ ॥०॥

## नोपानहौ स्वयꣳ हरेत् ॥ १२ ॥

स्वयमुपानहौ न हरेत्;—पादव्यतिरेकेण हस्तादिना देशान्तरं न प्रापयेत्। स्वयमितिकरणात् आत्मीयावेवोपानहौ न हरेत्, आचार्य्यादीनामुपानहौ हरन्नपि नापराध्यते,—इत्यभिप्रायः ॥ ॥०॥ १२ ॥०॥

## नोदपानमवेक्षेत् ॥ १३ ॥

उदकं पीयते अस्मादित्युदपानं कूपः, तं नावेक्षेत् अवाचीनं न पश्येत् ॥०॥ १३ ॥०॥

## न फलानि स्वयं प्रचिन्वीत ॥ १४ ॥

स्वयमात्मना फलानि न प्रचिन्वीत, प्रकर्षेण—वृक्षमारुह्य नाहरेत् ॥०॥ १४ ॥०॥

नागन्धाꣳ स्रजं धारयेत् ॥ १५ ॥

गन्धः शोभनोऽभिप्रेतः। स नास्ति यस्याः सेयमगन्धा। तां स्रजं न धारयेत् ॥०॥ १५ ॥०॥

किं सर्व्वामेव?। न। कतमान्तर्हि?—

अन्याꣳ हिरण्यस्रजः ॥ १६ ॥

हिरण्यस्रजः सुवर्णमालायाः अन्यामगन्धां स्रजं न धारयेत्। हिरण्यस्रजन्त्वगन्धामपि धारयेदित्यर्थः ॥०॥ १६ ॥०॥

न मालोक्ताम् ॥ १७ ॥

मालाशब्देनोक्तां कामपि स्रजं न धारयेत् ॥०॥ १७ ॥०॥

मालोक्तान्तर्हि स्रजं त्यजेदेव?। न। किन्तर्हि कुर्य्यात्?—

स्रगिति वाचयेत् ॥ १८ ॥

यां स्रजं मालाशब्देन वक्ति स्म, तां स्रगिति वाचयेत्,—ततो धारयेदित्यर्थः ॥०॥ १८ ॥०॥

भद्रमित्येतां वृथावाचं परिहरेत् ॥ १९ ॥

भद्रं कल्याणमित्यनर्थान्तरम्। भद्रमित्येतामेवम्भूतां वृथावाचम् असत्यां वाणीं परिहरेत्। तां न वदेदित्यर्थः। किमनेनोक्तं भवति?। एतदनेनोक्तं भवति। "नाभद्रमभद्रं ब्रूयात् पुण्यं प्रशस्तमिति ब्रूयात्"—इति, "अभद्रं भद्रमिति"—इति चैवमादि-वचनादभद्रे भद्रवदनं परेषामनुमतम्। तदेतन्मनागपि मिथ्या-

वचनादिष्यता आचार्य्येण प्रतिषिध्यते,—'भद्रमित्येतां वृथावाचं परिहरेत्'—इति। भद्रे खलु भद्रशब्दो यथार्थवचनः स्यात्। अभद्रे तु भद्रशब्दो वृथैव भवत्ययथार्थोऽनृतं मिथ्येत्येकोऽर्थः। तस्मादेतत् परिहरेत्,—इत्याचार्य्यस्य मतम्। कस्मात् कारणात्?। अनृतदोषप्रसङ्गात्। प्रशंसानिन्दावचनलाघवमादेः। तथाच स्मरणम्।

"सत्यं ब्रूयात् प्रियं ब्रूया न्नब्रूयात् सत्यमप्रियम्।
प्रियञ्च नानृतं ब्रूयादेष धर्मः सनातनः"।

इति।

"चक्षुष्मानिति लुप्ताचं चण्डालं ब्राह्मणेति च।
प्रशंसानिन्दनं द्वेषात् परुषा न्न विशिष्यते"।

इति चैवमादि ॥०॥ १९ ॥०॥

अतो यद्भद्रं तदेव,—

## भद्रमिति ब्रूयात् ॥ २० ॥

भद्रमित्येवमादिना पर्य्यायशब्देन ब्रूयात्, भद्रमित्येव वा ब्रूयात्। तदाह मनुः।

"भद्रं भद्रमिति ब्रूयाद्भद्रमित्येव वा वदेत्"।

इति। भद्रे भद्रवदनस्यार्थत एव सिद्धत्वात् यत् पुनर्भद्रमिति करोति, तद्बोधयति;—भद्रमेव भद्रमिति ब्रूयान्नाभद्रम्—इति। तस्मात् समीचीनमुक्तमाचार्य्येण,—'भद्रमित्येतां वृथावाचं परिहरेत्'—इति। अन्येत्वेवं वर्णयन्ति। 'भद्रं कल्याणम्। भद्र-

मिति ब्रूयात्, न तु परुषवचनेन। अनेनैतद्दर्शयति। सत्यमप्यप्रियं न वक्तव्यमिति' ॥०॥ २० ॥०॥

इदानीं स्नातकान् विभजते,—

तत्रैते त्रयः स्नातका भवन्ति ॥ २१ ॥

तत्र तस्मिन् प्रकृतव्रते एते वक्ष्यमाणाः त्रयः स्नातका भवन्त्यधिकारिणः ॥०॥ २१ ॥०॥

के पुनस्ते?। उच्यते,—

विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातक इति ॥ ॥ २२ ॥

इत्येते त्रयः स्नातका नामतो निर्दिष्टाः। यः खल्वापत्कल्पत्वात् यथोक्तकालानां व्रतानां सम्यगनुष्ठानमकृत्वा, 'ग्रहणान्तिकमेव वा'—इति वचनाद्ग्रहणान्तिकेनैव ब्रह्मचर्य्येण वेदमधीत्य स्नाति, सोऽयं विद्यास्नातकः। यस्तु, यथोक्तकालिकानि व्रतान्यनुष्ठाय वेदस्य समग्रमनधीत्यैव स्नाति, स खल्वयं व्रतस्नातकः। यः पुनर्यथोक्तकालिकानि व्रतान्यनुष्ठाय वेदमपि समग्रमधीत्य स्नाति, असौ विद्याव्रतस्नातकः। तथाच हारीतः। "यः समाप्यवेदमसमाप्यव्रतानि समावर्त्तते स विद्यास्नातकः। यः समाप्य व्रतान्यसमाप्यवेदं समावर्त्तते स व्रतस्नातकः। उभयं समाप्य समावर्त्तते यः स विद्याव्रतस्नातकः"—इति। याज्ञवल्क्योऽप्याह।

"वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा"।

इति । अन्येतु,—'नियमेनाधीतं वीर्य्यवत्तरं भवति,—इति ब्राह्मणवाक्यम्—

"आ हैव स नखाग्रेभ्यः परमं तप्यते तपः ।
यः स्रग्व्यपि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम्" ।

इति मनुवचनञ्च,—आलोचयन्तः, विनापि ब्रह्मचर्य्यमधीत्य वेदं यः स्नाति सोऽपि विद्यास्नातको भवति'—इति मन्यन्ते ॥०॥ २२ ॥०॥

तेषामुत्तमः श्रेष्ठस्तुल्यौ पूर्व्वौ ॥ २३ ॥

तेषां त्रयाणां स्नातकानां मध्यात् उत्तमः प्रथममध्यमभिन्नः विद्याव्रतस्नातकः—इत्येतत् । उत्तरः—इति पाठेपि तथैवार्थः । स श्रेष्ठः प्रशस्यतमः । पूर्व्वौ द्वौ विद्यास्नातक व्रतस्नातकौ तुल्यौ समानौ ।

आह । कस्मात् पुनः कारणात् स्नातकविवेकात् पुरस्ताच्चोपरिष्टाच्च व्रतान्युपदिश्यन्ते ?;—ननु प्रागेव स्नातकव्रतोपन्यासात् पश्चादेव वा, तेषां विवेकः कर्त्तुमुचितः । उच्यते । स्नातकविवेकात् पुरस्ताच्चोपरिष्टाच्च स्नातकव्रतोपदेशः,—तेषामिव स्नातकप्रकरणात् पुरस्ताच्चोपरिष्टाच्चोपदिष्टानामविरोधिनामन्येषामपि धर्म्माणां प्राप्तिप्रज्ञापनार्थः । किमनेनोक्तं भवति ? । एतदनेनोक्तं भवति । ये खल्वस्य पूर्व्वाश्रमिणो ब्रह्मचारिणः ये चोत्तराश्रमिणो वैखानसभिक्षवः,—तेषामपि ये धर्म्माः सत्यवचनक्रोधपरिहारेन्द्रियसंयमादयः, दयाप्रभृतयः,—

"दृष्टिपूतं न्यसेत् पादं वस्त्रपूतं जलं पिबेत्"।

इत्येवमादयस्तु स्नातकस्य न विरुध्यन्ते, तेष्वप्ययमधिकरोति—इति। ये तु विरुध्यन्ते योषिद्गमनप्रतिषेधादयः, तेषु पुनर्नाधिकरोत्येव। तथा गौतमेनापि ब्रह्मचारिधर्म्मोपदेशावसाने "उत्तरेषाञ्चैतदविरोधि"—इति सूचयता एतदेवोक्तम्। अस्य खल्वयमर्थः। एतदविरोधि ब्रह्मचारिधर्म्मजातम् उत्तरेषां गृहस्थादीनामपि, चशब्दात् अविरोधि यदुत्तरेषां धर्म्मजातं तत्पूर्व्वेषामपि,—इति। अलमतिप्रसङ्गेन ॥०॥ २३ ॥०॥

प्रकृतं स्नातकव्रतमेव पुनरनुवर्त्तामहे,—

## नार्द्रं परिदधीत ॥ २४ ॥

आर्द्रं जलक्लिन्नं वासो न परिदधीत ॥०॥ २४ ॥०॥

## नैकं परिदधीत ॥ २५ ॥

एकं वासो न परिदधीत। एकवासाः न स्यादित्यर्थः। तदनेनोत्तरीयमप्यस्य वासः—इत्यवगम्यते। एवमेके। अन्येतु,—अन्तर्वाससोविधानम्—इच्छन्ति। कस्मात्?। परिदधीत—इति पुनर्व्वचनात्। परिदधीत—इति खल्वनुवर्त्तत एव, यदत्र पुनः क्रियते तदधःपरिधानमेवैकस्य वाससोनिषिध्यते,—इति द्योतनार्थम्। प्रायेण हि परिदधातिरधः परिधानमेव बोधयति। तस्मात् वासोद्वयमेव अधः परिदधीत। उत्तरीयन्तु अतोऽपि पृथक्। तथाच स्मृत्यन्तरम्।

"जलतीरं समासाद्य तत्र शुक्ले च वाससी।
परिधायोत्तरीयञ्च कुर्य्यात् केशा न्न धूनयेत्"।
"नाभेरधःकृते सम्यङ् न दोषो बहुवाससाम्"।
इति। न चैवमपि बहुवासस्त्वदोषशङ्का कर्त्तव्या। कुतः?।
"स्नातकानान्तु नित्यं स्यादन्तर्वासस्तथोत्तरम्"।
इति चैवमादि।
इति स्मरणात् ॥०॥ २५ ॥०॥

**न मनुष्यस्य स्तुतिं प्रयुञ्जीत ॥ २६ ॥**

प्रकर्षेण गद्यपद्यादिना कस्यापि मनुष्यस्य स्तुतिं न कुर्य्यात् ॥०॥ २६ ॥०॥

**नादृष्टं दृष्टतोब्रुवीत* ॥ २७ ॥**

दृष्टतः—इति सार्व्वविभक्तिकस्तसिल्। अदृष्टं यत्, तत् दृष्टमिति न कथयेत् ॥०॥ २७ ॥०॥

**नाश्रुतं श्रुततः ॥ २८ ॥**

पूर्व्वसूत्रव्याख्यानेनैव व्याख्यातमेतत् ॥०॥ २८ ॥०॥

**स्वाध्यायविरोधिनोऽर्थानुत्सृजेत् ॥ २९ ॥**

स्वाध्यायोवेदाभ्यासः। स च स्वीकार विचाराऽभ्यसन जप दानभे-

* ब्रूयात्—इति पाठान्तरम्।

दात् पञ्चविधः। स्वाध्यायं विरुन्धन्ति इति स्वाध्याय विरोधिनः। तान् स्वाध्यायविरोधिनः अर्थान् व्यापारान् उत्सृजेत् त्यजेत् ॥०॥ २९ ॥०॥

तैलपात्रमिवात्मानं दिधारयिषेत् ॥ ३० ॥

तैलपूर्णं पात्रं यथा स्फुटन चलन विपर्य्यास श्व काकादिदूषणादिभ्यो यत्नातिशयेन रक्ष्यते, तथैवात्मानं स्वशरीरमपि दिधारयिषेत् सर्वापद्भ्योरक्षितुमिच्छेत्। स्वर्गापवर्गसाधनः खल्वयमात्मा,— इति यत्नातिशयेन तद्रक्षणं कर्त्तुमुपदिदिक्षुराचार्यो लौकिकानां सुखावबोधार्थं लौकिकमेव दृष्टान्तमुरीचकार;—तैलपात्रमिव— इति। अतएव, धारयेत्—इति वक्तव्ये दिधारयिषेत्—इत्युक्तम्;—मनसापि शरीरापकारं कर्त्तुं नेच्छेदित्येवमर्थम्। ते खल्वनेके शरीरापकारहेतवो न शक्याः प्रतिपदं परिकीर्त्तयितुमिति संक्षेपत एतत् सूचितम् ॥०॥ ३० ॥०॥

न वृक्षमारोहेत् ॥ ३१ ॥

स्पष्टार्थं सूत्रम् ॥०॥ ३१ ॥०॥

न प्रतिसायं ग्रामान्तरं व्रजेत् ॥ ३२ ॥

प्रतिसायं सायंप्रति सन्धिवेलायाम्—इत्येतत्। तथाच मनुः।

"नाश्नीयात् सन्धिवेलायां न गच्छेन्नापि संविशेत्"।

इति। स्पष्टमन्यत् ॥०॥ ३२ ॥०॥

नैकः ॥ ३३ ॥

ग्रामान्तरं व्रजेत्—इत्यनुवर्त्तते ॥०॥ ३३ ॥०॥

न वृषलैः सह ॥ ३४ ॥

वृषलैः,—

"न शूद्रो वृषलो नाम वेदो हि वृष उच्यते।
यस्य विप्रस्य तेनालं स वै वृषल उच्यते"।

इत्युक्तलक्षणैः, शूद्रैर्व्वा, सह न ग्रामान्तरं व्रजेत्। तैश्च केवलैरेव सह, न संमिश्रैरपि—इति बोद्धव्यम्। कुतः?। निरपेक्षश्रवणात् ॥०॥ ३४ ॥०॥

न कास्रुत्या ग्रामं प्रविशेत् ॥ ३५ ॥

स्रुतिः पन्थाः। ईषत् स्रुतिः कास्रुतिः, अल्पः पन्था भण्यते। तया-ग्रामं न प्रविशेत्। महति पथि विद्यमानेपि स्वल्पेन पथा गच्छन्तं समुपजातशङ्का लोकाः कदाचिदपहन्युरपि—इत्यभिप्रायः। अपरेत्वेवं व्याकुर्व्वते। 'कुत्सिता स्रुतिः कास्रुतिः। तया ग्रामं न प्रविशेत्। ग्रामशब्दो गृहस्याप्युपलक्षणार्थः। तथाच मनुः।

"अपद्वारेण नातीयाद्ग्रामं वा वेश्म वा वृतम्"।

इति ॥०॥ ३५ ॥०॥

न चाननुचर श्चरेत् ॥ ३६ ॥

अनुचरति,—इत्यनुचरः परिचारको भण्यते। नास्त्यनुचरो यस्य

सोऽयमननुचरो न चरेत् न गच्छेत्। चशब्दादविनीतानुचरस्य न चरेत्। ननु 'नैकः'—इत्यनेनैव गतार्थत्वादेतदवाच्यम्। नैवम्। पादसम्बाहनादिकमप्यनुचरणम्—परिचर्य्यां यो न करोति, तं विना न चरेदित्यस्यात्रविशेषत्वात्। अथवा। तत्र, ग्रामान्तरमेको न गच्छेदित्युक्तम्। अत्र तु स्वग्रामेऽप्यल्पमपि पन्थानमननुचरो न चरेदित्ययमर्थः ॥०॥ ३६ ॥०॥

## एतानि समावृत्तव्रतानि ॥ ३७ ॥

समावृत्तस्य व्रतानि समावृत्तव्रतानि। समावृत्तः—इति कर्त्तरि निष्ठा। कः पुनरसौ?। विधिवत् स्नात्वा गुरुणा लब्धानुज्ञः तद्गृहात् स्वगृहं प्रति सम्यगावृत्तः—स्वगृहमागतो यः, सोऽयं समावृत्तः। तस्यैतानि अनन्तरोक्तानि व्रतानि भवन्ति। व्रतशब्दोपादानात्,—अजातलोम्न्या सह अनुपहासः कर्त्तव्यः,—इत्येवमादिकोनियमः कर्त्तव्यतया चोद्यते। व्रतं नियमः—इति ह्यनर्थान्तरम्। अनुपहास स्योपहासाभावः। न च तस्य कर्त्तव्यता अस्ति। तस्मात् य स्तत्र मानसो व्यापारः (अजातलोम्न्यासह उपहासो मया न कर्त्तव्यः—इत्येवमादिरूपः) स इह उपदिश्यते। तस्य च परिपालनम्।

सोऽयं नियमः प्रजापतिव्रतवत् कर्त्तव्यतया चोद्यते,—इति कल्याणोदयो भवति। कर्त्तव्यो हि कल्याणोदयः,—इत्याचार्या मन्यन्ते। व्रतस्य खल्वस्याकरणे व्रतफलादेव परं पुरुषो हीयते, न पुनर्निषेधातिक्रमवत् प्रत्यवायमप्यधिगच्छति। यथा खल्वादित्यव्रते सत्यपि "नोद्यन्तमादित्यमीक्षेत"—इति वचने,

"आदित्यं पश्यन्नातिक्रामति विधिम्। न हि तस्य दर्शनं प्रतिषिद्धम्, नियमस्तत्रोपदिष्टः। य स्तं नियमं करोति स फलेन सम्बध्यते"—इति भगवता भाष्यकारेण शबरस्वामिना षष्ठाध्याये सिद्धान्तितम्। तद्दृत्राप्यवगन्तव्यम्।

यः पुन र्नियमं कुर्वाणोऽपि न तं परिपालयति, स तु प्रत्यवैति। सत्यसङ्कल्पः खल्वेतमसौ न स्यात्। आरब्धकाम्यकर्म्मा इव पुरुष स्तस्य परिसमाप्तिमकुर्वन्। तस्मात् नियमं कुर्वाणेन तस्य परिपालनमप्यवश्यं कर्त्तव्यम्। अपरिपालयन् व्रतमयं लोपयति,—इति तत्कृतमस्य प्रायश्चित्तं भवति। न पुनः कलञ्जभक्षणादिवन्निषेधातिक्रमात्। तथा च मनोः स्मरणम्।

"वेदोदितानां नित्यानां कर्म्मणां समतिक्रमे।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम्" ॥

इति। स्नातकव्रतलोपे च,—इति पुनः कुर्व्वन् नित्यत्वमीषां नानुजानाति। अनित्यानाञ्चोपक्रान्तानामेव परमतिक्रमे प्रायश्चित्तमिष्यते। अतएव स्नातकव्रतोपक्रमे तेनैवोक्तम्।

"स्वर्ग्यायुष्ययशस्यानि व्रतानीमानि धारयेत्"।

इति। तथोपसंहारेऽपि।

"एषोदिता गृहस्थस्य वृत्ति र्विप्रस्य शाश्वती।
स्नातकव्रतकल्पश्च सत्त्ववृद्धिकरः शुभः।
अनेन विप्रो वृत्तेन वर्त्तयन् वेदशास्त्रवित्।
व्यपेतकल्मषो नित्यं ब्रह्मलोके महीयते"।

इति। अत्र, वृत्तिः शाश्वती—नित्या, स्नातकव्रतकल्पश्च सत्त्ववृ-

ङ्किकरः—इति व्यक्तममीषामनित्यत्वम्। तत्र च, कस्यचित् स्नातकव्रतमध्यपठितस्यापि पृथक्प्रतिषेधसम्भवात् व्रताकरणेऽपि नित्यवत् परिपालनं बोद्धव्यम्। यथा वृथावचनपरिहारो यद्यपि स्नातकव्रतेषु पव्यते, तथापि मिथ्यावदनस्य पृथक् प्रतिषिद्धत्वात् स्नातकव्रतान्यननुतिष्ठतापि नैव मिथ्या वदितव्यम्। एवमन्यत्रापि यथासम्भवमूहनीयम्।

यदि पुनरनित्यत्वेऽप्यमीषामकरणे वाचनिकं प्रायश्चित्तमित्युच्यते। तदा, 'अजातलोम्न्या सह उपहासो मया न कर्त्तव्यः' —इत्येवमादिकस्य सङ्कल्पस्याकरण एव प्रायश्चित्तम्, न पुनरजातलोम्न्या सहोपहास एव,—इति स्यात्। परमकरणेऽपि प्रायश्चित्ताभ्युपगमे कीदृशममीषामनित्यत्वम्?—इत्ययं पर्य्यनुयोगः समाधेयः ॥०॥ २७ ॥०॥

यानि च शिष्टा विदध्युः ॥ २८ ॥

यानि शिष्टा विदध्युः—वेदशास्त्राविरोधेन तर्कबलेन कुर्य्युः, तानि च समावृत्तव्रतानि। चशब्दात् यानि तन्त्रान्तरसिद्धानि तानि च ॥०॥ २८ ॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये तृतीयप्रपाठकस्य पञ्चमी कण्डिका ॥०॥

तृतीयप्रपाठके षष्ठी कण्डिका।



केचित् यज्ञाः पूर्व्वमुक्ताः, केचिच्च वक्ष्यन्ते। ते खल्वाज्यादि-हविःसाध्याः, तानि च गवामायत्तानि, गावश्च परिपुष्टा एव हवींषि दातुं प्रभवन्ति। अतः सर्व्वयज्ञसाधनभूतानां गवां पुष्टि-कर्म्म वक्तव्यम्। तत्र तावद्गवाश्रयं किञ्चित् कर्म्मोपदिशत्युत्त-रार्थम्—

गाः प्रकाल्यमाना अनुमन्त्रयतेमा मे विश्वतो वीर्य्य इति ॥ १ ॥

प्रकाल्यमानाः तृणचरणाय गृहान्नीयमानाः गाः अनुमन्त्रयेत, इमा मे—इति मन्त्रेण। तदिदमनुमन्त्रणं गवां गृहान्निष्क्रमण-काले कर्त्तव्यम् ॥०॥ १ ॥०॥

प्रत्यागता इमा मधुमतीर्मह्यमिति ॥ २ ॥

प्रत्यागताः सायं गृहमागताः गाः, इमा मधुमतीरिति मन्त्रेणानु-मन्त्रयेत ॥०॥ २ ॥०॥

अथेदानीं गवां पुष्टिकर्म्माह,—

पुष्टिकामः प्रथमजातस्य वत्सस्य प्राङ्मातुः प्रलेह-नाज्जिह्वया ललाटमुल्लिह्य निगिरेद्गवा१ँ श्लेष्मासीति ॥ ३ ॥

पुष्टिः पोषः उपचयः,—इत्यनर्थान्तरम्। तां कामयते इति पुष्टिकामः। अधिकाराद्गवामेव। वर्षासु प्रायेण गावः प्रसूयन्ते, तदानीं जातानां वत्सानां मध्ये यः प्रथमं पूर्व्वं,—प्रथमः पूर्व्वो वा जायतेस्म, सोऽयं प्रथमजातः, तस्य वत्सस्य, प्राक् पूर्व्वं मातुः प्रलेहनात्,—(प्रलेहनमास्वादनम्) याव न्न माता वत्सं प्रलेढि, तावत्तस्य ललाटं जिह्वया रसनया तूष्णीमुल्लिह्य आ-स्वाद्य गवां श्लेष्मासीतिमन्त्रेण निगिरेत्। सामर्थ्यान्मनसैव मन्त्रः पठनीयः। केचित् पुनरेतदादिनां त्रयाणामपि पुष्टिकर्म्मणां वसन्तादारभ्य मासत्रयं करणमिच्छन्ति। तदसङ्गतम्। कुतः?। वर्षास्वेव बाहुल्येन गवां प्रसवोपलम्भात् तत्रैव कर्त्तुमुचितत्वात्। तथा चोक्तम्।

"ललाटलेहनादीनि गवां कर्म्माणि पुष्टये।
वर्षासु त्रीणि कार्य्याणि भूय स्तत्प्रसवा हि ताः"।

इति ॥०॥ ३ ॥०॥

**पुष्टिकाम एव संप्रजातासु निशायां गोष्ठेऽग्निमुप-समाधाय विलयनं जुहुयात् संग्रहणसंग्रहाणेति ॥ ४ ॥**

पुष्टिकाम एव गवामित्यर्थः। सम्प्रजातासु,—सर्व्वासु गोषु प्रसू-तासु, निशायां रात्रौ, गोष्ठे गवांस्थाने, अग्निमुपसमाधाय संग्रहणेतिमन्त्रेण जुहुयात्। ननु, अग्निमुपसमाधाय,—इत्येतदवा-च्यम्?। जुहोतिचोदनाबलादेव खल्वग्निरवगम्यते। नैष दोषः। कस्मात्?। यस्मात् एतदवचने जलहोमादिवत् गोष्ठ एवाथ

होमः स्यात् न पुनरग्नौ। तथाप्युपसमाधाय—इत्यनर्थकम्?। न। अग्निमुपसमाधायैव जुहुयात् नान्यामावृतं कुर्यादित्येव मर्थत्वात्तस्य। तेन चिप्रहोमः स्यात्। किं जुहुयात्?। विलयनम्। विलयनशब्देन घृतनिस्यन्दनमर्द्धमथितं दधि चोच्यते। तथा चोक्तम्।

"दध्यर्द्धमथितं सर्व्वं तद्दै विलयनं स्मृतम्।
घृतनिस्यन्दनञ्चात्र चिप्रमेका तथाऽऽहुतिः"।

इति। द्रवद्रव्यकत्वात् स्रुवेणायं होमः स्यात्। एका चाहुतिः॥ ॥०॥ ४ ॥०॥

पुष्टिकाम एव संप्रजातास्वौदुम्बरेणासिना वत्स-मिथुनयोर्लक्षणं करोति पुंस एवाग्रेऽथ स्त्रिया भुवनमसि साहस्रमिति ॥ ५ ॥

पुष्टिकाम एव सम्प्रजातास्वित्युक्तार्थम्। औदुम्बरेण ताम्रमयेन, न काष्ठमयेन। कस्मात्?। 'लोहितेन स्वधितिना'—इति मन्त्र-लिङ्गात्। न हि काष्ठमयोऽपि लोहितो भवति। सामर्थ्याच्च। ताम्रमयः खल्वपि लक्षणकरणे समर्थो न काष्ठमयः। असिना क्षुरेण। कुतः?। 'लोहितेन स्वधितिना'—इति मन्त्रलिङ्गादेव। चूडाकरणे किल स्वधितिशब्दः क्षुरे प्रयुक्तः। एवमेके। असिना खड्गेन—इत्यपरे। कस्मात्?। असिशब्दस्य तदर्थत्वात्। न च मन्त्रलिङ्गात् क्षुरः—इति युक्तं वक्तुम्। किं कारणम्?। लिङ्ग-मपेक्ष्य श्रुतेर्बलवत्त्वम्। न खलु लिङ्गानुरोधात् श्रुतिहरत्युं

युज्यते। अतएव, धान्यमसीति तण्डुलानावपति,—इत्यत्र मन्त्रस्य एव धान्यपदे तण्डुललक्षणा, न तु तण्डुलपदस्य धान्यपरत्वम्—इति सिद्धान्तः। तद्वदत्रापि स्वधितिपदस्यैव वरं खड्गपरता स्यात्, न पुनरुत्पत्तिविशिष्टस्यासिपदस्य स्वधितिपरता।

वत्समिथुनयोः। मिथुनं स्त्रीपुंसौ। वत्सयोर्मिथुनं वत्समिथुनं तयोः वत्समिथुनयोः। यावन्ति वत्समिथुनानि सन्ति तावतामेव। द्विवचनकरणात् द्वयोर्द्वयोर्लक्षणं कर्त्तव्यम्। कथं नाम ?। एकस्य वत्समिथुनस्य लक्षणं कृत्वा पुनरन्यस्य करणीयम्। एवमपरापरस्यापि। लक्षणं करोति। लक्ष्यतेऽनेनेति लक्षणं चिह्नं करोति। कुत्र प्रदेशे करोति ?। कर्णयोः। कस्मात् ?। 'मिथुनं कर्णयोः कृतम्'—इति मन्त्रलिङ्गात्।

केन क्रमेण करोति ?। उच्यते। पुंस एवाग्रेऽथ स्त्रियाः। अग्रे आदितः पुंस एव वत्सस्य लक्षणं करोति, अथानन्तरं स्त्रिया वत्साया लक्षणं करोति। एतदनेनोक्तं भवति। एकस्य वत्सस्य द्वयोरपि कर्णयो र्लक्षणं कृत्वा, अथ एकस्या वत्साया द्वयोरपि कर्णयोः कर्त्तव्यम्। ततोऽपरस्य वत्सस्य अपरस्याश्च वत्सायाः। एवमन्येषामपि। कस्मात् पुनः कारणादेवमवगम्यते, सर्व्वेषामेव वत्सानां लक्षणमादितः कृत्वा परतः सर्व्वासां वत्सिकानामेव कुतो न क्रियते ?। उच्यते। वत्समिथुनयोरिति द्विवचनोपन्यासस्यार्थवत्त्वादेवमवगच्छामः। द्विवचनकरणात् खल्वेकस्य वत्सस्यैकस्याश्च वत्साया लक्षणकरणमवगम्यते। अन्यथा वत्समिथुनानाम्—इत्येव कुर्य्यात्। तदिदं द्विवचनं मिथुनस्यैकत्वात् मिथुनावयवौ स्त्रीपुंसा-

वपेक्ष्य द्रष्टव्यम्। एवकाराथशब्दयोश्चोपादानात्। अग्रे पुंस एवेति करणात् खलु स्त्रियमेवापेक्ष्य पुंसोऽग्रत्वमवगम्यते। तत्र यदि सर्व्वेषां वत्सानामादितो लक्षणं क्रियते, तदा पुंसोऽप्यग्रे पुंसो लक्षणं स्यात् न स्त्रिया एव। एवमथ स्त्रियाः—इति करणात् पुंस एव लक्षणकरणात् परतः स्त्रियालक्षणकरणं प्रतीयते। सर्व्वेषां वत्सिकानां परतो लक्षणकरणे च स्त्रिया अपि परतः स्त्रियालक्षणकरणं स्यात् न पुंस एव परतः। तदिदमेकैकमिथुनाभिप्रायं वचनम्। अपि च। पुंस एवाग्रेऽथ स्त्रियाः—इति वचनात् एकवनसंयोगाच्च एकस्य पुंसो लक्षणकरणानन्तरमेवैकस्याः स्त्रियाः लक्षणकरणमवगम्यते। अवगम्यते चे न्नयुज्यते विना कारणमुत्स्रष्टुम्। तस्मात् यथोक्त एवार्थः। केन मन्त्रेण लक्षणं करोति?। भुवनमसि—इति मन्त्रेण। प्रतिकर्णं मन्त्रावृत्तिर्बोद्धव्या। कस्मात्?। "भेदे मन्त्रावृत्तिः"—इति सूत्रान्तरात् ॥०॥ ५ ॥०॥

## कृत्वा चानुमन्त्रयेत लोहितेन स्वधितिनेति ॥ ६ ॥

लक्षणं कृत्वा लोहितेनेति मन्त्रेण अनुमन्त्रयेत। कृत्वा—इति करणात् सर्व्वेषां लक्षणकरणात् परतोऽनुमन्त्रणम्। चशब्दः क्रमविशेषस्मरणार्थः। कथं नाम?। येनैव क्रमेण लक्षणकरणं तेनैव क्रमेणानुमन्त्रणम्—इति। तस्मात् प्रतिकर्णमेवानुमन्त्रणं स्यात्। मन्त्रावृत्तिश्चैका ॥०॥ ६ ॥०॥

तन्तीं प्रसार्य्यमाणां बद्धवत्साञ्चानुमन्त्रयेतेयं तन्ती-गवां मातेति ॥ ७ ॥

तन्ती वत्सबन्धनदाम। तन्तीं—इति केचित् पठन्ति। तामपराह्णे वत्सबन्धनाय प्रसार्य्यमाणामनुमन्त्रयेत—इयं तन्तीति मन्त्रेण। बद्धवत्साञ्च। बद्धो वत्सो यया, तां बद्धवत्सामपि तन्तीमनुमन्त्रयेत तेनैव मन्त्रेण। तदिदमनुमन्त्रणद्वयं बोद्धव्यम् ॥०॥ ७ ॥०॥

तत्रैतान्यहरहः कृत्यानि भवन्ति ॥ ८ ॥

तत्र तस्मिन् काम्ये कर्म्मणि एतानि वक्ष्यमाणसूत्रोद्दिष्टानि अहरहः कृत्यानि प्रतिदिनं कर्त्तव्यानि भवन्ति ॥०॥ ८ ॥०॥
कानि पुनस्तानि ?। उच्यते,—

निष्कालनप्रवेशने तन्तीविहरणमिति ॥ ९ ॥

निष्कालनं पूर्व्वोक्तं गाः प्रकाल्यमाना इति, प्रवेशनमपि पूर्व्वोक्तं प्रत्यागता इति, तन्तीविहरणमनन्तरोक्तमित्येतानि ॥०॥ ९ ॥०॥

गोयज्ञे पायसश्चरुः ॥ १० ॥

गवां पुष्टिकामस्याग्न्यादीनां यजनं गोयज्ञः। तस्मिन् गोयज्ञे पायसः पयसि भवः चरुः स्थालीपाकः कर्त्तव्यः—इति सूत्रशेषः ॥०॥ ॥ १० ॥०॥
तेन च यष्टा,—

अग्निं यजेत पूषणमिन्द्रमीश्वरम् ॥ ११ ॥

यजेत इत्यस्य प्रत्येकमन्वयः। असमासकरणं निर्व्वापहोमयोः पृथक्त्वप्रज्ञापनार्थम्॥०॥११॥०॥

ऋषभपूजा॥१२॥

ऋषभोऽनड्वान्। तस्य पूजा—गलशृङ्गादावाभरणप्रदानेन यवसदानादिना च सत्कारो गोयज्ञे कर्त्तव्यः॥०॥ १२॥०॥

प्रसङ्गात् भूयसा साधर्म्म्याच्च गोयज्ञविध्यतिदेशेनैवाश्वयज्ञमप्युपदिशति,—

गोयज्ञेनैवाश्वयज्ञो व्याख्यातः॥ १३॥

ऋजुरक्षरार्थः। स खल्वयमश्वयज्ञो विद्यमानाश्वेनाश्वपुष्टिकामेन कर्त्तव्यः, न येन केनचित्, नाप्यश्वमुत्पाद्य,—इति बोद्धव्यम्। पायसचरुणा पूर्व्ववदग्न्यादयो यष्टव्याः॥०॥ १३॥०॥

अयं पुनरत्र विशेषः,—

यमवरुणौ देवतानामत्राधिकौ॥ १४॥

देवतानामिति सम्बन्धलक्षणा षष्ठी। अत्राश्वयज्ञे गोयज्ञनिर्दिष्टानां देवतानां यमवरुणौ अधिकौ। यमः पञ्चमो वरुणः षष्ठः। अत्रापि पूर्व्ववत् पृथगेव निर्व्वापो होमश्च। ऋषभपूजास्थाने चाश्वपूजा बोद्धव्या॥०॥ १४॥०॥

प्रासङ्गिकमभिधायेदानीं पूर्व्वगोयज्ञशेषमेवाह,—

गन्धैरभ्युक्षणं गवां गन्धैरभ्युक्षणं गवाम्॥१५॥

ग्रामागतानां गवां गन्धोदकैरभ्युक्षणमाभिमुख्येनोक्षणं सेचनं कर्त्तव्यम्। द्विर्व्वचनमादरार्थम्। अथवा। द्विर्व्वचनाद्गोयज्ञ एव गवामभ्युक्षणम्—इत्यवगम्यते। तस्मादश्वयज्ञेऽयं विशेषो नास्ति। अपि च। गोयज्ञस्य कियतीमावृतं सूत्रयित्वा, अश्वयज्ञमभिधाय, पश्चादपि गोयज्ञस्यावृतं सूत्रयन्नाचार्य्यः,—पूर्व्वसूत्रितामेव गोयज्ञस्यावृतमश्वयज्ञेऽतिदिशति न सूत्रयिष्यमाणामपि—इत्यवधार्य्यते। अन्यथा सर्व्वामेव गोयज्ञस्यावृतं सूत्रयित्वा परस्तादेवाश्वयज्ञे तामतिदिशेत्। तस्मात् क्रमभेदकरणादवगच्छामः,—अश्वयज्ञेऽश्वानामभ्युक्षणं नास्ति—इति। अन्ये तु,—अश्वयज्ञेऽप्यश्वानां गन्धैरभ्युक्षणमिच्छन्ति।

ननु प्रकरणशेषेऽप्यत्र गोयज्ञाश्वयज्ञयोः कालो न श्रूयते, अतस्तयोः कः कालः?—इति वक्तव्यम्। उच्यते। कालान्तरानुपदेशात् परिभाषासिद्ध एवोदगयनादिकालोऽनयोर्भविष्यति। अथवा। तन्त्रान्तरविधानानुसारात् मार्गपालीदिने गोयज्ञो नीराजनदिने चाश्वयज्ञः स्यात्। तथाच कर्म्मप्रदीपः।

"पारिभाषिक एव स्यात् कालो गोवाजियज्ञयोः।
अन्यस्यानुपदेशात्तु स्वस्रारोहणस्य च।
अथवा मार्गपाल्यह्नि कालो गोयज्ञकर्म्मणः।
नीराजनेऽह्नि चाश्वनामिति तन्त्रान्तरे विधिः"।

इति। मार्गपालीदिनञ्च सुखरात्र्यनन्तरा प्रतिपत्। कुतः?। तदधिकारे,—

"ततोऽपराह्णसमये पूर्व्वस्यां दिशि भारत!।

मार्गपालीं प्रबध्नीयात् तुङ्गे स्तम्भेऽथ पादपे"।

इति पुराणवचनात्। नीराजने च कालविकल्पाः श्रूयन्ते। तथा च वराहमिहिरः।

"द्वादश्यामष्टम्यां

कार्त्तिकशुक्लपक्षस्य पञ्चदश्यां वा।

आश्वयुजे वा कुर्या-

न्नीराजनसंज्ञितां शान्तिम्"।

इति ॥०॥ १५ ॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये तृतीयप्रपाठके षष्ठी काण्डिका ॥०॥

---

तृतीयप्रपाठके सप्तमी काण्डिका ।



## अथातः श्रवणाकर्म्म ॥ १ ॥

अथशब्दः प्रकरणान्तरोपन्यासार्थः । श्रवणाकर्म्म,—इति कर्म्मणो नामधेयम् । वर्त्तिष्यते,—इति सूत्रशेषः । अतःशब्दो हेत्वर्थः । यस्मादाहिताग्निरेभिः श्रवणाकर्म्मादिभि र्देवादीनयजमानः असुरादीन् निराकुरुते निराकृतिरिति चाख्यायते, अतः—एतस्मात् कारणात् श्रवणाकर्म्मादिकमिदानीं वक्तव्यमित्यभिप्रायः । तथा चोक्तम् ।

"यस्त्वाधायाग्निमालस्या द्देवादीन्नैभिरिष्टवान् ।
निराकर्त्ताऽमरादीनां स विज्ञेयो निराकृतिः" ।

इति ॥०॥ १ ॥०॥

तदिदं श्रवणाकर्म्म,—

## पौर्णमास्यां कृत्यम् ॥ २ ॥

पौर्णमास्यां श्रावण्यां, कृत्यं करणीयम् । श्रावण्याम्—इति कुतो लभ्यते । समाख्यासामर्थ्यादित्याह । श्रवणाकर्म्म—इति समाख्याने श्रूयमाणे श्रावणो मासः स्वस्मागच्छति हृदयम् । आगच्छति चेत्, न युज्यते विनाकारणमुत्स्रष्टुम् । एतस्मात् कारणात्

श्रावण्यां पौर्णमास्यामेतत् करणीयम्। गृह्यान्तरवचनाच्च। तथाच गृह्यान्तरम्। "अथातः श्रवणाकर्म्म" "श्रावण्यां पौर्णमास्याम्"—इति ॥०॥ २ ॥०॥

कथं कर्त्तव्यम्?। तदभिधीयते,—

पुरस्ताच्छालाया उपलिप्य शालाग्नेरग्निं प्रणयन्ति ॥ ॥ ३ ॥

पुरस्तादग्रतो न पूर्व्वस्यां दिशि। शालाया अभ्यागारस्य, (गोमयादिना) उपलिप्य, तत्र शालाग्नेरग्निं प्रणयन्ति लक्षणादिभिः स्थापयन्ति। बहुवचनादनियतः कर्त्ता। शालाग्नेरित्यवयवलक्षणा षष्ठी। तेन, शालाग्नेरेकदेशं प्रणयन्ति न सर्व्वम् ॥ ॥०॥ ३ ॥०॥

अभितश्चत्वार्य्युपलिम्पन्ति ॥ ४ ॥

प्रकृतत्वात् प्रणीतस्याग्नेरभितः—इतश्चेतश्च चत्वारि स्थानानि उपलिम्पति। कर्त्तुरनियमः ॥०॥ ४ ॥०॥

किं विदिक्षु?। न। किन्तर्हि?। उच्यते,—

प्रतिदिशम् ॥ ५ ॥

दिशं दिशं प्रति उपलिम्पन्ति ॥०॥ ५ ॥०॥

कियन्तं देशमुपलिम्पन्ति?। तदभिधीयते,—

साभिक्रे प्रक्रमे ॥ ६ ॥

अधिकेन सह वर्त्तमाने साधिके—स्तोकाधिके इत्येतत्। प्रक्रमे—

"संयतपदविन्यास स्त्रिपदः प्रक्रमः स्मृतः।

स्मार्त्ते कर्म्मणि सर्व्वत्र श्रौते लध्वर्य्युचोदितः"।

इत्युक्तलक्षणे, उपलिम्पन्ति। उपलेपनक्रियाऽऽधारत्वविवक्षया सप्तमीनिर्देशः ॥०॥ ६ ॥०॥

**अग्नौ कपालमाधाय सकृत्संगृहीतं यवमुष्टिं भृज्जत्यनुपदहन् ॥ ७ ॥**

प्रकृतेऽग्नौ कपालमाधाय। अथ, अग्नाविति शक्यमवक्तुम्?। प्रकृतः खल्वग्निरित्यसौ गम्येत। नैष दोषः। यतोऽभित उपलिप्तस्थानानां सन्निहिततरत्वात् तत्रैव कपालाधानमप्याशङ्कीत कश्चिदिति तन्निरासार्थमग्नावित्याह। कपालम्—

"कपालं मृण्मयं पात्रं चक्राघटितमुच्यते।

आसुरं चक्रघटितं दैवे पैत्रे च वर्ज्जयेत्"।

इत्युक्तलक्षणम्, अग्नौ आधाय अग्नेरुपरि कृत्वा, सकृत्संगृहीतं यवानां मुष्टिं भृज्जति। किं कुर्व्वन्?। अनुपदहन्। अदहन्नित्यर्थः। उपेत्ययमुपसर्गः ॥०॥ ७ ॥०॥

**पश्चादग्नेरुलूखलं दृंहयित्वाऽवहन्त्युदीचम् ॥ ८ ॥**

प्रकृतस्याग्नेः पश्चादुलूखलं दृंहयित्वा दृढीकृत्य—निश्चलीकृत्येत्येतत्। प्रकृतान् भृष्टान् यवान् तत्र स्थापयित्वा मुषलेन पूर्व्ववदवहन्ति,—सक्तुनिष्पत्त्यर्थम्। कर्त्तुरनियमः। किं कृत्वा?।

उद्देषम्। कृत्वा—इति शेषः। क्रियाविशेषणं वा। उद्देचः पृथग्भावः। "विचिर पृथग्भावे"—इति स्मरणात्। तथाच, भ्रष्टानां यवानां स्थूलान् सूक्ष्मांश्च पृथक् कृत्वा प्रवहन्ति॥०॥ ८॥०॥

सुकृतान् सक्तून् कृत्वा चमस ओप्य शूर्पेणापिधाय निदधाति॥ ९॥

सुकृतान् शुभान् सुविहितान् वा, सक्तून् कृत्वा, चमसे वानस्पत्यपात्रविशेषे, ओप्य—आ उप्य सम्यक् स्थापयित्वा, शूर्पेण यथोक्तलक्षणेन अपिधाय आच्छाद्य, निदधाति स्थापयति। कस्मिन्?। अन्तर्गृहे। कस्मात्?। "अस्तमिते चमसदर्व्यावादाय"—इत्यादिवक्ष्यमाणसूत्रार्थपर्यालोचनात्॥०॥ ९॥०॥

दक्षिणपश्चिमे अन्तरेण सञ्चरः॥ १०॥

अन्तरेण शब्दो मध्यवचनः। तद्योगात् दक्षिणपश्चिमे—इति द्वितीया। दक्षिणपश्चिमे ये द्वे स्थाने उपलिप्ते, ते अन्तरेण तयो र्मध्यप्रदेशः,—इत्येतत्। सोऽयं सञ्चरः;—सञ्चरत्यनेनेति सञ्चरो गमनागमनमार्ग इत्यर्थः। स खल्वयं वक्ष्यमाणोपयोगी विधिरिहैव प्रसङ्गादुक्तः। एतावदह्नि कर्त्तव्यम्॥०॥ १०॥०॥

अस्तमिते चमसदर्व्यावादाय शूर्पञ्चातिप्रणीतस्यार्द्धं व्रजति॥ ११॥

अस्तमिते सवितरि, चमसदर्व्यौ शूर्पञ्च आदाय गृहीत्वा, अति-

प्रणीतस्य,—अतिरुपसर्गः, स खल्वयं प्रणीत एवाग्निरतिप्रणीतो भण्यते। तन्त्रान्तरप्रसिद्धो वा। एवं हि तन्त्रान्तरकाराः स्मरन्ति। "अग्निमुपसमाधाय तस्यैकमुल्मुकं प्राक् दक्षिणा प्रणयेत्,—ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति पुरापुरो निपुरो ये भरन्त्यग्निष्टाल्लोकात् प्रणुदात्वस्मादिति, सोऽग्निरतिप्रणीतो भवति"—इति। तदस्य अतिप्रणीतस्य अग्नेः, अर्द्धं समीपं व्रजति गच्छति। अर्द्धशब्दः समीपवचनः ॥०॥ ११ ॥०॥

गत्वा च,—

शूर्पे सक्तूनावपति चमसे चोदकमादत्ते ॥ १२ ॥

पूर्व्वं चमसे स्थापितान् सक्तून् इदानीं शूर्पे आवपति निःक्षिपति, चमसे च उदकं आदत्ते गृह्णाति ॥०॥ १२ ॥०॥

ततश्च,—

सकृत् संगृहीतान् दर्व्या सक्तून् हुत्वा पूर्व्व उपलिप्त उदकं निनीय बलिं निवपति; यः प्राच्यां दिशि सर्पराज एष ते बलिरिति ॥ १३ ॥

कतिपयान् सक्तून् दर्व्या बलिहरणा सकृदेकवारं संगृहीतान् हुत्वा, पूर्व्वे उपलिप्ते,—पूर्व्वस्यां यत्स्थानमुपलिप्तं तस्मिन्, उदकं चमसस्थं निनीय निषिच्य, बलिं निवपति हरति,—यः प्राच्यां दिशि,—इति मन्त्रेण ॥०॥ १३ ॥

उपनिनयत्यपाꣳ शेषं यथा बलिं न प्रवक्ष्यतीति ॥१४॥

उपशब्दः समीपवचनः। उप समीपे बलेः, निनयति निषिञ्चति निक्षिपति,—इत्येतत्। किं निनयति?। अपां चमसस्थानां शेषमवशिष्टम्। कथं निनयति?। यथा बलिं न प्रवक्ष्यतीति। यथा येन प्रकारेण निक्षिप्तमुदकं बलिं न प्रवक्ष्यति प्राप्स्यति, इति तथा निनयतीत्यर्थः ॥०॥ १४ ॥०॥

सव्यं बाहुमन्वावृत्त्य चमसदर्व्यावभ्युक्ष्य प्रताप्यैवं दक्षिणैवं प्रतीच्येवमुदीची यथालिङ्गमभ्यावर्त्तमानः ॥ ॥ १५ ॥

'सव्यबाहुमनु'लक्ष्मीकृत्य—वामपार्श्वेनेत्यर्थः। 'आवृत्त्य,'—तत्रैव स्थितः परिवृत्त्य। यत्र खल्वावर्त्तनमुपदिश्यते, तत्र प्रायेण तत्-स्थानस्थितस्यैव परिवर्त्तनमभिप्रेयते;—"अथैनं प्रदक्षिणमावर्त्त-यति"—इत्येवमादौ। अन्ये तु वर्णयन्ति,—'सव्यं बाहुमन्वावृत्त्य,—अप्रादक्षिण्येनाग्निं गत्वा'—इति। 'चमसदर्व्यौ अभ्युक्ष्य',—समासकरणात् तन्त्रेणैवोदकेनाभिषिच्य, तन्त्रेणैव प्रतप्तेऽग्नौ। 'प्रताप्य', 'एवम्' उक्तेन प्रकारेण,—सकृत् संगृहीतान्—इत्यादिप्रकारे-णेत्येतत्। 'दक्षिणा' दक्षिणस्यां दिशि बलिं निवपति। एवं प्रतीच्यामेवमुदीच्याम्। 'दक्षिणा'—इत्यादौ सर्व्वत्र पूर्व्वसवर्णः। 'यथा लिङ्गम्'। यो मन्त्रो यल्लिङ्गः, तेनैव मन्त्रेण तस्यां दिशि बलिं निवपति। 'यो दक्षिणस्यां दिशि सर्पराज एष ते बलिः,'

'यः प्रतीच्यां दिशि,' 'य उदीच्यां दिशि',—इति मन्त्रविशेषः इत्यर्थः। यस्यान्तु दिशि बलिं निवपति तदभिमुख एव स्यात्। तथा चोक्तम्।

"यस्यां दिशि बलिं दद्यात् तामेवाभिमुखो दिशम्।
श्रवणाकर्म्मणि भवेत् न्यम्बकर्म्म न सर्व्वदा"।

इति। 'अव्यावर्त्तमानः'। विशेषेणावर्त्तनमकुर्व्वन्,—सव्यं बाहुमन्वावृत्य—इति यदुक्तं, तद्विशेषेणाकुर्व्वन्—इत्यर्थः। कियन्मात्रमप्यावर्त्तनं न शक्यते प्रतिषेद्धुम्। किं कारणम्?। तासु तासु बलिनिवपने तत्तन्मुखत्वविधानम्। अतो विशेषेणावर्त्तनं प्रतिषिषेधयिषु राचार्य्यः 'अव्यवर्त्तमानः'—इत्याह। तस्मात् प्रतीच्युदीचीबल्योर्व्यावर्त्तनं न कर्त्तव्यम्। तथैव खल्ववस्थित स्तत्तद्दिङ्मुखो भूत्वा बलिनिवपनं कुर्य्यात्। व्यावर्त्तनप्रतिषेधादेव तदुत्तरभाविनोरभ्युक्षणप्रतापनयोरपि प्रतिषेधोऽवगम्यते। अतएव, 'एवं दक्षिणा'—इति सूत्रितम्। दक्षिणा बलौ खल्वावर्त्तनाभ्युक्षणप्रतापनानि सूत्रितत्वादेव प्राप्नुवन्ति, तदर्थं पुनः 'एवं दक्षिणा'—इत्येवं शब्दोऽनतिप्रयोजन एव स्यात्। तस्मात्, 'एवं दक्षिणा'—इत्यत्र आवर्त्तनाभ्युक्षणप्रतापनातिरिक्तं पूर्व्वोक्तम् 'एवं' शब्दस्यार्थः,—इत्यकामेनापि वाच्यम्। तत्सामान्यात् 'एवं प्रतीची एवमुदीची'—इत्यनयोरप्येवं शब्दयोः स एवार्थो वर्णनीयः। तस्मात्, आवर्त्तनाभ्युक्षणप्रतापनातिरिक्तस्यैव 'एवं' शब्देनातिदेशात् प्रतीच्युदीचीबल्योरावर्त्तनाभ्युक्षणप्रतापनानि न कर्त्तव्यानि भवन्ति। अथैवं 'अव्यावर्त्तमानः'—इत्यनर्थकं, तदति-

रिक्तस्यैव 'एवं' शब्देनातिदेशात्प्रावर्त्तनस्याप्रसक्तेः। उच्यते। अव्यावर्त्तमानः,—इति विशेषेणावर्त्तनं प्रतिषेधयन्नाचार्य्यस्तत्तद्दिङ्मुखत्वानुगुणं कियन्मात्रमावर्त्तनमनयोरपि वस्त्वोरनुजानाति। सोऽयम् 'अव्यावर्त्तमानः'—इत्यस्यार्थः पूर्व्वमुपपादितोऽस्माभिः। अन्ये तु, 'अव्यावर्त्तमानः',—इति करणाद् व्यावर्त्तनस्यैव प्रतिषेधादभ्युक्षणप्रतापनयोः सर्व्वत्रैव करणम् इच्छन्ति ॥०॥ १५ ॥०॥

## शूर्पेण शेषमग्नावोप्यानतिप्रणीतस्यार्द्धं व्रजति ॥ १६ ॥

शेषं बलिशेषं शूर्पेण अग्नौ ओप्य,—आ उप्य प्रक्षिप्य। मन्त्रानुपदेशात् व्याहृतित्रयप्रयोगेन,—इत्यर्थः। कुत एतत्?।

"यत्र मन्त्रा न विद्यन्ते व्याहृतो स्तत्र योजयेत्।
मन्त्राणामेव चादेशे मन्त्रात् कर्म्मसमाचरेत्"।

इति गृह्यासंग्रहवचनात्। एवमन्यत्रापि वर्णनीयम्। अपरे पुनरेतदविद्वांसो भाषन्ते,—"मन्त्रानुपदेशादमन्त्रकम्"—इति। सेयं बलिशेषस्य प्रतिपत्तिः। तदेवं कृत्वा, अनतिप्रणीतस्यार्द्धं व्रजति। प्रणीतम्—इति भावे निष्ठा। प्रणीतं प्रणयनमतिक्रान्तोऽतिप्रणीतः, तथाविधो न भवतीत्यनतिप्रणीतः प्रकृतोऽग्निर्भण्यते। प्रकृतस्य खल्वग्नेः परिग्रहार्थम् अनतिप्रणीतस्य—इत्याह। अन्यागारे खल्वन्योऽप्यग्निरस्ति। अथ वा। अतिप्रणीत स्तन्त्रान्तरप्रसिद्धो व्याख्यातः, स न भवतीत्यनतिप्रणीतः। तदस्याग्नेरर्द्धं समीपं व्रजति सञ्चरमार्गेणेत्यर्थः ॥०॥ १६ ॥०॥

गत्वा च,—

**पश्चादग्नेर्भूमौ न्यञ्चौ पाणी प्रतिष्ठाप्य नमः पृथिव्या इत्येतं मन्त्रं जपति ॥ १७ ॥**

प्रकृतस्याग्नेः पश्चात् न्यञ्चौ अधोमुखौ पाणी हस्तौ, भूमौ प्रतिष्ठाप्य,—

"दक्षिणं वामतो वाह्यमात्माभिमुखमेव च ।
करं करस्य कुर्व्वीत करणे न्यञ्चकर्म्मणः" ।

इति कर्म्मप्रदीपोक्तप्रकारेण संस्थाप्य, नमः पृथिव्यै,—इत्येतं मन्त्रं जपति । 'एतम्'—इति स्वरवर्णसम्पादनार्थम् । 'मन्त्रम्'—इति मन्त्रे दुष्टे यत् प्रायश्चित्तं, तस्य प्राप्त्यर्थम् । अन्याप्रतिषेधार्थं वा एतं मन्त्रमिति वचनम् । कथं नाम ? । अन्योऽप्येतत्कर्म्म कुर्व्वन्नेतं मन्त्रमेवम्भूतमेव जपति न पुनरूहेत,—इत्यभिप्रायः । कथं पुनरन्यस्य करणपक्षेऽप्यूहस्याशङ्का ? । उच्यते । "नमः पृथिव्यै दंष्ट्राय विश्वभृन्मा ते अन्ते रिषाम"—इत्यस्मद्गता विभक्ति मन्त्रे पठ्यते । तस्मात्, अन्यस्य करणपक्षे ऊहमप्याशङ्कोत कश्चिन्मन्दमतिरिति तन्निरासार्थोऽयं प्रयत्नः ॥०॥ १७ ॥०॥

**प्रदोषे पायसश्चरुः ॥ १८ ॥**

रात्रेः प्रथमो यामः प्रदोषः । कस्मात् ? । "प्रदोषपश्चिमौ यामौ"—इति, तत्रापि प्रदोषशब्दप्रयोगात् । तस्मिन् प्रदोषे, पयसि भवः पायसः, चरुः स्थालीपाकः, कर्त्तव्यः—इति वाक्यशेषः । एवञ्च, सन्ध्योपासनसायंहोमबलिकर्म्माणि कृत्वा चरुरयं कर्त्तव्यः। कुतः ? । तत्तत्कालातिपाते प्रायश्चित्तोपदेशात् । एवमर्थः प्रदोषशब्दः ॥०॥ १८ ॥०॥

**तस्य जुहुयात्; श्रवणाय विष्णवेऽग्नये प्रजापतये विश्वेभ्यो देवेभ्यः स्वाहेति ॥ १९ ॥**

तस्य,—इत्यवयवलक्षणा षष्ठी। तस्य पायसस्य चरो र्जुहुयात्, श्रवणाय स्वाहा,—इत्यादिना मन्त्रेण प्रत्येकम्। सोऽयं स्वाहाशब्दः प्रत्येकमभिसम्बन्ध्यते। तथा चोक्तम्। "मन्त्रान्ते स्वाहाकारः"— इति। किमर्थं तर्हि पुनरिह स्वाहाकारपाठः?। उच्यते। मन्त्रब्राह्मणाकानां मन्त्राणां विनियोगस्य वक्तुमारब्धत्वात् अस्ति तेषां बुद्ध्यारूढत्वम्। अतस्तेषामेव मन्त्रशब्दार्थत्वात्त एव मन्त्राः स्वाहाकारान्ताः स्युः—इत्यपि स्यादाशङ्का कदाचित् कस्यचि-न्मन्दमतेरिति तन्निरासार्थमिह स्वाहाशब्दमपठदाचार्य्यः। भन्त्राः खल्वेते मन्त्रब्राह्मणे न पठ्यन्ते। अथवा। श्रवणाय,— इत्यादि चतुर्थीविभक्तीनामुद्देश्यतामात्रपरत्वमभ्युपेत्य तन्त्रेणापि होमं कश्चिदाशङ्कीत। अतः स्वाहाशब्दयोगेनैवैताश्चतुर्थीविभ-क्तयः,—इति प्रज्ञापनार्थमिह स्वाहाकारः पठितः। श्रवणो नक्षत्रविशेषः। विष्णवादयः प्रसिद्धाः। असमासकरणमपि निर्व्वाप-होमयोः पृथक्त्वप्रज्ञापनार्थमेव। केचित् पुनर्,—एकामाहुति-मेकञ्च निर्व्वापमिच्छन्ति। तदसङ्गतम्। पूर्व्वोक्तयुक्तेः। समस्ता-भिधानञ्चैवं स्यात्। कर्म्मप्रदीपोऽपि,—

"आवर्ण्यां वा प्रदोषे यः क्रय्यारम्भे तथैव च।
कथमेतेषु निर्वापाः? कथञ्चैव जुहोतयः?।
देवतासङ्ख्यया गृह्य निर्व्वापांश्च पृथक् पृथक्।
तूष्णीं द्विरेव गृह्णीयाद्धोमस्यापि पृथक् पृथक्"।

इति श्रावण्यां प्रदोषेऽपि पृथक् पृथक् निर्व्वापं होमश्चाह ॥ ॥०॥ १९ ॥०॥

स्थालीपाकावृताऽन्यत् ॥ २० ॥

अन्यत् सर्व्वं स्थालीपाकावृता स्थालीपाकरीत्या कुर्य्यात्। अथ, "एषोऽत ऊर्द्धं हविराहुतिषु न्यायः"—इति परिभाषाप्राप्तत्वादेतदवाच्यम्?। नैष दोषः। परिसङ्ख्यानार्थत्वात्। कथं नाम?। होमादन्यदेव स्थालीपाकावृता कुर्य्यात्, होमे तु "सकृद्वा चिर्व्वा"—इति योऽयं विकल्प उक्तः, सोऽत्र न भवति। तस्मात् सकृदेव जुहुयात्। कर्म्मक्रमप्रज्ञापनार्थं वा वचनं वर्णनीयम्। कथं नाम?। स्थालीपाकावृता अन्यत् कर्म्मशेषं समाप्य वक्ष्यमाणसूत्रोक्तं कर्म्म कृत्वा परस्तात् परिभाषासिद्धं वामदेव्यगानं कुर्य्यात्—इति। एतस्य खल्वसूत्रणे वक्ष्यमाणसूत्रोक्तं कर्म्म प्रधानहोमानन्तरमेव वा स्यात् वामदेव्यगानात् परतो वा स्यात्। परमार्थतस्तु, अत्र चरो बहुदेवतत्वादवघात एव होमः प्राप्नोति। तत्र चाज्यभागौ अवदानधर्म्मश्च न प्राप्नोति। अस्माच्च वचनादाज्यभागौ अवदानधर्म्मश्च इह ज्ञाप्यते। कथं ज्ञायते?। आचार्य्यपुत्रस्मरणात्। तथाच गृह्यासंग्रहः।

"स्थालीपाकावृताऽन्यत्तु यत्र संज्ञा निपात्यते।
तत्राज्यभागौ कुर्वीत सुचमास्तीर्य्यावद्यति"।

इति। सोऽयमस्यार्थः। एवमुत्तरत्रापि वर्णनीयम् ॥०॥ २०॥०॥

उत्तरतोऽग्नेर्दर्भस्तम्बꣳ समूलं प्रतिष्ठाप्य सोमो राजेत्येतं मन्त्रं जपति याꣳ सन्ध्याꣳ समधत्तेति च ॥ २१ ॥

समूलं मूलसहितं दर्भस्तम्बं कुशगुच्छं प्रकृतस्याग्नेरुत्तरतः प्रतिष्ठाप्य,—"प्राङ्मुखकरणस्थानादेशे"—इत्यस्मात् सूत्रकारवचनात् प्रागग्रं स्थापयित्वा, सोमोराजेति यां सन्धामिति च मन्त्रद्वयं जपति । "एतं मन्त्रम्"—इति व्याख्यातम् । इदानीं वामदेव्य-गानम् । केचित् अत्र दर्भस्तम्बे कुशसंख्यामिच्छन्ति । तदसङ्गतम् । कस्मात् ? ।

"यज्ञवास्तुनि मुष्ट्याञ्च स्तम्बे दर्भवटौ तथा ।
दर्भसङ्ख्या न विहिता विष्टरास्तरणेष्वपि" ।

इति कर्म्मप्रदीपवचनात् ॥०॥ २१ ॥०॥

**श्वस्ततोऽक्षतसक्तून् कारयित्वा नवे पात्रेऽपिधाय निदधाति ॥ २२ ॥**

श्वः आगामिनि दिने,—तस्यां पौर्णमासीश्रर्व्यां प्रभातायां सत्या-मित्येतत् । ततः, प्रातर्होमानन्तरम् । अथवा । ततः,—इति सार्व्वविभक्तिकस्तसिल् । तयैवाहृता, अक्षतसक्तून् अक्षता यवाः तेषां सक्तून् कारयित्वा, नवे पात्रे कृत्वा पात्रान्तरेण अपिधाय स्थगयित्वा, निदधाति गृहे स्थापयति । कारयित्वा,—इति वच-नात् कर्त्तुरनियमः ॥०॥ २२ ॥०॥

तेश्च सक्तुभिः,—

**अहरहस्तूष्णीं बलीन् हरेत् सायं प्राग्घोमादाग्र-हायण्याः ॥ २३ ॥**

अहरहः प्रत्यहं, पूर्व्वोक्तान् बलीन् हरेत् । तूष्णीमिति वाग्-

व्यापारप्रतिषेधान्मनसा मन्त्रमुच्चार्य्येत्यर्थः । तूष्णीमिति वाग्-यमननियमार्थं न मन्त्रोच्चारणप्रतिषेधार्थम्—इति केचित् । कस्मिन् काले बलीन् हरेत्?। सायम्,—अस्तमयादूर्द्धम् । प्राक् पूर्व्वं होमात् । ननु होमात् पूर्व्वमेव बलिहरणं पुरस्तात् सूचितं तत् किमिति प्राग्घोमादिति क्रियते?। उच्यते। अनया भङ्ग्या होममप्यहरहर्दर्शयति । इतरथा, बलीन् हरेदिति कर-णात् होमो न स्यात्—इति कश्चिदाशङ्केत । कियन्तं कालं बलीन् हरेत्?। आग्रहायण्याः,—आ आग्रहायण्याः, आग्रहा-यणीपौर्णमासीपर्य्यन्तम् । अत्र बलिहरणहोमयोरभिधानात् अहरहः प्रयोगे बलिशेषस्य प्रतिपत्तिर्लक्षणपूर्व्वकमग्निस्थापनञ्च न स्यात्, चमसदर्व्योः प्रतापनार्थमुल्मुकन्तु प्रत्यहमण्यामादयेत् । नमः पृथिव्यै—इत्येतदपि नञ्चकरणं प्रत्यहं नैव भवति । तथा चोक्तम् ।

"बलिशेषस्य हवनमग्निप्रणयनन्तथा ।
प्रत्यहं न भवेयातामुल्मुकञ्च भवेत् सदा" ।

इति, "न्यञ्चकर्म्म न सर्व्वदा"—इति च ॥७॥ २३ ॥७॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्या-त्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये तृतीयप्रपाठकस्य सप्तमी काण्डिका ॥७॥

---

तृतीयप्रपाठके अष्टमी काण्डिका ।



उक्तं श्रवणाकर्म्म । अथेदानीमाश्वयुजीकर्म्म प्रस्तूयते,—

**आश्वयुज्यां पौर्णमास्यां पृषातके पायसश्चरू रौद्रः ॥१॥**

अश्वयुक् अश्विनीनक्षत्रं, तद्युक्ता पौर्णमासी आश्वयुजी । तस्यां पौर्णमास्याम् । आश्वयुजीग्रहणम् अश्विनीनक्षत्रसम्बन्धद्वारेण आश्विनपौर्णमासीप्रज्ञापनार्थम् । पौर्णमासीग्रहणं पौर्णमास्याः प्राधान्यख्यापनार्थम् । तेन, नक्षत्रालाभेऽपि आश्विनपौर्णमास्यामेव कर्त्तव्यम् । आज्यसंयुक्तं पयो दधि वा पृषातकमित्युच्यते । तस्मिन् पृषातके,—सप्तमीनिर्द्देशात् वक्ष्यमाणावेक्षणाद्यर्थमग्नेरुत्तरतः समासादिते सतीत्यर्थो बोद्धव्यः । रुद्रो देवताऽस्येति रौद्रः, पायसः—पयसि भक्तश्चरुः कर्त्तव्यः । तथाच कर्म्मप्रदीपः ।

"पयो यदाज्यसंयुक्तं तत् पृषातकमुच्यते ।
दध्येके, तदुपासाद्य कर्त्तव्यः पायसश्चरुः" ।

इति । रुद्राय त्वा,—इति निर्व्वापः ॥०॥ १ ॥०॥

**तस्य जुहुयादा नो मित्रावरुणेति* प्रथमां मानस्तोक इति द्वितीयाम् ॥ २ ॥**

तस्येत्यवयवलक्षणा षष्ठी । तस्य पायसस्य चरोरेकदेशं जुहुयात् ।

* आ नो मित्रेति प्रथमां—इति पाठान्तरम् ।

आ नो मित्रावरुणेति मैत्रावारुण्यर्चा प्रथमामाहुतिं जुहुयात्। मा न स्तोके इति रौद्र्यर्चा द्वितीयामाहुतिं जुहुयात्। ननु मैत्रावारुण्यर्चा कथं होमः सूच्यते? पायसश्चरुः खल्वयं रौद्रः सूचितः। न चैकस्मै हवि र्निरूप्य अन्यस्मै हूयते,—इति युक्तम्। उक्तञ्च,—

"निरूप्य हविरन्यस्मा अन्यस्मै न हि हूयते"।

इति। आद्यस्य किल मन्त्रस्य मित्रावरुणयोर्द्देवतात्वं लिङ्गादवगम्यते। नैष दोषः। श्रुतेर्बलवत्त्वात्। रौद्रः—इति श्रुत्या तावत् रुद्रस्य देवतात्वमवगम्यते, लिङ्गाच्च मित्रावरुणयोः, दुर्ब्बलञ्च श्रुते र्लिङ्गम्। तस्मात् "ऐन्द्र्या गार्हपत्यमुपतिष्ठेत"—इति वदिहापि श्रुत्या लिङ्गं बाधितव्यं भवति। श्लोकमपि उदाहरन्ति।

"तद्धितेन चतुर्थ्या वा मन्त्रलिङ्गेन चेष्यते।

देवताङ्गति स्तत्र दुर्ब्बलन्तु परं परं"।

इति। पाठक्रमादेवाहुत्योः प्रथमद्वितीयत्वसिद्धेः पुनः प्रथमादिग्रहणम्,—अनयोरेवाहुत्योश्चरोरभिसम्बन्धप्रज्ञापनार्थम्। तेन प्रथमद्वितीये एव चर्व्वाहुती। याश्चान्या आहुतयो वक्ष्यन्ते ता सर्व्वा एवाज्याहुतयः। तथा च कर्म्मप्रदीपः।

"आश्वयुज्यां तथाकृष्यां वास्तुकर्म्मणि याज्ञिकाः।

यज्ञार्थतत्त्ववेत्तारो होममेवं प्रचक्षते।

द्वे पञ्च द्वे क्रमेणैता हविराहुतयः स्मृताः।

शेषा आज्येन होतव्या इति कात्यायनोऽब्रवीत्"।

इति ॥०॥ २ ॥०॥

गोनामभिश्च पृथक् काम्यासीत्येतत्प्रभृतिभिः ॥३॥

गवीनां नामानि गोनामानि। तै र्गोनामभिश्च काम्यासि,— इत्येतत् प्रभृतिभि रष्टाभिः, पृथक् नाना, अष्टावाज्याहुती र्जुहु-यात्। गोनामानि च,—

"काम्या प्रिया च हव्या च इड़ा रन्ता सरस्वती।
मही विश्रुता चाघ्न्या च गोनामानि विदु र्बुधाः"।

इति गृह्यासंग्रहोक्तानि। "चकारा असिशब्दस्याध्याहारार्थाः"— इति गृह्यासंग्रहभाष्यम्। यद्यपि नवैव गोनामानि पठ्यन्ते, तथापि अघ्न्या नाम्ना होमो नास्तीत्यष्टावेवाहुतयो भवन्ति। एतदिति करणाच्चैवम्भूतेरेव होमः, न चतुर्थी प्रयोक्तव्या। तथाच कर्म्मप्रदीपः।

"धृतिहोमे न प्रयुञ्ज्या द्गोनामसु तथाऽष्टसु।
चतुर्थीं मन्त्रा इत्येत द्गोनाम्नि न हि हूयते"।

इति। एवञ्च, काम्यासि स्वाहा,—इत्येवमादिकः प्रयोगः सिद्धो भवति ॥०॥ ३ ॥०॥

स्थालीपाकावृताऽन्यत् ॥ ४ ॥

व्रतभाष्यं सूत्रम् ॥०॥ ४ ॥०॥

पृषातकं प्रदक्षिणमग्निं पर्य्याणीय ब्राह्मणानवेक्ष-यित्वा स्वयमवेक्षेत;—तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्च-रत् पश्येम शरदः शतं जीवेम शरदः शतमिति ॥५॥

अग्निप्रादक्षिण्येन पृषातकमानीय ब्राह्मणानवेक्षयित्वा स्वयमवेक्षेत,—तच्चक्षुरिति मन्त्रेण। सामान्येनाभिधानात् ब्राह्मणानामपि मन्त्रो भवति, न पुनरानन्तर्य्यातिरेकात् यजमानस्यैव। तथा चोक्तम्।

"पृषातकप्रेक्षणयो र्नवस्य हविषस्तथा।

शिष्टस्य प्राशने मन्त्र स्तत्र सर्व्वेऽधिकारिणः"।

इति। यदि पुनः कस्माच्चित् कारणात् केऽपि ब्राह्मणा स्तदानीं सन्निहिता न स्युः, तदा स्वयमेव पृषातकमवेक्षेत। तथा चोक्तम्।

ब्राह्मणानामसान्निध्ये स्वयमेव पृषातकम्।

अवेक्ष्य हुविषः शेषं नवयज्ञेऽपि भक्षयेत्"।

इति ॥०॥ ५ ॥०॥

## ब्राह्मणान् भोजयित्वा स्वयं भुक्त्वा ज्ञातुषान्मणीन् सर्व्वौषधिमिश्रानाबध्नीरन् स्वस्त्ययनार्थम् ॥ ६ ॥

ब्राह्मणान्,—बहुवचनात् त्रिप्रभृतीन्, भोजयित्वा, स्वयञ्च भुक्त्वा। अथ, "अपवर्गेऽभिरूपभोजनं यथाशक्ति"—इति सिद्धत्वादेतदवाच्यम्?। उच्यते। अत्यन्ताशक्तावप्यस्मिन् कर्म्मणि त्रयाणामावश्यकत्वार्थमिदमुक्तम्। अशक्तौ खल्वेकस्यापि ब्राह्मणस्य भोजनं प्राप्नोति, यथाशक्त्युपदेशात्। तन्निरासार्थं ब्राह्मणान् भोजयित्वा,—इत्याह। नैतत् युक्तम्। कस्मात्?। अशक्योपदेशात्। यो हि त्रीन् भोजयितुं न शक्नोति, कथं तस्य तदुपदिश्येत!। अशक्योपदेशः खल्वप्रमाणमेव स्यात्। न च प्रमाणं शास्त्रमप्र-

माणं कल्पयितुमुचितम्। अपर आह। भोजयित्वा,—इति कर्म्मा-काङ्क्षायां पृषातकमिति प्रकृतमन्वीयते। अन्यथा, प्रकृतहाना-प्रकृतप्रक्रिये प्रसज्येयाताम्,—इति। एतदपि न सुन्दरम्। कस्मात्?। यस्मात् ब्राह्मणान् भोजयित्वा,—इत्युक्तौ निर्व्विशेषि-तमेव भोजनं तावदवगम्यते, न किञ्चिदत्रापेक्षणीयमस्ति। येन तृप्तिः सम्पद्यते, तेन केनापि भोजयति,—इत्यवगम्यत एव। "ब्राह्मणान् भोजय" "कौण्डिन्यान् भोजय" "शयाना भुञ्जते यवनाः"—इत्येवमादि प्रत्ययव्यपदेशानां लोके बहुलमुपलम्भात्। "लोके येष्वर्थेषु प्रसिद्धानि पदानि, तानि (सति सम्भवे) तद-र्थान्येव सूत्रेषु"—इति हि नः प्रतिज्ञातम्। पृषातकं भोज-यित्वा,—इति खल्वानुमानिकं परिचिकल्पयिषितम्। न चैतत् शब्दस्य श्रवणमात्रात् योऽर्थोऽवगम्यते तं बाधित्वा शक्नोत्यात्मानं लब्धुम्। नापि पृषातकेन तृप्तिः सम्पद्यते। भुजिचोदनायाञ्चैव-मेवार्थोऽन्यत्रापि दृश्यते,—"अपवर्गेऽभिरूपभोजनम्"—इत्येव-मादौ। अपि च। उत्तरत्र पृषातकमिति कुर्व्वन्नाचार्य्योऽत्र पृषातकव्यतिरिक्तस्यैव भोजनं दर्शयति। तस्मात्, अस्मिन् कर्म्मणि अपवर्गविहितव्यतिरिक्तस्यापि ब्राह्मणभोजनस्याभ्यनुज्ञानार्थं ब्राह्म-णान् भोजयित्वा,—इति वचनम्। कर्म्मक्रमप्रज्ञापनार्थं वा। कथं नाम?। अपवर्गविहितं ब्राह्मणभोजनमिदानीं कारयित्वा स्वयञ्च भुक्त्वा वक्ष्यमाणं कर्म्म कर्त्तव्यम्। अवचने खल्विदानीमेतन्न प्राप्नोति। कस्मात्?। इतः परमपि कर्म्मोपदेशात्। तस्मात्, तदेव ब्राह्मणभोजनमनोच्यते,—इत्यादरणीयम्।

तदेवं ब्राह्मणान् भोजयित्वा स्वयञ्च भुक्त्वा, जातुषान् लाक्षाकृतान् मणीन्, सर्व्वौषधिमिश्रान्,—सर्व्वाभिरोषधिभिः,—

"व्रीहयः शालयो मुद्गा गोधुमाः सर्षपा स्तिलाः।

यवाश्चौषधयः सप्त विपदो घ्नन्ति धारिताः"।

इत्युक्तलक्षणाभि र्मिश्रान्, सर्व्वौषधिगर्भान्—इत्यर्थः। आबध्नीरन्, स्वस्त्ययनार्थम्। स्वस्ति,—मङ्गलं, तस्य अयनं प्राप्तिः, तदर्थम्। बहुवचनोपादानात् न परं गृहपतिरेवाबध्नीत, किन्तु अन्येऽपि स्वस्त्ययनेप्सवो गृह्या आबध्नीरन्। कुत्र आबध्नीरन्?। स्वबाहौ, बालानाञ्च ग्रीवासु। कुतः?। तथा प्रसिद्धेः। स्वस्त्ययनार्थम्,—इति पूर्व्ववत् मणिबन्धनं स्तौति, न फलविधिः। वाक्यभेदापत्तेः। कथं नाम?। मणीन् आबध्नीरन्, तच्च स्वस्त्ययनार्थं भवति,—इति यदि द्वावप्यर्थौ विधित्सितौ, भिद्येत वाक्यम्। अन्ये तु वर्णयन्ति,—'स्वस्त्ययनार्थमिति वचनात् मणिबन्धनस्य काम्यत्वं गम्यते। ततश्चैतस्मिन्नक्रियमाणेऽपि न दोषः। यद्यपि, "एतस्यैव बलिहरणस्यान्ते कामं प्रब्रुवीत"—इत्यादौ नित्येऽपि कामसम्बन्धो दृश्यते, तथापि रक्षामणि प्रतिसरादिबन्धनस्य लोके भूयसा काम्यतैव दृश्यते। अतो न दोषः।' इति ॥०॥ ६ ॥०॥

**सायं गाः पृषातकं प्राशयित्वा सहवत्सा वासयेत॥ ॥ ७ ॥**

सायं रात्रौ, गाः पृषातकं प्रकृतं, प्राशयित्वा, सहवत्साः वासयेत,—वत्सैः सहाऽवियुक्ताः कृत्वा वासयेत तां रात्रिम्। 'वासयेरन्'—

इति केचित् पठन्ति। पृषातकम्,—इति द्वितीया निर्देशात् सर्व्वमेव पृषातकं प्राशयितव्यं, न किञ्चिदप्यवशेषणीयम्,—इति दर्शयति ॥०॥ ७ ॥०॥

अनेन खलु पृषातकप्राशनादिना,—

स्वस्ति हासां भवति ॥ ८ ॥

स्वस्ति मङ्गलं, ह किल, आसां गवां भवति ॥८॥ ८ ॥०॥

आश्वयुजे किल मासि कालवशात् नवशस्यानि भवन्ति। व्रीहयः खल्वत्र पच्यन्ते। नवयज्ञञ्चाकृत्वा तदश्नन् अग्निमान् प्रत्यवैति, प्रायश्चित्तञ्च प्राप्नोति। तदाह कर्म्मप्रदीपः।

"अनिष्ट्वा नवयज्ञेन नवान्नं योऽत्त्यकामतः।
वैश्वानरश्चरुस्तस्य प्रायश्चित्तं विधीयते"।

इति। अतो नवयज्ञस्तावदिदानीं प्रस्तूयते,—

नवयज्ञे पायसश्चरुरैन्द्राग्नः ॥ ९ ॥

नवेन शस्येन यज्ञो नवयज्ञः। तस्मिन् ऐन्द्राग्नः पायसश्चरुः,—कर्त्तव्यः,—इति सूत्रशेषः। इन्द्रश्च अग्निश्च इन्द्राग्नी, तौ देवता अस्येति ऐन्द्राग्नः। सेयं द्वन्द्वदेवता। इन्द्राग्निभ्यां त्वा,—इति निर्व्वापः। इन्द्राग्निभ्यां स्वाहा,—इति होमः ॥०॥ ९ ॥०॥

तस्य मुख्याꣳ हविराहुतिꣳ हुत्वा चतसृभिराज्याहुतिभि रभिजुहोति;—शतायुधायेत्येतत् प्रभृतिभिः॥ ॥ १० ॥

तस्य शरीरैकदेशेन मुख्यां हविराकृतिं कृत्वा चतसृभिः आज्याहुतिभिः अभिजुहोति,—अभि सर्व्वतोभावेन;—समाहितमनाश्छन्दोदेवतार्षादीन्यनुस्मरन् जुहोति, शतायुधाय,—इत्येतत् प्रभृतिभिश्चतुर्भिर्मन्त्रैः ॥०॥ १० ॥०॥

स्थालीपाकावृताऽन्यत् ॥ ११ ॥

व्याख्यातमेतत् ॥०॥ ११ ॥०॥

हविरुच्छिष्टशेषं प्राशयेद् यावन्त उपेताः स्युः ॥ १२ ॥

यावन्तो ब्राह्मणा उप समीपं इता गता स्युर्भवेयुः, तावतो ब्राह्मणान् हविरुच्छिष्टशेषं प्राशयेत्,—प्रकर्षेण वक्ष्यमाणविधिना आशयेत् भोजयेत्। ननु, हविरुच्छिष्टं प्राशयेत्,—इति वक्तव्ये शेषग्रहणं किमर्थम्?। उच्यते। हविरुच्छिष्टं ब्राह्मणान् प्राशयित्वा शेषं स्वयं प्राश्नीयात्,—इत्येतत् प्रज्ञापनार्थं शेषग्रहणम्। कथं नाम?। शिष्यते अस्मादिति शेषः, हविरुच्छिष्टञ्च तत् शेषश्चेति हविरुच्छिष्टशेषं प्राशयेत्,—इति वचनव्यक्त्या तावत् ब्राह्मणप्राशनादप्यवशेषोऽवगम्यते, तस्य च यजमानप्राशनं कल्प्यते। कस्मात्?। प्राशनविधौ विशेषानुपदेशात्। नवयज्ञमकुर्व्वतो नवान्नप्राशनप्रतिषेधाच्च नवयज्ञात् परतो यजमानस्य तत्प्राशनावगतेः। अतएव, शिष्टस्य नवहविषः प्राशनमन्त्रे सर्व्वेषामधिकारं स्मरता कात्यायनेन सर्व्वशब्दात् यजमानस्यापि शेषप्राशनमनुशिष्टम्। तच्चोपदर्शितमुपदर्शयिष्यते च। हविरुच्छिष्टशेषम्,—इति द्वितीयाकरणात् सर्व्वस्यैव शेषस्य प्राशनं यजमानः स्वभोजनकाले

कुर्य्यात् न तु यत्किञ्चिदेव प्राश्य शेषमन्यस्मै दद्यात्,—इति बोद्धव्यम्। यदि पुनः केऽपि ब्राह्मणा नोपेताः स्युः, तदा स्वयमेव प्राश्नीयात्। कस्मात्?।

"ब्राह्मणानामसान्निध्ये स्वयमेव पृषातकम्।
अवेचेद्धविषः शेषं नवयज्ञेऽपि भक्षयेत्"।

इति वचनात्॥०॥ १२ ॥०॥

अथ प्राशनविधिरभिधीयते,—

## सकृदपामुपस्तीर्य्य द्विश्चरोरवद्यति॥ १३॥

सकृदेकवारम् अपामुदकस्य उपस्तीर्य्य स्रुवेणोपस्तरणं कृत्वा, द्विः,—द्विःकृत्वः—मध्यात् पूर्व्वार्द्धाच्च, चरोरवद्यति मेक्षणेनाव-दानं करोति। कुत्र अवद्यति?। दक्षिणे पाणौ। कस्मात्?। "यत्रोपदिश्यते कर्म्म"—इति परिशिष्टकारवचनात्,—इति भट्ट-नारायणोपाध्यायाः। एवञ्च, उपस्तरणादिकं वामेनैव पाणिना कर्त्तव्यं भवति। कस्मात्?। दक्षिणस्यान्यत्र व्यापृतत्वात्॥०॥ ॥ १३ ॥०॥

## त्रिर्भृगूणाम्॥ १४॥

भृगूणां चरौ त्रिःकृत्वोऽवद्यति। पश्चादर्द्धादिति तेषामधिकम्॥ ॥०॥ १४ ॥०॥

## अपाञ्चैवोपरिष्टात्॥ १५॥

अवदानानामुपरिष्टादपामभिघारयति स्रुवेणैव। चशब्दोऽभि-

धारणव्यापारस्मारणार्थः। एवशब्दो यासामपामुपस्तरणं कृतं, तासामेवापामभिघारणकरणार्थः ॥०॥ १५ ॥०॥

एवं चरुशेषं पाणौ कृत्वा,—

## असंस्वादं निगिरेद्भद्रान्नः श्रेय इति ॥ १६ ॥

असंस्वादं—सम्यगास्वादनं यथा न भवति, तथा निगिरेत् भक्षयेत्,—भद्रान्नः श्रेय इति मन्त्रेण। असंस्वादमिति कुर्व्वन् दन्तैरचर्व्वयित्वा निगिरणमुपदिशति। कियन्मात्रमप्यास्वादनं न शक्यते प्रतिषेद्धुम्—इति खल्वसंस्वादमित्याह। किं कारणम्?। निगरणपक्षेऽपि तस्यावर्ज्जनीयत्वम् ॥०॥ १६ ॥०॥

## एवं त्रिः ॥ १७ ॥

एवमनन्तरोक्तया रीत्या त्रिर्व्वारत्रयं निगिरेत्। प्रथमेन सहैव त्रित्वं बोद्धव्यम् ॥०॥ १७ ॥०॥

## तूष्णीं चतुर्थम् ॥ १८ ॥

चतुर्थं निगिरणं तूष्णीं कुर्य्यादमन्त्रकमित्यर्थः। अयमेव विशेषः। उपस्तरणादिकमत्रापि सर्व्वं पूर्व्ववदेव भवति ॥०॥ १८ ॥०॥

## भूय एवावदाय ॥ १९ ॥

भूय एव पुनरपि चरोरवदाय निगिरेत्। भूयः पुनरपि चरोरवदायैव—इति वा वर्णनीयम्। तस्मादुपस्तरणमभिघारणञ्चात्र न भवति। इतरथा खल्ववदायेति पुनर्व्वचनमनर्थकमेव स्यात्। सोऽयमेवशब्दोऽस्यार्थस्योपोद्वलको भवति ॥०॥ १९ ॥०॥

कामन्तच संस्वादयेरन्॥ २०॥

तच तस्मिन्निगिरणे काममिच्छया संस्वादयेरन्। सेयं प्राशनेति कर्त्तव्यता सर्व्वेषामेव स्यात्। कस्मात्?।

"पृषातकप्रेक्षणयो र्नवस्य हविष स्तथा।

शिष्टस्य प्राशने मन्त्र स्तच सर्व्वेऽधिकारिणः"।

इति वचनात्॥०॥ २०॥०॥

आचान्तोदकाः प्रत्यभिमृशेरन्मुखं शिरोऽङ्गानी-त्यनुलोममसोसीति॥ २१॥

आचान्तोदकाः मुखं शिरोऽङ्गानि,—बाहुजठरादीनि च अभिमृशेरन् स्पृशेरन्। बहुवचनात् सर्व्वे। इतिशब्दः चशब्दार्थः समुच्चये। कथमभिमृशेरन्?। अनुलोमम्। लोम्नामनुकूलं यथा भवति तथा अभिमृशेरन्। केन मन्त्रेण?। अमोऽसि,—इति मन्त्रेण। अथाह। आचान्तोदकाः—इति किमर्थमुच्यते, ननु निगिरणादुच्छिष्टा एव सर्व्वे कथमनाचान्तोदकाः कर्म्म वा करिष्यन्ति, मन्त्रं वा पठिष्यन्ति?। उच्यते। अनाचान्तोदकाः,—इति कुर्व्वन् बोधयति; यदाचमनं न चोद्यते,—तचोच्छिष्टत्वमेव न भवति, यथा प्राणाग्निहोत्रसोमभक्षणादौ। तथाचोक्तं गृह्यासंग्रहे।

"मधुपर्के तथा सोमे अप्सु प्राणाहुतीषु च।

अनुच्छिष्टो भवेद्विप्रो यथा वेदविदो विदुः।

प्राणाहुतिषु सोमेषु मधुपर्के तथैव च।

आसुहोमेषु सर्व्वेषु नोच्छिष्टो भवति द्विजः"।

इति। इदमिदानीं सन्दिह्यते। किमभिमर्शनमन्त्रः प्रत्यवयवमावर्त्तते आहोस्वित् सकृदेव भवति?। प्रत्यवयवमावर्त्तते,—इति ब्रूमः। कस्मात्?। अवयवभेदात्। "भेदे मन्त्रावृत्तिः"—इति च सूत्रकारवचनात्। प्रतिशब्दकरणाच्च। प्रत्यभिमृशेरन्—इति प्रतिशब्दं कुर्व्वन्नाचार्य्यः प्रत्यवयवं समन्त्रकमभिमर्शनं दर्शयति। अन्यथा खल्वनर्थक एव प्रतिशब्दो भवेत्॥०॥ २१॥०॥

आश्वयुजीप्रस्तावात् व्रीहीनधिकृत्य नवयज्ञः सूचितः। व्रीहयो हि शरदि पच्यन्ते। तस्मात् व्रीहियज्ञ एवायम्। इदानीमन्यचाप्येतस्यातिदेशः क्रियते,—

## एतयैवावृता श्यामाकयवानाम्॥ २२॥

एतया व्रीहियज्ञोक्तयैवावृता रीत्या श्यामाकयवानामपि हवनप्राशनादिकं कुर्य्यात्। एवशब्दः कृत्स्नकर्म्मणोऽतिदेशार्थः। श्यामाका यवाश्च शस्यभेदाः। एवञ्च शालियज्ञोऽस्माकं नावश्यकः। कस्मात्?। अस्मदाचार्य्येणानुपदेशात्। श्यामाकयज्ञश्च गृहमेधिनो न भवति, किन्तु वैखानसस्यैव। कस्मात्?। तस्य ग्राम्यप्रतिषेधात्। तथा चोक्तम्।

"शरद्वसन्तयोः केचिन्नवयज्ञं प्रचक्षते।

धान्यपाकवशादन्ये श्यामाको वनिनः स्मृतः"।

इति। एतस्माच्च लिङ्गात् शरदि व्रीहियज्ञः, वसन्ते च यवयज्ञः

कर्त्तव्यः। "गृहमेधी व्रीहियवाभ्यां शरद्वसन्तयो र्यजेत, श्यामाकै र्वनी वर्षासु, आपत्कालेऽन्येन पुरातनैर्वा"—इति च ब्राह्मणं भवति। इक्षुप्रभृतयस्तु विनैव नवयज्ञं भक्षणीयाः। तत्र तदनुपदेशात्। तथाच गृह्यासंग्रहः।

"इक्षवः सर्व्वखल्वाश्च कोद्रवा वरटैः सह।
अकृताग्रयणा भक्ष्या येषां नोक्ता हविर्गुणाः"।

इति। गोधूमादिष्वपि नास्त्येव नियमः। कस्मात्?। अनुपदेशादेव। तदप्याह स एव।

"नवयज्ञेऽधिकारस्थाः श्यामाका व्रीहयो यवाः।
नाश्नीया न च कृत्वैवमन्येष्वनियमः स्मृतः"।

इति। अत एव श्यामाकयवयोरेव भक्षणमन्त्रः सूत्रयिष्यते॥०॥ ॥ २२ ॥०॥

अयमत्र विशेषः,—

**अग्निः प्राश्नातु प्रथम इति श्यामाकानाम्॥ २३॥**

अग्निः प्राश्नातु,—इति श्यामाकानां हविरुच्छिष्टशेषप्राशनमन्त्रः। सर्व्वमन्यत् पूर्व्ववदेव बोद्धव्यम्॥०॥ २३ ॥०॥

**एतमुत्यं मधुना संयुतं यवमिति यवानाम्॥ २४॥**

एतमुत्यमिति यवानां हविरुच्छिष्टशेषप्राशनमन्त्रः। समानमन्यत्॥ ॥०॥ २४ ॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये तृतीयप्रपाठकस्याष्टमी काण्डिका॥०॥

---

तृतीयप्रपाठके नवमी कण्डिका ।

---

## आग्रहायण्यां बलिहरणम् ॥ १ ॥

अग्रे हायनमस्येत्यग्रहायणो मार्गशीर्षः, तस्येयं पौर्णमासी आग्रहायणी, तस्यां बलिहरणं कर्त्तव्यमिति सूत्रशेषः ॥०॥ १ ॥०॥

## तत् श्रावणेनैव व्याख्यातम् ॥ २ ॥

तत् अग्रहायणीबलिहरणं श्रावणेनैव बलिहरणेन व्याख्यातम्—इति कृत्स्नकर्म्मातिदेशः । तस्मादत्रापि पुरस्ताच्छालाया उपलेपनम्—इत्येवमादि—सक्तुविधानान्तमङ्गि कृत्वा, अस्तमिते सवितरि तथैव रीत्या बलिहरणं कर्त्तव्यम् । ननु एतस्योपरितनैः सूत्रैः पूर्व्वाह्णे कर्म्मोपदेशात् इदमपि पूर्व्वाह्ण एव तस्मादादितः क्रियताम् ? । न,—इत्युच्यते । उपन्यासमाचत्वादस्य । कालोऽपि हि तदीय एव चोदकात् प्राप्नोति । आनुमानिकं खल्वस्य पूर्व्वाह्णकालत्वं विकल्पयिषितम् । तच्च चोदकं बाधित्वा सेद्धुं नार्हतीति । तस्मात् श्रावणीबलिहरणवत् इदमपि बलिहरणमस्तमयात् परत एव करणीयम् । श्रावणेनैव,—इत्ययमेवकारोऽपि अस्यार्थस्योपोद्बलको भवति ॥०॥ २ ॥०॥

अयमत्र विशेषः,—

नमः पृथिव्या इत्येतं मन्त्रं न जपति ॥ ३ ॥

ऋज्वर्थं सूत्रम् ॥०॥ ३ ॥०॥

अथ पूर्व्वाह्ण एव प्रातराहुतिꣳ हुत्वा दर्भान् शमीं वीरणां फलवतीमपामार्गꣳ शिरीषमेतान्याहारयित्वा तूष्णीमक्षतसक्तूनामग्नौ कृत्वा ब्राह्मणान् स्वस्तिवाच्यैतैः सम्भारैः प्रदक्षिणमग्न्यागारात् प्रभृति धूमं शातयन् गृहाननुपरीयात् ॥ ४ ॥

प्रातराहुतिं हुत्वा अथानन्तरं पूर्व्वाह्ण एव दर्भाहरणादिकं कुर्य्यादिति व्यत्यासेन योजनीयम्। सिद्धापि प्रातराहुतिः पुनरुच्यते क्रमार्थम्। कथं नाम?। प्रातराहुतिं हुत्वैव दर्भाहरणादि, न पुनरौपवसथिकस्थण्डिलोपलेपनादिकमपि कृत्वा,—इति। कथं पुनरेवं ज्ञायते, ननु प्रातराहुतिं हुत्वा अथ स्थण्डिलोपलेपनादिकमपि कृत्वा,—इत्येवमपि शक्यं वर्णयितुम्?। सत्यं शक्यं, तथापि नैवं वर्ण्यते। कस्मात् कारणात्?। यस्मादस्यां वर्णनायामादौ कृतमपि स्थण्डिलोपलेपनमासादितमप्याज्यादिकं पश्चात् धूमशातनवेलायामुपमृद्येत दुष्येत च। तच्चानिष्टम्। तस्मात् पूर्व्वामेव वर्णनामाद्रियामहे।

दर्भादयः प्रसिद्धाः। वीरणा,—वीरण इति यः कथ्यते। फलवती,—बदर्य्याः फलयुक्ता शाखा। तथा चोक्तम्।

"सफला बदरीशाखा फलवत्यभिधीयते"।

इति। तान्येतानि दार्भादीनि षट् केनचिदाहारयित्वा,—(अन्यस्याहर्त्तुरभावे च स्वयमप्याहृत्य) 'तूष्णीं' प्रजापतिं मनसा ध्यायन्नित्यर्थः। एवमेके। तूष्णीममन्त्रकं—महाव्याहृतिभिरित्यर्थः। एवमपरे। तदत्रभवन्तो भूमिदेवाः प्रमाणम्। 'अक्षतसक्तूनाम्'—(अवयवलक्षणेयं षष्ठी)—यवसक्तूनामेकदेशं दक्षिणहस्तेनादाय 'अग्नौ' 'कृत्वा' प्रक्षिप्य, 'ब्राह्मणान्' बहुवचनात् त्रिप्रभृतीन् 'स्वस्तिवाच्य' स्वस्ति वाचयित्वा (तेभ्यः स्वस्तिवाचनिकं किञ्चित् दत्वा) 'एतैः' प्रकृतैः, 'सम्भारैः'—सम्भ्रियन्ते इति सम्भारा स्तैः,—एकत्रीकृतैर्दर्भादिभिरित्येतत्। 'प्रदक्षिणं' यथा भवति तथा, 'अग्न्यागारात् प्रभृति' अग्निगृहादारभ्य, 'सर्व्वान् गृहान्' 'अनु' लक्षीकृत्य, 'परि' सर्व्वतोभावेन, 'इयात्' गच्छेत्।

अक्षतसक्तूनाम्,—इति करणात् दर्भादीनामाहरणानन्तरं अक्षतसक्तव उत्पादयितव्याः, ततस्तेषामेकदेशमग्नौ करोति,—इति बोद्धव्यम्। न खल्वनुत्पादितानामक्षतसक्तूनां शक्यत्यग्नौ कर्त्तुम्। तस्मादुत्पादयितव्या अक्षतसक्तवः। ननु, वर्षास्वहरहर्बलिहरणार्थं ये अक्षतसक्तवः स्थापिताः, तच्छेषाणां प्रतिपत्तिरियं स्यात्?। न स्यात्। कुतः?। यतो न खल्वप्रकृतानामसंशब्दितानां प्रतिपत्तिः शक्या वर्णयितुम्। असन्निधानात्। नित्यानित्यसंयोगविरोधाच्च। नित्यं खल्वेतदग्नौ करणम्। अनित्यश्च बलिशेषः। न चानयोः संयोगः सम्भवति। तस्मादुत्पादयितव्या एवाक्षतसक्तवः। एवमेके। अपर आह। वर्षास्वहरहर्बलिहरणार्थं ये अक्षतसक्तवः स्थापिताः, तच्छेषाणां प्रतिपत्तिरेवेयम्,—

इति। न च नित्यानित्यसंयोगविरोधः शङ्कनीयः। अस्यापि नित्यत्वे प्रमाणाभावात्। न खलु शेषाणां प्रतिपत्तिरियमित्यस्यां वर्णनायाम् अस्य नित्यत्वं शक्यतेवक्तुम्। न चात्रान्यत् किमपि प्रमाणं पश्यामः। स्यादेतत्। अप्रकृतानामसंबद्धितानामसन्निहितानां कथं प्रतिपत्ति र्वर्ण्यते?। उच्यते। नात्यन्तमप्रकृता असन्निहिताश्चाचतसक्तवः। कथम्?। इत्थम्। ये खल्वचतसक्तवो वर्षास्वहरहर्बलिहरणार्थं स्थापिता स्तैरेव आग्रहायणीपर्य्यन्तं बलयो हर्त्तव्याः,—इति स्थितम्। एवञ्चास्यैव तेषां कियन्मात्रमपि प्रकृतत्वं सन्निहितत्वञ्चाग्रहायण्या। तथाच सत्यकिञ्चित्करमसंबद्धितत्वम्। अपि च। अस्मिन् शास्त्रे "पानव्यापच्च तद्वत्"—इत्यादिवत् व्यवहितस्याप्यभिसम्बन्धः आचार्य्यस्यानुमतः। कथं ज्ञायते?। आचार्य्यपुत्रवचनात्। तथा च गृह्यासंग्रहः।

"पुनरुक्तमतिक्रान्तं यच्च सिंहावलोकितम्।
गोभिले ये न गृह्णन्ति न ते ज्ञास्यन्ति गोभिलम्"।

इति। तस्मादसन्निहितानामप्यस्तु सम्बन्धः। तदत्र भवन्तो भूमिदेवाः प्रमाणम्॥०॥ ४ ॥०॥

## उत्सृजेत् कृतार्थान् सम्भारान्॥ ५ ॥

अर्थः प्रयोजनम्। तच्च धूमप्रातमलचणम्। कृतोऽर्थो यैः, तान् सम्भारान् दर्भादीन् उत्सृजेत्। अर्थात्प्राप्तस्याप्युत्सर्गस्य वचनमानन्तर्य्यार्थम्। कथं नाम?। धूमप्रातनानन्तरचण एवोत्सृजेत् न चणमपि गृहे धारयेत्—इति॥०॥ ५ ॥०॥

एतस्मिन् क्रमे औपवसथिकं स्थण्डिलोपलेपनादि कृत्वा,—

**ज्ञातशिलासु मणिकं प्रतिष्ठापयति वास्तोष्पत इत्येतेन द्विकेन सर्व्वेन ॥ ६ ॥**

ज्ञातशिलाः,—

"घना विचिकताशङ्काः स्मृता ज्ञातशिलास्तु ताः"।

इत्युक्तलक्षणाः। तासु, बहुवचनात् त्रिप्रभृतिषु, मणिकमलिञ्जरं महदुदकभाण्डमित्येतत्। प्रतिष्ठापयति स्थापयति। वास्तोष्पते,—इत्येतस्यां ऋचि गीयमानेन द्विकेन साम्ना—सर्व्वेन प्रकृतयैव ऋचा सह वर्त्तमानेन,—इत्यर्थः। द्विकेन साम्ना ऋचा चेति यावत्। ननु, एतेन—इति शक्यमवक्तुम्, अथोच्यते,—कारणं वक्तव्यम्?। क्रमार्थमित्याह। द्विकेन सर्व्वेन—इत्येतावन्मात्रमुच्यते; न ज्ञायते,—किं द्विकात् पुरस्तादृक् स्यात्? आहोस्विदुपरिष्टात्? उताहोमध्ये? अथ वा प्रतिसाम? यद्वा सत्रन्यायादुभयतः?—इति। तदेतन्निरासार्थमाचार्य्यः एतेन—इत्याह। एतेन एवम्भूतेन यथाक्रमोपन्यस्तेनेत्यर्थः। तेन, पूर्व्वं द्विकमुच्चार्य्य पश्चादृचमुच्चारयेत् ॥०॥ ६ ॥०॥

**द्वावुदकुम्भौ मणिक आसिञ्चेत् समन्वायन्तीत्येतयर्चा ॥ ७ ॥**

द्वौ उदकपूर्णौ कुम्भौ प्रतिष्ठापिते मणिके आसिञ्चेत् समन्वायन्ति,—इत्येतया ऋचा। ऋक्‌पदत्वं सामप्रतिषेधार्थम्। अत्र

प्रतिकुम्भम् भागावृत्तिर्बोद्धव्या। कस्मात्?। "भेदे मन्त्रावृत्तिः"—इति सूचणात्। तथा चोक्तम्। "प्रतिकुम्भमृचं पठेत्"—इति। सोऽयं मणिकसंस्कारः। एवञ्च, "मणिकाद्वा गृह्णीयात्"—इति यदुक्तं, तदेतस्मात् संस्कृतान्मणिकाद्ग्रहणीयम्। यच्च, उदधानस्य बलिहरणमुक्तं, तदप्येतस्यैव बोद्धव्यम्।

अत्रेदं सन्दिह्यते। आग्रहायण्या ऊर्द्ध्वं यदि मणिको नष्टो विनष्टो वा भवति, तदा किमेतावन्तं कालमपेक्ष्य पुनराग्रहायण्यामागतायामेव मणिकान्तरं संस्करणीयम्, उत यदैव विपद्यते तदैवान्यदाहृत्य?—इति। तदैव,—इति ब्रूमः। कस्मात्?। अस्य कर्म्मार्थत्वात्। तावन्तं कालं मणिकाभावे हि कर्म्मणो नाभिनिष्पत्तिः स्यात्, स्याद्वा न सुकरा भवेत्। तथा चोक्तम्।

"नष्टो विनष्टो मणिकः शिलानाशे तथैव च।

तदैवाहृत्य संस्कार्य्यो नापेक्षेदाग्रहायणीम्"।

इति। यदि पुनरन्यस्यामाग्रहायण्यामागतायामपि पूर्व्वसंस्कृत एव मणिको दृढ़ो वर्त्तते, तदोदकुम्भासेचनमात्रं कर्त्तव्यम्। कुतः?।

"दृढ़ स्वेदाग्रहायण्यामावृत्तावपि कर्म्मणः।

कुम्भो मन्त्रवदासिञ्चेत् प्रतिकुम्भमृचं पठेत्"।

इति वचनात् ॥०॥ ७ ॥०॥

## प्रदोषे पायसश्चरुः ॥ ८ ॥

आग्रहायण्यामित्येव। आग्रहायण्यै त्वा जुष्टं निर्व्वपामि,—इति

निर्व्वापः। कुतः?। देवतान्तरस्यानुपदेशात् मन्त्रस्य चाग्न्यक-लिङ्गत्वात् श्रुताया एवाग्रहायणीदेवतात्वस्य कल्पयितुमुचित-त्वात्। "अनाम्नातेषु तथादेशम्"—इत्यग्रे सूत्रणाच्च॥०॥८॥०॥

तस्य जुहुयात् प्रथमा ह व्युवासेति॥ ९॥

व्याख्यातप्रायमेतत्॥०॥ ९ ॥०॥

स्थालीपाकावृताऽन्यत्॥ १०॥

कृतभाष्यं सूत्रम्॥०॥ १०॥०॥

पश्चादग्नेर्बर्हिषि न्यञ्चौ पाणी प्रतिष्ठाप्य प्रतिक्षत्र इत्येता व्याहृती जपति॥ ११॥

अग्नेः पश्चिमतः ब र्हि कुशोपरि न्यञ्चौ अधोमुखौ पाणी पूर्व्वोक्त-प्रकारेण प्रतिष्ठाप्य, प्रतिक्षत्र इत्येताः प्रतिशब्दा व्याहृती जपति। व्याहृतिग्रहणं स्तुत्यर्थम्। अत्राग्रहायणीकर्म्मणः परिसमाप्तिः। वामदेव्यमिदानीं गातव्यम्। यदि केश्चित् कथञ्चित् श्रवणाकर्म्म न कृतं, तदा ते राग्रहायण्यां बलयो न हर्त्तव्याः, सर्व्वमन्यत् पूर्व्ववदेव करणीयम्। तथा चोक्तम्।

"श्रवणाकर्म्म लुप्येत् कथञ्चित् सूतकादिना।
आग्रहायणिकं कुर्य्याद्बलिवर्ज्जमशेषतः"।

इति॥०॥ ११॥०॥

अथेदानीं स्रस्तरारोहणं प्रस्तूयते,—

पश्चादग्नेः स्रस्तरमास्तारयेत्॥ १२॥

श्वशुरचरार्थः। अत्र किञ्चिद्वक्तव्यमस्ति। पश्चादग्नेरिति करण-मग्न्यागारनियमार्थम्। तेन, अग्न्यागार एव स्वस्तरास्तरणं कर्त्तव्यम्। एवञ्च, अग्न्युपदेशस्यान्यार्थत्वादहोमकोऽयम्—इति केचित्। पुंसवनादिवत्तु अयमपि सहोमक एव स्यात्—इति अपरे। प्राग्वसन्तादुदगयने यत् पुण्यमहः तत्र पूर्व्वमन्वाहार्य्य-श्राद्धं कृत्वा सायं बलिहरणान्ते नित्यकर्म्मणि कृते, स्वस्तरास्तरणं करणीयम्। तथा च गृह्यान्तरम्। "प्राग्वसन्तादुदगयने पुण्येऽह्नि सायं स्वस्तरमुदगग्रमास्तीर्य्य"—इत्यादि। अस्मद्ग्रन्थकारपरिभाषा-सिद्धमुदगयनादिमात्रं वा स्वस्तरारोहणस्य कालः स्यात्। केचि-त्तु,—"ऊर्द्ध्वं स्वस्तरशायी स्यात्"—इति वचनमालोचनमात्रेण पश्यन्तः, आग्रहायण्यङ्गत्वं स्वस्तरारोहणस्य मन्यमानाः, तत्रैवा-वसरे स्वस्तरास्तरणम्—इच्छन्ति। तदसङ्गतम्। ऊर्द्ध्वमित्यनेना-ग्रहायण्या ऊर्द्ध्वत्वमात्रस्यावगमात्।

"पारिभाषिक एव स्यात् कालो गोवाजियज्ञयोः।
अन्यस्यानुपदेशात्तु स्वस्तरारोहणस्य च"।

इति परिशिष्टवचनविरोधाच्च ॥०॥ १२ ॥०॥

## उदगग्रैस्तृणैः ॥ १३ ॥

स्वस्तरमास्तारयेदिति वर्त्तते ॥०॥ १३ ॥०॥

## उदक्प्रवणम् ॥ १४ ॥

उत्तरस्यां दिशि क्रमनिम्नं स्वस्तरमास्तारयेत् ॥०॥ १४ ॥०॥

## तस्मिन्नहतान्यास्तरणान्यास्तीर्य्य दक्षिणतो गृह-पति रुपविशति ॥ १५ ॥

तस्मिन् स्रस्तरे अहतान्यखण्डितानि आस्तरणानि कम्बलादीनि आस्तीर्य्य, दक्षिणतः—स्रस्तरस्य दक्षिणे भागे, गृहपतिरुपविशति ॥ ॥०॥ १५ ॥०॥

तस्य चोत्तरतः,—

## अनन्तरा अवरे यथाज्येष्ठम् ॥ १६ ॥

अवरे कनिष्ठाः, अनन्तराः अव्यवहिताः सन्तो यथाज्येष्ठं ज्येष्ठानुक्रमेणोपविशन्ति। यो यो ज्येष्ठः स स गृहपतेरनन्तरो यथा स्यादित्यर्थः।

एवं वा,—

अनन्तरा अव्यवहिताः—एकपाकोपजीविनः तद्गृह्या इत्येतत्। तदेवम्भूता अवरे यथाज्येष्ठमुपविशन्ति ॥०॥१६ ॥०॥

तेषामप्युत्तरतः,—

## अनन्तराश्च भार्य्याः सजाताः ॥ १७ ॥

अनन्तराः,—इत्युक्तार्थम्। भार्य्याः गृहपतिप्रभृतीनां पत्न्यः सजाताः सापत्या उपविशन्ति। जातमपत्यम्। चशब्दः उपवेशन-क्रमविशेषद्योतनार्थः। कथं नाम?। येन क्रमेण गृहपतिप्रभृतय उपविष्टाः, तेनैव क्रमेण तेषां भार्य्या अप्युपविशेयुः। अपत्यान्यपि स्वस्याः स्वस्या मातुरुत्सङ्गे उत्तरतो वा उपविशेयुः,—इति।

अथैवम्, अत्र यथाज्येष्ठमुपवेशनं न स्यात्?। मा भवतु, का नो हानिः। अथवा। पत्युरेव वयसा स्त्रीणां वृद्धत्वस्मरणात् पतीनाञ्च यथाज्येष्ठमुपवेशनात् भार्य्याणां स्वस्वपतिक्रमेणोपवेशने यथाज्येष्ठत्वमपि कथञ्चिदनुगृह्यत एव। परमार्थतस्तु, सजातानां भार्य्याणामुपवेशनं सूत्रयन्नाचार्य्यो नात्र यथाज्येष्ठमुपवेशनमनुजानातीत्यवगम्यते। एतदर्थं चशब्दं प्रयुक्तवान्। भार्य्याः पुनः सापत्या उपविशन्ति, न पुनरत्रापि यथाज्येष्ठत्वनियमः,—इत्यभिप्रायः। न खल्वेवमपत्यानां यथाज्येष्ठमुपवेशनं सम्भवति। अन्ये पुनरत्रापि यथाज्येष्ठमुपवेशनमिच्छन्ति ॥०॥ १७ ॥०॥

**समुपविष्टेषु गृहपतिः स्वस्तरे न्यञ्चौ पाणी प्रतिष्ठाप्य स्योना पृथिवि नो भवेत्येतामृचं जपति ॥ १८ ॥**

समुपविष्टेषु,—सम्यक्—प्राङ्मुखेषु उपविष्टेषु सर्व्वेष्वित्यर्थः। कस्मात्?। "प्राङ्मुखकरणञ्चानादेशे"—इति सूत्रकारवचनात्। स्पष्टमन्यत्। एतामिति स्वरवर्णसम्पादनार्थं छन्दोविज्ञानार्थमविलोपार्थञ्च। कथं नाम?। एतामेवम्भूतां सेतिकरणामेव जपतीति। अन्यथा स्वल्पितिकरणविलोपमपि कश्चिदाशङ्कीत ॥ ॥०॥ १८ ॥०॥

**समामायां संविशन्ति दक्षिणैः पार्श्वैः ॥ १९ ॥**

समामायामेव रात्रि दक्षिणैः पार्श्वैः संविशन्ति स्वपन्ति। तस्मिन्नेव स्वस्तरे ॥०॥ १९ ॥०॥

एवं त्रिरभ्यात्ममावृत्त्य ॥ २० ॥

एवमनेन प्रकारेण—दक्षिणपार्श्वेनेत्यर्थः। अनन्तरोक्तं संवेशनमेव न तु स्वस्तरास्तरणमपीति द्रष्टव्यम्। त्रिरावृत्त्य त्रिःकृत्वोऽभ्यस्य। किमविशेषेणैव?। न। कथन्तर्हि?। अभ्यात्मम्। आत्मनो गृह-पतेराभिमुख्येन,—आत्मन आरभ्येत्यर्थः। कथं नाम?। येनैव क्रमेणोपविष्टाः तेनैव क्रमेण संवेशनं त्रिरावर्त्तयेयुः,—इति। प्रथमेन सहैव त्रित्वम् ॥०॥ २० ॥०॥

स्वस्त्ययनानि प्रयुज्य यथाज्ञानन् ॥ २१ ॥

स्वस्त्ययनानि अप्रतिरथादीनि यथाज्ञानं प्रयुज्य—यो यत जानाति स तदुच्चार्य्य ॥०॥ २१ ॥०॥

अरिष्टꣳ सामसंयोगमेके ॥ २२ ॥

अरिष्टं अरिष्टभङ्गाख्यं सामसंयोगं इतस्ततो विप्रकीर्णानां साम्ना-मेकीकरणं—साससमुदायं प्रयुज्य—इत्येके आचार्य्या मन्यन्ते ॥ ॥०॥ २२ ॥०॥

अप उपस्पृश्य यथार्थम् ॥ २३ ॥

अप उदकमुपस्पृश्य दक्षिणेन पाणिना स्पृष्ट्वा, यथार्थमिति कर्म्मणः परिसमाप्तिं दर्शयति। तेन वामदेव्यगानमिदानीं स्यात्। अन्ये तु,—स्वस्त्ययनात् परत एव वामदेव्यगानमिच्छन्ति। यथार्थ-मिति,—इदानीं कर्म्मणः परिसमाप्तत्वात् यस्य यदभिप्रेतं स तत्

कुर्य्यात्, न तु तत्रैवावस्थाननियमः,—इति व्याकुर्व्वन्ति च। गृहपतेः किल बहवः पक्षाः स्वस्तरशयने ग्रन्थान्तरे पठ्यन्ते। स यदि अधःपक्षमाश्रयेत्, तदा स्वस्तरादुत्थाय अभिप्रेते शयनान्तरे शयीत। अथान्यपक्षमाश्रयेत्तर्हि तत्रैव स्वपेत्। तथा चोक्तम्।

"ऊर्द्धं स्वस्तरशायी स्यान्मासमर्द्धमथापि वा।
सप्तरात्रं त्रिरात्रं वा एकां वा सद्य एव वा।
नोर्द्धं मन्त्रप्रयोगः स्यान्नाग्न्यगारं नियम्यते।
नाहतास्तरणञ्चैव न पार्श्वञ्चापि दक्षिणम्"।

इति। प्रथमायां रात्रे रूर्द्धमन्यासु रात्रिषु स्वस्तरशयने स्वल्पयमुत्तरश्लोकोक्तो विशेषोद्रष्टव्यः ॥०॥ १३ ॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये तृतीयप्रपाठकस्य नवमी काण्डिका ॥०॥

---

तृतीयप्रपाठके दशमी काण्डिका।



अथेदानीमष्टकाकर्म्म प्रस्तूयते,—

अष्टका रात्रिर्देवता ॥ १ ॥

अष्टका,—इत्येकवचनमधिकारार्थम्। उपरिष्टादष्टकाबहुत्वोपदेशात्। तथाच, या काचिदष्टका वक्ष्यमाणा सा सर्व्वाऽपि रात्रिदेवता प्रत्येतव्या, न पुनरानन्तर्य्यादपूपाष्टकैव। रात्रि र्देवता यस्याः सेयं रात्रिदेवता अष्टका, कर्त्तव्या,—इति सूत्रशेषः ॥ ॥०॥ १ ॥०॥

सा खल्वियमष्टका,—

पुष्टिकर्म्म ॥ २ ॥

पुष्ट्यै फलाय क्रियते, इति पुष्टिकर्म्म। आह। ननु, परस्तादप्यष्टकादेवताः सूचयिष्यन्ते, तत् किमिति पुष्टिकर्म्म,—इति मध्ये सूचयित्वा रात्रिदेवतायाः सूचयिष्यमाणानाञ्च देवतानां व्यवायः क्रियते?। उच्यते। अष्टका रात्रिदेवता,—इति निर्व्विशेषितमष्टकाकर्म्मोपदिश्य, पुष्टिकर्म्म,—इति परतः कुर्व्वन् नित्यत्वमस्याः दर्शयति। कथं नाम?। रात्रिदेवता अष्टका कर्त्तव्या, पुष्टिः फलमप्यस्या एव भवति, न पुनः पुष्टिकाम एवाष्टकास्वधिक्रियते।

कथं ज्ञायते?। कर्त्तव्यचोदनायां फलाश्रवणात्। अधिकार-वेलायां तदनुपदेशाच्च। यदि पुनरष्टका पुष्टिकर्म्म,—इति कुर्य्यात्, तर्हि रात्रिसत्रन्यायेन सन्निहिततरं पुष्टिफलमेव कामयमान-स्तामधिकरोति,—इत्यपि कस्यचिदाशङ्का स्यात्। सा माभूदिति खल्वाचार्य्यः अष्टका रात्रिदेवता पुष्टिकर्म्म,—इति व्यत्यासेन प्रयुङ्क्ते। काम्यतैवाष्टकानां कुतो न स्यात्?। व्यत्यासेन फलवा-दाम्नानान्नित्यत्वावगतेरिति ब्रूमः। नित्यप्रकरणेचोपदेशात्। नि-त्यानां हि श्रवणाकर्म्मादीनां प्रकरणे अष्टका उपदिश्यते। तस्मात् सापि नित्या भवितु मर्हति। तथा गोतमेनापि नित्यानामेव पुरुषसंस्काराणां मध्ये,—"अष्टका पार्व्वणश्राद्धं श्रावण्याग्रहायणी-चैत्र्याश्वयुजी"—इत्यष्टका सूचिता। कर्म्मप्रदीपेप्याह।

"संस्काराः पुरुषस्यैते स्मर्य्यन्ते गोतमादिभिः।
अतोऽष्टकादयः कार्य्याः सर्व्वे कालक्रमोदिताः"।

इति। उपदेशादेव सर्व्वेषामविशेषेण करणे सिद्धे पुनः करणोप-देशोऽवश्यंकरणमेव बोधयति। अष्टकादिप्रक्रमे तदकरणे दोष-श्रवणाच्च। तथा चोक्तम्।

"यस्त्वाधायाग्निमालस्याद्देवादीन्नेभिरिष्टवान्।
निराकर्त्ताऽमरादीनां स विज्ञेयो निराकृतिः"।

इति। तस्मादष्टका नित्येति सिद्धम्। अत्राह। यदि नामाष्टका नित्या, तर्हि पुष्टिकर्म्मापि कथं भवति?। उच्यते। अस्तु नाम नित्या, काम्यापि भविष्यति। कस्मात्?। फलोपदेशसामर्थ्य-त्वात्। यद्वा। फलवाद एवायमष्टकां स्तौति, न पुनः फलमप्य-

नेनोपदिश्यते। किं कारणम्?। उभयविधाने वाक्यभेदः। अथवा। नित्यत्वेऽप्यानुषङ्गिकमेव पुष्टिफलं भविष्यति।

"नित्यक्रियां तथा चान्ये ह्यनुषङ्गफलां श्रुतिम्"।

इति स्मरणात्। अथैवं समस्ता एव देवता उपदिश्य परत एव पुष्टिकर्म्म,—इति कुतो न सूचितम्?। परत एव वक्ष्यामः। अन्ये त्वाहुः,—"तथात्वे पुष्टिकर्म्म चतुरष्टको हेमन्तः,—इत्युत्तर-सूत्रेणैकसूत्रताशङ्का स्यात्, अत स्तथा न कृतम्"—इति॥०॥ ॥२॥०॥

# आग्नेयी पित्र्या वा प्राजापत्यर्तुदेवता वैश्वदेवीति देवताविचाराः॥३॥

अग्नेरियमाग्नेयी। प्रकृतत्वादष्टकेति सम्बध्यते। पितृणामियं पित्र्या। प्रजापतेरियं प्राजापत्या। ऋतवो वसन्तादयः, ते देवता यस्याः सेयमृतुदेवता। विश्वेदेवाः सर्व्वेदेवाः, तेषामियं वैश्वदेवी॥ वा शब्दः प्रत्येकमभिसम्बध्यते। आग्नेयी वा पित्र्या वा प्राजापत्या वा ऋतुदेवता वा वैश्वदेवी वा। इति एते देवता-विचारा भवन्ति। इदमिदानीं सन्दिह्यते। किं पशुप्रोक्षण-निर्व्वापणेष्वेतद्विकल्पोक्तानां देवतानां मध्यादिच्छया अन्यत-मस्या अभिसन्धानं कर्त्तव्यम्? आहोस्वित् सर्व्वासाम्? उताहो नैकस्या अपि? इति। नैकस्या अपि,—इति ब्रूमः। किं देवताका तर्ह्यष्टका?; न खल्वदेवताका भवितु मर्हति। उच्यते। न वयमदेवताकामष्टकामाचक्ष्महे, रात्रिदेवताकान्तु ब्रूमहे। कस्मात्

पुनः कारणात् सतीष्वेतद्विकल्पोक्तास्वन्यास्वपि देवतासु रात्रि-देवतैवाष्टकाऽभ्युपगम्यते?। सूत्रप्रमाणादित्याह। अष्टका रात्रि-देवता,—इति खल्वाचार्य्येण सूचितम्। तत्प्रामाण्यात् रात्रिदेवता अष्टका अभ्युपगम्यते। ननु, आग्नेयी पित्र्या वा,—इत्येतदप्याचार्य्यस्यैव सूत्रम्?। सत्यमाचार्य्यस्यैव सूत्रमेतत्, किन्तु नैतत् देवता विधानार्थं परन्तु परमतोपन्यासार्थम्। कथं पुनरवगम्यते,—परमतोपन्यासार्थमेतदिति। शृणु यथाऽवगम्यते। अष्टका रात्रि-देवता,—इति देवतामष्टकायाः सूत्रयित्वा, पुष्टिकर्म्म,—इति च फलम्, आग्नेयीत्यादिकं सूत्रयन्नाचार्य्यः परमतमेतदिति दर्शयति। तदिदमर्थं पुष्टिकर्म्म,—इति मध्ये सूचितम्। अन्यथा देवतोपदेशानां मध्ये फलवादोपन्यासोऽनुचित एवस्यात्। यत्तु,—उत्तरेण सूत्रेण सहैकसूत्रता-शङ्का निरासार्थं मध्य एव फल-वादोन्यासः,—इति वर्णितम्। तदपि नातीव समीचीनम्। कस्मात्?। तदाशङ्काया अकिञ्चित् करत्वात्। एकसूत्रताया-मपि क्षतेरभावाच्च। तस्मात्, अष्टका रात्रिदेवता पुष्टिकर्म्म,—इत्यनेन स्वमतमभिधाय आग्नेयीत्यादिना परमतमादर्शितम्—इत्यादरणीयम्। गृह्यान्तरेष्वेकैकमतपरतयैवैतासां देवतानामु-पन्यासो दृश्यते। तथाच गृह्यान्तरम्। "तांहैके वैश्वदेवीं ब्रुवत आग्नेयीमेके * * प्राजापत्यामेके रात्रिदेवतामेके * * ऋतुदेवता-मेके पितृदेवतामेके"—इति। तस्मादेता देवता नैकस्याभिमताः अपि त्वेकैका देवता एकैकस्याचार्य्यस्य। तत्र, "रात्रिदेवतामेके"—इत्येतदस्मदाचार्य्यमतस्योपन्यासः,—इति बोद्धव्यम्। अतएव,

आचार्य्येण,—"अष्टका रात्रिदेवता"—इति सूचयित्वा, "इति देवता विचाराः"—इति सूचितं, न देवता विकल्पाः—इति। एतासां देवतानां स्वाभिमतत्वेतु, "नवषट्चेच इति विकल्पः"—इतिवत् "देवताविकल्पाः,—इत्येवकुर्य्यात्। तस्मात्,—देवता-विचारा एवैते, न पुनरेता देवता भवन्ति। देवतात्वस्याभिरुचैव,—अष्टका रात्रिदेवता,—इति। सोऽयमाचार्य्यस्याभिप्रायः—इत्ययमस्मदीयः पन्थाः। देवताविचारप्रकारस्तु बुद्धिमद्भिरूह-नीयः। ग्रन्थगौरवभयादुपारम्यतेऽस्माभिः। यच्च मन्त्रलिङ्गम-ग्न्यादीनामस्ति, न तद्देवताश्रुतिचोदितां रात्रिं वाधितुमीष्टे। दुर्बलं हि लिङ्गं श्रुतेरिति खल्ववोचाम। यथा च, मन्त्रलिङ्गाव-गतापि देवता तद्धितशिष्टया देवतया वाध्यते, तथैव देवताशब्द-शिष्टयापि वाधिष्यते। न्यायस्याविशेषात्। अन्येतु मन्यन्ते,—"अन्यतरस्या देवताया अभिसन्धानं न घटते। कुतः?। मध्य-माष्टकायाम्, अग्नावग्निः,—इति मन्त्रलिङ्गविरोधात्। तस्मात्, सर्व्वासामभिसन्धानं कर्त्तुं युक्तम्। अत्रापि यच्च मन्त्रान्तरेण होमः, तत्र होमकाले मन्त्रदेवतामेवाभिध्यायेत्। तथैव तथा-भिध्यातया भक्तिसाहचर्य्यात् सर्व्वा अप्येकदा देवता अभिध्याता हृष्टाश्च भवन्ति"—इति॥०॥ ३ ॥०॥

कियत्यः पुनरष्टका भवन्ति?। उच्यते,—

चतुरष्टको हेमन्तः ॥ ४ ॥

चतस्रोऽष्टका यस्मिन्, सोऽयं चतुरष्टको हेमन्तः ऋतुविशेषः।

तदिदं ऋतुसंवत्सराभिप्रायं सूत्रम्। एतदुक्तं भवति। हेमन्त-मासचतुष्टये चतस्रोऽष्टका भवन्ति,—इति ॥०॥ ४ ॥०॥

ताः सर्व्वाः समांऽसा श्चिकीर्षेत् ॥ ५ ॥

ताः सर्व्वास्तस्रोऽप्यष्टकाः समांसाः मांससहिता श्चिकीर्षेत् कर्त्तु-मिच्छेत्। चिकीर्षेत्,—इति गुरुकरणं केनाप्युपायेन मांससम्पत्तिं कर्त्तुमिच्छेदित्युपदेशार्थम्॥०॥ ५ ॥०॥

इति कौत्सः ॥ ६ ॥

इति,—अनन्तरोक्तं,—चतस्रोऽष्टकाः—इति,तासु सर्व्वासु मांसम्—इति च, कुत्सस्यापत्यं कौत्स आचार्य्यो मन्यते ॥०॥ ६ ॥०॥

त्र्यष्टक इत्यौद्गाहमानिः ॥ ७ ॥

तिस्रोऽष्टका यस्मिन्, सोयं त्र्यष्टको हेमन्तः,—इत्यौद्गाहमानि-राचार्य्यो मन्यते। उद्गाहमानस्यापत्यमौद्गाहमानिः ॥०॥ ७ ॥०॥

यथौद्गाहमानिराचार्य्यो मन्यते,—

तथा गौतमवार्कखण्डी ॥ ८ ॥

आचार्य्यावपि मन्येते। एवञ्च, औद्गाहमानि गौतम वार्कखण्डी-नामाचार्य्याणामनुमत स्त्र्यष्टकपक्ष एवास्मदाचार्य्यस्याप्यभिप्रेतः,—इत्यवगच्छामः। कस्मात्?। तिसृणामेव परतः कर्म्मोपदेशात्। अस्मिंश्च पक्षे मध्यमाष्टकैव समांसा कर्त्तव्या। कस्मात्?। प्रथमा-

मतिक्रम्य मध्यमायामेव तदुपदेशात्। इतरयोर्द्व्याकारोपदे-शाच। एवमेतस्मिन् पक्षे अन्वष्टक्यमपि मध्यमायामेव भवति। कस्मात् कारणात्?। तस्याष्टकासंज्ञपितपशुसाध्यत्वात्। मध्य-माष्टकायामेव च पशुसंज्ञपनोपदेशात्। तथाच वक्ष्यति,—"वामं सक्थ्यन्वष्टक्याय निदध्यात्"—इति। तथा चोक्तम्।

"अन्वष्टक्यं मध्यमायामिति गोभिलगौतमौ।
वार्कखण्डिस्तु, सर्व्वासु कौत्सो मेनेऽष्टकासु च"।

इति। वचनस्य खल्वेतस्योक्तन्यायमूलतया त्र्यष्टकपक्ष एव गोभि-लाचार्य्यस्यानुमतः,—इति, भङ्ग्यन्तरेण कात्यायनः स्पष्टयाञ्चकार। कौत्सस्य पुनराचार्य्यस्य मते सर्व्वासामेवाष्टकानां समांसत्वात् सर्व्वा-स्वेवान्वष्टक्यं सम्भवति,—इति द्रष्टव्यम्। तस्मादाचार्य्येण चतुर्थ्या अष्टकायाः कर्म्मासूत्रणात् त्र्यष्टकपक्ष एवादरणीयः। चतुरष्टक-पक्षस्तु कौत्सानुमतोऽपि बहुभि र्व्विरोधादुपरोद्धव्यः। अथाच वाक्यार्थविद्भिरभिहितम्।

"अल्पानां यो विघातः स्यात् स वाधो बहुभिः स्मृतः।
प्राणसम्मित इत्यादि वा।सष्ठं वाधितं यथा।
विरोधो यत्र वाक्यानां प्रामाण्यं तत्र भूयसाम्।
तुल्यप्रमाणसत्त्वे तु न्याय एव प्रवर्त्तकः।

इति ॥०॥ ८ ॥०॥

अथेदानीं तिस्रोऽष्टकाः क्रमेणोपदेष्टुमाह,

योऽर्द्धभाग्रहायण्या स्तामिस्राष्टमी तामपूपाष्टके-त्याचक्षते ॥ ९ ॥

आग्रहायण्याः पौर्णमास्या ऊर्द्धं परतो या तामिस्रा कृष्णपक्षीया अष्टमी, (तमिस्राष्टमी,—इति केचित् पठन्ति, तत्रापि स एवार्थः) तां अपूपाष्टका,—इति आचक्षते कथयन्ति आचार्य्याः। यथेय-मपूपविधानादपूपाष्टका भण्यते, तथा मध्यमापि मांसविधाना-न्मांसाष्टका, अन्तिमाऽपि शाकविधानात् शाकाष्टकोच्यते,—इति द्रष्टव्यम्। अथैवम्,—अपूपविधानादेवाभिधाने सिद्धे 'अपूपाष्टके-त्याचक्षते',—इत्येतदवाच्यम्?। उच्यते। एवन्तर्हि गुणार्थोऽय-मनुवादो भविष्यति। कथं नाम?। ब्राह्मणभोजनार्थमप्यपूपाः कर्त्तव्याः,—इति। एवञ्च, अष्टकाविहितमन्यदपि यत् कर्म— श्राद्धं, तदप्यपूपैः करणीयमिति सिध्यति। तथाच पुराणेषु स्मर्य्यते।

"आद्याऽपूपैः सदा कार्य्या मांसैरन्या भवेत् सदा।
शाकैः कार्य्या तृतीया स्यादेष द्रव्यगतो विधिः"।

इति ॥०॥ ९ ॥०॥

स्थालीपाकावृता तण्डुलानुपस्कृत्य चरुं श्रपयति॥ ॥ १० ॥

स्थालीपाकरीत्या पूर्व्वोक्तया, तण्डुलानुपस्कृत्य संस्कृत्य चरुं श्रप-यति ॥०॥ १० ॥०॥

अष्टौ चापूपान् कपालेऽपरिवर्त्तयन् ॥ ११ ॥

अष्टसङ्ख्याकान् अपूपान् मण्डकान्। तथा चोक्तम्।

"चैयम्बकं करतलमपूपा मण्डकाः स्मृताः।
पालाशा गोलकाश्चैव लौहचूर्णञ्च चीवरम्"।

इति। कपाले,—

"कपालं मृण्मयं पात्रं चक्राघटितमुच्यते।
आसुरं चक्रघटितं दैवे पैत्रे च वर्ज्जयेत्"।

इत्युक्तलक्षणे, अपरिवर्त्तयन् परिवर्त्तनमकुर्व्वन्। चशब्दात् श्रपयति,—इत्यनुषज्यते॥०॥ ११ ॥०॥

किमेकस्मिन्नेव कपाले अष्टावपूपान् श्रपयति? । न । कथन्तर्हि? । उच्यते,—

एककपालान् ॥ १२ ॥

एकैककपालान्—इत्यर्थः। तथाच, एकैकस्मिन् कपाले एकैकमपूपं श्रपयति। कथं ज्ञायते? । सूत्रारम्भस्यार्थवत्त्वादित्याह। कपाले,—इत्येतावन्मात्रसूत्रणादप्यविशेषादेकस्मिन्नेव कपाले भविष्यति, किं सूत्रान्तरारम्भेण? । तस्मात् सूत्रान्तरारम्भादवगच्छामः,—एकैकस्मिन् कपाले एकैकस्यापूपस्य श्रपणम्—इति। ननु, अविशेषात् द्वे त्रीणि वा कपालान्यपि प्राप्नुवन्ति? । प्राप्नुवन्तु नाम, तावताप्येकस्मिन् कपाले क्रियत एव। क्रियते चेत,—तत्रैव क्रियताम्, अलं कपालान्तरकल्पनया? । तस्मादेकैककपालान्—इत्यस्मादुक्तैव वर्णना। तथा चोक्तम्।

"पृथक्कपालान् कुर्व्वीत अपूपानष्टकाविधौ"।

इति ॥०॥ १२ ॥०॥

कपालप्रसङ्गात् पुरोडाशधर्म्माणामपि प्रसङ्गं कश्चिदाशङ्कीत, अत स्तन्निषेधार्थमाह,—

## अमन्त्वानित्यौद्गाहमानिः ॥ १३ ॥

अमन्त्वान् मन्त्ररहितानष्टावपूपानित्यौद्गाहमानिराचार्य्यो मन्यते ॥०॥ १३ ॥०॥

अपूपानां प्रमाणेनैव कपालानामपि प्रमाणं सेत्स्यति,—इत्यभिप्रायेणापूपानामेव प्रमाणमुपदिशति,—

## त्रैयम्बकप्रमाणान् ॥ १४ ॥

अष्टावपूपान् श्रपयति,—इति सम्बध्यते। त्रैयम्बकप्रमाणान् करतलप्रमाणान्—इत्यर्थः। तथा चोक्तम्। "त्रैयम्बकं करतलम्"—इति। एतस्य पुनरसम्भवे गृह्यासंग्रहोक्तं प्रमाणमपि द्रष्टव्यम्। तथाच गृह्यासंग्रहः।

"चतुर्मुष्टिश्चरुः कार्य्यश्चतुर्णामुत्तरोऽपि वा।
कपालस्य प्रमाणेन अपूपानष्टकाविधौ।
चतुरंगं पाणितलात् कपालं याज्ञिका विदुः।
पृथक्-कपालान् कुर्व्वीत अपूपानष्टकाविधौ"।

इति ॥०॥ १४ ॥०॥

शृतानभिघार्य्योदगुद्वास्य प्रत्यभिघारयेत् ॥ १५ ॥

शृतान् पक्वानपूपान् घृतेनाभिघार्य्य अग्नेरुत्तरतोऽवतार्य्य पुनर्घृतेनाभिघारयेत्। कपालानां स्थालीपाकधर्म्मानतिदेशादेवं सूचितम्। एवञ्च, यावदुक्तत्वात् नात्राभिघारणे पवित्रान्तर्हितत्वमपेक्षितम्। चरौ तु स्थालीपाकधर्म्मातिदेशादेवैतानि प्राप्नुवन्ति ॥०॥ १५ ॥०॥

स्थालीपाकावृताऽवदाय चरोश्चापूपानाञ्चाष्टकायै स्वाहेति जुहोति ॥ १६ ॥

स्थालीपाकधर्म्मेण चरोश्च अपूपानाञ्च सर्व्वेषां पृथक् पृथगवदाय अष्टकायै स्वाहेति तन्त्रेणैव जुहोति। अत्र सन्दिह्यते। किं चरोरपूपानाञ्च सर्व्वेषां मध्येभ्योऽवदाय ततः पूर्व्वार्द्धेभ्योऽवद्यति? आहोस्विदेकैकस्य मध्यात् पूर्व्वार्द्धाच्चावदाय पुनरपरापरस्यावद्यति?। एकैकस्य मध्यात् पूर्व्वार्द्धाच्चावदाय पुनरपरापरस्यापि तथैवावद्यति,—इति प्रतिपद्यामहे। कस्मात्?। चरोश्चापूपानाञ्च,—इति चशब्दद्वयकरणात्। प्रत्येकं चशब्दबलात् प्रत्येकमेव तावत् यथोक्तावदानमवगम्यते। अवगम्यते चेत्, न युज्यते विनाकारणमुत्स्रष्टुम्। अन्यथा चरोरपूपानाञ्च,—इति कुर्य्यात् ॥०॥१६॥०॥

स्थालीपाकावृताऽन्यत् ॥ १७ ॥

गतभाष्यमेतत्। अत्रापूपाष्टका कर्म्मणः परिसमाप्तिः ॥०॥१७॥०॥

अथेदानीं मांसाष्टकाप्रकरणं प्रस्तूयते,—

**तैष्या ऊर्द्ध्वमष्टम्यां गौः ॥ १८ ॥**

तैषी पौषीपौर्णमासी। तस्या ऊर्द्ध्वं—तस्याः परस्यामष्टम्यां गौ-रालब्धव्या,—इति सूत्रशेषः ॥०॥ १८ ॥०॥

कथमालब्धव्या ?। उच्यते,—

**ताᳫं सन्धिवेलासमीपं पुरस्तादग्नेरवस्थाप्योपस्थि-तायां जुहुयात्—यत्पशवः प्रध्यायतेति ॥ १९ ॥**

रात्र्यह्नोः सन्धिरेव सन्धिवेला। सा चार्थात् पूर्व्वैव बोद्धव्या, न पश्चिमा। उषैव सन्धिवेलाशब्दार्थः,—इति केचित्। तस्याः सन्धिवेलायाः समीपं—("कालाध्वनोरत्यन्तसंयोगे"—इति द्वि-तीया) सन्निधावित्यर्थः। पुरस्तात् पूर्व्वस्यां दिश्यग्नेः, तां गां अवस्थाप्य प्रत्यङ्मुखीं स्थापयित्वा, उपस्थितायामागतायां सन्धि-वेलायां, यत् पशवः,—इत्यनेन मन्त्रेण जुहुयात्। द्रव्यानुप-देशादाज्येन। स्रुवेण चायं होमः स्यात्। एतदुक्तं भवति। सन्धिवेलाया अल्पत्वात् तदानीं होतुं तस्याः समीपमेवाग्नेः पूर्व्वतो गामवस्थापयति, तत आगतायां सन्धिवेलायां जुहोति,—इति। ननु, उपस्थितायां गवि जुहुयात्,—इत्ययमेव सम्बन्धः कस्मान्न वर्ण्यते ?। विरोधादित्याह। कथं नाम ?। यदि नामोपस्थि-तायामेव गवि हूयते, न तर्ह्यग्नेः पुरस्तात्तामवस्थाप्य जुहोति। अथाग्नेः पुरस्तात्तामवस्थाप्य जुहोति, व्यक्तं तर्हि तस्यामुपस्थिता-यामेव न जुहोति—अपि तु अग्नेः पुरस्तादवस्थापितायामिति। अथापि स्यात्,—नेयमुपस्थितिरवस्थामाङ्क्षिपते। यत् सम्भव-

स्थापनं "पुरस्तादग्नेरवस्थाप्य"—इत्यनेन सूचितं, तच्च याऽवस्थितिः सैवोपस्थितायामित्यनेन परामृश्यते। न,—इत्युच्यते। कस्मात् न—इत्युच्यते ?। शृणु, यथा न—इत्युच्यते। यदि नाम सैवावस्थितिः परामृश्येत, नूनमवस्थितायामित्यकरिष्यत्। तद-करणाच्चावगच्छामः,—नात्र सैवावस्थितिः परामृश्यते,—इति। न खल्ववस्थितिमभिप्रयन्नुपस्थितायामिति च कुर्व्वन्नाचार्य्योऽस्माकं प्रतीतिं स्थगयति,—इति युक्तमभ्युपगन्तुम्। आनर्थक्यञ्चैवमाप-द्येत। पुरस्तादग्नेरवस्थाप्य जुहुयात्,—इति ह्यभिप्रेतम्। तस्मात् सन्धिवेलायामुपस्थितायाम्—इत्यस्मदुक्त एवार्थं आदरणीयः। श्रवणमात्रादप्ययमेवार्थोऽवगम्यते। अवगम्यते चेत्, न युज्यते परि-त्यक्तुम्। अतएव, सन्धिवेलासमीपं गोरवस्थापनं सन्धिवेलायामु-पस्थितायां होमार्थम्। सन्धिवेलासमीपम्,—इत्यस्य प्रातराहु-त्यनन्तरपरतया वर्णनायाञ्च तदेवानर्थकं स्यात्। परिभाषा-बलादेव तत्प्राप्तेः। नापि सन्धिवेलासमीपमित्यनेनाञ्जस्येनैतदव-गम्यते। तस्मान्न किञ्चिदेतत्।

कश्चिदिदं सूत्रम्—उपस्थितायां गवि,—इत्यन्यथा व्याख्याय, बहुप्रकारं वर्णनाञ्चकार। "ननु, अवस्थाप्य—इत्युक्त्वा, पुनरुप-स्थितायामिति कस्मादुच्यते ?। अत्राह। अस्य होमस्य पशूप-स्थापनेन सहातिसम्बन्धार्थम्। पश्वभावे स्थालीपाकं कुर्व्वीत,—इत्यस्मिन् पक्षे निवृत्तिरेव स्यात्। प्रोक्षणपर्य्यग्निकरणमन्त्रौ तु स्थालीपाकपक्षेऽप्यविरोधात् पठनीयौ। अथवा। आज्यसंस्कार-प्रतिषेधार्थम् उपस्थितायामिति पुनर्व्वचनम्। कथन्नाम ?।

उपस्थितायां जुहुयादेव, न तावदाज्यं संस्कुर्य्यात्,—इति। अथवा। आसादनीये आसादिते कर्म्मणः कृताकृतप्रत्यवेक्षण-कर्त्तरि ब्रह्मणि चोपविष्टे तत्रापि होमस्य प्राप्तत्वात् तथा माभूदित्यानर्थ्यार्थं पुनर्व्वचनम्। तेन किम्?। उपस्थितायामनन्तरमेव जुहुयादेव, न तावत् किञ्चिदपि कुर्य्यात्"—इति ॥०॥ ॥ १९ ॥०॥

## हुत्वा चानुमन्त्रयेतानुत्वामातामन्यतामिति ॥२०॥

हुत्वा, अनु त्वा माता,—इति मन्त्रेण गामनुमन्त्रयेत,—अनामिकाग्रेण स्पृशन्। हुत्वा,—इति वचनं हुत्वैवानुमन्त्रयेत न तु तन्त्रसमापनमपि कृत्वा,—इत्येवमर्थम्। चशब्दस्य यवमिश्रोदकादीनामासादनार्थः। तेन,—यवमिश्रमुदकं, पवित्रं, क्षुरः, शाखाविशाखे पलाशकाष्ठे, वर्हिः, इध्मः, आज्यं, समिधौ, स्रुवः,—इत्येतानि यथावदासाद्य, अनन्तरमनुमन्त्रयेतेत्यर्थः॥०॥२०॥०॥

## यवमतीभिरद्भिः प्रोक्षेदष्टकायै त्वा जुष्टां प्रोक्षामीति ॥ २१ ॥

पूर्व्वमासादिताभि र्यवमतीभिरद्भि र्गां प्रोक्षेत्—प्रकर्षेण सिञ्चेत् अष्टकायै,—इति मन्त्रेण ॥०॥ २१ ॥०॥

## उल्मुकेन परिहरेत् परिवाजपतिः कविरिति ॥२२॥

उल्मुकमलातमित्यनर्थान्तरम्। तेन गां परिहरेत् प्रदक्षिणीकुर्य्यात् परिवाजपतिरिति मन्त्रेण ॥०॥ २२ ॥०॥

अपः पानाय दद्यात् ॥ २३ ॥

तस्मै गवे पानायोदकं दद्यात्—मन्त्रानुपदेशात् व्याहृतित्रितयं जपन्। कथं ज्ञायते?।

"यत्र मन्त्रा न विद्यन्ते व्याहृतित्रितयं जपेत्।
मन्त्राणामेव चादेशे मन्त्रात् कर्म्म समाचरेत्"।

इति गृह्यासंग्रहवचनात्। एवमन्यत्रापि बोद्धव्यम्। मन्त्रानुपदेशादमन्त्रकमिति वर्णनन्तु उक्तवचनानवलोकनेनेति ज्ञेयमेव। दध्यादीनामेव केवलं तूष्णीं करणमाचार्य्यपुत्रेणोपदिष्टम् ॥०॥ ॥ २३ ॥०॥

पीतशेषमधस्तात् पशोरवसिञ्चेदात्तं देवेभ्यो हविरिति ॥ २४ ॥

तस्याः पीतावशिष्टमुदकं, पशो स्तस्या एव गो रधस्तादवसिञ्चेत् अवाचीनं सिञ्चेत् आत्तं देवेभ्यः,—इति मन्त्रेण ॥०॥ २४ ॥०॥

अथैनामुदगुत्सृप्य संज्ञपयन्ति ॥ २५ ॥

अथ,—अनन्तरमेव, एनां गां उदगुत्तरस्यामग्नेरुत्सृप्य नीत्वा संज्ञपयन्ति। कर्त्तुरनियमः। सञ्ज्ञपनं हननम् ॥०॥ २५ ॥०॥

कीदृशीं सञ्ज्ञपयन्ति?। उच्यते,—

प्राक्शिरसमुदक्पदीं देवदैवत्ये ॥ २६ ॥

प्राक्शिरसं पूर्व्वाभिमुखशिरस्कां, उदक्पदी मुदङ्मुखपदीं सञ्ज्ञपयन्ति। देवदैवत्ये,—देवानुद्दिश्य यत् क्रियते, तस्मिन् ॥०॥ ॥ २६ ॥०॥

दक्षिणाशिरसं प्रत्यक्पदीं पितृदैवत्ये ॥ २७ ॥

पूर्व्वसूत्रव्याख्यानेनैवेदमपि सूत्रं व्याख्यातम्। सेयमष्टका-प्रसङ्गात् साधारणकर्म्मपरिभाषा क्रियते। ततश्च, देवतान्तरेषु प्रोक्षण-मन्त्रमूहेत। तेन,—वास्तुकर्म्मणि, वास्तोष्पतये त्वा जुष्टां प्रोक्षामि,—इति। पित्र्ये,—पितृभ्यस्त्वा,—इति। एव मन्यत्रापि। तथा चोक्तम्।

"ऊहः प्रोक्षणमन्त्रस्य लिङ्गदेवतयोर्वशात्"।

इति ॥०॥ २७ ॥०॥

संज्ञप्तायां जुहुयात् यत् पशुर्मायुरकृतेति* ॥ २८ ॥

तस्यां संज्ञप्तायां सत्यां जुहुयात् यत्पशुरितिमन्त्रेण॥०॥२८॥०॥

पत्नी चोदकमादाय पशोः सर्व्वाणि स्रोतांसि प्रक्षालयेत् ॥ २९ ॥

पत्नी उदकमादाय, चशब्दाद्दर्भकूर्च्चमप्यादाय, पशोरेतस्या गोः सर्व्वाणि स्रोतांसि—

"सप्त तावन्मूर्द्धन्यानि तथा स्तनचतुष्टयम्।
नाभिः श्रोणि रपानञ्च गोः स्रोतांसि चतुर्दश"।

इत्युक्तलक्षणानि। प्रक्षालयेत्,—दर्भकूर्च्चेण स्रोतांसि प्रकर्षेणाकृष्य क्षालयेदित्यर्थः। स्रोतसां क्षालनञ्चेदं तूष्णीं करणीयम्। क्रम-स्त्विच्छाधीन एव भवति। तथा चोक्तम्।

---

* मायुमक्रतेति,—इति पाठान्तरम्।

"चालनं दर्भकूर्च्चेण सर्व्वत्र श्रोतसां पशोः।
तूष्णीमिच्छाक्रमेण स्यादपार्थे पार्णदारुणी"।

इति ॥०॥ २९ ॥०॥

**अग्रेण नाभिं पवित्रे अन्तर्धायानुलोममाकृत्य वपामुद्धरन्ति ॥ ३० ॥**

अग्रेण नाभिं नाभेरग्रतः—अदूरप्रदेशे इत्यर्थः। पूर्व्वमासादिते पवित्रे अन्तर्धाय। द्विवचनं दशापेक्षम्,—इति भट्टनारायणः। अनुलोमं लोमानमनुकूलं यथा भवति, तथा आकृत्य—पूर्वमासादितेन क्षुरेण पाटयित्वा, वपां मांसचर्म्मणोरन्तर्व्वर्त्तिनीं वसां उद्धरन्ति। कर्त्तुरनियमः। यद्यप्यत्र मन्त्रो नोपदिश्यते, तथापि व्याहृतिजपो न कर्त्तव्यः। कस्मात्?।

"वपाहोमे मुखेनैव होमे स्विष्टकृते तथा।
व्याहृति र्न प्रयोक्तव्या मुखे नाप्सु च लक्षणम्"।

इति गृह्यासंग्रहवचनात्। ननु, वपाहोम एव व्याहृतिप्रयोगनिषेधः साक्षाद्वचनादवगम्यते?। सत्यम्। किन्तु वपाहोमे आचार्य्येण मन्त्रोपदेशात् व्याहृतिप्रयोगप्रसक्तिरेव नास्ति,—इति व्यर्थस्तत्र निषेधः। तस्मादवगच्छामः,—वपाहोमे कर्त्तव्ये यत्किञ्चित् क्रियते तदनुकूलं, तत्रैवासौ निषेधः,—इति ॥०॥ ३० ॥०॥

**तां शाखाविशाखयोः काष्ठयोरवसज्याभ्युक्ष्य श्रपयेत् ॥ ३१ ॥**

शाखा एकशाखं काष्ठम्। विशाखा नानाशाखं काष्ठम्। शाखा च विशाखा च शाखाविशाखे, तयोः—शाखाविशाखयोः काष्ठयोः। ते च काष्ठे पालाशे बोद्धव्ये। कस्मात्?। "वपार्थे पार्णदारुणी"—इति वचनात्। तयोः काष्ठयोः तां वपां अवसज्य आरोप्य, उदकेनाभ्युच्य अपयेत् ॥०॥ ३१ ॥०॥

प्रश्रुतितायां विशसथेति ब्रूयात् ॥ ३२ ॥

प्रश्रुतितायां प्रचरितायां। श्रुतिर चरणे,—इति स्मरणात्। प्रश्रुतितायां वपायां विशसथ,—इति ब्रूयात्। विशसथ, गां अपगतचर्म्मदेहां कुरुत,—इत्यर्थः। सोऽयं महायानां प्रैषः। महायान् खल्वेवं प्रेष्य, अन्यदपि तानवबोधयेत् ॥०॥ ३२ ॥०॥ किन्तत्?। उच्यते,—

यथा न प्रागग्नेर्भूमिꣳशोणितं गच्छेत् ॥ ३३ ॥

यथा येन प्रकारेण, विशस्यमानाया गोः शोणितं, प्रागग्नेर्भूमिं अग्नेः पुरस्ताद्भूमिभागं न गच्छेत् न इयात्,—तथा विशसथ,—इत्यर्थः। एतस्माच्च कारणादवगच्छामः,—अग्नेः समीप एव गो र्व्विशसनीया,—इति ॥०॥ ३३ ॥०॥

शृतामभिघार्य्योदगुद्वास्य प्रत्यभिघारयेत् ॥ ३४ ॥

शृतां वपाम्। कृतभाष्यमन्यत् ॥०॥ ३४ ॥०॥

स्थालीपाकावृता वपामवदाय,—स्विष्टकृदावृता वाऽष्टकायै स्वाहेति जुहोति ॥ ३५ ॥

स्थालीपाकावृता,—"अथ हविष उपस्तीर्य्यावद्यति मध्यात् पूर्व्वार्द्धात्"—इत्याद्युक्तप्रकारेणेत्यर्थः। पूर्व्वमासादितेन क्षुरेण वपामवदाय, स्विष्टकृदावृता वा कृत्स्नां वपामादाय, अष्टकायै स्वाहा,—इत्यनेन मन्त्रेण जुहोति। तथा चोक्तम्।

"क्षुरो मांसावदानार्थः, कृत्स्नां स्विष्टकृदावृता।
वपामादाय जुहुयात् तत्र तन्त्रं समापयेत्"।

इति। अनन्तरमेवान्यस्य कर्म्मण उपदेशादेककर्म्माशङ्का माभूदिति, "तत्र तन्त्रं समापयेत्"—इत्यनेन कर्म्मणो नानात्वं स्पष्टीकृतम् ॥०॥ ३५ ॥०॥

## स्थालीपाकावृताऽन्यत् स्थालीपाकावृताऽन्यत् ॥३६॥

कृतभाष्यमेतत्। अस्मादपि वचनादिदानीमेकस्य कर्म्मणः परिसमाप्तिरवगम्यते। द्विर्व्वचनं प्रपाठक समाप्ति प्रज्ञापनार्थम् ॥०॥ ३६ ॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये तृतीयप्रपाठकस्य दशमी काण्डिका समाप्ता ॥

समाप्तश्चायं तृतीयः प्रपाठकः ॥

चतुर्थप्रपाठके प्रथमा काण्डिका।



वपाहोममुक्त्वा वपाश्रपण्योः पलाशशाखयोः प्रतिपत्तिमाह,—

## अनुप्रहरति वपाश्रपण्यौ ॥ १ ॥

ययोः शाखाविशाखयोरवसृज्य वपा अर्पिता, ते शाखाविशाखे वपाश्रपण्यौ उच्यते। ते वपाश्रपण्यौ अनु पश्चात् प्रहरति। कस्य पश्चात्?। द्रव्यासादन तद्दोचण प्रोचणपर्य्यन्तस्य। कस्मात्?। आरम्भसामर्थ्यादित्याह। पूर्व्वप्रपाठक परिसमाप्तौ पूर्व्वस्य कर्म्मणः तन्त्रसमापनस्याभिधानात् अग्रे च चरुश्रपणस्य सूचयिष्यमाणत्वात् इदानीं खल्वनुशब्देन चरुश्रपण-पूर्व्वकर्त्तव्यानामेव कर्म्मणां परतः,—इत्यवगम्यते। तत्र च, चुरः, कंसपात्रत्रयं, प्लचशाखावान् प्रस्तरः,—इत्येतेषामेव वैकृतानामासादनमत्राधिकम्। प्राकृतानामपि मध्ये, चरुस्थाली पवित्र मेचणानि इन्दश्च आसादयितव्यानि, विनियोगसामर्थ्यात्। सर्व्वमन्यत् प्रकृतवदेवासादयितव्यम्। प्रहरतिश्च यजतिवचनः,—इति प्रस्तर-प्रहरण-न्याये निर्णीतम्। "गार्हपत्ये प्रहरामः"—इति च श्रूयते। तथा सूत्रकारोऽप्याह। "अष्टावष्टौ सकलान्याहवनीये प्रहरेयुः"—इति। तस्मात् होमोऽयम् ॥०॥ १ ॥०॥

कथं प्रहरति?। उच्यते,—

प्राचीमेकशूलां प्रतीचीमितराम् ॥ २ ॥

एकं शूलमग्रं यस्याः सेयमेकशूला, तां—शाखां, प्राचीं प्रागग्रां प्रहरति। इतरां विशाखां प्रतीचीं प्रहरति ॥०॥ २ ॥०॥

अवद्यन्त्यवदानानि सर्व्वाङ्गेभ्यः ॥ ३ ॥

अवदीयन्ते,—इत्यवदानानि मांसान्यभिधीयन्ते। प्रकृतस्य पशोः अवदानानि मांसानि अवद्यन्ति क्षुरेणोद्धरन्ति। बहुवचनाद-नियतः कर्त्ता। कुतोऽवद्यन्ति?। सर्व्वाङ्गेभ्यः—

"हृज्जिह्वा क्रोड़ सक्थीनि यकृद्वृक्कौ गुदं स्तनाः।
श्रोणिः स्कन्धसटा पार्श्वे पश्वङ्गानि प्रचक्षते।
एकादशानामङ्गानामवदानानि संख्यया।
पार्श्वस्य वृक्कसक्थोश्च द्वित्वादाहुश्चतुर्दश"।

इत्युक्तलक्षणेभ्यः। ननु, सर्व्वग्रहणं किमर्थम्?।

"हृदयं जिह्वा क्रोड़ं सव्यसक्थि पार्श्वनड़कं पार्श्वे च।
यकृदथ वृक्कौ च गुदं दक्षिणश्रोणि रितरा नाभिः"।

इति वचनान्तरोक्तानामङ्गानामेवावदानानामिह ग्रहणं माभूत, किन्तु सर्व्वेषाम्—इत्येतदर्थमिति गृहाण ॥०॥ ३ ॥०॥

सर्व्वाङ्गेभ्यः,—इत्यस्यापवादमाह,—

अन्यत्र वामाच्च सक्थ्नः क्लोम्नश्च ॥ ४ ॥

सक्थि ऊरुः। क्लोम तिलकम्। वुक्कादूर्द्ध्वं पिपासास्थानं क्लोम,—

इत्याचक्षते वैद्यकाः। वामात्—सव्यात् सक्थ्नः। क्लोमश्चान्यच्च सर्वाङ्गेभ्य अवद्यन्ति। चशब्दद्वयं द्वयो स्तुल्यत्वप्रज्ञापनार्थम्। प्रयोजनञ्चास्योत्तरसूत्रे वक्ष्यामः ॥०॥ ४ ॥०॥

वामंᳬसक्थ्यन्वष्टक्याय निदध्यात् ॥ ५ ॥

वामं सक्थि, अपवादसामर्थ्यात्तुल्यत्वप्रज्ञापनाच्च—क्लोम च, अन्वष्टक्याय,—तादर्थ्ये चतुर्थी, वक्ष्यमाणान्वष्टक्यकर्मार्थं निदध्यात् स्थापयेत् ॥०॥ ५ ॥०॥

तस्मिन्नेवाग्नौ श्रपयत्योदनचरुञ्च माᳬसचरुञ्च पृथङ्मेक्षणाभ्यां प्रदक्षिणमुदायुवन् ॥ ६ ॥

अग्निद्वये चरुद्वयस्य श्रपणं माशङ्कीत,—इति तस्मिन्नेवाग्नाविन्याह। तत्राग्नौ ओदनचरुञ्च श्रपयति, मांसचरुञ्च श्रपयति—अखण्डितैरेवावदानैः। पृथक् नाना श्रपयति। किं कुर्व्वन्?। मेक्षणाभ्यां प्रदक्षिणमुदायुवन्। प्रदक्षिणं यथा भवति, तथा उदायुवन् ऊर्द्धमीषन्मिश्रयन्। ओदनचरुञ्च मांसचरुञ्च,—इत्यसमासकरणं चरुद्वयश्रपणस्य पृथक्कालत्व प्रज्ञापनार्थम्। श्रपणक्रमश्चानयोः पाठक्रमादेव कल्पनीयः ॥०॥ ६ ॥०॥

सृतावभिघार्य्योदगुद्वास्य प्रत्यभिघारयेत् ॥ ७ ॥

व्याख्यातप्रायमेतत्। ननु, मांसचरोः स्थालीपाकधर्म्मानतिदेशात् तस्मिन्नेव चरावेतद्विधातव्यम्। तथाच, सृतमित्येकवचनं मांसचरुमिति वा कर्त्तुमुचितम्। कस्मात् द्विवचनं क्रियते?।

असंमोहार्थमित्याह । अन्यथैकवचने कृते मांसचरुमिति वा सूचिते, तस्यैव चरोरभिघारणं न पुनरन्यस्यापि,—इति शिष्याः संमुह्येरन् । अथवा । यावदुक्तत्वादस्मिन्नोदनचरावपि अभिघारणे पविचान्तर्हितत्वं न करणीयमित्येतदर्थं शृतावितिं द्विवचनं कृतम् ॥०॥ ७ ॥०॥

एतस्मिन् क्रमे आज्यभागान्तं कृत्वा,—

कंसे रसमवासिच्य ॥ ८ ॥

कंसे,—पूर्व्वमासादितानां कंसपात्राणामेकस्मिन् कंसपात्रे, रसं अवदानमांसयूषं अवासिच्य निनीय ॥०॥ ८ ॥०॥

प्लक्षशाखावति प्रस्तरेऽवदानानि कृत्वा ॥ ९ ॥

प्लक्षो वृक्षविशेषः । प्रस्तरः कुशमुष्टिः । प्लक्षस्य शाखा प्लक्षशाखा । सा यस्यास्ति सोऽयं प्लक्षशाखावान्, तस्मिन् प्लक्षशाखावति प्रस्तरे भूमौ प्रागग्रनिहिते, अवदानानि अपनीतयूषान्यवदानमांसानि, कृत्वा स्थापयित्वा ॥०॥ ९ ॥०॥

स्थालीपाकावृताऽवदानानां कंसेऽवद्यति ॥ १० ॥

स्थालीपाकावृता मध्यात् पूर्व्वार्द्धादित्युक्तया रीत्या, प्रत्येकं सर्व्वेषामवदानानां—अपनीतयूषाणां मांसानां, कंसे अपरस्मिन् कंसपात्रे,—यत्र यूषो नावसिक्तः तस्मिन्—इत्यर्थः । अवद्यति छुरेणावदाय स्थापयति । अवदानानामिति संबन्धलक्षणा षष्ठी ॥०॥ १० ॥०॥

स्विष्टकृतश्च पृथक्॥ ११॥

स्विष्टकृतः स्विष्टकृदर्थं। चशब्दात्,—स्थालीपाकावृताऽवदानानि कंसे अवद्यति। किं तस्मिन्नेव कंसे?। न। कुत्र तर्हि?। पृथक्,—अन्यस्मिन् कंसे,—इत्यर्थः। अत्र च, स्विष्टकृदर्थत्वादवदानमांसानामुत्तरार्द्धपूर्व्वार्द्धेभ्योऽवदातव्यम्॥०॥ ११ ॥०॥

चरोरुद्धृत्य विल्वमात्रमवदानैः सह यूषेण सन्नयेत्॥ १२॥

चरोः प्रकृतत्वादोदनचरोः विल्वमात्रं विल्वपरिमाणं (परिमाणे मात्रट्) उद्धृत्य पूर्व्वोक्तयैव रीत्या मेक्षणेन गृहीत्वा। पात्रे स्थापयेदित्यर्थः। किमेकस्मिन्नेव पात्रे?। न। पृथक्। कथं ज्ञायते?। अत्रापि पृथगिति सम्बध्यते। कस्मात्?। मध्यमणिन्यायात्। तेन, पृथक् पृथगेव मेक्षणेनावदाय पृथक् पृथगेव पात्रे स्थापयेत्। एतदुक्तं भवति। मध्यात् पूर्व्वार्द्धादित्युक्तमेव मेक्षणेन चरोर्विल्वमात्रमवदाय यत्र मांसावदानानि स्थापितानि तस्मिन् कंसपात्रे स्थापयति। एवमुत्तरार्द्धपूर्व्वार्द्धादित्युक्तरीत्या स्विष्टकृदर्थमपि चरोर्विल्वमात्रं पृथगवदाय स्विष्टकृत्कंसपात्रे पृथगेव स्थापयति,—इति। अतएव, यथा सर्व्वैरप्यवदानैर्विल्वमात्रमेवोद्धृतं भवति नाधिकं, तथोद्धरेदिति बोद्धव्यम्। ततश्च, तदुद्धृतं विल्वमात्रं पूर्व्वगृहीतैर्मांसावदानैः यूषेण च पूर्व्वावसिक्तेन सह सन्नयेत् सम्यगेकीकुर्य्यात् मिश्रयेदित्यर्थः॥०॥ १२ ॥०॥

चतुर्गृहीतमाज्यं गृहीत्वाऽष्टर्च्चप्रथमया जुहुयाद्-ग्रावभिरिति ॥ १३ ॥

चतुर्गृहीतमाज्यं गृहीत्वा,—इत्युक्तार्थम्। अग्नावग्निरिति योऽयमष्टर्चः,—अष्टानामृचां समाहारः, तस्य प्रथमया ऋचा जुहुयात्। ऋगूणामपि चतुर्गृहीतमेवैतत्। कुतः?। विशेषवचनारम्भस्यार्थवत्त्वात्। पूर्व्ववत्तेषां विशेषस्यानुपदेशाच्च। सेयमाज्याहुतिः ॥०॥ १३ ॥०॥

अथ चर्व्वाहुतिरभिधीयते,—

सन्नीतात् तृतीयमात्रमवदाय द्वितीयातृतीयाभ्यां जुहोति ॥ १४ ॥

यत् प्रथमपाचे सन्नीतं मांसावदानं चर्व्ववदानं यूषस्य, तस्मात् सन्नीतात् तृतीयमात्रं त्रिभागैकभागमित्येतत्। अवदाय गृहीत्वा, प्रकृतस्याष्टर्चस्य द्वितीया तृतीयाभ्यां ऋग्भ्यां मिलिताभ्यां जुहोति ॥०॥ १४ ॥०॥

मन्त्रान्ते स्वाहाकारः,—इति सूत्रणात् प्रतिमन्त्रमेव स्वाहाकारं कश्चिदाशङ्कीत, अतस्तदपवादार्थमिदमाह,—

उत्तरस्याᳬ स्वाहाकारं दधाति ॥ १५ ॥

उत्तरस्यां ऋचि न पूर्व्वस्यां, स्वाहाकारं दधाति करोति। तथैव च जुहोति ॥०॥ १५ ॥०॥

एवमेवावरे चतुर्थीपञ्चमीभ्याᳬ षष्ठीसप्तमीभ्याञ्च ॥ १६ ॥

एवमेव पूर्व्वोक्तेनैव विधिना, अवरे द्वे तृतीयमात्रे अवदाय, प्रकृतस्याष्टर्चस्य चतुर्थी पञ्चमीभ्यां ऋग्भ्यां मिलिताभ्याम् एकामाहुतिं जुहोति, षष्ठी सप्तमीभ्याञ्चापराम्। अत्राप्युत्तरस्यामुत्तरस्यां स्वाहाकारं करोति, तत्रैव च जुहोति ॥०॥ १६ ॥०॥

शेषमवदाय सौविष्टकृतमष्टम्या जुहुयात् ॥ १७ ॥

शेषं स्विष्टकृदर्थमुत्तरार्द्धपूर्व्वार्द्धेभ्यो यद्गृहीतं, तदवदाय, प्रकृतस्यैवाष्टर्चस्य अष्टम्या ऋचा स्वाहाकारान्तया अग्नेरुत्तरार्द्ध पूर्व्वार्द्धे जुहुयात् ॥०॥ १७ ॥०॥

एवन्तावत् गवा यथोक्तेन विधिना यागः कर्त्तव्यः,—इत्ययं प्रथमः कल्पः। यदा पुनर्गौर्न सम्पद्यते, तदा कथं कर्त्तव्यम् ?। तदिदानीमभिधीयते,—

यद्युवा अल्पसम्भारतमः स्यादपि पशुनैव कुर्य्यात् ॥ ॥ १८ ॥

सम्भ्रियते,—इति सम्भारो द्रव्यम्। अल्पः सम्भारो यस्य सोऽयमल्पसम्भारः। तस्यैवातिशयस्तमप्प्रत्ययार्थः। उवै,—इति निपातौ। यद्युवा,—इति निपातसमुदायो यद्यर्थे,—इति केचित्। यदि अत्यल्पद्रव्यवान् स्यात्, अपि तदापि पशुनैव कुर्य्यादष्टकायागम्। पशुरपि छाग एव स्यात्। कस्मात्?। "अनादेशे पशु

ष्टाम:"—इति अष्टाकाख्यवचनात् । "छागपचे चरावपि"—इति च लिङ्गात् । एवकारकरणं पूर्व्वोक्तताद्ववविधिनियमार्थम् । तेन, अत्रापि कल्पे सर्व्व एव पूर्व्वोक्तो होम: स्यात् ॥०॥१८॥०॥

छागस्याप्यसम्भवे कथं कर्त्तव्यम्? । तदुच्यते,—

अपि वा स्थालीपाकं कुर्व्वीत ॥ १९ ॥

चरुचरार्थ: । स खल्वयं स्थालीपाक ओदनचरो: परस्तान्मांसचरुस्थाने सवत्सायास्तरुण्या गो: पयसि श्रपयितव्य: । तथा चोक्तम् ।

"स्थालीपाकं पशो: स्थाने कुर्य्याद् यथानुकल्पिकम् ।
श्रपयेत्तं सवत्साया स्तरुण्या गो: पयस्यनु" ।

इति । पशो:स्थाने,—इति करणात् पशुकार्य्यकारित्वमस्यावगम्यते । तेन, अत्राप्यष्टर्च्चेन होम: स्यात् । एवञ्च, पशुपचे यावन्ति पशोरवदानानि प्रस्तरे क्रियन्ते, स्थालीपाकपचेऽपि तावत: पायसान् पिण्डान् तत्र कुर्व्वीत । तथा चोक्तम् ।

"चरितार्था श्रुति: कार्य्या यस्मादप्यनुकल्पश: ।
अतोऽष्टर्च्चेन होम: स्याच्छागपचे चरावपि ।
अवदानानि यावन्ति क्रियन्ते प्रस्तरे पशो: ।
तावत: पायसान् पिण्डान् पश्वभावेऽपि कारयेत्" ।

इति । ननु, अपि वा स्थालीपाकेन,—इति वक्तव्ये किमर्थं प्रकृतविभक्तिक्रम: क्रियते? । कस्यचित् कर्म्मणोऽतिक्रमसूचनार्थमित्याह । कथं नाम? । अष्टर्च्चहोमवत्, पश्वभावेऽप्यविशेषार्थं

वपाहोमोऽपि स्थालीपाकेनैव स्यात्। अतो वपाहोमस्य निवृत्तिप्रज्ञापनार्थं प्रकृतविभक्त्यतिक्रमः क्रियते,—इति। अत एव, परिशिष्टकारेणाप्यवदानसङ्ख्ययैव पायसपिण्डकरणमुपदिष्टम् ॥०॥१९॥०॥

अपि वा गोर्ग्रासमाहरेत्॥ २० ॥

अपि वा अथ वा,—स्थालीपाकस्याप्यसम्भवे, गोः,—अविशेषेणोपदेशात् आत्मीयस्य परकीयस्य वा कस्यचिदनडुहः, ग्रासमाहरेद्द्यात्। तावताप्यष्टकाकर्म्म कृतं भवतीत्यभिप्रायः। तथा च गृह्यान्तरम्। "अप्यनडुहो यवसमाहरेत्"—इति। केचिदत्र गोशब्दस्य स्त्रीगवीपरत्वं वर्णयन्ति। ग्रस्यते,—इति ग्रासस्तृणयवसादिः। स च यावता गोर्दिवसाहारः सम्पद्यते, तावान् दातुमुचितः। कस्मात्?।

"यतः कुतश्चित् सम्प्राप्य गोभ्यो वाऽपि गवाह्निकम्।
अभावे प्रीणयन्नस्मान् श्रद्धायुक्तः प्रदास्यति"।

इति श्राद्धकरणप्रक्रमस्य तथा दर्शनात् ॥०॥ २० ॥०॥

अपि वाऽरण्ये कक्षमुपधाय ब्रूयादेषा मेऽष्टकेति ॥ ॥ २१ ॥

अपि वा, गोग्रासाहरणस्याप्यसम्भवे,—इत्येतत्। अरण्ये, कक्षं बाहुमूलकोटरप्रदेशं, उपधाय,—(उप हीनार्थे) हीनाधानं कृत्वा,—कक्षतिरोधानमपनीय ऊर्द्ध्वबाहुर्भूत्वा,—इति यावत्। एषा मेऽष्टका,—इत्येतं मन्त्रं ब्रूयात् कथयेत्। तथा च, श्राद्धप्रकरणे गवाह्निकप्रदानस्याप्यसम्भवे पुराणान्तरम्।

"सर्व्वाभावे वनं गत्वा कक्षमूलप्रदर्शकः ।
सूर्य्यादिलोकपालानामिदमुच्चैः पठिष्यति ।
न मेऽस्ति वित्तं न धनं न चान्यत्
श्राद्धोपयुक्तं, स्वपितॄन्नतोऽस्मि ।
तृप्यन्तु भक्त्या पितरो, मयैतौ
भुजौ कृतौ वर्त्मनि मारुतस्य" ।

इति । तस्मादत्राप्येतत्परतया वर्णना शक्यते कर्त्तुम् । दृष्टपरिकल्पनाया न्याय्यत्वात् ।

एवं वा—

अरण्ये, कक्षं तृणसङ्घमुपधाय,—अग्निना सन्धुक्ष्य, एषा मेऽष्टकेति ब्रूयात् । तथा च गृह्यान्तरम् । "अग्निना वा कक्षमुपोषेत्"—इति ॥०॥ २१ ॥०॥

## न त्वेव न कुर्व्वीत न त्वेव न कुर्व्वीत ॥ २२ ॥

नैवाष्टकां न कुर्व्वीतेति नञ्द्वयेनावश्यं करणमुपदिशति । न वक्तव्यं तर्हि ? । अवश्यं करणस्य पूर्व्वमेव सिद्धत्वात् । उच्यते । मुख्यकल्पानुकल्पभेदात्तावदत्र पञ्चपक्षाः सूचिताः । शास्त्रान्तरेऽपि यानि पक्षान्तराण्युक्तानि,—"अपि वा अनूचानेभ्य उदकुम्भमाहरेत्"—इत्येवमादीनि, तानि वा कुर्य्यात्, न त्वेव न कुर्व्वीत,—इत्येतदर्थमिदमुच्यते । तुशब्दः स्थालीपाकपक्षेऽप्यष्टक्यस्यावश्यकरणप्रज्ञापनार्थः । इतरथा, पश्वभावेन मांसाभावादस्य लोपः स्यात् । मध्याष्टका संज्ञपितपशुमांसेनाष्टक्यविधानात् । तथा चोक्तम् ।

"ओदनव्यञ्जनार्थन्तु पश्वभावेऽपि पायसम्।
सद्रवं श्रपयेदेतदन्वष्टक्येऽपि कर्म्मणि"।

इति। द्विर्व्वचनमादरार्थं, मध्यमाष्टकाकर्म्मणः परिसमाप्त्यर्थं, वीप्सया सर्व्वास्वेवाष्टकासु यथासम्भवमनुकल्पप्राप्त्यर्थञ्च। इदमिदानीं चिन्त्यते। किमेतेऽष्टकादयः पाकयज्ञाः सकृत् कर्त्तव्याः? उत प्रत्यब्दम्?—इति। तत्र, केचित् सकृदमीषां करणम्—इच्छन्ति। कस्मात्?। एतेषां पुरुषसंस्कारत्वात्, सकृत् कृतेनैव च कर्म्मणा पुरुषसंस्कारस्य वृत्तत्वात्, पुनः करणे हेतोरभावात्,—इति। अन्ये त्वाहुः;—

"तस्मादुत्सृज्य कौन्तेय! गोवृषान् प्रति वत्सरम्"।

इति पौराणिक-लिङ्गदर्शनात् आवृत्तिरेवामीषाम्। न च पुरुषसंस्कारस्य वृत्तत्वात् किमर्थमावृत्तिरिति वाच्यम्। पुरुषसंस्कारस्य वृत्तत्वेऽपि प्रत्यवायपरिहारार्थमावृत्ते र्युक्तत्वात्,—इति। वयन्तु पश्यामः। सकृदवश्यमेव करणं, आवृत्तौ तु नात्यन्तं नियमः। ततश्च, आवृत्तावभ्युदयः, अनावृत्तावपि न प्रत्यवायः। तथा चोक्तम्।

"सकृदप्यष्टकादीनि कुर्य्यात् कर्म्माणि यो द्विजः।
स पंक्तिपावनो भूत्वा लोकान् प्रैति घृतश्चुतः।

इति। अत्र खल्वपिशब्दादावृत्तिरपि अवगम्यते ॥०॥ २१ ॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये चतुर्थप्रपाठकस्य प्रथमा काण्डिका समाप्ता ॥०॥

---

अथातोऽन्वष्टक्यम् ॥ १ ॥

ततस्तस्मादनन्तरोपदिष्टान्मांसाष्टकाकर्मणः, श्वः अनागतेऽह्नि,—नवम्यामित्यर्थः। एवमेके। अष्टकाकर्मदिनात् परदिन एव, न नवम्या नियमः। एवमपरे। अन्वष्टक्यं कर्त्तव्यमिति वाक्यशेषः। अष्टकायाः पश्चाद्भवतीत्यन्वष्टका, तत्र साधु अन्वष्टक्यमिति कर्मणो नामधेयम्। कश्चित् सर्व्वत्रैवान्वष्टक्यं मन्यमानः सूत्रे ततः शब्दस्य वीप्सां कृत्वा व्याचष्टे,—ततस्ततः अन्वष्टक्यम्,—इति। तदसङ्गतम्। मांसाष्टकाकर्मण एवानन्तरत्वात्। वीप्साया अश्रुतत्वाच्च। सर्व्वत्रान्वष्टक्यपक्षस्याचार्य्यसम्मतत्वाभावाच्च। तदिदमधस्तादेवास्माभिरभिहितं,—"तथा गौतमवार्कखण्डी"—इत्यत्र। अथैवं ततः,—इत्यनर्थकम्, अधिकारादेव मांसाष्टकाकर्मणो लाभात्। नियमार्थं तर्हि। किं नियम्यते?। तस्मान्मांसाष्टकाकर्मण एव नान्यस्मादित्येतन्नियम्यते। किमर्थं पुनर्नियम्यते?। अधिकाराशङ्का-निरासार्थमित्याह। कापुनरत्राधिकाराशङ्का?। उच्यते। अन्वष्टक्यम्,—इति समाख्याबलात् सर्व्वास्वेवाष्टकासु अन्वष्टक्यं कदाचिदापातेन प्रतिभायात् कस्यचित्। सेयमधिकाराशङ्का ॥०॥ १ ॥०॥

अपरस्मो वा ॥ २ ॥

अपरस्मः,—एकान्तरिते अहनि वा अन्वष्टक्यम् कर्त्तव्यम्। तिथि-वृद्धि पक्षेऽयं विकल्पः,—इति नवम्यामन्वष्टक्यवादिनः। दिन-वादिनस्त्वाहुः,—अशक्तावयं विकल्पः,—इति ॥०॥ २ ॥०॥

अथेदानीम् अन्वष्टक्यं कर्म्म विवक्षुराह,—

दक्षिणपूर्व्वेऽष्टमदेशे परिवारयन्ति ॥ ३ ॥

वेश्मनो दक्षिणपूर्व्वे अष्टमदेशे उभयदिगष्टमभागे,—आग्नेय्यामि-त्येतत्। परिवारयन्ति, सर्व्वतोभावेनाच्छादयन्ति कटादिभिः किञ्चित् स्थानम्। बहुवचनादनियतः कर्त्ता ॥०॥ ३ ॥०॥

कथं परिवारयन्ति?। उच्यते,—

तथाऽऽयतम् ॥ ४ ॥

तथेति दक्षिणपूर्व्वाष्टमदेशोभण्यते। दक्षिणपूर्व्वाष्टमदेशायतं यथा भवति, तथा परिवारयन्ति। आयतमायामो दैर्घ्यमित्यन-र्थान्तरम् ॥०॥ ४ ॥०॥

तथामुखैः कृत्यम् ॥ ५ ॥

यद्वक्ष्यमाणं कर्म्म, तत् तथामुखैः दक्षिणपूर्व्वाष्टमदेशाभिमुखैः कृत्यं करणीयम्। लाघवार्थमत्रैतत् सूचितम्। अन्यत्र सूत्रणे हि दक्षिणपूर्व्वाष्टमदेशमुखैरिति सूचयितव्यं भवति ॥०॥ ५ ॥०॥

कियत्परिमितं स्थानं परिवारयन्ति?। उच्यते,—

चतुरवरार्द्ध्यान् प्रक्रमान् ॥ ६ ॥

चत्वारोऽवरार्द्ध्याः निकृष्टा येषां, तान् चतुरवरार्द्ध्यान् प्रक्रमान् परिवारयन्ति। तदस्यातिक्रान्ततरेण सूत्रेण संबन्धो बोद्धव्यः। प्रक्रमः श्रवणाकर्म्मण्येव व्याख्यातः। एतदुक्तं भवति। सर्व्वनिकृष्टोऽयं पक्षः;—यच्चतुर्णां प्रक्रमाणां परिवारणम्,—इति। इच्छया पुनरधिकमपि परिवारयन्ति ॥०॥ ६ ॥०॥

तस्य खलु परिवृतस्य,—

पश्चादुपसञ्चारः ॥ ७ ॥

पश्चात् पश्चिमदिशि उपसञ्चारः कर्त्तव्यः। उपसञ्चरत्यनेनेत्युपसञ्चारो द्वारमुच्यते ॥०॥ ७ ॥०॥

उत्तरार्द्धे परिवृतस्य लक्षणं कृत्वाऽग्निं प्रणयन्ति ॥ ८ ॥

परिवृतस्य स्थानस्योत्तरार्द्धे पूर्व्वोक्तं लक्षणसंज्ञकं कर्म्म कृत्वा अग्निं प्रणयन्ति। बहुवचनात् कर्त्तुरनियमः। एवञ्चात्र यावदुक्तस्यादूह्यासनादीनां निवृत्तिरवगम्यते। तथाच गृह्यासंग्रहः।

"एकाग्नौ पितृयज्ञे च ब्रह्माणं नोपकल्पयेत्।
सायं प्रातश्च होमेषु तथैव बलिकर्म्मसु"।

इति। इदमिदानीं सन्दिह्यते। किमेतदग्निप्रणयनं उपवीतिना प्राङ्मुखेन करणीयम्, उत प्राचीनावीतिना दक्षिणपूर्व्वाष्टमदिङ्मुखेन?—इति। उपवीतिना प्राङ्मुखेन,—इति ब्रूमः। कस्मात्?।

"लक्षणावृदेषा सर्व्वत्र"—इति सर्व्वत्रग्रहणेन व्याप्त्यवगमात्। इह च, लक्षणं कृत्वा,—इति वचनस्यैवमर्थत्वात्। अन्यथा खल्वग्निप्रणयने लक्षणं प्राप्तमेवेति पुनर्व्वचनमनर्थकमेव स्यात्। तस्मात्, लक्षणे रेखानां प्राग्गतत्वानुरोधात् तत्र प्राङ्मुखकरणावधारणाच्च, अत्रापि प्राङ्मुख एव कुर्य्यादित्यवगच्छामः। एवञ्च, यथा अन्यत्रलक्षणमुपवीतिना क्रियते, तथा अत्राप्यस्मिन् कर्म्मण्युपवीतिनैव भवितव्यम्। उपरिष्टात् खल्वाचार्य्यः,—"अत ऊर्द्ध्वं प्राचीनावीतिना"—इति कुर्व्वन्, अधस्तात् किञ्चित् कर्म्म प्राचीनावीतिना, किञ्चिदुपवीतिना, किञ्चिच्चोभयथैव कर्त्तव्यमित्युपदिशति। एतच्चोपरिष्टादेव व्याख्यास्यामः। अतएव कर्म्मप्रदीपः।

"दक्षिणं पातयेज्जानु देवान् परिचरन् सदा।
पातयेदितरज्जानु पितॄन् परिचरन्नपि"।

इति स्मरति। तदिदं वचनम्,—पितृकर्म्मान्तःपात्यपि देवपरिचरणं दक्षिणजानुपातेन एवं देवकर्म्मान्तर्गतमपि पितृपरिचरणं इतरजानुपातेन करणीयम्,—इत्याह। कथं ज्ञायते?। सदा शब्दस्यैवमर्थत्वात्। एवञ्च, उपवीतित्वादावपि तथैव वर्णयितुमुचितम्। कस्मात्?। कारणस्याविशेषात्। अग्निं किल देवमाचक्षते नैरुक्ताः ॥०॥ ८ ॥०॥

**पश्चादग्नेरुलूखलं दृंहयित्वा सकृत् संगृहीतं व्रीहिमुष्टिमवहन्ति सव्योत्तराभ्यां पाणिभ्याम् ॥ ९ ॥**

उत्तरशब्द उपरितनवचनः। सव्यः पाणिरुत्तरो दक्षिणश्चाधरो

ययोः पाण्योः, ताविमौ सव्योत्तरौ, ताभ्यां सव्योत्तराभ्यां पाणिभ्यां मुषलेनावहन्ति। उक्तार्थमन्यत्। सकृत् संगृहीतमिति वचनात् अनुनिर्व्वापयोरत्र निवृत्तिमिच्छन्ति। व्रीहिग्रहणं हविरन्तरप्रतिषेधार्थम्। यद्यप्यत्र सकृत्संगृहीतस्य मुष्टिमात्रस्य ग्रहणम् अवगम्यते, तथापि तथा गृह्णीयात् यथा होमस्य पिण्डानाञ्चाभिनिर्वृत्तिः स्यात्। कुतः?। ऐदमर्थ्याद्ग्रहणस्य। अतएवाचार्य्यपुत्रेण,—

"चतुर्मुष्टिश्चरुः कार्य्यश्चतुर्णामुत्तरोऽपि वा"।

इति सामान्यत एवोपदिष्टम्। तदिदं हविर्निर्व्वपनादिकं प्राचीनावीती दक्षिणपूर्व्वाष्टमदिङ्मुखः कुर्य्यात्। कुतः?। पित्र्यत्वात्। कस्मात् पुनः कारणात् सत्यपि देवतानां साधारण्ये पित्र्यत्वमेव हविषः कथ्यते?। प्राधान्यादित्याह। पितॄणां खल्वत्र कर्म्मणि प्राधान्यमवगम्यते। तस्मात् पित्र्यमिदं भवितुमर्हति। प्रधानवशाद्धि नियमो वर्णयितुमुचितः। कुतः पुनरत्र पितॄणामेव प्राधान्यमवगम्यते न देवतानामपि?। तथा मुखैः क्षत्यमिति वचनात्—इति ब्रूमः। अपिच। हविषः सकृद्ग्रहणात्, सव्योत्तराभ्यां पाणिभ्यामवहननात्, सकृत् फलीकरणात्, यथा मांसाभिघाराः पिण्डा भवन्ति तथा मांसच्छेदनात्, प्रसव्यमुदायवनात्, दक्षिणस्यामुद्वासनात्,—इत्येवमादिभिरुपदेशशतैः पितॄणामेवात्र प्राधान्यमवगम्यते। मनुरपि स्मरति।

"देवकार्य्यात् द्विजातीनां पितृकार्य्यं विशिष्यते।
दैवं हि पितृकार्य्याणां पूर्व्वमाप्यायनं स्मृतम्"।

इति। तस्मात् पितॄणामेव प्राधान्यम्। एतच्चोपरिष्टात्तत्र तत्र स्फुटीभविष्यति।

इदमिदानीं सन्दिह्यते। किमत्र पित्र्यत्वात् पितृभ्यस्त्वा जुष्टं निर्व्वपामि,—इति मन्त्रेण निर्व्वपणम्, आहोस्वित् यावदुक्तत्वाद-मन्त्रकम्, उताहो आचार्य्यपुत्रपरिभाषाबलात् व्याहृतित्रित-येन?—इति। पितृभ्य स्त्वा जुष्टं निर्व्वपामि,—इति मन्त्रेण,—इति ब्रूमः। कस्मात्?। प्रकृतौ तथा दर्शनात्। लिङ्गाच्च। अग्नौकरण-होम-विचारश्लोकें खल्वेतस्यार्थस्य लिङ्गमुपलभ्यते। तथाच कर्म्म-प्रदीपः।

"अपसव्येन वा कार्य्यो दक्षिणाभिमुखेन तु।

निरुप्य हविरन्यस्मा अन्यस्मै नहि हूयते"।

इति। एतस्मात् लिङ्गात् मन्त्रवद्ग्रहणमवगम्यते। पित्रर्थं निर्व्वापः खल्वस्य हविषः हेतुतयोपन्यस्यते। तच्चैवं सति आम्ना-योनोपपद्यते। तथाच पुराणस्मरणम्।

"अग्निमान् निर्व्वपेत् पित्र्यं चरुं वा शस्यमुष्टिभिः।

पितृभ्यो निर्व्वपामीति सव्यं दक्षिणतोन्यसेत्"।

इति॥०॥ ९ ॥०॥

## यदा वितुषाः स्युः॥ १० ॥

यदा यस्मिन् काले वितुषाः विगततुषाः स्युर्भवेयुः ॥०॥ १० ॥०॥

तदा,—

**सकृदेव सुफलीकृतान् कुर्व्वीत ॥ ११ ॥**

सकृदेवावारमेव, सुफलीकृतान्—सुशब्दः शोभनवचनः, शोभनं यथा भवति तथा फलीकृतान् निष्पन्नीकृतान् तण्डुलान् कुर्व्वीत पूर्व्वमेव खल्ववघातेन तण्डुला निष्पन्नाः। इदानीन्तु शोभनं निष्पन्नीकरणमुपदिश्यते। तेन प्रच्छट्टनमिदानीं कुर्व्वीत ॥०॥ ११ ॥०॥

**अथामुष्माच्च सक्थ्नो माᳲसपेशीमवकृत्य नवायाᳲ सूनायामणुशश्छेदयेत् ॥ १२ ॥**

अथ शब्द आनन्तर्य्यार्थः। अथ, तण्डुलप्रक्षालनानन्तरम्। प्रक्षालनञ्च सकृदेव स्यात् हविषः पित्र्यत्वात्। व्यवहितस्यापि बुद्धा सन्निकृष्य अमुष्मादित्यनेन परामर्शः। अथ शब्दः पूर्व्वप्रकृतार्थोवा। अमुष्मात् पूर्व्वप्रकृतात् मांसाष्टकायां निहितात् सक्थ्नः, चशब्दात् क्लोम्नश्च, मांसपेशीं,—मांसपेशी प्रसिद्धा, तां अवकृत्य अवच्छिद्य, नवायां सूनायां,—सूना नाम काष्ठमयः पात्रविशेषः, तस्यां सूनायां अणुशः सूक्ष्मं सूक्ष्मं कृत्वा छेदयेत् ॥०॥ १२ ॥०॥ कथं छेदयेत्?। उच्यते,—

**यथा माᳲसाभिघाराः पिण्डा भविष्यन्तीति ॥ १३ ॥**

यथा येन प्रकारेण मांसाभिघाराः मांसव्यञ्जनाः पिण्डा भविष्यन्ति, इति तथा छेदयेत् ॥०॥ १३ ॥०॥

तस्मिन्नेवाग्नौ श्रपयत्योदनचरुञ्च माꣳसचरुञ्च पृथङ्मेक्षणाभ्यां प्रसव्यमुदायुवन् ॥ १४ ॥

प्रसव्यं अप्रदक्षिणम्। कृतभाष्यमन्यत्। अत्रापि, मांसाभावे पायसः स्यात्। तदिदमुक्तमस्माभिरधस्तादेव, "ओदनव्यञ्जनार्थन्तु"—इत्यादिना ॥०॥ १४ ॥०॥

शृतावभिघार्य्य दक्षिणोद्वास्य न प्रत्यभिघारयेत् ॥ १५ ॥

दक्षिणा दक्षिणस्याम्। गतमन्यत् ॥०॥ १५ ॥०॥

दक्षिणार्द्धे परिवृतस्य तिस्रः कर्षूः खानयेत् पूर्व्वोपक्रमाः ॥ १६ ॥

परिवृतस्य स्थानस्य दक्षिणार्द्धे दक्षिणांशे, तिस्रः त्रिसंख्याका कर्षूः केनचित् खानयेत्। अन्यस्य पुनरसम्भवे स्वयमपि खनेत्। कर्षूर्नाम अवटो गर्त्त इत्यनर्थान्तरम्। कथम्भूताः?। पूर्व्वोपक्रमाः। पूर्व्वस्यां दिश्युपक्रमो यासां ताः, तथाविधाः,—इत्यर्थः। तथाच, पूर्व्वस्यां दिश्युपक्रम्य पश्चिमायां दिशि खननं समापनीयम्। पित्र्यत्वात् प्रसव्यखननमित्यभिप्रायः। अथवा। उपक्रम्यते,—इत्युपक्रमः। पूर्व्वाकर्षूरुपक्रमो यासां कर्षूणां, ताः तथोक्ताः। तथाभूताः खानयेत्। का पुनः पूर्व्वा?। या खल्वात्मनः पुरतः क्रियते। एतदुक्तं भवति। प्रथमतः पूर्व्वां कर्षूं खानयेत् ततो मध्यमां, तत उत्तमाम्,—इति। तथा चोक्तम्।

"पुरतो याऽऽत्मनः कर्षूः सा पूर्व्वा परिकीर्त्त्यते।
मध्यमा दक्षिणेनास्यास्तद्दक्षिणत उत्तमा"।

इति। तथाच, इमाः कर्ष्वो दक्षिणसंस्था भवन्ति। खननञ्चासूषां शङ्कुना करणीयम्। स च,—

"शङ्कुश्च खादिरः प्रोक्तो रजतेन विभूषितः।
शङ्कु स्चैवोपवेशस्य द्वादशाङ्गुल इष्यते"।

इति कर्म्मप्रदीपोक्तलक्षणः ॥०॥ १६ ॥०॥

कीदृशीः कर्षूः खानयेत्? । उच्यते,—

**प्रादेशायामाश्चतुरङ्गुलपृथ्वीस्तथाऽवखाताः ॥ १७ ॥**

प्रादेशायामाः प्रादेशदीर्घाः। पृथुशब्दो धर्म्मवचनः। चतुरङ्गुलं पृथु यासां, ताः चतुरङ्गुलपृथ्वीः। पृथु पृथुत्वं परिणाहः,— इत्येतत्। तथा चतुरङ्गुलं अवखातं यासां, ताः तथाऽवखाताः। विशेषमाह कर्म्मप्रदीपः।

"वाय्वग्निदिङ्मुखान्तास्ताः कार्य्याः सार्द्धाङ्गुलान्तराः।
तीक्ष्णाग्रा यवमध्याश्च मध्ये नावद्दवीतकिरेत्"।

इति ॥०॥ १७ ॥०॥

**पूर्व्वस्याः कर्षाः पुरस्ताल्लक्षणं कृत्वाऽग्निं प्रणयन्ति ॥ १८ ॥**

स्फुटमक्षरार्थः। अत्रापि, लक्षणग्रहणस्य पूर्व्वोक्तमेव प्रयोजनं बोद्धव्यम्। बहुवचनात् कर्त्तुरनियमः ॥०॥ १८ ॥०॥

कश्चिदत्र विशेषमाह,—

## अपरेण कर्षूः पर्य्याहृत्य लक्षणे निदध्यात् ॥ १९ ॥

अपरया अदूरवर्त्तिन्या दिशा,—इत्यर्थे एणप् प्रत्ययान्तोऽयमपरेणशब्दः। तद्योगात् कर्षूरिति द्वितीया। तथाच, अयमर्थः। कर्षूणामदूरवर्त्तिन्या पश्चिमया दिशा, अग्निं पर्य्याहृत्य सर्व्वतोभावेनाहृत्य लक्षणे निदध्यात् ॥०॥ १९ ॥०॥

## सकृदाच्छिन्नं दर्भमुष्टिꣳस्तृणोति ॥ २० ॥

आच्छिन्नं आ सम्यक्,—उपमूले च्छिन्नं दर्भमुष्टिं, सकृदेकवारं स्तृणोति,—"पश्चाद्वाऽऽस्तीर्य्य"—इत्युक्तया रीत्या; प्रकृतस्याग्नेस्तुर्हिंसु। अत्र, आच्छिन्नमिति वचनस्यार्थवत्त्वादुपमूललूनत्वावगमात् तस्य च पित्रर्थत्वात् प्राचीनावीतिनैतत् कर्त्तव्यम्,—इत्यवगम्यते ॥०॥ २० ॥०॥

## कर्षूश्च ॥ २१ ॥

स्तृणोति,—इत्यनुवर्त्तते ॥०॥ २१ ॥०॥

किमनियमेन? । न । कथन्तर्हि?—

## पूर्व्वोपक्रमाः ॥ २२ ॥

व्याख्यातोऽक्षरार्थः। अत्र किञ्चिद्वक्तव्यमस्ति। कर्षूणां स्तरणं खल्विदं दक्षिणपूर्व्वाष्टमदिगग्रैः कुशैः दक्षिणान्तादारभ्यकरणीयम्। तदाह कर्म्मप्रदीपः।

"अन्याग्रायैः कुशैः कार्य्यं कर्षूणां स्तरणं घनैः।
दक्षिणान्तादग्रैस्तु पितृयज्ञे परिस्तरेत्"।

इति। इदमिदानीं सन्दिह्यते। किमभितः कर्षूणां स्तरणं कर्त्तव्यम्? आहोस्विन्मध्यतः?—इति। अग्निवदभितः,—इति ब्रूमः। कुतः?। अग्निस्तरणसमभिव्याहारेणोपदेशात्तथावगतेः। अग्नेः खल्वभित एव स्तरणमिति तावन्निर्विवादम्। तत् सामान्यात् कर्षूणामपि तथैव स्तरणमित्ययमर्थोऽस्माकमागच्छति हृदयम्। आगच्छति चेत्, न युज्यते विनाकारण मुत्स्रष्टुम्। लेखाकरणोपपत्तेश्च। कर्षूणां मध्यतः किल लेखाकरणं व्याख्यास्यामः। तदुपपत्तये च अभितः कर्षूणां स्तरणमिति प्रति पद्यामहे। न खलु कुशैः स्तृतानां कर्षूणां मध्यतो लेखा कर्त्तुं शक्यते। अपरे पुनरेतदविद्वांसो भाषन्ते,—स्तरणमिदं कर्षूणां मध्यतः करणीयम्,—इति ॥०॥ २२ ॥०॥

पश्चात् कर्षूणाᳬ स्वस्तरमास्तारयेत् ॥ २३ ॥

व्याख्यातप्रायमेतत् ॥०॥ २३ ॥०॥

केन?—

दक्षिणाग्रैः कुशैः ॥ २४ ॥

स्पष्टार्थं सूत्रम् ॥०॥ २४ ॥०॥

कीदृशं स्वस्तरमास्तारयेत्?—

दक्षिणाप्रवणम् ॥ २५ ॥

इदमपि व्याख्यातप्रायमेव ॥०॥ २५ ॥०॥

## वृषीञ्चोपदध्यात् ॥ २६ ॥

वृषी नाम काष्ठमयो द्वादशाङ्गुलपरिमित आसनविशेषः, उपवेश-स्थाख्यायते। ताञ्च उपदध्यात् स्थापयेत्। चशब्दः स्वस्तरेण सम्बन्धकरणार्थः। तेन, स्वस्तरोपरि वृष्या उपधानम्,—इति केचित्। चशब्दात् उपशब्दाच्च स्वस्तरस्योप समीपे वृषीं दध्यात्। अतएव परतः स्वस्तरोपरि द्रव्याणामासादनं सूचयिष्यते। अस्या अपि स्वस्तरोपर्य्येवासादने इदमपि तत्रैवासूचयिष्यत्, अत्रैव वा स्पष्टार्थं 'तत्र' ग्रहणमकरिष्यदाचार्य्यः। तदकरणादवगच्छामः,—नास्याः स्वस्तरोपर्य्यासादनम्,—इति। एवमपरे। तदत्र भवन्तो भूमिदेवाः प्रमाणम्। उपदध्यादिति वचनादुपधानमेवास्याः कर्त्तव्यमदृष्टार्थं, न पुनरुपवेशनार्थं तदासादनमिति नारायणो-पाध्यायप्रभृतयः ॥०॥ २६ ॥०॥

## तत्रास्मा आहरन्त्येकैकशः सव्यं बाहुमनु ॥ २७ ॥

तत्र,—इत्यतिक्रान्तस्य स्वस्तरस्य परामर्शो न वृष्याः। कथं ज्ञायते?। "स्वस्तरे सर्व्वमासाद्य"—इति परिशिष्टकारवचनात्। तत्र स्वस्तरे वक्ष्यमाणानि द्रव्याण्येकैकशः आहरन्ति। कथमाह-रन्ति?। अस्मै सव्यं बाहुमनु। अस्मै,—इत्यत्र "षष्ठ्यर्थे चतुर्थी वक्तव्या"—इति वचनात् षष्ठ्यर्थे चतुर्थी। अस्य यजमानस्य सव्यं बाहुं अनु लक्षीकृत्य,—अप्रादक्षिण्येनेत्यर्थः। अथवा। अस्मै,—इति तादर्थ्ये चतुर्थी। अस्मै यजमानाय, अन्ये शिष्यादय आह-

रन्ति । समान मन्यत् । अन्यस्य पुनरसम्भवे स्वयमेवाहरेत् ॥०॥ २७ ॥०॥

कानि पुनस्तानि द्रव्याणि? । उच्यते,—

## चरुस्थाल्यौ मेक्षणे कंसं दर्व्वीमुदकमिति ॥ २८ ॥

ओदनचरुमांसचरुसहिते पूर्व्वोक्ते चरुस्थाल्यौ आहरन्ति । एवमुत्तरत्रापि । इतिकार-करणात् अन्येषामप्युल्लेखन पिञ्जली यव तिल पुष्पप्रभृतीनां येषामुपरिष्टाद्विनियोगः सूचयिष्यते, तानि-चाहाद्यन्ति ॥०॥ २८ ॥०॥

## पत्नी बर्हिषि शिलां निधाय स्थगरं पिनष्टि ॥ २९ ॥

स्थगरं चन्दनादिगन्धद्रव्यम् । तथा चोक्तम् ।

"स्थगरं सुरभि ज्ञेयं चन्दनादि विलेपनम्" ।

इति । स्पष्ट मन्यत् ॥०॥ २९ ॥०॥

## तस्याञ्चैवाञ्जनं निघृष्य तिस्रो दर्भपिञ्जली रञ्जयति सव्यन्तराः ॥ ३० ॥

तस्यामेव शिलायाम्,—एव शब्दाद्बर्हिषि निहितायां, चशब्दात् प्रकृता पत्नी, अञ्जनं निघृष्य विशेषेण घर्षयित्वा । निघर्षणोपदेशात् अञ्जनपदेन सौवीराञ्जनमभिप्रेतमित्यवगच्छामः । कुतः? । इतरस्य घर्षणानुपपत्तेः । तथा चोक्तम् ।

"सौवीराञ्जनमित्युक्तं पिञ्जलीनां यदञ्जनम्" ।

इति। तेनैवाञ्जनेन तिस्रः त्रिसंख्याकाः, दर्भपिञ्जलीः पूर्व्वोक्त-लक्षणाः, अञ्जयति म्रक्षयति पत्नी। किं यथेच्छम्?। न। कथन्तर्हि?। सव्यन्तराः। विशेषेणान्तरमवकाशोव्यन्तरं तत् सहिताः सव्यन्तराः। श्वावि च्छलाकावदिति यावत्। अथवा। सव्यशब्दो नानावचनः। तेन, नानाऽन्तराः,—इति पूर्व्वोक्त एवार्थः ॥०॥ ३० ॥०॥

तैलञ्चोपकल्पयेत् ॥ ३१ ॥

चशब्दात् स्रस्तर एव। तदस्यातिक्रान्तेन स्रस्तरेण सम्बन्धो बोद्धव्यः ॥०॥ ३१ ॥०॥

क्षौमदशाञ्च ॥ ३२ ॥

अतसीसूत्रदशाञ्च स्रस्तर एवोपकल्पयेत् ॥०॥ ३२ ॥०॥

शुचौ देशे ब्राह्मणाननिन्द्यानयुग्मानुदङ्मुखानुपवेश्य ॥ ३३ ॥

शुचौ पवित्रे, देशे—गोमयेनोपलेपिते। कथं ज्ञायते?।

"शुचिं देशं विविक्तञ्च गोमयेनोपलेपयेत्"।

इति मनु स्मरणात्। ब्राह्मणान् ब्राह्मणग्रहणात् क्षत्रियादिप्रति-षेधः। अनिन्द्यान्,—निन्द्याः निन्दार्हाः, ते न भवन्तीत्यनिन्द्याः, तान् अनिन्द्यान्। अयुग्मान् विषम संख्याकान्,—बहुवचनात् त्रिप्रभृतीन्, उदङ्मुखान् उपवेश्य। उपवेशनञ्चामीषां कर्षूणां दक्षिणतः स्यात्। एवं खल्वयतो ब्राह्मणानां कर्षुपिण्डा भवन्ति।

इदमिदानीं सन्दिह्यते। किमत्र वैश्वदेवार्थं ब्राह्मणमुपवेशयेत्, उत यावदुक्तत्वान्न?—इति। तत्र, अविधानादिह वैश्वदेवस्यैवाभावः,—इति केचित्। तदसङ्गतम्। कस्मात्?। वैश्वदेवपूर्व्वस्यैव श्राद्धस्य शास्त्रान्तरे विधानात्। तथाच मनुः।

"तेषामारक्षभूतन्तु दैवं पूर्व्वं नियोजयेत्।

रक्षांसि हि विलुम्पन्ति श्राद्धमारक्षवर्ज्जितम्"।

इति। "स्नातान् शुचीनाचान्तान् प्राङ्मुखानुपवेश्य दैवे युग्मानयुग्मान् यथाशक्ति पित्र्ये"—इति, "दैवपूर्व्वं श्राद्धं कुर्वीत"—इति चास्मदीये श्राद्धकल्पे। तस्मात्,—वैश्वदेवार्थं युग्मान् ब्राह्मणान् प्राङ्मुखानुपवेश्य ततः पितृब्राह्मणानुपवेशयेत्,—इति सिद्धान्तः। तथाच कर्म्मप्रदीपः।

"स्वस्तरे सर्व्वमासाद्य यथावदुपयुज्यते।

दैवपूर्व्वन्ततः श्राद्धमत्वरः शुचिरारभेत्"।

इति। किमर्थं तर्हि वैश्वदेवस्यासूत्रणम्?। उच्यते। प्रधानस्य पितृयज्ञस्य सूत्रणे तदङ्गं वैश्वदेवमसूचितमपि प्राप्यत एवेति मन्यमानः खल्वाचार्य्यो नात्र वैश्वदेवं सूत्रयाञ्चकारेति लक्ष्यते। अथवा। अनिन्द्यानित्यनेन ब्राह्मणपरीक्षां सूचयन् दैवस्याक्षासूत्रयन् दैवे ब्राह्मणपरीक्षायामसम्मतिं दर्शयति। तथाच मनुः।

"ब्राह्मणं न परीक्षेत दैवे कर्म्मणि धर्म्मवित्।

पित्र्ये तु कर्म्मणि प्राप्ते परीक्षेत प्रयत्नतः"।

इति ॥०॥ ३३ ॥०॥

## दर्भान् प्रदाय ॥ ३४ ॥

दर्भानासनेषु दत्त्वा। तथा चास्मदीये श्राद्धकल्प-सूत्रम्। "आसनेषु दर्भानास्तीर्य्य"—इति। आदिशब्दोऽत्रलुप्तवत् द्रष्टव्यः। तेन दर्भादीनर्घ्यपर्य्यन्तान् प्रदाय—अर्घ्यपर्य्यन्तं कर्म्म कृत्वा,—इत्येतत्। तथाच कर्म्मप्रदीपः।

"आसनाद्यर्घ्यपर्य्यन्तं वशिष्ठेन यथोदितम्।
कृत्वा कर्म्माथ पात्रेषु उक्तं दद्यात्तिलोदकम्"।

इति ॥०॥ ३४ ॥०॥

**उदकपूर्व्वन्तिलोदकं ददाति पितुर्नाम गृहीत्वाऽसावेतत्ते तिलोदकं येचात्र त्वा मनु यांश्च त्व मनु तस्मै ते स्वधेति ॥ ३५ ॥**

उदकं पूर्व्वं यस्य तदुदकपूर्व्वं तिलोदकं तिलमिश्रमुदकं ददाति। एतदुक्तं भवति। प्रथमं केवलमुदकं दत्त्वा ततस्तिलमिश्रमुदकं ददाति—इति। केन मन्त्रेण ददाति?। असावेतत्ते तिलोदकमित्यनेन मन्त्रेण। किं कृत्वा?। असौ—इत्येतस्मिन् स्थाने सम्बोधनविभक्त्या पितुर्नाम गृहीत्वा उच्चार्य्य। "नामग्रहनवचनमेकदेशोत्कीर्त्तनाभिप्रायम्। तेन गोत्रादेरप्युल्लेखः"—इति वदन्ति। तथा चास्मदीयं स्नानसूत्रपरिशिष्टम्।

"गोत्रं स्वरान्तं सर्व्वत्र गोत्रस्याक्षय्यकर्म्मणि।
गोत्रस्तु तर्पणे प्रोक्तः कर्त्ता एवं न मुह्यति।
सर्व्वत्रैव पितः प्रोक्तं पिता तर्पणकर्म्मणि।
पितुरक्षय्यकाले तु कर्त्ता एवं न मुह्यति।

अर्म्मार्थ्यादिके कार्य्ये अर्म्मा तर्पणकर्म्मणि ।
अर्म्मणोऽक्षय्यकाले तु कर्त्ता एवं न मुह्यति" ।

इति । इदञ्च तिलोदकदानं पात्रेष्वेव कर्त्तव्यं न ब्राह्मणहस्तेषु । कस्मात् ? । "पात्रेषु उक्तं दद्यात्तिलोदकम्"—इति वचनात् । तिलोदकदानपात्रञ्च—

"आसुरेण तु पात्रेण यस्तु दद्यात्तिलोदकम् ।
पितरस्तस्य नाश्नन्ति दशवर्षाणि पञ्च च ।
कुलालचक्रनिष्पन्न मासुरं मृण्मयं स्मृतम् ।
तदेव हस्तघटितं स्थाल्यादि दैविकं स्मृतम्" ।

इत्युक्तलक्षणं बोद्धव्यम् । आह । किमानन्तर्य्यात् तिलोदकमेव मन्त्रेण ददाति, उत केवलोदकमपि ?—इति । तिलोदकमेव,—इति ब्रूमः । कस्मात् ? । आनन्तर्य्यादेव । तथाच कर्म्मप्रदीपः ।

"तूष्णीं पृथगपो दद्या मन्त्रेण तु तिलोदकम्" ।

इति ॥०॥ ३५ ॥०॥

## अप उपस्पृश्यैवमेवेतरयोः ॥ ३६ ॥

अप उदकं, उपस्पृश्य स्पृष्ट्वा, एवमेव तूष्णीमुदकदानपूर्व्वकं मन्त्रेण तिलोदकदानं, इतरयोः पितामहप्रपितामहयोः, नाम गृहीत्वा कर्त्तव्यम् । तिलोदकदानाच्च परतो गन्धोदकमपि मन्त्रेण पात्रेष्वेव दद्यात् । तथा चोक्तम् ।

"तूष्णीं पृथगपो दद्यान्मन्त्रेण तु तिलोदकम् ।
गन्धोदकञ्च दातव्यं सन्निकर्षक्रमेण तु" ।

इति। अत्र च, 'गन्धोदकञ्च'—इति चकारं कुर्व्वन् गन्धोदकस्यापि, तिलोदकवत् मन्त्रेण पात्रेषु दानं बोधयति। "अस्मिन्नवसरे तिलगन्धोदकैः पात्राणां पूरणं कर्त्तव्यम्। उपयोग स्तववनेजनार्थतया पश्चात् सूचयिष्यति"—इति नारायणोपाध्यायाः ॥०॥ ३६ ॥०॥

## तथा गन्धान् ॥ ३७ ॥

तथा तेनैव प्रकारेण—नामग्रहणपूर्व्वकं मन्त्रोच्चारणेनेत्यर्थः। गन्धान्—बहुवचनात् गन्धादीन्, ददाति। दानञ्चामीषां ब्राह्मण हस्तेष्वेव न पात्रेषु। कस्मात्?। "गन्ध पुष्प धूप दीपाच्छादनानां प्रदानम्"—इत्यस्मात् श्राद्धकल्पसूत्रात्।

"गन्धान् ब्राह्मणसात् कृत्वा पुष्पाण्यृतुभवानि च।
धूपञ्चैवानुपूर्व्वेण अग्नौ कुर्य्यादतः परम्"।

इति च कर्म्मप्रदीपवचनात् ॥०॥ ३७ ॥०॥

## अग्नौ करिष्यामीत्यामन्त्रणं होष्यतः ॥ ३८ ॥

होष्यतः होमं करिष्यतो यजमानस्य 'अग्नौ करिष्यामि'—इत्यामन्त्रणं कर्त्तव्यम्। ननु, आमन्त्रणं करोति,—इति वक्तव्ये किमर्थं होष्यतः,—इति विभक्त्यतिक्रमः क्रियते?। उच्यते। आमन्त्रणं करोति,—इत्युक्ते गन्धादिप्रदानादनन्तरमेव आमन्त्रणं स्यात्। होष्यतः,—इति तु कुर्व्वन् होमं करिष्यत एव आमन्त्रणं न गन्धादिप्रदानात् परत एव,—इत्युपदिशति। तेन,

मध्ये अन्यदपि किञ्चित् कर्म्म अस्ति,—इत्यवगच्छामः। किं तत्?। भूमिशोधनमण्डलकरणादि। तदिदमर्थं शेषतः,—इति विभक्तिक्रमः क्रियते। एवमेके। 'अग्नौ कुर्यादतः परम्'—इति वचना नाचास्मिन्नवसरे भूमिशोधनादि। एवमपरे। तदत्र भवन्तो भूमिदेवाः प्रमाणम्।

तदिदमामन्त्रणं सर्व्वेषां ब्राह्मणानां सकृदेव स्यात्, प्रधानस्यैकस्यैव वा। कस्मात्?। 'सर्व्वत्र प्रश्नेषु पङ्क्तिमूर्द्धन्यं पृच्छति सर्व्वान् वा"—इति ग्रन्थान्तरात् ॥०॥ ३८ ॥०॥

तैश्च ब्राह्मणैः,—

कुर्व्वित्युक्ते कंसे चरू समवदाय मेक्षणेनोपघातं जुहुयात्—स्वाहा सोमाय पितृमत इति पूर्व्वां स्वाहाऽग्नये कव्यवाहनाय इत्युत्तराम् ॥ ३९ ॥

ऋजुरक्षरार्थः। अत्र किञ्चिद्वक्तव्यमस्ति। यथानिर्द्देशमेवैष होमः कर्त्तव्यः, न पुनर्मन्त्रान्ते स्वाहाकारः प्रयोक्तव्यः। परन्तु, स्वाहाकारेण हुत्वा पश्चात् सोमाय पितृमते,—इत्यादि मन्त्रशेषः समापनीयः। ॐकारश्च प्रत्येकं मन्त्रादौ न करणीयः। तथाच कर्म्मप्रदीपः।

"स्वाहां कुर्य्यां नचात्रान्ते नचैव जुहुयाद्धविः।
स्वाहाकारेण हुत्वाऽग्नौ पश्चान्मन्त्रं समापयेत्"।

इति।

"नोत्कुर्य्याद्धोममन्त्राणां पृथगादिषु कुत्रचित्।
अन्येषाञ्च विकृष्टानां कालेनाचमनादिना"।

इति च। अत्राह। निर्द्देशसामर्थ्यादेव पूर्व्वापरत्वे सिद्धे, पूर्व्वाम्—इति, उत्तराम्—इति च, वचनमनर्थकम्। अथोच्यते, कारणं वक्तव्यम्। उच्यते। "अग्नये च सोमाय च जुहोति"—इत्यध्वर्य्युशाखादिषु देवताविपर्य्यासः श्रूयते, तन्निरासार्थमाचार्य्यः "पूर्व्वाम्" "उत्तराम्"—इत्याह।

इदमिदानीं सन्दिह्यते। किमयमग्नौकरणहोमः प्राचीनावीतिनैव कर्त्तव्यः, आहोस्विदुपवीतिना, उताहो अनियमेन?—इति। अनियमेन,—इत्याह। कस्मात्?। इतः परं प्राचीनावीतिना कृत्योपदेशात्। इतः परं खल्वाचार्य्यः प्राचीनावीतिना कृत्यमुपदिशन् अत्राग्नौकरणहोमे प्राचीनावीतित्वोपवीतित्वयोरनियमं दर्शयति। तथाच कर्म्मप्रदीपः।

"अग्नौकरणहोमश्च कर्त्तव्य उपवीतिना।
प्राङ्मुखेनैव देवेभ्यो जुहोतीति श्रुतिश्रुतेः।
अपसव्येन वा कार्य्यो दक्षिणाभिमुखेन च।
निरूप्य हविरन्यस्मा अन्यस्मै न हि हूयते"।

इति। तथाच श्रूयते। "अग्नौकरणहोमे प्राचीनावीती भूत्वा"—इत्यादि। "स उदास्याग्नौ द्वे आहुती जुहोति देवेभ्यः"—इति च माध्यन्दिनीये ब्राह्मणे।

"अग्निमान् निर्व्वपेत् पूर्व्वं चरुं वा यक्षमुष्टिभिः।
पितृभ्यो निर्व्वपामीति सर्व्वं दक्षिणतो न्यसेत्"।

इति च मात्स्ये पुराणे। न खल्वस्मच्छाखायां अत्र विशेषः श्रूयते। तस्मादुभयस्वरसाद्विकल्पः,—इति परिशिष्टकृतः कात्यायनस्याभिप्रायः। हेतुवन्निगदस्तु न मुख्यार्थः किन्तु स्तुतिपर एव,—इति प्रमाणलक्षणे दर्शितम्। तस्मात्,—ऊर्द्धं प्राचीनावीतित्वोपदेशात् अग्नौकरणहोमे प्राचीनावीतित्वोपवीतित्वयोरनियमः सूत्रकारस्याभिप्रायोऽस्पष्टः परिशिष्टकृता स्पष्टीकृतः,—इति भट्टनारायण शूलपाणि रघुनन्दनादिमतमादरणीयम्।

यच्च केनचिद् वर्णितम्,—"येषान्तिस्र आहुतयो हूयन्ते, येषां चाग्निः पूर्व्वमिज्यते, स्वधाकारान्ताश्च मन्त्राः, तद्विषयं प्राचीनावीतित्वम्। येषान्तु द्वे आहुती, सोमश्च पूर्व्वं हूयते, स्वाहाकारान्ताश्च मन्त्राः, तेषामुपवीतित्वम्। 'अथोपवीती सोमं पितृमन्तमग्निं कव्यवाहनञ्च यजेत, प्राचीनावीती चेत् अग्निं पूर्व्वं, स्वाहास्थाने स्वधापदञ्च दत्त्वा जुहोति'—इति सूत्रान्तरात्"—इति। तदसङ्गतम्। अस्मद्गृह्ये सोमपूर्व्वाहुतिद्वयस्यैव सूचणात्। अस्मत् परिशिष्टकारेणैव द्वयोरेव पक्षयोः स्वरसितत्वाच्च। अपिच। अग्न्याद्याहुतित्रयपक्ष एवोपवीतित्वं दृश्यते। तथाच मत्स्य पुराणे,—

"अग्नेः सोमयमाभ्याञ्च कुर्य्यादाप्यायनं बुधः"।

इत्यभिधाय,—

"यज्ञोपवीती निर्व्वर्त्य ततः पर्य्युक्षणादिकम्।
प्राचीनावीतिना कार्य्यमतः सर्व्वं विजानता"।

इत्युक्तम्। आदिपदाद्धोम उक्तः,—इति वीरमित्र मिश्राः।

तथा तैत्तिरीयशाखायामापस्तम्बसूत्रम्। "अथ पुनरुपवीती दक्षिणजान्वाङ्गाच्य मेक्षणेनोपस्तीर्य्य तेनावदायाभिघार्य्य सोमाय पितृमते स्वधानम इति दक्षिणाग्नौ जुहोति, यमायाङ्गिरस्वते स्वधानम इति द्वितीयाम्, अग्नये कव्यवाहनाय स्वधानम इति तृतीयाम्"—इति। तथा सांख्यायनसूत्रम्। "दक्षिण जान्वाङ्गाच्य यज्ञोपवीती प्रागासीनो मेक्षणेन जुहोति अग्नये कव्यवाहनाय"—इत्यादि। तस्मात्, सूत्रान्तराणि तत्तच्छाखिनामेव प्राचीनावीतित्वादिकमुपदिशन्ति नास्माकम्। यदपि शौनकवचनम्,—

"स्वाहाकारेण होमे तु भवेद्यज्ञोपवीतवान्।
तत्र प्रागग्नये हुत्वा पश्चात् सोमाय हूयते"।

इति। तदपि बह्वृचविषयम्। तथाचाश्वलायनकल्पसूत्रम्। "प्राचीनावीतीध्ममुपसमाधाय मेक्षणेनावदायावदानसम्पदा जुहुयात् सोमाय पितृमते स्वधानमोऽग्नये कव्यवाहनाय स्वधानम इति, स्वाहाकारेण वाऽग्निं पूर्व्वं यज्ञोपवीती"—इति।

परिशिष्टीयवचनद्वयस्य व्यवस्थितविषयत्वं गोभिलीयानामग्नौकरणहोमे उपवीतित्वञ्च ब्रुवन् परिशिष्टप्रकाशोऽप्यप्रकाशकलुषमात्मानं न वेद। न खलु व्यवस्थायां किमपि प्रमाणमुपलभामहे। शाखान्तरविषयत्वाद्वचनान्तराणाम्। न खल्वत्र व्यवस्था परिशिष्टकारेण दर्शिता। कल्प्यते,—इति चेत्, निरङ्कुशत्वात्ते मनस एवं कल्पयसि। न तु प्रमाणोपेतं कल्पयसि। एवं खल्वपहसितैव शास्त्रमर्य्यादा स्यात्। अस्मात्परिशिष्टं खल्वेतत् कात्यायनकृतं

कर्म्मप्रदीपाख्यम्। कथं ज्ञायते?। अध्येह सम्प्रदाय प्रसिद्धेः। अतएव च्छन्दोगपरिशिष्टमित्याख्यायते। भवानपि नात्र विप्रतिपद्यते। "एवञ्च, अस्माकमेवैष विकल्पः कात्यायनेनोपदिष्टः—इत्यकामेनापि वक्तव्यम्। न खल्वस्मत्परिशिष्टे शाखान्तरेषां विधिरुचितोवर्णयितुम्। सोयं परिशिष्टप्रकाशः,—इत्यात्मानं ख्यापयन्, परिशिष्टञ्च दुर्व्याख्यातमथ समावृण्वन् परोक्षको भवान्,—इति किमत्र वक्तव्यम्।

अस्मद् गृह्यकारेण परतः प्राचीनावीतित्वोपदेशात् व्यक्तमग्नौ करणहोमे उपवीतित्वं दर्शितम्,—इति वर्णयन् वाचस्पतिरपि वाचोयुक्त्यनभिज्ञ एव। परतः प्राचीनावीतित्वोपदेशस्य पुरत उपवीतित्वाभिप्रायकत्वे प्रमाणाभावात्। तस्यानियमसमाचपरताया एव परिशिष्टकृता स्पष्टीकृतत्वाच्च। परिशिष्टवचने सव्यापसव्ययोर्विकल्पः,—इति भवानेवाह।

"परिशिष्टोयं पूर्व्ववचनं पूर्व्वपक्षाभिप्रायं, उत्तरवचनन्तु सिद्धान्ताभिप्रायम्, अतएव तत्र सिद्धान्तद्योतनार्थो वाशब्दः"—इति वर्णयता महायशसाऽपि महदयशः प्रकटितम्। कस्मात्?। वाशब्दस्य विकल्पार्थत्वात्। श्रुति-द्वैविध्येन विकल्पस्योपपन्नतरत्वाच्च। अपिच। एवं सत्यग्नौकरणहोमेऽपि नियमतः प्राचीनावीतित्वे, 'अत ऊर्द्ध्वं प्राचीनावीतिना'—इति सूत्रणमाचार्य्यस्यासङ्गतं स्यात्। तस्मादाचार्य्यविरुद्धोऽयं पक्षः। अलमति प्रसङ्गेन।

प्रकृतमधुनोच्यते। अनग्निमता खल्वत्र पित्र्यब्राह्मणपाणौ अग्नौकरणहोमः करणीयः। तथा चान्वष्टक्यकर्म्मणि कर्म्मप्रदीपः।

"पिण्डे यः पंक्तिमूर्द्धन्य स्तस्य पाणावनग्निमान्।

हुत्वामन्त्रवदन्येषां तूष्णीं पात्रेषु निःक्षिपेत्"।

इति। यच्च,—'अग्निमतामेवात्राधिकारः। "अन्वष्टकास्वष्टकावदग्नौ हुत्वा मात्रे पितामह्यै प्रपितामह्यै च पूर्व्ववद्ब्राह्मणान् भोजयित्वा"—इति विष्णुसूत्रे, "वह्नौ हुत्वा दद्यात्"—इति कात्यायनसूत्रे च, अग्निवचनात् विप्रपाण्यादेर्व्यवच्छेदात्। अरमवत्त्वर्हिषा कुशमयवर्हिर्वाधवत्। पितृयज्ञीयहोमस्य लौकिकाग्नौ निषेधाच्च'—इति तत्त्वकारवचनम्। तदप्यतत्त्ववचनमेव। कस्मात्?। अस्मत् परिशिष्टकारेण अस्मिन्नेव कर्म्मणि अनग्निमतोऽपि विप्रपाणौ होमोपदेशात्। आचार्य्येणापि 'जुहुयात्'—इति सूचितं, न पुनर् 'अग्नौ जुहुयात्'—इति। अग्नौ होमोपदेशस्तु कठादिशाखिविशेषाणामेव नास्माकम्। कथं ज्ञायते?। विष्णुप्रभृतीनां तत्सूत्रकारत्वात्। 'अन्वष्टकासु'—इति बहुवचनोपन्यासाच्च। मध्यमायां खल्वस्माकमन्वष्टक्यकर्म्म,—इत्यवोचाम। न खलु स्वशास्त्रोपरोधेन परशास्त्रादरणं कर्त्तुमुचितम्। तथात्वे वा, तदुक्तमात्रादिश्राद्धमप्यस्माकं स्यात्। न चैवं त्वयापि दृश्यते। तस्मादनादरणीयमेतत्।

अस्मिन्नेवावसरे पात्रेषु हुतशेषदानादिकं करणीयम्। कुतः?। "तूष्णीं पात्रेषु निःक्षिपेत्"—इत्यादि वचनात्। ब्राह्मणभोजनादिकमप्यस्मिन्नेवावसरे कर्त्तव्यम्। न च अनुपदेशात् नास्त्येव ब्राह्मणभोजनादिकम्—इति वक्तव्यम्। तस्यास्मत्श्राद्धकल्पादिसिद्धत्वात्। "यो वा तेषां ब्राह्मणानामुच्छिष्टभाक् स्यात्"—

इति च लिङ्गात्। ब्राह्मणोपवेशनस्य पात्रेषु कृतशेषदानादेश्चा-र्थवत्त्वोपपत्तेश्च। प्रमाणान्तराणि विचारान्तराणि चास्माभि-र्ग्रन्थगौरवभयादुपेक्षितानि बुद्धिमद्भिरूहणीयानि ॥०॥ ३९ ॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये चतुर्थप्रपाठकस्य द्वितीया काण्डिका ॥०॥

## गोभिलीय-गृह्यसूत्रे

चतुर्थप्रपाठके तृतीया कण्डिका ।



### अत ऊर्द्धं प्राचीनावीतिना वाग्यतेन कृत्यम् ॥ १ ॥

स्पष्टमुत्तरार्थः । वाग्यमनोपदेशात् मनसैव मन्त्रोच्चारणम् । "वाग्-यतेन,—इति लौकिक्या वाचः प्रतिषेधो न मन्त्राश्रयायाः, मन्त्रो-पदेशसामर्थ्यात्"—इति केचित् । तत्तु नातीव समीचीनम् । कुतः? । इतः पूर्व्वमपि तदविशेषात् । न खलु कृत्यमध्ये लौकिक्या वाचः कथनं शिष्टैरनुमन्यते ॥०॥ १ ॥०॥

### सव्येन पाणिना दर्भपिञ्जलीं गृहीत्वा दक्षिणाग्रां लेखामुल्लिखेदपहता असुरा इति ॥ २ ॥

सव्येन वामेन पाणिना दर्भपिञ्जलीं पूर्व्वोक्तलक्षणां गृहीत्वा दक्षि-णाग्रां लेखां—रेखां उल्लिखेत् कुर्य्यादित्यर्थः । (प्रत्ययार्थमात्र विवक्षा ।) अपहता इति मन्त्रेण । कस्मिन् लेखामुल्लिखेत्? । कर्षूणां मध्यतः,—इति ब्रूमः । कुतः ? । प्रकृतत्वात् । पिण्डदानार्थं हि लेखोल्लेखनम् । पिण्डाश्च कर्षूष्वेव दास्यन्ते ।

इदमिदानीं सन्दिह्यते । सव्येन पाणिना,—इत्युपादानात्,— किं सव्येनैव पाणिना लेखोल्लेखनं कर्त्तव्यम्, आहोस्वित् सन्निधाना-

तिशयात् सव्येन दर्भपिञ्जल्या ग्रहणमात्रं करणीयम्?—इति। ग्रहण-मात्रम्—इत्याह। कुतः?। सन्निधानातिशयादेव। एतदुक्तं भवति। प्रथमं सव्येन पाणिना स्वस्तरात् दर्भपिञ्जलीमादत्ते, ततः सव्यात् हस्तात् दक्षिणेन हस्तेन दर्भपिञ्जलीं गृहीत्वा, सव्येन अन्वारभ्य लेखा-मुल्लिखेत्,—इति। एवमुत्तरत्रापि वर्णनीयम्। तथाच कर्मप्रदीपः।

"सव्येन पाणिनेत्येवं यदत्रासकृदीरितम्।
परिग्रहणमात्रन्तत् सव्यस्यादिशति व्रतम्।
पिञ्जल्याद्यभिसंगृह्य दक्षिणेनेतरात् करात्।
अन्वारभ्य च सव्येन कुर्य्यादुल्लेखनादिकम्"।

इति। अत्र च, तिसृणामेव कर्षूणां मध्ये लेखोल्लेखनं बोद्धव्यम्। मन्त्रावृत्तिरुक्ता ॥०॥ २ ॥०॥

**सव्येनैव पाणिनोल्मुकं गृहीत्वा दक्षिणार्द्धे कर्षूणां निदध्याद्ये रूपाणि प्रतिमुञ्चमाना इति ॥ ३ ॥**

व्याख्यातप्रायमेतत् ॥०॥ ३ ॥०॥

**अथ पितॄनावाहयत्येत पितरः सोम्यास इति ॥ ४ ॥**

अथ,—इत्यानन्तर्य्यार्थम्। कर्षूषु दर्भस्तरणानन्तरमित्यर्थः। कस्मात्?। उत्तरत्र कर्षूषु दर्भेषु अवनेजनस्य पिण्डदानस्य च सूत्रणात्। "अथ शब्दोऽन्यकर्त्तृकत्वपक्षेऽपि यजमानपितॄणामेव नियमार्थः"—इत्यपरे व्याचक्षते। पितॄन्,—इति बहुवचनात् पितामहप्रपितामहयोरपि ग्रहणम्। स्पष्टमन्यत् ॥०॥ ४ ॥०॥

अथोदपात्रान् कर्षूषु निदध्यात् ॥ ५ ॥

अथशब्दः पूर्व्वप्रकृतार्थः। उदपात्रान्,—इति पुंस्त्वं छान्दसम्। उदकपात्राणि,—इति केचित् पठन्ति। कर्षूषु,—इति, "अथाग्निषोमीयेन चरन्त्युत्तरवेद्याम्"—इतिवत् सामीप्ये सप्तमी। अयमर्थः। पूर्व्वपूरितान्युदकपात्राणि कर्षूणां सन्निधावानुपूर्व्व्येण स्थापयेत् ॥०॥५॥०॥

सव्येनैव पाणिनोदपात्रं गृहीत्वाऽवसलवि पूर्व्वस्यां कर्षां दर्भेषु निनयेत् पितुर्नाम गृहीत्वाऽसाववनेनिक्ष्व ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधेति ॥ ६ ॥

अवसलविशब्देन पितृतीर्थमुच्यते,—इत्यवोचाम। तेन, पितृतीर्थेन पूर्व्वस्यां कर्षां दर्भेषु उदकं निनयेत्। कृतभाष्यमन्यत् ॥०॥६॥०॥

अप उपस्पृश्यैवमेवेतरयोः ॥ ७ ॥

अपरकर्षूद्वये,—इति वाक्यशेषः। व्याख्यातमन्यत् ॥०॥ ७ ॥०॥

सव्येनैव पाणिना दर्व्वीं गृहीत्वा सन्नीतात्तृतीयमात्रमवदायावसलवि पूर्व्वस्यां कर्षां दर्भेषु निदध्यात् पितुर्नाम गृहीत्वाऽसावेषते पिण्डो ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधेति॥ ॥ ८ ॥

दर्व्वी पूर्व्वमेव व्याख्याता। तया दर्व्या, सन्नीतात्—एकीकृतात् चरुहविषः, तृतीयमात्रं तृतीयांशमवदाय यथोक्तेन प्रकारेण निदध्यात्

निर्व्वपेत्। स्रिष्टमन्यत्। सन्नीतात्,—इति लिङ्गात् सन्नयनं तावदव-गम्यते। सन्नयनं नाम एकीकरणम्। न ज्ञायते;—केन सह कस्य सन्नयनम्—इति। तदक्तव्यम्। उच्यते। सर्व्वस्मात् हविषः अल्पमल्प-मुद्धृत्य तेषां चरुणा सह सन्नयनं कर्त्तव्यम्। तस्माच्च सन्नीतादवदाय पिण्डा दातव्याः,—इति। कुत एतत्?।

"यावदर्थमुपादाय हविषोऽर्भकमर्भकम्।
चरुणा सह सन्नीय पिण्डान् दातुमुपक्रमेत्"।

इति कर्म्मप्रदीपवचनात् ॥०॥ ८ ॥०॥

## अप उपस्पृश्यैवमेवेतरयोः ॥ ९ ॥

व्याख्यातोऽक्षरार्थः। अत्र च, मध्यमायां कर्ष्वां पितामहस्य पिण्ड-दानं, दक्षिणस्यां प्रपितामहस्य,—इति बोद्धव्यम्। तथा चोक्तम्।

"पितुरुत्तरकर्ष्वन्ते मध्यमे मध्यमस्य तु।
दक्षिणे तत्पितुश्चैव पिण्डान् पर्व्वणि निर्व्वपेत्"।

इति ॥०॥ ९ ॥०॥

स खल्वयं यजमानः, पितृपितामहप्रपितामहानाम्—

## यदि नामानि न विद्यात्;—स्वधा पितृभ्यः पृथिवीषद्भ्य इति प्रथमं पिण्डं निदध्यात्, स्वधा पितृभ्योऽन्तरीक्षसद्भ्य इति द्वितीयं स्वधा पितृभ्यो दिविषद्भ्य इति तृतीयम् ॥ १० ॥

व्यक्तोऽक्षरार्थः। तदनेन सूत्रेण, पित्रादिनामाज्ञाननिमित्तं मन्त्रा-

न्तरमेव पिण्डदाने विधीयते,—इत्यादरणीयम्। तेन, ये चात्र त्वा,—इत्ययं मन्त्रोऽस्मिन् पक्षे निवर्त्तते। स्वधाशब्दस्य प्रदानार्थस्योपादानाच्च। अत्र च, अन्यतरस्यापि नाम्न्यज्ञायमाने सर्व्वेषामेव अनेन मन्त्रान्तरेण पिण्डदानं कर्त्तव्यम्, त्रितयसम्बन्धेनैव विधानात्। एवमेके। यस्य नाम ज्ञायते तस्य नामोच्चारणपूर्व्वकं पूर्व्वेणैव मन्त्रेण पिण्डदानम्, यस्य च नाम न ज्ञायते, तस्यैवानेन मन्त्रान्तरेण। तदेतद् यथार्थमभिप्रेतम्। एवमपरे। तदत्र भवन्तो भूमिदेवाः प्रमाणम्।

अत्र पृच्छामः। नामाज्ञाने तिलोदकादिदानं कथं कर्त्तव्यम्?—इति। तुल्यहेतुत्वादनेनैव मन्त्रान्तरेण कर्त्तव्यम्—इति केचित्। तदसङ्गतम्। कस्मात्?। अतिक्रम्य विधानात्। तिलोदकादिकं खल्वतिक्रम्य पिण्डदान एवैतन्मन्त्रान्तरमाचार्य्येण विधीयते। कः पुनरत्राभिप्रायः?। पिण्डदानमेवानेन मन्त्रान्तरेण कर्त्तव्यम्—इति। तस्मात्,—पिण्डदानप्रयोगविधिरेवायम्। तस्मात्,—अतीतं तिलोदकादिकमनागतञ्चाञ्जनादिकमनेन मन्त्रेण न देयमेव। अपर आह। मन्त्रान्तराविधानादमन्त्रकमेव तेषां दानम्—इति। तदप्युपेक्षणीयम्। कुतः?। तेषामपि समन्त्रकदानोपदेशात्। पिण्डदानवत् तत्रापि समन्त्रकत्वस्योचितत्वाच्च। आह। एवं भवता द्वावपि पक्षौ प्रतिक्षिप्तौ, कतमस्तर्ह्यत्र पक्षः?। उच्यते। अनेन मन्त्रान्तरेण तावन्न कर्त्तव्यमेव, नाप्यमन्त्रकम्। किन्तु, प्राचीनं तिलोदकादि पराचीनञ्चाञ्जनादि यथासूचितेनैव मन्त्रेण देयम्। ननु, "नाम गृहीत्वा"—इति तत्र तत्र सूत्रणमस्ति, नाम्न्यज्ञायमाने कथं यथासूचितेन मन्त्रेण दानममीषां सम्भवति?। उच्यते। नामन्यज्ञायमाने नामस्थाने

पृथिवीषदादयः शब्दाः प्रयोक्तव्याः। कथं ज्ञायते?। शृणु यथा-ज्ञायते। पितृपितामहप्रपितामहानां नामाज्ञाने विहितेषु मन्त्रा-न्तरेषु;—पृथिवीषदिति, अन्तरीक्षसदिति, दिविषदिति च विशेष-श्रवणात् तेषामेव पित्राद्यभिधानस्थानपातित्वमवगच्छामः। तेन, पृथिवीषदेतत्ते तिलोदकं, अन्तरीक्षसदेतत्ते तिलोदकं, दिविषदेतत्ते तिलोदकम्—इति प्रयोगे विशेषः। ये चात्र त्वा मनु यांश्च त्व-मनु तस्मै ते स्वधा,—इति तु सर्व्वत्रैव प्रयोज्यम्। पिण्डदाने तु स्वधापदवन्मन्त्रान्तरविधानात् पूर्व्वस्य मन्त्रस्य निवृत्तिरेव स्यादि-त्यवोचाम। तथाच स्मरणम्।

"पृथिवीषत् पिता वाच्यस्तत्पिता चान्तरीक्षसत्।
अभिधानापरिज्ञाने दिविषत् प्रपितामहः"।

इति। तदिदं स्मरणमाचार्य्यसंवादितमर्थं वदतीत्यादरणीयम्। रघु-नन्दनस्तु छन्दोगोऽप्येतदजानानः,—"नामान्यविद्वांस्तत् पितामह-प्रपितामहेति"—इति पिण्डपितृयज्ञीयमाश्वलायनकल्पसूत्रमाकुली-कृत्य,—"नामान्यविद्वांस्तत्पितृपितामहप्रपितामहाः"—इति परिकल्प्य लिखित्वा बहुविरुद्धं वर्णयाञ्चकार॥०॥ १०॥०॥

## निधाय जपत्यत्र पितरो मादयध्वं यथाभाग-मावृषायध्वमिति॥ ११॥

पिण्डान् निधाय, अत्र पितरः—इतिमन्त्रं जपति। अथ, निधाय—इत्येतदवाच्यमिति चेत्। न। प्रतिनिधानं जपप्रतिषेधार्थत्वात्। कथं नाम?। सर्व्वान् पिण्डान् निधाय जपति न प्रतिपिण्डनिधा-

नम्—इति। ननु, सर्व्वेषां पिण्डानां निधानं सूचयित्वा परतः सूचणादेव प्रतिपिण्डनिधानं जपो न भविष्यति। एवन्तर्हि अन्यथा वर्णयिष्यामः। निधायैव जपति न पुनरन्यदपि किञ्चित् कृत्वा—इति। किमतः?।

"अवनेजनवत् पिण्डान् दत्त्वा विल्वप्रमाणकान्।
तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेत्"।

इत्युक्तं पुनरवनेजनमत्र न कर्त्तव्यम्। एतदतः ॥०॥ ११ ॥०॥

**अपपर्य्यावृत्त्य पुरोच्छ्वासादभिपर्य्यावर्त्तमानो जपेदमीमदन्त पितरो यथाभागमावृषायिषतेति ॥ ॥ १२ ॥**

अप,—इत्यप्रादक्षिण्यार्थम्। अप्रादक्षिण्येन पर्य्यावृत्त्य परिक्रम्य, वामावर्त्तेनेत्यर्थः। "वामं पर्य्यावृत्त्य"—इति नारायणोपाध्यायः पठति। तदा व्यक्त एवार्थः। इदञ्च पर्य्यावर्त्तनं केचिदुदगन्तं मन्यन्ते। गौतमादयस्तु दक्षिणापर्य्यन्तमिच्छन्ति। तथा चोक्तम्।

"वाममावर्त्तनं केचिदुदगन्तं प्रचक्षते।
सव्यं गौतमशाण्डिल्यौ शाण्डिल्यायन एव च"।

इति। तेन उदङ्मुखो दक्षिणामुखो वा भूत्वा,—इदानीं प्राणान् संयम्य, 'पुरा' पूर्व्वं, 'उच्छ्वासात्' प्राणविमोकात्, अमीमदन्त,—इति मन्त्रं जपेत्। किं कुर्व्वन्?। अभिपर्य्यावर्त्तमानः। येनैव पथागतः, तेनैव पथा पर्य्यावर्त्तमानः। आगत्य च प्राणान् विमोचयेत्। तथा चोक्तम्।

"आवृत्य प्राणानायम्य पितॄन् ध्यायन् यथार्हतः ।
जपं स्तेनैव चावृत्य ततः प्राणान् विमोचयेत्" ।

इति ॥०॥ १२ ॥०॥

**सव्येनैव पाणिना दर्भपिञ्जलीं गृहीत्वाऽवसलवि पूर्व्वस्यां कर्षां पिण्डे निदध्यात् पितुर्नाम गृहीत्वाऽसावेतत्त आञ्जनं ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधेति ॥ १३ ॥**

दर्भपिञ्जलीं,—पूर्व्वमञ्जनेनाञ्चितानां तिसृणामेकाम् । आञ्जनं—आ सम्यक् अञ्जनं । व्याख्यातमन्यत् ॥०॥ १३ ॥०॥

**अप उपस्पृश्यैवमेवेतरयोः ॥ १४ ॥**

कृतभाष्यमेतत् । अत्रापरयोर्दर्भपिञ्जल्योर्विनियोगः ॥०॥१४॥०॥

**तथा तैलम् ॥ १५ ॥**

तथा तेनैव प्रकारेण, तैलं,—पूर्व्वमासादितं, पिण्डेषु निदध्यात् । एतदुक्तं भवति । पितुर्नाम गृहीत्वा एतत्ते तैलं ये चात्र त्वेति पितृपिण्डे दत्त्वा अप उपस्पृश्यैवमेवेतरयोर्दद्यात् ॥०॥ १५ ॥०॥

**तथा सुरभि ॥ १६ ॥**

पूर्व्वसूत्रव्याख्यानेनैवेदमपि व्याख्यातम् ॥०॥ १६ ॥०॥

**अथ निह्नुते ॥ १७ ॥**

अथ,—इत्यानन्तर्य्यार्थम्। अन्यथा ह्यननुषङ्गविधानात् अञ्जन-तैलसुरभीणां प्रत्येकम्,—आनन्तर्य्यातिरेकात् सुरभिमात्रस्यैव वा निह्नवमाशङ्कीत कश्चिन्मन्दमतिरिति तन्निरासार्थमथेत्याह। अञ्जन-तैलसुरभीणि निधाय अथ अनन्तरं निह्नुते,—पितॄन् आच्छाद्य नमस्करोति ॥०॥ १७ ॥०॥

कथं निह्नुते?। उच्यते,—

**पूर्व्वस्यां कर्षां दक्षिणोत्तानौ पाणी कृत्वा नमो वः पितरो जीवाय नमो वः पितरः शूषायेति ॥ ॥ १८ ॥**

जपति,—इति वक्ष्यमाणं सिंहावलोकितन्यायेन संबध्यते। दक्षिणः पाणिरुत्तानो ययोः पाण्योः तौ दक्षिणोत्तानौ। एवमुत्तरत्रापि व्याख्येयम्। स्पष्टमन्यत् ॥०॥ १८ ॥०॥

**मध्यमायाꣳ सव्योत्तानौ नमो वः पितरो घोराय नमो वः पितरो रसायेति ॥ १९ ॥**

जपति। मध्यमायां कर्षाम्। सव्योत्तानौ पाणी कृत्वा ॥०॥ १९ ॥०॥

**उत्तमायां दक्षिणोत्तानौ नमो वः पितरः स्वधायै नमो वः पितरो मन्यव इति ॥ २० ॥**

इदमपि पूर्व्ववद्व्याख्येयम् ॥०॥ २० ॥०॥

**अथाञ्जलिकृतो जपति नमो वः पितरः पितरो नमो व इति ॥ २१ ॥**

अथशब्दः पूर्व्वप्रकृतार्थः। पूर्व्वप्रकृतं कर्षूचयं अभिसन्धाय, अञ्जलिकृतः सन्, नमोव इति मन्त्रं जपति। अञ्जलिकृतः,—इति व्याख्यासेन प्रयुङ्क्ते। कृताञ्जलिरित्यर्थः। "अञ्जलिश्चात्र संहतः कर्त्तव्यो न व्याकोषः। कुतः? । निह्नवे संहतस्योपयोगित्वात् व्याकोषस्य चन्द्रदर्शनाद्युपयुक्तत्वात्"—इति भट्टनारायणोपाध्यायाः॥०॥२१॥०॥

**गृहानवेक्षते गृहान् नः पितरो दत्तेति ॥ २२ ॥**

गृहान् पत्नीम्। एवमेके। गृहप्रार्थनयैव पत्नीप्रार्थनाया अपि चरितार्थत्वात् गृहशब्दस्य पत्न्यामरूढ़त्वाच्च निवेशनमेवार्थः। एवमपरे। तदत्र भवन्तो भूमिदेवाः प्रमाणम् ॥०॥ २२ ॥०॥

**पिण्डानवेक्षते सदो वः पितरो देष्मेति ॥ २३ ॥**

स्पष्टार्थं सूत्रम् ॥०॥ २३ ॥०॥

**सव्येनैव पाणिना सूत्रतन्तुं गृहीत्वाऽवसलवि पर्व्वस्यां कर्षूां पिण्डे निदध्यात् पितुर्नाम गृहीत्वाऽसावेतत्ते वासो ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधेति ॥ २४ ॥**

सूत्रतन्तुम्,—प्रकरणसामर्थ्यात् क्षौमदशाम्। व्याख्यातमन्यत् ॥०॥ २४ ॥०॥

अप उपस्पृश्यैवमेवेतरयोः ॥ २५ ॥

कृतभाष्यमेतत् ॥०॥ २५ ॥०॥

सव्येनैव पाणिनोदपात्रं गृहीत्वाऽवसलवि पिण्डान् परिषिञ्चेदूर्ज्जं वहन्तीरिति ॥ २६ ॥

ऋजुरक्षरार्थः। अत्र पूर्व्ववत् 'एवमेवेतरयोः'—इत्यकरणात् पिण्डान्—इति बहुवचनाच्च सकृदेव मन्त्रमुच्चार्य्य त्रीन् पिण्डान् परिषिञ्चेत्—इति बोद्धव्यम्। इदञ्च परिषेचनम्—

"गन्धादीन् निक्षिपेत्तूष्णीं तत आचामयेत् द्विजान्"।

इत्यादि,—

"प्रार्थनासु प्रतिप्रोक्ते सर्व्वास्वेव द्विजोत्तमैः।

पवित्रान्तर्हितान् पिण्डान् सिञ्चेदुत्तानपात्रकृत्"।

इत्यन्तकर्म्मप्रदीपोक्त-कर्म्मक्रमेण करणीयम्। एवमेके। यावदुक्तत्वादत्र कर्म्मप्रदीपोक्तः कर्म्मक्रमो न कर्त्तव्यः। एवमपरे। एतस्मिन्नेव क्रमे,—

"युग्मानेव स्वस्तिवाच्यानङ्गुष्ठग्रहणं सदा।

कृत्वा धूर्य्यस्य विप्रस्य प्रणम्यानुव्रजेत्ततः"।

इति कर्म्मप्रदीपाद्युक्तम्—"उत्तानं पात्रं कृत्वा दक्षिणां ददाति"—इति श्राद्धकल्पाद्युक्तञ्च कर्म्म कुर्य्यात् ॥०॥ २६ ॥०॥

मध्यमं पिण्डं पत्नी पुत्रकामा प्राश्नीयादाधत्त पितरो गर्भमिति ॥ २७ ॥

च्छजुरचरार्थः । सा तु भोजनकाले प्राश्नीयात् न पुनरेतस्मिन्नेव-क्षणे,—इति द्रष्टव्यम् । मन्त्रञ्च पतिः पठति । कस्मात्? । 'यथेह पुरुषः स्यात्'—इति मन्त्रलिङ्गात् ॥०॥ २७ ॥०॥

यो वा तेषां ब्राह्मणानामुच्छिष्टभाक् स्यात् ॥ २८ ॥

उच्छिष्टशब्दोऽत्र भुक्तावशिष्टपाकवचनो न तु भोजनपात्रावशिष्टवचनः । यः तेषां ब्राह्मणानां उच्छिष्टभाक्—उच्छिष्टं भजते,—इत्युच्छिष्ट-भाक्—उच्छिष्टभजनार्हः, स्यात्, स 'प्राश्नीयात्'—इत्यनुषज्यते । किं प्राश्नीयात्? । तेषामुच्छिष्टम् । कुतः? । उपस्थितत्वात् । वाशब्दः समुच्चये । अयमपि स्वभोजनकाल एव प्राश्नीयात् । कः पुन स्तेषा-मुच्छिष्टभाक्? । यजमानादिः,—इत्याह । कस्मात्? । "शेषमिष्टे-भ्योदत्त्वा स्वयञ्च भुञ्जीत"—इति वचनात् । तथा स्मृत्यन्तरम् । इति । तथा देवलः ।

"निवृत्ते पितृमेधे तु दीपं प्रच्छाद्य पाणिना ।
आचम्य पाणीन् प्रक्षाल्य ज्ञातीन् शेषेण भोजयेत् ।
ततो ज्ञातिषु भुक्तेषु स्वान् भृत्यानपि भोजयेत् ।
पश्चात् स्वयञ्च पत्नी च श्राद्धशेषमुदाहरेत्" ।

इति । तैत्तिरीयशाखायामापस्तम्बसूत्रम् । "सर्व्वतः समवदाय या-मावरार्द्धमश्नीयाद् यथोक्तम्"—इति । अत्र भूरिद्रव्य-हस्तत्वापि सर्व्वशब्दान्नियमोऽयमदृष्टार्थः,—इत्याचक्षते । श्लोकमपि उदाहरन्ति ।

"श्राद्धं कृत्वा तु यः शेषं नाश्नमश्नाति मन्दधीः ।
लोभान्मोहाद्भयाद्वाऽपि तस्य तन्निष्फलं भवेत्" ।

इति। प्रियमाणेयं तन्नैव प्राशितं नैवाप्राशितञ्च भवति"—इति,—

"उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत्।

उपवासं तदा कुर्य्यादाघ्राय पितृसेवितम्"।

इति च श्रुतिस्मृती नियममवगमयतः। आचार्य्योऽपि "प्राश्नीयात्" —इति प्रशब्देनैतदेव दर्शयति। सेयमुच्छिष्टस्य प्रतिपत्तिः। अतो यत्रोच्छिष्टं न शिष्यते, तत्र नैष नियमः। प्रतिपत्तेः प्रतिपाद्याप्रयोजकत्वात्। यत् पुनर्यमवचनम्—

"भक्ष्यं भोज्यं तथा पेयं यत्किञ्चित् पच्यते गृहे।

न भोक्तव्यं पितॄणान्तदनिवेद्य कथञ्चन"।

इति। यच्च शङ्खवचनम्—

"यत्किञ्चित् पच्यते गेहे भक्ष्यं भोज्यमथापि वा।

अनिवेद्य न भुञ्जीत पिण्डमूले कथञ्चन"।

इति। तत् श्राद्धार्थपाकादन्यदपि यत्किञ्चिद् भक्षणार्थं गृहे पच्यते, तदपि पितॄणां निवेद्यैव भोक्तव्यम्—इत्युपदिशति। न पुनः श्राद्धशेषातिरिक्तस्य भोजनं निषेधयति। कथं ज्ञायते?। अनयोरेव श्राद्धशेषव्यतिरिक्तस्यापि पितॄणां निवेद्य भोजनोपदेशात्। यत्किञ्चित्—इति गृहे—इति च करणादेवमवगच्छामः। अतएव पिण्डमूले—पिण्डान्तिके निवेदनमुपदिश्यते, न तु तेनैव पिण्डदानं ब्राह्मणभोजनं वा।

आह। कुतः पुनरियमवधारणा,—पिण्डमूले निवेदनं न ब्राह्मणभोजनार्थम्—इति। ननु, येषां पिण्डदानात् परतो ब्राह्मणभोजनं तेषां ब्राह्मणभोजनार्थमपि पिण्डमूले निवेदनं सम्भ-

वति। उच्यते। सत्यं सम्भवति। न तु तेषामयमुपदेशः। केषां तर्हि?। येषां ब्राह्मणभोजनात् परतः पिण्डदानं, तेषाम्—इति ब्रूमः। कस्मात् कारणात्?।

उच्छिष्टसन्निधौ कार्य्यं पिण्डनिर्व्वपणं बुधैः"।

इति तेनैव ब्राह्मणभोजनात् परतः पिण्डदानोपदेशात्। शङ्खवचनस्य तु पूर्व्वार्द्धं शङ्खसंहितायामेवं पश्यामः,—

"पङ्क्तिविदात्मनो गेहे भक्ष्यं वाऽभक्ष्यमेव वा"।

इति। तदा व्यक्त एवायमर्थो—यः खल्वस्माभिर्व्वर्णितः। कुतः?। अभक्ष्यमपि भुञ्जतः पिण्डमूले निवेदनोपदेशात्। "शङ्खवचनं न श्राद्धेतरभोजनव्यावर्त्तकं, किन्तु यत्किञ्चित्—इति श्राद्धार्थत्वेन विशेषणीयम्। अन्यथा श्राद्धप्रतिषिद्धद्रव्याणां भक्ष्यत्वं न स्यात्। तेन श्राद्धार्थपक्कं यत्, तदद्त्त्वा न भोक्तव्यम्—इति तस्यार्थः"—इति वचनतात्पर्य्यमपर्य्यालोचयतो रघुनन्दनस्य स्वच्छन्दकल्पनान्नु नाभिनन्दामहे। प्रमाणाभावात्। युक्तेश्चाकिञ्चित्करत्वात्। भिन्नौ खल्वेतौ पदार्थौ—यत् पिण्डमूले निवेदनं,यच्च श्राद्धावशिष्टम्,—इति। साहसिकः खल्वसौ यो महर्षेरभिप्रायमनालोच्य स्वहृद्यैवान्यथा वर्णयन्नापत्रपते। अलमसदावेशेन। प्रकृतमनुसरामः।

कश्चित् पुनरन्यथेमं ग्रन्थं वर्णयाञ्चकार,—"यो वा तेषां ब्राह्मणानाम्"—इत्यादिम्। "यः तेषां ब्राह्मणानामुच्छिष्टं भजते, तस्योच्छिष्टभाजो यजमानज्येष्ठस्य पुत्रपौत्रादेः पत्नी मध्यमं पिण्डं प्राश्नीयात्"—इति। तन्मते, ज्ञातिप्रभृतीनामपि तदुच्छिष्टभाक्त्वात्

तेषामपि पत्न्यः प्राश्नन्तु। न चैवमिष्यते। तस्मान्न किञ्चिदेतत् ॥०॥ ॥२८॥०॥

अभून्नो दूतो हविषो जातवेदा इत्युल्मुकमद्भिरभ्युक्ष्य ॥ २९ ॥

उल्मुकं दक्षिणार्द्धे कर्षूणां स्थितम्। स्पष्टमन्यत् ॥०॥ २९ ॥०॥

द्वन्द्वं पात्राणि प्रक्षाल्य प्रत्यतिहारयेत् ॥ ३० ॥

पात्राणि चरुस्थाल्यादीनि प्रक्षाल्य निर्णिज्य, प्रत्यतिहारयेत्—केनचित् शिष्यादिना आनयेत्। असम्भवे स्वयमपि हरेत्। प्रतिशब्दकरणात् येन यन्नीतमासीत्, तेनैव तत् हारयेत्। अतिशब्दोऽसम्प्रतिक्षेपार्थः। तेन कालविलम्बमकुर्व्वन् हारयेत्—इत्यर्थः। "अभिहारयेत्"—इति केचित् पठन्ति। पात्राणि कथं प्रत्यतिहारयेत्?। 'द्वन्द्वं' यथा भवति, तथा प्रत्यतिहारयेत्। द्वन्द्वशः प्रक्षाल्य,—इति वा वर्णनीयम् ॥०॥ ३० ॥०॥

अप्सु पिण्डान् सादयेत् ॥ ३१ ॥

उदके पिण्डान् निक्षिपेत्। पिण्डान्—इति बहुवचनं व्यक्त्यपेक्षं, द्वयोरेवावशिष्टत्वात्। पत्न्याः प्राशनस्यानावश्यकत्वात्तदभावपक्षाभिप्रायं वा वर्णनीयम्। अपरे पुनरेतदविद्वांसो भाषन्ते,—"पिण्डान्—इति बहुवचनं षट् पिण्डश्राद्धविषयम्"—इति ॥०॥ ३१ ॥०॥

प्रणीते वाऽग्नौ ॥ ३२ ॥

'पिण्डान् सादयेत्'—इत्यनुवर्त्तते ॥०॥ ३२ ॥०॥

## ब्राह्मणं वा भोजयेत् ॥ ३३ ॥

पिण्डान्—इत्येव ॥०॥ ३३ ॥०॥

## गवे वा दद्यात् ॥ ३४ ॥

पिण्डानेव। इदमिदानीं विचार्य्यते। किमत्र मात्रादिश्राद्धं मातामहादिश्राद्धञ्चास्ति, उत यावदुक्तत्वान्न ?—इति। न,—इति ब्रूमः। कुतः ?। यावदुक्तत्वादेव। योषित्‌श्राद्धं खल्वस्माकमवसानदिनव्यतिरेकेण पृथक् नास्ति। तथा च कर्म्मप्रदीपः।

"न योषिद्भ्यः पृथग् दद्यादवसानदिनादृते।
स्वभर्त्तृपिण्डमात्राभ्य स्तृप्तिरासां यतः स्मृता"।

इति। वचनबलात्तु क्वचित् क्रियते। तदप्याह, स एव।

"मातुः प्रथमतः पिण्डं निर्व्वपेत् पुत्रिकासुतः।
द्वितीयन्तु पितुस्तस्या स्तृतीयञ्च पितुः पितुः"।

इति।

"मातुः सपिण्डीकरणं पितामह्या सहोदितम्"।

इति च। न च परशास्त्रमप्यादर्त्तुं शक्यते। स्वशास्त्रोपरोधप्रसङ्गात्। तस्मात्, मात्रादिश्राद्धं तावदत्र न कर्त्तव्यमेव। मातामहादिश्राद्धमप्यत्र न करणीयम्। तथा च कर्म्मप्रदीपोप्याह।

"कर्षूसमन्वितं त्यक्त्वा तथाऽऽद्यं श्राद्धषोड़शम्।
प्रत्याब्दिकञ्च, शेषेषु पिण्डाः स्युः षड़िति स्थितिः"।

इति। तस्मात् पित्रादित्रयाणामेवात्र श्राद्धम—इति सिद्धम् ॥०॥ ॥ ३४ ॥०॥

अथेदानीमनेनैव श्राद्धविधिना श्राद्धान्तराण्यपि व्याख्यातानि,— इति मनसि कृत्वा, वृद्ध्यादिषु तावत् कञ्चिद्विशेषमुपदिदिक्षुराह,—

## वृद्धिपूर्त्तेषु युग्मानाशयेत् ॥ ३५ ॥

"वृद्धिः पुरुषसंस्कारः,"—इति भट्टभाष्यम्। पूर्त्तम्—

"वापीकूपतड़ागादि देवतायतनानि च।
अन्नप्रदानमारामाः पूर्त्तमित्यभिधीयते"।

इत्याद्युक्तलक्षणम्। तेषु, पित्रर्थमपि युग्मान् ब्राह्मणान् भोजयेत्। अस्मादपि लिङ्गात् अन्वष्टक्ये ब्राह्मणभोजनमवगम्यते ॥०॥ ३५॥०॥

## प्रदक्षिणमुपचारः ॥ ३६ ॥

प्रदक्षिणं यथा भवति, तथा दर्भासनादिक उपचारः, कर्त्तव्यः—इति सूत्रशेषः। "वृद्धिपूर्त्तेषु"—इत्यनुवर्त्तते ॥०॥ ३६॥०॥

## यवैस्तिलार्थः ॥ ३७ ॥

तिलैर्योऽर्थः प्रयोजनं क्रियते, स यवैः कर्त्तव्यः। वृद्धिपूर्त्तेषु,— इत्येव। सोऽयं संक्षेपतः श्राद्धविधिः। विस्तरतस्तु, कर्म्मप्रदीपे वाशिष्ठे च कल्पे द्रष्टव्यः। श्राद्धमन्त्राश्च परिसंख्यानादुपलब्धव्याः। अतएव कर्म्मप्रदीपे कात्यायनेनोक्तम्।

"एष श्राद्धविधिः कृत्स्न उक्तः संक्षेपतो मया।
ये विदन्ति न मुह्यन्ति श्राद्धकर्म्मसु ते क्वचित्।
इदं शास्त्रञ्च गृह्यञ्च परिसंख्यानमेव च।
वशिष्ठोक्तञ्च यो वेद स श्राद्धं वेद नेतरः"।

इति। इदमिदानीं सन्दिह्यते। किं ब्राह्मणभोजनमत्र प्रधानम्, आहोस्वित् पिण्डदानम्, उताहो उभयम्?—इति। आह। शेषेण पिण्डदानविधानात् पिण्डदानं प्रतिपत्तिरेव; कस्मादियं विचारणा?। उच्यते। सत्यमत्र शेषः प्रतिपाद्यते, तथापि नासौ प्रतिपत्तिः। बलिहरणे शेषस्य प्रतिपादनेऽपि न तत्प्रतिपत्तिः,—इति यथा। किं कारणम्?। अर्थकर्मणि तस्य प्रतिपादनात्। कथं ज्ञायते?। फलार्थवादोपपत्तेः। तच्च तत्र तत्र उदाहरिष्यामः। विनाऽपि शेषं पिण्डदानदर्शनाच्च। क्व?। पिण्डपितृयज्ञादौ। ब्राह्मणभोजनस्य खल्वभावे कस्य शेषः प्रतिपादयिष्यते। ब्राह्मणभोजनस्य पुरस्तादपि केषाञ्चित् पिण्डदानविधानाच्चैवमवगच्छामः। तस्मात्,—अर्थकर्मैवासौ, न प्रतिपत्तिः। तत्रैव च शेषः प्रतिपाद्यते। अथवा। प्रतिपत्त्यर्थकर्म्म पिण्डदानं न प्रतिपत्तिरेव। तस्मात्,—भवति विचारणैषा। तत्र, उभयं प्रधानम्—इति भट्टनारायणप्रभृतयो मन्यन्ते। श्लोकानपि उदाहरन्ति।

"प्राधान्यं पिण्डदानस्य केचिदाहुर्मनीषिणः।
गयादौ पिण्डमात्रस्य दीयमानस्य दर्शनात्।
भोजनस्य प्रधानत्वं वदन्त्यन्ये महर्षयः।
ब्राह्मणानां परीक्षायां महायत्नप्रदर्शनात्।
आमश्राद्धविधानस्य विना पिण्डं क्रियाविधेः।
तदालभ्यायनध्याय-विधानश्रवणादपि।
मतद्वैधमुपादाय मम त्वेतत् हृदि स्थितम्।
प्राधान्यमुभयोर्यस्मात् तस्मादेव समुच्चयः"।

इति। अत्र च, निमित्ततो ब्राह्मणभोजनस्य पिण्डदानस्य चानुष्ठानेऽपि उभयोः प्राधान्यं नानुपपन्नम्। असोमयाजिपक्षे दधिपयोयागवत्। फलश्रुतिश्चोभयत्राप्यस्ति। ब्राह्मणभोजनं प्रधानं पिण्डदानमङ्गम्—इति शूलपाणिप्रभृतयः। अन्नोत्सर्गः प्रधानम्—इति वाचस्पतिमिश्रादयः। स्मरन्ति च।

"श्राद्धं कृत्वा प्रयत्नेन त्वराक्रोधविवर्ज्जितः।

उष्णमन्नं द्विजातिभ्यः श्रद्धया प्रतिपादयेत्"।

इति। अत्र खल्वन्नोत्सर्गे श्राद्धपदं प्रयुक्तम्। तथा स्मृत्यन्तरम्।

"संस्कृतं व्यञ्जनाढ्यान्नं पयोदधिघृतान्वितम्।

श्रद्धया दीयते यस्मात्, तेन श्राद्धं निगद्यते"।

इति। अपिच। नित्यश्राद्धादौ तावत् पिण्डनिषेधोऽवगम्यते। स च प्राप्तस्यैव भवति। प्राप्तिश्चातिदेशादेव। स खल्वङ्गानामेव न प्रधानस्य। कस्मात्?। उपकारकत्वेनैवातिदेशस्य सप्तमाध्याये सिद्धान्तितत्वात्। तस्मात् पिण्डदानमङ्गमेव। अङ्गेषु फलश्रुतिरर्थवाद एव। केवलपिण्डदानविधिस्तु अङ्गभूतपिण्डदानात् कर्म्मान्तरमेव। प्रकरणाधिकरणन्यायात्,—इति श्राद्धविवेकः।

इदन्त्विह वक्तव्यम्। "मासमग्निहोत्रं जुहोति"—इति कुण्डपायिनामयने यथा अग्निहोत्रवत् जुहोति,—इति वचनव्यक्त्या नैयमिकस्याग्निहोत्रस्य धर्म्मा अतिदिश्यन्ते; प्रधानस्य होमो—योऽग्नये च प्रजापतये च,—इति, यथा वा "उद्भिदा यजेत"—इत्येवमादौ अव्यक्तयजतौ, सौमिकधर्म्मा इव प्रधाना अपि यजतयः प्रदिश्यन्ते, तयोः रूपान्तराभावात्। तद्वदत्रापि स्यात्। आनर्थक्यात् हि प्रधा-

मस्यातिदेश उक्तः। न चैवमानर्थक्यं शक्यते वक्तुम्। अथ मन्यसे,—नासौ प्रधानस्यातिदेशः। कस्य तर्हि?। अङ्गस्यैव। प्रधानं खल्वत्र जुहोतिना यजतिना च विहितं, द्रव्यदेवते पुनरङ्गे एवातिदिश्येते, अङ्गान्तरवत्—इति। एवन्तर्हि प्रकृतेऽपि श्राद्धचोदनया प्रधानं विहितम्—इति न प्रधानस्यातिदेशः, अपितु अङ्गमेव—इतिकर्त्तव्यता कलापः प्रदिश्यताम्। कथन्तर्हि पिण्डदानस्य निषेधः क्रियते?। इतिकर्त्तव्यतानिषेधाभिप्रायतया,—इति गृहाण। नायं पिण्डदानस्य निषेधः, अपितु तदितिकर्त्तव्यताया एव। तस्याश्च निषेधात् पिण्डोऽपि न दीयते। उत्तरवेदेर्निषेधात् वैश्वदेवे सुनासीरीये च यथा न अग्निः प्रणीयते, तद्वत्। अपिच। कस्मात् कारणादुभयोः प्राधान्य-पक्षे पिण्डदानस्य निषेधो न घटते,—इति तावदसौ प्रष्टव्यः। स यदि ब्रूयात्,—प्राप्तेरभावात्—इति। तं प्रति ब्रूयात्,—विध्यन्तेन प्राप्तेरभावेऽपि विध्यादितः प्राप्तिरस्त्येव। कुतः?। श्राद्धपदस्यैवैवम-र्थात्। तच्च, विध्यादितः प्राप्तः पिण्डः प्रतिषिध्यमान स्तदितरकरण-मेव प्रयोजयति। सोऽयं पर्य्युदासो न निषेधः। यथा, सर्व्वस्वं दद्यात्,—इत्यत्र, भूम्यादि प्रतिषेधात् तदितरत् सर्व्वस्वमर्थः, तथै-वात्रापि पिण्डेतरत् श्राद्धमर्थः,—इति न किञ्चिदनुचितम्।

एतेन "श्राद्धं सपिण्डकं कृत्वा"—इत्यादिवचनान्यपि व्याख्या-तानि। गोवृषन्यायात् खल्वेवमुच्यते प्रशंसार्थम्। तदेवमादिवचन-वैचित्र्यमृषीणामबुद्धा न बुद्धिमद्भिर्भ्रमितव्यम्। यत् पुनरङ्गभूत पिण्डदानादितरदेव कर्म्मान्तरं प्रधानं पिण्डदानम्—इति वर्णितम्। तत्र पृच्छामः। तस्य श्राद्धत्वमिष्यते न वा?—इति। यदि तावत्

प्रथमः पक्षः, तदा विफलः प्रयासः। पिण्डदानस्यापि श्राद्धत्वाभ्युपगमात्। कर्म्मान्तरवचनानुपपत्तिश्च स्यात्। सति ब्राह्मणभोजने पिण्डदानमङ्गम्, असति प्रधानम्,—इति ब्रवीमि,—इति चेत्। निरङ्कुशत्वात्ते तुण्डस्यैवं ब्रवीषि, न तु प्रमाणोपेतं ब्रवीषि। रूपभेदाभावात्। यदेव खल्वस्य रूपमङ्गस्य तदेव प्रधानस्यापि,—इति सति ब्राह्मणभोजने अङ्गं, विपरीतमन्यथा,—इत्यत्र विशेषहेतुर्नास्ति। फलश्रुतेरुभयत्राप्यविशेषेणैकशेषस्य दुष्करत्वात्। अपि च। एतावतापि श्राद्धशब्दाभिधेयत्वमस्याभ्युपगच्छत्येव भवान्,—इति असतीव ब्राह्मणभोजने, सत्यपि तस्मिन् प्राधान्यमेवास्य अभ्युपगम्यताम्, कृतमर्द्धजरतीयेन। कुत्रचिदेकस्य कुत्रचिच्चान्यस्य प्राधान्ये पुनरभ्युपगम्यमाने अनेकार्थत्वमस्य कल्पनीयं स्यात्। तच्चान्याय्यम्। उत्तर इति चेन्नाचार्य्यविरोधात्। इति चेत् पश्यसि,—उत्तरः पक्षः तर्हि समाश्रयिष्यते,—इति। एतदपि न पारयसि। कस्मात्?। आचार्य्यविरोधात्। "तत् श्राद्धम्"—इति सूत्रयन्नाचार्य्यः पिण्डपितृयज्ञस्यापि श्राद्धत्वमुपदिशति। विरुध्यते खल्वेतद्भवताम्। पिण्डप्रधानो हि सः। तस्मात्, पिण्डमन्तरेणैव ब्राह्मणभोजनमन्तरेणापि श्राद्धदर्शनात् नैतदेकतरस्मिन्नेव पक्षे चोदयितव्यं भवति; द्वयोः समानत्वात्—इति सन्तोष्टव्यम्। समुच्चयपक्षः खल्वेवमुपोद्वलितो भवति। यस्तु, ब्राह्मणभोजनमात्रं प्रधानमाह, स कथं पिण्डदानमात्रस्य श्राद्धत्वं समर्थयितुं शक्ष्यति,—इति न विद्मः।

यदपि शङ्खवचनमुपन्यस्तं—'श्राद्धं कृत्वा प्रयत्नेन'—इत्यादि, सोऽयं केवलाग्नौकरणे श्राद्धपदप्रयोगः,—इति वर्णितञ्च। तदप्यनभिज्ञवचनम्। कुतः?।

"भोजयेदथवाऽप्येकं ब्राह्मणं पङ्क्तिपावनम्" ।

इति ।

"उच्छिष्टसन्निधौ कार्य्यं पिण्डनिर्व्वपणं बुधैः" ।

इति च ब्राह्मणभोजनं पिण्डनिर्व्वपणञ्चाभिधाय, पश्चात् तद्वचनारम्भात्। तदनेनायमपि समुच्चयपक्षमुपोद्बलयति,—इत्यवगच्छामः ।

यच्च पुलस्त्यवचनमुपदर्शितम्—'संस्कृतं व्यञ्जनाढ्यान्नम्'—इत्यादि, तत्रापि,—श्रद्धया यस्मादत्रान्नं दीयते—तस्मादिदं कर्म्म श्राद्धमित्युच्यते,—इति वचनव्यक्त्या अन्नदानादतिरिक्तमपि किञ्चिदवगम्यत एव । तदिदम्,—"संज्ञायाम्"—इति वा, "तेन कृतम्"—इति वा, "तस्येदम्"—इति वा भवति । जयादित्यस्तु "चूड़ादिभ्य उपसङ्ख्यानम्"—इत्यभिधाय, चूड़ा प्रयोजनमस्य—चौड़म् । श्रद्धा प्रयोजनमस्य—श्राद्धम्"—इत्युदाजहार । रघुनन्दनस्तु पुलस्त्यवचनमालोचनमात्रेण पश्यन्,—श्रद्धया अन्नादेर्य्यद्दानं तत् श्राद्धमिति वैदिकप्रयोगाधीनयौगिकम्—इति वर्णयाञ्चकार । तदसङ्गतम् । कुतः ? । योगार्थस्याशब्दत्वात्। न खलु श्रद्धया अन्नादेर्दानम्—इत्ययं योगार्थः श्राद्धशब्दादवगम्यते । न खलु दानार्थे तद्धितमुपदिशन्त्याचार्य्याः । सोऽयम् अशाब्दीं व्युत्पत्तिं परिकल्प्य शिष्यान् व्यामोहयति,—इति किमत्र ब्रूमः । दर्शितञ्चास्माभिः पिण्डपितृयज्ञस्यापि श्राद्धत्वमाचार्य्यानुमतम् । तदपि न प्रस्मर्त्तव्यम् । यच्च,—

"अदैवं भोजयेत् श्राद्धं पिण्डमेकञ्च निर्व्वपेत्" ।

इति वचनम् । तत्र खल्वन्ने श्राद्धशब्दः प्रयुक्तः । यदपि,—

"आमश्राद्धं यदा कुर्य्याद् विधिज्ञः श्राद्धदः सुतः ।
तेनाग्नौ करणं कुर्य्यात् पिण्डांस्तेनैव निर्व्वपेत्" ।

इति वाच्यम्। तचापि, तेनाग्नौकरणम्—इति हेतुत्वेनोपादानम्, यतस्तेनाग्नौकरणम्, अतस्तेनैव पिण्डदानम्—इति तस्यार्थः। अग्नौकरणशेषेण पिण्डदानम्—इत्ययमत्र हेतुः। तदिदं वाक्यम्—

"आमश्राद्धं यदा कुर्य्यात् पिण्डदानं कथं तदा।
गृहादाहृत्य पक्वान्नं पिण्डं दद्यात् तिलैः सह"।

इत्येतत्पद्यानुज्ञानार्थम्। तथा मनुः।

"सहपिण्डक्रियायान्तु कृतायामस्य धर्मतः।
अनयैवावृता कार्य्यं पिण्डनिर्व्वपणं सुतैः"।

इति। न च, पिण्डनिर्व्वपणं पित्रे दानम्—इति रघुनन्दनव्याख्यानं युक्तम्—इति वाच्यम्। यथाश्रुतार्थ-परित्यागे मानाभावात्। अस्य,—इति करणाच्च पिण्डदानस्यैवावगतेः। पित्रुद्देश्यकदानमात्रस्यैव तदितिकर्त्तव्यतापत्तेश्च। "न निर्व्वपति यः पिण्डम्"—इति, "पिण्डदोऽंशहरः"—इति, "पिण्डं दद्याद्धनं हरेत्"—इति, "त्रिषु पिण्डः प्रवर्त्तते"—इति, "पिण्डोदकक्रियाहेतोः"—इति, "नरकस्थाश्च तृप्यन्ति पिण्डैर्दत्तैः"—इति चैवमादिषु शतशः पिण्डदानस्य प्राधान्यावगमाच्च।

"एवं निर्व्वपणं कृत्वा पिण्डांस्तांस्तदनन्तरम्"।

इति परतस्तेनैव पिण्डनिर्व्वपणस्योपसंहाराच्चैवमवगच्छामः। (उपसंहारः खल्वयं श्राद्धप्रकरणशेषे दृश्यते। तस्मात्,—पिण्डप्रदानस्यैवायमुपसंहारो न श्राद्धकर्म्मणः,—इत्यपि न शक्यते वक्तुम्।) अपिच। पिण्डदान एव पिण्डनिर्व्वपणपदं प्रयुक्तवान् मनुः,—इत्यवगच्छामः। कथं कृत्वा?। शृणु। पुरस्तात्तावत्,—

"ऊर्द्ध्वन्तु तस्मात् हविषः शेषात् पिण्डान् कृत्वा समाहितः।

औदकेनैव विधिना निर्व्वपेद्दक्षिणामुखः"।

इति। परस्तादपि,—

"पिण्डनिर्व्वपणं केचित् पुरस्तादेव कुर्व्वते"।

इति,—पिण्डप्रदान एव पिण्डनिर्व्वपणपदप्रयोगो दृश्यते। अपिच। कस्यचित् पिण्डदानम्, कस्यचिच्च ब्राह्मणभोजनं प्रधानम्—इत्यतो हि कारणात् समुच्चयपक्षः प्रादुर्भवति। तत् किमत्र करिष्यन्ति अन्यतरप्राधान्यावेदकानि वचनानि। स खल्वयमलङ्कारः समुच्चयपक्षस्य न दोषः। अथवा। क्वचित् पिण्डः प्रधानम्,— यथा गयापिण्डपितृयज्ञादौ। क्वचित् ब्राह्मणभोजनम्,—यथा नित्यश्राद्धादौ। क्वचिच्चोभयम्,—यथा सपिण्डीकरणादौ। इत्यस्तु किं विस्तरेण ॥०॥ २७ ॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये चतुर्थप्रपाठकस्य तृतीया काण्डिका ॥०॥

चतुर्थप्रपाठके चतुर्थी कण्डिका।



अथेदानीं प्रसङ्गाल्लाघवाच्च अन्वष्टक्यविधिं पिण्डपितृयज्ञेऽप्यतिदिशन्नाह,—

## अन्वष्टक्यस्थालीपाकेन पिण्डपितृयज्ञो व्याख्यातः ॥ १ ॥

अन्वष्टक्यकर्म्मणि यः स्थालीपाकः विहितः, तेनैव विधिना पिण्डपितृयज्ञो व्याख्यातः। ननु, अन्वष्टक्येन,—इति वक्तव्ये किमर्थम् अन्वष्टक्यस्थालीपाकेन,—इति स्थालीपाकग्रहणं क्रियते ?। मांसचरुनिवृत्त्यर्थमित्याह। कथं नाम ?। अन्वष्टक्येनेतिकृते स्थालीपाको मांसचरुश्चेतिद्वयमेव प्राप्यते। तत्र यत् पुनः स्थालीपाकग्रहणं करोति, तद्बोधयति मांसचरुरत्र नास्तीति। तर्हि पितृयज्ञः,—इति वक्तव्ये पिण्डपितृयज्ञः,—इति कथं पिण्डग्रहणं क्रियते?। उच्यते। पितृयज्ञः,—इति कृते खल्वन्वाहार्य्यादावपि अयमतिदेशः स्यात्। सचानिष्टः। पिण्डपितृयज्ञधर्म्माः खल्वेतेषु श्राद्धकल्पे अतिदिश्यते। एतस्मात् कारणात् पिण्डपितृयज्ञः,—इति सूचितम्। अथवा। पिण्डग्रहणं कुर्व्वन्नेतस्य पितृयज्ञस्य पिण्डप्रधानतां दर्शयति। कथं नाम ?। पिण्डैरेव यत्र पितर इज्यन्ते सोऽयं पिण्डपितृयज्ञः। तथाच निगमः। "आहिताग्नेः पितॄणां पिण्डैरेव, अपि वा ब्राह्मणान्

भोजयेत्"—इति पिण्डस्यासम्भवे ब्राह्मणभोजनमुपदिशति ॥०॥ ॥ १ ॥०॥*

अतिदेशवशादनवस्यामेव माभूदित्यतः कालान्तरविधानार्थमिदमाह । एवं वा ।

कः पुनः पिण्डपितृयज्ञो नाम,—योऽयमन्वष्टक्यस्थालीपाकेन व्याख्यातः, को वा तस्य कालः ? । उच्यते ।

## अमावस्यायां तत् श्राद्धम् ॥ २ ॥

तत् पिण्डपितृयज्ञाख्यं श्राद्धममावस्यायां कर्त्तव्यमिति सूत्रशेषः । अविहिते पिण्डपितृयज्ञे कथं तत्र धर्मप्रदेशः—इति इदमर्थतः सूत्रं पूर्वं द्रष्टव्यम् ॥०॥ २ ॥०॥

अमावस्याप्रसङ्गादाह,—

## इतरदन्वाहार्य्यम् ॥ ३ ॥

इतरदपरं द्वितीयमित्यर्थः । अनु पश्चादाह्रियते,—इत्यन्वाहार्य्यं नाम श्राद्धममावस्यायां कर्त्तव्यमित्यनुवर्त्तते । कस्य पश्चात् ? । पिण्डपितृयज्ञपिण्डानां, तस्यैव वा,—इति ब्रूमः । कस्मात् ? । उपस्थितत्वात् । अत एव पिण्डान्वाहार्य्यकम्—इत्याख्यायते । तथाच गृह्यान्तरम् ।

"यत् श्राद्धं कर्म्मणामादौ या चान्ते दक्षिणा भवेत् ।
अमावास्यां द्वितीयं यदन्वाहार्य्यं तदुच्यते" ॥

इत्यमावस्यायां द्वितीयस्य श्राद्धस्यान्वाहार्य्यत्वं स्मरति । मनु च,—

"पितॄणां मासिकं श्राद्धमन्वाहार्य्यं विदुर्बुधाः" ।

इति स्मरणात् पिण्डानां पितृणामन्वाहार्य्यं मासिकतृप्तिजनकं यस्मात्तथेति तत्प्रकारोक्तं युक्तमिति वाच्यम्। केवलान्वाहार्य्यपदे तदर्थासम्भवात्। व्युत्पत्तेरशब्दत्वाच्च। पूर्व्वोक्तगृह्यान्तरविरोधाच्च। प्रकरणञ्चैवमुपरुध्येत। तस्मादनग्नेरमावस्याश्राद्धं नान्वाहार्य्यमित्यादरणीयम्।

तदत्र ब्राह्मणभोजनं पिण्डदानञ्च षण्णां कर्त्तव्यम्। तथा च गृह्यान्तरम्। "मध्यमं पिण्डं पत्न्यै प्रदाय ब्राह्मणान् भोजयित्वा तथैवमेतेभ्यो मातुश्च पितृभ्यस्त्रीन् पिण्डानवनेनिज्य निदध्यात्"—इति। अत्र, मध्यमं पिण्डम्—इति पिण्डपितृयज्ञविषयम्। ब्राह्मणान् भोजयित्वा,—इत्यादिकमन्वाहार्य्यश्राद्धपरम्। एतेभ्यः,—इति पिण्डपितृयज्ञोपात्ताः स्वपितरः परामृश्यन्ते। एवञ्च, पिण्डपितृयज्ञेऽपि त्रयाणामेव पिण्डदानं स्यात्। तथाच कर्म्मप्रदीपः।

"कर्षूसमन्वितं मुक्त्वा तथाऽऽद्यं श्राद्धषोड़शम्।
प्रत्याब्दिकञ्च, शेषेषु पिण्डाः स्युः षड़िति स्थितिः"॥

इति। कर्षूश्च पिण्डपितृयज्ञेऽप्यस्ति ॥०॥ २ ॥०॥

सकृत्कृतेनैव कृतं मामंस्त,—इत्येतदर्थमाह,—

## मासीनम् ॥ ४ ॥

मासि मासि क्रियते,—इति मासीनम्। अधिकारात् श्राद्धद्वयमपि, न पुनरानन्तर्य्यातिरेकात् अन्वाहार्य्यमेव ॥०॥ ४ ॥०॥

समाप्ता प्रासङ्गिकी कथा। प्रकृतमधुनोच्यते,—

## दक्षिणाग्नौ हविषः संस्करणम् ॥ ५ ॥

अतिदेशस्वरसादाहिताग्नेरपि शालाग्नावेव माभूदित्येतदर्थमिदमुच्यते । यो गार्हपत्यादानीय प्रणीयते, सोऽयं दक्षिणाग्निः । स्पष्टमन्यत् ॥०॥ ५ ॥०॥

## ततश्चैवातिप्रणयः ॥ ६ ॥

ततस्तस्माद्दक्षिणाग्नेरेवाग्निमुद्धृत्य अतिप्रणयः पूर्व्वोक्तलक्षणः कर्त्तव्यः । च शब्दात् होमोऽपि तत्रैव स्यात् ॥०॥ ६ ॥०॥

## शालाग्नावनाहिताग्नेः ॥ ७ ॥

अनाहिताग्नेः स्मार्त्ताग्नेः शालाग्नौ हविषः संस्करणं होमश्च कर्त्तव्यम् । अतिप्रणयश्च तस्मादेव स्यात् । ननु, एतदवाच्यं शालाग्निः खल्वेतदर्थं एव । उच्यते । दक्षिणाग्नेरुपदेशादनाहिताग्नेः पिण्डपितृयज्ञ एव न स्यादित्यपि कस्यचिदाशङ्का स्यान्मन्दमतेः । अतस्तन्निरासार्थमेतदुच्यते ॥०॥ ७ ॥०॥

एवन्तावत् आहिताग्निशालाग्न्योर्यो विशेषः स सूचितः, अथेदानीमुभयसाधारणीं इतिकर्त्तव्यतां वक्तुमुपक्रमते ।

'एवं वा—

किं समस्त एव अन्वष्टक्यप्रकारः सूचितविशेषव्यतिरेकेण पिण्डपितृयज्ञे स्यात्? । एवं खलु प्राप्तम् । एवं प्राप्ते इदमारभ्यते,—

## एका कर्षूः ॥ ८ ॥

कर्त्तव्या,—इति सूत्रशेषः। अतिदेशात्त्रिसृणां प्राप्तत्वादेकेत्युच्यते। सा खल्वियं दक्षिणाग्रा स्यात्। कस्मात्?। अन्वष्टक्यकर्म्मणि आग्नेय्यभिमुखीनां कर्षूणामाग्नेय्यभिमुखीभिः कुशैः स्तरणदर्शनात्, इह च दक्षिणाग्रैः कुशैः परिस्तरणोपदेशात् कर्ष्वा अपि दक्षिणाग्रत्वावगमात्। तथा चोक्तम्।

"दक्षिणान्तान्तदग्रैस्तु पितृयज्ञे परिस्तरेत्"।

इति। दक्षिणाग्रामिति पाठे व्यक्तमेव कर्ष्वा दक्षिणाग्रत्वम् ॥०॥८॥०॥

## तस्या दक्षिणतोऽग्नेः स्थानम् ॥ ९ ॥

तस्याः कर्ष्वा दक्षिणतो दक्षिणस्यां दिशि अग्नेः स्थानं, न पुनरन्वष्टक्यकर्म्मवत् पूर्व्वतः ॥०॥ ९ ॥०॥

## नात्रोल्मुकनिधानम् ॥ १० ॥

दक्षिणार्द्धे कर्षूणां यदुल्मुकनिधानं तत्रोक्तमासीत्, तदत्र न कर्त्तव्यम् ॥०॥ १० ॥०॥

## न स्वस्तरः ॥ ११ ॥

तत्र कर्षूणां पश्चात् यदुक्तमासीत्, सोऽयं स्वस्तरोऽत्र न कर्त्तव्यः ॥ ॥०॥ ११ ॥०॥

## नाञ्जनाभ्यञ्जने ॥ १२ ॥

अत्र कार्य्ये। अञ्जनञ्च अभ्यञ्जनञ्च ते अञ्जनाभ्यञ्जने। अञ्जनं

सौवीराञ्जनं व्याख्यातमेव। अभ्यज्यतेऽनेन,—इत्यभ्यञ्जनं तैलम् ॥०॥ ॥ १२ ॥०॥

न सुरभि ॥ १३ ॥

अत्र कर्त्तव्यम् ॥०॥ १३ ॥०॥

न निह्नवनम् ॥ १४ ॥

निह्नवनं नमस्कारोपलक्षितै मंन्त्रैः—दक्षिणोत्तानौ पाणी कृत्वा,— इत्येवमादिना तत्र यदुक्तमासीत्, तदत्र न कर्त्तव्यम्। ते खल्विमे अतिदेशागता इह प्रतिषिध्यन्ते ॥०॥१४॥०॥

उदपाचान्तः ॥ १५ ॥

पिण्डपरिषेकार्थमुदपाचमन्तो यस्य, सोऽयमुदपाचान्तः पिण्डपितृयज्ञः स्यात्। ननु, एतदवाच्यम्, अतिदेशादेव प्राप्तत्वात्। उच्यते। याव-दुक्तकरणार्थमेतदुच्यते। तेन,'गन्धादीन् निःक्षिपेत्तूष्णीम्'—इत्यादिकं कर्म्म अत्र न भवति। अन्यदपि प्रयोजनमुत्तरत्र वक्ष्यामः ॥०॥ ॥१५॥०॥

वासस्तु निदध्यात् ॥ १६ ॥

पञ्जरक्षरार्थः। ननु, किमर्थमिदमुच्यते, वासः खल्वतिदेशादेव लभ्यते?। वासोऽन्तरविधानार्थम्—इत्याह। तुशब्देन पूर्व्वोक्तं वासो व्यवच्छिद्यते। कथं ज्ञायते?। पूर्व्वोक्तं खलु वासोऽतिदेशादेव प्राप्यते,—इति तदर्थं पुनः ग्रहणमनर्थकमेव स्यात्। तस्माद् वासो-

ऽन्तरमत्र विधीयते,—इत्यवगच्छामः। एककार्य्यार्थत्वात् पूर्व्वस्य वाससो निवृत्तिः स्यात्। (तन्निवृत्त्या च मन्त्रोऽपि तावन्मात्रः तदीयो निवर्त्तते। तेन, "एतद्वः पितरो वासः"—इति श्राद्धकल्पोक्तेनैव मन्त्रेण वाससो निधानं सिध्यति)। एकवचनसंयोगाच्चैकमेवात्र वासः स्यात्। अपूर्व्वं खल्वत्र वासो विधीयते। अतस्तदेकत्वमपि पक्षेकत्ववद्विवक्षितुमुचित-मेव।

इदमिदानीं सन्दिह्यते। किं श्रौतस्य गृह्योक्तस्य च पिण्डपितृयज्ञस्य समुच्चयः, आहोस्वित् विकल्पः, अथवा स्मार्त्तस्य निवृत्तिः, उताहो श्रौतस्यैव?—इति। उच्यते। स्मार्त्तस्य निवृत्तिस्तावन्न भवति। कस्मात्?। उपदेशस्यानर्थकत्वापत्तेः। समुच्चयोऽपि न युज्यते; एकार्थ-त्वात्। विकल्पोऽप्यसङ्गतः; अतुल्यबलत्वात्। पक्षे स्वशाखाश्रयं खल्वेवं परित्यज्येत। तच्चानिष्टम्। तस्मात्, श्रौतस्यैव निवृत्तिरित्यवगच्छामः। पिण्डपितृयज्ञः खल्वस्मच्छाखायां नास्ति। न खलु स्वशास्त्रोक्तमुपेक्ष्य पारशाखिकं श्रौतमुपादातुमुचितम्। तथाच कर्म्मप्रदीपः।

"अक्रिया त्रिविधा प्रोक्ता मुनिभिः कर्म्मकारिणाम्।
अक्रिया च परोक्ता च तृतीया चायथाक्रिया।
स्वशाखाश्रयमुत्सृज्य परशाखाश्रयन्तु यः।
कर्त्तुमिच्छति दुर्म्मेधा मोघं तत्तस्य चेष्टितम्"।

इति। अपिच। पूर्व्वञ्च उदपात्रामत्रं पिण्डपितृयज्ञस्य सूत्रयन्नाचार्य्यः पारशाखिकं श्रौतं नानुमन्यते। श्रौते पिण्डपितृयज्ञे खल्ववधाना जिघ्रणादिकमपि उदकनिषेकात् परतः श्रूयते। अपर आह। गृह्याग्निमतः स्मार्त्त एवाचार्य्यसम्मतः पिण्डपितृयज्ञः, श्रौताग्निमतस्तु

पारम्पाखिकोपि श्रौत एव, अग्निहोत्रादिवत्,—इति ॥०॥१६॥०॥

अवसिता प्रासङ्गिकी कथा। अथेदानीमष्टका कर्म्मशेषमेवानुवर्त्तामहे,—

माघ्या ऊर्द्ध्वमष्टम्याᳬ स्थालीपाकः ॥ १७ ॥

कर्त्तव्यः,—इति सूत्रशेषः। अष्टकायै त्वा,—इति निर्व्वापः ॥०॥ १७॥०॥

तस्य जुहुयात् ॥ १८ ॥

तस्य स्थालीपाकस्यैकदेशं जुहुयात् ॥०॥१८॥०॥

अष्टकायै स्वाहेति जुहोति ॥ १९ ॥

स्पष्टजुरक्षरार्थः। पूर्व्वेणैव जुहोतिना सिद्धे पुनर्जुहोतिग्रहणं शाकचरोरपि होमप्रज्ञापनार्थम् ॥०॥१९॥०॥

स्थालीपाकावृताऽन्यत् ॥ २० ॥

कृतभाष्यमेतत् ॥०॥२०॥०॥

शाकं व्यञ्जनमन्वाहार्य्यम् ॥ २१ ॥

अनु पश्चादोदनचरोराह्रियते,—इत्यन्वाहार्य्यं शाकं व्यञ्जनं कुर्य्यात्,—इति सूत्रशेषः। एतदुक्तं भवति। अस्यामष्टकायामोदनचरोः पश्चात् शाकचरुः कर्त्तव्यः। स च शाकचरुरोदनचरोर्व्यञ्जनार्थः मांसादिचरुवत्। तथाच पूर्व्वाष्टकायामुक्तम्।

"ओदनव्यञ्जनार्थन्तु पयभावेऽपि पायसम्"।

होमोऽपि पूर्व्ववत्तन्त्रेणैव स्यात्। कुतः?। शाकस्य व्यञ्जनतयोपन्यासेन स्वातन्त्र्यनिराकरणात्। तथा चोक्तम्।

"शाकञ्च फाल्गुनाष्टम्यां स्वयं पत्न्यपि वा पचेत्।
वास्तुशाकादिहोमस्य कार्य्यः पूर्णाष्टकाऽऽवृता"।

इति। अन्वाहार्य्यः,—इति केचित् पठन्ति। तत्र च, छान्दसत्वमाश्रयणीयम्। अन्वाहार्य्यश्चरुरिति चरुसम्बन्धविवक्षया वा कथञ्चित् समाधेयम्। अन्वाहार्य्ये,—इति पाठे, अन्वाहार्य्ये; पूर्व्वाष्टकायाः प्रकृतत्वादोदनचरोः पश्चादाह्रियमाणे मांसचरौ—तत्स्थाने,—इत्येतत्। तथाच, तदीयमांसचरुस्थाने अत्र शाकं व्यञ्जनं कुर्य्यात्,—इत्यर्थः। अन्वाहार्य्यश्राद्धे,—इति कथं न वर्ण्यते?। 'नाष्टकासु भवेत् श्राद्धम्'—इत्यष्टकाकर्म्मण्यन्वाहार्य्यश्राद्धनिषेधात्—इत्याह। तस्माद् यथोक्त एवार्थः॥०॥२१॥०॥

## अथ पितृदैवत्येषु पशुषु—वह वपां जातवेदः पितृभ्य इति वपां जुहुयात्॥ २२॥

अथशब्दः पूर्व्वोक्तायाः पश्वितिकर्त्तव्यताया अनुवृत्त्यर्थः। पित्रर्थं ये पशव आलभ्यन्ते त इमे पितृदैवत्याः पशवः। तेषु पितृदैवत्येषु पशुषु,—वहवपामिति मन्त्रेण वपां जुहुयात्। पितृदैवत्याश्च पशवः,—"श्रोत्रियेऽभ्यागते श्राद्धं महोक्षेण महाऽजेन वा दद्यात्"—इत्येवमादयस्तन्त्रान्तरोक्ता आदरणीयाः। कुतः?। स्वशास्त्रे विधानाभावात्। ओदनचरोश्चाच, पितृभ्यस्त्वा,—इति निर्व्वापः स्यात्। कस्मात्?। पित्रर्थत्वात्। एवं, सव्योत्तराभ्यां पाणिभ्यां सकृदवहन्यात्। सकृत्

फलीकुर्य्यात्। सकृत् प्रक्षालयेत्। प्रसव्यमवघट्टयेत्। दक्षिणत उद्वा-सयेत्। न च प्रत्यभिघारयेत्। अष्टर्चस्य चात्र निवृत्तिः स्यात्। कुतः?। मन्त्रलिङ्गविरोधात्। एवञ्च, अवदानानि सन्नीय त्रिधाविभागमकृत्वैव स्थालीपाकावृता सौविष्टकृदावृता वा अवदाय, पितृभ्यः स्वाहा,—इति सकृदेव जुहुयात्। प्रोक्षणनिर्व्वापप्रधानहोमास्तु प्राचीनावीतिनैव कर्त्तव्याः। कुतः?। पित्रर्थत्वात्। तथा चोक्तम्।

"प्राचीनावीतिना कार्य्यं पित्र्येषु प्रोक्षणं पशोः।
दक्षिणोद्वासनान्तञ्च चरोर्निर्वपणादिकम्।
सव्वयस्यावदानानां प्रधानार्थो न हीतरः।
प्रधानहवनञ्चैव शेषं प्रकृतिवद्भवेत्"।

इति ॥०॥२२॥०॥

## देवदैवत्येषु—जातवेदो वपया गच्छ देवानिति ॥२३॥

देवार्थं ये पशव आलभ्यन्ते त इमे देवदैवत्याः पशवः। तेषु जातवेद इति मन्त्रेण, वपां जुहुयात्,—इत्यनुवर्त्तते। आह। के पुनर्देवदैवत्याः पशवः?। उच्यते। योऽयं वास्तुकर्म्मणि 'कृष्णया गवा यजेत'—इत्येवमादिना सूत्रयिष्यते; ये च तन्त्रान्तरे,—'हिरण्यकामो वा याम्यायां मणिभद्रं रोहितेन यजेत, गोऽश्वकामः पौर्णमास्यां श्वेतेन',—इत्येव-मादयः, त इमे देवदैवत्याः पशवः। तत्र, वास्तुकर्म्मणि वास्तोष्पतये त्वा,—इति निर्व्वापः। होमे तु विशेषं वक्ष्यति। मणिभद्रयागादिषु मणिभद्राय त्वा,—इत्यादिर्निर्वापः। मणिभद्राय स्वाहा,—इत्यादिको होमः ॥०॥२३॥०॥

कथं पुनर्ज्ञायते; यन्मणिभद्रयागादिषु मणिभद्राय,—इत्यादिना निर्व्वापहोमौ भवतः,—इति ? । उच्यते ।

**अनाम्नातेषु तथाऽऽदेशं यथाऽष्टकायै स्वाहेति जुहोति ॥ २४ ॥**

आ-सम्यक् म्नातं आम्नातं तन्न भवतीत्यनाम्नातम्। तेषु यथैव श्रूयते, तथैवादेशो यथा भवति तथा कर्त्तव्यम्। एतदुक्तं भवति। येषु समशनीयचरुहोमोपनयनव्रतान्तसावित्रचरुहोमादिषु देवता निर्दिश्यन्ते न मन्त्राः; तेषु यदेव श्रूयते तदेवादिश्य निर्व्वपेत् जुहुयाच्च । एवञ्च, समशनीयचरौ अग्नये त्वा,—इत्यादिर्निर्वापः, अग्नये स्वाहा,—इत्यादिकश्च होमः । एवं सावित्रचरुहोमादिषु यथायथमूहनीयम् । येषु पुनराग्रहायणादिषु देवता नोपदिश्यते होममन्त्रश्चाव्यक्तलिङ्गः; तेषु यावन्मात्रं वाक्यादवगम्यते, तावत एवादेशः निर्व्वापे। आदिष्टमन्त्रेण तु होमः। येषु पुनश्चैत्यादिषु मन्त्रो नोपदिश्यते नापि देवता; तेषु चैत्यै त्वा,—इत्यादिना निर्व्वापः, चैत्यै स्वाहा,—इत्यादिना च होमः स्यात्। अत्र दृष्टान्तः। 'यथाऽष्टकायै स्वाहेति जुहोति',—इति। यथा खल्वष्टकायै स्वाहेति यदेव कर्म्मणो नामधेयं तेनैव जुहोति, एवं चैत्यादिष्वपि,—इति बोद्धव्यम्। आह। ननु, विषम उपन्यासः,—चैत्यादिषु देवता मन्त्रश्च नोपदिश्यते, न चैवमष्टका । तत्र हि देवता उपदिष्टा । उच्यते। सत्यमुपदिष्टा तत्र देवता, तथापि तु अन्तिमाष्टकायां 'अष्टकायै स्वाहा',—इति कर्म्मनामधेयेनैव होमः क्रियते, सूत्रप्रामाण्यात् । स खल्वयं कर्म्मनामधेयेन होमोऽत्र दृष्टान्तीकृतः । तस्माददोषः ॥०॥२४॥०॥

स्थालीपाकावृताऽन्यत् ॥ २५ ॥

व्याख्यातार्थं सूत्रम् ॥०॥२५॥०

ऋणे प्रज्ञायमाने गोलकानां मध्यमपर्णेन जुहु-
यात्—यत् कुसीदमिति ॥ २६ ॥

ऋणं प्रसिद्धम्। तस्मिन् प्रज्ञायमाने प्रकर्षेण ज्ञायमाने गोलकानां पलाशानां मध्यमपर्णेन मध्यमच्छदेन जुहुयात् यत् कुसीदमितिमन्त्रेण। अथ, प्रज्ञायमाने,—इत्येतदवाच्यम्? —इति चेत्। न। यत् खलु ऋणं प्रकर्षेण ज्ञायत एव केवलं, न पुनरपाकर्त्तुं शक्यते, तत्रैव होमोऽयं यथा स्यादित्येवमर्थत्वात्। एतदुक्तं भवति। ऋणमवश्य-मपाकरणीयम्। अन्यथा दोषश्रवणात्। तथाच स्मर्य्यते।

"तपस्वी चाग्निहोत्री च ऋणवान् म्रियते यदि।
अग्निहोत्रं तपश्चैव तत्सर्व्वं धनिनो भवेत्"।

इति। "ऋणानाद्मानपक्रिया"—इति चोपपातकगणनायां मनुनो-क्तम्। यदि पुनरत्यन्तमेवाधनो न शक्नोति तदपाकर्त्तुम्, तदैवं जुहु-यात्,—इति। अन्ये तु वर्णयन्ति,—नष्टे धनिके तदृक्थभागिनि च, ऋणापाकरणासम्भवे जुहुयात्,—इति। तदसङ्गतम्। कस्मात्?। राज्ञोऽप्यन्ततस्तदृक्थभाक्त्वात्। नहि कदाचिदपि राज्ञोऽभावोऽस्ति। तमिमं होमं यावत्सङ्ख्यमृणं तावत्सङ्ख्यमिच्छन्ति। त्रिप्रहोमञ्च मन्यन्ते ॥०॥२६॥०॥

अथातो हलाभियोगः ॥ २७ ॥

वर्णिष्यते,—इति सूत्रशेषः। अथशब्दः पूर्व्वप्रकृतापेक्षः। कथं

नाम ? । यथा पूर्व्वोक्तान्यष्टकादीनि अवश्यकर्त्तव्यानि, एवमिदमप्येतस्मिन् निमित्ते सत्यवश्यमेव कर्त्तव्यम्,—इति । अतःशब्दो हेत्वर्थः । यस्मात्;—

"ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन वा"।

इति कृष्यापि जीवनं मन्वादीनामनुमतम् । अतः एतस्मात् कारणात् । हलं लाङ्गलं तस्य आभिमुख्येन योगो हलाभियोगः,—कृषिप्रारम्भः,—इत्येतत् ॥०॥२७॥०॥

**पुण्ये नक्षत्रे स्थालीपाकꣳ श्रपयित्वैताभ्यो देवताभ्यो जुहुयात्,—इन्द्राय मरुद्भ्यः पर्ज्जन्यायाशन्यै भगाय ॥ ॥ २८ ॥**

ऋजुरक्षरार्थः । देवतानां विसमासकरणं निर्वापहोमयोः पृथक्त्वप्रज्ञापनार्थम् ॥०॥२८॥०॥

**सीतामाशामरडामनघाञ्च यजेत ॥ २९ ॥**

ऋजुरक्षरार्थः । विसमासकरणं पूर्व्ववत् । अथ, पूर्व्ववत् चतुर्थ्यन्तनिर्द्देशेनैव सिद्धे किमर्थं विभक्तिमतिक्रम्य यजेत,—इति पुनः क्रियते ? । आज्येनामूषां देवतानां होमप्रज्ञापनार्थमित्याह । कथं नाम ? । पूर्व्वविभक्तिमतिक्रामन् यजेत,—इति च पुनः कुर्व्वन्, पूर्व्वासामेव देवतानां चरुभागाभिसम्बन्धः नामूषाम्,—इति दर्शयति । आसां पुनर्देवतानामाज्येनैव होमः स्यात् । तथा चोक्तम् ।

"आश्वयुज्यां तथा कृष्यां वास्तुकर्म्मणि याज्ञिकाः ।
यज्ञार्थतत्त्ववेत्तारो होममेवं प्रचक्षते ।

द्वे पञ्च द्वे क्रमेणैता हविराहुतयः स्मृताः ।
शेषा आज्येन होतव्या इति कात्यायनोऽब्रवीत्" ।

इति ॥०॥२९॥०॥

**एता एव देवताः सीतायज्ञ खलयज्ञ प्रवपणप्रलवन-पर्य्ययणेषु ॥ ३० ॥**

यजेत,—इत्यनुवर्त्तते । सीता लाङ्गलपद्धतिः, तत्र यो यज्ञः स सीतायज्ञः । स चायं कृष्टस्य चेत्रस्य पूर्व्वोत्तरार्द्धे स्यात् । पक्वव्रीहि-यवमध्ये चेत्रस्य पूर्व्वार्द्धोत्तरार्द्धे,—इति केचित् । स खल्वयं सीतायज्ञः शरदि वसन्ते च स्यात् । कस्मात् ? । विशेषाभावात् । पक्वं शस्यं छेदनात् परतः चेत्रादाकृष्य यत्र परिष्कृते देशविशेषे स्थाप्यते, सोऽयं खलः । तत्र खलयज्ञः कर्त्तव्यः । स खल्वयं खलयज्ञोऽप्युभय-त्रैव करणीयो भवति,—यवानां खले, व्रीहीणां खले च । प्रवपणं वीजवपनम् । प्रशब्दात् समस्तेषु वीजेषु उप्तेष्वयं यज्ञः स्यात् । प्रल-वनं धान्यानां छेदनम् । प्रशब्दः पूर्व्ववत् । पर्य्ययणं—परि सर्व्वतो-भावेन धान्यानां खलादृगृहनयनम् । एतेषु सीतायज्ञादिषु एता एव देवताः यजेत ।

ननु, प्रवपणक्रमस्य युक्तत्वात् कस्मात् क्रमभेदः क्रियते ? । उच्यते । सीतायज्ञखलयज्ञयोस्तावदादितो निर्देशः व्रीहियवयो-र्द्वयोरेव धान्ययोस्तयोः करणप्रज्ञापनार्थः । प्रवपणादीनां क्रम-मतिक्रम्याभिधानं शारदधान्यमतिक्रम्य तेषां करणप्रज्ञापनार्थम् । तेन, सीतायज्ञखलयज्ञयोरुभयत्र करणात् चत्वारो यज्ञा भवन्ति, प्रवप-

णादीनां सकृत्करणाच्च त्रयः, मिलित्वा संवत्सरे सीतायज्ञादयः सप्त सम्पद्यन्ते। अष्टमश्च हलाभियोगः,—इति। अत एवोक्तम्। "सप्त सीतामखादयः"—इति।

इदमिदानीं सन्दिह्यते। एता एव,—इति किमनन्तरोक्ताः सीतादयो देवताः परामृश्यन्ते? आहोस्वित् पूर्व्वा इन्द्रादयः? उताहो सर्व्वा एव?—इति। तत्र, पूर्व्वाः पञ्च,—इति केचित् वर्णयन्ति। कुतः?। देवताशब्दसामान्यात्। पूर्व्वत्र तावत् एताभ्यो देवताभ्यः,—इति देवताशब्दः श्रूयते, अत्रापि, एता देवताः,—इति देवताशब्दः कृतः। तस्मात्, पूर्व्वास्वेव देवताशब्दप्रयोगात् पूर्व्वा एव गृह्यन्ते नोत्तराः। तदसङ्गतम्। कस्मात्?। यस्मादुत्तरासामग्रहणे सीतायाः ग्रहणं न स्यात्। न च सीतायज्ञे सीतायाः परित्यागः कर्त्तुमुचितः। अन्ये तु, सर्व्वासामेव ग्रहणमिच्छन्तः, पूर्व्ववत् पूर्व्वाः पञ्च चर्व्वाकृतयः उत्तराश्चाज्याकृतयः,—इति मन्यन्ते। तदप्यसङ्गतम्। कस्मात्?। एवम्—इत्यकरणात्। एवं खल्वेवमिति कुर्य्यात्। न खलु देवतायाः परामर्शे द्रव्यमपि परामर्ष्टव्यम्,—इति किञ्चिन्नियामकमस्ति। तस्मात्, एताः,—इति सर्व्वनाम्नः प्रकृतपरामर्शकत्वात् एवकारकरणाच्चाविशेषेण सर्व्वासामेव देवतानां परामर्शः,—इत्येतद्गृह्णीमः। पूर्व्वासां चरुणा उत्तरासामाज्येन होमः,—इति तु नानुमन्यामहे। प्रमाणाभावात्। तस्मात् सर्व्वासामाज्येनैवात्र होमः स्यात्। तथा चोक्तम्।

"केवलाज्यहविष्काः स्युः सप्त सीतामखादयः"।

इति। अतिक्रान्तपरामर्शश्च नाचार्य्यस्यानुमतः,—इत्यसकृदावेदितम् ॥०॥२०॥०॥

## आखुराजश्चोत्करेषु यजेत ॥ ३१ ॥

आखुराजो मुषिकानां राजा । तञ्च उत्करेषु यजेत । उत्कीर्य्यन्ते,—इत्युत्कराः पांशवो भण्यन्ते । चशब्दात् सर्व्वेषामेव सीतायज्ञादीनामन्ते आज्येनायमाखुराजस्य होमः स्यात् । तथा चोक्तम् ।

"केवलाज्यहविष्काः स्युः सप्त सीतामखादयः ।
आज्येनाखुं यजेदग्नौ तदन्ते, नित्यमेव तत्" ।

इति । आखुराजाय स्वाहा,—इति होमः । सीतायज्ञादिषु आखुराजहोमे च चिप्रहोमन्यायमिच्छन्ति । यजेत,—इति पुनः करणं पूर्व्वेणैककर्म्याशङ्कानिरासार्थम् ॥०॥३१॥०॥

## इन्द्राण्याः स्थालीपाकः ॥ ३२ ॥

कर्त्तव्यः,—इति सूत्रशेषः ॥०॥३२॥०॥

## तस्य जुहुयादेकाष्टका तपसा तप्यमानेति ॥ ३३ ॥

स्पष्टार्थमेतत् ॥०॥३३॥०॥

## स्थालीपाकावृताऽन्यत् स्थालीपाकावृताऽन्यत् ॥३४॥

कृतभाष्यं सूत्रम् । द्विर्व्वचनं प्रकरणसमाप्त्यर्थम् । अत्र किञ्चिद्वक्तव्यमस्ति । तच तावत् पृच्छामः । कः पुनरिन्द्राण्याः स्थालीपाकस्य कालः? । तत्र केचिदाहुः । चतुरष्टको हेमन्तः,—इति अष्टकाचतुष्टावगमात् तिसृष्वेव च कर्म्मोपदेशात् चतुर्थ्यष्टकायामेतत् कर्त्तव्यम्,—इति । तदसङ्गतम् । कस्मात् ? । चतुरष्टकपचस्याचार्य्यानमुमतत्वात् । तदिदमभिहितमस्माभिः,—"तथा गौतमवार्कखण्डी"—

इत्यत्र। अपरे तु,—चैत्र्याः पाकयज्ञपक्षे कर्म्मणि स्वकालानुपदेशात् तद्विषयताम् एतस्य मन्यन्ते। तदप्यसमीचीनम्। कुतः?। अनाम्नातेषु तथाऽऽदेशम्—इत्यनेनैव तत्र कर्म्मणः सिद्धत्वात्। अन्ये तु, पारिभाषिकमेव अस्य कालम्—इच्छन्ति।

तत्र वदामः। एकाष्टका,—इति मन्त्रलिङ्गादेकाष्टकायामेतत् कर्त्तव्यम्। तदिदं सामर्थ्यम् नाम प्रमाणं वाक्यस्य बाधकम्। आह। का पुनरियमेकाष्टका नाम?। तत्र व्याख्यातारो विवदन्ते। माघ्यनन्तराऽष्टका एकाष्टका,—इति पूर्व्वमीमांसाभाष्ये आचार्य्येण शवरस्वामिना निर्णीतम्। "माघी वैकाष्टका श्रुतेः"—इति सूत्रयतो भगवतो जैमिनेरप्येष एवाशयोऽवधार्य्यते। तथा आपस्तम्बोऽपि। "माघ्याः पौर्णमास्या उपरि षड़ष्टका, तस्यामष्टमी ज्येष्ठा या सम्पद्यते तामेकाष्टकेत्याचक्षते"—इति सूत्रयन्नेतदेवाह। महाब्राह्मणभाष्ये तु चैत्र्यनन्तरायामप्यष्टम्यामेकाष्टकाशब्दप्रयोगः समर्थितः। केचित्तु, प्रोष्ठपद्या ऊर्द्धकालभाविन्यामष्टकायामेतेन भाव्यम्,—इति वदन्ति। तदत्र भवन्तो भूमिदेवाः प्रमाणम् ॥०॥३४॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये चतुर्थप्रपाठकस्य चतुर्थी काण्डिका ॥०॥

---

उक्तो नित्यनैमित्तिकविधिः, अथेदानीं काम्यविधयो वक्तव्याः । तेषु तावत्,—

**काम्येषत ऊर्द्धम् ॥ १ ॥**

वक्ष्यमाणा विधयो वेदितव्याः ॥०॥ १ ॥०॥

**पूर्व्वेषु चैके ॥ २ ॥**

पूर्व्वेषु नित्यनैमित्तिकेष्वपि वक्ष्यमाणा विधयो भवन्ति,—इति एके आचार्य्या मन्यन्ते ॥०॥ २ ॥०॥

के पुनस्ते विधयः ? । उच्यते,—

**पश्चादग्ने र्भूमौ न्यञ्चौ पाणी प्रतिष्ठाप्येदं भूमे र्भजामह इति ॥ ३ ॥**

जपेत्,—इति सूत्रशेषः । पश्चादग्नेरित्याद्युक्तार्थम् । न्यञ्चपाणि प्रतिष्ठापनञ्च,—

"दक्षिणं वामतो वाह्यमात्माभिमुखमेव च ।

करं करस्य कुर्व्वीत करणे न्यञ्चकर्म्मणः" ।

इति कर्म्मप्रदीपोक्तप्रकारेण कर्त्तव्यम् । स खल्वयं—"भूमिजपः"—इत्याख्यायते ॥०॥ ३ ॥०॥

## वस्वन्तꣳरात्रौ धनमितिदिवा ॥ ४ ॥

रात्रौ क्रियमाणे कर्म्मणि 'वसु' शब्दान्तं,—दिवाक्रियमाणे कर्म्मणि 'धनम्'—इत्यन्तं कृत्वा, इदं भूमेरिति मन्त्रं जपेत् ॥०॥ ४ ॥०॥

## इमꣳस्तोममिति तृचेन परिसमूहेत् ॥ ५ ॥

इमं स्तोमम्,—इत्यादिना ऋक्त्रयेण परिसमूहेत्—विक्षिप्तानग्न्यवयवानेकीकुर्य्यात्। अन्यत्र क्षिप्रहोमेभ्यः। तथा चोक्तम्।

"न कुर्य्यात् क्षिप्रहोमेषु द्विजः परिसमूहनम्"।

इति। तिसृणामृचां समाहारः तृचः। "ऋचि त्रे रुत्तरपदादिलोपश्च छन्दसि"—इति तत्पदं सिद्धम्। "छन्दोवत् सूत्राणि कवयः कुर्व्वन्ति"—इत्यभ्युपगमात्। तदिदं परिसमूहनं यथाकरणीयं तदाह कर्म्मप्रदीपः।

"कृत्वाऽग्न्यभिमुखौ हस्तौ स्वस्थानस्थौ सुसंहितौ।
प्रदक्षिणं तथाऽऽसीनः कुर्य्यात् परिसमूहनम्"॥

इति। तस्मात्,—दक्षिणहस्तेन कुशान् गृहीत्वा,—इत्यसङ्गतैषा कल्पना भवदेवस्य ॥०॥ ५ ॥०॥

## वैरूपाक्षः पुरस्ताद्धोमानाम् ॥ ६ ॥

वैरूपाक्षः,—उपस्थ तेजस्व,—इत्यादि जपः,—इति केचित्। विरूपाक्षशब्दो यस्मिन् विद्यते, सोऽयं वैरूपाक्षः—भूर्भुवः स्वरोम्—इत्यादिकोमन्त्रः,—इति तत्त्वकारः। पथामाग मन्त्रकाण्डे तु "भूर्भुवःस्वर् ॐ महान्तमात्मानं प्रपद्ये"—इति प्रतीकं प्रपदशेषतयैव पठ्यते। "विरूपाक्षोऽसि दन्ताञ्जिः"—इत्येतदारभ्य वैरूपाक्षः पठ्यते। स

खल्वयं वैरूपाक्षः होमानां पुरस्ताद्जपतो जप्तव्यः। होमानामिति कुर्व्वन् सहोमकेष्वेव काम्येष्वेतस्य कर्त्तव्यतां दर्शयति। पूर्व्वाणि तर्ह्यहोमकेष्वपि कर्त्तव्यानि?। न,—इत्युच्यते। कस्मात्?। अग्निसम्बन्धेन विधानात्। न्युब्जकरणं परिसमूहनञ्च खल्वग्निसंबन्धेन विधीयते। न खल्वहोमकेऽग्निरस्ति। अथापि स्यात्,—एतस्मादेव कारणात्तत्राप्यग्निमुत्पादयिष्यामहे,—इति। अत्रोच्यते। नाप्रयोजकत्वात्। नैषा साध्वी कल्पना। कस्मात्?। अप्रयोजकत्वात्। सिद्धं खल्वग्निमनूद्य तत्संबन्धेन जपादिकमेव वाक्यानि विदधति, न पुनरग्निमुत्पादयितुमपि प्रयोजयन्ति। कथं ज्ञायते?। वाक्यस्य तथासामर्थ्यात्। उभयपरत्वे वाक्यभेदापत्तेश्च। कथम्। अग्निसंबन्धेनैतानि कर्त्तव्यानि, अग्निश्चोत्पादनीयः,—इति यदि द्वावप्यर्थौ विधित्सितौ, भिद्येत तर्हि वाक्यम्। अन्यदस्य रूपं विधीयमानस्य अन्यच्चानूद्यमानस्य भवति। तस्मात्,—सहोमकेष्वेव एवमन्तानां करणम्,—इति सिद्धम्। तत्त्वकारस्तु,—होमानां वक्ष्यमाणप्रागुक्तनित्यनैमित्तिकानाम्,—इति वर्णयाञ्चकार॥०॥ ६ ॥०॥

## काम्येषु च प्रपदः॥ ७॥

प्रपदः,—तपश्च तेजश्च,—इत्यादिकोमन्त्रः, काम्येषु पुरस्तात् जप्तव्यः। पञ्चदात् होमेष्वपि। एतदुक्तं भवति। द्विविधानि तावत् काम्यानि भवन्ति—होमसंयुक्तान्यहोमकानि च। तत्र, वैरूपाक्षोहोमसंयुक्तेष्वेव, प्रपदस्तु सर्व्वत्रैव स्यात्,—इति। तदिदं काम्यपदं होमादन्येषामपि काम्यानां ग्रहणार्थम्। काम्येष्वत जर्द्धम्—इति खल्वाचार्यः स

होमकाम्येष्व काम्यान्यभिप्रेत्य सूचयाञ्चकार,—इति लिख्यते। अतएव चशब्दः सहोमकानां समुच्चयार्थः। अथवा। पूर्व्वेषु चैके,—इत्युभयेषामधिकारात् पूर्व्वेष्वप्ययं विधिः स्यात्। अतस्तन्निरासार्थं काम्यग्रहणम्। चशब्दमेवकारार्थं वर्णयतस्तत्त्वकारस्याप्येषैव वर्णना अनुमतेति गम्यते। एवञ्च, पूर्व्वाणि पूर्व्वेष्वपि पचतः प्राप्तानि,—इति बोद्धव्यम्॥०॥ ७॥०॥

अथेदानीं प्रपदवैरूपाक्षयोर्जपप्रकारोऽभिधीयते,—

**तपश्च तेजश्चेति जपित्वा प्राणायाममायम्यार्थमना वैरूपाक्षमारभ्योच्छ्वसेत्॥ ८॥**

तपश्च तेजश्च,—इत्यादिमन्त्रं (प्रपदरूपं) जपित्वा, तत्परिसमाप्तौ, प्राणानामायमनं प्राणायामः,—"त्रिरभ्यस्तः पूरककुम्भकरेचकाख्यः प्राणायामः,"—इति सन्ध्यासूत्रोक्तलक्षणः, तमायम्य कृत्वा,—इत्यर्थः। प्रथमं प्राणानायम्य पश्चात्तपश्च तेजश्च,—इत्यादिमन्त्रजपः,—ईत्यसङ्गतैषाकल्पना। 'अर्थमनाः' अर्थः प्रयोजनम्, तस्मिन् मनो यस्य, सोऽयमर्थमनाः,—यः कश्चिदर्थः साधयितुमभिप्रेतः, तं ध्यायन्,—इत्येतत्। 'वैरूपाक्षमारभ्य' 'उच्छ्वसेत्' प्राणान् विमुञ्चेत्,—इत्यर्थः। आवृत्य,—इति कश्चित् पठति, वैरूपाक्षं जप्त्वा वायुं रेचयेत्,—इति व्याचष्टे च। प्राणायामोऽप्यत्र काम्येष्वेव स्यात् न पूर्व्वेषु। कथं ज्ञायते?। अर्थमनाः,—इति करणात्। प्रपदजपानन्तरविधानाच्च। पूर्व्वेषु तु यथाम्नातमेव करणीयं न कश्चिद्विशेषः।

अत्र कश्चिदाह। प्राणानां संयमनमेवात्र कर्त्तव्यमुपदिश्यते, न तु

प्राणायामो यथोक्तलक्षणः,—इति। तदसङ्गतम्। कस्मात्?। प्राणायाममायम्य,—इति सूत्रणात्। अन्यथा, प्राणानायम्य,—इति कुर्य्यात्। एतेन,—प्राणधारणमात्रं वदता रघुनन्दनेनैतदनुपपत्तिभिया, प्राणानायम्य,—इति यत् परिकल्प्य लिखितं, तदप्यनादरणीयम्। प्राणायाममायम्य,—इत्येतस्यैव पाठस्य सर्व्वत्रोपलम्भात्। पूर्व्वैर्व्याख्यातृभिस्तथैव वर्णनाच्च। शिष्टाश्च प्राणायाममेव यथोक्तलक्षणमाचरन्ति, न प्राणधारणमात्रम्। स खल्वयं प्रपदो वैरूपाक्षश्च क्षिप्रहोमेषु न भवति। कुतः?।

"न कुर्य्यात् क्षिप्रहोमेषु द्विजः परिसमूहनम्।
वैरूपाक्षञ्च न जपेत् प्रपदञ्च विवर्ज्जयेत्"।

इति वचनात्॥०॥ ८ ॥०॥

## काम्येषु त्रिरात्राभोजनम्॥ ९ ॥

काम्येषु कर्म्मसु कर्त्तव्येषु त्रिरात्रमभोजनं प्रथमतः करणीयम्। आह। काम्येषु,—इति किमर्थं क्रियते? ननु काम्येष्वत ऊर्द्धम्,—इत्यधिकृतान्येव काम्यानि। नैष दोषः। पूर्व्वेषु चैके,—इत्युभयेषामधिकारात् पूर्व्वेष्वेतत् कदाचिदपि माभुदित्येवमर्थत्वात् काम्यग्रहणस्य॥०॥९॥०॥

## त्रीणि वा भक्तानि॥ १० ॥

त्रिरात्रमत्रापि सम्बध्यते। त्रीणि वा भक्तानि भोजनानि कर्त्तव्यानि। त्रीण्येवेति नियमार्थतया पर्य्यवसानात् भक्तान्तराणां निवृत्तिरवगम्यते। एतदुक्तं भवति। त्रिरात्रमेकभक्तं नक्तं वा कुर्य्यात्,—इति। अभक्तानि,—इति पाठेपि त्रीण्येव अभक्तानि,—इति भक्तत्रयमात्रमेव

लभ्यते,—इति समान एवार्थः। वाशब्दात् जघन्योऽयं पक्षः, तेनाश-क्तस्यैव स्यात्, न तु शक्तस्यापि ॥०॥ १० ॥०॥

## नित्यप्रयुक्तानान्तु प्रथमप्रयोगेषु ॥ ११ ॥

नित्यमहरहर्यानि कर्म्माणि प्रयुज्यन्ते, तानि नित्यप्रयुक्तानि,—"भृषि-त्यनकाममारं नित्यं प्रयुञ्जीत"—इत्येवमादीनि। तेषां प्रथमप्रयोगेषु प्रथमारम्भेषु त्रिरात्राभोजनादिकं न तु प्रतिप्रयोगमित्यर्थः। अश-क्यत्वादित्यभिप्रायः। तदनेन, अनित्यप्रयुक्तानां प्रतिप्रयोगं करणं दर्शयति। तुशब्दोऽनर्थकोनिपातो मुखसुखार्थी वा ॥०॥११॥०॥

## उपोष्य तु यजनीयप्रयोगेषु ॥ १२ ॥

यजनीयेति पक्षादियज्ञमाहुः। तेषां यजनीयानां यः प्रयोगोऽनु-ष्ठानं, तेषु उपोष्य प्रयोगः कर्त्तव्यः, न तत्र त्रिरात्रभोजनादिकमि-त्यर्थः। तुशब्दः पूर्व्ववत् बोद्धव्यः।

आह। अथ, इदमवाच्यं ननु तत्रोपवासविधानादेव स प्राप्यते, अथोच्यते,—कारणं वक्तव्यम्। उच्यते। नित्ये तावत् पक्षादिचरौ उप-वासः सूचितः, न स काम्येषु प्राप्नोति, अतः काम्येऽपि तस्य प्राप्त्य-र्थमेतत् सूचितम्। अथवा। उपवासवत् त्रिरात्राभोजनादिकमपि स्यात्, अतस्तन्निवृत्त्यर्थमेतदुच्यते। कथं नाम? उपोष्यैव न पुन-स्त्रिरात्राभोजनादिकमपि कृत्वा,—इति। एवञ्च, तुशब्दः त्रिरात्रा-भोजनादिव्यवच्छेदकोऽपि भवति ॥०॥ १२ ॥०॥

## उपरिष्टाद्दैक्ष्यं सान्निपातिकम् ॥ १३ ॥

यत् किल सन्निपतितमेव ज्ञायते, तत् सान्निपातिकमनियतनिमित्तं

परिवेषादिकमाचक्षते। तदिदं साव्रिपातिकमुपरिष्टाद्दैक्षं भवति। दीक्षा पुरश्चरणं त्रिरात्राभोजनादिकमित्येतत्। उपरिष्टात् कर्म्मणः पश्चात् दीक्षा यस्य, तदिदमुपरिष्टाद्दैक्षम् ॥०॥ १३ ॥०॥

काम्यपरिभाषामभिधाय, अथेदानीं काम्यानि कर्म्माण्यभिधीयन्ते,—

अरण्ये प्रपदं प्रयुञ्जीत दर्भेष्वासीनः ॥ १४ ॥

अरण्ये प्रपदं यथोक्तलक्षणं प्रयुञ्जीत। कथम्?। आसीनः उपविष्टः। क्व?। दर्भेषु कुशेषु ॥०॥ १४ ॥०॥

दर्भेषु,—इत्येतदिदानीं विशिनष्टि,—

प्राक्कूलेषु ब्रह्मवर्चसकामः ॥ १५ ॥

ब्रह्मवर्चसमध्ययनाश्रयं तेजः। तत् कामयते,—इति ब्रह्मववर्चसकामः। स खल्वयं ब्रह्मवर्चसकामः, प्राक्कूलेषु प्रागग्रेषु, दर्भेष्वासीनः अरण्ये प्रपदं प्रयुञ्जीत,—इति सम्बध्यते। केचित् पूर्व्वेण सूत्रेण सहास्यैक सूत्रतामिच्छन्ति ॥०॥ १५ ॥०॥

उदक्कूलेषु पुत्रपशुकामः ॥ १६ ॥

पुत्रान् पशूंश्च यः कामयते,—सोऽयं पुत्रपशुकामः, उदक्कूलेषु उदगग्रेषु दर्भेष्वासीनः अरण्ये प्रपदं प्रयुञ्जीत,—इत्यनुवर्त्तते ॥०॥ १६ ॥०॥

उभयेषूभयकामः ॥ १७ ॥

उभयं कामयते,—इत्युभयकामः; ब्रह्मवर्चसकामः पुत्र पशुकामश्च मिलितोभयकामः—इत्येतत्। अपर आह। "उभयकामः"—ब्रह्म-

वर्चसकामः पुत्रकामश्च। अथवा। ब्रह्मवर्चसकामः पशुकामश्च"— इति। स खल्वयमुभयकामः, उभयेषु प्रागग्रेषु उदगग्रेषु च मिलिते-ष्वित्यर्थः। दर्भेष्वासीनः,—अरण्ये प्रपदं प्रयुञ्जीत,—इत्यनुवर्त्तत एव। सेयं त्रिसूत्री काम्यकर्मविधानार्था। काम्येषु च प्रपदः,—इत्यस्य विशेषार्था,—इति केचित् ॥०॥ १७ ॥०॥

## पशुस्वस्त्ययनकामो व्रीहियवहोमं प्रयुञ्जीत सहस्र-बाहुर्गौपत्य इति ॥ १८ ॥

पशूनां स्वस्त्ययनं मङ्गलमारोग्यमित्येतत्। तत् कामयते,—इति पशुस्वस्त्ययनकामः। व्रीहियवौ प्रसिद्धौ। ताभ्यां होमो व्रीहियव-होमः। तं प्रयुञ्जीत कुर्य्यात्, सहस्रबाहुरिति मन्त्रेण। त्रिप्र-होममत्रेच्छन्ति। पशुशब्देनात्र गावोऽभिप्रेयन्ते,—इत्यवगच्छामः। कस्मात्?। गौपत्य इति मन्त्रलिङ्गानुग्रहात्। इहत् क्षुद्रपशूनामु-परिष्टाद्विशेषोपदेशाच्च ॥०॥ १८ ॥०॥

## कौतोमतेन महावृक्षफलानि परिजप्य प्रयच्छेत् ॥ ॥ १९ ॥

महागुणयोगात् महावृक्षोऽभिप्रेतः, न परिमाणमहत्त्वात्। एवमेके। महागुणयोगात् परिमाणमहत्त्वाच्च महावृक्षः। एवमपरे। कः पुन-रसौ?। यः कश्चिद्भोज्यफलः चूतनारिकेलादिः,—इत्याह। महा-वृक्षस्य फलानि महावृक्षफलानि। कौतोमतेन कौतोमतशब्दवता मन्त्रेण,—"कौतोमतं संवननं"—इत्यादिना मन्त्रेणेत्येतत्। परिजप्य प्रयच्छेत् दद्यात् ॥०॥ १९ ॥०॥

कस्मै प्रयच्छेत्?—

यस्यात्मनि प्रसादमिच्छेत्तस्मै ॥ २० ॥

आत्मनि स्वस्मिन् विषये यस्य प्रसन्नतामिच्छेत्, तस्मै प्रयच्छेत् ॥०॥ ॥०॥२०॥०॥

किं परिजपितानि सर्व्वाण्येव फलानि तस्मै प्रयच्छेत्? । न । किन्तर्हि?—

एकभूयांऽस्यात्मनो युग्मानि कुर्य्यात् ॥ २१ ॥

तेषां फलानां मध्यात् एकभूयांसि—युग्मानि समानि, फलानि आत्मनः आत्मार्थं कुर्य्यात् कल्पयेत् । एकेन भूयांसि एकभूयांसि—एकाधिकानीत्यर्थः । एतदुक्तं भवति । कानिचित् फलानि परिजप्य तेषां मध्यात् कियन्ति अयुग्मानि फलानि तस्मै प्रयच्छेत्, तेभ्यश्च एकेन फलेनाधिकानि अतएव युग्मानि फलानि आत्मनोऽर्थे कुर्य्यात्,—इति । आह । ननु, सन्निधाम्यात् अयुग्मानि,—इत्यपि शक्यते वर्णयितुम्? । उच्यते । सत्यं शक्यते वर्णयितुं, कल्पनागौरवापत्तेस्तु न तथा वर्ण्यते । माङ्गलिकत्वाच्चात्मनो युग्मानामेव वर्णयितुमुचितत्वात् । युग्मानि किल माङ्गलिकानि भवन्ति । "वृद्धिपूर्त्तेषु युग्मानाशयेत्"—इत्यादिदर्शनात् ॥०॥ २१ ॥०॥

वृक्षइवेति पञ्चर्चः ॥ २२ ॥

पञ्चानामृचां समाहारः पञ्चर्चः । वृक्ष इव,—इत्येवमादिकः पञ्चर्चोऽधिकृतो वेदितव्यः ॥०॥ २२ ॥०॥

तस्मिन् प्रथमं पार्थिवं कर्म्म ॥ २३ ॥

तस्मिन् अधिकृते पञ्चर्षे, तद्विषये,—इत्यर्थः। प्रथममाद्यं कर्म्म पार्थिवम्। पृथिव्यर्थं क्रियते,—इति पार्थिवम्—ग्रामक्षेत्राद्यर्थम्—इत्यर्थः। वर्त्तिष्यते,—इति सूत्रशेषः ॥०॥ २३ ॥०॥

अर्द्धमासमभुक्त्वा ॥ २४ ॥

कुर्य्यात्,—इति सूत्रशेषः। अस्मात् विशेषोपदेशात् अत्र सामान्यस्य पुरश्चरणस्य त्रिरात्राभोजनादेर्निवृत्तिरिति बोद्धव्यम् ॥०॥ २४ ॥०॥

अशक्तौ वा पेयामन्यतरं कालम् ॥ २५ ॥

अर्द्धमासाभोजनस्य खल्वशक्तौ प्रकृतमर्द्धमासं व्याप्य पेयां वा पीत्वा पार्थिवं कर्म्म कुर्य्यात्। "पेया आणाऽच्छमण्डयोः"—इत्याभिधानिकाः। किं सायम्? । न। 'अन्यतरं कालम्'। प्रातर्व्वा सायं वा,—इत्यनियमः ॥०॥ २५ ॥०॥

यत्रात्मानं परिपश्येत् ॥ २६ ॥

यत्र यस्मिन् काले पेयां पिबेत्,—तस्मिन् काले आत्मानमात्मच्छायां परिपश्येत्—दर्पणादाविति वाक्यशेषः।

एवं वा,—

यत्र यस्यां पेयायामात्मानं परिपश्येत्, तां पेयां पीत्वा,—इति पूर्व्वोक्तां पेयामनेन विशिनष्टि ॥०॥ २६ ॥०॥

एतद्व्रतमर्द्धमासव्रतेषु ॥ २७ ॥

यत्र यत्रार्द्धमासव्रतमुपदेक्ष्यते, तत्र तत्र,—"आचितशतकामोऽर्द्ध-

मासव्रतः"—इत्येवमादौ, एतत् अनन्तरोक्तं व्रतं बोद्धव्यम् ॥ ॥०॥ २७ ॥०॥

आनुषङ्गिकमभिधाय अथेदानीं प्रकृतं पार्थिवं कर्माह,—

**पौर्णमास्याᳪं रात्रावविदासिनि ह्रदे नाभिमात्रम-वगाह्याक्षततण्डुलान्दृगन्तेष्वास्येन जुहुयात्—स्वाहेत्यु-दके ॥ २८ ॥**

पौर्णमास्यां रात्रौ,—इत्यतिरोहितार्थम्। "विदासः शोषः, स यस्य ह्रदस्यास्ति स विदासी। अविदासी ग्रीष्मेऽप्यक्षीणजलः,—इत्यर्थः। तस्मिन् अविदासिनि ह्रदे"—इति केचित्। आचार्य्यपुत्रस्तु आह गृह्यासंग्रहे।

"मध्ये स्थण्डिलमन्ते च वारिणा परिसंवृतम्।

अविदासिनं ह्रदं विद्यात्ताद्दृशं कर्मणो विदुः"।

इति। तदेतस्मिन् अविदासिनि ह्रदे, नाभिमात्रं नाभिपरिमितम् उदकम् अवगाह्य अवतीर्य्य, अक्षततण्डुलान्—अक्षता यवाश्च तण्डुलाश्च तान्—यवमिश्रान् व्रीहितण्डुलान्,—इति केचित्। अक्षतानां यवानां तण्डुलान्,—इत्यन्ये। अपरे पुनर् अक्षतशब्देन तण्डुलानेव विशेष-यन्ति;—अक्षतानखण्डितान् तण्डुलान्,—इति। तदत्र भवन्तो भूमिदेवाः प्रमाणम्। तानिमानक्षततण्डुलान् दृगन्तेषु प्रकृतानां पद्मानामृचामवसानेषु आस्येन मुखेन जुहुयात् स्वाहेत्युच्चार्य्य। कुत्र जुहुयात्?। उदके जले। अनग्निकत्वादस्मिन् होमे स्वाहाकारविलोपं कश्चिदाशङ्कीत मन्दमतिरिति स्वयमाचार्य्यः स्वाहेति सूचयाञ्चकार।

तस्मात्, स्वाहाकारावसान एव होमोऽयं स्यात्। ऋगन्तेषु,—इति तर्हि किमर्थम्?। प्रत्येकं ऋगवसानेषु होमप्रज्ञापनार्थमित्याह। अन्यथा खल्वेकैवाहुतिः पञ्चर्चेन स्यादित्यपि कश्चिदाशङ्कीत। अत्र च, अनग्निकत्वात् यावदुक्तमेव कर्त्तव्यमिति द्रष्टव्यम्॥०॥ २८ ॥०॥

अथापरम् ॥ २९ ॥

अथशब्दः पूर्व्वोक्तत्रिरात्राभोजनाद्यानन्तर्य्यार्थः। पूर्व्वप्रकृतपञ्चर्चानुसन्धानार्थः वा। अथ एतस्मिन्नेव पञ्चर्चे अपरं अन्यत् कर्म्म, वर्त्तिष्यते,—इति सूत्रशेषः ॥०॥ २९ ॥०॥

तदपरं कर्म्म अभिधीयते, आ काण्डिकापरिसमाप्तेः,—

प्रथमयाऽऽदित्यमुपतिष्ठेत भोगकामोऽर्थपति-
चक्षुर्व्विषये सिद्ध्यत्यर्थः ॥ ३० ॥

प्रकृतस्य पञ्चर्चस्य प्रथमया ऋचा,—वृक्ष इव पक्वस्तिष्ठति,—इत्यादिकयेत्येतत्। आदित्यमुपतिष्ठेत आराधयेत्। उपस्थानञ्चेदम्,—

"तदसंसक्तपार्ष्णिर्व्वा एकपादर्द्धपादपि।
कुर्य्यात् कृताञ्जलिर्व्वापि ऊर्द्ध्वबाहुरथापि वा"।

इति कर्म्मप्रदीपोक्तप्रकारेण करणीयम्। कः उपतिष्ठेत?। 'भोगकामः'। भोगं कामयते,—इति भोगकामः। कस्मिन् प्रदेशे उपतिष्ठेत?। अर्थपतिचक्षुर्व्विषये। यस्मादर्थपतेः सकाशात् भोगं कामयते, तस्यार्थपतेः चक्षुर्व्विषये चक्षुर्गोचरे प्रदेशे। एवं कृते खल्वस्य, 'सिद्ध्यति' 'अर्थः' प्रयोजनम् ॥०॥ ३० ॥०॥

द्वितीययाऽऽदित्ये परिविष्यमाणेऽक्षततण्डुलान् जुहुयात् बृहत्पत्रस्वस्त्ययनकामः ॥ ३१ ॥

पदं त्रायते,—इति पत्रं वाहनमाचक्ष्महे। बृहत्शब्दो महद्वचनः। बृहत् च तत् पत्रञ्चेति बृहत्पत्रं हस्त्यश्वादिकमुच्यते। तेषां स्वस्त्ययनमारोग्यं कामयते,—इति बृहत्पत्रस्वस्त्ययनकामः;—प्रकृतस्य पञ्चर्चस्य द्वितीयया ऋचा,—ऋतं सत्ये प्रतिष्ठितम्,—इत्येवमादिकयेत्येतत्। आदित्ये सवितरि परिविष्यमाणे, अक्षततण्डुलान् जुहुयात्,—इत्युक्तार्थम्। परिवेषः परिधिरित्यनर्थान्तरम्। यत्र खल्वादित्यस्य किरणाः वातेन मण्डलीभूताः तस्य परितो नानाभाः लक्ष्यन्ते, सोऽयमादित्यस्य परिवेषः,—इत्याचक्षते। तथा चोक्तम्।

"वातेन मण्डलीभूताः सूर्य्याचन्द्रमसोः कराः।
नानाभा व्याहितस्वन्तः परिवेषाः प्रकीर्त्तिताः"।

इति। तदिदमुपरिष्टाद्वक्ष्यम्। त्रिप्रश्नोममत्रेच्छन्ति ॥०॥ ३१ ॥०॥

तृतीयया चन्द्रमसि तिलतण्डुलान् क्षुद्रपशुस्वस्त्ययनकामः ॥ ३२ ॥

प्रकृतस्य पञ्चर्चस्य तृतीयया ऋचा,—अभिभागोऽसि,—इत्यादिकयेत्येतत्। चन्द्रमसि परिविष्यमाणे तिलतण्डुलान् जुहुयादित्यनुवर्त्तते। तिलतण्डुलान्,—इति, अक्षततण्डुलान्,—इतिवद्व्याख्येयम्। को जुहुयात्?। क्षुद्रपशुस्वस्त्ययनकामः। क्षुद्रपशुशब्देनाजाविकाद्युच्यते। सर्व्वमन्यत् पूर्व्ववत् ॥०॥ ३२ ॥०॥

**चतुर्थ्याऽऽदित्यमुपस्थायार्थान् प्रतिपद्येत स्वस्त्यर्थवा-नागच्छति ॥ ३३ ॥**

प्रकृतस्य पञ्चर्चस्य चतुर्थ्या ऋचा,—कोश इव पूर्णो वसुना,—इत्यादिकयेत्येतत्। पूर्ववत् आदित्यमुपस्थाय, अर्थान् प्रति लक्षीकृत्य, तान् साधयितुमिति यावत्। पद्येत गच्छेत्। अर्थान् प्रपद्येत,—इति पाठेऽपि, अर्थान् साधयितुमिति पूर्वोक्त एवार्थः।

एवं गच्छन् खल्वयं गन्ता, स्वस्त्यर्थवानागच्छति। यमर्थमभिसन्धाय गच्छति, तद्वान् स्वस्तिमांश्चागच्छति गृहम् ॥०॥ ३३ ॥०॥

**पञ्चम्याऽऽदित्यमुपस्थाय गृहान् प्रपद्येत, स्वस्ति गृहानागच्छति स्वस्ति गृहानागच्छति ॥ ३४ ॥**

प्रकृतस्य पञ्चर्चस्य पञ्चम्या ऋचा,—आकाशस्यैष आकाशः,—इत्यादिकयेत्येतत्। तदनया ऋचा पूर्ववदादित्यमुपस्थाय गृहान् प्रति लक्षीकृत्य प्रपद्येत गच्छेत्,—प्रवासस्थः,—इति वाक्यशेषः। अथवा। गृहान् परित्यज्य प्रपद्येत गच्छेत् प्रवसेदित्यर्थः। गृहात् प्रपद्येत,—इति पाठे, गृहात् सकाशात् प्रपद्येत,—इति स एवार्थः। एवं प्रपद्यमानः खल्वयं स्वस्ति मङ्गलं यथा भवति तथा गृहानागच्छति। द्विर्वचनं पञ्चर्चाधिकारसमाप्तिप्रज्ञापनार्थम् ॥०॥ ३४ ॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये चतुर्थप्रपाठकस्य पञ्चमी काण्डिका ॥०॥

---

चतुर्थप्रपाठकस्य षष्ठी कण्डिका ।



भूरित्यनकाममारं नित्यं प्रयुञ्जीत ॥ १ ॥

भूरित्ययं मन्त्रप्रतीकः । भूरित्यादिकमनकाममारं मन्त्रं नित्यमहरहः प्रयुञ्जीत । अनकाममारशब्देन, "भूर्भुवः स्वरोꣳ सूर्य्य इव दृशे"—इत्यादिको मन्त्रो भण्यते । कुतः ? । योगात् प्रसिद्धेश्च । योगस्तावत् । मरणं मारः, काम इच्छा । कामेन मारो यस्मात् सोऽयं काममारः, स न भवतीत्यकाममारः । न अकाममारोऽनकाममारः । इच्छयैव मरणं यस्मादित्यर्थः । प्रसिद्धिस्त्वाध्येतृसम्प्रदायागता बोद्धव्या ॥०॥ १ ॥०॥

न केवलमिच्छयैव मरणमस्मान्मन्त्रात् सम्पद्यते, अपि तु यः खल्वेतं मन्त्रमहरहः प्रयुङ्क्ते, तस्य,—

न पापरोगान्नाभिचाराद्भयम् ॥ २ ॥

पापरोगः कुष्ठराजयक्ष्मादिः । अभिचारः श्येनसन्दंशादिः । तस्मात् भयं न भवति ॥०॥ २ ॥०॥

अलक्ष्मीनिर्णोदः ॥ ३ ॥

अलक्ष्मीः प्रसिद्धा । तस्या निर्णोदो निर्हारो नाशकः,—इत्येतत् । कः पुनरसौ ? । वक्ष्यमाणो होमः ॥०॥ ३ ॥०॥

स खल्वयमलक्ष्मीनिर्णोदो होमः,—

## यजनीयप्रयोगः ॥ ४ ॥

यजनीयेऽहनि प्रयोगोऽनुष्ठानं यस्य,—सोऽयं यजनीयप्रयोगः । पश्चादि-यज्ञदिने कर्त्तव्यः,—इत्यर्थः । यद्यपि, यजनीयप्रयोगोऽयं, तथापि तदीयचरुणा न करणीयः, किन्तु द्रव्यानादेशादाज्येनैव स्यात् ।

एवं वा—

यजनीयस्य प्रयोगोऽनुष्ठानं यस्य सोऽयं यजनीयप्रयोगः । न खल्वस्य यजनीयप्रयोगत्वं विज्ञातं येनायमनुवादः स्यात्, किन्तु अविज्ञातं विधीयते । तेन, यजनीयवत् प्रयोगः,—इत्यर्थः, सिद्धो भवति । तस्मात् धर्म्मप्रदेशोऽयम् । "उपोष्य तु यजनीयप्रयोगेषु"—इति सूचित उपवासोऽत्र प्रदिश्यते । कथं पुनरसति वतिप्रत्यये वत्यर्थः शक्योऽवगन्तुम् ? । शक्यः,—इत्याह । कथम् ? । यजनीय-शब्दोऽयं कर्म्मणा सम्बन्धः तत् सहचरितं उपवासधर्मं शक्नोति लक्षणया गमयितुम् । शक्नोति चेद्गमयितुं, प्रदेष्टुमपि शक्नोति । एवं खल्वन्तरेणापि वतिप्रत्ययं वत्यर्थः शक्योऽवगन्तुम् । स खल्वय-मर्थः सप्तमाध्याये प्रपञ्चितः, तत्रैवानुसन्धेयः ॥ ० ॥ ४ ॥ ० ॥

अथेदानीमलक्ष्मीनिर्णोदो होमोऽभिधीयते,—

## मूर्द्धाधिम इत्येकैकया ॥ ५ ॥

मूर्द्धोऽधिमे,—इत्यादिकोऽष्टर्चोऽत्राभिप्रेतो बोद्धव्यः । तासां खल्व-ष्टानामृचामेकैकया ऋचा एकैका आहुति र्होतव्या । अलक्ष्मी-

निर्णोदः,—इत्येकवचनात् सर्व्वाभिरेकैवाहुतिः स्यादित्यपि कदाचिदाशङ्का स्यात् कस्यचिन्मन्दमतेः, अतस्तन्निरासार्थमाचार्य्य एकैकयेत्याह ॥०॥ ५॥०॥

किं मन्त्राणां पाठक्रमेणैव अष्टावाहुतयो होतव्याः ? । न । कथन्तर्हि ? ।

## या तिरश्चीति सप्तमी ॥ ६ ॥

या तिरश्चीत्यनया ऋचा सप्तमी आहुतिर्होतव्या । सेयमृक् प्रदेशान्तरपठितेति द्रष्टव्यम् । तदेवमष्टर्चस्य षड्भिर्ऋग्भिः पाठक्रमात् षडाहुतीर्हुत्वा, या तिरश्चीत्यनया ऋचा प्रदेशान्तरपरिपठितया सप्तम्याहुतिर्होतव्या । स्थिता तावदविनियुक्तैवाष्टर्चस्य सप्तमी ऋगष्टमी च ॥०॥६॥०॥

तदनन्तरम्,—

## वामदेव्यर्च्चः ॥ ७ ॥

वामदेवो नाम ऋषिः, तदीया ऋचः वामदेव्यर्चः । अथ वा । वामदेव्यं नाम साम, तत् यासु ऋक्षु गीयते ता वामदेव्यर्चः । 'कयानश्चित्र आभुवत्'—इति त्र्यृचो भण्यते । तासामप्येकैकयैव ऋचा होमः स्यात्, न तु त्र्यृचेनैव । कुतः ? । एकैकया,—इत्यनुवर्त्तनात् । तदिदमुपरिष्टात् स्पष्टीकरिष्यामः ॥०॥७॥०॥

एतदनन्तरञ्च,—

## महाव्याहृतयश्च ॥ ८ ॥

महाव्याहृतयो भूराद्यास्तिस्रः। तासामप्येकैकया एकैका आहुति-र्होतव्या ॥०॥८॥०॥

## प्रजापत इत्युत्तमा ॥ ९ ॥

प्रजापते न त्वदित्यष्टर्चस्याष्टम्या ऋचा उत्तमा अन्या आहुतिर्होतव्या। तदेवमष्टर्चस्याष्टम्या ऋचो विनियोगः सूचितः। आह। अथ, उत्तमा,— इत्येतदवाच्यं पाठक्रमादेवैतस्या उत्तमत्वसिद्धेः, अथोच्यते,—कारणं वक्तव्यम्?। उच्यते। अस्या उत्तमत्ववचनादुपोत्तमापि काचिदाहुति-र्विज्ञायते। का पुनरुपोत्तमा नामाहुतिरभिप्रेता?। शृणु। येयमष्ट-र्चस्य सप्तमी ऋक्—अपेहि त्वम्,—इत्यादिका साम्प्रतमप्यविनियुक्तैव स्थिता, सेयमुपोत्तमा इत्यवगच्छामः। कस्मात् कारणात्?। तस्या विनियोगान्तरानवगतेः, उपस्थितत्वाच्च। तदेवमष्टर्चस्य क्रमपरिपठिताः 'परिबाधं यजामहे'—इत्येवमन्ताः षट् ऋचः, प्रदेशान्तरपठिता या तिरश्चीत्येका, वामदेव्यर्चस्तिस्रः, महाव्याहृतयस्तिस्रः। एत-न्तावत् चयोदशाहुतयो भवन्ति। अपेहि त्वमिति चतुर्दशी। प्रजापते न त्वदिति पञ्चदशी बोद्धव्या। तथा चोक्तम्।

"विहारो वामदेव्यर्चां व्याहृतीनां तथैव च।
अलक्ष्मीनाशके होमे स्यादपेहि चतुर्दशी" ॥

इति ॥०॥६॥०॥

पर्यवसितोऽलक्ष्मीनिर्णोदः। अथेदानीं कर्मान्तरं वक्तुमारभते,—

यशोऽहं भवामीति यशस्काम आदित्यमुपतिष्ठेत पूर्व्वाह्णमध्यन्दिनापराह्णेषु ॥ १० ॥

यशोऽहं भवामीति पञ्चर्चोऽत्राभिप्रेतः। तेनादित्यमुपतिष्ठेत। कः?। यशस्कामः। यशः कामयते यः, सोऽयं यशस्कामः। कस्मिन् काले?। पूर्व्वाह्णमध्यन्दिनापराह्णेषु। तिसृष्वपि सन्ध्यासु,—इत्यर्थः। कुतः?। परतः सन्धिवेलयोः पूर्व्वाह्णापराह्णपदप्रयोगदर्शनात्। एवञ्च, नित्योपस्थानादनन्तरमेतदुपस्थानं स्यात्। यथाश्रुतार्थ एव सम्यक् इति केचित् ॥०॥१०॥०॥

किं यथापठितेनैव पञ्चर्चेन?। न। कथन्तर्हि?

प्रातरह्नस्येति सन्नामयन् ॥ ११ ॥

प्रातरह्नस्य,—इति मन्त्रभागं संनामयन्, सम्यक्—यथालिङ्गं, नामयन् परिणमयन्—ऊहं कुर्व्वन्नित्यर्थः। एतदुक्तं भवति। प्रातरह्नस्य तेजसः,—इत्येतस्मिन् मन्त्रस्थाने,—मध्यन्दिनस्य तेजसः,—इति मध्यन्दिने, अपराह्णस्य तेजसः,—इत्यपराह्णे, ऊहं कुर्य्यादिति ॥ ॥०॥११॥०॥

कर्म्मान्तरमाह,—

सन्धिवेलयोरुपस्थानं स्वस्त्ययनमादित्यनावमित्युद्यन्तं त्वाऽऽदित्यानूदियासमिति पूर्व्वाह्णे, प्रतितिष्ठन्तं त्वाऽऽदित्यानुप्रतिष्ठासमित्यपराह्णे ॥ १२ ॥

सन्धिवेलयोः प्रातः सायमित्येतत्। उपस्थानं कर्त्तव्यमिति शेषः।

केन ?। आदित्यनावमित्यनया अनुष्टुभा यजुर्द्वयसहितया। कस्य उपस्थानम्?। आदित्यस्य। कथं ज्ञायते?। अधिकारात्। मन्त्रलिङ्गाच्च। किमर्थं पुनरिदमुपस्थानम्?। स्वस्त्ययनम्। स्वस्ति मङ्गलं अयति गच्छति प्राप्नोत्यनेनेति स्वस्त्ययनम्—मङ्गलफलक-मित्यर्थः। किं द्वयोरपि सन्ध्ययोरविशेषेण यजुर्द्वयस्याभिनिवेशः?। न। किन्तर्हि?। उद्यन्तं त्वा,—इत्येतद्यजुः पूर्व्वाह्णे विनियोक्त-व्यम्। प्रतितिष्ठन्तं त्वा,—इत्येतद्यजुरपराह्णे प्रयोक्तव्यम्। तथा च, लिङ्गवशादनयोर्व्विनियोगः,—इत्यभिप्रायः॥०॥१२॥०॥

कर्म्मान्तरमाह,—

**आचितशतकामोऽर्द्धमासव्रतस्तामिस्रादौ व्रीहि-काꣳसौदनं ब्राह्मणान् भोजयित्वा॥ १३॥**

आचितशब्देन शकटो भण्यते। कुतः?। "आचितं शकटं प्राहुः"—इति वचनात्। शतशब्दो बहुत्ववचनः, शतवचनो वा। आचितानां शतं कामयते,—इत्याचितशतकामः। यद्यप्याचितशब्देन शकटो भण्यते, तथाप्यत्र शाकटो भारः;—तावत् परिमितं सुवर्णमित्यभि-प्रेतमित्यवगच्छामः। कस्मात्?। शकटमात्रस्यानतिप्रयोजनत्वात्। तावति सुवर्णेऽप्याचितशब्दस्य सङ्केतितत्वाच्च। तथा चोक्तम्।

"सुवर्णविस्तो हेम्नोऽक्षे कुरुविस्तस्तु तत्पले।
तुला स्त्रियां पलशतं भारः स्याद्विंशतिस्तुला।
आचितो दश भाराः स्युः शाकटो भार आचितः"।

इति। अपर आह। "आचितशब्देनात्र बहुपशुधनधान्यमात्मनः

प्रार्थते। तथा हि चरितार्थत्वादाचितानाम्"—इति। स खल्वय-माचितयज्ञकामोऽर्द्धमासव्रतः सन्,—पूर्व्वोक्तेन विधिना अर्द्धमासं व्रतं कृत्वा,—इत्येतत्। तमिस्र एव तामिस्रः। तामिस्रस्य कृष्ण-पक्षस्य, आदौ प्रतिपदीत्यर्थः। 'व्रीहिकांसौदनं ब्राह्मणान् भोज-यित्वा'। व्रीहयः प्रसिद्धाः। कांसशब्देन द्रोणपरिमाणं भण्यते। कस्मात्?। "द्रोणः स्यात् कांसमानकः"—इति वचनात्। व्रीहीणां कांसं व्रीहिकांसं, व्रीहिकांसस्य ओदनो भक्तः व्रीहिकांसौदनः, तं व्रीहिकांसौदनं ब्राह्मणान् भोजयित्वा। आह। व्रीहिकांसस्य, व्रीहिकांसयोः, व्रीहिकांसानाम्,—इति त्रेधैव विग्रहस्य सम्भवा-देकत्वेन विग्रहे कारणं वक्तव्यम्?। उच्यते। प्रथमोपस्थित-त्वादेकवचनसंयोगाच्च एकत्वेनैव विग्रहमाचक्ष्महे। व्रीहिकांसौदन-मित्येकवचने श्रूयमाणे खल्वेकत्वमागच्छति हृदयम्, आगच्छति चेत्, —न युज्यते विनाकारणमुत्स्रष्टुम्। उत्तरत्रापि, 'तस्य',—इत्येक-वचनसंयोगेन व्रीहिकांसस्य परामर्शाच्चैवमवगच्छामः। अपि च। द्वित्वबहुत्वाभ्यां विग्रहे ब्राह्मणबहुत्वं स्यात्। तच्चानिष्टम्। कस्मात् कारणात्?। श्राद्धे तस्य दोषदर्शनात्। कारणस्य चाविशेषात्। तथा च मनुः।

"सत्क्रियां देशकालौ च द्रव्यं ब्राह्मणसम्पदः।
पञ्चैतान् विस्तरो हन्ति तस्मान्नेहेत विस्तरम्" ॥

इति। तस्मात्, सत्क्रियाद्यनुरोधादत्राप्येकत्वेनैव विग्रहः,—इत्या-दरणीयम् ॥०॥१२॥०॥

तदेवं ब्राह्मणान् भोजयित्वा

तस्य कणानपरासु सन्धिवेलासु प्रत्यग् ग्रामान्नि-ष्क्रम्य चतुष्पथेऽग्निमुपसमाधायादित्यमभिमुखो जु-हुयाद्—भलाय स्वाहा भल्लाय स्वाहेति ॥ १४ ॥

तस्य प्रकृतस्य व्रीहिकांसस्य, कणान्,—

"कम्बुकास्तु कणास्तेव फलीकरणकङ्कुशाः" ।

इत्युक्तलक्षणान् । जुहुयात्,—इति सम्बन्धः । ते खल्विमे कणाः तुषाः,—इत्याचक्षते । अपरासु सन्धिवेलासु अस्तमयसन्ध्यासु,—इत्यर्थः । बहुवचनात् तामिस्रपक्षमभिव्याप्य सर्व्वास्वेवास्तमयसन्ध्यासु अयं होमः स्यात्, न पुनः प्रतिपद्येव,—इति द्रष्टव्यम् । प्रत्यक्—पश्चिमायां दिशि, चतुष्पथे,—इति सम्बन्धः । ग्रामात् निवासभूतात् निष्क्रम्य निर्गत्य गत्वा वा । चतुष्पथः प्रसिद्धः । तस्मिन् अग्निं उपसमाधाय यथोक्तेन विधिना, आदित्यमभिमुखः,—आभिमुख्ये-नादित्यमुखः, प्रत्यङ्मुखः,—इत्येतत् । "भलाय स्वाहा" "भल्लाय स्वाहा"—इत्येताभ्यां यजुर्भ्यां पृथक् जुहुयात् । 'अग्निमुपसमाधाय,—इति वचनात् चिप्रहोमोऽयम् । कथं नाम ? । अग्निमुपसमाधायैव जुहुयात्, न सर्व्वामप्यावृतं कृत्वा,—इति ॥०॥१४॥०॥

एतयैवावृताऽपरौ तामिस्रौ ॥ १५ ॥

एतयैवानन्तरयैवावृता रीत्या अपरावपि तामिस्रौ कृष्णपक्षावभिव्याप्य अपरासु सन्धिवेलासु जुहुयात् । इदमिदानीं सन्दिह्यते । एतया,—इति किं ब्राह्मणभोजनादेः परामर्शः, आहोस्विदर्द्धमासव्रतादेः ?,

—इति । ब्राह्मणभोजनादेः,—इत्याह । कस्मात् ? । आवृता,—इति करणात् । न खल्वर्द्धमासव्रतमावृत् । कर्त्तृधर्म्मः खल्वेतत् । कथं ज्ञायते ? । "आचितशतकामोऽर्द्धमासव्रतः"—इति कर्त्तृविशेषणतयोपन्यासात् । तस्मादर्द्धमासव्रतस्य न परामर्शः । अपि च । तस्यैव कर्म्मण आवृत्तिरिहोपदिश्यते । अभ्यस्ते च कर्म्मणि सकृदेव व्रतमन्यत्रोपदिष्टम्,—"नित्यप्रयुक्तानान्तु प्रथमप्रयोगेषु"—इत्यत्र । तद्वदिहापि वर्णयितुमुचितम् । अपर आह । तामिस्रान्तरेषु ब्रह्मचारी स्यात्,—इति व्रतान्तरोपदेशान्नार्द्धमासव्रतस्य परामर्शः । इतरथा अर्द्धमासव्रतादेव ब्रह्मचर्य्यस्य प्राप्तत्वात् तदवाच्यं स्यात्,—इति । तदपि न समीचीनम् । कुतः ? । अर्द्धमासव्रते ब्रह्मचर्य्यस्य पूर्व्वमाचार्य्येणानुपदेशात् । प्रथमतामिस्रे तर्हि न प्राप्नोति ब्रह्मचर्य्यम् ? । मा प्रापत्, का नो हानिः । अर्द्धमासव्रतस्य पुरश्चरणरूपतया तत्रापि न तावतैव प्रथमतामिस्रे ब्रह्मचर्य्यस्य प्राप्तिः । यथा तु प्रथमेऽपि तामिस्रे प्राप्नोति ब्रह्मचर्य्यं, तथा परतो वर्णयिष्यामः ॥०॥१५॥०॥

## तामिस्रान्तरेषु ब्रह्मचारी स्यादासमापनादासमापनात् ॥ १६ ॥

अन्तरशब्दो मध्यवचनः । तामिस्रपक्षयोरन्तरे मध्ये यान्यहानि, तानि तामिस्रान्तराणि । पूर्व्वापरयोस्तामिस्रयोर्निर्देशात् तन्मध्यपतितानि शुक्लपक्षदिनान्यपि सन्दंशपतितन्यायेन गृह्यन्ते । तेषु अहःसु ब्रह्मचारी मैथुनवर्ज्जी, स्यात् भवेत् । आसमापनात् कर्म्मसमापनपर्य्यन्तम् । कर्म्मसमापनदिनस्य तामिस्रान्तरत्वेऽपि कर्म्मसमापनात् परतो

न तत्र ब्रह्मचर्य्यनियमः,—इत्येतदर्थम्;—'आसमापनात्'—इत्याह। यद्यपि, पर्व्वत्वेन तत्रापि मैथुननिषेधोऽस्त्येव, तथापि निमित्तान्तरप्रयुक्तस्य तस्य कर्म्माङ्गत्वं नास्ति,—इत्यभिप्रायः।

एवं वा,—

तामिस्राणामन्तरे मध्ये यान्यहानि, तानि तामिस्रान्तराणि, तेषु तामिस्रान्तरेषु अहःसु ब्रह्मचारी स्यात्। बहुवचनात् प्रथमेऽपि तामिस्रे ब्रह्मचर्य्यं प्राप्नोति। तामिस्रान्तरेषु कर्म्मोपदेशादवान्तरेष्वहःसु ब्रह्मचर्य्यं न स्यात्,—इत्याशङ्कायामाह;—आसमापनात्,—इति। कर्म्मसमापनपर्य्यन्तमित्यर्थः। द्विर्व्वचनं प्रकरणकाण्डिकयोः समाप्त्यर्थमादरार्थञ्च ॥०॥१६॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये चतुर्थप्रपाठकस्य षष्ठी काण्डिका ॥०॥

———

चतुर्थप्रपाठकस्य सप्तमी कण्डिका ।



अथेदानीं प्रकरणान्तरमारभते,—

## अवसानं जोषयेत* ॥ १ ॥

अवस्यन्ति निवसन्त्यस्मिन्,—इत्यवसानं गृहार्थं भूस्थानमिहाभिप्रेतम्, न गृहमेव । कथं ज्ञायते ? । 'समं लोमशम्'—इत्यादि विशेषणानां सामर्थ्यात् । 'तत्रावसानं प्राग्द्वारम्'—इत्यादिसूत्रेणोपपत्तेश्च । तदिदमवसानं जोषयेत,—'जुषी प्रीतिसेवनयोः'—इति स्मरणात् सेवेत, परिगृह्णीयादित्येतत् ॥०॥ १ ॥०॥

अवसानमिदानीं विशिनष्टि,—त्रयोदशभिः सूत्रैः,—

## समं लोमशमविभ्रंशि ॥ २ ॥

समं समानम्,—अनिम्नोच्चमित्यर्थः । लोमशम् । लोमानीव कोमलानि तृणानि यत्र विद्यन्ते, तदिदं लोमशमित्युच्यते । अथ वा । 'तृणानि भूमेर्लोमानि'—इति वचनात् यथाश्रुत एवार्थः । अविभ्रंशि ।' यत्र कृतस्य वेश्मनो नदीतीरभेदवृक्षपातमतङ्गजादिभिर्विभ्रंशो विनाशो न सम्भाव्यते, तदिदमविभ्रंशि । 'अवसानं जोषयेत',—इति सर्व्वत्र सम्बध्यते ॥०॥ २ ॥०॥

---

*जोषयेत्,—इति पाठान्तरम् ।

प्राच्य उदीच्यो वा यत्रापः प्रवर्त्तेरन् ॥ ३ ॥

प्राच्यः प्राङ्मुख्यः। उदीच्यः उदङ्मुख्यः। वाशब्दो विकल्पार्थः। यत्र यस्मिन् स्थाने, आपः प्रवर्त्तेरन्,—प्रकर्षेण स्वभावतो वर्त्तेरन् न तु क्रियेरन्। प्रवर्त्तेरन् स्वभावतो गच्छेयुः, न तु प्रयत्नान्तरेण,—इति वा वर्णनीयम्। 'अवसानं जोषयेत'—इत्यनेन सम्बध्यते। यच्छब्दोऽयमुत्तरवाक्यगतः सामर्थ्यात् पूर्व्ववाक्यगतं तच्छब्दं नापेक्षते। एवमुत्तरत्रापि द्रष्टव्यम् ॥०॥ ३ ॥०॥

अक्षीरिण्योऽकण्टका अकटुका यत्रौषधयः स्युः ॥ ॥ ४ ॥

क्षीरमिव क्षीरं शुभ्रो निर्यासो भण्यते। क्षीरं विद्यते यासां ताः क्षीरिण्यः, ता न भवन्तीत्यक्षीरिण्यः,—अर्कादिभ्यो भिन्नाः,—इत्येतत्। अकण्टकाः, कण्टकरहिताः,—मदनादिभ्योऽन्याः। अकटुकाः। कटुकाः कटुगुणयुक्ताः, ता न भवन्तीत्यकटुकाः निम्बादिभ्यो भिन्नाः। कटुत्तिक्तम्। तदेवम्भूता ओषधयो यत्र यस्मिन् स्थाने, स्युः स्वभावतो भवेयुः ॥०॥ ४ ॥०॥

गौरपांशु ब्राह्मणस्य ॥ ५ ॥

गौराः शुक्लवर्णाः पांशवो रेणवो यस्मिन्, तत् गौरपांशु ब्राह्मणस्य, अवसानम्,—इति सम्बध्यते ॥०॥ ५ ॥०॥

लोहितपांशु क्षत्रियस्य ॥ ६ ॥

अवसानम् ॥०॥ ६ ॥०॥

## कृष्णपांशु वैश्यस्य ॥ ७ ॥

अवसानम्,—इत्येव ॥०॥ ७ ॥०॥

त्रैवर्णिकानां विशेषमभिधाय, अथेदानीं सामान्येनावसानं विशिनष्टि,—

## स्थिराघातमेकवर्णमशुष्कमनुषरममरुपरिहितमक्लिन्नम् ॥ ८ ॥

योद्धृभिरभिहन्यमानं यन्न विदीर्य्यते, तत् स्थिराघातम्। एकवर्णमभिन्नवर्णम्। यत्रोत्पद्यमाना ओषधयो न शुष्यन्ति, तदशुष्कम्। यत्रोप्तं वीजं न प्ररोहति, तदूषरमिरिणमित्यनर्थान्तरम्। तन्न भवतीत्यनुषरम्। यत्र दूरं खनद्भिरल्पमेवोदकमुपलभ्यते, तन्मरुरित्युच्यते। तथा चोक्तम्।

"द्वीपमुन्नतमाख्यातं शादा चैवेष्टका स्मृता।
क्लिन्नं सजलं प्रोक्तं दूरखातोदको मरुः"।

इति। मरुभूम्या सर्व्वतो वेष्टितं यत् स्थानं तन्मरुपरिहितम्। तत् न भवतीत्यमरुपरिहितम्। क्लिन्नं, सजलं स्थानम्। तत् न भवतीत्यक्लिन्नम् ॥०॥ ८ ॥०॥

पुनरपि विशेषेणावसानं विशिनष्टि,—त्रिभिः सूत्रैः,—

## दर्भसम्मितं ब्रह्मवर्च्चसकामस्य ॥ ९ ॥

ब्रह्मवर्च्चसं व्याख्यातम्। तत्कामस्य, दर्भसम्मितम्—दर्भैः कुशैः सम्यक् मीयते ज्ञायते परिच्छिद्यते वा यत्, तथाविधं,—दर्भयुक्त-

मित्येतत्। तथा च गृह्यान्तरम्। "यस्मिन् कुशवीरणप्रभूतम्"—इति। वास्तुविद्याविद्भिरप्यभिहितम्।

"कुशयुक्ता शरवङ्कला
दूर्व्वाकाशावृता क्रमेण मही"।

इति। केचित् पुनरेतदविद्वांसो भाषन्ते,—'दर्भसम्मितं कुशनिर्म्मितम्'—इति ॥०॥ ९ ॥०॥

## बृहत्तृणैर्बलकामस्य ॥ १० ॥

बृहत्तृणैर्वीरणशरादिभिः सम्मितं युक्तम् ॥०॥ १० ॥०॥

## मृदुतृणैः पशुकामस्य ॥ ११ ॥

मृदुतृणैर्दूर्व्वादिभिः। सम्मितमिति वर्त्तते। सेयं त्रिसूत्री, यथाक्रमं ब्राह्मणक्षत्रियवैश्यानामवसानस्य विशेषणार्था। कथं ज्ञायते?। तथैव ब्रह्मवर्चस-बल-पशुकामनानामाञ्जस्येनोपपत्तेः। तथा चोक्तम्।

"कुशयुक्ता शरवङ्कला
दूर्व्वाकाशावृता क्रमेण मही।
अनुवर्णं वृद्धिकरी
मधुरकषायाम्लकटुका च"।

इति ॥०॥ ११ ॥०॥

## शादा सम्मितम् ॥ १२ ॥

शादा,—इति, इष्टकामाह। कस्मात्?। "शादा चैवेष्टका स्मृता"—इति वचनात्। तथा सम्मितं तुल्यं—चतुरस्रमित्यर्थः। अत्र, सम्मि-

नम्,—इति क्रियते, पूर्व्वस्मात् सम्मितशब्दादेतस्य सम्मितशब्दस्यार्थ-भेदप्रज्ञापनार्थम् ॥०॥ १२ ॥०॥

## मण्डलद्वीपसम्मितं वा ॥ १३ ॥

मण्डलं वर्त्तुलम्। द्वीपशब्देनोन्नतमुच्यते। कुतः?। "द्वीपमुन्नत-माख्यातम्"—इति वचनात्। मण्डलञ्च तत् द्वीपञ्चेति मण्डलद्वीपं तत्सम्मितं तदाकारम्। वाशब्दो विकल्पार्थः। सम्मितशब्दः पूर्व्ववत्॥ ॥०॥ १३ ॥०॥

## यत्र वा श्वभ्राः स्वयं खाताः सर्व्वतोऽभिमुखाः स्युः ॥ १४ ॥

यत्र यस्मिन् स्थाने वा, श्वभ्रा अवटाः, स्वयं खाताः—न तु कृत्रिमाः, सर्व्वतः सर्व्वासु दिक्षु विदिक्षु च, अभिमुखा इतरेतराभिमुखाः, स्युः स्वभावतो भवेयुः। एतदनेनोक्तं भवति। सर्व्वत उच्छ्रितं मध्यतश्च किञ्चिन्निम्नम्,—इति। यत्र किल दिशां विदिशाञ्च विचारणा नाभिप्रेयते, तत्र 'सर्व्वतः'—इति करोत्याचार्य्यः। तथाच गृह्यासंग्रहः।

> "दिशाञ्च विदिशाञ्चैव यत्र नोक्ता विचारणा।
> सर्व्वतस्तत्र शब्दोऽयं विधियोगे निपात्यते"।

इति।

एवं वा,—

सर्व्वतोऽभिमुखाः,—आभिमुख्येन सर्व्वदिग्विदिङ्मुखाः। एतदनेनोक्तं

भवति। मध्यतः किञ्चिदुच्चम्, अभितश्च सखातम्। तथैवावटानां सर्व्वतोऽभिमुखत्वसम्भवात्। इयमपि त्रिसूत्री यथाक्रमं ब्राह्मणक्षत्रिय-वैश्यानामवसानस्य विशेषणार्था,—इति केचित्। सामान्येनावसानस्य विशेषणार्था,—इत्यपरे ॥०॥ १४ ॥०॥

**तत्रावसानं प्राग्द्वारं यशस्कामो बलकामः कुर्व्वीत॥ ॥ १५ ॥**

तत्र तस्मिन् स्थाने। अवस्यन्त्यस्मिन्,—इत्यवसानं गृहं प्राग्द्वारं कुर्व्वीत। कः?। यशस्कामो बलकामः। यशस्कामो वा, बलकामो वा,—इत्यर्थः। तदत्र, "खादिरे बध्नाति, पालाशे बध्नाति, रोहितके बध्नाति",—इतिवद्विकल्पो बोद्धव्यः। कस्मात्?। कामशब्दाभ्यासात्। यदि पुनरुभयकामोऽभिप्रेतः स्यात्, तर्हि यशोबलकामः,—इति कुर्य्यात्, अलं कामशब्दाभ्यासेन। तस्मात्, कामशब्दाभ्यासादव-गच्छामः,—विकल्पोऽयम्,—इति ॥०॥ १५ ॥०॥

**उदग्द्वारं पुत्रपशुकामः ॥ १६ ॥**

तत्रावसानं कुर्व्वीत,—इत्यनुवर्त्तते ॥०॥ १६ ॥०॥

**दक्षिणाद्वारꣳ सर्व्वकामः ॥ १७ ॥**

दक्षिणाद्वारं दक्षिणा नाम दिक्, तत् द्वारम्,—अवसानं कुर्व्वीत,—इत्यनुवर्त्तत एव। सर्व्वकामः,—इति, यत् किञ्चित् यशोबलादिकं कामयते, तत् सर्व्वमेतस्माद्भवतीत्यर्थः ॥०॥ १७ ॥०॥

## न प्रत्यगद्वारं कुर्व्वीत ॥ १८ ॥

पश्चिमद्वारमवसानं न कुर्व्वीत ॥०॥ १८ ॥०॥

## अनुद्वारञ्च ॥ १९ ॥

अनुपश्चात् द्वारं यस्य, तदनुद्वारमवसानं न कुर्व्वीत। चकारो न कुर्व्वीतेत्यनुषङ्गार्थः। किमनेनोक्तं भवति ?। एतदनेनोक्तं भवति। गृहाङ्गनाभिमुखमेव गृहद्वारं करणीयं न तु तद्वैपरीत्येन,—इति। अथ वा। अनुद्वारमित्यनेन द्विद्वारं गृहं निषिध्यते। कथं नाम?। संमुखद्वारं पश्चात्द्वारञ्च गृहं न करणीयम्,—इति॥ ॥०॥ १९ ॥०॥

## गृहद्वारम् ॥ २० ॥

अनुद्वारमवसानं न कुर्व्वीत,—इत्यनुवर्त्तते। गृहद्वारमनुलक्ष्यीकृत्य द्वारं यस्य, तथाविधमवसानं न कुर्व्वीत। अन्यगृहद्वाराभिमुखं गृहद्वारं न कुर्व्वीत,—इत्येतत्। तथा च वास्तुविद्याविद्भिरुक्तम्।

"द्वारगवाक्षस्तम्भैः कर्दमभित्त्यन्तकोणवेधैश्च।
नेष्टं वास्तुद्वारं विद्धमनाक्रान्तमन्यैश्च"।

इति ॥०॥ २० ॥०॥

तथा च गृहद्वारं कुर्य्यात्;—

## यथा न संलोकी स्यात् ॥ २१ ॥

यथा येन प्रकारेण गृहाभ्यन्तरे सन्ध्योपासन-होम-भोजनादिक्रियां

कुर्व्वाणो गृहपतिर्न्न पतित-श्व-चाण्डालादीनां संलोकी—आलोकी—आलोकनीयः,—इत्येतत्। स्यात् भवेत्। 'संलोकि'—इति पाठे, गृहमध्यगतं धनादिकं यथा न वहिःस्थितस्य जनस्य, संलोकि, आलोकनगम्यं स्यात्,—इति वर्णनीयम् ॥०॥ २१ ॥०॥

**वर्ज्जयेत् पूर्व्वतोऽश्वत्थं प्लक्षं दक्षिणतस्तथा।**
**न्यग्रोधमपराद्देशादुत्तराच्चाप्युदुम्बरम् ॥ २२ ॥**

प्लक्षो जटीपर्कटीत्यनर्थान्तरम्। न्यग्रोधो वटः। अपरः पश्चिमः। स्पष्टमन्यत् ॥०॥ २२ ॥०॥

किं पुनरेतैरेतासु दिक्ष्ववस्थितैर्भवति?। उच्यते,—

**अश्वत्थादग्निभयं विद्यात् प्लक्षाद्ब्रूयात् प्रमायुकान्।**
**न्यग्रोधाच्छस्त्रसंपीड़ामक्ष्यामयमुदुम्बरात् ॥ २३ ॥**

अश्वत्थात्—पूर्व्वतः स्थितात्। प्लक्षात्—दक्षिणतः स्थितात्। प्रमायुकान्,—प्रकर्षेण ह्रस्वान्, नष्टायुषः,—इत्येतत्। मायुकः,—इति निघण्टौ ह्रस्वनामसु चतुर्थं पदम्। प्रमायुकान् प्रकृष्टपित्तान्,—इति केचित्। न्यग्रोधात्—पश्चिमतःस्थितात्। अक्ष्यामयमक्षिरोगम्। उदुम्बरादुत्तरतः स्थितात् ॥०॥ २३ ॥०॥

**आदित्यदेवतोऽश्वत्थः प्लक्षो यमदेवतः।**
**न्यग्रोधो वारुणो वृक्षः प्राजापत्य उदुम्बरः ॥ २४ ॥**

स्पष्टोऽक्षरार्थः। प्लक्षो यमदेवतः,—इत्यत्रैकाक्षरन्यूनतायामपि न छन्दोभङ्गदोषस्योदयितव्यो भवति। भवति चात्र ब्राह्मणम्। "न ह्येकस्मा-

दक्षरादिराधयन्ति”—इति। देवताकीर्त्तनमुत्तरार्थम् ॥०॥२४॥०॥ यदि पुनः पूर्व्वादिष्वश्वत्थादयः स्युः, तदा किं कुर्य्यात्?,—इत्यपेक्षायामाह,—

## तानस्वस्थानस्थान् कुर्व्वीत ॥ २५ ॥

तानश्वत्थादीन् पूर्व्वादिष्वत्रस्थितान् अस्वस्थानस्थान् कुर्व्वीत। स्वेषु पूर्व्वोक्तेषु स्थानेषु तिष्ठन्ति,—इति स्वस्थानस्थाः, न स्वस्थानस्थाः अस्वस्थानस्थाः, तथाविधान् कुर्व्वीत। यथा ते स्वस्थानेषु पूर्व्वादिषु न तिष्ठन्ति, तथा कुर्य्यादिति यावत्। तथाकरणञ्च च्छेदनादुद्धरणाद्वा बोद्धव्यम्। तत्र चोत्तरसूत्रोक्तो विशेषो द्रष्टव्यः।

“तान् स्वस्थानस्थान् कुर्व्वीत”—इति पाठे, तानश्वत्थादीन् स्वस्थानस्थान् स्वेषु स्थानेषु स्थितान् कुर्य्यादिति व्याख्येयम्। यस्मात् पूर्व्वादिष्ववस्थितेष्वश्वत्थादिषु अग्निभयादिकं, स्वस्थानस्थितेष्वप्यभ्युदयः, तस्मात्तान् स्वस्थानस्थितान् कुर्व्वीत,—स्वेषु स्थानेषु रोपयेदित्यर्थः। आह। कानि पुनरमीषां स्वस्थानानि?। पूर्व्वविपरीतानि,—इति ब्रूमः। कस्मात्?। वास्तुविद्याविदां वचनात्। तथा चोक्तम्।

“याम्यादिष्वशुभफला-
जातास्तरवः प्रदक्षिणेनैते।
उदगादिषु प्रशस्ताः
प्लक्षवटोदुम्बराश्वत्थाः”।

इति।

"भवनस्य वटः पूर्व्वे जातः स्यात् सार्व्वकामिकः।
उदुम्बरस्तथा याम्ये वारुणे पिप्पलः शुभः।
प्लक्षश्चोत्तरतो धन्यो विपरीतो विपर्य्यये"।

इति चैवमादि ॥०॥ २५ ॥०॥

यदा खल्वेतानश्वत्थादीनुद्धरेत् च्छेदयेद्वा, तदा तद्दोषशान्त्यर्थम्,—

एतास्चैव देवता अभियजेत ॥ २६ ॥

एता अनन्तरोक्ता देवता अभियजेत। एवशब्दात् यं वृक्षमुद्धरेत् च्छेदयेद्वा तस्यैव देवतामभियजेत, न पुनः सर्व्वाः। चशब्दः पूर्व्वोक्तकल्पेन सम्बन्धकरणार्थः। सम्बन्धकरणस्य प्रयोजनम्,—यदा खल्विमे अस्वस्थानस्थाः क्रियन्ते, तदैवायं कल्पो यथा स्यात्,—इति। वृत्ते चैवं सम्बन्धकरणे, एवशब्दः पूर्व्वोक्तप्रकारेण विशेषबोधको द्रष्टव्यः। अथवा। चशब्दः च्छेदनपक्षे मनूक्तप्रायश्चित्तान्तरानुसन्धानार्थः। कथं नाम?। एता देवताश्च अभियजेत, ऋचश्च जपेत्,—इति। तथा च मनुः।

"फलदानाञ्च वृक्षाणां छेदने जप्यमृक्शतम्।
गुल्मवल्लीलतानाञ्च पुष्पितानाञ्च वीरुधाम्"।

इति। कल्पान्तरसमुच्चयार्थमपि चशब्दं वर्णयन्ति। कथं नाम?। यदि तानस्वस्थानस्थान् न कुर्य्यात्, तदा,—

"छिन्द्याद् यदि न तरूं स्तान्
तदन्तरे पूजिताम् वपेदन्यान्।
पुन्नागाशोकारिष्ट-
वकुलपनसान् शमीशालौ"।

इति वास्तुविद्याविदुक्तं कुर्य्यात्,—इति । तदिदं कल्पान्तरं चशब्देन समुच्चीयते,—इति मन्यन्ते ॥०॥ २६ ॥०॥

### मध्येऽग्निमुपसमाधाय कृष्णया गवा यजेत ॥ २७ ॥

मध्ये प्रकृतस्य गृहस्याभ्यन्तरे, न तदर्थपरिगृहीताया भूमेः । कथं ज्ञायते? । सन्निहितपरित्यागे व्यवहितपरिग्रहे च कारणविशेषस्याभावात् । "पूर्व्वैः प्रौष्ठपदैर्गृहेऽग्निं प्रतिष्ठाप्य"—इति च सामविधाने ब्राह्मणे दर्शनात् । अग्निम् उपसमाधाय,—इत्युक्तार्थम् । कृष्णया कृष्णवर्णया गवा यजेत । सेयं स्त्रीगवी अभिप्रेता,—इत्यवगच्छामः । कस्मात् कारणात्? । कृष्णया,—इति स्त्रीलिङ्गनिर्देशात् ॥०॥ २७ ॥०॥

### अजेन वा श्वेतेन ॥ २८ ॥

यजेत,—इत्यनुवर्त्तते । ऋजुरक्षरार्थः । वाशब्दाद् गोरभावे सत्ययं कल्पो बोद्धव्यः ॥०॥ २८ ॥०॥

किं केवलया गवा? केवलेन वा अजेन? । न । कथन्तर्हि?,—

### सपायसाभ्याम् ॥ २९ ॥

पयसि भवश्चरुः पायसः । तत्सहिताभ्यां गोऽजाभ्यां यथालाभमन्यतरेण यजेत । लाघवं चिकीर्षुः खल्वयमाचार्य्यः, सपायसाभ्याम्,—इति सूत्रयाञ्चकार, न पुनर्गोऽजयोः साहित्यं प्रतिपिपादयिषया । कथं ज्ञायते? । अजेन वा,—इति वाशब्देन तयोर्विकल्पप्रतिपादनात् ॥०॥ २९ ॥०॥

गोरजस्य वालाभे,—

पायसेन वा ॥ ३० ॥

केवलेन यजेत। तदत्र, पशुप्रोक्षणे निर्वापे च, वास्तोष्पतये त्वा,—इति देवतानिर्द्देशः स्यात् ॥०॥ ३० ॥०॥

ततश्च प्रकृतिवत् पायसमांसचरू श्रपयित्वा,—

वसामाज्यं मांसं पायसमिति संयूय ॥ ३१ ॥

वसाम्,—इति शृतावदानमांसयूषमाह:। तद्धि वसा सम्पृक्तं भवति। शृते खलु मांसे निर्गच्छन्ती वसा यूषेणैव मिश्रीभवति न पृथगुपलभ्यते। आह। एतस्मात् लिङ्गात् पूर्व्वमेव वसां पृथगुद्धरिष्यामः?। न,—इत्युच्यते। कुतः?। कल्पनागौरवापत्तेः। प्रमाणविशेषस्य चाभावात्। तस्मात्, चरुद्वयस्यैव श्रवणमात्रादवगतेरन्यथोपपन्नं लिङ्गं न चर्व्वन्तरमनुमापयति,—इत्यास्थेयम्। दृश्यते खल्वन्यत्रापि तत्सम्बन्धात्ताच्छब्द्यम्;—दण्डयोगाद्दण्डः पुरुषः,—इत्येवमादौ बहुलम्।

सूत्रशेषमिदानीं वर्ण्यते। आज्यं व्याख्यातम्। मांसं पश्ववदानमांसम्। पायसं पूर्व्वोक्तम्। 'इति' एतानि चत्वारि, संयूय,—"यु मिश्रणे,"—इति स्मरणात् सम्यक् मिश्रयित्वा।

कर्म्मक्रमस्तु,—अवदानानि पायसञ्च श्रपयित्वा, कंसेऽवदानरसमवासिच्य, स्वस्तरेऽवदानानि कृत्वा, न वार्यां सूनायामणुशश्छेदयित्वा, कंसपात्रे चासज्य, वसादिभिः सह संमिश्रयेत्,—इति ॥ ॥०॥ ३१ ॥०॥

ततश्च,—

## अष्टगृहीतं गृहीत्वा जुहुयात् ॥ ३२ ॥

अष्टगृहीतं गृहीत्वा अष्टकृत्वो गृहीतं कृत्वा,—इत्येतत्। कस्मात् अष्टगृहीतं गृहीत्वा ?। संमिश्रितात्,—इत्याह। कुतः ?। मिश्रणस्य तदर्थत्वात्। पूर्व्वं च तथैव दृष्टत्वात्। अत्र च, मध्यात् पूर्व्वार्द्धादिति प्राकृतो धर्म्मो निवर्त्तते। कस्मात् ?। वैकृतस्य विशेषोपदेशस्यार्थवत्त्वात्। भृगूणामपि नात्र कश्चिद्विशेषः। अन्ये त्वाहुः,—"सन्नीतस्य मध्यपूर्व्वार्द्धाभ्यां त्रिः ग्रहणात् षड़वदानानि भवन्ति, भृगूणान्तु मध्यपूर्व्वार्द्धपश्चादर्द्धेभ्यो द्विः ग्रहणम्—तेन षड़ेव भवन्ति, पुरस्ताच्चोपरिष्टाच्चाज्यस्य, एवमष्टगृहीतं भवति"—इति। अवदानस्थानमत्रापि प्रत्यञ्जयेत्। कुतः ?। "प्रत्यनक्त्यवदानस्थानानि"—इत्यविशेषेणोपदेशात्। तद्बाधे च कारणविशेषस्याभावात् ॥०॥ ॥ ३२ ॥०॥

जुहुयात्,—इति सामान्यत उक्तम्, अथेदानीं तत्रैव विशेषोऽभिधीयते,—

## वास्तोष्पत इति प्रथमा ॥ ३३ ॥

वास्तोष्पते,—इति मन्त्रेण प्रथमा आहुतिर्होतव्या। अत्र किञ्चिद्वक्तव्यमस्ति। परस्तात् तद्वक्ष्यामः ॥०॥ ३३ ॥०॥

## वामदेव्यर्चः ॥ ३४ ॥

तिस्रः। ताभिः तिस्र आहुतयो होतव्याः ॥०॥ ३४ ॥०॥

## महाव्याहृतयः ॥ ३५ ॥

तिस्र एव। ताभिरपि तिस्र एवाहुतयो होतव्याः ॥०॥ ३५ ॥०॥

## प्रजापतय इत्युत्तमा ॥ ३६ ॥

प्रजापतये स्वाहा,—इत्यनेन मन्त्रेण उत्तमा अन्त्या आहुतिर्होतव्या। आह। निर्देशबलादेव प्रथमोत्तमत्वे सिद्धे, प्रथमा,—इति उत्तमा,—इति चावाच्यमिति चेत्। न। अर्थवत्त्वात्। कः पुनरर्थः?। उच्यते। अनयोः प्रथमोत्तमत्वमभिदधानः खल्वनयोरेवाहुत्योस्स्वर-भागाभिसम्बन्धं ज्ञापयत्याचार्य्यः, न सर्व्वासामाहुतीनाम्। तस्मात्, 'वामदेव्यर्चः' 'महाव्याहृतयः'—इत्यन्तरालसूचिताः षड़ाहुतय आ-ज्येनैव स्युः, न चरुणा। तथा चोक्तम्।

"आश्वयुज्यां तथा कृष्यां यज्ञकर्म्मणि याज्ञिकाः।
यज्ञार्थतत्त्ववेत्तारो होममेवं प्रचक्षते।
द्वे पञ्च द्वे क्रमेणैता हविराहुतयः स्मृताः।
शेषा आज्येन होतव्या इति कात्यायनोऽब्रवीत्"।

इति। सोऽयमर्थः। रघुनन्दनादयस्त्वेतदजानन्तः सर्व्वा एव चर्व्वा-हुतीरिच्छन्ति। तदशास्त्रम् ॥०॥ ३६ ॥०॥

## हुत्वा दश बलीन् हरेत् ॥ ३७ ॥

स्पष्टमुच्चारार्थः। अभिधानादेव प्राप्तत्वात् हुत्वा,—इत्येतदवाच्यमिति चेत्। न। सम्बन्धकरणार्थत्वात्। हुत्वा,—इति पुनर्व्वचनं खलु होमबलिहरणयोः सम्बन्धकरणार्थम्। सम्बन्धकरणस्य च प्रयोजनम्,

—होमशेषेणैव बलिहरणं यथास्यात्,—इति । अथ वा । हुत्वा,—इत्येतद्वचने, 'प्राक् स्विष्टकृत आवापः'—इति सूत्रणात् उपन्यास-क्रमाच्च स्विष्टकृद्धोमादर्व्वागेव बलिहरणम्,—इत्यपि कदाचिदाशङ्का स्यात् कस्यचिदिति, हुत्वा,—इत्याह । कथं नाम ? । स्विष्ट-कृदादिकमपि हुत्वा बलीन् हरेत्,—इति । अन्ये त्वाहुः । "कर्म्मा-पवर्गविहितं वामदेव्यगानमिदानीं माभूदित्यतः, हुत्वा,—इति वच-नम् । कथं नाम ? । हुत्वा बलीन् हरेत् ततो वामदेव्यं गायेत्"—इति ।

ननु, दश,—इत्यपि अनर्थकम्, दशानामेवोपरिष्टादुपदेशात् अन्तरेणाप्येतद्वचनं, बलीनां दशत्वं लभ्यत एव । उच्यते । "प्राच्यूर्द्धावाचीभ्योऽहरहर्नित्यप्रयोगः"—इति सूत्रयिष्यमाणत्वादस्मिन् कर्म्मणि अनित्यत्वमपि कश्चिदाशङ्कीत । अतस्तन्निरासार्थं दश,—इति सूत्रञ्चकार । अथ वा । "प्रजापतये स्वाहेति मध्य उपहरेत्"—इति सामविधानब्राह्मणे एकादशानां बलीनां हरणदर्शनात् अत्रापि मध्यतोऽप्यधिकं बलिहरणं स्यादितीमामधिकाशङ्कामपनेतुं दश,—इत्याह । दशैवात्र बलयो भवन्ति न पुनः सामविधानवदेकादश । प्रजापतये स्वाहा,—इति होम एवात्र स्यात् न बलिः,—इत्य-भिप्रायः । न चैवं ब्राह्मणविरोधः,—इति शङ्कनीयम् । तस्मात् कल्पात् कल्पान्तरत्वादेतस्य । अत एव होमेऽपि तत्र विशेषः श्रूयते । स च तत्रैवानुसन्धेयः । तस्मात्, ब्राह्मणं कौथुमादिव्यतिरिक्तविषयं श्रौताग्निविषयं वा,—इत्यास्थेयम् ॥०॥ २७ ॥०॥

अथेदानीं क्व बलयो हर्त्तव्याः ? कथञ्च ?—इत्येतद्वक्तव्यम् । तदुच्यते,—

## प्रदक्षिणं प्रतिदिशम् ॥ ३८ ॥

बलीन् हरेत्,—इत्यनुवर्त्तते। ऋजुरक्षरार्थः। अथ, प्रदक्षिणम्,—इत्येतदवाच्यम्?; ननु प्रकृतावेव प्रादक्षिण्यस्य सिद्धेः। नैष दोषः। कस्मात्?। यस्मात् प्रकृतस्याग्नेः प्रादक्षिण्येनात्र वलिहरणमित्येतत् प्रतिपिपादयिषया प्रदक्षिणमित्याह। अन्यथा विशेषाभावात् कर्त्तुरपि प्रादक्षिण्यं स्यात् ॥०॥ ३८ ॥०॥

किं केवलासु दिक्षु?। न। क्व तर्हि?—

## अवान्तरदेशेषु ॥ ३९ ॥

बलीन् हरेत्,—इत्यनुवर्त्तत एव। चशब्दोऽत्र लुप्तवत् द्रष्टव्यः। अवान्तरदेशेषु च बलीन् हरेदित्यर्थः। दिशोर्दिशोरन्तरालमवान्तरदेशः,—इत्याख्यायते ॥०॥ ३९ ॥०॥

अथेदानीं, कथं बलीन् हरेत्?,—इत्येतत् प्रति वक्तुमारभते,—

## आनुपूर्व्व्येणाव्यतिहरन् ॥ ४० ॥

पूर्व्वं पूर्व्वमनु,—इत्यनुपूर्व्वम्, तस्य भाव आनुपूर्व्व्यम्, तेन आनुपूर्व्व्येण, बलीन् हरेत्,—इत्यनुवर्त्तत एव। किं कुर्व्वन्?। अव्यतिहरन्। व्यतिहारमकुर्व्वन्। व्यतिहारो व्यत्यासः पौर्व्वापर्य्यविपर्य्ययः,—इत्यनर्थान्तरम्।

कस्य पुन र्व्यतिहारो निषिध्यते?। आनुपूर्व्यस्येत्याह। कुतः?। सन्निधानात्। मन्त्राणाम्,—इति च प्रतिपद्यामहे। कस्मात्?। तेषामपि बौद्धसन्निधानस्य सम्भवात्। न वक्तव्यं तर्हि? ननु विधानसामर्थ्यादेव व्यतिहारो न भविष्यति, अथोच्यते;—कारणं वक्तव्यम्।

आदरार्थम्,—इति ब्रूमः। आह। ननु, सूत्रमेवैतदवाच्यं, पूर्व्वसूत्राभ्यामुत्तरसूत्रेण चैतस्य गतार्थत्वात्। उच्यते। नैष दोषः। कस्मात्?। सामान्यप्राप्तविशेषकथनस्यापुनरुक्तत्वात्। लेखशैली खल्वियमाचार्य्याणाम्। ते खल्वादितः सामान्येनाभिधाय पुनस्तदेव विशेषेणाभिदधते। सोऽयमलङ्कारो न दोषः। एतस्मिन् खल्वनुक्ते पूर्व्वसूत्रद्वयक्रमानुरोधान्मन्त्रान् विहृत्य किमादितः सर्व्वासु दिक्षु बलिहरणं ततोऽवान्तरदेशेषु? उत उत्तरसूत्रानुसारात्तदुक्तेनैव क्रमेण? उताहो उभयत्रापि पाठक्रमस्याविशेषात् विकल्पः?,—इति कदाचित् शिष्या मुह्येयुः, अतः परमकारुणिक आचार्य्यः सूत्रमिदं रचयाञ्चकार। ननु तथापि न ज्ञायते;—प्राचीनस्य पराचीनस्य वा क्रमस्यानुपूर्व्व्यमभिप्रेतम्,—इति। पराचीनस्य,—इत्याह। कुतः?। यतः प्राचीनस्य क्रमस्यानुपूर्व्व्ये खल्वभिप्रेयमाणे मन्त्राणां व्यतिहारः स्यात्। तच्चानिष्टम्। उत्तरसूत्रतात्पर्य्यपर्य्यालोचनाच्चैवमवगच्छामः। यदि तावत् प्राचीनस्य क्रमस्यानुपूर्व्व्यमिहाभिप्रेतमभविष्यत्, नूनमुत्तरत्र पुरस्तात्,—इति, अवान्तरदेशे,—इति चैवमादिदेशकीर्त्तनं नाकरिष्यत्। अकार्षीच्चाचार्य्यः। तस्मादवगच्छामः,—न प्राचीनस्य क्रमस्यानुपूर्व्व्यमिह प्रतिपिपादयिषितम्,—इति। अथ, तथाप्युत्तरसूत्रे देशकीर्त्तनमनर्थकम्;—ननु मन्त्राणां व्यतिहारनिषेधादेव प्राचीनस्य क्रमस्यानुपूर्व्व्यमत्र न भविष्यति,—इत्युक्तम्। सत्यमुक्तम्। तत् खल्वेतदुत्तरत्र देशकीर्त्तने सति शक्यते वक्तुम्। न पुनरन्यथा। कथम्?। देशकीर्त्तनबलात्तत्तद्देशानामेव बलीनां ते ते मन्त्राः भवन्ति। तत्रादितो दिक्षु, ततो विदिक्षु च बलिहरणे मन्त्राणां व्यतिहारोऽवर्ज्जनीयः

स्यात्। देशकीर्त्तनस्य खल्वभावे, तत्तद्देशानामेव बलीनां ते ते मन्त्राः, —इत्यत्र कारणविशेषाभावात् यथापठितैरेव मन्त्रैरादितो दिक्षु ततो विदिक्षु बलिहरणोपपत्तेर्व्यतिहारस्य वक्तुमशक्यत्वात्,—इत्यस्तु किं विस्तरेण ॥०॥ ४० ॥०॥

यस्यानुपूर्व्यस्य येषाञ्च मन्त्राणां व्यतिहारो निषिद्धः, त इदानीमभिधीयन्ते; देवताश्च बलीनाम्,—

इन्द्रायेति पुरस्ता द्वायव इत्यवान्तरदेशे यमायेति दक्षिणतः पितृभ्य इत्यवान्तरदेशे वरुणायेति पश्चान्महाराजायेत्यवान्तरदेशे सोमायेत्युत्तरतो महेन्द्रायेत्यवान्तरदेशे वासुकय इत्यधस्तादूर्द्ध्वं नमो ब्रह्मण इति दिवि ॥ ४१ ॥

स्पष्टोऽक्षरार्थः। अधस्तादिति नीचैर्दानमुपदिशति। ऊर्द्ध्वमिति ब्रह्मबलावन्वेति। ऊर्द्ध्वम्,—इति ऊर्द्ध्वमुत्क्षिप्य दानार्थम्। दिवि,—इति दिवं मनसि निधाय निक्षेपार्थम्। बलिहरणमन्त्राणाञ्चामीषामन्ते नमस्कारः स्यात्। कुतः?।

"अमुष्मै नम इत्येवं बलिदानं विधीयते।

बलिदानप्रदानार्थं नमस्कारः कृतो यतः"।

इति प्रकृतौ तथादर्शनात्। पितृभ्यः,—इत्यत्र चान्ते स्वधाकारः स्यात्। कस्मात्?।

"स्वधाकारेण निनयेत् पित्र्यं बलिमतः सदा"।

इति वचनात्। ब्रह्मबलौ तु यावदुक्तत्वादादित एव नमस्कारः स्यात्।

विशेषवचनस्य खल्वर्थवत्त्वार्थं सामान्यवचनस्योपरोध इष्यत एव। न च विकल्पः, अतुल्यबलत्वात्। सामान्यविशेषयोर्विकल्पस्य क्वचिदप्यदर्शनात्। उपजीव्यस्य खल्वाचार्य्यः कात्यायनस्य,—इति नैतदन्यथयितुं शक्यम्। सामविधानब्राह्मणेऽप्येवमेवैतत् समाम्नायते,—इति नात्र विकल्पो युक्तः कल्पयितुम्। अपरे पुनरेतदविद्वांसो भाषन्ते,—"ब्रह्मणे,—इत्यत्रान्ते नमस्कारः स्यात्। कुतः?। प्रकृतौ तथा दृष्टत्वात्। यथोपदेशं वा स्यात्। उपदेशसामर्थ्यात्। एवञ्चेत्, विकल्पः, तुल्यबलत्वात्"—इति।

सुभूमिकरणमुभयतश्चाद्भिः परिषेकश्च प्रकृतिवदत्रापिकर्त्तव्यः॥

॥०॥ ४१ ॥०॥

## प्राच्यूर्द्ध्वावाचीभ्योऽहरहर्नित्यप्रयोगः॥ ४२॥

प्राच्यूर्द्ध्वावाचीभ्यः,—तत्तद्देवताभ्यः,—इत्येतत्। अवाची खल्विहाधोदिगभिप्रेयते। कथं ज्ञायते?। तद्बलेरवाचीनं दीयमानत्वात्। सन्निहित पठितस्योर्द्ध्वस्य वैपरीत्याच्च। तथाच नित्यबलौ कर्म्मप्रदीपः। "इन्द्राय वासुकये ब्रह्मणे"—इति। एताभ्यः खलु देवताभ्योऽहरहः प्रत्यहं, नित्यप्रयोगः,—नित्यमवश्यं प्रयोगोऽनुष्ठानं कर्त्तव्यः बलीनाम्। एताभ्यो देवताभ्यः प्रत्यहं बलिहरणमवश्यं कर्त्तव्यमित्यर्थः। तदिदं प्रसङ्गादत्र सूचितम्। अहरहरिति प्रत्यहकरणार्थम्। नित्यपदमावश्यकत्वार्थम्। क्रमस्तु पूर्व्वसूत्रोक्त एव स्यात्। वैपरीत्ये कारणाभावात्। क्रमभेदः खल्विहोर्द्ध्ववैपरीत्येनावाचीग्रहणार्थः,—इत्यवोचाम। अतएव खल्वयमेवक्रमः कर्म्मप्रदीपकृता।

अभिहितश्चैतत् सर्व्वमासामभिरधस्तात्,—"अथ संस्तूपं स रक्षोजनेभ्यः"—इत्यत्र ॥०॥ ४२ ॥०॥

प्रासङ्गिकमभिधाय प्रकृतमेव पुनरनुवर्त्तामहे,—

## संवत्सरे संवत्सरे नवयज्ञयोर्वा ॥ ४३ ॥

वाशब्दश्चोभयत्रान्वयः कर्त्तव्यः। नवयज्ञयोः,—इत्येतदपि वीप्सितं द्रष्टव्यम्। तेनायमर्थः। संवत्सरे संवत्सरे वा नवयज्ञयोर्नवयज्ञयो र्वा नित्यप्रयोगः,—इत्यनुवर्त्तते। नवयज्ञयोरिति द्विवचनकरणात् व्रीहियवयज्ञयोरिति बोद्धव्यम्। श्यामाकयज्ञस्य तु वनस्थविषयत्वादिह नोल्लेखः।

आह। कस्य नित्यप्रयोगः? । यथोक्तस्य कर्म्मणः,—इत्याचक्ष्महे। कस्मात्? । "अव्यक्तं प्रधानगामि"—इति वचनात्। तथाच साम-विधाने ब्राह्मणे। "अथातो वास्तुशमनम्"—इत्येतस्मिन् प्रकरणे, "बहुपशुधनधान्यहिरण्यमायुष्मत्पुरुषं वीरसूः सुभगा अविधवस्त्रीकं शिवं पुण्यं वास्तु भवति, चतुर्षु मासेषु प्रयोगः संवत्सरे वा पुनः प्रयोगः"—इत्याम्नातम्। तस्मात्,—प्रकृतस्य बलिचयस्य प्रयोगः,—इत्यसङ्गतैषा वर्णना। सामविधाने खल्वहरहर्बलिचयस्योपदेशविरहात् प्रकृतस्यैव कर्म्मणः पुनः प्रयोगोऽवगम्यते। तस्मादिहापि तथैव वर्णयितुमुचितम् ॥०॥ ४३ ॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये चतुर्थप्रपाठकस्य सप्तमी कण्डिका ॥०॥

---



## श्रवणाऽऽग्रहायणीकर्म्मणोरक्षताञ्छिष्ट्वा ॥ १ ॥

व्याख्याते श्रवणाग्रहायणी कर्म्मणी । तयोः कर्म्मणोः, अक्षतान् यवान् शिष्ट्वा,—अवशिष्टान् कृत्वा उर्व्वरितान् कृत्वा,—इत्येतत् । अक्षतान्,—इति वचनादासादितानां यवानां मध्यात् पूर्व्वमेव भर्ज्जनादवशेषः कर्त्तव्यः, न भर्ज्जनात् परतः । कुतः ? । अनक्षतत्वात्तेषाम् । तथा चोक्तम् ।

"अक्षतास्तु यवाः प्रोक्ता भृष्टा धाना भवन्ति ते" ।

इति । शिष्ट्वा,—इति करणाच्च, एतत् कर्म्मकरणार्थमक्षतानामवशेषः करणीयः, न तु यदि दैवादक्षताः शिष्यन्ते, तदैवैतस्य कर्म्मणः करणम्,—इत्युपदिशति ॥०॥ १ ॥०॥

## प्राङ् वोदङ् वा ग्रामान्निष्क्रम्य चतुष्पथेऽग्निमुपसमाधाय हयेराक इत्येकैकयाऽञ्जलिना जुहुयात् ॥ २ ॥

प्राङ्मुखो वा उदङ्मुखो वा ग्रामान्निर्गत्य । चतुष्पथः प्रसिद्धः । तस्मिन् 'अग्निमुपसमाधाय'—इत्युक्तार्थम् । हयेराके,—इति चतस्र ऋचः । तासामेकैकया ऋचा, अञ्जलिना—व्याकोषीकृतेन पाणिद्वयेन जुहुयात्;—प्रकृतानक्षतान् । अथ, अग्निमुपसमाधाय,—इत्ये-

तद्वाच्यम्; ननु जुहोतिचोदनया खल्वेतत् प्राप्नोति। न,—इत्याह। कस्मात्?। यस्मादग्निमुपसमाधाय,—इत्येतदवचने चतुष्पथे खल्वसौ होमः स्यात् उदकद्रवाक्षततण्डुलानाम्। तस्मादेतदुच्यते ॥०॥ २ ॥०॥

**प्राङुत्क्रम्य वसुवन एधीत्यूर्द्ध्वमुदीक्षमाणो देवजनेभ्यः ॥ ३ ॥**

प्राङ् प्राङ्मुखः, उत्क्रम्य अग्नेः सकाशात् कतिचित् पदानि गत्वा। वसुवन एधि,—इति यजुषा चिरभ्यस्तेन,—इत्यर्थः। कुतः?। पठ्यमानमन्त्रकाण्डे तथैवैतस्य यजुषः पाठात्। ऊर्द्धम् उपरिष्टात्। उदीक्षमाणः ऊर्द्धमवलोकयन्, देवजनेभ्यः देवजनानुद्दिश्य। प्रकृतानामक्षतानामञ्जलिमुत्सृजेत्,—इति सूत्रशेषः। "ऊर्द्धम्"—इति पदस्योत्सर्गेण संबन्धो न तु ईक्षणेन। कथं ज्ञायते?। उदीक्षमाणः,—इति उदुपसर्गेणैव तदवगतेरनर्थकत्वापत्तेः।

इदमिदानीं सन्दिह्यते। वसुवन एधि,—इत्येतद् यजुः किमुत्क्रमणेन संबध्यते, आहोस्विदुदीक्षणेन, उताहो उत्सर्गेण?—इति। उत्क्रमणेन,—इति केचित्। तदसङ्गतम्। कस्मात्?। यस्मादेवं सति अक्षतबलिरमन्त्रकः स्यात्। तच्चानिष्टम्। अव्यक्तस्य प्रधानसंबन्धसिद्धान्तोऽप्येवमुपरुध्येत। अतएव, उदीक्षणेन संबन्धः,—इत्यपि नाद्रियामहे। अपरेतु,—देवजनेभ्यः,—इति चतुर्थीनिर्देशादयमेव नमस्कारान्तो बलिमन्त्रः,—इति मन्यमानाः,—वसुवनेति मन्त्रस्योत्क्रमणेन संबन्धम् इच्छन्ति। तदप्यसुन्दरम्। कस्मात् कारणात्?। इति करणाभावात्। एवं खल्वभिप्रेयमाणे, "इन्द्रायेति पुरस्तात्"—इत्ये-

वृमादिवत्, देवजनेभ्यः,—इत्यत्रापि इतिः क्रियेत। तदकरणाद्वग-च्छामः,—नायं बलिमन्त्रः,—इति। तस्मादुत्सर्गेणैव यजुषः संबन्धः। तथा चोक्तम्।

"ऊर्द्धं वस्विति मन्त्रेण देवेभ्योत्सृज्य वा बलिम्।
तथेतरजनेभ्यश्च प्राञ्चमन्यद् यथाविधि"।

इति। उत्क्रमणमुदीक्षणञ्च द्वयमपि मन्त्रानुपदेशाद् व्याहृतियोगेन स्यात्। तूष्णीमिति केचित्॥०॥ ३॥०॥

## तिर्य्यङ्ङितरजनेभ्योऽर्व्वाङवेक्षमाणः॥ ४॥

तिर्य्यङ् तिरश्चीनं यथा भवति, तथा,—इति क्रियाविशेषणमेतत्। अथवा। "प्राञ्चमन्यद् यथाविधि"—इति वचनात् प्राञ्चमेतं बलिं हरेत्। ततश्च एवं व्याख्यायते। तिर्य्यङ् तिरश्चीनः सन्, इतरज-नेभ्यः देवजनेतरजनेभ्यः, अवताञ्जलिमुत्सृजेत्। प्रकृतेन वसुवन एधी-त्यनेन मन्त्रेण। किमविशेषेण?। न। कथन्तर्हि?। अर्व्वाङवेक्ष-माणः। अधोऽवलोकयन्। अर्व्वाङवेक्षमाणः,—इति पाठेऽपि स एवार्थः। अर्व्वाङ् अधोमुखः, अवेक्षमाणो बलिदेशम्,—इति वा वर्णनीयम्॥०॥ ४॥०॥

## अनवेक्षमाणः प्रत्येत्याक्षतान् प्राश्नीयादुपेतैरमात्यैः सह॥ ५॥

अनवेक्षमाणोऽनवलोकयन्। अनपेक्षमाणः,—इति पाठेऽपि, अपे-त्ययमुपसर्गः,—इति स एवार्थः। किमनवेक्षमाणः?। प्रकृतान् बलि-

दिग्देशान्। प्रत्येत्य पुनरागत्य। किम्?। अग्निसमीपदेशम्। कुतः?। प्रकृतत्वात्। प्रतिशब्दस्वरसाच्च। अहुतान्,—प्रकृतान् होमवल्योरवशिष्टान् इत्यर्थः। प्राश्नीयात् भुञ्जीत। किमेक एव प्राश्नीयात्?। न। उपेतैरमात्यैः सह। उपेतैः समीपमागतैरमात्यैः सह मिलित्वा। अमात्यशब्देन पुत्रभ्रातृप्रभृतयो गृह्या उच्यन्ते। एतदुक्तं भवति। यावदयं गृहान्निष्क्रान्तो जुहोति बलिश्चोत्सृज्य प्रत्येति, तावदमात्या अप्यस्य समीपमागच्छेयुः;—येन तैः सार्द्धमहुतप्राशनमस्योपपद्यते,—इति। स खल्वयमर्थः उपेतपदस्वरसादवगम्यते ॥०॥ ५ ॥०॥

काम्येन खल्वेतेन कर्म्मणा भवितव्यम्। किं पुनरस्मिन् कर्म्मणि कृते फलं स्यात्?। तदुच्यते,—

## स्वस्त्ययनम् ॥ ६ ॥

व्याख्यातोऽक्षरार्थः। तदिदं कर्म्मणः फलवचनपरं सूत्रं न वामदेव्यगानविधानार्थम्। अनर्थकत्वापत्तेः। परिभाषाप्राप्तं वामदेव्यगानं खल्वन्तरेणाप्येतद्वचनमिदानीं कर्त्तव्यं भवति। उत्तरतः कर्म्मान्तरसूत्रणादिदानीमेतस्य कर्म्मणोऽपवर्गावगमात्। अपर आह। कर्म्मापवर्गविहितं वामदेव्यगानमिह स्वस्त्ययनम्—इति ॥०॥ ६ ॥०॥

## वशङ्गमौ शङ्कुश्चेति पृथगाहुती व्रीहियवहोमौ प्रयुञ्जीत ॥ ७ ॥

वशङ्गमौ,—इति मन्त्रेण, शङ्कुश्च,—इति मन्त्रेण च, पृथक् नाना

आहुती ययोः तौ पृथगाहुती ब्रीहियवहोमौ प्रयुञ्जीत कुर्य्यात्। ननु, पृथगाहुती,—इत्येतदवाच्यं; ब्रीहियवहोमौ,—इति द्विवचनबलात् होमयोर्द्वित्वावगतेः। न,—इत्याह। कस्मात्?। यस्मात् ब्रीहियवयोर्द्वन्द्वबलादितरेतरयोगावगतेर्मिलितयोर्ब्रीहियवयोर्होमः स्यात्। तस्मादेकैकमन्त्रेणैकैकस्य होमार्थं पृथगाहुती,—इति वचनम्। एवञ्च, वम्रङ्क्माविति मन्त्रेण ब्रीहिहोमः, मङ्क्ष्वस्येत्यनेन च यवहोमः स्यात्। तथा चोक्तम्।

"वम्रङ्क्माविति ब्रीहीन् मङ्क्ष्वस्येति यवांस्तथा।
असावित्यत्र नामोक्त्वा जुहुयात् चिप्रहोमवत्"॥

इति। अस्माद्वचनात् चिप्रहोमोऽयम्। आह। असौ,—इत्येतस्मिन् सर्व्वनाम्नि नाम ऊहित्वा जुहुयात्,—इत्युक्तम्। न ज्ञायते; कस्य नाम्न ऊहः?—इति। तद्वक्तव्यम्। यस्यात्मनि प्रसादमिच्छति, तस्य,—इति ब्रूमः। कस्मात्?। औचित्यात्। उत्तरसूत्रपर्य्यालोचनाच्च ॥०॥ ७ ॥०॥

## यस्यात्मनि प्रसादमिच्छत्तस्मै ॥ ८ ॥

यस्य,—अविशेषात् स्त्रियाः पुरुषस्य वा, आत्मनि स्वस्मिन् विषये, प्रसादं प्रसन्नतामिच्छेत् अभिलषति, तस्मै,—इति व्यत्ययाच्चतुर्थी। तस्य, नाम ऊहित्वा,—इति सूत्रशेषः। अथवा। तस्मै,—इति तादर्थ्ये चतुर्थी बोद्धव्या। यस्यात्मनि प्रसादमिच्छेत्तदर्थं तमुद्दिश्य ब्रीहियवहोमौ प्रयुञ्जीत,—इति गतेन संबन्धः। अनयाऽपि वचन व्यक्त्या तस्यैव नाम्न ऊहः,—इत्यवगच्छामः। तं प्रसादयितुम्—इति

वा वर्णनीयम्। अस्यामपि वर्णनायां मतेनैवास्य संबन्धो द्रष्टव्यः ॥ ॥०॥ ८ ॥०॥

किमस्य व्रीहियवहोमस्य सकृत् प्रयोगः?। न,—

## नित्यप्रयोगः ॥ ९ ॥

नित्यमहरहः प्रयोगः—अर्थादाप्रसादात् प्रत्यहमनुष्ठानम् ॥०॥ ९ ॥०॥

## एकाक्षर्य्यायामर्द्धमासव्रते द्वे कर्म्मणी ॥ १० ॥

"आकूतीं देवीं मनसा प्रपद्ये"—इत्यादिकामृचमेकाक्षर्य्यामाचक्ष्महे। कस्मात्?। तस्या इदानीं क्रमप्राप्तत्वात्। प्रसिद्धेश्च। प्रसिद्धि वीजञ्च,—"यस्यास्त एकमक्षरम्"—इति मन्त्रवर्णः। तदस्यामेकाक्षर्य्यायामृचि चत्वारि कर्म्माणि सूचयिष्यति। तेषां मध्यात् द्वे कर्म्मणी अर्द्धमासव्रते स्याताम्। के पुन र्द्वे कर्म्मणी अर्द्धमासव्रते स्याताम्?। आयुष्काम ग्रामकामकर्म्मणी,—इति ब्रूमः। कथं ज्ञायते?। अनयो र्विशिष्टफलकत्वात्। साध्यानुगुणत्वाच्च साधनस्य। तथा चोक्तम्।

"चत्वारि चैकाक्षर्य्यायां कर्म्माणि फलभेदतः।
तत्रार्द्धमासव्रतता न द्वितीयचतुर्थयोः"।

इति। द्वितीय चतुर्थयोस्तु परिभाषिकव्रततैव स्यात्,—विशेषस्यानुपदेशात्,—इति द्रष्टव्यम् ॥०॥ १० ॥०॥

तानि चत्वारि कर्म्माणि सपरिकरमिदानीमभिधीयन्ते,—अष्टभिः सूत्रैः,—

पौर्णमास्याᳬ रात्रौ खदिरशङ्कुशतं जुहुयादायुः-
कामः ॥ ११ ॥

पौर्णमास्यां रात्रौ,—इत्युक्तार्थम्। खदिरः प्रसिद्धः। तन्मयाः शङ्कवः कीलकाः—खदिरशङ्कवः। तेषां खदिरशङ्कूनां शतम्,—(शतशब्दः संख्यावचनः)—जुहुयात्, प्रकृतया एकाचर्य्यया ऋचा, चिप्रहोमन्यायेन,—इत्यर्थः। शङ्कवश्च प्रकृतिधर्म्मानुरोधात् समित्प्रमाणाः समिल्लचणयुक्ताश्च कर्त्तव्याः। तथा चोक्तम्।

"सत्वचः शङ्कवः कार्य्या स्तीच्णाग्रा वीतकण्टकाः।
समिल्लचणसंयुक्ताः सूचीतुल्यास्तथाऽऽयताः"।

इति। को जुहुयात्?। आयुःकामः। आयुर्जीवितं कामयते यः, सोऽयमायुःकामः। कस्य आयुःकामः?। अविशेषादात्मनः पुत्रादीनां वा। कथं पुनः "शास्त्रदेशितं फलमनुष्ठातरि"—इति स्थिते सिद्धान्ते पुत्रादीनामप्यायुःकामयमानोऽधिकरोति,—इति वर्ण्यते?। गृह्याकर्म्मत्वादित्याह। गृह्याकर्म्म खल्विदं गृह्यानामपि फलजनकं भवितुमर्हति, न केवलं यजमानस्यैव। गृह्याश्च पुत्रादयः। न खल्वसौ यजमानोऽन्तरेणैतान् स्वमेवाभ्युदयं कामयमानो भवति, निर्वृतः। तत् सारत्वात्तस्य। तथाच गृह्यासंग्रहः।

"पत्न्यः पुत्राश्च कन्याश्च जनिष्याश्चापरे सुताः।
गृह्या इति समाख्याताः यजमानस्य दायकाः।
तेषां संस्कारयोगेन शान्तिकर्म्मक्रियासु च।
आचार्य्यविहितः कल्पस्तस्माद् गृह्या इति स्थितिः"॥

इति ॥०॥ ११ ॥०॥

## आयसान् बधकामः ॥ १२ ॥

अयो लोहम् । तद्वान् आयसान् शङ्कून्,—प्रकृतत्वाच्छतसंख्याकान्, प्रकृतेनैव विधिना जुहुयात् । कः? । बधकामः । हननं बधः,—इत्यनर्थान्तरम् । तं कामयते यः, सोऽयं बधकामः । कस्य बध-कामः? । शत्रूणामर्थात् ॥०॥ १२ ॥०॥

## अथापरम् ॥ १३ ॥

अथशब्दः,—बधकामकर्म्मणा व्यवहितस्यापि पूर्व्वप्रकृतस्यार्द्धमासव्रतस्या-नुसन्धानार्थः । अर्द्धमासव्रते द्वे कर्म्मणी,—इत्युक्तम् । तत्रैकमायुःकाम-स्योक्तम् । अथापरमपि अर्द्धमासव्रतं कर्म्म ग्रामकामस्य वर्त्तिष्यते,—इत्यर्थः ॥०॥ १३ ॥०॥

## प्राङ् वोदङ् वा ग्रामान्निष्क्रम्य चतुष्पथे पर्व्वते वाऽरण्यैर्गोमयैः स्थण्डिलं प्रताप्यापोह्याङ्गारान् मन्त्रं मनसाऽनुद्रुत्य सर्पिरास्येन जुहुयात् ॥ १४ ॥

'प्राङ् वोदङ् वा ग्रामान्निष्क्रम्य',—इत्युक्तार्थम् । 'चतुष्पथे पर्व्वते वा' । चतुष्पथपर्व्वतौ प्रसिद्धौ । तयोरन्यतरस्मिन् । 'अरण्ये भवैर्न ग्राम्यैः, 'गोमयैः',—न दारुभिः, 'स्थण्डिलं' लोहपात्रं, 'प्रताप्य' प्रकर्षेणातिशयं तापयित्वा, तस्मात् स्थण्डिलात् 'अङ्गारान्' अग्निम-याम्, 'अपोह्य' अपाहृत्य, 'मन्त्रं' प्रकृतमेकाक्षर्य्यामन्त्रं, 'मनसा' हृदयेन, 'अनुद्रुत्य' अनुसृत्य, 'सर्पिः' घृतं, 'आस्येन' मुखेन,

'जुहुयात्'। कुत्र जुहुयात्?। प्रतप्ते स्थण्डिले,—इत्याह। कुतः?। प्रकृतत्वात्। अथापि स्यात्,—जुहोति चोदनाबलादपोढ़ेष्वेवाङ्गारेषु होमः?,—इति चेत्। नैतदेवम्। कस्मात्?। यस्मादेवंसति स्थण्डिलप्रतापनोपदेशोऽनर्थकः स्यात्। अपोहनोपदेशेन चाङ्गाराणां स्थण्डिल-प्रतापनमात्रार्थतया कर्म्मानङ्गत्वावगतेः। एवञ्च, अनग्निक-त्वादत्र चिप्रहोमधर्म्मो न स्यात्, किन्तु उदकहोमवत् यावदुक्तमेव स्यात्,—इति द्रष्टव्यम्। अत्र च, स्थण्डिल प्रतापनादौ यद्यपि मन्त्रो नोपदिश्यते, तथापि न व्याहृतिप्रयोगः, किन्तु तूष्णीमेव करणीयम्। तथा च गृह्यासंग्रहः।

"वपाहोम मुखेनैव होमे स्विष्टकृते तथा।
व्याहृतीर्न प्रयोक्तव्या मुखे नाप्सु च लक्षणम्"।

इति ॥०॥ १४ ॥०॥

तस्याञ्च सर्पिराहुत्याम्—

## ज्वलन्त्यां द्वादशग्रामाः ॥ १५ ॥

अस्य भवन्ति। फलविधिरयं न फलार्थवादः। कथं ज्ञायते?। काम्यानां श्रूयमाणफलत्वस्य रात्रिसत्रन्यायेन वर्णयितुमुचितत्वात्। तस्मात् ग्रामकामस्यात्राधिकारः ॥०॥ १५ ॥०॥

## धूमे चत्वराद्धाः ॥ १६ ॥

आहुत्यामज्वलन्त्यां केवले धूमे जायमाने त्र्यवरार्द्धाः ग्रामाः अस्य भवन्ति। अवरार्द्धशब्दो हीनवचनः। त्रयोऽवरार्द्धाः हीना येषां ते

तथोक्ताः। अवराद्ध्यशब्देनैतत् दर्शयति,—धूमप्रमाणाल्पत्वबहुत्वाभ्यां फलाल्पत्वबहुत्वं भवति, परन्तु न्यूनकल्पेऽपि त्रयो ग्रामाः सम्पद्यन्ते,—इति। अपरे तु मन्यन्ते,—ज्वालादीप्तितारतम्येनापि फलतारतम्यं भवति,—इति ॥०॥ १६ ॥०॥

## अमोघं कर्म्मेत्याचक्षते ॥ १७ ॥

इदं ग्रामकामकर्म्म अमोघं अव्यर्थमिति आचक्षते कथयन्ति आचार्य्याः। अमोघवचनेनैतद्दर्शयति,—यदि ज्वाला न भवति, धूमोऽपि न जायते, तथापि नैवेदं कर्म्म मोघं भवति, अपितु कियदपि गृहक्षेत्रादिकं फलमस्य स्यादेव,—इति। कुतः?। अमोघवचनस्यैवमर्थत्वात् ॥ ॥०॥ १७ ॥०॥

## वृत्त्यविच्छित्तिकामो हरितगोमयान् सायं प्रातर्जुहुयात् ॥ १८ ॥

वृत्तिर्वर्त्तनमुपजीवनमित्यनर्थान्तरम्। अविच्छित्तिरविच्छेदः—अविच्युतिरित्येतत्। वृत्तेरविच्छित्तिः वृत्त्यविच्छित्तिः। तां कामयते,—इति वृत्त्यविच्छित्तिकामः। आह। कतमा पुनरिह वृत्ति रभिप्रेता?। शिलोञ्छादिरूपा,—इति ब्रूमः। कुतः?। तस्या एव ब्राह्मणादि वृत्तितया प्रशंसनात्। तथाच वृत्तिमुपक्रम्य स्मरति भगवानत्रिः।

"मयैष धर्म्मोऽभिहितः संस्थिता यत्र वर्णिताः।
वर्त्तमानमिह प्राप्य प्रयान्ति परमां गतिम्"।

इति। मनुरपि।

"अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः ।
या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदि ।
यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्म्मभिरगर्हितैः ।
अक्लेशेन शरीरस्य कुर्व्वीत धनसञ्चयम् ।
ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन वा ।
सत्यानृताभ्यामपि वा न श्ववृत्त्या कदाचन" ।

इति ।

"न लोकवृत्तं वर्त्तेत वृत्तिहेतोः कथञ्चन ।
अजिह्मामशठां शुद्धां जीवेद्ब्राह्मणजीविकाम्" ।

इति च। तस्मात्,—युक्ता अभ्युदयहेतोः शुद्धाया वृत्ते रविच्छित्ति-कामना । अपर आह । वृत्तिशब्देन श्रुतिस्मृतिविहितकर्म्मानुष्ठान-मुच्यते । कुतः ? ।

"यावज्जीवमविच्छिन्नां वृत्तिं यस्त्वनुतिष्ठति ।
यथाऽऽम्नातेन विधिना स परं ब्रह्म विन्दते" ।

इति स्मरणात् । मनुवचनाच्च ।

"एषोदिता गृहस्थस्य वृत्तिर्विप्रस्य शाश्वती ।
स्नातकव्रतकल्पस्य सत्वशुद्धिकरः शुभः" ।

इति । तदसङ्गतम् । कुतः ? । वृत्तिशब्दस्येदमर्थाप्रसिद्धेः । स हि जीवनोपायमाह,—इति स्मृतिषु प्रसिद्धम् । यदपि स्मरणम्—"याव-ज्जीवमविच्छिन्नाम्"—इत्यादि,तदपि अस्मदुक्तामेव वृत्तिं स्तौति ।तस्या अपि प्रशंसार्हत्वात् । न भवदुक्ताम् । अप्रसिद्धेरेव । मनुरपि चतुर्थे-ऽध्याये प्रथममस्मदुपवर्णितां वृत्तिं, परतस्तु स्नातकव्रतमभिधाय,

प्रकरणशेषे "एषोदिता गृहस्थस्य"—इत्यादिना यथाक्रमं तदुभयमेवोपसंहरति,—इत्यवगच्छामः। कथम्?। उपक्रमोपसंहारयोरेकार्थत्वोपपत्तेः। अन्यथा खल्वसावन्यदुपक्रम्यान्यदुपसंहरन्ननवधेयवचनः स्यात्। भवत्परिकल्पितायाश्च वृत्तेराश्रमान्तरसाधारण्यात् गृहस्थमात्रपरं मनुवचनं पीड्येत। न खल्वेकैव वृत्तिरनेकसाधारणी एकस्य प्रशस्यते नापरस्येति किञ्चित् कारणमत्र शक्यमुत्प्रेक्षितुम्। तस्मादस्मदुक्त एवार्थो विद्वद्भिरादरणीयः।

स खल्वयं वृत्त्यविच्छित्तिकामः,—हरितगोमयान् सायं प्रात र्जुहुयात्। प्रकृतेनैकाक्षर्य्यामन्त्रेण। होमश्चायं क्षिप्रहोमन्यायेन स्यात्। हरिताश्च ते गोमयाश्च,—इति हरितगोमयाः, तान्—हरित गोमयान्। यैः खलु गोमयैः सङ्कुले प्रदेशे हरितानि तृणानि प्रशस्तान्युत्पद्यन्ते, तान् किल गोमयान् हरितगोमयान् आचक्षते। ते खल्वार्द्रा इहाभिप्रेयन्ते। कथं ज्ञायते?। तेष्वेव तत्प्रसिद्धेः। हरितगोमयान्,—इति बहुवचनं सायंप्रातरावृत्त्यपेक्षम्। आहुतेरावृत्त्यपेक्षमेव कुतो न स्यात्?—इति चेत्। न। एकमन्त्राधिकारात्। अभ्यासानुपदेशाच्च। तस्मात्,—एकैवेयमाहुतिः सायंप्रातःकालयोर्होतव्या। सा खल्वियमाहुतिः, सायं—सायमाहुतेः परस्तात् स्यात्। प्रातश्च प्रातराहुतेः,—परस्तात्। कस्मात्?। सायंप्रातर्होमयोरव्यवायोपपत्तेः। एवं खल्वव्यवायः सायंप्रातर्होमयोरुपपद्यते। इतरथा व्यवायः स्यात्। स चानिष्टः। कुतः?।

"नैकस्मिन् कर्म्मणि तते कर्म्मान्यत् तायते यतः"।

इति वचनात्। अथ, एवमपि प्रादुष्करणहोमयोर्व्यवायः स्यादेव?।

स्यादेव । अनन्यगतिकत्वात् । किं पुनरत्र कारणम्?;—प्रादुष्करण होमयोर्व्यवाय आश्रयितव्यो न सायं प्रातर्होमयोः,—इति । उच्यते । आश्रयिष्यामः प्रादुष्करणहोमयोर्व्यवायम्, अनाश्रयन्तः सायं प्रातर्होमयोर्व्यवायं करिष्यामः । न च गुणस्य अव्यवायं उपपादयितुं प्रधानयोर्व्यवायः युक्त आश्रयितुम् । तस्मात्,—यथोक्तमेवास्तु । स खल्वयं होमो वर्षासु प्रत्यहं करणीयः । कुतः? । तत्रैव हरित गोमयोपपत्तेः । तथा चोक्तम् ।

"सायं होमस्य पुरतः परस्तात् प्रातराहुतेः ।
आर्द्रं वर्षासु जुहुयात् प्रत्यहं गोमयाहुतिम्" ।

इति । एवन्तावदेकाष्टकायां चत्वारि कर्म्माण्यभिहितानि ॥०॥१८॥०॥

मन्त्रान्तरविनियोगं विवक्षुः कर्म्मान्तरमिदानीं वक्तुमारभते,—

## त्रिरात्रोपोषितः पण्यहोमं जुहुयादिदमहमिमं विश्वकर्म्माणमिति ॥ १९ ॥

त्रिरात्रोपोषितः,—इत्युक्तार्थम् । 'काम्येषु त्रिरात्राभोजनम्'—इति सिद्धत्वादेतदवाच्यम्,—इति चेत् । न । सिद्धमेव पुनरुच्यते । किमर्थम्? । आदरार्थम् । अथवा । नियमार्थमेतद्भविष्यति,—त्रिरात्रोपोषित एव पण्यहोमं जुहुयात्,—इति । किमतः? । एतदतो भवति,—'त्रीणि वा भक्तानि'—इत्येतत् पक्षान्तरमिह न भवति,—इति ।

पण्यं विक्रेयद्रव्यं भण्यते । पण्याय होमः पण्यहोमः । तम्—पण्यहोमम्, 'इदमहम्,'—इति मन्त्रेण क्षिप्रहोमन्यायेन जुहुयात् ।

आह। केन द्रव्येण जुहुयात्?। द्रव्यानादेशादाज्येन। एवमेके। उत्तरसूत्रदर्शनात् पश्ववयवेन। एवमपरे। येषां पशूनामवयव होमाद् विनाशः,—यथा मणिरत्नादीनाम्, तेषामाज्येन, येषां पुनरवयवहोमादपि न विनाशः,—यथा धान्यादीनाम्, तेषामवयवेनैव होमः। एवमन्ये। किं पुनरत्र युक्तम्?। पश्ववयवेन,—इत्याह। कुतः?। उत्तरसूत्रादेव। पशुशब्दो वृद्धावपि प्रयुज्यते,—इति तस्याप्यत्र ग्रहणमिच्छन्ति। एका चेयमाकृतिः। सकृच्च प्रयोगः॥ ॥०॥ १९ ॥०॥

## वाससस्तन्तून्॥ २०॥

वाससः पशुस्य तन्तून् दशासूत्राणि जुहुयात्, पूर्व्वोक्तेन विधिना॥ ॥०॥ २० ॥०॥

## गोर्बालान्॥ २१॥

गोः पशुस्य बालान् लाङ्गूललोमानि, जुहुयादित्यनुवर्त्तते॥०॥२१॥०॥

## एवमितरेभ्यः पशुभ्यः॥ २२॥

इतरेभ्यः पशुभ्यः सकाशात्, एवमवयवमुद्धृत्य जुहुयात्। अत्र पशुहोमकर्म्मणः परिसमाप्तिः। फलमप्यस्य कर्म्मणः पशुमेव कल्पयितव्यं भवति। कुतः?। उपस्थितत्वात्। पशुहोममिति वचनाच्च॥०॥ ॥ २२ ॥ ॥०॥

## पूर्णहोमो यजनीयप्रयोगः॥ २३॥

'पूर्णहोमं यशसे जुहोमि'—इति पूर्णशब्दोपलक्षितेन मन्त्रेण होमः

पूर्णहोमः । कर्त्तव्यः,—इति सूत्रशेषः । स खल्वयं पूर्णहोमो यजनीयप्रयोगो भवति । व्याख्यातमेतत् । होमस्त्वयमाज्येन करणीयः । द्रव्यानुपदेशात् । एका चेयमाहुतिः चिप्रहोमन्यायेन स्यात् । एवमुत्तरत्रापि ॥०॥ २३ ॥०॥

इन्द्रामवदादिति च ॥ २४ ॥

'इन्द्रामवदात्तमोवः'—इति मन्त्रेण च होमो यजनीयप्रयोगः ॥०॥ ॥ २४ ॥ ॥०॥

अनयोः खलु यजनीयप्रयोगाहुत्योर्मध्यात्,—

यशस्कामः पूर्व्वाᳬ सहायकाम उत्तराम् ॥ २५ ॥

यशस्कामः पूर्व्वामाहुतिं जुहुयात् । सहायकाम उत्तरामाहुतिं जुहुयात् ॥०॥ २५ ॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये चतुर्थप्रपाठकस्य अष्टमी काण्डिका ॥०॥

---

# गोभिलीय-गृह्यसूत्रे

चतुर्थप्रपाठके नवमी काण्डिका ।



## पुरुषाधिपत्यकामोऽष्टरात्रमभुक्त्वा ॥ १ ॥

पुरुषाणामाधिपत्यं सैनापत्यादिकं कामयते,—इति पुरुषाधिपत्य काम: । अष्टरात्रम्,—अष्टौ अहोरात्राणि, अभुक्त्वा उपोष्य ॥०॥ ॥ १ ॥०॥

## औदुम्बरान् स्रुवचमसेध्मानुपकल्पयित्वा ॥ २ ॥

उदुम्बरस्यैतान् औदुम्बरान् । तान् खल्विमान् वार्चानेव न तैजसान्,—इत्यवगच्छाम: । कथम्? । इध्मेन सहैकयोगनिर्देशात् । स्रुवचमसेध्मा: व्याख्याता: । तान् उपकल्पयित्वा,—उपकल्प्य सम्पाद्य,—इत्येतत् । चमसस्योपकल्पनं प्रणीतार्थम् । इध्मानामुपकल्पनम्—आज्यतन्त्रेणहोमप्रज्ञापनार्थम् । कथं ज्ञायते? । एवं खल्वमीषामुपकल्पनं दृष्टार्थं भवति । अन्यथा अदृष्टार्थत्वमेषां कल्पनीयं स्यात् । नचैतदुचितम्,—सम्भवति दृष्टे अर्थे ॥०॥ २ ॥०॥

## प्राङ् वोदङ् वा ग्रामान्निष्क्रम्य चतुष्पथेऽग्निमुपसमाधाय ॥ ३ ॥

गतभाष्यं सूत्रम् ॥०॥ ३ ॥०॥

**आज्यमादित्यमभिमुखो जुहुयात्;—अन्नं वा एकच्छन्दस्यंऽओर्व्वा एषेति च ॥ ४ ॥**

आदित्यमभिमुखः,—आभिमुख्येनादित्यमुखः, अन्नं वा,—इति मन्त्रेण, ओर्व्वा,—इति मन्त्रेण च, आज्यं जुहुयात्। पृथङ्मन्त्रद्वयनिर्द्देशः,—आहुतिद्वयार्थः। आदित्यमभिमुखः,—इति वचनात् प्रातराहुत्यनन्तरमेव होमोऽयं करणीयः,—इत्यवगच्छामः। कथं कृत्वा?। एवं खल्वादित्याभिमुखता प्राङ्मुखता च होतुः सम्पत्स्यते। तथाच सति, न कस्यापि शास्त्रस्य उपरोधो भविष्यति। इतरथा प्राङ्मुखशास्त्रं वा उपरोत्स्यते, आदित्याभिमुखशास्त्रं वा। तच्चानिष्टम्। ननु, आज्यम्—इति किमर्थम्?। आज्येन होमार्थम्। ननु, अवचनेऽपि तदेव प्राप्नोति?। प्राप्नोति। अनर्थकं तर्हि?। न,—इत्युच्यते। कस्मात्?। यस्मात् आज्यमित्यवचने अनादेशबलात् तत् प्राप्नोति, वचनेऽपि आदेशबलात् तदेव प्राप्नोति। तत् किमत्र चोद्यम्?—इति न खल्वधिगच्छामि। आदेशे खल्वेतत् वचनमाज्यस्य प्रापकं भवति, अनादेशे चान्यद्वचनम्। अनादेशे प्रापकं तु वचनमवष्टभ्य, आदेशवचनमाचिक्षिपति भवान्। नचैतदुचितम्। आचार्य्येच्छाधीनत्वादादेशानादेशयोः।

अथ, प्रयोजनान्तरमन्तरेण न ते परितोषः;—शृणु, तदपि। आज्यमित्यवचने मन्त्रलिङ्गादन्नेन होममपि कश्चिदाशङ्कीत कदाचित्,—इति इमामधिकामाशङ्कां निरसितुम्,—आज्यम्,—इत्याचार्य्यः सूत्रयाञ्चकार,—इति क्लिश्यते। अपर आह। "'सर्पिस्तैलं

दधि पयो यवागूं वा',—इत्येतस्य व्यावृत्त्यर्थं पुनराज्यग्रहणम्। एवञ्च, अत्र आज्यमेव नियम्यते"—इति ॥०॥ ४ ॥०॥

## अन्नस्य घृतमेवेति ग्रामे तृतीयाम् ॥ ५ ॥

अन्नस्य घृतम्,—इत्यनेन मन्त्रेण तृतीयामाहुतिं ग्रामे जुहुयात्। इयमप्याहुतिराज्येनैव स्यात्। कुतः?। द्रव्यान्तरानुपदेशात्। आज्यस्य च प्रकृतत्वात्। ग्रामेऽप्यग्नावेव होमो न ग्राम एव। 'ग्रामान्निष्क्रम्य,'—इत्येतद्वैपरीत्यमभिप्रयन् खल्वाचार्यः,—'ग्रामे,'—इत्याह,—इति शिष्यते। 'अग्निमुपसमाधाय'—इति खल्वनुवर्त्तत एव।

इदमिदानीं सन्दिह्यते। किमियमप्याहुतिरौदुम्बरस्रुवचममादिना आज्यतन्त्रेण स्यात्, उत क्षिप्रहोमन्यायेन,?—इति। आज्यतन्त्रेण,—इति ब्रूमः। कस्मात्?। अधिकारात्। फलान्तरानुपदेशात्; तृतीयत्ववचनाच्च; ऐककर्म्यावगतेश्च। अन्यथा खल्वभिधानादेव तृतीयत्वप्राप्तेस्तृतीयामिति वचनमनर्थकं स्यात्। तस्मात्,—संख्यावचनादैककर्म्यं प्रतिपादयन् पूर्व्वोक्तधर्म्मसम्बन्धमत्रापि दर्शयति,—इत्याशयम् ॥०॥ ५ ॥०॥

## गोष्ठे पशुकामः ॥ ६ ॥

गोष्ठे गवामावासे, अग्निमुपसमाधाय प्रकृतामाहुतिं जुहुयात्। कः?। पशुकामः। पशुशब्देन गौरेवाभिप्रेयते। कथं ज्ञायते?। गोष्ठे,—इति तस्यैव हृदयागतत्वात्, तत् परित्यागे च कारणविशेषाभावात्। पशुशब्देनाविशेषात् गोमेषमहिषादय उच्यन्ते,—इति केचित्।

इदमिदानीं सन्दिह्यते। किं कृत्स्नमेवाहुतित्रयं पशुकामस्य गोष्ठे उपदिश्यते, उताहो अनन्तरा तृतीयैवाहुतिः?,—इति। अनन्तरा तृतीयैव,—इति ब्रूमः। कस्मात्?। आनन्तर्य्यातिरेकात्। अभ्यासानुपदेशाच्च। तस्मात्,—तृतीयाम्,—इत्यनुवर्त्तते,—इति बोद्धव्यम्। अपर आह। अविशेषात् उत्तरत्रापि मन्त्रत्रयस्यानुवृत्तिदर्शनाच्च कृत्स्नमेवाहुतित्रयमिहोपदिश्यते,—इति।

स खल्वयं होमः पुरुषाधिपत्यकामस्यैव सतः पशुकामस्य गोष्ठे उपदिश्यते। दर्शपौर्णमासयाजिन एव सतः पशुकामस्य गोदोहेन प्रणयनोपदेशः,—इति यथा। कथं ज्ञायते?। तस्यैवाधिकारात्। तृतीयाम्,—इत्यनुवर्त्तनेनैककर्म्मार्थप्रतिपत्तेश्च। 'गोष्ठे पशुकामः'—इत्येतावन्मात्रं खल्विहोच्यते, न तु किञ्चिदपि कर्त्तव्यमुपदिश्यते। भवितव्यन्तु तेन। तस्मात्,—आनन्तर्य्यातिरेकात् तृतीयामाहुतिं जुहुयात्,—इत्यनुषञ्जनीयम्। तस्मात्,—येयं तृतीया आहुतिः केवलं पुरुषाधिपत्यकामस्य ग्रामे उपदिष्टा, सैव तस्यैव पशुकामस्य सतः गोष्ठे उपदिश्यते,—इति शिष्यते। तस्मादधिकृताधिकारोऽयमुपदेशः ॥०॥ ६ ॥०॥

## विदूयमाने चीवरम् ॥ ७ ॥

विदूयमाने,—"टु दु उपतापे"—इति स्मरणात् विशेषेण उपतप्यमाने। कस्मिन्?। गोष्ठे। कथं ज्ञायते?। अधिकारात्। सप्तमीनिर्देशाच्च। एतदनेनोक्तं भवति। गोष्ठे अग्निमुपसमाधायैव होमो न कर्त्तव्यः, किन्तु अग्निमुपसमाधायापि तावत् प्रतीक्षणीयं;—यावद्गोष्ठ-

मुपतप्यमानं भवति। तत उपतप्यमाने सति गोष्ठे होमः करणीयः, —इति। अपरे पुनरेतदविद्वांसो भाषन्ते—"गोष्ठस्योपतापासम्भवात् गोष्ठसंबन्धाद्गोषु उपतप्यमानासु—इति द्रष्टव्यम्"—इति। तदेवं विदूयमाने गोष्ठे चीवरं जुहुयात्। चीवरशब्देन लोहचूर्णमुच्यते। कुतः?। "लोहचूर्णञ्च चीवरः"—इति वचनात्। तदत्र चीवरविधानादाज्यस्य निवृत्तिः स्यात्। पूर्व्वोक्तधर्म्मसंबन्धस्तु अत्रापि स्यादेव। तत्सम्बन्धेनैवोपदेशात्। या खल्वियं तृतीयाऽऽहुतिराज्येन ग्रामे स्यात्, सैव पशुकामस्य सतः चीवरेण गोष्ठे भवति,—इति खल्वेवोचाम। अत्र पुरुषाधिपत्यकामकर्म्मणोऽपवर्गः।

अन्यः पुनरन्यथेमं ग्रन्थं वर्णयाञ्चकार,—'गोष्ठेपशुकामः'—इत्यादिम्,—"पशुकामो गोष्ठे तृतीयामाज्याहुतिं जुहुयात्। पशुकामः,—इति निरपेक्षश्रवणात् अधिकृताधिकारे च प्रमाणाभावात् सर्व्वस्यैव पशुकामस्य होमोऽयं, न पुरुषाधिपत्यकामस्यैव सतः पशुकामस्य,—इति। तस्मात्, पुरुषाधिपत्यकामकर्म्मणः कर्म्मान्तरमिदम्। एवञ्च, अत्र अष्टरात्रोपोषणं न स्यात्, न वा उदुम्बरस्रुवादि,—इति। कर्म्मान्तरमाह। 'विदूयमाने चीवरम्'। गोष्ठस्योपतापासम्भवात् गोष्ठसंबन्धाद्गोषु उपतप्यमानासु चीवरं लोहचूर्णं जुहुयात्। इदमपिकर्म्मान्तरम्। क्षिप्रहोमस्त्वायम्। एतेषां त्रयाणामपि कर्म्मणां सकृत् प्रयोगादेव फलं स्यात्। कुतः?। "अभ्यासानुपदेशात्"—इति ॥०॥ ७ ॥०॥

अथेदानीं कर्म्मान्तरमाह,—

## प्रतिभयेऽध्वनि वस्त्रदशानां ग्रन्थीन् बध्नीत ॥ ८ ॥

भयमेव प्रतिभयम्। प्रतिरुपसर्गः। प्रकर्षवाची वा। तेन, प्रकर्षेण भयं प्रतिभयम्,—इत्यर्थः। अथवा। प्रत्यासन्नं भयं प्रतिभयम्। अध्वनि पथि, प्रतिभये,—प्रत्यासन्ने भयहेतौ सति,—इत्येतत्। वस्त्रदशानाम्,—वस्त्रं वासः, अविशेषादधरीयमुत्तरीयञ्च स्वकीयमेव भण्यते। तस्य दशानां ग्रन्थीन्,—बहुवचनात् त्रीनेव, बध्नीत। अन्नं वा एकच्छन्दस्यम्,—इत्येतत्प्रभृतिभिस्तिसृभिर्ऋग्भिः। कुतः?। एतासामेव प्रकृतत्वात्। मन्त्रान्तरानुपदेशाच्च। आह। आनन्तर्य्यातिरेकात् तृतीययैव स्यात्?। उच्यते। "स्वाहाकारान्ताभिः"—इति वक्ष्यमाणसूत्रात् तिसृभिरेव स्यात्, न पुनरानन्तर्य्यातिरेकात् तृतीययैव। अतिक्रान्तसंबन्धस्याप्याचार्य्यानुमतत्वात् ॥०॥ ८ ॥०॥

स्ववाससोदशाऽभावे कथम्?। उच्यते,—

## उपेत्य वसनवतः ॥ ९ ॥

वसनवतः,-दशायुक्त वसनवतः, 'वस्त्रदशानां ग्रन्थीन् बध्नीत,'—इत्यनुवर्त्तते। किं कृत्वा?। उपेत्य। उप,-समीपम्, इत्वा—गत्वा।

इयमपरा सूत्रद्वययोजना,—

अध्वनि पथि, प्रतिभये सति, वस्त्रदशानां त्रीन् ग्रन्थीन् बध्नीत, प्रकृताभिर्ऋग्भिः। किमात्मनो वस्त्रदशानाम्?। न। कस्य तर्हि?। 'उपेत्य वसनवतः'। वसनवतः सहगन्तुः कस्यचित्, वस्त्रदशानां ग्रन्थीन् बध्नीत। किं कृत्वा?। उपेत्य। एवं वा,—

'प्रतिभयेऽध्वनि वस्त्रदशानां ग्रन्थीन् बध्नीत'। अर्थादात्मनः। अ

केवलमात्मन एव। किं तर्हि?। 'उपेत्य वसनवतः'। चशब्दोऽत्र लुप्तवत् द्रष्टव्यः। वसनवतः,—इति च द्वितीयाबहुवचनान्तं पदम्। तदयमर्थः। वसनवतश्चैकसार्थगन्तॄन् सहायानुपेत्य तेषामपि वस्त्रदशानां ग्रन्थीन् बध्नीत ॥०॥ ९ ॥०॥

अहोमकत्वात् कर्म्मणः स्वाहाकारविलोपं मा प्रशाङ्क्षीत्,—इत्यत आह,—

## स्वाहाकारान्ताभिः ॥ १० ॥

प्रकृताभि र्ऋग्भिः ॥०॥ १० ॥०॥

किं पुनरस्मिन् कर्म्मणि कृते फलं भवति?। उच्यते,—

## सहायानाञ्च स्वस्त्ययनम् ॥ ११ ॥

सहायानां आत्मनः सह गन्तॄणां, चशब्दादात्मनश्च, स्वस्ति मङ्गलं तस्यायनं प्राप्तिः,—भयनिवृत्तिरित्येतत्। तस्या एवाभिप्रेतत्वेन मङ्गलरूपत्वात्। भवति,—इति सूत्रशेषः। अभिप्रेतार्थसिद्धिर्वा स्वस्तिशब्देनोच्यते। तस्यायनं प्रापकमेतत् कर्म्म,—इत्ययमर्थस्तदानीं वर्णनीयः। तदिदमुपरिष्टाद्दैवं वेदितव्यम्। भयस्यानियतकालत्वात् ॥ ॥०॥ ११ ॥०॥

## आचितसहस्रकामोऽक्षतसक्त्वाहुतिसहस्रं जुहुयात् ॥ १२ ॥

आचितशतकामः,—इत्येतद्व्याख्यानेनैव, आचितसहस्रकामः,—इत्येतदपि व्याख्यातम्। अक्षतैर्यवैर्निष्पन्नाः सक्तवोऽक्षतसक्तवः, तेषामा-

हुतिसहस्रं (त्रिप्रहोमन्यायेन) जुहुयात्,—अन्नं वा एकच्छन्दस्यम्—इत्येताभिर्ऋग्भिः। कुतः?। एतासामेवप्रकृतत्वात्। मन्त्रान्तरानुपदेशाच्च।

अत्र किञ्चिद्वक्तव्यमस्ति। आहुतिसहस्रं होतव्यमुपदिश्यते, ऋचस्तु तत्र तिस्रः करणतयोच्यन्ते, तत् कथमयं होमः स्यादिति तावत् सन्दिह्यते। किं तिसृणामृचामनुरोधात् आहुतिसहस्रस्य त्रिरभ्यासः कर्त्तव्यः, आहोस्वित् तिसृभिरेव ऋग्भिरेकैका आहुतिर्होतव्या, उताहो आहुतिसहस्रं त्रिधा विभज्य ऋक्त्रयेण होतव्यम्?—इति। तत्र न तावदाद्यः पक्षः। कुतः?। गुणानुरोधेन प्रधानाभ्यासस्यायुक्तत्वात्। आहुतिसहस्रमिति संख्यावचनाच्च। नापि द्वितीयः। कस्मात्?। एकैकस्या एवर्चो होमनिर्व्वाहसामर्थ्यात्। तथात्वे खल्वन्त्याया एव ऋचः व्यवायाभावेन करणत्वापत्त्या आद्ययोः ऋचोः करणत्वाभावप्रसङ्गाच्च। तस्मात्, पारिशेष्यात् तृतीयः पक्षो ज्यायान्। तस्मात्, आहुतिसहस्रं त्रिधा विभज्य प्रथमया ऋचा तस्य प्रथमं भागम्, द्वितीयया ऋचा द्वितीयं भागम्, तृतीयया च ऋचा तृतीयं भागं जुहुयात्,—इति। अथ, एवमपि अन्त्या एका आहुतिः शिष्यते, कतमया पुनः ऋचा असौ होतव्या?। आद्यया,—इति ब्रूमः। कस्मात्?। मालान्यायेन पुनरपि तस्या एव उपस्थितत्वात्। तथा चोक्तम्।

"सहस्राहुतिसहस्रस्य पुरीषाणाञ्च कीर्त्तितम्।
त्रिधाऽभ्यासेन तत् कुर्य्यादाद्यमन्त्राऽऽहुतिर्भवेत्"।

इति ॥०॥ १२ ॥०॥

पशुकामो वत्समिथुनयोः पुरीषाहुतिसहस्रं जुहु-
यात् ॥ १३ ॥

पशून् कामयते,—इति पशुकामः। वत्सश्च वत्सा च वत्स-मिथुनम्। कथं ज्ञायते?। मिथुनशब्दस्य द्वन्द्ववाचित्वात्। तयोः वत्समिथुनयोः, पुरीषाणां प्रकृताम् आहुतयः—पुरीषाहुतयः, तेषां सहस्रं जुहुयात्। अन्नं वा एकच्छन्दस्यम्—इत्येवमादिभि-र्ऋग्भिः। कुतः?। एतासामेव प्रकृतत्वात्। मन्त्रान्तरानुप-देशाच्च।

इदमिदानीं सन्दिह्यते। किं यदैव यदैव पुरीषं सम्पद्यते, तदैव जुहुयात्। उत पूर्व्वमेव सर्व्वं पुरीषं संगृह्य एकस्मिन्नेव पूर्व्वाह्णे आहुतिसहस्रं जुहुयात्?,—इति। एकस्मिन्नेव पूर्व्वाह्णे,—इति ब्रूमः। कस्मात्?। प्रधानस्य होमकर्म्मणो नानादिनकल्पनायां पारिभाषि-ककालबाधे च कारणविशेषाभावात्। पुनरपि सन्देहः। किं प्रकृत-योरेव वत्समिथुनयोः पुरीषसंग्रहः कार्य्यः, उत प्रकृतयोरन्ययोश्च कयोश्चिदनियमेन?-इति। प्रकृतयोरेव,—इति ब्रूमः। कुतः?। प्रकृतपरित्यागे हेत्वभावात्। तथा चोक्तम्।

"चतुर्णां वत्सवत्सानां प्रकृतानाञ्च गोमयम्।
एकस्मिन्नेव पूर्व्वाह्णे जुहुयात् सक्तुहोमवत्"।

इति। 'सक्तुहोमवत्'—इति वचनादत्रापि आहुतिसहस्रं त्रिधा विभज्य पूर्व्ववत् जुहुयात्,—इति द्रष्टव्यम् ॥०॥ १३ ॥०॥

अविमिथुनयोः क्षुद्रपशुकामः ॥ १४ ॥

क्षुद्रपशुकामः, अविमिथुनयोः—मेषमिथुनयोः, पुरीषाहुतिसहस्रं प्रकृताभिर्ऋग्भिः पूर्ववदेव जुहुयात् ॥०॥ १४ ॥०॥

वृत्त्यविच्छित्तिकामः कम्बूकान् सायं प्रातर्जुहुयात् क्षुधे स्वाहा क्षुत्पिपासाभ्याᳬ स्वाहेति ॥ १५ ॥

वृत्त्यविच्छित्तिकामः,—वृत्त्यर्थम्। कम्बूकान् फलीकरणकणान्। सायं प्रातर्जुहुयात्,—क्षुधे स्वाहा क्षुत्पिपासाभ्यां स्वाहेत्याभ्यां यजुर्भ्याम्। अत्रापि सायमाहुतेः पुरस्तात् प्रातराहुतेश्च परस्तात् होमः स्यात्। क्षिप्रहोमश्चायम् ॥०॥ १५ ॥०॥

माभैषीर्न मरिष्यसीति विषवता दष्टमद्भिरभ्युक्षन् जपेत् ॥ १६ ॥

विषमस्यास्तीति विषवान् सर्पादिः। तेन दष्टम्,—अविशेषात् पुरुषं स्त्रियं वा। अद्भिरुदकेन अभ्युक्षन् आभिमुख्येन सिञ्चन्, माभैषीरिति मन्त्रं जपेत्,—आ विषप्रक्षयात्। कथं ज्ञायते?। प्राणिपीडाऽपनयार्थत्वात् कर्म्मणः। अभ्युक्षन् जपेत्,—इति कुर्व्वन् अभ्युक्षणजपयोर्यौगपद्यं दर्शयति ॥०॥ १६ ॥०॥

तुरगोपायेति स्नातकः सम्वेशनवेलायां वैणवं दण्डमुपनिदधीत ॥ १७ ॥

स्नातको गृहमेधी। सम्वेशनं शयनं स्वापो निद्रा,—इत्यनर्थान्तरम्।

तस्य वेलायां रात्रावित्यर्थः। कुतः?। दिवास्वापस्य निषेधात्। वैणवम्—वेणुवंशः तज्जं, दण्डं यष्टिम्, तुरगोपाय,—इति मन्त्रेण उप समीपे—शयनसन्निधौ,—इत्येतत्। निदधीत धारयेत्। दध धारणे। निशब्दप्रयोगात्तत्रैव निश्चलं धारयेत्, न तु मन्त्रप्रयोगं कृत्वा अन्यत्रापनयेत् ॥०॥ १७ ॥०॥

किमर्थं धारयेत्?—

## स्वस्त्ययनार्थम् ॥ १८ ॥

मङ्गलप्राप्त्यर्थम्—चौराद्युपद्रववारणार्थमित्येतत् ॥०॥ १८ ॥०॥

## हतस्ते अत्रिणा कृमिरिति कृमिमन्तं देशमद्भिर-भ्युक्षन् जपेत् ॥ १९ ॥

कृमयः प्रसिद्धाः व्रणेषु जायन्ते। कृमयो विद्यन्ते यस्मिन्, तं कृमिमन्तम्, देशम्—प्राणिव्रणप्रदेशम्, न तु गोमयादि। कथं ज्ञायते?। प्राणिपीडापनयनकर्माधिकारात्। तत्राप्युत्तरसूत्रस्य पशुविषयत्वादेतस्य नरविषयतामवगच्छामः। तमिमं कृमिमन्तं देशं अद्भिरभ्युक्षन्, हतस्ते,—इत्यादि कृमिमन्त्रान् सर्व्वानेव जपेत्। कथं पुनर्ज्ञायते सर्व्वेषां कृमिमन्त्राणामत्र विनियोगः?—इति। उच्यते। कृमिमतो देशस्याभ्युक्षणे विनियोगविधानात् सर्व्वेषां कृमिमन्त्राणामत्रैव विनियोगमवगच्छामः। अन्येषां कृमिमन्त्राणां विनियोगान्तरादर्शनात्। न खल्वविनियुक्ता एवान्ये कृमिमन्त्राः पठ्यन्ते,—इति युक्तम्। तस्मादुत्तरत्राईणमन्त्राणां विनियोगोपदेशादिह सर्व्वेषामेव कृमि-

मन्त्राणां विनियोगः,—इत्यादरणीयम्। अत्राभ्युक्षणसमकालमेव मन्त्रजपः। एवं कृते किल कृमिपीड़ोपशान्तिर्भवति ॥०॥ १९ ॥०॥

पशूनाञ्चेच्चिकीर्षेदपराह्णे सीतालोष्टमाहृत्य वैहायसं निदध्यात् ॥ २० ॥

पशूनां गवाश्वादीनां, चेत् यदि, चिकीर्षेत् कर्त्तुमिच्छेत्। किम्?। कृमिपीड़ोपशान्तिम्। कथं ज्ञायते?। अधिकारात्। तदा, अपराह्णे—न पूर्व्वाह्णे। सीता लाङ्गलपद्धतिः। तस्या लोष्टम्, लोष्टः प्रसिद्धः, तमाहृत्य आनीय, वैहायसं आकाशस्थं, निदध्यात् धारयेत्,—गृहपटलादिस्थं धारयेदित्येतत्। निशब्दः पूर्व्ववत् ॥०॥ २० ॥०॥

तस्य पूर्व्वाह्णे पांशुभिः परिकिरन् जपेत् ॥ २१ ॥

तस्य लोष्टस्य। पूर्व्वाह्णे—न अपराह्णे। अथ, सिद्धत्वादेतदवाच्यम्? अथोच्यते,—कारणं वक्तव्यम्। उच्यते। एतदवचने खल्वपराह्णे,—इत्यनुवर्त्तेत, अतस्तन्निवृत्त्यर्थम्,—पूर्व्वाह्णे,—इत्युच्यते। पांशुभिः रेणुभिः, परिकिरन्,—प्रकृतस्य पशोः कृमिमन्तं देशम्। प्रकृतमेव मन्त्रं जपेत्। कुतः?। तस्यैव प्रकृतत्वात्। मन्त्रान्तरानुपदेशाच्च। परिकिरणसमकालं मन्त्रजपो व्याख्यातः ॥०॥ २१ ॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये चतुर्थप्रपाठकस्य नवमी कण्डिका ॥०॥

---

चतुर्थप्रपाठके दशमी काण्डिका।



क्रमप्राप्तानां मन्त्राणां विनियोगमिदानीं वक्तुमारभते,—

**उत्तरतो गां बद्धोपतिष्ठेरन्नर्हणा पुत्रवाससेति॥ १॥**

उत्तरतः उत्तरस्यां दिशि। कस्य?। अर्हणप्रदेशस्य। कथं ज्ञायते?। 'यत्रैनमर्हयिष्यन्तः स्युः'—इति सूचयिष्यमाणत्वात्। गां स्त्रीगवीं बद्धा। स्त्रीगवीमिति कुतो वर्ण्यते?। लिङ्गादित्याह। धेनुः,—इति पयस्वती—इति चैवमादिमन्त्रलिङ्गं खल्वेवमनुगृह्यते। न च पुंगव परिग्रहे कारणं पश्यामः। तस्माद् यथोक्त एवार्थः। तदेवं गां बध्वा-तामेवाभिमुखाः सन्तः, अर्हणा पुत्रवाससा,—इति मन्त्रेणोपतिष्ठेरन्—आराधयेयुः। उपस्थितत्वान्मन्त्रलिङ्गाच्च तामेवोपतिष्ठेरन् न पुनरर्ह-णीयमिति बोद्धव्यम्। के उपतिष्ठेरन्?। ये अर्हयिष्यन्तः स्युः। कथं ज्ञायते?। उपस्थितत्वात्। बहुवचननिर्देशाच्च। यदि पुन-रर्हणीय एवोपतिष्ठेत,—तर्ह्येकवचनं कुर्य्यात्। 'यत्रैनम्'—इत्यर्हणीय-स्यैकवचनेन निर्देशात्। आह। अर्हयितुरेकत्वात् अस्यामपि वर्णनायां नैव बहुवचनस्यार्थवत्तां पश्यामः। एवन्तर्हि बहुवचनं कर्त्तुरनियमार्थं भविष्यति। कथं नाम?। ये केचिद्गृह्या उपतिष्ठेरन्, न पुनरर्ह-यितैवेत्यस्ति नियमः,—इत्यभिप्रायः। अथवा। बहुवचनं कुर्व्वन्ना-चार्य्यः सर्व्वैरेव गृह्यैरर्हणीयार्हणार्थमप्रमत्तैर्भवितव्यमित्युपदिशति।

तथाच वाजसनेयके प्रवचने। "यत्रचार्ह्य आगच्छति, सर्व्वे गृह्या इतरे तत्र वेष्टयन्ति, अथेह परिज्ञाता भवति"—इति ॥०॥ १ ॥०॥

एवमर्हयितृषूपतिष्ठमानेषु खल्वयमर्हणीयः,—

इदमहमिमां पद्यां विराजमन्नाद्यायाधितिष्ठामीति प्रतितिष्ठमानो जपेत् ॥ २ ॥

प्रतितिष्ठमानः ऊर्द्धंस्तिष्ठन्, इदमहमिति मन्त्रं जपेत्। अर्थात् जपान्तरमासने उपविशेत्। कथं ज्ञायते? । 'इदम्' आसनम्, अधितिष्ठामि,—इति मन्त्रलिङ्गात्। समस्तमन्त्राम्नानं किमर्थम्? । निराकाङ्क्षार्थमहममुक इति नामादेशो नास्तीति प्रज्ञापनार्थम्। समाम्नायप्रज्ञापनार्थञ्च ॥०॥ २ ॥०॥

कुत्र प्रतितिष्ठमानो जपेत्?

यत्रैनमर्हयिष्यन्तः स्युः ॥ ३ ॥

यत्र यस्मिन् प्रदेशे, एनमर्हणीयमर्हयिष्यन्तः—अर्हणं करिष्यन्तः अर्हयितुमिच्छन्तः इत्येतत्। स्युः भवेयुः गृह्याः। बहुवचनं व्याख्यातम्। तत्र प्रदेशे प्रतितिष्ठमानो जपेत्॥०॥ ३ ॥०॥

यदा वाऽर्हयेयुः ॥ ४ ॥

यदा यस्मिन् काले, अर्हयेयुरर्हणं कर्त्तुमारभेयुः। बहुवचनं पूर्ब्ववत्। तदा वा प्रतितिष्ठमानो जपेत्,—इति गतेन संबन्धः।

एवं वा—

वाशब्दः तुशब्दार्थः। यदा पुनरेनमर्हयेयुस्तदा विष्टरादीनि वेदये-रन्,—इत्यनागतेनाभिसंबन्धो वर्णनीयः ॥०॥ ४ ॥०॥

अथेदानीमर्हणविधिविवक्षयेदमाह,—

विष्टरपाद्यार्घ्याचमनीयमधुपर्कानेकैकशस्त्रिस्त्रिर्वे-दयेरन् ॥ ५ ॥

विष्टरः,—

> "ब्रह्मविष्टरयोश्चापि सन्देहे समुपस्थिते।
> ऊर्द्धकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः।
> कतिभिस्तु भवेद्ब्रह्मा? कतिभिर्विष्टरः स्मृतः?।
> पञ्चाशद्भिः कुशैर्ब्रह्मा तदर्द्धेन तु विष्टरः"।

इति आचार्य्यपुत्रेण गृह्यासंग्रहे व्याख्यातः। कात्यायनेन तु कर्म्म-प्रदीपे,—

> "यज्ञवास्तुनि मुष्ट्याञ्च स्तम्बे दर्भवटौ तथा।
> दर्भसंख्या न विहिता विष्टरास्तरणेष्वपि"।

इति विष्टरे दर्भसंख्या निषिद्धा। तदनयोर्विकल्पः,—पञ्चाशदर्द्धैर्वा कुशैर्विष्टरः स्यात्, असंख्यातैर्वा,—इति। कथं ज्ञायते?। द्वयोरेवास्म-दाचार्य्याभ्यामनुशिष्टत्वात् अनन्यगतेर्वचनात्। सम्भवे पञ्चाशदर्द्धैरसम्भवे पुनरपरिमितैरपि कुशैर्विष्टरो भवति,—इति नारायणोपाध्यायाः। रघुनन्दनस्तु दर्भसंख्यावचनमाचार्य्यपुत्रस्येत्येतदजानानः कात्यायन-वचनविरोधात् तद्वचनं शाख्यन्तरीयमितिवर्णयन् कल्पनारसिकत्वमा-त्मनः ख्यापयाञ्चकार। अन्यदपि दर्भवटुप्रसङ्गात् पूर्व्वमेव व्याख्यातम्।

स खल्वयं विष्टरः एको वा स्यात् द्वौ वा,—इत्यनियमः। कथं ज्ञायते?। 'द्वौ चेत्'—इति वक्ष्यमाणसूत्रपर्य्यालोचनात्।

पाद्यम्-पादप्रक्षालनार्थमुदकम्। तथाच लाट्यायनसूत्रम्। "तत्रै-तदाहरन्ति,—विष्टरं पादप्रक्षालनम् अर्घ्यम् आचमनीयं मधुपर्क-मिति"—इति। द्राह्यायणसूत्रम्। "अर्हयिष्यन्त आहरन्ति,—विष्टरौ पाद्यमर्घ्यम्"—इत्यादि। "विष्टरः पाद्यमर्घ्यमाचमनीयं मधुपर्को गौरित्येतेषां त्रिस्त्रिरेकैकं वेदयन्ते"—इति च गृह्यान्तरम्।

"पादार्थमुदकं पाद्यं केवलं जलमेव तत्।
तत्तैजसेन पात्रेण शङ्खेनापि निवेदयेत्"।

इति च स्मर्य्यते पुराणेषु। तस्मात्,—'पाद्यम्'—इत्येवमेव प्रयोगो भट्टनारायणाद्यनुमत आदरणीयः। यच्च भवदेवभट्टेन 'पाद्याः',—इति लिखितम्, यदपि सरलायाम्—'पाद्याः',—इति प्रयोगमभि-धाय, पाद्याः—इति अप्संबन्धात् स्त्रीबहुवचनम्,—इति वर्णितम्। तदसङ्गतम्। कुतः?। अस्मच्छास्त्रे पाद्यमिति निर्देशात्। न खलु वीक्षणविधौ मन्त्रे च 'अपः'—इति दर्शनादत्रापि तथा कल्पनायां किञ्चित् प्रमाणमस्ति। तस्मादस्मदुक्त एव प्रयोगः।

अर्घ्यम्—

"दध्यक्षतसुमनस आपश्चेति चतुष्टयम्।
अर्घ्य एष प्रदातव्यो गृह्ये ये अर्घ्यार्हाः स्मृताः।
दध्यक्षतसुमनसो घृतं सिद्धार्थका यवाः।
पानीयञ्चैव दर्भाश्च अष्टाङ्गो ह्यर्घ्य उच्यते"।

इति गृह्यासंग्रहोक्तलक्षणम्। 'स खल्वयमर्घ्यः कांस्यपात्रेणार्हणीयस्याञ्जलौ निनेतव्यः। कस्मात्?।

"कांस्येनैवार्हणीयस्य निनयेदर्घ्यमञ्जलौ"।

इति वचनात्—इति वर्णयन्ति। आचमनीयम्—आचमनार्थमुदकम्।

मधुपर्कः,—

"सर्पिषा मधुना दध्ना अर्चयेदर्हयन् सदा।
ऋषिप्रोक्तेन विधिना मधुपर्केण याज्ञिकः।
कंसे त्रितयमासिच्य कंसेन परिसंवृतम्।
परिश्रितेषु देयः स्यान्मधुपर्क इति ध्रुवम्"।

इति।

"दधनि पयसि वाऽथवा कृतान्ने
मधु दद्यान्मधुपर्कमेतदाहुः।
दधि मधु सलिलेषु सक्तवः
पृथगेते विहिता स्त्रयस्तु मन्थाः"।

इति च गृह्यासंग्रहोक्तलक्षणः। तदेवं छन्दोगानां स्वशाखापरिभाषितश्चतुर्विधो मधुपर्को भवति;—सर्पिर्मधुदधि, दधनिमधु, पयसि मधु, कृतान्ने मधु च,—इति। तत्र प्रथमो मधुपर्कः कंसस्थः कंस परिवृतश्च भवति। इतरेषु पुनर्नैषनियमः। कस्मात्?। "कंसे त्रितयमासिच्य"—इत्यादिना तत्रैव तदभिधानात्। यथा खल्वभिक्रमणं प्रयाजमात्रस्यैवाङ्गं नानुयाजादीनाम्, तद्वदत्रापि स्यात्। रघुनन्दनस्तु छन्दोगोऽप्येतदजानानः,—

"साक्षतं सुमनोयुक्तं उदकं दधिमिश्रितम् ।
अर्घ्यं, दधि मधुभ्याञ्च मधुपर्को विधीयते"।

इति वचनं लिखित्वा, 'दधिमधुमात्रेण मधुपर्काभिधानं घृतासम्भवपरम्'—इति स्वच्छन्दादेव परिकल्प्य, 'तत् सम्भवे गोभिलः'—इत्यभिधाय, "मधुपर्कं दधिमधुघृतमपिहितं कांस्ये कांस्येन"—इति पारस्करगृह्यसूत्रम्,—"पिहितं कांस्यस्थम्"—इत्याकुलीकृत्य लिखित्वा, 'पूर्व्ववचने पात्रानुपदेशात् कांस्यपात्रं विनापि मधुपर्को दीयते'—इति ब्रुवन्नात्मनः कल्पनानैपुण्यं ख्यापयाञ्चकार। पृथगमीषां मधुपर्काणामेकविशेषस्यान्यत्राप्रसक्तेः किमर्थमेतावान् प्रयासः,—इति न विद्मः। परमार्थतः पुनर्मधुपर्काणां पृथक्त्वमविदुषा वृथैव प्रलपितमिति प्रेक्षावतामनपेक्षणीयं भवति। अपि च। मध्वसम्भवे घृतेन मधुपर्कं गृह्यान्तरकाराः स्मरन्ति, स तु स्वातन्त्र्यातिशयान्मन्यते,—घृतासम्भवे दधिमधुमात्रेण मधुपर्कः,—इत्यहोप्रमादः। तथाच गृह्यान्तरम्। "दधनि मध्वानीय सर्पिर्वा मध्वलाभे"—इति। अपि च। अहोवतायं साहसिको,—यः पारस्करीयं सूत्रमाचार्य्यीयं ब्रुवन् पारमर्षञ्च सूत्रमाकुलयन्नापत्रपते। तत् किमत्र ब्रूमः। विस्तरतस्त्वेतत् गृह्यासंग्रहभाष्ये वक्ष्यामः। अग्निस्वामिनोपि प्रथमं मधुपर्कमविद्वांस इव कल्पसूत्रवृत्तौ भाषन्ते,—मधुना पृक्तं दधिपयः शृतान्नं वा मधुपर्कः—इति। 'मधुपर्को दधि मधुयुक्तम्'—इति ब्रुवाणो भट्टनारायणोप्यसम्यग्दर्शित्वमात्मनो नातिशेते। तदस्तु किं विस्तरेण?।

सूत्रशेषमिदानीं वर्णयामहे। तानेतान् विष्टरादीन् मधुपर्कान्तान् द्रव्यविशेषान् एकैकशः प्रत्येकं त्रिस्त्रिरुच्चार्य्य, वेदयेरन्—निवेदयेरन्,—

इत्यल्पत्वादर्हयितुः कर्म्म प्रथमं सूचितम्। वेदयेरन्—ज्ञापयेयुः—इति केचित्। निवेदनञ्च दक्षहस्तेनादाय कर्त्तव्यम्। कर्त्तुरङ्गस्योपदेशाभावे तस्यैव करस्य कर्म्मपारगत्वात्। तथा चोक्तम्।

"कर्म्मोपदिश्यते यत्र कर्त्तुरङ्गं न चोच्यते।
दक्षिणस्तत्र विज्ञेयः कर्म्मणां पारगः करः"।

इति। तस्मात्,—विष्टरनिवेदने उत्तानहस्ताभ्याम्—इत्यसङ्गता कल्पना भवदेवभट्टस्य। सुखावबोधार्थं प्रयोगः प्रदर्श्यते। विष्टरो विष्टरो विष्टरः, पाद्यं पाद्यं पाद्यम्, अर्घ्यमर्घ्यमर्घ्यम्, आचमनीयमाचमनीयमाचमनीयम्, मधुपर्को मधुपर्को मधुपर्कः,—प्रतिगृह्यताम्—इति सर्व्वत्र वाक्यशेषं समापयेत्। कुतः?। तथा प्रसिद्धेः। योग्यत्वाच्च। विष्टरद्वयपक्षे द्विवचनान्तेन प्रयोगः,—इति भट्टनारायणोपाध्यायाः। पृथङ् निवेदनम्,—इति भवदेवभट्टः ॥०॥ ५ ॥०॥

अथेदानीमर्हणीयकर्म्मविधिर्वक्तव्यः। स खल्वर्हयित्रा दत्तं विष्टरादिकं—विष्टरं प्रतिगृह्णामि,—इत्यादिना गृह्णीयात्। कथं ज्ञायते?। योग्यत्वात्। प्रसिद्धेश्च। अर्घ्यमधुपर्कयोस्तु विशेषं वक्ष्यामः। स खल्वयमर्हणीयः विष्टरं गृहीत्वा,—

## या ओषधीरित्युदञ्चं विष्टरमास्तीर्य्याध्युपविशेत् ॥ ॥ ६ ॥

या ओषधीः,—इत्यनया ऋचा उदग्रमुत्तराग्रं विष्टरमास्तीर्य्य, विष्टरम् अधिलक्ष्मीकृत्य आसनस्योपरि उपविशेत्। क्व आस्तीर्य्य? आसने। कथं ज्ञायते?। "तामस्मिन्नासने"—इति मन्त्रलि-

क्तात्। स खल्वयं मन्त्रः विष्टरस्यासनास्तरणे विनियुक्तः। कुतः?। उपवेशनस्य पूर्व्वमेव सिद्धत्वात्, इति व्याख्यातारः ॥०॥ ६ ॥०॥

द्वौ चेत् पृथगृग्भ्याम् ॥ ७ ॥

चेत् यदि, द्वौ विष्टरौ अर्हयित्रा दत्तौ स्याताम्, तदा पृथक्—नाना, ऋग्भ्याम्—या ओषधीरित्येताभ्यामित्यर्थः। आस्तीर्य्याध्युपविशेत्,—इत्यनुवर्त्तते। ऋग् इयं मन्त्रब्राह्मणादवगन्तव्यम्। अत्र, पृथक्—इति करणात् निवेदनं युगपदवगम्यते। चेत्,—इति करणाच्च मातीव द्वयोरावश्यकत्वम्,—इति ॥०॥ ७ ॥०॥

किं द्वितीयमपि विष्टरमविशेषेणासन एवास्तीर्य्य उपर्य्युपविशेत्?। न। किन्तर्हि?—

पादयोरन्यम् ॥ ८ ॥

अन्यमपरम्—द्वितीयं विष्टरम्, या ओषधीरितिमन्त्रेण पादयोरधस्तादास्तीर्य्याध्युपविशेदित्यर्थः। पादयोरध आस्तीर्य्य उपरि पादौ तूष्णीं कुर्य्यात्,—इति भट्टभाष्यसरले ॥०॥ ८ ॥०॥

यतो देवीरित्यपः प्रेक्षेत ॥ ९ ॥

यतो देवीः,—इत्यनेन मन्त्रेण, अपः,—पादप्रक्षालनार्थमुदकम्—पाद्यमित्येतत्। प्रेक्षेत अर्हणीयः ॥०॥ ९ ॥०॥

तेनोदकेन खल्वयमर्हणीयः,—

सव्यं पादमवनेनिज इति सव्यं पादं प्रक्षालयेत्, दक्षिणं पादमवनेनिज इति दक्षिणं पादं प्रक्षालयेत् ॥ १० ॥

सव्यं पादम्,—इति मन्त्रेण, सव्यं वामं, पादं प्रक्षालयेत्। अनेनैव सूत्रशेषो व्याख्यातः। प्रक्षालयेत्,—इति क्रियाभ्यासः; निर्देशक्रमेण पादयोः प्रक्षालनार्थः। अन्यथा उदक्संस्थतानुरोधात् दक्षिणं प्रक्षाल्य ततः सव्यस्य प्रक्षालनं स्यात्। तच्चानिष्टम्। तथा च स्मरणम्।

"पादं प्रक्षालयेद्विप्रो दक्षिणं प्रथमं सदा।
शूद्रस्तु वामं प्रथमं सामवेदी तथा बधूः"।

इति।

"सामगः क्षालयेत् सव्यमादावन्यस्तु दक्षिणम्"।

इति चैवमादि ॥०॥ १० ॥०॥

पूर्व्वमन्यमपरमन्यमित्युभौ शेषेण ॥ ११ ॥

पूर्व्वमन्यमिति मन्त्रेण उभौ पादौ शेषेणावशिष्टेनोदकेन प्रक्षालयेत्—अर्हणीयः। सन्निकर्षातिशयाद्दक्षिणस्यैव पादस्य प्रक्षालनं स्यात्,—इति तन्निरासार्थम्—उभौ,—इत्याह। आह। पूर्व्वमन्यमित्युभौ शेषेण,—इति वक्तव्ये, पूर्व्वमन्यमपरमन्यमित्युभौ शेषेण,—इति गुरुकरणं किमर्थम्?। क्रमविशेषार्थम्,—इति ब्रूमः। कथं नाम?। एकैकपादप्रक्षालने यस्य पूर्व्वं प्रक्षालनं यस्य च पश्चात्, उभयपादप्रक्षालनपक्षेऽपि तस्यैव पूर्व्वं तस्यैव च पश्चात् प्रक्षालनम्—इति।

तदेतत् क्रमविशेषसूचनार्थं पूर्व्वापरत्वानुकीर्त्तनमिति बौद्धव्यम् ॥ ॥०॥ ११ ॥०॥

अन्नस्य राष्ट्रिरसीत्यर्घ्यं प्रतिगृह्णीयात् ॥ १२ ॥

अन्नस्य राष्ट्रिरसि,—इत्यनेन मन्त्रेण अर्घ्यं यथोक्तलक्षणं प्रतिगृह्णीयात्—अर्हणीयः। अर्घ्यं प्रतिगृह्णामि,—इत्यर्घ्यं प्रतिगृह्णीयादित्यसङ्गतैषा कल्पना भवदेवभट्टस्य। 'प्रतिगृह्णीयात्',—इत्यस्य अञ्जलौ गृहीत्वा शिरसि दद्यात्,—इति रघुनन्दनव्याख्यानेऽपि प्रमाणं न पश्यामः। मन्त्रानुपदेशात् तूष्णीमेव शिरस्यर्घ्यं दद्यात्,—इति तु स्यात् ॥०॥ १२ ॥०॥

यशोऽसीत्याचमनीयमाचामेत् ॥ १३ ॥

यशोसि,—इति मन्त्रेणाचमनीयमाचमनार्थमुदकम्, आचामेत् सम्यक् भक्षयेत्,—अर्हणीयः। आचामेत्,—इति करणात्,—वारत्रयमुदकं भक्षयेत्, अथ यथोक्तेन विधिना इन्द्रियाण्युपस्पृशेत्,—इत्यवगच्छामः। 'तच्च वक्ष्यमन्त्रेण भक्षयित्वा द्विस्तूष्णीं भक्षयेत्'—इति भट्टभाष्यम् ॥ ॥०॥ १३ ॥०॥

यशसो यशोसीति मधुपर्कं प्रतिगृह्णीयात् ॥ १४ ॥

यशसो यशोसि,—इत्यनेन मन्त्रेण मधुपर्कमर्हणीयः प्रतिगृह्णीयात्। अपरे पुनरेतदविद्वांसो भाषन्ते,—मधुपर्कं प्रतिगृह्णामीति मधुपर्कं प्रतिगृह्णीयात्,—इति ॥०॥ १४ ॥०॥

तस्य खल्वस्य मधुपर्कस्य,—

यशसो भक्षोसि महसो भक्षोसि श्रीर्भक्षोसि श्रियं मयि धेहीति त्रिः पिबेत् ॥ १५ ॥

यशसो भक्षोसि,—इत्येवमादिना मन्त्रेण, त्रिः—वारत्रयं पिबेदर्हणीयः। आह। समस्तमन्त्राम्नानं किमर्थम्?। उच्यते। मन्त्रे भक्षशब्दस्य त्रिः पाठात् त्रिः पानविधानाच्च भक्षशब्दान्तैरेव मन्त्रावयवैः पानं स्यात्,—इत्यपि कदाचिदाशङ्का स्यात् कस्यचिन्मन्दमतेः। अतस्तन्निरासार्थं मन्त्रान्तेन पानप्रतिपादनार्थम्, समाम्नायप्रज्ञापनार्थञ्च समस्तमन्त्राम्नानम्,—इति भट्टनारायणप्रभृतयः। तस्मात्, कौथुमादीनां मन्त्रान्तेनैव पानम्। येषान्तु 'श्रियो भक्षोसि'—इति मन्त्रपाठः, तेषां मन्त्रावयवैरेव पानं स्यात्। तथा च छन्दोगगृह्यान्तरम्। "मधुपर्कं त्रिः पिबेद् यशसो महसः श्रिय इति, तूष्णीं चतुर्थम्" इति। तदत्र, मन्त्रप्रतीकोपादानात् प्रतीकैरेव पानमवगम्यते। 'श्रीर्भक्षोसि'—इति खल्वस्मच्छाखायां मन्त्रपाठः।

इदमिदानीमत्र सन्दिह्यते। किं प्रतिपानं मन्त्रावृत्तिः, उत सकृन्मन्त्रेण पानत्रयम्?—इति। सकृन्मन्त्रप्रयोगः,—इति केचित्। कुतः?। "एकद्रव्ये कर्म्मावृत्तौ सकृन्मन्त्रवचनं कृत्वा,"—इति वचनात्। तदसङ्गतम्। कस्मात्?। द्रव्यभेदात्। द्रव्यभेदः खल्वत्र भवति। न हि यदेवादितः पिबति, परस्तादपि तदेव पिबति,—इत्यप्रमत्तः शक्नोति वदितुम्। तस्मादस्त्यत्र द्रव्यभेदः। उत्तरत्र तूष्णीमिति करणाच्च प्रतिपानं मन्त्रावृत्तिमवगच्छामः। आह। मध्ये तर्हि आचमनं प्राप्नोति? अन्यथोच्छिष्टः कथं द्वितीयं

तृतीयञ्च पानं करिष्यति, मन्त्रं वा पठिष्यति। उच्यते। उत्तरत्र आचान्तोदकाय,—इति करणादिहोच्छिष्टतैव न भवतीत्यवगच्छामः। तस्मात्, प्राणाग्निहोत्रवत् सोमभक्षणवच्च अकृताचमनस्यैव मन्त्रपाठः स्यात्। तथाच गृह्यासंग्रहः।

"मधुपर्के तथा सोमे अप्सु प्राणाहुतीषु च।
अनुच्छिष्टो भवेद्विप्रो यथा वेदविदो विदुः।
प्राणाहुतिषु सोमेषु मधुपर्के तथैव च।
आस्यहोमेषु सर्व्वेषु नोच्छिष्टो भवति द्विजः"।

इति। इदमपरं चिन्त्यते। मधुपर्कस्य पिवति-चोदना तावदुपलभ्यते, मन्त्रे च भक्षशब्दश्रुतिः। तत्र, किं पात्रेण पातव्यम्? आहोस्वित् हस्तेन भक्षयितव्यम्?—इति। तत्र केचिदाहुः। मन्त्रलिङ्गात् प्रसिद्धेश्च हस्तेन भक्षयितव्यम्। पिवति चोदना तु भोजनधर्म्मस्य पूर्व्वापरद्विराचमनादेर्निवृत्त्यर्थतयाप्युपपद्यते,—इति। अपरे ब्रुवन्ति। मन्त्राणामविधायकत्वात् प्रसिद्धेश्चानैकान्तिकत्वात् विधिवलीयस्त्वाच्च पात्रेण पातव्यम्,—इति। अन्ये तु मन्यन्ते। मधुसंयोगात् द्रवश्चेन्मधुपर्कः स्यात्, तदा पात्रेण पातव्यम्। अथ दध्नः काठिन्यात् पानानुपपत्तिः, प्रागेव तु कृतान्नस्य, तदा हस्तेन भक्षयितव्यम्—इति। तदत्र भवन्तो भूमिदेवाः प्रमाणम्॥०॥ १५ ॥०॥

## तूष्णीं चतुर्थम्॥ १६ ॥

मधुपर्कस्य पिवेत्॥०॥ १६ ॥०॥

## भूय एवाभिपाय शेषं ब्राह्मणाय दद्यात् ॥ १७ ॥

भूयः—पुनरपि, एवकारकरणात्,—तूष्णीमेव, अभिपाय आभिमुख्येन पीत्वा, शेषमवशिष्टं ब्राह्मणाय दद्यात्। तच्च पुत्राय शिष्याय वा, न पुनरविशेषेण यस्मै कस्मैचित्। कथं ज्ञायते?। "उच्छिष्टं कस्यचि न्न पातव्यं नापि दातव्यम्"—इति शास्त्रान्तरे अन्यस्मै उच्छिष्टदानस्य अन्योच्छिष्टभक्षणस्य च निषेधनात्। गुर्वाद्युच्छिष्टभोजनन्तु प्रसिद्धमेवेति न तदुपपादनार्थमुपक्रमः। तदभावे पुनरब्राह्मणायापि दद्यात्, तच्च अद्भिरभ्युक्ष्य,—इति विशेषः। तथा च द्राह्यायणसूत्रम्। "तदभावेऽद्भिः सम्प्रोक्ष्याब्राह्मणाय"—इति। लाट्यायनोप्येवमेव सूत्रयाञ्चकार ॥०॥ १७ ॥०॥

## आचान्तोदकाय गौरिति नापितस्त्रिर्ब्रूयात् ॥ १८ ॥

आचान्तोदकाय अर्हणीयाय। तादर्थ्ये चतुर्थी। आचान्तोदकमर्हणीयमुद्दिश्य,—इति वा वर्णनीयम्। नापितो गौरिति त्रिर्वारत्रयं ब्रूयात्। आचान्तोदकाय,—इति कुर्व्वन् उच्चैस्त्वं द्योतयति। कथं नाम?। यथा खल्वर्हणीयः शृणोति, तथोच्चैर्ब्रूयात्,—इति। एवं खल्वाचान्तोदकार्थता कथनस्य सम्पत्स्यते। अन्ये तु वर्णयन्ति। 'आचान्तोदकाय,—इति सप्तम्यर्थे चतुर्थी। तेन, अर्हणीये आचान्तोदके सतीत्यर्थः,'—इति। मधुपर्कभक्षणे उच्छिष्टता न प्राप्नोति,—इति खल्वाचार्य्य आचान्तोदकाय,—इत्याह। तेन, इतः पूर्व्वं नास्त्येवाचमनम् ॥०॥ १८ ॥०॥

नापितेन चिर्गैरित्युक्ते खल्वभमर्हणीयः, तमेव नापितम्,—

मुञ्च गां वरुणपाशाद् द्विषन्तं मेऽभिधेहीति तं अ-
मुष्य चोभयोरुत्सृज गामत्तु तृणानि पिबतूदक-
मिति ब्रूयात् ॥ १९ ॥

मुञ्च गामिति मन्त्रं ब्रूयात्। आह। समस्तमन्त्राम्नान किमर्थम्?। समाम्नाय प्रज्ञापनार्थम्। एवमेव मन्त्रस्य पाठार्थञ्च। तेन, मे,—इत्यादौ निराकाङ्क्षार्थं न नामप्रयोगः। तेन, अमुष्य,—इत्यपि भूह एव स्यात्,—इति केचित्। ते खलु, 'मेऽभिधेहीति'—इत्यत्र, इतिकारं किमिति न लिखितवन्तः,—इति प्रष्टव्याः। तस्मात्, 'अमुष्य'-पदस्थाने तावद्द्वेषयितुर्नामादेशः कर्त्तव्यः। कुतः?। अदः पदस्थाने नामादेशस्यास्माभिः पूर्व्वमुपपादितत्वात्। "समस्तमन्त्राम्नानं 'जहि' 'अमुष्य'—इति पदयोरन्तरा शब्दान्तराध्याहारशङ्कानिवृत्त्यर्थम्। अन्यथा, मम विष्णुदत्तस्य च,—इत्येवं प्रयोगः स्यात्। तथायुक्तम्। मेऽभिधेहीति मे—शब्देन तदर्थसिद्धेः"—इति केचित्। तेषामपि तदुक्तयैव युक्त्या अध्याहारशङ्काया अप्रसक्तेः समस्तमन्त्राम्नानं किमर्थमिति न विद्मः। मेऽभिधेहीति,—इत्यत्र इतिकरणं किमर्थम्?। परस्थामन्त्रपदस्य रूपान्तरत्वप्रज्ञापनार्थम्। प्रागिति शब्दप्रक्षेपात् यथाऽवस्थितानामेव मन्त्रपदानां प्रयोगार्थञ्च। तेन, 'अमुष्य'-पदस्थाने नामादेशः स्यात्। तर्हि 'तम्'—इत्यत्रापि स्यात्?। नैष दोषः। इति करणात् प्राक्तनेन 'द्विषन्तम्'—इति पदेन तस्य सम्बन्धात्।

तस्मादियमेवावधारणा;—'समस्तमन्त्राम्नानं समाम्नाय प्रज्ञापना-

र्थम्। मध्ये इतिकारकरणं ततः प्राक्तनस्य मन्त्रभागस्य यथाश्रुत-पाठार्थम्, पराचीनस्य 'अमुष्य'पदस्य स्थाने नामादेशसूचनार्थञ्च। अन्यस्य पराचीनत्वेऽपि न नामादेशः, प्रमाणाभावात्। नाप्यध्या-हारः, समस्तमन्त्राम्नानात्'—इति। तथा च छन्दोगगृह्यान्तरम्। "स-म्बोहितामनुमन्त्रयेत मुञ्च गामित्यमुष्य चेत्यर्हयितुर्नाम ब्रूयात्"—इति। भट्टभाष्येणुक्तम्,—"मेऽभिधेहीत्यचेति शब्दप्रक्षेपात् 'मेऽभिधेहि'—इत्येव प्रयोगः। न तु निराकाङ्क्षीकरणाय मे वसुरिति। अमुष्यपदस्थाने अर्हयितुर्नामादेशः"—इति। अत्र च, पठ्यमानमन्त्रकाण्डे 'इति'पदं न पठ्यते, केवलमाचार्य्येणैव उक्तमर्थं प्रतिपिपादयिषुणा प्रक्षिप्तं तदिति बोद्धव्यम्। भट्टनारायणोऽपि प्रक्षिप्तत्वमितिकारस्य स्पष्टमाचष्टे। व्याख्यातारोऽपि पूर्व्वाचार्य्या एवमेव प्रतिपन्नाः। भवदेवभट्टोऽपि मन्त्रे इतिकारं न लिलेख। यत्तु,—उक्तभट्टभाष्यप्रतीकं लिखित्वा, रघुनन्दनेनोक्तम्,—"मेऽभिधेहीत्यत्र भवदेवभट्टेन यत् इतिपदं न लिखितम्, तद् हेयम्, भट्टभाष्यविरोधात्, प्रमाणाभावाच्च,"—इति। तदेव हेयम्। कस्मात्?। भट्टभाष्यविरोधाभावात्। तत्र खल्वितिशब्दस्य प्रक्षेपत्वकथनाद्धक्तमितिशब्दस्य मन्त्रानङ्गत्वमुक्तम्। प्रमाणञ्चात्र मन्त्रसमाम्नायोऽच्छेदसम्प्रदायश्च। तस्मात्,—भट्टभाष्य-पङ्क्तेस्तात्पर्य्यापर्य्यालोचनात् समाम्नायाद्यनवलोकनप्रमादाच्च अप्रमाणं प्रमाणविरुद्धञ्च यदृच्छयैव प्रलपितमित्यनादरणीयम्॥०॥१९॥०॥

ततो नापितेन मुक्तां तामेव गामवलोकयन्नर्हणीयः,—

**माता रुद्राणामित्यनुमन्त्रयेत॥ २०॥**

स्पष्टार्थं सूत्रम्॥०॥२०॥०॥

किं सर्व्वत्रैवार्हणकर्म्मणि नापितेन गौरित्युक्ते मुञ्च गामित्युक्त्वा माता रुद्राणामित्यनेन तामनुमन्त्रयेदर्हणीयः?। एवं खलु प्राप्तम्। एवं प्राप्ते इदमारभ्यते,—

अन्यत्र यज्ञात्॥ २१॥

यज्ञोऽग्निष्टोमादिः। तस्मादन्यत्रैवं कुर्य्यात्॥०॥ २१॥०॥

यज्ञे तर्हि किं कुर्य्यात्?। उच्यते,—

कुरुतेत्यधियज्ञम्॥ २२॥

यज्ञमधिकृत्य,—इत्यधियज्ञम्। यज्ञमधिकृत्य यदर्हणं क्रियते, तत्र नापितेन गौरित्युक्ते खल्वयमर्हणीयः 'कुरुत'—इति ब्रूयात्। कुरुत आलभध्वमित्यग्निस्वामिप्रभृतयः। "कुरुतेति गवि प्रोक्तायां ब्रूयात्" —इति च लाट्यायनसूत्रम्॥०॥ २२॥०॥

कति पुनरर्हणीया भवन्ति?। उच्यते,—

षडर्घ्यार्हा भवन्ति॥ २३॥

अर्घ्यमर्हणम्। तदर्हन्तीत्यर्घ्यार्हाः। ते खल्विमे षट्सङ्ख्यका भवन्ति ॥०॥ २३॥०॥

त इमे षडर्हणीया नामतो निर्दिश्यन्ते,—

आचार्य्य ऋत्विक् स्नातको राजा विवाह्यः प्रियोऽतिथिरिति॥ २४॥

आचार्य्यः,—

"उपनीय तु यः शिष्यं वेदमध्यापयेत् द्विजः।
सकल्पं सरहस्यञ्च तमाचार्य्यं प्रचक्षते"।

इत्युक्तलक्षणः। ऋत्विक्,—

"अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान् मखान्।
यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते"।

इत्युक्तलक्षणः। स्नातकास्त्रयो व्याख्याताः। राजा अभिषेकादि-गुणयुक्तो नरेश्वरः। विवाह्यो विवाहयितव्यो जामाता,—इत्येतत्। प्रियः,—विद्यातपःप्रभृतिर्गुणैः प्रीतिविषयोऽतिथिर्यथोक्तलक्षणः। इत्येते षडर्घ्यार्हा नामतो निर्दिष्टाः। प्रियः,—इति विशेषणात् विद्या-दिगुणवानेवातिथिरर्घ्यार्हो भवति, न यः कश्चित्,—इति दर्शयति ॥०॥ २४ ॥०॥

किमेतानाचार्य्यादीन् सकृदेवार्हयेत्?। न। किन्तर्हि?,—

## परिसंवत्सरानर्हयेयुः ॥ २५ ॥

परिगतः संवत्सरो येषां, तान् परिसंवत्सरान् आचार्य्यादीन् अर्हयेयुः। 'पुनर्,'—इति पराचीनमिहाप्यन्वीयते। मध्यमणिन्यायात्। तेन, एकस्मादर्हणकालादारभ्य संवत्सरादूर्द्धमागतानेतानाचार्य्यादीन् पुन-रर्हयेयुरित्यर्थः ॥०॥ २५ ॥०॥

## पुनर्यज्ञविवाहयोश्च पुनर्यज्ञविवाहयोश्च ॥ २६ ॥

यज्ञविवाहौ व्याख्यातौ। तयोर्निमित्तभूतयोः संवत्सरमध्येऽप्यागतानाचार्य्यादीन् पुनरर्हयेयुः। अपर आह। 'यज्ञविवाहयोर्निमित्तयो रर्घ्या-

गपि संवत्सरादूर्द्ध्वमिगाचार्य्यौ प्राप्तौ पुनरर्हयेयुः,'—इति । चः समुच्चये परिसंवत्सरकालमेव समुच्चिनोति। पुनर्यज्ञविवाहयोश्च पुनर्यज्ञविवाहयोश्च,—इति सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयति॥०॥ २६॥०॥

## अत्रैव शिवम्।

शाण्डिल्यस्य महामुनेरकलुषे वंशे प्रसंशोत्तरे
चीराब्धावकलङ्कमञ्जुलवपुः कान्तः कलानां निधिः ।
वाक्पीयूषकरैर्हरन्नतितरां चेतांस्यरीणामपि
चान्तोऽभूत् परिपूर्णसुन्दरकलोऽप्युल्लासनावासभूः ॥
राधाकान्तः स खलु विदितो मौलिरुच्चैर्गुणानां
मेधोत्कर्षप्रथितमहिमा धीमतामग्रगण्यः ।
शास्त्रालापव्यसनरसिकः सन्निवृत्तोऽन्यदोषात्
साक्षात् दोषाकर इव सतामाकरः सद्गुणानाम् ॥
सिद्धान्तवागीश इति प्रसिद्धो
यः सर्व्वसिद्धान्तगणेष्वभिज्ञः ।
काले मितं वाक्यमुदर्कपथ्यं
यस्योपदेशाऽऽगमवज्जनानाम् ॥
कृपापारावारः स खलु शरणं क्लृप्तविपदां
परानिष्टद्वेष्टा परमभिनिविष्टः श्रुतिविधौ ।
स्फुरद्भक्तिश्रद्धाविमलमतिरुच्चैर्गिरिसुता-
पदाम्भोजद्वन्द्वप्रचुरमकरन्दे मधुकरः ॥
योऽध्यापयामास परःसहस्रा-
ननन्यकाम्यामपि शिष्यसङ्घान् ।

यस्यान्तकाले विससर्ज्ज देहं
सुरापगातीररसान्तरस्थः ॥
अद्वैतवादनिरतो नवावतार इव भक्तियोगस्य ।
अपरिमितो यत्प्रेमा रोमाञ्चमिषादलक्षि वाह्येऽपि ॥
श्रीचन्द्रकान्तनामा ब्रह्मविदः कौथुमो धरादेवः ।
तस्मान्महानुभावात्तर्कालङ्कारलाञ्छनो जातः ॥
सोऽयं ब्रह्ममयीसुतो मतिमतामाराधनेषूत्सुकः
पित्रैवामरगुर्व्वनूनमतिना भूयो विनीतोऽस्पृशत् ।
तस्योच्चैश्चरणारविन्दकृपयाऽन्येषां गुरूणान्तथा
किञ्चिद्बोधलवोदयातिचपलः शार्दूलविक्रीड़ितम् ॥
कामरूपब्रह्मपुत्रावन्तरा कैकयेषु यः ।
पुण्ये सेरपुरे रम्ये करोति वसतिं द्विजः ॥
श्रीमद्विजयिनी देवी साम्प्रतं भारतेश्वरी ।
यद्वङ्गसाम्राज्यगतं तद्रक्षाधिकृताज्ञया ॥
मन्वादीनां सम्यक् तथा वचांसि च निबन्धकर्तॄणाम् ।
बुद्ध्वा विचार्य्य भूयो मीमांसाद्वितयमप्यथालोच्य ॥
गौतमकणादतन्त्रमवलोक्य कपिलमुनिरचिततन्त्रमपि ।
अपि च पतञ्जलितन्त्रं सामानि विशेषतः समालोच्य ॥
लाट्यायनीयकल्पं द्राह्यायणरचितमाश्वलायनकृतम् ।
गृह्यान्तरकर्तॄणां परिशिष्टकृताञ्च विचार्य्य वचः ॥
रचयाञ्चकार भाष्यं कठिनच्छन्दोगगृह्यसूत्रेषु ।
श्रीचन्द्रकान्त एतत्तरलाल्पमतिर्यथाबुद्धि ॥

वेदाङ्कशैलचन्द्रे शकनरपतिहायने समाप्तैषा ।
आश्विनमङ्गलवारे रसेन्दुदिवसे कृतिस्तस्य ॥
स्खलितं यदत्र दैवात्तदखिलमखिलेश्वरः शमं नयतु ।
प्रीणातु परपिताऽसौ बालकपरिचापलादस्मात् ॥
मन्दोत्तममध्यानामुपासकानामनुग्रहार्थं यः ।
धत्ते विविधशरीरं स हरतु दुरितं ममेशानः ॥
यस्याज्ञाविवशाऽचलापि चलति भ्राम्यन्ति शून्ये ग्रहा-
वातो वाति तपत्यथापि तपनो मृत्युस्तथा धावति ।
व्यत्यासो विपुलस्य यस्य नियमस्याल्पोऽपि नो लक्ष्यते
सोऽयं श्रीपरमेश्वरः प्रकुरुतादन्तेऽपि मे मङ्गलम् ॥
पित्रोश्चरणसरोजं विकसतु हृदये ममानिशं वल्गु ।
तमसां विघटनदक्षाः स्फुरन्ति नखरेन्दवो यत्र ॥
सन्तः सन्ति जगत्सु ये परगुणं दोषोत्करैरावृतं
सश्लाघं परिशोध्य साधु बहुलीकुर्व्वन्ति निर्व्वासनाः ।
तेषां तद्व्रतमेव, तेषु विफला सत्यं कृपाप्रार्थना
तद्भक्तिप्लुतमानसास्तु शिरसा तेभ्यो नमस्कुर्म्महे ॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारभट्टाचार्य्यस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये चतुर्थप्रपाठकस्य दशमी काण्डिका समाप्ता ॥०॥

समाप्तश्चायं चतुर्थः प्रपाठकः ॥०॥

समाप्तञ्चेदं गोभिलगृह्यसूत्रभाष्यम् ॥०॥

शुभमस्तु ॥ श्रीरस्तु ॥

---

# गृह्यासङ्ग्रहः ।

( गोभिलगृह्यपरिशिष्टरूपः )

गोभिलपुत्रकृतः ।



प्रथमप्रपाठकः ।



ॐ नमः सामवेदाय ।

श्रीगणेशायनमः ।

नत्वा गुर्व्वाचार्य्यान् विचार्य्य बुद्ध्या वचांसि पूर्व्वेषाम् ।
गृह्यासंग्रहभाष्यं स्वल्पग्रन्थं करिष्यामः ॥

इह खलु तत्रभवान् गोभिलपुत्रः गोभिलगृह्यसूत्राण्यव्यक्तानि व्यक्तं व्याचिख्यासुर्गोभिलानुपदिष्टमपि किञ्चिदुपदिदिक्षुर्गोभिलगृह्यपरिशिष्टरूपं गृह्यासंग्रहाख्यमिमं ग्रन्थं रचयाञ्चकार । यस्यायमादिमः श्लोकः,—

**अथातः संप्रवक्ष्यामि यदुक्तं पद्मयोनिना ।**
**ब्राह्मणानाꣳ हितार्थाय सꣳस्कारार्थं तु भाषितम् ॥१॥**

तत्रायमथशब्द आनन्तर्य्यार्थः संबन्धकरणार्थश्च । उच्चार्य्यमाणश्च मङ्गलप्रयोजनो भवति । आनन्तर्य्यार्थस्तावत् । गोभिलगृह्यसूत्राध्ययनानन्तरम् अनुक्तिनपदार्थगृह्यसूत्रार्थावधारणार्थं तदनुक्तविशेषप्रतिपत्त्यर्थं चैतत् शास्त्रमध्येतव्यमित्येतदर्थः । संबन्धकरणार्थः खल्वपि । गोभि-

लगृह्यसूत्रशास्त्रेणास्य शास्त्रस्य संबन्धं करोति। प्रयोजनञ्चास्य,— गोभिलगृह्यसूत्रवदेतदपि शास्त्रं गोभिलीयधर्म्मोपदेशपरमेव,—इति प्रतिपत्तिः।

अतः शब्दो हेत्वर्थः। यस्मात् अग्निनामादीनि गोभिलेन नोक्तानि, यस्माच्च अनुक्तिन्नार्थं गोभिलगृह्यसूत्रम्, अतः—एतस्मात् कारणात्,—

गोभिलपुत्रोऽहं ब्राह्मणानां हितार्थाय सम्यक् प्रकर्षेण वक्ष्यामि। किम्?। पद्मयोनिना ब्रह्मणा यदुक्तमग्निनामादिकम्। यच्छब्दस्यो-त्तरवाक्यगतत्वेनोपादानादिह तच्छब्दापेक्षा नास्ति। तु पुनः। संस्का-रार्थे संस्काररूपप्रयोजने,—तत् सिद्ध्यर्थमित्येतत्। ब्रह्मणा भाषित-मिति प्राधान्यात् पुनरुपादानम्। किमतः?। गर्भाधानादिषु केषुचित् संस्कारेषु गोभिलेनाग्निर्नोपदिष्टः, तेष्वपि संस्कारप्रयोजन-सिद्ध्यर्थमस्मदुक्तनामाऽग्निर्भवति। एतदतः।

अपर आह। "यस्मिन् कर्म्मणि गोभिलेनाग्निरुक्तस्तत्रैवाग्निनाम ज्ञातव्यं नान्यत्र। ब्रह्मणा साधारण्येन सर्व्वकर्म्मसु अग्निनाम उक्तम्, तेन हेतुना गोभिलपुत्रेणापि सर्व्वकर्म्मसु अग्निनाम उक्तम्। ततश्च, गोभिलोक्ते गर्भाधानादौ अग्निनाम न भवति"—इति। तदसङ्गतम्। गोभिलपरिशिष्टरूपत्वादेतस्य। न खलु गोभिलेन नोक्तमिति गोभिल-पुत्रेणोक्तमपि नोपादेयमिति किञ्चिदत्र कारणमुपलभामहे। तथात्वे वा गोभिलानुक्तानां बहूनामपि विशेषाणामत्रोक्तानामनुपादेयता-पत्तेः। उपादीयन्ते च। तस्मादसङ्गतैषा कल्पना,—गोभिलोक्ते गर्भाधानादौ अग्निनाम न भवति,—इति। गोभिलोऽप्यस्माकमुप-देष्टा, तत् पुत्रोऽपि। यत् खलु पित्रा नोपदिष्टं तदेव पुत्रेणो-

पदेष्टव्यम्। सन्दिग्धस्त्वर्थो निर्णतव्यः। न हि गोभिलेनापि तत्र तत्राग्निर्निषिद्धः। न खल्वेतत् परशाखिकं शास्त्रम्। न च गोभिलेन नोक्तमिति स्वशाखायामेव ग्रन्थान्तरोक्तमपि परित्यक्तव्यम्। परिशिष्टानामानर्थक्यप्रसङ्गात्। अनुक्तानां खल्वर्थानामुपदेशस्तेषु भूयसोपलभ्यते। अलममदावेशेन॥

एवं शास्त्रारम्भं प्रतिज्ञाय प्रथमन्तावदग्निनामान्यभिधीयन्ते नवभिः श्लोकैः,—

लौकिकः पावको ह्यग्निः प्रथमः परिकीर्त्तितः।
अग्निस्तु* मारुतो नाम गर्भाधाने विधीयते॥ २॥

हिशब्दो निश्चयार्थः। लौकिकोऽग्निः पावकः कथितः। रघुनन्दनस्तु,—"लौकिके"—इति पठित्वा, लौकिके—गृहप्रवेशे,—इति वर्णयाञ्चकार। गर्भाधाने पुनर्मारुतो नामाग्निर्विधीयते। यद्यपि, गोभिलेन तत्राग्निर्नोपदिष्टः, तथाप्यस्माभिस्तत्पुत्रैस्तदुपदिष्टार्थवेदिभिर्मारुतो नामाग्निस्तत्र विधीयते। तस्मादस्ति गोभिलोक्तोऽपि गर्भाधानेऽग्निरिति बोद्धव्यम्। विधीयते,—इति करणाच्चैवमवगच्छामः। यदि नाम केवलं ब्रह्मणा उक्त इति गर्भाधाने, अग्निरुच्यते,—इत्यभिप्रायः, तदा परिकीर्त्तितः,—इत्येव कुर्य्यात्, न—विधीयते,—इति॥

पुंसवने चान्द्रमसः शुङ्गाकर्म्मणि शोभनः।
सीमन्ते मङ्गलो नाम प्रागल्भो जातकर्म्मणि॥ ३॥

पुंसवने चान्द्रमसो नामाग्निः। 'चन्द्रनामा'—इति रघुनन्दनः पठति।

---

* अग्नेस्तु,—इति पाठान्तरम्।

"प्रागुदीच्यां दिशि न्यग्रोधशुङ्गामुभयतःफलामस्रामामकृमिपरिसृप्तां चिः सप्तैर्यवैर्माषैर्वा परिक्रीयोत्थापयेत्"—इत्यादि गृह्यसूत्रोक्ते शुङ्गा-कर्म्मणि शोभनो नामाग्निः। सीमन्ते सीमन्तकरणे। स्पष्टमन्यत्॥

**नाम्नि च* पार्थिवो ह्यग्निः प्राशने च शुचिस्तथा।**
**सभ्यनामाऽथ चूड़े तु व्रतादेशे समुद्भवः॥ ४॥**

नामकरणे पार्थिवो नामाग्निः। अन्नप्राशने शुचिर्नामाग्निः। चूड़ाकरणे सभ्यो नामाग्निः। 'सत्यनामा'—इति रघुनन्दनः पठति। व्रतानाम्—गोदाने विशेषस्य वक्ष्यमाणत्वात् प्रातिकादित्यव्रतमहानाम्निकौपनिषदज्येष्ठसाम्नाम्, आदेशे उपदेशे, समुद्भवो नामाग्निः कथितः॥

**गोदाने सूर्य्यनामा तु केशान्ते ह्यग्निरुच्यते।**
**वैश्वानरो विसर्गे तु विवाहे योजकः स्मृतः॥ ५॥**

गोदाने गोदानिकव्रते सूर्य्यनामा अग्निः। गोदानाङ्गे गृह्योक्ते केशान्ते कर्म्मणि अग्निर्नामाग्निः। विसर्गे,—व्रतप्रस्तावात् व्रतानन्तरं करणीये मौञ्जीत्यागे समावर्त्तनापरनामधेये गृह्योक्ते आप्लावनाख्ये कर्म्मणि,—इत्येतत्। "मौञ्जीविसर्गे त्यागे वैश्वानरो नामाग्निः"—इति दीक्षितभाष्यम्। विसर्गे दाने,—इति केचित्। विवाहे योजको नामाग्निः॥

**चतुर्थ्यान्तु शिखीनाम धृतिरग्निस्तथाऽपरे।**
**आवसथ्ये भवो ज्ञेयो वैश्वदेवे तु पावकः॥ ६॥**

* नाम्नि स्यात्,—इति पाठान्तरम्।

चतुर्थ्याम्—गृह्योक्ते चतुर्थीकर्म्मणि शिखी नामाग्निः। 'अपरे आचार्य्या-स्तथा चतुर्थीकर्म्मणि धृतिनामानमग्निमाहुः'—इति दीक्षितराम-कृष्णः। अपरे धृतिहोमादौ धृतिर्नामाग्निः,—इति रघुनन्दनः। तत्र ब्रूमः। धृतिहोमे धृतिर्नामाग्निर्युक्तः। कुतः? । शब्दसाम्यात्। धृतिनामा खल्वग्निर्धृतिहोमे आगच्छति हृदयम्। आगच्छति चेत्, न युज्यते विनाकारणमुत्स्रष्टुम्। एवञ्च, अग्निनाम्नां सप्तत्रिंशत्सङ्ख्याप्या-ञ्जस्येनोपपत्स्यते। मतान्तरत्वे खल्वेतस्य सा नातीव समञ्जसा स्यात्।

आवसथ्ये गृह्येऽग्नौ भवो नामाग्निर्ज्ञातव्यः। गृह्यः, औपासनः, आवसथ्यः,—इति ह्यनर्थान्तरम्। वैश्वदेवे कर्म्मणि पुनः पावको नामाग्निः॥

**ब्रह्मा वै गार्हपत्ये स्यादीश्वरो दक्षिणे तथा।**
**विष्णुराहवणीये तु अग्निहोत्रे त्रयोऽग्नयः॥ ७॥**

गार्हपत्येऽग्नौ ब्रह्मा नामाग्निः स्यात्। एवमुत्तरत्रापि। दक्षिणे दक्षिणाग्नौ। श्रौते खल्वग्निहोत्रे एते त्रयोऽग्नयो भवन्ति॥

**लक्षहोमे वह्निर्नाम* कोटिहोमे हुताशनः।**
**प्रायश्चित्ते विधिश्चैव पाकयज्ञे तु साहसः॥ ८॥**

प्रायश्चित्ते प्रायश्चित्तहोमे विधिर्नामाग्निः। 'विधुः',—इति रघुनन्दनः पठति। पाकयज्ञे साहसो नामाग्निः। स्पष्टमन्यत्। आह। कः पुनः

---

* लक्षहोमे तु वह्निः स्यात्,—इति पाठान्तरम्।

पाकयज्ञो नाम?। उच्यते। यः खल्वेकाग्निसाध्यः यज्ञः, तं पाकयज्ञमाचक्षते। किं कारणम्?। "पाकयज्ञा इत्याचक्षते एकाग्नौ यज्ञान्"—इति लाट्यायनसूत्रात्। द्राह्यायणोऽप्येतत् सूत्रयाञ्चकार। "पाकयज्ञा इत्याख्या यः कश्चैकाग्नौ"—इति च छन्दोगगृह्यान्तरम्। "श्रावण्याश्वयुज्याग्रहायण्यष्टकान्वष्टकैकाष्टकाः पाकयज्ञाः",—इति दीक्षितरामकृष्णः। "पाकयज्ञे,—पाकाङ्गकयज्ञे वृषोत्सर्गदेवप्रतिष्ठाहोमादौ"—इति रघुनन्दनः। पाकयज्ञः प्रशस्तयज्ञः,—इति शाखान्तरीयगृह्यवृत्तिकृतः॥

देवानां हव्यवाहस्तु पितॄणां कव्यवाहनः।
पूर्णाहुत्यां मृडो नाम शान्तिके वरदस्तथा॥ ९॥

निगदव्याख्यातोऽयं श्लोकः॥

पौष्टिके बलदश्चैव क्रोधाग्नि* श्चाभिचारके।
वश्यार्थे कामदो नाम वनदाहे तु दूतकः॥ १०॥

पौष्टिके,—शरीरस्य धनस्य वा पुष्टिजनके कर्म्मणि, बलदो नामाग्निः। पुष्टिरुपचयः। अभिचार एवाभिचारकः। तस्मिन्नभिचारके कर्म्मणि क्रोधाग्निः। अभिचरणमभिचारो मारणमित्येतत्। वश्यं वशीकरणम्। तदर्थे कर्म्मणि कामदो नामाग्निः। वनदाहे दूतको नामाग्निः।

कोष्ठे तु जठराग्निस्तु† क्रव्यादो मृतभक्षणे।
समुद्रे वाड़वो ज्ञेय क्षये संवर्त्तको भवेत्॥ ११॥

---

* क्रोधोऽग्निः,—इति पाठान्तरम्।
† जठरो नाम,—इति पाठान्तरम्।

कोष्ठे उदरे। हुतभक्षणे ग्रुतदाहे। क्षये,—सर्व्वेषां नाशे प्रलये,—इति यावत्। शिष्टमन्यत्॥

एवमग्निनामान्यभिधाय तेषां श्रावणं ज्ञानञ्चेदानीं विधत्ते,—

**एतेऽग्नयः समाख्याताः श्रावयेद्ब्राह्मणः सदा।**
**सप्तचिंशतिविख्याता ज्ञातव्याश्च द्विजेन तु॥१२॥**

एते पूर्व्वोक्ता अग्नयः सम्यक् कथिताः। तानेतान् ब्राह्मणः सदा द्विजं श्रावयेत्। द्विजेन तु, सप्तचिंशतिविख्याताः (आर्षोयं प्रयोगः) सप्तचिंशत्सङ्ख्यया विशेषेण कथिताः,—प्रसिद्धा वा, अग्नयो ज्ञातव्याः। तदिदमर्थं कर्म्मस्वविनियुक्तानामप्यग्निनाम्ना पूर्व्वं परिकीर्त्तनमिति द्रष्टव्यम्॥

**सप्त जिह्वाः स्फुरन्त्येता हुताशनमुखे स्थिताः।**
**याभिर्हव्यं समश्नन्ति हुतं सम्यक् द्विजोत्तमैः॥१३॥**

अग्निमुखे स्थिता एता वक्ष्यमाणाः सप्तजिह्वाः स्फुरन्ति। द्विजोत्तमैः,—निषादस्थपतिवत् कर्म्मधारयसमासस्यैव युक्तत्वादविशेषाच्च उत्तमद्विजैः, सम्यक् हुतं हव्यं याभिर्जिह्वाभिः समश्नन्ति,—दिवौकसः,—इति वाक्यशेषः॥

**काली कराली च मनोजवा च**
**सुलोहिता चैव सुधूम्रवर्णा।**
**स्फुलिङ्गिनी चैव शुचिस्मिता च**
**लेलायमाना इति सप्त जिह्वाः॥ १४॥**

इत्येताः सप्त जिह्वाः नामतो निर्दिष्टाः। लेलायमानाः,—इत्यं भवि-
तुमिष्यन्यः। लल ईप्सायाम्॥

तासां खल्वासां जिह्वानां मध्यात्,—

द्वे शान्तिके पौष्टिके द्वे च तिस्रोऽभिचारिण्यः।
एतास्त्वोक्ता विशेषेण ज्ञातव्याश्च द्विजेन तु॥ १५॥

शान्तिके कर्मणि द्वे जिह्वे। पौष्टिके च कर्मणि द्वे जिह्वे। तिस्र-
श्चाभिचारकर्मण्युपयुक्ताः। एतास्त्वोक्ता जिह्वा द्विजेन विशेषतो
ज्ञातव्याः॥

आहूयैव तु* होतव्यं यो यत्र विहितो विधिः।

यत्र कर्मणि यो विधिरुक्तः, तत्र तेन विधिना होतव्यम्। किं
कृत्वा?। विहितमग्निमाहूय। "यत्र यो विहितोऽनलः"—इति
तत्त्वकारः पठति। तत्र च, यत्र योऽनलो विहितस्तत्र तमनलमाहूय
होतव्यमिति व्यक्त एवार्थः॥

अविदित्वा तु यो ह्यग्निं होमयेदविचक्षणः॥ १६॥
न हुतं न च संस्कारो न च कर्मफलं लभेत्।

यः खल्वविचक्षणोऽग्निमज्ञात्वा होमयेत्, तेन हुतं न भवति,—
(हुतं होमः। भावे निष्ठा) कृतोऽपि होमो न सिध्यतीत्यर्थः।
न च तेन होमेन तस्य शरीरस्य संस्कारो भवति। न चासौ कर्मफलं
लभते॥

---

* आहूय चैव,—इति पाठान्तरम्।

ज्ञात्वा स्वरूपमाग्नेयं योऽग्नेराराधनं चरेत् ॥ १७ ॥
ऐहिकामुष्मिकैः काम्यैः सारथिस्तस्य पावकः ।
निःसंशयकरैरर्थैः पुत्रशिष्यहितैषिणः ॥ १८ ॥

यः पुनरग्नेरिदमाग्नेयं स्वरूपं वक्ष्यमाणलक्षणं ज्ञात्वा अग्नेराराधनमाचरति, तस्य पुत्रशिष्यहितैषिणः,—इत्याग्नेयं स्वरूपं विदुषः पुत्रशिष्यहितैषित्वं वदन्—तदविदुषः पुत्रशिष्यानिष्टमपि द्योतयति । 'निःसंशयकरैः'—निःसंशयं यथा भवति तथा क्रियमाणैः, 'काम्यैः'—कमनीयैः अभिलषनीयैः, 'ऐहिकामुष्मिकैः'—इहलोके परलोके च भवैः सौभाग्यस्वर्गादिभिः, 'अर्थैः'—प्रयोजनैः फलैः,—इत्येतत् । 'पावकः' 'सारथिः'—सारथिवदनुकूलः तत्तत्फलनिर्व्वाहक इत्यर्थः । तथाविधैरर्थैः पुत्रशिष्यहितैषिणस्तस्य पावकः सारथिः—फलदाता, इति वा वर्णनीयम् । तदनेन तस्य पुत्रशिष्याणामपि तत्तदर्थाः सम्पद्यन्ते,—इत्युक्तं भवति ॥

न चात्र संशयः कर्त्तव्यः इत्याह,—

गोभिलाचार्य्यपुत्रेण कृतं शास्त्रं सुनिश्चितम् ।
पावकस्य मुखं वक्ष्ये यदुक्तं पद्मयोनिना ॥ १९ ॥

शास्त्रं पूर्व्वोक्तमग्निनामादिप्रतिपादकं गोभिलाचार्य्यपुत्रेण मया सुनिश्चितं कृतमिति गोभिलानुक्तोऽपि मदुक्तोऽग्निर्गर्भाधानादिष्वस्तीत्यभिप्रायः । उक्तस्यापि पुनरुक्तिः शिष्याणां दृढ़प्रत्ययार्था । अपर आह । शास्त्रं गृह्यासंग्रहाख्यम्,—इति । अथेदानीमहमग्नेर्मुखं वक्ष्ये व्याख्यातमन्यत् ॥

सप्तजिह्वा-प्रमाणन्तु प्रादेशं परिकीर्त्तितम्।
प्रमाणं चतुरस्रञ्च वर्त्तुलं मुखमण्डलम् ॥ २० ॥

पूर्व्वोक्तानां वक्ष्यमाणानाञ्च सप्तजिह्वानां प्रमाणं प्रादेशं विस्तृत-तर्ज्जन्यङ्गुष्ठरूपम्। अपर आह। बद्धमुष्टिः करो रत्निः, रत्न्यर्द्धं प्रादेशम्,—इति। प्रमाणं पूर्व्वोक्तप्रादेशप्रमाणं, चतुरस्रं चतुष्कोण-श्चाग्निमुखं कथितम्। मुखमण्डलन्तु वर्त्तुलम् ॥

यदर्थं हूयते वह्नौ तां जिह्वां परिकल्पयेत्।

यत्कर्म्मार्थं हूयते, तां तद्विहितां जिह्वामग्नौ परिकल्पयेत् चिन्त-येदावाहयेद्वा ॥

पूर्व्वोक्ताभ्यः सप्तभ्यो जिह्वाभ्योऽन्याः सप्त जिह्वा आह,—

कराली धूमिनी श्वेता लोहिता महालोहिता ॥ २१ ॥
सुपर्णी पद्मरागी च सप्तैताः परिकीर्त्तिताः।

सप्तैता जिह्वाः कथिताः। स्पष्टमन्यत् ॥

करालीं राक्षसाश्नन्ति धूमिनीमसुरास्तथा ॥ २२ ॥
श्वेतां नागाः समश्नन्ति पिशाचा लोहितां तथा।
महालोहितां गन्धर्व्वाः सुपर्णीञ्च यमस्तथा ॥ २३ ॥

करालीं—कराल्या जिह्वया, करालीं जिह्वां प्राप्येति वा वर्णनीयम्। एवमुत्तरत्रापि व्याख्येयम्। राक्षसाः अश्नन्ति। अत्र विसर्गलोपे सन्धिरार्षः ॥

पद्मरागो च विख्याता दिव्या जिह्वा हुताशने।
तस्यान्तु होमयेन्नित्यं सुसमिद्धे हुताशने॥ २४॥

यया देवाः समश्नन्ति, सा दिव्येत्युच्यते। हुताशने हुताशनस्य। पद्मरागी हुताशनस्य जिह्वा दिव्या विख्यातेत्यर्थः। तस्यां दिव्यायां जिह्वायां पद्मरागयामित्येतत्। सुसमिद्धे प्रज्वलिते। शिष्टमन्यत्॥

विधूमे लेलिहाने च होतव्यं तन्त्रसिद्धये।
न धूमो न तथा ज्वाला विशुद्धो भुवि चक्षुषः॥ २५॥

विधूमे धूमरहिते, लेलिहाने दीप्यमाने चाग्नौ, तन्त्रस्य कर्म्मविस्तारस्य सिद्धये होतव्यम्। तत्र हेतुरुत्तरार्द्धेनोक्तः। न धूमः चक्षुषो विशुद्धः विशुद्धिहेतुः, अपि तु धूमश्चक्षुषोऽविशुद्धिहेतुरित्यर्थः। तथेति धूमयुक्तेत्यर्थः। धूमयुक्ता ज्वालापि न चक्षुषो विशुद्धिहेतुः, अपि तु सापि चक्षुषोऽविशुद्धिहेतुरेव। तदत्र धूमशब्देन केवलधूमस्य, ज्वालाशब्देन तु धूमयुक्तज्वालाया अपि दोष उक्तः। 'भुवि'—इत्यत्रापि ज्वालेत्यन्वीयते। भुवि ज्वाला न चक्षुषो विशुद्धिहेतुः,—इति भुवं लिहत्यग्नौ होमो निन्द्यते। तथा च स्मर्य्यते।

"क्षुत् तृट् क्रोध त्वरा युक्तो हीनमन्त्रं जुहोति यः।
अप्रवृद्धे सधूमे वा सोऽन्धः स्यादन्यजन्मनि।
अल्पे रुक्षे सस्फुलिङ्गे वामावर्त्ते भयानके।
आर्द्रकाष्ठैः सुसम्पन्ने फुत्कारवति पावके।
कृष्णार्च्चिषि सुदुर्गन्धे तथा लिहति मेदिनीम्।
आहुतिं जुहुयाद् यस्तु तस्य नाशो भवेद् ध्रुवम्"।

इति। 'तथाज्वालः'—इति पाठे, अज्वाल इति च्छेदः। अज्वालो ज्वालारहितोऽग्निर्न विशुद्ध इत्यर्थः। तथा च कर्म्मप्रदीपः।

"योऽनर्च्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः।
मन्दाग्निरामयावी च दरिद्रश्च स जायते"।

इति। 'विशुद्धोष्णविचक्षुषा'—इति पाठे, "विशुद्धेन विगतोष्णेन चक्षुषा यत्राग्नौ धूमो न दृष्टस्तत्र होतव्यम्"—इति दीक्षितभाष्योक्तैव वर्णना॥

**प्रभया भाति यत्रैव भगवांस्तत्र तिष्ठति।**
**तत्र पूर्णाहुतिं दद्यात् सर्व्वकामप्रसिद्धये॥ २६॥**

यत्रैवाग्नौ प्रभया भाति ज्वालेत्यर्थः। तत्रैव भगवान् विष्णुस्तिष्ठति। 'तत्र पूर्णाहुतिं दद्यात्';—सर्व्वेषां कामानामभिलषितफलानां प्रकर्षेण सिद्ध्यर्थम्। पूर्णाहुतिदानोपदेशेन होमोऽपि तत्रैव कर्त्तव्यः,—इत्यपि भङ्ग्यन्तरेणोपदिशति। अत्र च, यस्मिन् कर्म्मणि यः कामः शास्त्रेणानुशिष्टः, स एव कामस्तत्र सिध्यति, न पुनरन्योऽपीति द्रष्टव्यम्। तत् कस्य हेतोः?। "सर्व्वत्वमाधिकारिकम्"—इति सिद्धान्तात्।

पूर्णाहुतिन्तु ऊर्द्ध्वः सन् दद्यात्, नोपविष्टः। कुतः?।

"दद्यादुत्थाय पूर्णां त्वं नोपविश्य कदाचन"।

इति भविष्यपुराणात्। एवमेके। गोभिलीयकर्म्मण्युपविष्ट एव पूर्णाहुतिं दद्यात्, न पुनरूर्द्ध्वः सन्। कस्मात्?।

"आसीन ऊर्द्ध्वः प्रह्वो वा नियमो यत्र नेदृशः।
तदासीनेन कर्त्तव्यं न प्रह्वेन न तिष्ठता"।

इति कर्म्मप्रदीपवचनात्। एवमपरे। तदत्र भवन्तो भूमिदेवाः प्रमाणम्॥

अथेदानीं वर्ज्जनीयाः समिध आह,—

मारणी राक्षसी रौद्री क्रव्यादी ब्रह्मराक्षसी।
स्थूलजङ्घा कराली च वज्रहस्ता तथैव च॥ २७॥
यमदूती च विज्ञेया इत्येताः समिधो नव।

इत्येता नव समिधो नामतो विज्ञेयाः॥

यथाक्रममासां लक्षणं ब्रुवन् वर्ज्जनीयत्वमाह,—

विशीर्णा विदला ह्रस्वा वक्रा स्थूला कृशा द्विधा॥२८॥
कृमिदष्टा च दीर्घा च वर्ज्जनीयाः प्रयत्नतः।

विशीर्णा त्रुटिता *पाटितेत्येतत्। इयं मारणीत्युच्यते। विदला दलरहिता,—त्वचा वियुक्तेति यावत्। इयं राक्षसी। ह्रस्वा प्रादेशप्रमाणात् न्यूना। इयं रौद्री। वक्रा प्रसिद्धा। इयं क्रव्यादी। स्थूला अङ्गुष्ठात् स्थूला। इयं ब्रह्मराक्षसी। कृशा अङ्गुष्ठात् कृशा, अङ्गुष्ठस्थौल्यस्य विहितत्वात्। इयं स्थूलजङ्घा। द्विधा द्विशाखिका। इयं कराली। कृमिदष्टा कृमिभिर्दष्टा। इयं वज्रहस्ता। दीर्घा प्रादेशात् दीर्घा। इयं यमदूती। ता एताः समिधो यत्नतो वर्ज्जनीयाः। तथाच कर्म्मप्रदीपः।

"नाङ्गुष्ठादधिका ग्राह्या समित् स्थूलतया क्वचित्।
न वियुक्ता त्वचा चैव न सकीटा न पाटिता।

प्रादेशान्नाधिका नोना न तथा स्याद् द्विशाखिका।
न सपर्णा न निर्व्वीर्य्या होमेषु च विजानता" ॥

इति ॥

अथेदानीं विशीर्णादीनां वर्ज्जनीयत्वे हेतुमुक्त्वा वर्ज्जनममूषामुपसंहरति,—

विशीर्णाऽऽयुःक्षयं कुर्य्याद्विदला व्याधिसम्भवा ॥२९॥
ह्रस्वा मृत्युकरी रौद्री दुर्भगत्वन्तु वक्रया।
विघ्नानि कुरुते स्थूला कृशा च रिपुवर्द्धिनी ॥३०॥
द्विधा नाशयते ह्यर्थं भार्य्याञ्च प्रियबान्धवान्।
कीटदष्टाऽतिभयदा दीर्घा चैव सुतान् हरेत् ॥३१॥
तस्मात् सर्व्वप्रयत्नेन वर्ज्जनीयाश्च वर्ज्जयेत्।

व्याधिसम्भवा,—व्याधेः सम्भवो यया, सा तथाविधा। ह्रस्वा रौद्रीति सामानाधिकरण्यम्। अस्मादप्यवगच्छामः,—विशीर्णत्वादीनि यथाक्रमं मारणादीनां लक्षणानि,—इति। वक्रया दुर्भगत्वं प्राप्नोति। विघ्नानि विघ्नान्। अतिभयदेभिच्छेदः। निगदव्याख्यातमन्यत्। यस्मादेवं, तस्माद्वर्ज्जनीया एताः समिधो यत्नेन वर्ज्जयेदिति विशीर्णादीनां वर्ज्जनस्योपसंहारः ॥

अथेदानीं सर्व्वकामदाः समिध आह,—

अकृशा चैव न स्थूला अशाखा चापलाशिनी ॥३२॥
सक्षीरा नाधिकाऽन्यूनाः समिधः सर्व्वकामदाः।

कृशादयो व्याख्याताः। तद्वैपरीत्येनाकृशादयो व्याख्यातव्याः। अशाखा,

—न द्विशाखिका। अपलाशिनी, न सपत्रा। सक्षीरा—न निर्व्वीर्य्या। क्षीरमत्र वृक्षदुग्धम्। न अधिकाः नाधिकाः—अनधिका इत्यर्थः। निपातसमानार्थेन नशब्देन समासः। न न्यूनाः अन्यूनाः। निपातेन समासः। नाधिकाश्च अन्यूनाश्च,—इति पश्चात् द्वन्द्वः। न,—इति भिन्नं वा पदम्। न अधिकाः, न च न्यूनाः,—इत्यनुषङ्गेन व्याख्येयम्। एवंविधाः समिधः,—सर्व्वान् कामान् ददति इति सर्व्वकामदा उच्यन्ते॥

गोभिलानुक्तं विशेषमभिधाय, अथेदानीं गोभिलोक्तेष्वपि केषुचित् विशेषं विविक्षुः प्रतिजानीते,—

**गृह्याकर्म्मसु सर्व्वेषु होत्रे प्रतिविधिं ध्रुवम्॥ ३३॥**
**क्रमशः संप्रवक्ष्यामि यो यत्र विहितो विधिः।**

गृह्या गोभिलोक्तगृह्यशास्त्रम्। तदुक्तेषु सर्व्वेषु कर्म्मसु, होत्रे, होतुः सुखार्थम्,—यस्मिन् कर्म्मणि यो विधिर्विहितः, तत्र प्रतिविधिं प्रतिकर्म्मविधानं, क्रमशः सम्यक् प्रकर्षेणाहं वक्ष्यामि॥

ननु स विधिराचार्य्येणैवोक्तः, किमपरं वक्तव्यमवशिष्यते, यदर्थोऽयमुपक्रमोऽर्थवान् भवति,—इत्याशङ्कायामाह,—

**अनुक्लिन्नपदार्थानि गृह्यावाक्यानि यानि तु॥ ३४॥**
**तेषां वक्ष्यामि सिद्ध्यर्थं श्लोकसंग्रहसंज्ञकैः।**

अनुक्लिन्नपदार्थानि यानि गृह्यावाक्यान्याचार्य्येण पठितानि, तेषामर्थाच्छेदसिद्ध्यर्थम्,—श्लोकसंग्रहसंज्ञकैरिति वक्ष्यावेन प्रयुक्ते। संग्रह-

संज्ञकैः श्लोकैरित्यर्थः। गृह्यासंग्रहः—इति खल्वयं ग्रन्थोऽभिधीयते। अहं वक्ष्यामि। तथा च, आचार्य्योक्तो विधिरनुद्भिन्नार्थ इति तदर्थोद्भेदार्थमयमुपक्रमोऽर्थवानेवेति भावः। उद्भिन्नः व्यक्तः। न उद्भिन्नः अनुद्भिन्नः। पदानामर्थाः पदार्थाः। अनुद्भिन्नाः पदार्थाः येषु वाक्येषु, तानि अनुद्भिन्नपदार्थानि॥

तत्र प्रथमन्तावत्,—"अथातो गृह्याकर्म्माण्युपदेक्ष्यामः"—इति गोभिलसूत्रस्थं गृह्यापदमनुद्भिन्नार्थं व्याकरोति द्वाभ्याम्,—

**पत्न्यः पुत्राश्च कन्याश्च जनिष्याश्चापरे सुताः॥३५॥**
**गृह्या इति समाख्याता यजमानस्य दायकाः।**

जनिष्या जनिष्यमाणाः। दायकाः दायहराः॥

**तेषाꣳ सꣳस्कारयोगेन शान्तिकर्म्मक्रियासु च॥३६॥**
**आचार्य्यविहितः कल्पस्तस्माद् गृह्या इति स्थितिः।**

तेषां पत्न्यादीनां संस्कारयोगेन,—संस्कारलाभार्थमित्यर्थः। तदिदमर्थं या विवाहादिक्रियाः क्रियन्ते, तासु;—शान्तिकर्म्मणां शान्त्यर्थकर्म्मणामलक्ष्मीनिर्णोदादीनां क्रियासु करणेषु च, यः कल्पः शास्त्रविधिरपेक्षितः, स खल्वाचार्य्यविहितः—आचार्य्येण गोभिलेन विहितः। तदर्थं गृह्यसूत्रं कृतमित्यर्थः। यस्माद्गृह्यानधिकृत्य आचार्य्येण सूत्राणि रचितानि, तस्मात् कारणादाचार्य्यगृह्यसूत्राणां गृह्या इति स्थितिः। गृह्यसम्बन्धात् स्मृतिरपि गृह्या,—इत्युच्यते। दण्डयोगाद्दण्डः पुरुष इति यथा॥

"अनुगुप्ता अप आहृत्य प्रागुदक्प्रवणं देशं समं वा परिसमूह्योपलिप्य"—इत्यादि गोभिलोक्तं क्रमं स्पष्टयति,—

**भूमेः समूहनं कृत्वा गोमयेनोपलिप्य च ॥ ३७ ॥**
**द्रव्याण्युत्तरतः स्थाप्य वृषीं कुर्य्यादुदङ्मुखीम्।**

यागार्थं भूमेः समूहनं कुशैर्मार्ज्जनं कृत्वा, गोमयोदकेनोपलिप्य द्रव्याण्युदकादीनि प्रयोजनोपयोगीनि उपलिप्तभूमावुत्तरतः स्थापयित्वा, वृषीम्—ऋषीणामासनम्—विहितमासनमित्येतत्। उदङ्मुखीमुदगग्रां कुर्य्यात्। मुखमग्रम्। तदिदानीं प्रयोजनोपयोगिद्रव्यासादनमस्माकं न ब्रह्मस्थापनाद्यनन्तरमिति द्रष्टव्यम्। आह। कस्य उत्तरतः?। अग्नेरिति ब्रूमः। तथाच कर्म्मप्रदीपः।

"प्राञ्चं प्राञ्चमुदगग्नेरुदगग्रं समीपतः।
तत्तथाऽऽसादयेद् द्रव्यं यद् यथा विनियुज्यते"।

इति। यद्यप्यग्निरिदानीं न स्थापितः, तथापि भविष्यतैवाग्निना 'उत्तरतः'—इत्यस्य संबन्धो बोद्धव्यः। "पुरोडाशकपालेन तुषानुपवपति"—इति भविष्यता पुरोडाशेन कपालस्य संबन्धो यथा॥
यज्ञादौ स्थानपरिमाणमाह,—

**गोचर्म्ममात्रं कुर्व्वीत चतुरस्रमनूषरे ॥ ३८ ॥**
**सर्व्वतोरत्निमात्रः स्यात् सायं प्रातस्तु होमयोः।**

ऊषरमिति बालुकामयं स्थानमुच्यते। तत् न भवतीत्यनूषरम्। तस्मिन् प्रदेशे, चतुरस्रं चतुष्कोणं गोचर्म्ममात्रं गोचर्म्मपरिमाणं स्थानं कुर्व्वीत। सायंप्रातर्होमयोः पुनः सर्व्वतो दिक्षु रत्निमात्रं अरत्निमात्रं वा स्थानं स्यात्। उभयत्र परिमाणे मात्रच्। बद्धमुष्टिः करो रत्निः।

निष्कनिष्ठः करोऽरत्निः। सार्द्धद्वाविंशत्यङ्गुलोऽरत्निः,—इति केचित्॥

अप्रसिद्धत्वात् स्वयमेव गोचर्म्मपरिमाणं व्याकरोति,—

**वृषभैकशतं यत्र गवां तिष्ठति संवृतम्॥ ३९॥**
**बालवत्सप्रसूतानां गोचर्म्म इति तं विदुः।**

ऋषभो वृषभः। तेन सममेकशतं बालवत्सप्रसूतानाम्—बालाः वत्साः प्रसूताः यासां सद्यःप्रसूतवत्सानामित्यर्थः। विशेषणसामर्थ्यात् बालवत्स-सहितानां गवामेकशतमेकेन वृषभेन सह यत्र प्रदेशे संवृतम्—सम्यग-सङ्कोचेन वर्त्तमानं, तिष्ठति, तं प्रदेशं गोचर्म्म इति विदुर्जानन्त्याचार्य्याः। अपर आह। यस्मिन् स्थाने ऋषभाणां शतं बालवत्सप्रसूतानां गवाञ्च शतं संवृतमेकीभूतं तिष्ठति, तत् स्थानं गोचर्म्म,—इति। तदसङ्गतम्। कुतः?। शतशब्दस्यानुषङ्गकल्पनायां मानाभावात्।

"गवां शतं वृषश्चैको यत्र तिष्ठेदयन्त्रितः।
एतद्गोचर्म्ममात्रन्तु प्राहुर्वेदविदो जनाः"।

इति स्मृत्यन्तरदर्शनाच्च॥

**षट् पञ्च चतुरो वाऽपि त्रयो द्वौ वा शफौ स्मृतौ॥ ४०॥**
**गोचर्म्म इति शब्दोऽयं विधियोगे निपात्यते।**

चतुरः,—इति व्यत्यासेन प्रयुक्तं। चत्वारः,—इत्यर्थः। वाऽपि,—इत्यपि व्यत्यासेन प्रयुक्तं। अपि वा,—इत्यर्थः। तदयमर्थः। षट् शफाः, पञ्च वा चत्वारो वा त्रयो वा शफाः गोचर्म्म इति स्मृताः, द्वौ वा शफौ गोचर्म्म इति स्मृतौ। योग्यत्वादुपस्थितत्वाच्च शफवतीनां गवामेव ग्रहणं वाच्यम्।

तदेवं गोचर्म्मस्थानानामनियतपरिमाणत्वादाह,—विधियोगे,—इति। पूर्व्वोक्तेषु परिमाणेषु विधियोगे विधानयोगे सति, गोचर्म्म इत्ययं शब्दो निपात्यते। यत्र विहिते कर्म्मणि यावत् स्थानमपेक्षितं, तत्र तावत् परिमितमेव स्थानं ग्राह्यमित्यभिप्रायः॥

प्राङ्नीचं ब्रह्मवर्चस्यमुदङ्नीचं यशोत्तमम्॥४१॥
पित्र्यं दक्षिणतोनीचं प्रतिष्ठालम्भकंऽसमम्।

पूर्व्वतो निम्नं स्थानं ब्रह्मवर्चस्यं ब्रह्मवर्च्चसविषये साधु भवति। ब्रह्मवर्च्चसमध्ययनप्रकर्षजं तेजः। उत्तरतोनीचं यशोत्तमम्। उत्तमं यशो यस्मात् इति तथाविधम्। राजदन्तादिवत् परनिपातः। 'सान्ता अप्यदन्ताः'—इत्युक्ते यशोत्तममिति निर्द्देशः साधुः। 'पिण्डं दद्याद् गयाशिरे'—इतिवत्। आर्षोवा विसर्गलोपे सन्धिः। पित्र्यं स्थानं दक्षिणतो नीचं भवति। समं पुनः प्रतिष्ठाया लम्भकं प्रापकम्। तदनेन, "प्रागुदक्प्रवणं देशं समं वा"—इति गोभिलसूत्रं व्याख्यातम्। तत्कारोऽप्येवमेव श्लोकमिमं पपाठ। प्रागुदक्प्रवणं देशम्—इत्येतत् विवरणपरतयैव चेमं वर्णयाञ्चकार। एवमेव पित्र्ये कर्म्मणि दक्षिणाप्रवनदेशत्वं कर्म्मप्रदीपाद्यनुशिष्टमनु गृह्यते। केचित्तु,—

प्राग्ग्रीवं ब्रह्मवर्चस्यमुदग्ग्रीवं यशोत्तमम्।
पित्र्यं दक्षिणतो नीचं प्रतिष्ठालम्भुकं समम्।

इत्यन्यथा श्लोकमिमं पठन्तः,—'ब्रह्मवर्च्चसकामस्य प्राक् ग्रीवं प्राङ्मस्तकमासनं कर्त्तव्यम्, यशस्कामस्य उदक्मस्तकम्, पित्र्यमासनं दक्षिणतो नीचं कर्त्तव्यम्, प्रतिष्ठाकामस्य लम्भुकं सुन्दरं समम्,'—इत्यास-

नपरतया वर्णयन्ति। तदप्यसमीचीनमिति लक्ष्यते। कुतः?। अनुक्तिर्थार्थगृह्यसूत्रार्थपरत्वाद्ग्रन्थस्य। स्थानप्रस्तावाच्चानुपस्थितासनपरताया अन्याय्यत्वात्। अन्यथा वृषीं कुर्य्यादुदङ्मुखीम्—इत्यस्मिन्नेव प्रक्रमे इदमपि कुर्य्यात्। वर्णनापि तेषां न शब्दमनुसरतीत्यलमसदावेशेन॥

वरं गान्तु विजानीयाच्चतुर्वर्षामिति स्थितिः॥४२॥
दक्षिणानां विशिष्टं वै वरं तमपरं विदुः।

चतुर्वर्षीं गां वरं जानीयादिति शास्त्रमर्य्यादा। दक्षिणानां मध्ये विशिष्टं श्रेष्ठं, तं गाम्, अपरं पूर्व्वोक्तादन्यं वरं जानन्त्याचार्य्याः। तम्,—इति विधेयप्राधान्यविवक्षया पुंसा निर्द्देशः, लिङ्गव्यत्ययाद्वा। नात्र कल्पे वर्षनियम इत्यभिप्रायः। तथा चोक्तम्।

"गौर्विशिष्टतमा लोके शास्त्रेऽपि च निगद्यते।
न ततोऽन्यद्वरं किञ्चित् तस्माद्गौर्वरमुच्यते"॥

इति। तदनेन,—"अनड्वान् कंसो वासो वर इति दक्षिणाः"—इति सूत्रस्थोऽनुक्तिन्नार्थो वरशब्दो व्याख्यातः॥

"पूर्णपात्रो दक्षिणा"—इति सूत्रस्थं पूर्णपात्रपदं व्याकरोति,—

चतुर्म्मुष्टिर्भवेत् किञ्चित् पुष्कलं तच्चतुर्गुणम्॥४३॥
पुष्कलानि च चत्वारि पूर्णपात्रं विधीयते।

चतुर्मुष्टिः 'किञ्चित्' भवेत्। किञ्चिच्चतुर्गुणं—षोड़शमुष्टिः पुष्कलं भवेत्। चत्वारि पुष्कलानि—चतुःषष्टिमुष्टिः पूर्णपात्रमिति दीक्षितभाष्यम्। 'अष्टमुष्टि भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलं'—इति नारायणोपाध्यायादयः पठन्ति। अत्र च, "कंसं चमसं वाऽन्नस्य पूरयित्वा

कृतस्य वाऽकृतस्य वाऽपि वा फलानामेवैतं पूर्णपात्रमित्याचक्षते"—इत्याचार्य्यसूत्रोक्तस्य एतस्य च पूर्णपात्रस्य सम्भवासम्भवाभ्यां व्यवस्था बोद्धव्या। अत्यन्तासम्भवे तु,—

"यावता बहुभोक्तुश्च तृप्तिः पूर्णेन जायते।
नावरार्द्ध्यं ततः कुर्य्यात् पूर्णपात्रमिति स्थितिः"।

इति कर्म्मप्रदीपोक्तं द्रष्टव्यम्॥

**यज्ञद्रव्यसमाहारे भोजनाचमने तथा॥ ४४॥**
**जपे वा होमकाले वा दक्षिणं बाहुमुद्धरेत्।**

यज्ञद्रव्याणां स्रुवादीनां समाहरणे ग्रहणे इत्यर्थः। जपे जपकाले। एषु दक्षिणं बाहुं यथासम्भवमूर्द्ध्वं कुर्य्यात्। वाशब्दौ समुच्चयार्थौ॥

**होमः प्रतिग्रहो दानं भोजनाचमनानि च॥ ४५॥**
**अवहिर्जानु कर्म्माणि साङ्गुष्ठान्येवमाचरेत्।**
**आरम्भः सर्व्वहोमानामाहुर्यज्ञविदो जनाः॥ ४६॥**

अवहिर्जानु यथा भवति, तथैतान्याचरेदिति क्रियाविशेषणमेतत्। 'कर्म्माणि' सन्ध्यावन्दनादीनि। होमादेर्विशेषतः कथनमादरार्थम्। अवहिर्जानु,—इति अन्तर्जानु इत्यर्थः। जानुनोर्मध्ये हस्तौ कृत्वेत्येतत्।

"अन्तर्जानु शुचौ देशे उपविष्ट उदङ्मुखः"।

इति। "अन्तरूर्व्वोरत्नी कृत्वा"—इति चैवमादिस्मृत्यन्तरदर्शनात्। जानुमध्ये दक्षिणं बाहुं कृत्वा,—इति केचित्। 'साङ्गुष्ठानि' अङ्गुष्ठाङ्गुलिसहितानि चैतानि कर्म्माण्याचरेत्। सर्व्वहोमानामारम्भोऽप्येव-

मेव करणीय इति यज्ञविदो जनाः कथयन्ति। होम इति वचना-दारम्भे नियमो न स्यादिति वा; आदरातिशयार्थं वा; 'आरम्भः सर्व्व-होमानाम्'—इति पुनराह॥

"मध्यतः प्राचीं रेखामुल्लिख्योदीचीञ्च संहतां पश्चात्"—इत्यादि सूत्रेण स्थण्डिले रेखादिकरणमभिधाय, "लक्षणावृद्देषा सर्व्वत्र"—इति सूत्रेण तेषां लक्षणत्वमुक्तं गोभिलेन। तदिदं विशेषतो विवक्षुः प्रतिजानीते,—

लक्षणं तत् प्रवक्ष्यामि प्रमाणं दैवतञ्च यत्।

गोभिलेन रेखाकरणादिरूपं लक्षणमुक्तं, तदहं प्रकर्षेण वक्ष्यामि। रेखाणां यत् प्रमाणं, यच्च दैवतं देवता, तत् सर्व्वं प्रवक्ष्यामि॥

न नखेन न काष्ठेन नाश्मना मृण्मयेन वा॥ ४७॥
प्रोल्लिखेल्लक्षणं विप्रः सिद्धिकामस्तु यो भवेत्।

अश्मना पाषाणेन। लक्षणं रेखाम्॥

नखादिना रेखाकरणे दोषमाह,—

नखेन कुनखी चैव काष्ठेन व्याधिमृच्छति॥ ४८॥
अश्मना धननाशः स्यात् मृण्मयेन कलिर्ध्रुवम्।

ऋच्छति गच्छति प्राप्नोति,—इत्येतत्। कलिः कलहः॥

नखादीनां दोषमभिधाय, अथेदानीं फलादीनां गुणमाह,—

फलेन फलनी चैव पुष्पेण श्रियमृच्छति॥ ४९॥
पर्णेन धनलाभः स्यात् दीर्घमायुः कुशेन तु।

फलेन लक्षणं लिखन् फलनी स्यात्। फलनं फलम्। तद्विद्यतेऽस्येति फलनी फलवान् इत्यर्थः। फलिनी,—इति पाठे, फलेन लिखिता रेखा फलिनी फलप्रदा स्यादिति व्याख्येयम्। पर्णेन पत्रेण॥
यस्मादेवम्,—

तस्मात् फलेन पुष्पेण पर्णेनाथ कुशेन वा ॥ ५० ॥
प्रोल्लिखेल्लक्षणं विप्रः सिद्धिकामस्तु कर्म्मसु ।

स्पष्टार्थः श्लोकः॥

सव्यं भूमौ प्रतिष्ठाप्य प्रोल्लिखेद्दक्षिणेन तु ॥ ५१ ॥
तावन्नोत्थापयेत् पाणिं यावदग्निं निधापयेत् ।

सव्यं वामं पाणिं भूमौ प्रतिष्ठाप्य दक्षिणेन पाणिना लक्षणं प्रोल्लिखेत्। यावदग्निं स्थण्डिले स्थापयेत्, तावद् वामं पाणिं नोत्थापयेत्—भूमावेव स्थापयेदित्यर्थः॥
अथेदानीं रेखानां देवतामाह,—

प्राक्कृता* पार्थिवी रेखा† आग्नेयी चाप्युदक् स्मृता‡ ॥ ५२ ॥
प्राजापत्या च ऐन्द्री च§ सौमी च प्राक्कृता स्मृता ।

पार्थिवी पृथिवीदेवताका रेखा प्राक्संस्था आचार्य्येण कृता। आचार्य्येण प्राक् संस्था या रेखा प्रथममभिहिता सेयं पार्थिवी,—इति

---

* प्राग्गता,—इति पाठान्तरम्। † ज्ञेया,—इति पाठान्तरम्।
‡ गता,—इति पाठान्तरम्। § प्राजापत्या तथा चैन्द्री,—इति पाठान्तरम्।

वक्तव्ये,—प्राक् इता पार्थिवीरेखा,—इति भङ्ग्यन्तरेणाह। अनेनैव श्लोकशेषो व्याख्यातः। आसाञ्च रेखानां पाठक्रमेणैव करणं बोद्धव्यम्। तदनेन, "मध्यतः प्राचीं लेखामुल्लिख्योदीचीञ्च संहतां पश्चान्मध्ये प्राचीस्तिस्र उल्लिख्याभ्युक्षेत्"—इति सूत्रोक्तानां रेखाणां दैवतमुक्तम्॥

उत्करं गृह्य रेखाभ्योऽरत्निमात्रे निधापयेत्॥५३॥
द्वारमेवन्तु द्रव्याणां प्रागुदीच्यां दिशि स्मृतम्।

रेखाभ्यः पूर्व्वोक्ताभ्यः, उत्करं गृह्य गृहीत्वा, अरत्निमात्रे देशे निधापयेत् स्थापयेत्। उद्धृत्य कीर्य्यते विक्षिप्यते इत्युत्करो रेखोत्कीर्णमृत्तिका भण्यते। कस्यां दिशि निधापयेत्?। उच्यते। प्रागुदीच्यामैशान्यां दिशि पुनर्द्रव्याणामुत्कराणामेवं द्वारं निधापनद्वारं मुनिभिः स्मृतम्। द्वारमेतत् पदार्थानाम्,—इति तत्त्वकारपाठेऽपि तथैवार्थः। 'एवमैशान्यां दिशि होमद्रव्याणामानयनार्थं द्वारं स्मृतम्'—इति दीक्षितरामकृष्णः॥

रेखाणां मानमाह,—

पार्थिवी चैव सौमी च लेखे द्वे द्वादशाङ्गुले॥५४॥
एकविंशतिराग्नेयी प्रादेशिन्ये उभे स्मृते।

पृथिवीदेवताका सोमदेवताका च द्वे रेखे द्वादशाङ्गुलपरिमिते। अग्निदेवताका रेखा एकविंशत्यङ्गुलपरिमिता। उभे अवशिष्टे प्राजापत्यैन्द्रीरेखे प्रादेशिन्ये प्रादेशपरिमिते स्मृते। एतदुक्तं भवति। प्रथमं प्राक्संस्थां द्वादशाङ्गुलपरिमितां पार्थिवीं रेखामुल्लिखेत्

तत उदक्संस्थामेकविंशत्यङ्गुलामाग्नेयीं रेखामुल्लिखेत्। ततः प्राक्संस्थां प्रादेशपरिमितां प्राजापत्यामैन्द्रीञ्च रेखामुल्लिखेत्। ततः पुनरपि प्राक्संस्थां द्वादशाङ्गुलपरिमितां सौमीं रेखामुल्लिखेत्,—इति। कात्यायनस्तु कर्म्मप्रदीपे,—

"लक्षणे प्रागगतायास्तु प्रमाणं द्वादशाङ्गुलम्।
तन्मूललग्ना योदीची तस्या एवं नवोत्तरम्।
उदग्गतायाः संलग्नास्तिस्रः प्रादेशमात्रिकाः।
सप्तसप्ताङ्गुलांस्त्यक्त्वा कुशेनैव समुल्लिखेत्"।

इति प्रकारान्तरं स्मरति। तदनयोः प्रकारयोर्विकल्पो बोद्धव्यः। कुतः?। द्वयोरेव स्वशास्त्रोक्तत्वात्॥

आग्नेयीलग्नानां रेखाणामन्तरालमुल्लेखनप्रकारञ्चाह,—

**षड़ङ्गुलान्तराः कार्य्या आग्नेयी संहितास्तु ताः॥५५॥**
**पार्थिवायास्तु रेखायास्तिस्रस्ता उत्तरोत्तराः।**

आग्नेय्यामुदक्संस्थाया मेकविंशत्यङ्गुलमितरेखायां संहिताः संलग्नाः, ता स्रतस्रो रेखाः प्रत्येकं षड़ङ्गुलव्यवहिताः कर्त्तव्याः।

"सप्त सप्ताङ्गुलांस्त्यक्त्वा कुशेनैव समुल्लिखेत्"।

इति कर्म्मप्रदीपोक्तमन्तरं तदुक्तकल्पे बोद्धव्यम्। पार्थिवायाः पार्थिव्या रेखाया अन्या यास्तिस्रो रेखाः, ता उत्तरोत्तराः कार्य्याः। सा खल्वियं पार्थिवी रेखा स्थण्डिलस्य दक्षिणतः स्यात्। कथं ज्ञायते?। अन्यासां तिसृणां रेखानामुत्तरोत्तरत्वषड़ङ्गुलान्तरत्वयोरनुरोधात्॥

रेखाणां वर्णमाह,—

शुक्लवर्णा पार्थिवी स्यादाग्नेयी लोहिता भवेत् ॥५६॥
प्राजापत्या भवेत् कृष्णा नीलामैन्द्रीं विनिर्दिशेत्।
पीतवर्णेन सौमी स्याद्रेखाणां वर्णलक्षणम् ॥ ५७ ॥

पीतवर्णेन,—इति इत्थम्भावे तृतीया। पीतवर्णेन विशिष्टा स्यादित्यर्थः। स्पष्टमन्यत्। तदित्थमेनं सार्द्धश्लोकं दीक्षितरामकृष्णः पपाठ व्याचष्टे च। रघुनन्दनस्त्वन्यथेमं ग्रन्थं पठति। तद्यथा,—

पार्थिवी पीतवर्णा स्यादाग्नेयी लोहिता भवेत्।
प्राजापत्या भवेत् कृष्णा नीला चैन्द्री प्रकीर्त्तिता।
श्वेतवर्णा च सौमी स्याद्रेखाणां वर्णलक्षणम् ॥

इति। भवदेवभट्टोऽप्येवमेव पद्धतौ लिलेख। पीतं रूपं पृथिव्याः, श्वेतं सोमस्य,—इति तन्त्रान्तरेऽपि दृश्यते। तदत्र भवन्तो भूमिदेवाः प्रमाणम् ॥

एष लेखविधिः प्रोक्तो सन्ध्याकर्म्मसु सर्व्वसु।
सूक्ष्मास्ता ऋजवः कार्य्या लेखास्ताः सुसमाहिताः ॥ ५८ ॥

लेखविधिः,—रेखाणामुल्लेखनविधिः। अथवा। लिख्यते,—इति लेखो रेखा भण्यते। तासां विधिरित्यर्थः। सर्व्वसु,—इति एलाभावश्छान्दसः। ताः पूर्व्वोक्ता रेखाः, सूक्ष्मा न स्थूलाः, ऋजवो न वक्राः, कर्त्तव्याः। ताः खल्विमा रेखाः सुसमाहिताः,—शोभनं सम्यक्—यथोक्तप्रकारेणाहिताः करणीयाः,—इत्यादरार्थमुक्तम् ॥

एतानि तत्त्वतो ज्ञात्वा गृह्याकर्म्माणि कारयेत्।

एतानि परिसमूहनादीनि तत्त्वतो ज्ञात्वा गृह्याकर्म्मणि कर्त्तव्ये कारयेत्। एतानि,—इत्येव। गृह्याकर्म्माणि,—इति पाठे, एतानि ज्ञात्वा गृह्याकर्म्माणि कारयेदिति व्यक्त एवार्थः॥

"प्रागुदक् प्रवणं देशं समं वा परिसमूह्योपलिप्य"—इति सूत्रेण भूमेरुपलेपनं गोभिलेनोक्तम्। 'गोमयेनोपलिप्य च'—इत्यनेन स्वयमप्येतदनुशिष्टम्। तत्र पृच्छति,—

विष्णुपादपरिक्रान्ता वाराहेणोद्धृता च या॥ ५९॥
शुचिर्मेध्या च पूता च किमर्थमुपलिप्यते?।

येयं भूमिर्विष्णुपादेन परिक्रान्ता कृतपरिक्रमणा, वाराहेण वराहरूपिणा भगवता प्रलयार्णवादुद्धृता च, सेयं शुचिरनुपहता, मेध्या यज्ञार्हा च, (मेधो यज्ञ इत्यनर्थान्तरम्) पूता पवित्रा च। अथ वा। शुचिर्मेध्या पवित्रेति पर्य्यायशब्दानां कथनभङ्ग्या पवित्रत्वातिशयो भूमेरभिप्रेयते। सा खल्वियं किमर्थं पुनरुपलिप्यते गोमयेन?॥

अत्रोत्तरमाह,—

इन्द्रेण वज्राभिहतः पुरा वृत्रो महासुरः॥ ६०॥
मेदसा तस्य संक्लिन्ना तदर्थमुपलिप्यते।

पुरा पूर्व्वस्मिन् काले वृत्रो नाम कश्चिन्महासुरः इन्द्रेण कर्त्रा वज्रेण करणेनाभिहतः, तस्य वृत्रस्य मेदसा धातुविशेषेण संक्लिन्ना

आर्द्रा (क्लिदू आर्द्रभावे) इयं पृथिवी एतस्मात् कारणादुपलिप्यते गोमयेन ॥

ननु कस्मिंश्चिदतीते काले वृत्रस्य मेदसा संक्लिन्ना भूमिरासीत्, तदपि मेदः पूर्व्वमेवोद्धृतं, तत् किमिदानीमुपलेपनेन ?—इत्याशङ्कायामाह,—

**मेदमुद्ध्रियमाणस्य शेषं यत् किञ्च तिष्ठति ॥ ६१ ॥**
**अन्तर्धानं मृदा चैव दीयते वेदनिश्चयः।**

'उद्ध्रियमाणस्य' उद्धृतस्य मेदसः, 'शेषम्' अवशिष्टम्, 'यत्' 'किञ्च' किमपि, 'मेदम्' मेदः, 'तिष्ठति' अस्थात्, 'मृदा' 'एव' 'तस्य' 'अन्तर्धानम्' 'दीयते' दत्तम्। उभयत्र कालसामान्ये लट्। अथ वा। उद्धृतस्य मेदसोऽवशिष्टं किञ्चिन्मेदोऽद्यापि तिष्ठत्येव। तिष्ठति चेत्, कथं न दृश्यते?। तत्राह। मृदैव तस्यान्तर्धानमद्यापि दीयते। अतो न दृश्यते,—इति भावः। इत्ययं 'वेदस्य' 'निश्चयः'। एतस्मात् कारणादिदानीमप्युपलिप्यते,—इत्यभिप्रायः।

दीक्षितस्त्वन्यथेमं ग्रन्थं वर्णयाञ्चकार,—मेदमुद्ध्रियमाणस्य,—इत्यादिम्। "वृत्रस्य मेदं रुधिरमुद्ध्रियमाणस्योद्धृतस्य यत् शेषं किञ्च तिष्ठति, तन्मृदैव मृत्तिकया अन्तर्धानं दीयते—स्थण्डिलं क्रियते इत्यर्थः"—इति ॥

**द्यूते च व्यवहारे च प्रवृत्ते यज्ञकर्म्मणि ॥ ६२ ॥**
**यानि पश्यत्युदासीनः* कर्त्ता तानि न पश्यति।**

---

* पश्यन्त्युदासीनाः,—इति पाठान्तरम्।

द्यूते,—

"अप्राणिभिर्यत् क्रियते तल्लोके द्यूतमुच्यते"।

इत्युक्तलक्षणे। व्यवहारे,—

"वि नानार्थे, ऽव सन्देहे, हरणं हार उच्यते।

नानासन्देह-हरणाद्व्यवहार इति स्मृतः"।

इत्याद्युक्तलक्षणे विवादनिर्णये, यज्ञकर्म्मणि च प्रवृत्ते, यान्युदासीनः पश्यति, द्यूतादिकर्त्ता तानि न पश्यति। 'प्रवृत्ते'—इत्यत्र 'प्रश्नते' —इति रघुनन्दनः पठति। 'प्रश्नते प्रश्नप्रश्नते'—इति व्याकरोति च। यस्मादेवं, तस्मात्,—

**एकः कर्म्मणि युक्तः स्यात् द्वितीयस्तन्त्रधारकः॥६३॥**
**तृतीयः प्रश्नं प्रब्रूयात्* ततः कर्म्म समाचरेत्†।**

एकः पुरुषः कर्म्मणि युक्तः स्यात्। द्वितीयः पुरुषः, तन्त्रस्य कर्म्म-विस्तारस्य शुद्धाशुद्धकर्म्मणो धारको धर्त्ता स्यात्,—इति दीक्षित भाष्यम्। स खल्वयं पुरुषः सब्रह्मके कर्म्मणि ब्रह्मैव स्यात्। कथं ज्ञायते?। "भाषेत यज्ञसंसिद्धिम्"—इति गोभिलसूत्रस्वरसात्। अब्रह्मके पुनरन्योऽपि। तन्त्रधारकः पुस्तकवाचकः,—इति रघुन-न्दनः। तृतीयः पुरुषः कर्म्मणः शुद्ध्यशुद्धिविषयकं प्रश्नं प्रब्रूयात् प्रकर्षेण शास्त्रादिना ब्रूयात् कथयेत्—निर्णयेदित्यर्थः। स खल्वयं सदस्योऽभण्यते॥

---

* प्रश्नकं ब्रूयात्,—इति पाठान्तरम्।

† समारभेत्—इति पाठान्तरम्।

अथेदानीं "भूर्भुवः स्वरित्यभिमुखमग्निं प्रणयन्ति"—इति सूत्रोक्त-मग्निप्रणयनं व्याकुरुते सार्द्धैश्चतुर्भिः,—

**कपालैर्भिन्नपात्रैर्वा नत्वामैर्गोमयेन वा ॥ ६४ ॥**
**अग्निप्रणयनं कार्य्यं यजमान-भयावहम् ।**

कपालैर्घटखण्डैः,—

"कपालं मृण्मयं पात्रं चक्राघटितमुच्यते" ।

इत्युक्तलक्षणैर्वा । भिन्नपात्रैः—भग्नपात्रैर्वा । आमैरपक्वपात्रैर्वा । (तुशब्दो वाशब्दार्थः) । गोमयेन वा, अग्निप्रणयनं न कर्त्तव्यम् । कपालादिपात्रैः कृतं खल्वग्निप्रणयनं यजमानस्य भयमावहति ॥

**अल्पः प्रणीतो विच्छिन्नोऽसमिद्धश्चापरिश्रुतः ॥ ६५ ॥**
**त्वरया पुनरानीतो यजमान-भयावहः ।**

अल्पः । विच्छिन्नोऽन्तराच्छेदसहितः—विक्षिप्त इति यावत् । असमिद्धोऽप्रदीप्तः । अपरिश्रुतः शास्त्रोक्तेतिकर्त्तव्यतारहितः । श्रुतं शास्त्रमिति ह्यनर्थान्तरम् । त्वरया चानीतः प्रणीतोऽग्निर्यजमानस्य भयमावहति । पुनः शब्दश्चशब्दार्थः ॥

यस्मादेवम्,—

**तस्माच्छुभेन पात्रेण अविच्छिन्नाश्रयं बहु ॥ ६६ ॥**
**अग्निप्रणयनं कुर्य्याद् यजमान-सुखावहम् ।**

अविच्छिन्नम्, अहृशं—समिद्धम्, बङ्ग—नाल्पं यथा भवति, तथा अग्निप्रणयनं कुर्य्यात्॥

शुभं पात्रन्तु कर्त्तव्यं यजमान-सुखावहम्॥६७॥

शुभं पात्रमित्यादरार्थं पुनरुपादानम्॥

शुभं पात्रमाह,—

शुभं पात्रन्तु कांस्यं स्यात्तेनाग्निं प्रणयेद्बुधः।
तस्याभावे शरावेण नवेनाभिमुखञ्च तम्॥६८॥

तस्य कांस्यस्याभावे नवेन शरावेणाग्निं प्रणयेदिति गतेन संबन्धः। अभिमुखं यथा भवति, तथा 'तम्' अग्निं प्रणयेदिति कल्पद्वयेऽपि संबध्यते। यत्तु,—

"शरावे भिन्नपात्रे वा कपाले वोल्मुकेऽपि वा।
नाग्निप्रणयनं कुर्य्याद् व्याधिहानिभयावहम्"।

इति शरावनिषेधः। स पुरातनशरावविषयः, कांस्यपात्रसद्भावविषयः, गोभिलीयव्यतिरिक्तविषयो वा॥

अग्नेः स्वरूपमाह,—

सर्व्वतः पाणिपादान्तः सर्व्वतोऽक्षिशिरोमुखः।
विश्वरूपो महानग्निः प्रणीतः सर्व्वकर्म्मसु॥६९॥

अन्तशब्दः स्वरूपार्थः। सर्व्वतः पाणिपादस्वरूपं यस्य, स तथा। सर्व्वतोऽक्षीणि—चक्षूंषि, शिरांसि, मुखानि च, यस्य, स तथोक्तः।

स खल्वयं विश्वरूपो महानग्निः सर्व्वकर्म्मसु प्रणीतो भवति। "ज्ञात्वा स्वरूपमाग्नेयम्"—इत्यग्नेः स्वरूपं विदुषः फलवादः पुरस्तादभिहितः। तदेव खल्वग्नेः स्वरूपमनेन श्लोकेनोक्तमिति बोद्धव्यम्। रघुनन्दनस्तु,—विशेषतोनामाज्ञाने सर्व्वत्र विश्वरूपोनामाग्निर्भवति,—इति कल्पयाञ्चकार। अग्निप्रणयनानन्तरं पठनीयोमन्त्रोऽयम्,—इति चाचचक्षे॥

न वस्त्रेण धमेदग्निं न शूर्पेण न पाणिना।
मुखेनोपधमेदग्निं मुखाद्ध्येषोऽध्यजायत॥ ७०॥

वस्त्रेण शूर्पेण पाणिना वा, अग्निं न धमेत् नोद्दीपयेत्। किन्तु मुखेनाग्निमुपधमेत्। तत्र हेतुः। हि यस्मादेषोऽग्निः प्रजापतेर्मुखादध्यजायत उत्पन्नः। मुखादुपजातस्य मुखेनोपधमनं युक्तमिति भावः। मुखादुत्पत्तिश्चाग्नेस्ताण्ड्ये ब्राह्मणे समाम्नायते। "सोऽकामयतः—यज्ञं सृजेयेति, स मुखत एव त्रिवृतमसृजत, तं गायत्रीच्छन्दोऽन्वसृज्यताग्निर्देवता ब्राह्मणो मनुष्यो वसन्त ऋतुस्तस्मात् त्रिवृत् स्तोमानां मुखं, गायत्री छन्दसा, मग्निर्देवतानां, ब्राह्मणो मनुष्याणां, वसन्त ऋतूनां, तस्माद् ब्राह्मणो मुखेन वीर्य्यं करोति, मुखतो हि सृष्टः"—इति। "मुखादग्निश्च वायुश्च"—इति च पुरुषसूक्ते। रघुनन्दनस्त्वेतदजानानः—'मुखात् मुखपात्रमन्त्रात्,—इति यदृच्छयैव कल्पयाञ्चकार। तदनादरणीयम्।

तदिदं मुखेनाग्नेरुपधमनं लौकिकाग्निव्यतिरिक्तविषयम्। तथाच, कर्म्मप्रदीपः।

"जुहृषंश्च कृते चैव पाणि-सूर्प-स्फ्य-दारुभिः ।
न कुर्य्यादग्निधमनं कुर्य्याद् वा व्यजनादिना ।
मुखेनैके धमन्त्यग्निं मुखाद्ध्येषोऽध्यजायत ।
नाग्निं मुखेनेति च यल्लौकिके योजयन्ति तत्" ।

इति ॥

वस्त्रादिना अग्निधमने दोषम्, मुखेन धमने फलञ्चाह,—

**वस्त्रेण तु भवेद् व्याधिः सूर्पेण धननाशनम् ।**
**पाणिना मृत्युमादत्ते मुखेन सिद्धिभाग्भवेत् ॥ ७१ ॥**

मृत्युमादत्ते गृह्णाति,—अचिरान् म्रियते, इत्यर्थः ॥

अथेदानीं त्रिधा प्रातर्होमकालमाह,—

**उदितेऽनुदिते चैव समयाध्युषिते तथा ।**
**सर्व्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः ॥ ७२ ॥**

स्पष्टार्थः श्लोकः ॥

वस्तुक्रमानुरोधादुद्देशक्रममुल्लङ्घ्य प्रथममनुदितं कालं लक्षयति,—

**रात्रेः षोड़शमे भागे ग्रहनक्षत्रभूषिते ।**
**अनुदयं विजानीयाद्धोमन्तत्र प्रकल्पयेत् ॥ ७३ ॥**

रात्रेः—षोड़शधा विभक्तायाः, षोड़शमे भागे । स खल्वयं कालोऽन्तिममुहूर्त्तादपि किञ्चिन्न्यूनो भवति । तमिमं कालं विशिनष्टि । ग्रहनक्षत्रैर्भूषिते अलङ्कृते । यावद्ग्रहनक्षत्राणि दीप्यन्ते, तावदित्यर्थः । तमिमं कालमनुदयं जानीयात् । तत्रानुदयकाले होमं कुर्य्यात् ॥

समयाध्युषितं कालमाह,—

**ततः प्रभातसमये नष्टे नक्षत्रमण्डले ।**
**रविविम्बं न दृश्येत समयाध्युषितं स्मृतम् ॥ ७४ ॥**

ततः—तदनन्तरं, प्रभातसमये,—भातं दीप्तिः; "भा दीप्तौ"—इति स्मरणात्, रविकिरणानां प्रदीप्तिसमये इत्यर्थः। अतएव नक्षत्रमण्डले नष्टे विलीने विरले इत्येतत्। पुनर्विशिनष्टि। रविविम्बं सूर्य्यमण्डलं यावन्नदृश्यते, तावदित्यर्थः। स खल्वयं कालः समयाध्युषितं स्मृतमाचार्य्यैः। विधेयप्राधान्यविवक्षया नपुंसकनिर्देशः।

उदयकालमाह,—

**रेखामात्रन्तु दृश्येत रश्मिभिश्च समन्वितम् ।**
**उदयं तं विजानीयाद्धोमं कुर्य्याद्विचक्षणः ॥ ७५ ॥**

रश्मिभिः किरणैर्युक्तं सूर्य्यमण्डलस्य रेखामात्रं यदा दृश्यते, तं कालमुदयं जानीयात्। पुरस्तात्तावत् 'रविविम्बं न दृश्येत'—इत्युक्तम्। तदत्र, रविविम्बस्यैव रेखामात्रं दृश्यते,—इत्यर्थमवगच्छामः। स खल्वयमुदयकालस्यारम्भः। उत्तरावधिस्तस्य,—

"हस्तादूर्द्ध्वं रविर्यावद्गिरिं हित्वा न गच्छति।
तावद्धोमविधिः पुण्यो नान्योऽभ्युदितहोमिनाम्"।

इति कर्म्मप्रदीपे कात्यायनेनोक्तः। तस्मात्,—'स्थण्डिलस्थहस्तरेखाया एकविंशत्यङ्गुलपरिमाणदर्शनात् रेखामात्रमेकविंशत्यङ्गुलमात्रं रवेरुदयं दृश्येत'—इत्यमङ्गतैषा कल्पना दीक्षितस्य।

ननु "पुरोदयात् प्रातः प्रादुष्कृत्योदितेऽनुदिते वा प्रातराहुतिं जुहुयात्"—इति सूत्रयता गोभिलेन प्रातर्होमस्य कालद्वयमुक्तम्, अनेन तु कालत्रयमुच्यते। तदनयोः पितापुत्रवचसोर्विरोधः। नैषदोषः। अभिप्रायभेदात्। गोभिलः खल्वाचार्य्यः उदयात् पूर्व्व-मेवानुदयकालमभिप्रयन् समयाध्युषितस्यापि कालस्य तत्रैवान्तर्भावं मन्यमानः 'उदितेऽनुदिते वा'—इति कालद्वयं सूत्रयाञ्चकार। अनेन तु "उदिते जुहोति, अनुदिते जुहोति, समयाध्युषिते जुहोति"—इति श्रुतिमनुसरता एकस्यैवोदयपूर्व्वकालस्यानुदयसमयाध्युषितत्वेन द्वैविध्यमभिप्रेत्य कालत्रयमुपदिष्टम्। तस्मादभिप्रायभेदात् द्वयोर-विरोधः।

अथेदानीमग्न्याधानस्य कालानाह,—

**आधानस्य तु चत्वार उक्ताः कालाः पृथक् पृथक्।**
**अन्त्या समिद्विवाहश्च विभागः परमेष्ठिनः॥ ७६॥**

अग्न्याधानस्य पुनः पृथक् पृथक् चत्वारः काला आचार्य्यैरुक्ताः। तान् कालान् गणयति,—अन्त्या समिदित्यादिना। विभागो अंशविभागः।

अत्र किञ्चिद्वक्तव्यमस्ति। तत्र तावत्,—"ब्रह्मचारी वेदमधी-त्यान्त्यां समिधमभ्याधास्यन्"—इति सूत्रेण यः आधानकाल उक्तः, स इहान्त्यसमिद्योगादन्त्या समिदिति निर्दिश्यते। "जायाया वा पाणिं जिघृक्षन्"—इति सूत्रेण य आधानकाल उक्तः, स इह विवाह इत्युच्यते। यः पुनः परमेष्ठिनोऽग्नेराधानकालः—"प्रेते वा गृहपतौ परमेष्ठिकरणम्",—इत्यनेन सूत्रेणोपदिष्टः; स इह परमेष्ठिन इत्य-

भिधीयते। विभागकालः पुनर्गोभिलेन नोपदिष्टः, तत् कथमाधानस्य चत्वारः काला उक्ता इत्युच्यते?। उच्यते। एते चत्वारः कालाः गोभिलेनोक्ताः,—इत्येतदिह नोच्यते। किन्तर्हि?। आचार्य्यैरुक्ताः,—इति। गौतमः खल्वाचार्य्यः,—"भार्य्यादिरग्निर्दायादिर्वा"—इति सूत्रयाञ्चकार। सोऽपि किल च्छन्दोग एव। तत्र तावत्, एक एव भार्य्यादिरग्निः,—'अन्त्यां समिधमभ्याधास्यन्'—इति, 'पाणिं जिघृक्षन्'—इति च कालद्वयाहितो भवतीत्याचार्य्येण दर्शितः। एकः खल्वपि दायादिरग्निः,—गृहपतेर्मरणं, दायविभागश्चेति कालद्वयाहितो भवति,—इत्याचार्य्यसूत्रादाचार्य्यपुत्रवाक्याच्चावगच्छामः। तस्मात्,—चत्वारः कालाः,—इति उपपन्नतरम्।

"प्रेते वा गृहपतौ"—इति सूत्रयता गोभिलेन गृहपतौ प्रेते यदाधानमुक्तं, तत् ज्येष्ठस्यैव भ्रातुर्न कनिष्ठस्य। कथं ज्ञायते?।

"ज्येष्ठः कुर्य्यात्तथाऽऽधानं कणीयांश्च विवर्जयेत्"।

इति कर्म्मप्रदीपवचनात्। कनिष्ठस्य तु विभागकाल एव दायादिरग्निर्भवति। तस्मात्,—आचार्य्यो ज्येष्ठं प्रधानमभिप्रेत्य 'प्रेते वा गृहपतौ'—इति सूत्रयाञ्चकार, आचार्य्यपुत्रस्तु कनिष्ठाभिप्रायेण 'विभागः'—इत्याह,—इति श्लिष्यते। तदिदं गोभिलानुक्तविशेषाभिधानपरं वचनम्।

ननु, "तथा तिथिनक्षत्रपर्व्वसमवाये" "दर्शे वा पौर्णमासे वाऽग्निसमाधानं कुर्व्वीत"—इति सूत्राभ्यामन्येप्याधानकाला गोभिलेनोक्ताः, तत् कथमाधानस्य 'चत्वारः कालाः'—इत्युच्यते। उच्यते। सत्यमुक्ता अन्येप्याधानकालाः, परन्तु गृह्यकर्म्मणां योऽग्निः, स्तत्रैते चत्वार एव कालाः सन्निलक्ष्यन्ते नेतरे। कुतः?। इतरेषां कालानामाश्रमा

न्तरसाधारणात्। श्रौताग्निसाधारणाच्च। चत्वारः खल्वमी कालाः गृह्यकर्म्मणामग्नेरसाधारणा भवन्ति। कस्मात्?। यस्मादन्यसमिदाधानात् विवाहाच्चासौ गृहस्थो भवति। पूर्व्वं खल्वयं ब्रह्मचारी आसीत्। सत्यपि गार्हस्थ्ये पितरि जीवति न स्वातन्त्र्यं गृह्यकर्म्मादिषु पुत्राणामिष्यते। "पितरि जीवति पुत्राणामर्थादानविसर्गाक्षेपेषु न स्वातन्त्र्यम्"—इत्यादिस्मरणात्। तेषामपि गृह्यतया पितृकृतैरेव गृह्यकर्म्मभिः फलवत्ताया न्याय्यत्वाच्च। अतएव गृहपतौ प्रेते गृह्यकर्म्मणामग्नेराधानं ज्येष्ठस्य। जीवति ज्येष्ठे कनीयसामप्यविभक्तानामस्वातन्त्र्यं मुनयः स्मरन्ति। तथाच मनुः।

"पितेव पालयेत् पुत्रान् ज्येष्ठो भ्रातॄन् यवीयसः।
पुत्रवच्चापि वर्त्तेरन् ज्येष्ठे भ्रातरि धर्म्मतः"।

इति। अतएवांशविभागकालोऽमीषामाधानकालः। अतएव मनुः।

"एवं सहवसेयुर्वा पृथग्वाधर्म्मकाम्यया"।

इति विभागे धर्म्मकाम्यां हेतुतया निर्दिशति। गौतमोप्याह। "विभागे तु धर्म्मवृद्धिः"—इति। यस्मात्,—परेते गृहपतावग्नेराधानं ज्येष्ठस्यैव, कनीयसान्तु विभागकाल एव, तस्मादविभक्तानामेकमेव गृह्यकर्म्मादिकं विभक्तानान्तु पृथक् पृथक्,—इति स्मर्त्तारः स्मरन्ति। तथाच बृहस्पतिः।

"एकपाकेन वसतां पितृदेवद्विजार्च्चनम्।
एकं भवेद्विभक्तानां तदेव स्याद्गृहे गृहे"।

इति। नारदः।

"भ्रातृणामविभक्तानामेकोधर्म्मः प्रवर्त्तते।
विभागे सति धर्म्मोऽपि भवेत् तेषां पृथक् पृथक्"।

इति। तस्मात्,—गृह्यकर्म्मणामग्नेरसाधारणाश्चत्वारः कालाः,—इति तथोक्तम्। तथाच गौतमः। "भार्य्यादिरग्निर्दायादिर्वा, तस्मिन् गृह्याणि"—इति। एतत्सूत्रोक्तस्यैव खल्वग्नेश्चत्वार इमे आधानकालाः भवन्ति,—इत्यवोचाम॥

भार्य्यादेस्तावदग्नेः प्रथमप्रातराहुतिप्रकारः,—"तेन चैवास्य प्रातराहुति र्हुता भवति"—इति सूत्रेणोक्तः। दायादेरग्नेः प्रथमप्रातराहुतिप्रकारमाह,—

**परमेष्ठी विभक्तश्च जुहुयादक्षतान् सकृत्।**
**प्रातस्तूष्णीं घृतं वाऽपि प्रातराहुत्युपक्रमः॥ ७७॥**

येन परमेष्ठिनोऽग्नेराधानं कृतं, स इह परमेष्ठी भण्यते। येन च विभागकाले कृतमग्नेराधानं, स विभक्त इत्युच्यते। स खल्वयं परमेष्ठी विभक्तश्च, अक्षतान्—'अक्षतास्तु यवाः प्रोक्ताः'—इति वचनात् यवान्, घृतम् वा सकृदेकवारं तूष्णीममन्त्रकं प्रातर्जुहुयात्। सेयं दायादेरग्नेः प्रथमा प्रातराहुतिर्भवति। अपरस्तु सकृत् पदमनर्थकं कुर्व्वन्नाह,—'द्वितीयामपि तूष्णीं जुहुयात्,—इति।

तदनयोः परमेष्ठिविभक्तयोरग्न्योः प्रातराहुतिभ्यामुपक्रमः प्रारम्भः। तदनेन,"सायमाहुत्युपक्रम एवात ऊर्द्धं गृह्येऽग्नौ होमोविधीयते"—इति गोभिलसूत्रं दायाद्यग्निव्यतिरिक्तविषयं व्याख्यातम्॥

"अपिवाऽन्यं मथित्वाऽभ्यादध्यात्"—इति सूत्रेणारण्योरग्निरुपदिष्टः। तत्रारणिस्वरूपादिकमाह,—

**आश्वत्थीन्तु शमीगर्भामरणिं कुर्व्वीत सोत्तराम्।**
**उरोर्दीर्घां रत्निदीर्घां चतुर्विंशाङ्गुलां तथा॥७८॥**
**चतुरङ्गुलोच्छ्रितां कुर्य्यात् पृथुत्वेन षड़ङ्गुलाम्।**

आश्वत्थीमश्वत्थसंबन्धिनीम्। शमीगर्भां शमीगर्भसंबन्धिनीम्। तत्संबन्धात्ताच्छब्द्यम्। शमीगर्भश्च,—

"संसक्तमूलो यः शम्याः स शमीगर्भ उच्यते"।

इति कर्म्मप्रदीपोक्तलक्षणः। मुख्योऽयं पक्षः। असम्भवे आश्वत्थीमेव कुर्य्यात्।

"अलाभे त्वशमीगर्भादुद्धरेदविलम्बितः"।

इति कर्म्मप्रदीपवचनात्। सोत्तरामुत्तरारणिसहितामरणिं कुर्व्वीत। कीदृशीं कुर्व्वीत? उच्यते। उरोः सक्थ्नोदीर्घाम्। रत्निर्व्याख्याता। तत्परिमाणदीर्घाम्। चतुर्व्विंशाङ्गुलदीर्घाम्। तथेति दैर्घ्यपरामर्शः। "खादिरे बध्नाति, पालाशे बध्नाति, रोहितके बध्नाति"—इतिवदमीषां परिमाणानां विकल्पो बोद्धव्यः। चतुरङ्गुलोच्छ्रितां चतुरङ्गुलोच्चाम्, पृथुत्वेन विस्तारेण षड़ङ्गुलां कुर्य्यात्। अत्र, चतुर्विंशाङ्गुलादि परिमाणमङ्गुष्ठाङ्गुलाभिप्रायेण। अविशेषाच्च द्वयोरप्यरण्योरेतत् परिमाणं बोद्धव्यम्। तथाच कर्म्मप्रदीपः।

"चतुर्व्विंशतिरङ्गुष्ठा दैर्घ्यं षड़पि पार्थवम्।
चत्वार उच्छ्रये मानमरण्योः परिकीर्त्तितम्"।

इति। अन्योऽपि विशेषः,—"तस्य या प्राङ्मुखी शाखा"—इत्यादिकः कर्म्मप्रदीपादुपलब्धव्यः॥

प्रमन्थचात्रोबिलीनां परिमाणमाह,—

**अष्टाङ्गुलः प्रमन्थः स्याच्चात्रः स्यात् द्वादशाङ्गुलम्॥७९॥**
**ओबिलो द्वादशैव स्यादेतन्मन्थनयन्त्रकम्।**

चात्रगर्भस्थो मन्थनार्थः काष्ठविशेषः प्रमन्थः। सोऽयं प्रमन्थोऽष्टाङ्गुलः स्यात्। स खल्वयं प्रमन्थः उत्तरारणेः काष्ठशकलमुद्धृत्य कर्त्तव्यः।

"उत्तरारणिनिष्पन्नः प्रमन्थः सर्व्वदा भवेत्"।

इति कर्म्मप्रदीपवचनात्। चात्रम्—मन्थनदण्डरूपं द्वादशाङ्गुलपरिमितं स्यात्। ओबिली च—चात्रोर्द्धस्थलौहशङ्कुशिरसि निबद्धकाष्ठविशेषरूपा द्वादशाङ्गुलैव स्यात्। एतत् सर्व्वं यथाविधि विन्यस्तं मन्थनयन्त्रमित्युच्यते। चात्रमोबिली च सारवद्दारुणा निर्मातव्यम्।

"सारवद्दारवं चात्रमोबिली च प्रशस्यते"।

इति कर्म्मप्रदीपवचनात्। विन्यासप्रकारस्त्वमीषां कर्म्मप्रदीपादुपलब्धव्यः।

अथेदानीं देवयोनिसंज्ञकं मन्थनस्थानमाह,—

**मूलादष्टाङ्गुलमुत्सृज्य त्रीणि त्रीणि च पार्श्वयोः॥८०॥**
**देवयोनिः स विज्ञेयस्तत्र मथ्यो हुताशनः।**

अरण्या मूलदेशादष्टाङ्गुलं त्यक्त्वा, पार्श्वयोश्च त्रीणि त्रीण्यङ्गुलानि त्यक्त्वा यः सन्धिप्रदेशो लभ्यते, स खल्वयं देवयोनिर्विज्ञेयः। तत्राग्निर्मथ्यः प्रकारान्तरमाह,—

मूलादष्टाङ्गुलं त्यक्त्वा अग्रात्तु द्वादशाङ्गुलम् ॥ ८१ ॥
देवयोनिः स विज्ञेयस्तत्र मथ्यो हुताशनः ।

स्पष्टार्थः श्लोकः । प्रकारान्तरं मन्थनप्रकारस्य कर्म्मप्रदीपादुपलब्धव्यम् ॥

स्रुवस्वरूपमाह,—

खादिरोऽरत्निदीर्घः स्यात् स्रुवोऽङ्गुष्ठपर्व्ववृत्तः ॥ ८२ ॥

खदिरकाष्ठनिर्म्मितोऽरत्निदीर्घः स्रुवः स्यात् । अरत्निर्द्विवितस्तिरिति दीक्षितभाष्यम् । अङ्गुष्ठपर्व्वपरिमाणेन वृत्तोवर्त्तुलः । स्रुवस्य धारणदण्डः खल्वयमङ्गुष्ठपर्व्ववृत्तः स्यात् । अग्रे पुनरस्य नासारन्ध्रवत् मध्यस्थितमर्य्यादमङ्गुष्ठद्वयपरिमाणं वर्त्तुलं विलं विज्ञेयम् । तदाह कर्म्मप्रदीपः ।

"खादिरो वाऽथ पालाशो द्विवितस्तिः स्रुवः स्मृतः ।
स्रुग्वाहुमात्रा विज्ञेया वृत्तस्तु प्रग्रहस्तयोः ।
स्रुवाग्रे घ्राणवत् खातं द्व्यङ्गुष्ठपरिमण्डलम् ।
जुह्वाः शराववत् खातं सनिर्बाहं षडङ्गुलम्" ।

इति । अग्रभागे अङ्गुष्ठपर्व्वभ्यां वृत्तोवर्त्तुलः,—इति वा वर्णनीयम् ॥

स्रुचः स्वरूपमाह,—

पार्णीं स्रुचं वाहुमात्रीं पाणितलाकारपुष्कलाम् ।
त्वग्विलां त्वग्रे कुर्व्वीत मेक्षणं स्रुक्स्रुवादिवत् ॥ ८३ ॥

पर्णः पलाशः—इत्यनर्थान्तरम् । पार्णीं पलाशसंवन्धिनीम्, वाहुमात्रीं वाहुपरिमिताम्, अग्रे अग्रदेशावच्छेदेन,—पाणितलाकार

पुष्कलां—पाणितलस्याकारेण पुष्कलां विस्तीर्णाम्, लग्विलां—त्वक्-पर्य्यन्तखातां त्वचि खातां वा। (एतेन त्वक्युक्तमेवास्या अग्रं स्यात्)। तदेवम्भूतां स्रुचं कुर्व्वीत। इयमेव जुहूरित्युच्यते। अत्रापि विशेषः कर्म्मप्रदीपे द्रष्टव्यः। मेक्षणमपि स्रुक्स्रुवादिवत् काष्ठनिर्म्मितम्। विशेषस्तु कर्म्मप्रदीपे।

"इध्मजातीयमिध्मार्द्धप्रमाणं मेक्षणं भवेत्।
वृत्तं चाङ्गुष्ठपृथ्वग्रमवदानक्रियाक्षमम्।
एषैव दर्व्वी यस्तत्र विशेषस्तमहं ब्रुवे।
दर्व्वी द्व्यङ्गुलपृथ्वग्रा तुरीयोनन्तु मेक्षणम्"।

इति॥

शङ्कुश्चैवोपवेशश्च द्वादशाङ्गुल इष्यते।

अन्वष्टक्यादिकर्म्मणि कर्षूणां खननार्थः शङ्कुर्भवति, 'वृषीं चोपदध्यात्,—इति सूत्रोक्तो वृष्यपरपर्य्याय उपवेशः,'—इति नारायणोपाध्यायाः। 'उपवेशो हस्तप्रतिरूपकः,'—इति दीक्षितभाष्यम्। स खल्वयं शङ्कुरुपवेशश्च द्वादशाङ्गुल इष्यते आचार्य्यैः। अत्रापि,—

"शङ्कुश्च खादिरः प्रोक्तोरजतेन विभूषितः"।

इति कर्म्मप्रदीपोक्तोविशेषो द्रष्टव्यः॥

नवैः शोभनैरगर्भं पवित्रन्तु कुशाग्रजम्॥ ८४॥
ललाटाच्चिवुकं प्राहुर्बाहुमात्राः परिधयः।

नवैर्न पुनरावृत्तैरित्यर्थः। शोभनैः कुशैः पवित्रं प्राहुराचार्य्याः। बहुवचनं व्यक्तिभेदाभिप्रायम्। कथं ज्ञायते?।

"अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्" ।

इति कर्म्मप्रदीपे द्विदलस्योक्तत्वात् । पवित्रं विशिनष्टि, अगर्भं अन्तर्गर्भशून्यम् । कुशाग्रजं साग्रकुशेन जातम् । ललाटात् ललाटमारभ्य (ल्यब्लोपे पञ्चमी), चिवुकं चिवुकपर्य्यन्तम्—ललाटावधि चिवुकपर्य्यन्तपरिमाणमित्यर्थः । तदनेन,—"तत एव बर्हिषः प्रादेशमात्रे पवित्रे कुरुते"—इत्यादिसूत्रोक्तं पवित्रं व्याख्यातम् । "ललाट प्रमाणेन चिवुकं सन्दंशं प्राहुराचार्य्याः"—इति दीक्षितभाष्यम् ।

"परिधीनप्येके कुर्व्वन्ति शामीलान् पार्णान् वा"—इतिसूत्रोक्तान् परिधीन् व्याचष्टे । परिधयो बाहुमात्रा भवन्ति । विशेषस्तु कर्म्मप्रदीपे ।

"बाहुमात्राः परिधयो ऋजवः सत्वचोऽव्रणाः ।
त्रयो भवन्त्यशीर्णाग्रा एकेषान्तु चतुर्दिशम्" ।

इति ॥

**दीप्ताग्नौ विस्फुलिङ्गेऽच वने दग्धेषु दारुषु ॥ ८५ ॥
न च संस्कारदोषोऽस्ति तथा चरुकपालयोः ।**

'विक्षिप्ते दीप्ताग्नौ'—इति दीक्षितभाष्यम् । विस्फुलिङ्गे अग्निकणे, वने दवाग्निना दग्धेषु काष्ठेषु, चरौ च मार्ज्जारादिदृष्टाद्यल्पोपघाते, कपाले च, संस्कारे प्रोक्षणादौ कृते सति दोषो नास्ति ॥

अथेदानीं कर्म्मक्रममाह,—

लेखनाभ्युक्षणे कृत्वा निहितेऽग्नौ समिद्दत् ॥ ८६ ॥
ततो भूमिग्रहं कृत्वा कुर्य्यात् परिसमूहनम्।

समिदित्यार्षो विभक्तिलोपः। ददिति शत्रन्तम्। तदयमर्थः। रेखोल्लेखनमभ्युक्षणञ्च कृत्वा निहिते स्थापितेऽग्नौ समिधं दद्यात्। ततः,—"पश्चादग्नेर्भूमौ न्यञ्चौ पाणी प्रतिष्ठाप्येदं भूमेर्भजामह इति" —इतिसूत्रोक्तं भूमिग्रहं कृत्वा, "इमं स्तोममितितृचेन परिसमूहेत्" —इतिसूत्रोक्तं परिसमूहनं कुर्य्यात् ॥

ब्रह्माणमुपसंकल्प्य चरुश्रपणमारभेत् ॥ ८७ ॥
ब्रह्माणं स्तरणं विद्याच्चरुर्यत्र न कल्पितः।

ततो ब्रह्माणमुपसंकल्प्य,—अग्निसमीपे सम्यक् गृह्योक्तप्रकारेण स्थापयित्वा, चरुश्रपणमारभेत। तस्मात्,—भूमिजपादेः पूर्व्वं ब्रह्मस्थापनमित्यसङ्गतं वचनम्। यत्र कर्म्मणि चरुर्न कल्पितस्तत्र ब्रह्माणमेव स्तरणं जानीयात्। न तत्र गृह्योक्तं स्तरणं कुर्य्यादित्यर्थः ॥

ब्रह्मविष्टरयो*श्चापि सन्देहे समुपस्थिते ॥ ८८ ॥
ऊर्द्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः।

ब्रह्मविष्टरयोः स्वरूपसन्देहे निर्णयमाह,—ऊर्द्ध्वकेशो ब्रह्मा भवेत्। अधोलम्बितकेशो विष्टरो भवेत्। केशोऽग्रम् ॥

---

* ब्रह्माविष्टरयोः,—इत्यादर्शपुस्तके अशुद्धः पाठः।

**कतिभिस्तु भवेद्ब्रह्मा? कतिभिर्विष्टरः स्मृतः?॥८९॥**
**पञ्चाशद्भिः कुशैर्ब्रह्मा तदर्द्धेन तु विष्टरः।**

स्पष्टमक्षरार्थः। आभ्यां श्लोकाभ्यां गोभिलोक्तौ दर्भवटुविष्टरौ व्याख्यातौ। कर्म्मप्रदीपे तु,—

"यज्ञवास्तुनि मुष्ट्याञ्च स्तम्बे दर्भवटौ तथा।
दर्भसंख्या न विहिता विष्टरास्तरणेष्वपि"।

इति दर्भवटौ विष्टरे च दर्भसंख्या निषिद्धा। तदनयोर्विकल्पः,—पञ्चाशद्भिर्वा कुशैर्भवति, अपरिमितैर्वा कुशैः,—इति। कुतः?। द्वयोरप्यस्मच्छाखेऽभिधानात्। 'सम्भवे पञ्चाशद्भिः कुशैरसम्भवे अपरिमितैरिति व्यवस्थितोऽयं विकल्पः'—इति नारायणोपाध्यायाः। रघुनन्दनस्तु च्छन्दोगोऽपि, आचार्य्यपुत्रस्यैतद्वचनमित्यजानानः,—शाखन्तरीयमेतत् संख्यावचनम्,—इति ब्रुवन् कल्पनानैपुण्यमात्मनः ख्यापयाञ्चकार॥

**उदग्धारामविच्छिन्नामाग्नमारभ्य दक्षिणाम्॥९०॥**
**दद्याद्ब्रह्मासनस्थाने सर्व्वकर्म्मसु नित्यशः।**

अग्नेरिदं आग्न्यं स्थण्डिलमारभ्य दक्षिणां दक्षिणायामितिदीक्षितभाष्यम्। अग्निमारभ्य,—इति तत्त्वकारः पठति। तदेवं ब्रह्मासनस्य स्थाने अविच्छिन्नामुदकस्य धारां दद्यात्। तदनेन,—"दक्षिणतोऽग्नेर्ब्रह्मासनमास्तीर्य्य"—इति सूत्रोक्तं ब्रह्मासनास्तरणम्,—तत्स्थाने इत्यमुदकधारां दत्त्वा करणीयमिति व्याख्यातम्। प्रागग्रवारिधारादानम्—इति केचित्॥

**एकाग्नौ* पितृयज्ञे च ब्रह्माणं नोपकल्पयेत् ॥९१॥**
**सायं प्रातश्च होमेषु तथैव बलिकर्म्मसु।**

एकोऽग्निर्यस्मिन्, तस्मिन्नेकाग्नौ पितृयज्ञे,—इति सामानाधिकरण्येन संबन्धः, श्रौतस्य बह्वग्निसाध्यस्य पिण्डपितृयज्ञस्य निरासार्थः। चकारः पुनरर्थः। एकाग्नौ पितृयज्ञे पुनर्ब्रह्माणं नोपकल्पयेत्। पितृयज्ञे अन्वष्टक्यकर्म्मणि पिण्डपितृयज्ञे च,—इति दीक्षितभाष्यम्। एकाग्नौ, पितृयज्ञे च,—इत्युभयत्र ब्रह्माणं नेच्छन्त्यन्ये। तदसङ्गतम्। एकाग्न्योरपि दर्शपौर्णमासयोर्ब्रह्मोपवेशनस्याचार्य्येण गृह्ये अभिधानात्। अपिच, एवं खल्वेकाग्निसाध्ये गृह्योक्तकर्म्ममात्र एव विवाहहोमादौ ब्रह्मा न स्यात्। दृश्यते च। लिङ्गञ्च विवाहहोमे ब्रह्मणः पश्चामः। तथाच वक्ष्यति।

**प्राजग्राहमुदग्राहं ब्रह्माणमृत्विजं तथा ॥९२॥**
**एतानि वाह्यतः कृत्वा शेषाणान्तु प्रदक्षिणम्।**

तस्माद् यथोक्तमेवास्तु। 'राकाग्नौ'—इति पाठे, राकायां पौर्णमास्यां योऽग्निः, तत्र ब्रह्माणं न कल्पयेदित्यर्थः। तथाच गोभिलसूत्रम्। "पौर्णमास्यां रात्रौ खदिरशङ्कुशतं जुहुयादायुः कामः"—इति।

सायं प्रातर्होमेषु, चशब्दादन्येष्वपि चिप्रहोमेषु, बलिकर्म्मसु-चैत्यहोमकेष्वित्यर्थः। तदेतेषु ब्रह्माणं नोपकल्पयेत्। तथाच गृह्यान्तरम्।

---

* राकाग्नौ,—इति परिशिष्टप्रकाशधृतः पाठः

"एकसाध्येष्वबर्हिःषु न स्यात् परिसमूहनम्।
नोदगासादनञ्चैव चिप्रहोमा हि ते स्मृताः"।

इत्येकसाध्यत्वम्—होममात्रसाध्यत्वं चिप्रहोमानामाह॥
"अथ हविष्यस्यान्नस्याग्नौ जुहुयात् कृतस्य वाऽकृतस्य वा"—इत्यादि सूत्रोक्तं कृतादिपदं व्याचष्टे,—

**यवव्रीह्यकृतं ज्ञेयं तण्डुलादि कृताकृतम्॥ ९३॥**
**ओदनन्तु कृतं विद्यात् न तस्य करणं पुनः।**

अक्षरार्थः। यवव्रीहि,—इति द्वन्द्वैकवद्भावः। तच्च गोधूमादीनामप्युपलक्षणम्। तण्डुलादि,—इत्यादिपदात् माषमुद्गादिविदलादीनां ग्रहणम्। ओदनपदम्—मोदकपिष्टकादीनामप्युपलक्षणम्। 'तण्डुलादि,—इत्यादिपदात् सक्तुग्रहणम्','—इत्यसङ्गतैषा कल्पना दीक्षितस्य। कुतः?। तस्य कृतत्वात्। कथं ज्ञायते?। यदयमोदनस्य कृतत्वे 'न तस्य करणं पुनर्'—इति हेतुतया निर्दिशति। अविशिष्टं खल्वेतत् सक्तौ। न हि तस्यापि पुनः करणमस्ति। तथाच कर्म्मप्रदीपः।

"कृतमोदनसक्त्वादि तण्डुलादि कृताकृतम्।
व्रीह्यादि चाकृतं प्रोक्तमिति हव्यं त्रिधा मतम्"।

इति॥

**सीमन्ते दर्भपिञ्जूल्यस्तिसस्ताभिस्त्रिरुन्नयेत्॥ ९४॥**
**त्रिभिः श्वेतैश्च शललो, प्रोक्तोवीरतरः शरः।**

सीमन्तकरणे कर्म्मणि तिस्रोदर्भपिञ्जूल्यो भवन्ति। ताभिस्तिसृभिरेव-वारत्रयं सीमन्तमुन्नयेत्। तदनेन,—"अथ सीमन्तमूर्द्धमुन्नयति भूरिति दर्भपिञ्जूलीभिरेव प्रथमं भुवरितिद्वितीयं स्वरितितृतीयम्"—इति सूत्रोक्ता दर्भपिञ्जूल्य उन्नयनञ्च व्याख्यातम्। भवदेवभट्टस्त्वेतदज्ञा-नात्, नव दर्भपिञ्जूलीराह। दर्मपिञ्जूलीनां त्रित्वमभ्युपगच्छन्नपि भट्ट-नारायणः—एकैकया पिञ्जूल्या एकैकमुन्नयनं वदन्ननादेयवचन एव।

त्रिभिः स्थानत्रये स्थितैः श्वेतैः—अन्तरा वर्णान्तरसम्भिन्नैरित्यर्थः। इत्थम्भावे तृतीया। तदेवम्भूतैः श्वेतैः,—"त्रिश्वेतया च शलल्या"—इति सूत्रोक्ता शलली व्याख्याता। "अथ वीरतरेण"—इति सूत्रोक्तो वीरतरः शरः प्रोक्तः॥

दिशाञ्च विदिशाञ्चैव यत्र नोक्ता विचारणा॥ ९५॥
"सर्व्वतः" तत्र शब्दोऽयं विधियोगे निपात्यते।

यत्र विधियोगे—विधानयोगे, दिशां पूर्व्वादीनां विदिशामाग्नेय्यादी-नाञ्च विचारणा, न प्रोक्ता नाभिप्रेता, तत्र 'सर्व्वतः,'—इत्ययं शब्दो-निपात्यते क्रियते। तथाच गोभिलसूत्रम्। "यत्र श्वभ्राः स्वयं खाताः सर्व्वतोऽभिमुखाः स्युस्तत्रावसानं प्राग्द्वारं यशस्कामो बलकामः कुर्व्वीत"—इति। दीक्षितः पुनः—"एवं दक्षिणैवं प्रतीच्येवमुदीची"—इति सूत्रमत्रोदाजहार॥

विहितप्रतिषिद्धाञ्च प्रणीतां नोपकल्पयेत्॥ ९६॥

पूर्व्वं विहिता पश्चात् प्रतिषिद्धा या प्रणीता,—सेयं विहितप्रतिषिद्धा। तामिमां प्रणीतां नोपकल्पयेत्,—'गृह्याकर्म्मसु'—इति पराधीन-

मनुषज्य संबन्धनीयम् । आह । केयं विहितप्रतिषिद्धा नाम? । उच्यते । महतः पात्रान्तरस्य सद्भावे अपां पूर्णः स्रुवः । तथाच गोभिलसूत्रम् । "उत्तरतोऽपां पूर्णः स्रुवः प्रणीता, भावे न वा स्यादित्येके"—इति ॥

वैरूपाक्षं जपेन्मन्त्रं प्रपदञ्चैव यज्ञवित् ।
परिधींस्तु न कुर्व्वीत गृह्याकर्म्मसु याज्ञिकः ॥९७॥
उदकाञ्जलयस्तिस्रस्ते वै परिधयः स्मृताः ।

"वैरूपाक्षः पुरस्ताद्धोमानाम्"—इति सूत्रोक्तं वैरूपाक्षं मन्त्रम्, प्रपदञ्च,—"तपश्च तेजश्चेति जपित्वा"—इति सूत्रोक्तम्,—गृह्याकर्म्मसु जपेदन्यत्र क्षिप्रहोमेभ्यः । तथाच कर्म्मप्रदीपः ।

"न कुर्य्यात् क्षिप्रहोमेषु द्विजः परिसमूहनम् ।
वैरूपाक्षञ्च न जपेत् प्रपदञ्च विवर्जयेत्" ।

इति । "पूर्व्वेषु चैके"—इत्युपक्रम्य वैरूपाक्षादीनामुक्तत्वात् प्रणीतावद्विहितप्रतिषिद्धतया एतान्यपि गृह्याकर्म्मसु न कर्त्तव्यानीति मा प्रज्ञासीदिति खल्वाचार्य्यपुत्रः,—वैरूपाक्षं जपेत्,—इत्याह । परिधींस्तु,—"परिधीनप्येके कुर्व्वन्ति"—इति सूत्रोक्तान्, गृह्याकर्म्मसु न कुर्व्वीत । तत्र हेतुः । अदितेऽनु,—इत्यादि मन्त्रैर्ये त्रयः—(तिस्रः—इति व्यत्ययेन स्त्रीत्वम्, त्रय इत्यर्थः) उदकाञ्जलयः, तएव परिधयोऽस्माकमाचार्य्यैः स्मृताः । तस्मात्, यत्रापि परिस्तरणं नास्ति, तत्रापि परिधीन् न कुर्व्वीत ॥

**सर्व्वेषामेव होमानां समिदादौ विधीयते ॥ ९८॥**
**कर्म्मान्ते चैवमेव स्यात् स्वाहां तत्र न कारयेत् ।**

सर्व्वेषामेव होमानामाद्यन्तयोः समिदग्नौ दातव्या। तत्रच स्वाहां न कुर्य्यात्। स्वाहापदं मन्त्रोपलक्षणम्। दैवतमप्यत्रा नास्ति। तथाच कर्म्मप्रदीपः।

"समिदादिषु होमेषु मन्त्रदैवतवर्ज्जिता।
पुरस्ताच्चोपरिष्टाच्च इन्धनार्थं समिद्भवेत्"।

इति ॥

"अथेध्मानुपकल्पयते खादिरान् पालाशान् वा"—इति सूत्रोक्तानिध्मान् व्याकुरुते,—

**इध्ममष्टादश दारु प्रवदन्ति विचक्षणाः ॥ ९९ ॥**
**दर्शे च पौर्णमासे च, क्रियास्वन्यासु विंशतिः।**

दर्शपौर्णमासयोरष्टादशसंख्यकं दारु इध्मं वदन्ति पण्डिताः। अपरासु क्रियासु विंशतिरिध्मा भवन्ति। अन्यत्राज्यहोमादिभ्यः। तथाच कर्म्मप्रदीपः।

"आज्यहोमसमित्तन्त्रसोष्यन्त्याख्येषु कर्म्मसु।
येषाञ्चैतदुपर्य्युक्तं तेषु तत्सदृशेषु च।
अक्षभङ्गादिविपदि जलहोमादिकर्म्मणि।
सोमाहुतिषु सर्व्वासु नैतेष्विध्मो विधीयते"।

इति ॥

प्रादेशमात्रं कुर्व्वीत मेक्षणं समिधस्तथा ॥ १०० ॥
इध्मः समानवृक्षाणां द्विप्रादेशप्रमाणतः।

मेक्षणं समिधश्च प्रादेशमात्रं कुर्य्यात्। इध्मस्तु द्विप्रादेशप्रमाणतः कर्त्तव्यः। स चायमिध्मः—समानजातीयानां वृक्षाणां (संबन्धलक्षणा षष्ठी) करणीयः। न पुनः कतिचिदिध्माः खादिराः, कतिचिच्च पालाशाः कर्त्तव्याः॥

प्रागग्राः समिधो देयास्ताश्च काम्येष्वपाटिताः॥१०१॥
शान्त्यर्थेषु सशक्ताऽऽर्द्रा विपरीता जिघांसति।

समिधः प्रागग्राः कृत्वा अग्नौ देयाः। ताश्च समिधः काम्येषु कर्म्मस्व-पाटिताः कर्त्तव्याः। शान्त्यर्थेषु कर्म्मसु, सशक्ता,—शक्तं शक्तिः (भावे निष्ठा) तया सहवर्त्तमानाः—समर्थाः सवीर्य्या इति यावत्, आर्द्रा च समित् कर्त्तव्या। जिघांसति हन्तुमिच्छति कर्म्मणि—अभिचारकर्म्मणीत्येतत्। एतद्विपरीता समित् कर्त्तव्या निर्वीर्य्या शुष्का चेत्यर्थः। एतद्विपरीता समित् कर्त्री कर्म्मकर्त्तारं हन्तुमिच्छति, —इति वा वर्णनीयम्॥

इध्मः सन्नहनादानं चरुश्रपणमेव च ॥ १०२ ॥
तूष्णीमेतानि कुर्व्वीत समस्तञ्चेध्ममादृदेत्।

इध्मः पूर्व्वोक्तः। सन्नहनम्—"कंसमर्पां पूरयित्वा सर्व्वौषधीः कृत्वा हस्तावबधाय प्रदक्षिणमाचार्य्योऽहतेन वसनेन परिणह्येत्"—इति

सूत्रोक्तं परिणहनमित्यर्थः। कुतः?। तत्रापि सन्नहनपदप्रयोगात्। तथाच, 'अचिसन्नहनत्यागः'—इति तदेव परिणहनं निर्दिशति। सन्नहनं बन्धनरज्जुः—"तन्त्रीं प्रसार्य्यमाणाम्"—इत्यादि सूत्रोक्ता,—इति केचित्। आदानं हविषां ग्रहणम। चरुश्रपणञ्च। उपलक्षणञ्चैतत्। अन्यस्यापि हविषः श्रपणं बोद्धव्यम्। एतानि तूष्णीं कुर्य्यात्। समस्तञ्चेध्ममग्नौ दद्यात्॥

आचार्य्यानुमतं वाक्यमेकीयं गृह्यते क्वचित्॥१०३॥
शेषाणि चैव वाक्यानि आचार्य्यो न प्रसंशति।

यत्र क्वचिदुच्चावचानि वाक्यान्याचार्य्येण गोभिलेन पठितानि, तत्र यद्वाक्यमेकीयमेकीभूतम्—यन्मतं बहूनामभिन्नमित्येतत्। तदाचार्य्यानुमतं गृह्यते—तदेवाचार्य्यस्यानुमतमिति ज्ञायते इत्यर्थः। शेषाण्येकीयमतविरुद्धानि वाक्यानि क्वचिदप्याचार्य्यो न प्रसंशति। अत्रायमर्थः। "चतुरष्टकोहेमन्तः ताः सर्व्वाः समांसाश्चिकीर्षेदितिकौत्सः"—इत्याचार्य्येण चतुरष्टकपक्षः सूचितः। "त्र्यष्टक इत्यौद्गाहमाणिः" "तथा गौतमवार्कखण्डी"—इत्यनेन त्र्यष्टकपक्षोऽपि सूचितः। न च किमत्र स्वमतमित्येतत् कण्ठत उक्तम्। तत्र, त्र्यष्टकपक्षएवानुमत आचार्य्यस्य,—इति प्रतिपद्यामहे। कस्मात् कारणात्?। तत्रैव बहूनामैकमत्यात्। अतएव, परतः कर्त्तव्योपदेशादिभिस्त्र्यष्टकपक्षएवाचार्य्येणानुगृहीतः, न चतुरष्टकपक्षः। चतसृष्वष्टकास्वाचार्य्येण कर्म्मानुपदेशात्। मध्यमाष्टकायामेवान्वष्टक्यकर्म्मविधानाच्च। चतुरष्टकपक्षे हि सर्व्वत्रैव मांससद्भावात् सर्व्वत्रैवान्वष्टक्यं स्यात्। अष्टका

संज्ञपितपशुसाध्यत्वात्तस्य। तदिदमुक्तम्—शेषाणि वाक्यानि कश्चि-दप्याचार्यो न प्रशंसति,—इति। तथाच कर्म्मप्रदीपः।

"अन्वष्टक्यं मध्यमायामिति गोभिलगौतमौ।

वार्कखण्डिश्च सर्व्वासु कौत्सोमेनेऽष्टकासु च"।

इति॥

द्रव्याणामुपक्लृप्तानां होमीयानां यथाविधि॥१०४॥
प्रसिञ्चन्* वीक्षणं कुर्य्यादद्भिरभ्युक्षणमेव च†।

यथाविधि,—

"प्राञ्चं प्राञ्चमुदगग्नेरुदगग्रं समीपतः।

तत्तथाऽऽसादयेद्द्रव्यं यद्यथा विनियुज्यते"।

इति कर्म्मप्रदीपोक्तविध्यनुसारेण, उपक्लृप्तानाम्, समासादितानामि-त्यर्थः। होमीयानां होमसम्बन्धिनां द्रव्याणाम्। (षष्ठीचेयं वीक्षणाभ्युक्षणसंबन्धापेक्षया द्रष्टव्या। तथा चोक्तम्। "प्रधानस्तत्व-भिधाने गुणशक्तिरभिहितवत् प्रकाशते"—इति।) अद्भिः प्रसिञ्चन् वीक्षणं दर्शनं, अभ्युक्षणञ्च,—

"उत्तानेनैव हस्तेन प्रोक्षणं समुदाहृतम्।

न्यञ्चताऽभ्युक्षणं प्रोक्तं तिरश्चावोक्षणं मतम्"।

इत्युक्तलक्षणं कुर्य्यात्। एव च,—इति निपातसमुदायः समुच्चयवाची॥ गोभिलोक्तं सम्पूयनं व्याकुरुते,—

---

* सादयन्,—इति तत्स्वकारधृतपाठः। † तथा,—इति पाठान्तरम्।

पवित्रमन्तरे* कृत्वा स्थाल्यामाज्यं समावपेत्॥ १०५॥
एतत् सम्पूयनं नाम पश्चादुत्पवनं स्मृतम्।

अन्तरे मध्ये पवित्रम्—

"अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेवच।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्।
एतदेव हि पिञ्जूल्या लक्षणं समुदाहृतम्।
आज्यस्योत्पवनार्थं यत् तदप्येतावदेव तु"।

इति कर्म्मप्रदीपोक्तलक्षणं, कृत्वा संस्थाप्य, आज्यस्थाल्यामाज्यं प्रक्षिपेत्। तदेतत् सम्पूयनं नाम स्मृतम्। एतदनन्तरमुत्पवनम्। तथाच गोभिलसूत्रम्। "सम्पूयोत्पुनात्युदगग्राभ्यां पवित्राभ्याम्"—इति॥
"आज्यं संस्कुरुते"—इति सूत्रोक्तमाज्यं व्याकुरुते,—

अग्निना चैव मन्त्रेण पवित्रेण च चक्षुषा॥ १०६॥
चतुर्भिरेव यत् पूतं तदाज्यमितरद्धृतम्।

अग्निना अधिश्रयणं, मन्त्रेण—देवस्त्वा,—इत्यादिना; पवित्रेण च यथोक्त लक्षणेनोत्पवनं, चक्षुषा वीक्षणम्। एभिश्चतुर्भिर्यत् पूतं तदाज्यमित्युच्यते। एतदन्यदसंस्कृतं यत् तद्धृतम्॥

घृतं वा यदि वा तैलं पयो वा दधि यावकम्॥१०७॥
आज्यस्थाने नियुक्तानामाज्यशब्दो विधीयते।

* अन्तरा,—इति पाठान्तरम्।

पयोदुग्धम्। यावकं यवागूः। आज्यस्याभावे आज्यस्थाने नियु-क्तानामेषामाज्यशब्दोविधीयते। तदनेन "आज्यं संस्कृते सर्पिस्तैल दधि पयो यवागूं वा"—इति गोभिलसूत्रं व्याख्यातम्॥

**आज्यानां सर्पिरादीनां संस्कारे विधिचोदिते॥१०८॥**
**अनधिश्रयणं दध्नः शेषाणां श्रयणं स्मृतम्।**

विधिचोदिते संस्कारे,—तद्विषये इत्यर्थः। दध्नोऽधिश्रयणं नास्ति, शेषाणामधिश्रयणं स्मृतमाचार्य्यैः। श्लिष्टमन्यत्।

एवं वा—

विधिचोदिते संस्कारे कृते सति आज्यशब्दोविधीयते,—इति गतेन संबन्धः। तत्र विशेषमाह अनधिश्रयणम्—इत्यादि। पूर्व्ववद्व्या-ख्यानम्॥

**यथा सीमन्तिका* नारी पूर्व्वगर्भेण संस्कृता॥१०९॥**
**एवमाज्यस्य संस्कारः संस्कारे विधिनोदिते।**

यथा सीमन्तिका नारी पूर्व्वगर्भेण—प्रथमगर्भेण संस्कृता भवति;—द्वितीयादिगर्भे न पुनः सीमन्तकरणसंस्कारो यथेत्यर्थः। तथाच गोभिलसूत्रम्। "अथ सीमन्तकरणं प्रथमगर्भे"—इति। विधिना उक्ते संस्कारे—तद्विषये इत्येतत्। आज्यस्य संस्कारोऽप्येवमेव भवति। संस्कारविधिचोदितः,—इति पाठे, संस्कारविध्युक्त आज्यस्य संस्कारोऽप्येवमिति व्याख्येयम्। एतदनेनोक्तं भवति। सीमन्तकरणसंस्कारो

---

* सीमन्तिनी,—इति पाठान्तरम्।

गर्भस्य पात्रस्य च,—इति सकृत् संस्कृतपात्रजातानां सर्व्वेषां गर्भाणां संस्कृतत्ववत् आज्यसंस्कारोप्याज्यस्य तत्पात्रस्य च,—इति सकृत् संस्कृताज्यपात्रे यान्याज्यानि निःक्षिप्यन्ते तानि सर्व्वाणि संस्कृतानि भवन्ति, न पुनरमीषां पृथक् संस्कारः करणीयः,—इति। तथाच आश्वलायनगृह्यपरिशिष्टम्। "सीमन्तोन्नयनं प्रथमे गर्भे, सीमन्तोन्नयनसंस्कारो गार्भे पात्रसंस्कारः"—इति॥

एतदेवाह,—

**आज्यस्य हविषां चैव आज्ये पूर्व्वक्रियाविधिः॥ ११०॥**
**तस्य संपवनं पूर्व्वं चरोः पर्य्युक्षणं परम्।**

यस्मात् आज्ये आज्यविषये आज्य-संस्कारविषये इत्येतत्। आज्यस्य आज्यस्थाने गृहीतानां हविषाञ्च मध्ये, पूर्व्वं प्रथममेव क्रियायाः संस्कारस्य विधिर्विधानम्, तस्मात् तस्य पूर्व्वं प्रथममेव संपवनं पवित्रीकरणं संस्कारः,—इति यावत्; न पुनः पश्चाद्गृहीतस्यापीत्यर्थः। चरोस्तु परं केवलं परि सर्व्वतोभावेन उक्षणं प्रोक्षणमेव संस्कारः इत्यर्थः।

एवं वा—

पूर्व्वमेव तस्य संपवनं सम्पूयनादि विधिचोदितः संस्कारः। चरोः,—उपलक्षणत्वात् पश्चाद्गृहीतस्य हविषः, पर्य्युक्षणमेव परं संस्कारः। पश्चाद्ग्राह्यं हविः—संप्रोक्ष्य ग्रहीतव्यमित्यर्थः। दीक्षितस्त्वाह। चरोः देवसवितः—इति पर्य्युक्षणं परं पश्चात्,—इति॥

अथेदानीम्—"पर्य्युक्ष्य स्थालीपाक आज्यमानीय मेक्षणेनोपघातं होतुमेवोपक्रमते"—इति सूत्रोक्तमुपघातं व्याकुरुते,—

**पाणिना मेक्षणेनाथ स्रुवेणैव तु यद्धविः ॥ १११ ॥**
**हूयते चानुपस्तीर्य्य उपघातः स उच्यते ।**

पाणिना मेक्षणेन वा स्रुवेणैव वा यत् हविर्हूयते, स खल्वयं होम उपघात उच्यते । यत्,—इति होमक्रिया विशेषणम् । किं कृत्वा हूयते? । अनुपस्तीर्य्य । उपस्तरणमभिघारणञ्चाकृत्वा । स्रुवेण स्रुचि प्रथमं यदाज्यं दीयते तदुपस्तरणम्, यत् पुनराज्यं चरुमवदाय अनन्तरं दीयते तदभिघारितम्,—इत्याचक्षते याज्ञिकाः । आचार्य्यपुत्रस्तु पूर्व्वापरकालकृतमवान्तरभेदमनादृत्य उपस्तरणमभिघारणञ्चोभयमेवोपस्तरणं मन्यमानः—'अनुपस्तीर्य्य'—इत्याह ॥

**यद्युपघातं जुहुयाच्चरावाज्यं समावपेत् ॥ ११२ ॥**
**मेक्षणेन तु होतव्यं नाज्यभागौ न स्विष्टकृत् ।**

यदि उपघातं जुहुयात्, तदा स्थालीपाके चरौ आज्यं प्रक्षिपेत् । मेक्षणेन होतव्यम् । तुशब्दस्त्वशब्दार्थः समुच्चये, पूर्व्वोक्तपाण्यादिकमपि समुच्चिनोति । तत्र च आज्यभागौ न होतव्यौ, न च स्विष्टकृत् होतव्यः ।

स खल्वयमुपघातहोमः समश्नीयचरुपितृयज्ञपर्व्वाः, अन्यत्रापि बहुदैवत्ये चरौ, अन्वष्टक्यचरौ च भवति । तथाच कर्म्मप्रदीपः ।

"चरौ समश्ननीये तु पितृयज्ञचरौ तथा।
होतव्यं मेक्षणेनान्यदुपस्तीर्य्याभिघारितम्।

इति।

"चरौ तु बहुदैवत्ये होमस्तस्योपघातवत्"।

इति च परिशिष्टप्रकाशादौ स्मृत्यन्तरम्। तथा अन्वष्टक्यकर्म्मणि गोभिलसूत्रम्। "कंसे चरु समवदाय मेक्षणेनोपघातं जुहुयात्"—इति। वृषोत्सर्गहोमस्य तु बहुदैवतत्वेऽपि नोपघातत्वम्। तदाह कर्म्मप्रदीपः।

"एतेभ्य एव जुहुयान्मेक्षणेनावदाय च।
चुच्चाहुतीश्चरोः पृथक् सिञ्चेदाज्याभिघारितम्"।

इति। यत्रापि गोभिलेन "स्थालीपाकावृताऽन्यत्"—इति सूचितम्, तत्रापि होमस्य नोपघातत्वमिति वक्ष्यामः॥

## हुत्वाऽऽज्यं परिशेषेण यत् द्रव्यमुपकल्पितम्॥११३॥
## स्रुवेणैव तु तत् स्पृष्टं सम्पातं चैव तं विदुः।

आज्यं हुत्वा होमावशिष्टं यदाज्यद्रव्यं उपसमीपे पात्रान्तरे कल्पितं स्थापितं, तत् सम्पातं विदुः। आज्यं हुत्वा होमावशिष्टं यदाज्यं स्रुवेण बद्धा मस्तके स्पृष्टं, तदपि सम्पातं विदुः। तथाच चतुर्थीकर्म्मणि गोभिलसूत्रम्। "आहुतेराहुतेस्तु सम्पातमुदपात्रेऽवनयेत्"—इति। तथोत्तरविवाहे। "आहुतेराहुतेस्तु सम्पातं मूर्द्धनि बद्धा अवनयेत्"—इति॥

स्थालीपाकावृताऽन्यत्तु यत्र संज्ञा निपात्यते ॥११४॥
तत्राज्यभागौ हुत्वैव स्रुचमास्तीर्य्यावद्यति ।

यत्र यत्र गोभिलेन, "स्थालीपाकावृतान्यत्"—इतीयं संज्ञा निपात्यते,—अयंशब्दः प्रयुज्यते इत्यर्थः । तत्राज्यभागौ हुत्वा स्रुचमास्तीर्य्य आज्येनोपस्तीर्य्य, अवद्यति अवदानं गृह्णाति । न पुनरुपघात होमः स्यात् । यथा, श्रावण्यां प्रदोषे चरोर्बहुदैवतत्वेऽपि, 'स्थालीपाकावृताऽन्यत्'—इति सूत्रणात् तत्रोपघातहोमो न भवति । एव मन्यत्राप्यनुसन्धेयम् ॥ ० ॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारभट्टाचार्य्यस्य कृतौ गृह्यासंग्रहभाष्ये प्रथमः प्रपाठकः ॥ ० ॥ ० ॥

श्लोकाः—११३ ॥

## गृह्यासंग्रहः ।

### द्वितीयः प्रपाठकः ।



यज्ञवास्तुकर्म्मणि गोभिलेन "तत एव वर्हिषः कुशमुष्टिमादाय"—इति सूचितम्। तत्र, 'तत एव वर्हिषः'—इत्येतदनुक्तिन्नपदार्थं वाक्यं व्याकुरुते,—

स्तृतेभ्यो न प्रचिन्वीयात् यातयामं स्तृतं स्मृतम् ।
स्तृतशेषात्ततो गृह्य यज्ञवास्तुक्रिया तथा ॥ १ ॥

यज्ञवास्त्वर्थं स्तृतेभ्यः कुशेभ्यः कुशं न चिनुयात्। कस्मात्? । यस्मात् स्तृतं वर्हिर्यातयामं निर्वीर्य्यं स्मृतमाचार्य्यैः। यस्मादेवं, तस्मात् स्तृतशेषाद्वर्हिषः कुशमुष्टिं गृहीत्वा, तथा—गोभिलोक्तेन प्रकारेण, यज्ञवास्तुक्रिया कर्त्तव्या। स च प्रकारो गृह्यसूत्रादुपलब्धव्यः। अपरे पुनरेतदविद्वांसः स्तृतादेव वर्हिषः कुशमुष्टिमादाय यज्ञवास्तुकरणम्—इति प्रलपन्ति। तदशास्त्रम्॥

यज्ञवास्तुक्रियां कृत्वा विधिदृष्टेन कर्म्मणा ।
आज्यधारामविच्छिन्नां जुहुयात् सार्व्वकामिकीम्॥ २॥

विधिदृष्टेन कर्म्मणा यज्ञवास्तुक्रियां कृत्वा, अविच्छिन्नां सन्ततां सार्व्वकामिकीं सर्व्वकामप्रदामाज्यधारां जुहुयात्। विधिदृष्टेन कर्म्मणा

सार्व्वकामिकीमाज्यधारां जुहुयात्—इति वा वर्णनीयम्। तदनेन गोभिलानुक्ताऽपि पूर्णाहुतिर्विधीयते। कथं ज्ञायते?। सार्व्वकामिकीम्,—इतिवचनात्। "पूर्णाहुत्या सर्व्वान् कामानाप्नोति"—इति हि ब्राह्मणम्। सेयं पूर्णाहुतिः,—"वसुभ्यः स्वाहा,"—इति मन्त्रेण होतव्या,—इति दीक्षितभाष्यम्। "पूर्णहोमं यशसे जुहोमि"—इत्यादिमन्त्रेण,—इति भवदेवभट्टप्रभृतयः॥

सायंप्रातर्वैश्वदेवे पितृयज्ञे तथैव च।
कंवूके गोमये नित्यं व्रतानां समिधासु च॥ ३॥
चैत्ये यूपे व्रीहियवे भूमावप्सु च याज्ञिकैः।
व्याहृतीर्न प्रयोक्तव्या यज्ञवास्तुक्रिया तथा॥ ४॥

सायंप्रातर्होमे, वैश्वदेवहोमे, पितृयज्ञे—अन्वष्टक्यकर्म्मणि पिण्डपितृयज्ञे च, कंवूके—"वृत्त्यविच्छित्तिकामः कंवूकान् सायंप्रातर्जुहुयात्"—इति सूत्रोक्ते कंवूकहोमे। कंवूकाश्च,—

"कंवूकाश्च कणाश्चैव फलीकरणकङ्कुशाः"।

इत्युक्तलक्षणाः। गोमये—"वृत्त्यविच्छित्तिकामो हरितगोमयान् सायंप्रातर्जुहुयात्"—इति सूत्रोक्ते गोमयहोमे, व्रतानां वेदव्रतानां समिधासु समिद्धोमेषु, (हलन्तलक्षणः टाप्प्रत्ययः) चैत्ये चिताकर्म्मणि, यूपे यूपकर्म्मणि, व्रीहियवे—नवयज्ञोक्ते, "वयाङ्गमौ अङ्ग्रश्चेति पृथगाहुती व्रीहियवहोमौ प्रयुञ्जीत"—इत्यादिसूत्रोक्ते वा व्रीहियवहोमे, भूमौ—"वृत्त इवेति पञ्चर्षः तस्मिन् प्रथमं पार्थिवं

कर्म्म"—इति सूत्रोक्ते पार्थिवकर्म्मणि, भूर्म्यां होमे वा, अपु च—"पौर्णमास्यां रात्रावविदासिनि ह्रदे नाभिमात्रमवगाह्याक्षततण्डुला-नामग्नेरास्येन जुहुयात् स्वाहेत्युदके"—इति सूत्रोक्ते जलहोमे च, व्याहृतिकैर्व्याहृतयो न प्रयोक्तव्याः, यज्ञवास्तुक्रियाऽप्येषु न कर्त्तव्या। व्याहृतीः,—इति पूर्व्वसवर्णो द्रष्टव्यः॥

चरवे योविधिः प्रोक्तः स यज्ञइति निश्चयः।
बलिभ्यो न कुर्व्वीतोपसिद्धार्थबलीन् हरेत्॥ ५ ॥

चरवे,—इति तादर्थ्ये चतुर्थी। चर्व्वर्थं यो विधिरुक्तः स खलु यज्ञो ज्ञातव्यः,—इत्याचार्य्याणां निश्चयः। अतो बलिकर्मार्थं तान् विधीन् न कुर्व्वीत। बलये तान् न कुर्व्वीत,—इति वक्तव्ये, बलिभ्यो न कुर्व्वीत,—इति व्यत्यासेन प्रयुङ्क्ते। बलिकरणार्थं चरुर्न पक्तव्यः—इत्ययमत्र विवक्षितोऽर्थः। अतोयत्र कारणान्तरात् चरुः पच्यते, तत्र तस्मादपि बलिहरणमविरुद्धम्। तथा च गोभिलसूत्रम्। "सर्व्वस्य त्वेवान्नस्यैतान् बलीन् हरेत्—पित्र्यस्य वा स्वस्त्ययनस्य वा अर्थार्थस्य वा"—इति।

उप—समीपे महानसे सिद्धार्थैरन्नैर्बलीन् हरेत्। होमशेषेणैव बलिहरणस्य कर्त्तव्यत्वात् वैश्वदेवहोमोऽप्यनेन व्याख्यातः। मनुरप्याह।

"वैश्वदेवस्य सिद्धस्य गृह्येऽग्नौ विधिपूर्व्वकम्।
आभ्यः कुर्य्याद्देवताभ्यो ब्राह्मणो होममन्वहम्"।

इति। विश्वे देवाः सर्व्वे देवाः ते यस्य पाकस्य देवताः सोऽयं वैश्वदेवोऽहरहर्महानसे यत् पच्यते, तदुच्यते। "वैश्वदेवादन्नात् पर्य्युक्ष्य जुहोति"—इति च गृह्यान्तरम्। तथा कात्यायनः।

"स्वशाखाविधिना कृत्वा तच्छेषेण बलिं हरेत्"।

इति॥

**यत्र मन्त्रा न विद्यन्ते व्याहृतीस्तत्र योजयेत्।**
**मन्त्राणामेव चादेशे मन्त्रात् कर्म्म समाचरेत्॥६॥**

यत्र मन्त्रा नोपदिश्यन्ते, तत्र व्याहृतीर्वक्ष्यमाणलक्षणाः योजयेत्— अन्यत्र सायंप्रातर्वैश्वदेवादिभ्यः इध्मादिभ्यश्च। मन्त्राणां पुनरुपदेशे मन्त्रात् कर्म्म कुर्य्यात्,—इत्यादरार्थमुक्तम्॥

**भूरादयोव्याहृतयोवेदेभ्योनिःसृताः पुरा।**
**महत्त्वं व्याहृतित्वञ्च प्राप्ताः स्वेनैव कर्म्मणा॥७॥**

भूर्भुवःस्वरिति तिस्रोव्याहृतयः, वेदेभ्यः—ऋग्यजुःसामलक्षणेभ्यः पूर्व्वं निर्गताः। ताः खल्वेताः स्वेनैव कर्म्मणा वक्ष्यमाणलक्षणेन महत्त्वं व्याहृतित्वञ्च प्राप्ताः। महतोभावोमहत्त्वम्। व्याहृतीनां भावो व्याहृतित्वम्॥

**ॐकारजननात्तासां महत्त्वं परिभाष्यते।**
**व्याहृता व्याहृतित्वञ्च तेन त्रैविद्यतां ययुः॥८॥**

ॐकारस्य जननात् तासां महत्त्वमाचार्य्यैरुच्यते। तास्र वेदेभ्यो व्याहृताः सत्यः व्याहृतित्वं ययुः। तेनैव वेदत्रयेभ्योव्याहृतत्वेन हेतुना त्रैविद्यताञ्च ययुः। त्रिवेदेषु भवास्त्रैविद्याः। तद्भावस्त्रैविद्यता। अथ वा। विद्या,—इति वेदमाचक्षते। तिसृणां विद्यानां भावः त्रैविद्यम्। यस्माद्वेदत्रयेभ्यो व्याहृताः, तस्माद्वेदत्रयभावं ययुरित्यर्थः॥

ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
अण्डं भित्त्वा विनिर्यातौ तेनैतौ मङ्गलावुभौ॥९॥

ॐकारश्च अथशब्दश्च द्वावेतौ ब्रह्मणोऽण्डं भित्त्वा पूर्वं निर्गतौ। 'कण्ठं भित्त्वा'—इति पाठे व्यक्त एवार्थः। तेनैतावुभौ मङ्गल-जनकौ। 'तेन माङ्गलिकावुभौ'—इति पाठेऽपि स एवार्थः॥

अथैताः स्वव्याहृतयोऽयवीयस्यः पराः स्मृताः।
ऐरावतः प्रतिस्त्रेचे वेदान्तेष्वाश्रिताश्च याः॥ १० ॥

अथ पूर्व्वोक्ता एताः स्वस्ववेदस्य व्याहृतयः अयवीयस्यः ज्येष्ठाः, पराः उत्कृष्टाः कथिताः। याश्च ऐरावतः प्रतिस्त्रेचे इरावतः स्थाने—(इराशब्दस्यादिवृद्धिः)—ऊहगाने,—इत्येतत्। वेदान्तेषु च आश्रिताः,—इति ता एव व्याहृतयः स्तूयन्ते। ऊहगाने उदाहरणम्। "भूः। भुवाः। सुवाः"। वेदान्तेषु खल्वपि। "भूः प्रपद्ये भुवः प्रपद्ये स्वः प्रपद्ये इत्यृग्वेदं प्रपद्ये यजुर्व्वेदं प्रपद्ये सामवेदं प्रपद्ये"—इति॥

मध्ये स्थण्डिलमन्ते च वारिणा परिसंवृतम्।
अविदासिनं ह्रदं विद्यात्तादृशं कर्म्मणो विदुः॥११॥

मध्ये स्थण्डिलं स्थलं, अन्ते च वारिणा परि सर्व्वतोभावेन संवृतं वेष्टितम्। एवम्भूतं ह्रदमविदासिनं जानीयात्। तादृशं ह्रदं कर्म्मणो विदुर्ज्ञानन्त्याचार्य्याः। कर्म्मणः,—इति सम्बन्धलक्षणा षष्ठी। तदनेन,—"पौर्णमास्यां रात्रावविदासिनि ह्रदे नाभिमात्रमवगाह्याक्षततण्डु-

स्वानृगन्तेष्वाश्रमेण जुहुयात् स्वाहेत्युदके"—इति सूत्रोक्तः अविद्यावी शूद्रो व्याख्यातः॥

"अपवर्गेऽभिरूपभोजनं यथाशक्ति"—इति सूत्रोक्तमभिरूपं व्याकुरुते,—

**यत्र विद्या च वित्तञ्च सत्यं धर्म्मः शमोदमः।**
**अभिरूपः स विज्ञेयः स्वाश्रमे योव्यवस्थितः॥ १२॥**

वित्तम्—इति भावप्रधानो निर्देशः। ख्यातिर्विचारो वा तदर्थः। अथ वा। वित्तं धनमिति यथाश्रुत एवार्थः। वृत्तञ्च,—इति पाठे, वृत्तम्—

"गुरुपूजा घृणा शौचं सत्यमिन्द्रियनिग्रहः।
प्रवर्त्तनं हितानाञ्च तत् सर्व्वं वृत्तमुच्यते"।

इत्युक्तलक्षणम्। तत्र सत्यादीनां पुनरुपादानमादरार्थम्। शमोवहिरिन्द्रियनिग्रहः। दमोऽन्तरिन्द्रियनिग्रहः। प्रसिद्धमन्यत्। यत्रैतानि विद्यन्ते, यश्च स्वाश्रमे—गृह्याकर्म्मकर्त्तुरात्मीयाश्रमे,—समानाश्रमे व्यवस्थितः,—गृहस्थः,—इति यावत्। सोऽयमभिरूपो विज्ञेयः॥

**लौकिके लोकसामान्ये क्रव्यादाग्नौ वृथा हुतम्।**
**याज्ञिकं पुण्यमायुष्यं कर्म्मणा नोपपद्यते॥ १३॥**

सामान्यं साधारणमित्यनर्थान्तरम्। लोकसामान्ये—असंस्कृते इत्यर्थः। लौकिकस्याग्नेर्विशेषणमिदम्। तदयमर्थः। असंस्कृते लौकिके अग्नौ, क्रव्यादाग्नौ श्मशानाग्नौ च, हुतम् (भावे निष्ठा) होमः, वृथा भवति

तदेव विवृणोति। आयुष्यम्—आयुषे हितम्, याज्ञिकम्—यज्ञोद्भवं पुण्यं तेन कर्म्मणा भोत्पद्यते—इति। तथा च, संस्कृतं लौकिकमग्निमभिप्रेत्य तत्र होतुः फलवादं वक्ष्यति। लौकिकस्याप्यग्नेः संस्कारात् परं न लौकिकत्वम्,—इत्यसङ्गतैषा कल्पना रघुनन्दनस्य। कस्मात्?। प्रमाणाभावात्। तथा मत्वाभ्युपगमे च लौकिकेऽग्नौ होतुः फलवचनं न खल्वपि उपपद्यते। न खल्वसंस्कृते लौकिके अग्नौ होमं मन्यसे। अपि चैवं सति, "अन्वष्टकास्वष्टकावदग्नौ हुत्वा"—इति विष्णुसूत्रे अग्निग्रहणात् पितृयज्ञहोमस्य लौकिकाग्नौ निषेधाच्च अन्वष्टकायामनग्निमतां नाधिकारः,—इति स्वोक्तमपि व्याहन्येत। लौकिकस्याप्यग्नेः संस्कारात् परं लौकिकत्वाभावे तत्रैव होमस्योपपत्तेः कथमनग्निमतां तत्रानधिकारमात्थ। तदास्तां तावदार्षवचनविरोधो यावत् स्ववचो व्याघातमपि नालोचयसि,—इति किमत्र ब्रूमः। यथा चानग्निमतामप्यस्त्यधिकारोऽन्वष्टकायां तथा गृह्यभाष्येऽभिहितमस्माभिः॥

वैदिके लौकिके वाऽपि यज्जुहोति प्रयत्नतः।
वैदिके ब्रह्मलोकः स्यात् लौकिके पापनाशनम्॥१४॥

वैदिके लौकिके वा संस्कृते अग्नौ यज्जुहोति, तस्य फलवचनमुत्तरार्द्धम्॥

स्ववर्णाभिरनिन्द्याभिरद्भिरक्षतमिश्रितैः।
स्नानं चतुर्भिः कलसैः स्त्रीभिः स्त्रीं यत्र स्नावनम्॥१५॥

यत्र विवाहादौ स्त्रीभिः स्त्रीं कन्यां प्रति स्नावनं विधीयते, तत्र

अनिन्दिताभिः सवर्णाभिः समानवर्णाभिः स्त्रीभिः,—ब्राह्मणाः ब्राह्मणीभिः, क्षत्रियायाः क्षत्रियाभिः, वैश्यायाः वैश्याभिरित्यर्थः। चतुर्भिः कलसैः, अक्षतमिश्रितैः (लिङ्गव्यत्ययोऽत्र द्रष्टव्यः) यवमिश्रिताभिरद्भिः स्नपनं कर्त्तव्यम्॥

गौड़ी पैष्टी च माध्वी च विज्ञेयाः त्रिविधाः सुराः।
पाणिकर्म्मणि गौड़ी स्यात् सत्या माध्व्यधमा सुरा॥१६॥

पाणिकर्म्मणि गौड़ी सुरा सत्या स्यात्, माध्वी पुनरधमा। पैष्टी मध्यमेत्यर्थादुक्तं भवति। स्पष्टमन्यत्॥

"नग्निका तु श्रेष्ठा"—इति सूत्रोक्तां नग्निकां व्याकुरुते,—

नग्निकान्तु वदेत् कन्यां यावन्नर्त्तुमती भवेत्।
ऋतुमती त्वनग्निका तां प्रयच्छेत्त्वनग्निकाम्॥ १७॥

यावन्न ऋतुमती रजस्वला भवेत्, तावत् कन्यां नग्निकां वदेत्। ऋतुमती पुनरनग्निका भवति। तां कन्यामनग्निकामृतुमतीमपि दद्यात्। तुरप्यर्थोभिन्नक्रमेण योजनीयः। तदेवमनग्निकामपि दद्यात्, नग्निका पुनः श्रेष्ठा, न पुनरनग्निकायाविवाहएव न भवतीत्यभिप्रायः। मनुरपि,—

"काममामरणात्तिष्ठेद्गृहे कन्यर्त्तुमत्यपि।
न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित्"।

इति स्मरन् ऋतुमत्या अपि विवाहमनुजानाति। यानि पुनरनग्निकानिन्दापराणि स्मृतिवचनानि, तेषामनग्निकायाः अप्राप्तकाले

नग्निकायाः प्राशस्त्ये च तात्पर्य्यम्, गोभिलीयव्यतिरिक्तविषयत्वं वा वर्णनीयम् ॥

अप्राप्ता रजसो गौरी प्राप्ते रजसि रोहिणी ।
अव्यञ्जिता भवेत् कन्या कुचहीना च नग्निका ॥१८॥

रजसः,—इति सम्बन्धलक्षणा षष्ठी । रजः,—इति च ऋतुर्भण्यते । रजसा अप्राप्ता गौरी भवति;—तां ददद् गौरीदानफलं लभते इत्यर्थः । एवमुत्तरत्रापि वर्णनीयम् । रजसि प्राप्ते रोहिणी । अनेनापि प्राप्तरजस्काया अपि विवाहं दर्शयति । व्यञ्जितं व्यञ्जनं (भावे निष्ठा) । व्यञ्जनं चिह्नमित्यनर्थान्तरम् । तच्चार्थाद् यौवनस्य । न व्यञ्जितं यस्याः सेयमव्यञ्जिता—अनागतयौवनचिह्नेत्येतत् । कुचहीना नग्निकेत्यपरां नग्निकामाह ॥

व्यञ्जनैस्तु समुत्पन्नैः सोमो भुञ्जीत कन्यकाम् ।
पयोधरैस्तु गन्धर्व्वा रजसाऽग्निः प्रकीर्त्तितः ॥ १९ ॥

भुञ्जीत भुङ्क्ते । पयोधरैः समुत्पन्नैर्गन्धर्व्वा भुञ्जते । रजसा समुत्पन्नेनाग्निर्भोक्ता कथितः ॥

यस्मादेवम्,—

तस्माद्व्यञ्जनोपेतामरजामपयोधराम् ।
अभुक्ताञ्चैव सोमाद्यैः कन्यकान्तु प्रशस्यते ॥ २० ॥

अरजामरजस्काम् । तदीदृशीं कन्यकामभिप्रेत्य, प्रशस्यते (सकर्म-

कादपिभावे तिङ्) प्रशंसा क्रियते, आचार्य्येण,—इति वाक्यशेषः। तथा च गोभिलसूत्रम्। "नग्निका तु श्रेष्ठा"—इति। शिष्टमन्यत्॥ विवाहे स्त्रीलक्षणविदोऽलाभे नवपिण्डान् कृत्वा स्त्रीलक्षणं परीक्षितव्यमित्याचार्य्येणोक्तम्। तथा च गोभिलसूत्रम्। "तदलाभे पिण्डान्"। "वेद्याः सीताया ह्रदाद्गोष्ठाच्चतुष्पथादादेवनादादहनादीरिणात्"। सर्व्वेभ्यः सम्भार्य्यं नवमम्"—इति। "पूर्व्वेषां चतुर्णां गृह्णन्तीमुपयच्छेत्"—इति च। तत्र, वेदिपिण्डादिग्रहणे फलार्थवादमाह,—

वेदिपिण्डात् क्रियावती सीतायाः फलते कृषिः।
अक्षोभ्या च ह्रदे ज्ञेया गोष्ठे भवति गोमती॥ २१॥
चतुष्पथे प्रकीर्णा स्यात् द्यूतस्थाने कलिप्रिया।
श्मशाने म्रियते भर्त्ता बन्ध्या भवति चोषरे॥ २२॥
नवमे सर्व्वएवैते कन्यायाः परिगृह्यन्ते।

वेदिपिण्डात् गृहीतात् क्रियावती भवति। सीतापिण्डात् गृहीतात् कृषिः फलते,—कृषिर्भूयिष्ठा भवतीत्यर्थः। सीता कृष्टक्षेत्रम्। ह्रदपिण्डे गृहीते अक्षोभनीया ज्ञातव्या। गोष्ठपिण्डे गृहीते गोमती भवति। चतुष्पथपिण्डे गृहीते प्रकीर्णा विक्षिप्ता—गृहेगृहे गमनशीलेत्येतत्। द्यूतस्थानपिण्डे गृहीते कलहप्रिया भवति। कलिः कलहः। श्मशानपिण्डे गृहीते भर्त्ता म्रियते—विधवा भवतीत्यर्थः। उषरपिण्डे गृहीते बन्ध्या भवति। नवमपिण्डे गृहीते कन्यायाः सर्व्वएवैते पूर्व्वोक्ताः फलवादाः परिगृह्यन्ते। किं कारणम्?। नवमस्य सर्व्वघटितत्वात्। तस्मात् नवमं पिण्डमाददानामिच्छयोपयच्छेदा

नवोपयच्छेदित्यभिप्रायः। तथाच गोभिलसूत्रम्। "सभ्रातृमपित्वेके" —इति। शाखान्तरेऽप्येवमेव प्रायः कल्पवादाः पठ्यन्ते। परन्तु तत्र क्रियावत्त्वादयोऽपत्यगताः श्रूयन्ते। तथा चोक्तम्।

"गृह्णाना वेदिपिण्डञ्च प्रसूते याज्ञिकान् सुतान्।
सीतापिण्डन्तु गृह्णाना सुतान् सूते कृषीबलान्।
सर्व्वकामसमृद्धांश्च तृतीयस्य परिग्रहात्।
गोष्ठपिण्डग्रहाच्चापि गोमिनः सुखिनस्तथा।
इतश्चेतश्च गन्तारः पञ्चमेनाश्रिताः सुताः।
षष्ठेन तु गृहीतेन भवन्ति द्यूतसेविनः।
श्मशानपिण्डग्रहणाद्विधवा जायते ध्रुवम्।
बन्ध्या वा विधवा वा स्यादष्टमग्रहणादपि।
मिश्रमेतद्भवेत् सर्व्वं यतः पूर्व्वोदितं फलम्।
नवमस्य ग्रहस्तस्मात् शुभो वा यदि वाऽशुभः"।

इति॥

## पाणिग्रहणमन्त्रैस्तु नियतं दारलक्षणम्॥ २३॥

पाणिग्रहणमन्त्राः गृह्योक्ताः गृभ्णामिते—इत्यादयः। तृतीया चेयं प्रकृत्यादित्वादभेदे द्रष्टव्या। पाणिग्रहणमन्त्राः निश्चितं दारलक्षणमित्यर्थः। तथाच मनुः।

"पाणिग्रहणिकामन्त्रा नियतं दारलक्षणम्।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे"।

इति॥

**विवाहे यो विधिः प्रोक्तो मन्त्रा दाम्पत्यवाचकाः ।**
**वरस्तु तान् जपेत् सर्व्वान् ऋत्विग्राजन्यवैश्ययोः॥२४॥**

विवाहे योविधिरनिर्दिष्टकर्त्तृकः,—"प्रोक्ते नक्षत्रे षड़ाज्याहुतीर्जुहोति"—इत्यादिक आचार्य्येणोक्तः, तान् वरः कुर्य्यात्। अपर आह। 'विवाहे योविधिरग्निस्थापनादिः प्रोक्तः, तं विधिं वरः कुर्य्यात्'—इति । ये च दाम्पत्यवाचकामन्त्राः, तान् वरोजपेत् ।

एवं वा—

विवाहे योविधिराचार्य्येणोक्तः, तत्र दाम्पत्यवाचका ये मन्त्राः, तान् सर्व्वान् वरो जपेत् । क्षत्रियवैश्ययोः पुनस्तान् मन्त्रान् ऋत्विक् जपेत्। तस्मात्,—"अपरेणाग्निमौदकोऽनुसंव्रज्य पाणिग्राहं मूर्द्धदेशेऽवसिञ्चति तथेतरां समञ्जन्त्वित्येतयर्चा"—इति सूत्रे 'औदकएव मन्त्रं पठति'—इति वर्णयन्ती सरला सरलैव ॥

"अथ जन्यानामेकोध्रुवाणामपां कलसं पूरयित्वा"—इत्यादिसूत्रोक्ता ध्रुवा अपो व्याकुरुते,—

**महानदीषु या आपः कौप्यान्याश्च ह्रदेषु च ।**
**गन्धवर्णरसैर्युक्ता ध्रुवास्ता इति निश्चयः ॥ २५ ॥**

महानदीषु गङ्गाद्यासु या आपः, याश्च कूपोद्भवाभ्योऽन्यास्तड़ागादिसम्भवा आपः, ह्रदेषु अगाधजलेषु या आपः, ता इमाः शोभनगन्धवर्णरसैर्युक्ताः सर्व्वा अप्यापः ध्रुवाः,—इत्ययमाचार्य्यस्य निश्चयः । अन्ये तु वर्णयन्ति,—'कूपे या आपः, अन्याश्च तड़ागादिषु या आपः',—इति। तेषाम्—'कौप्यान्याः'—इति विसर्गलोपे सन्धिरार्षः द्रष्टव्यः ॥

"अथ जन्यानामेकोध्रुवाणामपां कलशं पूरयित्वा सहोदकुम्भः प्रावृतो वाग्यतोऽग्रेणाग्निं परिक्रम्य दक्षिणत उदङ्मुखोऽवतिष्ठते"—इति सूत्रोक्तमुदकुम्भधारिणोऽवस्थानं विशिनष्टि,—

गन्धमाल्यैरलङ्कृत्य सकुम्भो वाग्यतः शुचिः ।
धारयेत् त्रिषु वर्णेषु प्रावृतांसो द्विजोत्तमः ॥ २६ ॥

गन्धमाल्यैरुदकुम्भमलङ्कृत्य सकुम्भो नियमितवचनः शुचिः, प्रावृतांसः—प्रावृतौ अंसौ यस्य सोऽयं प्रावृतांसो वस्त्राच्छादितस्कन्धद्वयः—इत्येतत् । द्विजोत्तमः—उत्तमो द्विजः, त्रिषु वर्णेषु धारयेत्,—ध्रुवा अपः,—इत्यर्थः ॥

यदा निष्क्रामयेत् कन्यां वरः पाणिं जिघृक्षयन् ।
अग्निं प्रदक्षिणं कृत्वा कटस्तीर्णं पदं व्रजेत् ॥ २७ ॥

यदा पाणिं ग्रहीष्यन् वरः कन्यां गृहान्निष्क्रामयेत्, तदा सा कन्या अग्निं प्रदक्षिणं कृत्वा कटस्तीर्णं कटविशिष्टं स्तरणयुक्तं पदं स्थानं व्रजेत् । एतदनेनोक्तं भवति । गच्छन्ती कन्या अग्निं प्रदक्षिणं कृत्वा कटमास्तृतकुशपर्य्यन्तं नयेत्,—इति । तथाच गोभिलसूत्रम् । "वर्हिषोऽन्तं कटान्तं प्रापयेत्"—इति । अथवा । पदं कटस्तीर्णं कृत्वा—कटे पदं संस्थाप्य व्रजेदित्यर्थः ॥

पदा प्रपद्य पन्थानं पतियानं संजपेद्वधूः ।
वरो वाऽच जपेन्मन्त्रमाकटान्तादिति स्थितिः ॥२८॥

पदा चरणेन प्रपद्य प्राप्य, कटमित्यर्थात् । वधूचरणेन कटप्राप्तेरनन्तरं

पदा कटं प्रवर्त्तयन्तीत्येतत्। पन्थानं पतियानं—पथिलिङ्गं प्रमे पतियानः,—इति मन्त्रं संजपेत्। अजपन्त्यां वध्वां वरो वा अत्र मन्त्रं जपेत्। आकटान्तात्—कटस्य वह्निरन्तप्राप्तिपर्य्यन्तम्—"वह्निषेोऽन्तं कटान्तं प्रापयेत्"—इतिसूत्रोक्तकर्म्मपर्य्यन्तं जपेदित्येषा स्थितिः शास्त्रमर्य्यादा॥

लाजानाज्यं स्रुवं कुम्भं प्राजनाश्मानमेवच।
प्रदक्षिणानि कुर्व्वीत दम्पती तु विना ग्रही॥ २९॥

"कृते पतिर्य्येतं परिव्रज्य प्रदक्षिणमग्निं परिणयति"—इतिसूत्रोक्ताग्निप्रदक्षिणकाले दम्पती लाजादीनामपि प्रदक्षिणं कुर्व्वीत—कुर्य्याताम्। क्वचित्तथैव पाठः। ग्रही विना। 'अन्यतोऽपिच'—इति ग्रहेरिः। ग्रही इति द्वितीयाद्विवचनान्तं पदम्। उदकग्राहं प्राजनग्राहञ्च विनेत्यर्थः। तुशब्दः पुनरर्थः। रघुनन्दनेन तु चतुर्थचरणमाकुलीकृत्य पठितम्—'दम्पती न विनाऽग्निकम्'—इति। तदनाकरम्॥

तदेतत् सुव्यक्तमाह,—

प्राजग्राहमुदग्राहं ब्रह्माणमृत्विजं तथा।
एतानि वाह्यतः कृत्वा शेषाणान्तु प्रदक्षिणम्॥ ३०॥

प्राजनग्राहमुदकग्राहं ब्रह्माणमृत्विजञ्च, एतानि—(सामान्यविवक्षया व्यत्ययाद्वा नपुंसकनिर्देशः) एतान् वाह्यतः कृत्वा, शेषाणां लाजादीनां प्रदक्षिणं कुर्य्याताम्॥

प्राजग्राहादीनां वाह्यतः करणे हेतुमाह,—

दक्षिणां दिशमास्थाय यमो मृत्युश्च तिष्ठतः।
तयोस्तु रक्षणार्थाय तस्माद् ब्रह्मा वह्निर्भवेत्॥३१॥

यस्मात् दक्षिणां दिशमाश्रित्य यमोमृत्युश्च तिष्ठतः, तस्मात् तयोर्वर-बध्वोः रक्षणार्थाय ब्रह्मा वह्निर्भवेत्। तुशब्दश्चशब्दार्थः समुच्चये भिन्न-क्रमेण योजनीयः। ब्रह्मा च वह्निर्भवेत्,—इति। स खल्वयं प्राजग्राहा-दीन् समुच्चिनोति॥

अथेदानीं लाजहोममधिकृत्याह,—

सोमः प्रकृतिरेखा हि लाजानाश्रित्य तिष्ठति।
विरुद्धमाज्यं सोमेन नाभिघारणमर्हति॥ ३२॥

सोमः चन्द्रः, प्रकृतिरेखा सोमदैवत्या लाजानाश्रित्य तिष्ठति, आज्यञ्च सोमेन विरुद्धम्, तस्मात् न अतिघारणमर्हति लाजः॥

कथन्तर्हि गोभिलेन,—"तं सोपस्तीर्णाभिघारितम्"—इत्यादिसूत्रेण लाजानामुपस्तरणमभिघारणञ्चोक्तम्?। तत्राह,—

शमीपलाशमिश्राणां लाजानामभिघारणम्।
पूर्व्वाणां घृतमिश्राणामाचार्य्यैः कल्पितं तथा॥३३॥

शमीपलाशमिश्राणाम्—शमीपत्रमिश्राणाम्, घृतमिश्राणां वा। "खा-दिरे बध्नाति पालाशे बध्नाति रोहितके बध्नाति"—इतिवत् विकल्पोऽत्र द्रष्टव्यः। तदेवम्भूतानां पूर्व्वाणाम्—पूर्व्वमासादितानां लाजानामभि-घारणं करणीयम्। अतएव 'आचार्य्यैः' गोभिलैः, 'तथा' शमीपलाश-

मिश्राणामेव लाजानामासादनं तेषामेव चाभिघारणं कल्पितम्। तथाच गोभिलसूत्रम्। "शमीपलाशमिश्रांश्च लाजांश्चतुरञ्जलिमात्रान् शूर्पेणोपसादयन्ति पश्चादग्नेः"—इति। "सकृत् संगृहीतं लाजानामञ्जलिं भ्राता बध्वञ्जलावावपति"—इति। "तं सोपस्तीर्णाभिघारितमग्नौ जुहोति"—इति च। तस्मात्, केवलानां लाजानां नास्त्यभिघारणार्हता, किन्तु शमीपलाशमिश्राणां घृतमिश्राणां वा पूर्व्वमासादितानामित्यभिप्रायः। अपर आह। शमीपलाशमिश्राणां घृतमिश्राणाञ्च लाजानामासादनम्, घृतमिश्राणामासादनादेव आचार्य्यैरभिघारणं कल्पितम्, न पुनः परमार्थतोऽभिघारणमत्रास्ति,—इति॥

**तथा लाजाञ्जलिर्बध्वा हूयतेऽङ्गुलिपर्व्वभिः।**
**एवं लाजहविःशेषं होतव्यं शूर्पजिह्वया॥ ३४॥**

तथा—गोभिलोक्तप्रकारेण, अङ्गुलिपर्व्वभिर्लाजाञ्जलिर्बध्वा हूयते। एवं लाजहविःशेषं शूर्पजिह्वया होतव्यम्। गोभिलोक्तप्रकारस्य गृह्यसूत्रादुपलब्धव्यः॥

**अवसिक्तन्तु विधिना पाणिग्राहन्तु प्राजनी।**
**रक्षणार्थमनुगच्छेत् सप्ताहं चाहमेव वा॥ ३५॥**

विधिना—"अपरेणाग्निमौदकोऽनुसंव्रज्य पाणिग्राहं मूर्द्धदेशेऽवसिञ्चति तथेतराम्"—इत्यादिसूत्रोक्तप्रकारेण, उदकग्राहिणा अवसिक्तं पाणिग्राहं वरम्, तुशब्दात् वधूञ्च, सप्ताहं त्र्यहमेव वा प्राजनी अनुगच्छेत्। त्र्यहमेव च,—इति पाठेऽप्ययमेवार्थोवर्णनीयः। किमर्थमनुगच्छेत्?।

रक्षणार्थम्। तदनेन, "प्राजनेनान्यः"—इति सूत्रोपदिष्टस्य प्राजनिनो विनियोगो दर्शितः॥

ब्राह्मस्यार्षस्य दैवस्य प्राजापत्यस्य याज्ञिकैः।
पूर्व्वं होमविधिः प्रोक्तः पश्चात् परिणयः स्मृतः॥३६॥

ब्राह्म्यादयः शब्दाः विवाहविशेषाणां वाचकाः। तथाच मनुः।

"चतुर्णामपि वर्णानां प्रेत्य चेह हिताहितान्।
अष्टाविमान् समासेन स्त्रीविवाहान् निबोधत।
ब्राह्म्यो दैवस्तथैवार्षः प्राजापत्यस्तथाऽसुरः।
गान्धर्व्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः"।

इति। लक्षणममीषामन्यत्रानुमन्धेयम्। ब्राह्म्यदैवार्षप्राजापत्यविवाहेषु, प्रथमं लाजहोमविधिरुक्त', पश्चात् परिणयः—अग्नेः परिणयनमुक्तं याज्ञिकैः। तथाच गोभिलसूत्रम्। "हुते पतिर्यथेतं परिव्रज्य प्रदक्षिणमग्निं परिणयति"—इत्यादि। ब्राह्मणार्षस्य,—इति पाठेऽपि* ब्रह्मणोऽयं ब्राह्मणः—ब्राह्म्यः इत्येतत्। तस्यार्षस्य चेति पूर्व्वोक्त एवार्थः॥

गान्धर्व्वासुरपैशाचा विवाहा राक्षसाश्च ये।
तेषां परिणयः पूर्व्वं पश्चाद्धोमो विधीयते॥ ३७॥

गान्धर्व्वादिषु विवाहेषु पूर्व्वमग्नेः परिणयनं पश्चाल्लाजहोमो विधीयते

* ब्राह्मस्यार्षस्य'—इत्ययमेव पाठः संग्रहकारैर्धृत। आदर्शपुस्तके तु, —'ब्राह्मणार्षस्य'—इति पाठो दृश्यते।

अस्माभिः। स खल्वयमाचार्य्यानुपदिष्टोविशेषः आचार्य्यपुत्रेणोपदिष्टः। आचार्य्यस्तु प्रशस्तान् विवाहानभिप्रेत्य होमानन्तरं परिणयनं सूचयाञ्चकार,—इति लिख्यते। तथाच स्मरणम्।

"चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयोविदुः"।

इति। कश्चित् पुनर्ब्राह्म्यादिशब्दानां विवाहनामत्वमविद्वानन्यथेमं ग्रन्थं वर्णयाञ्चकार,—'ब्राह्मस्यार्षस्य'—इत्यादिम्। 'ब्राह्मणस्य ऋषेर्देवस्य प्रजापतेर्विवाहे पूर्व्वं लाजहोमः, पश्चादग्नेः परितोनयनम्। गन्धर्व्वासुरपिशाचानाँ विवाहे, राक्षसानां रावणादीनाञ्च विवाहे, पूर्व्वं परिणयः पश्चाल्लाजहोमः'—इति। तदश्रद्धेयम्॥

अथेदानीम्—"तत्रैनां सकेशनखामभ्यज्य स्नापयित्वाऽऽस्नातयन्ति"—इतिसूत्रोक्तं स्नापनं व्याकुरुते,—

**उद्वर्त्तनं नखच्छेदोरोमच्छेदनमेवच।**
**स्रंसनं मेखलायाश्च स्नासनानि विदुर्व्बुधाः॥ ३८॥**

उद्वर्त्तनं—कल्केन शरीरादाज्यादीनां दूरीकरणम्। मेखलायाः काञ्च्याः स्रंसनम्—अधःपातनम्। प्रसिद्धमन्यत्। एतानि स्नापनानि जानन्ति पण्डिताः॥

**चूड़ाकर्म्मणि सीमन्ते यश्च पाकः सदागृहे।**
**विवाहे चैवलाजानां नोक्तो निर्व्वपणो विधिः॥ ३९॥**

चूड़ाकर्म्मणि,—"आनडुहोगोमयः कृसरः स्थालीपाकोऽथापकइत्युत्तरतः"—इतिसूत्रोक्तोयः स्थालीपाकः, यश्च सीमन्तकरणे,—"कृसरः

स्थालीपाकउत्तरघृतसमवेक्षयेत्”—इति सूक्तोक्तः स्थालीपाकः, यश्च सर्व्वदा भोजनाद्यर्थं गृहे पाकः, यश्च विवाहे लाजानां पाकः, तेष्वे-तेषु निर्व्वपणोविधिः—(निर्व्वपणः—इति अणन्तत्वेपि वृद्धेरभावः।)—निर्व्वपणसंबन्धी विधिः, निर्वपणरूपोवा विधिः,—‘अमुष्मै त्वा जुष्टं निर्व्वपामि’—इत्येवंरूपः, आचार्य्यैर्नोक्तः॥

दक्षिणाकपर्द्दाः शिष्टा आत्रेयास्त्रिकपर्द्दिनः।
आङ्गिरसः पञ्चचूड़ा मुण्डा भृगोः शिखिनोऽन्ये॥४०॥

‘शिष्टाः कौण्डिन्यादयः’—इति दीक्षितभाष्यम्। दक्षिणस्यां कपर्द्दा येषां तदिमे दक्षिणाकपर्द्दाः भवन्ति। कपर्द्दोजटा शिखेत्यनर्थान्तरम्। मस्तक-दक्षिणभागे शिखिनोभवन्त्यमी,—इत्यर्थः। अपरे पुनरेतद्-विद्वांसोभाषन्ते,—‘शिष्टाः कौण्डिन्यादयोविवाहे त्रीन् कपर्द्दान् प्रय-च्छन्ति दक्षिणाः’—इति। आत्रेयास्त्रिकपर्द्दिनोभवन्ति। आङ्गिरसः पञ्चचूड़ाः—पञ्चशिखाभवन्ति। भृगोर्वंशजाताः—भार्गवाः, मुण्डित-शिरसोभवन्ति। उक्तेभ्योऽन्ये, शिखिनः—अनियतशिखाः भवन्ती-त्यर्थः। एतदपि,—

“वाशिष्ठाः पञ्चचूड़ाः स्वस्तिचूड़ाः कौण्डपायिनः”।

इत्यादिविशेषविधिव्यतिरिक्तविषयं द्रष्टव्यम्। कौथुमराणायनादीना-मपि सशिखमेव वपनं गृह्यसूत्रभाष्ये समर्थितमस्माभिः। तदनेन,—“उदगग्रेहतस्तूप्य कुशलीकारयन्ति यथागोत्रकुलकल्पम्”—इति सूत्रोक्तोगोत्रकुलकल्पोव्याख्यातः॥

सर्व्वयज्ञेषु विप्राणामद्भिः पूर्व्वं प्रवर्त्तते ।
तस्मात् सुरोत्तमाह्यापोऽद्भिरेवाभिषेचयेत् ॥ ४१ ॥

सर्व्वकर्म्मसु विप्राणां प्रथममद्भिः क्रिया प्रवर्त्तते । तस्मात् कारणात्—आपएव सुरोत्तमाः । अतः, अद्भिरेव कन्यामभिषेचयेत् । तदनेन,—"सुहृत् सुरोत्तमेन सशरीरां त्रिर्मूर्द्धन्यभिषिञ्चेत्"—इति सूत्रस्थं सुरोत्तमपदं व्याख्यातम् । आह । कस्मात् पुनः कारणादापः सुरोत्तमाः उच्यन्ते? । उच्यते । नैघण्टुककाण्डे तावत् 'सुरा'—इत्युदकनामसु पठितम् । तच्च तत्र पञ्चविंशतितमं नाम । तस्मादुत्तममुदकमेव सुरोत्तमशब्दस्यार्थः ॥

ब्रह्मचारी व्रतादेशे व्रतनाम प्रवाचयेत् ।
चरिष्ये यावदन्ताय सावित्रे चान्तकीर्त्तनम् ॥ ४२ ॥

"अग्नेव्रतपते इति हुत्वा"—इति सूत्रोक्ते व्रतादेशे । अथवा । व्रतस्यादेशोयत्र तस्मिन्, व्रतादेशे,—'अग्ने व्रतपते व्रतं चरिष्यामि'—इत्यादिमन्त्रपञ्चके,—इत्येतत् । ब्रह्मचारी व्रतस्य नाम प्रवाचयेत्—प्रकथयेत् । यावदन्ताय व्रताचरणं तस्याप्यन्तस्य कीर्त्तनं कुर्य्यात् । व्रतादेशशब्दात्,—"समिधमाधेहि"—इत्यादि सूत्रोक्तं व्रतानामादेशं मा प्रज्ञासीदिति 'सावित्रेच'—इत्याह । सावित्रे व्रते—सहप्रवचनीयापरनामधेये, उपनयनव्रते,—इत्येतत् । तस्य सावित्र्यध्ययनार्थत्वात् सावित्रत्वम् । च-शब्दादनुप्रवचनीये च गोदानादौ । तत्रोदाहरणम् 'अग्ने व्रतपते व्रतं चरिष्यामि,—इत्येवमादयः पञ्च मन्त्राः पञ्चमान-

मन्त्रकाण्डे पठ्यन्ते। तत्र च, अग्ने व्रतपते व्रतं सावित्रं अष्टवर्षं अष्टमासं अष्टदिनं वा चरिष्यामि,—इति ब्रूयात्। एवमपरेष्वपि मन्त्रेषु ऊहनीयम्। एवं गोदानादिव्रतेष्वप्यूहनीयम्॥

**समामासाअहोरात्रास्तुल्याब्राह्मणचोदिताः।**
**सावित्रमष्टभिर्वर्षैः कार्य्यं मासैर्दिनैश्च वा॥ ४३॥**

समाः—संवत्सराः, मासाः, अहोरात्राश्च, ब्राह्मणेन तुल्याः कथिताः। अतः सावित्रं व्रतमष्टभिर्वर्षैर्मासैर्दिनैरपिवा करणीयम्। अयमर्थः। आचार्य्येण,—"गर्भाष्टमेषु ब्राह्मणमुपनयेत्"—इति गर्भाष्टमे उपनयनं सूचयित्वा, "अथातः षोड़शे वर्षे गोदानम्"—इति षोड़शवर्षे गोदानस्य सूत्रणात् अष्टौ वर्षाः सावित्रव्रतस्य कालाः लभ्यन्ते। ब्राह्मणेन तु समामासाहोरात्राणां तुल्यत्ववचनात् अष्टौ मासाः अष्टौ दिनान्यपि तस्य कालः,—इति निर्णीयते। तस्मात्,—"आषोड़शाद् ब्राह्मणस्यानतीतः कालोभवति"—इत्येतस्मिन्नपि कल्पे, अन्ततोऽष्टौ दिनान्यपि सावित्रव्रतमाचरणीयम्,—इति सिद्धम्। तथा च ब्राह्मणम्। "योवै मासः संवत्सरः"—इति। "आदित्योवा सर्व्वऋतवः, सयदैवोदेत्यथ वसन्तो, यदा सङ्गवोऽथ ग्रीष्मो, यदा मध्यन्दिनोऽथ वर्षा, यदाऽपराह्णोऽथ शरत्, यदाऽस्तमेत्यथ हेमन्तशिशिरौ"—इति च। अत्र खलु "सर्व्वान् ऋतून् अहनि सम्पादयति, सर्व्वे च ऋतवः संवत्सरः, तस्मात् अहः संवत्सरशब्देनोच्यते"—इति पूर्व्वमीमांसाभाष्ये शवरस्वामिनः। केचित् पुनरेतदविद्वांसः,—"द्वादश वै रात्रयः संवत्सरस्य प्रतिमा"—इति ब्राह्मणवाक्यमिहोदाहरन्ति। तदसङ्गतम्।

कस्मात्?। तत्र संवत्सरशब्दस्य साक्षात् प्रतिमाशब्देन संयोगात्। एतच्च षष्ठाध्याये प्रपञ्चितं, तत्रैव द्रष्टव्यम्। अलमिह ग्रन्थगौरवेण॥

**सावित्रं यावदन्ताय धार्य्यं सर्व्वाश्रमस्थितैः।**
**चूड़ाकरणधर्म्मेण गोदाने चास्य वापनम्॥ ४४॥**

सर्व्वैराश्रमस्थितैः—प्रस्तावात् ब्रह्मचर्य्याश्रमस्थितैः सर्व्वैरित्यर्थः। यावदन्ताय सावित्रं व्रतं धार्य्यम्—इत्यादरार्थमुक्तम्। तेन, गोदानादि व्रतान्तराणां यथावदनुष्ठानासम्भवेऽपि, सावित्रव्रतमवश्यमनुष्ठेयमिति सिध्यति। अपरश्चाह। 'सर्व्वाश्रमस्थितैः—सर्व्वेषां; ब्रह्मचारि-गृहस्थ-वानप्रस्थ-यतीनामाश्रमस्थितैर्विप्रैः, सावित्रम्—सवितुरिदं मन्त्रं; सावित्र्या अभिमन्त्रितं यज्ञोपवीतं धार्य्यम्, यावदन्ताय मरणपर्य्यन्तम्'—इति। अनयोर्युक्तायुक्तत्वे सूरिभिरून्नेये। मम तु, 'पूर्व्वाश्रमस्थितैः'—इत्येव पाठः प्रतिभाति। गोदाने गोदानाङ्गकेशान्तकरणे चूड़ाकरणोक्तप्रकारेण अस्य ब्रह्मचारिणोवापनं करणीयम्। तथा च गोदानोपक्रमे गोभिलसूत्रम्। "चूड़ाकरणेन केशान्तकरणं व्याख्यातम्"—इति॥

**विप्राणामग्निराचार्य्य इन्द्रस्त्राता व्रते व्रते।**
**तस्मात् सर्व्वव्रतान्तेषु चरुरैन्द्रोविधीयते॥ ४५॥**

यस्मात् अग्निर्विप्राणामाचार्य्यः, इन्द्रश्च सर्व्वेषु व्रतेषु पालनकर्त्ता, तस्मात् कारणात् सर्व्वव्रतान्तेष्वैन्द्रश्चरुः क्रियते। स खल्वयमनुप्रवचनीयव्रतान्तेषु विधिर्द्रष्टव्यः। सहप्रवचनीयापरनामधेयस्योपनयनव्रतस्यान्ते

तु साविचएव चरुर्भवति। तथा च गोभिलसूत्रम्। "ऐन्द्रः स्थालीपाकस्तस्य जुहुयादृचं साम यजामहइत्येतयर्चा सदसस्पति-मद्भुतमितिचोभाभ्यां वा" "अनुप्रवचनीयेष्वेवं सर्व्वत्र"—इति। "तस्यान्ते साविचश्चरुः"—इति च॥

**अजिनं सर्व्वदैवत्यमैन्द्रोदण्डइति स्मृतः।**
**साविचीं मेखलामाहुस्तस्मात् सर्व्वाणि धारयेत्॥४६॥**

यस्मात्,—"ऐणेयरौरवाजान्यजिनानि"—इति सूचोक्तमजिनं सर्व्वदैवत्यं, "पार्णबैल्वाश्वत्थादण्डाः"—इति सूचोक्तोदण्डइन्द्रदैवत्य इत्याचार्य्यैः स्मृतः; "मुञ्जकाशताम्बल्योरशनाः"—इति सूचोक्तां मेखलां साविचीम्—सवितृदेवताकामाहुराचार्य्याः, तस्मात् कारणात् सर्व्वाण्येतानि धारयेत्—ब्रह्मचारी। तथा च गोभिलसूत्रम्। "मेखलाधारण-भैक्षचर्य्य-दण्डधारण-समिदाधानोदकोपस्पर्शन-प्रातरभिवादाइत्येते नित्यधर्म्माः"—इति। मनुरपि,—

"यद् यस्य विहितं चर्म्म यत् सूत्रं या च मेखला।
योदण्डोयच्च वसनं तत्तदस्य व्रतेष्वपि"।

इति स्मरति॥०॥

**मेखलामजिनं दण्डमुपवीतं कमण्डलुम्।**
**अप्सु प्रास्येद्विनष्टानि गृहीत्वाऽन्यानि मन्त्रतः॥४७॥**

विनष्टानि मेखलादीनि अप्सु उदके प्रास्येत् प्रक्षिपेत्। किं कृत्वा?। अन्यानि मेखलादीनि मन्त्रेण गृहीत्वा। तच, मेखलादण्डमन्त्रौ गृह्यसूचोक्तौ। 'अजिनमन्त्रस्य स्वशाखायामभावात्,—"मित्रस्य चक्षु-

र्वहृणं बलीयः"—इति तैत्तिरीयशाखापरिपठितो द्रष्टव्यः। उपवीत-मन्त्रोऽपि—( "यज्ञोपवीतमसि"—इति ) शाखान्तरादुपादेयः'—इति भट्टनारायणोपाध्यायाः। उपवीते विशेषं वक्ष्यति। कमण्डलु-मन्त्रोऽप्यनुसन्धेयः ॥०॥

अथेदानीम्—"यज्ञोपवीतं कुरुते सूत्रं वस्त्रं वा"—इत्यादिसूत्रोक्तं यज्ञोपवीतं व्याकरोति,—

यज्ञोपवीतं कुर्व्वीत सूत्रेण नवतान्तवम्।
देवतास्तत्र वक्ष्यामि आनुपूर्व्व्येण याः स्मृताः॥४८॥

सूत्रेण यज्ञोपवीतं कुर्व्वीत। कीदृशम्?। नवतान्तवम्। नवतन्तु-घटितमित्यर्थः। तत्र—तेषु तन्तुषु, आनुपूर्व्व्येण—क्रमेण, या देवता आचार्य्यैः स्मृताः, ता अहं वक्ष्यामि ॥०॥

ॐकारः प्रथमस्तन्तुर्द्वितीयश्चाग्निदैवतः।
तृतीयोनागदैवत्यश्चतुर्थः सोमदैवतः॥ ४९ ॥
पञ्चमः पितृदैवत्यः षष्ठश्चैव प्रजापतिः।
सप्तमो वासुदैवत्योऽष्टमो यमदैवतः॥ ५० ॥
नवमः सर्व्वदैवत्यइत्येते नवतन्तवः।
द्विगुणं त्रिगुणं वाऽपि एकग्रन्थिकृतं विदुः ॥ ५१ ॥

ॐकारादयस्तन्तुदेवताः। वासुदैवत्यः,—इत्युभयपदवृद्धिः। तदेतन्नव-तन्तुकं यज्ञोपवीतं द्विगुणं द्विसरम्। अपि वा, त्रिगुणं त्रिसरं एकेन-

ग्रन्थिनाकृतं विदुः आनन्धाचार्य्याः। 'वाऽपि'—इति व्यत्यासेन प्रयुक्ते,—अपि वा इत्यर्थः। द्विगुणम्—इति त्रिगुणत्वासम्भवे द्विगुणत्वं बोद्धव्यम्,—इति नारायणोपाध्यायाः। कात्यायनेनापि त्रैगुण्यमेवोक्तम्। तथाच कर्म्मप्रदीपे,—

"त्रिवृदूर्द्ध्ववृतं कार्य्यं तन्तुत्रयमधोवृतम्।
त्रिवृतञ्चोपवीतं स्यात्तस्यैकोग्रन्थिरिष्यते"।

इति। अयमपि परतस्त्रैगुण्यमभ्यसिष्यति। "कार्पासमुपवीतं षट्तन्तु त्रिवृद्ब्राह्मणस्य"—इति पैठिनसिवचनं गोभिलीयव्यतिरिक्तविषयम्। कथं ज्ञायते?। शाखान्तरसूत्रकारत्वात्तस्य। नवतन्त्वसम्भवे षट्तन्तु विधायकम्—इति परिशिष्टप्रकाशः॥

अत्र पृच्छति,—

**केनैवोत्पादितं सूत्रम्? केन वा त्रिगुणीकृतम्?।**
**केनवाऽस्य कृतोग्रन्थिः? केनमन्त्रेण मन्त्रितम्?॥५२॥**

स्पष्टार्थः श्लोकः॥

उत्तरमाह,—

**ब्रह्मणोत्पादितं सूत्रं विष्णुना त्रिगुणीकृतम्।**
**रुद्रेण तु कृतोग्रन्थिः सावित्र्या चाभिमन्त्रितम्॥५३॥**

ब्रह्मणासूत्रमुत्पादितम्, विष्णुना तत् त्रिगुणीकृतम्, रुद्रेण तत्र ग्रन्थिः कृतः, सावित्र्या तदभिमन्त्रितम्। सावित्री गायत्री। तुशब्दः स्वस्वमन्त्रसंबन्धद्योतनार्थः, सर्व्वत्र संबन्धनीयः,—इति दीक्षितरामकृष्णस्य स्वरसः। 'इदानीम्—"ब्रह्मयज्ञानम्"—इति मन्त्रेण सूत्रोत्पादनम्,

"इदं विष्णुः"—इति मन्त्रेण त्रिगुणीकरणम्, "आवोराजानम्"—इति मन्त्रेण तत्र ग्रन्थिकरणम्, "तत्सवितुः"—इति मन्त्रेणाभिमन्त्रणम्, ततोधार्य्यम्,'—इति दीक्षितभाष्यम् ॥०॥

यज्ञोपवीतस्य परिमाणमाह,—

स्तनादूर्द्धमधोनाभेर्न कर्त्तव्यं कथञ्चन ।
स्तनादूर्द्धे श्रियं हन्ति नाभ्यधस्तात्तपःक्षयः ॥ ५४ ॥

स्तनादूर्द्धं नाभेरधश्च यज्ञोपवीतं कथञ्चन न करणीयम्। स्तनादूर्द्धे यज्ञोपवीतं कुर्व्वन् श्रियं हन्ति। नाभेरधस्तात् कुर्व्वतस्तपःक्षयोभवति।

अत्र किञ्चिद्वक्तव्यमस्ति। तत्र तावत्,—

"पृष्ठवंशे च नाभ्याञ्च धृतं यद्विन्दते कटिम् ।
तद्धार्य्यमुपवीतं स्यान्नातोलम्बं न चोच्छ्रितम्" ।

इति कर्म्मप्रदीपे नाभ्यां धृतस्योपवीतस्य कटिपर्य्यन्तं लम्बनमनुशिष्टम्। तदनेन विरुध्यते। कथं कृत्वा?। नाभेरधस्तात् करणस्याच निषेधात्। उच्यते। उपवीतस्य धारणं न नाभेरधस्तादित्येतदत्र प्रतिपिपादयिषितम्। लम्बता पुनः कटिपर्य्यन्तमेवानुशिष्टा न निवार्य्यते। अतोन विरोधः। ननु, तथापि विरोधः। कुतः?। यतो "न चोच्छ्रितम्"—इत्यनेन नाभेरूर्द्धमेव धारणं कात्यायनस्याननुमतमवगच्छामः,। आचार्य्यपुंचस्तु "स्तनादूर्द्धं न कर्त्तव्यम्"—इति वदन् नाभेरूर्द्धमपि स्तनादधस्तात् करणमनुजानाति। नैष दोषः। कस्मात्?। यस्मात् स्तनादूर्द्धं न कर्त्तव्यमिति वाक्यं स्तनादूर्द्धे करणं शक्नोति निषेद्धुम्, न नाभेरूर्द्धं करणमनुमन्तुम्। तथाच

सामर्थ्याभावात् । अर्थाद्धि खल्वयमर्थोऽवगम्यते । सचायमवगम्यमानोऽपि वचनान्तर-विरोधान्न शक्नोत्यात्मानं लब्धुम् । यद्धि नाभेरूर्द्धं न क्रियते, न क्रियतएवैतत् स्तनादूर्द्धमिति नास्ति विरोधः । किमर्थं तर्हि स्तनादूर्द्धमित्यभिधानम्? । ननु स्तनादधोऽपि नाभेरूर्द्धञ्चेत् न कर्त्तव्यम्,—इत्युक्तम् । दोषातिशयार्थम्,—इति गृहाण । अथवा । उभयोरप्यस्मच्छाखायामुपदेशात् सम्भवासम्भवाभ्यामनयो र्व्यवस्था भविष्यति । कथं नाम? । सम्भवे कर्म्मप्रदीपोक्तम् परिमाणम्, असम्भवे पुनरत्रोक्तम्,—इति न विरोधः । तदत्रैव कल्पे नाभेरधःकरणं निषिध्यते, न कर्म्मप्रदीपोक्तकल्पे,—इति तत्र कटिपर्य्यन्तं लम्बनमविरुद्धम् । निन्दाप्यत्रोक्ता न कर्म्मप्रदीपोक्तं परिमाणं निन्दति । विवक्षितार्थ-स्तुतिपरत्वात्तस्याः । "न निन्दा निन्द्यं निन्दितुं प्रवर्त्तते, अपितु इतरत् स्तोतुम्"—इति हि तन्त्रस्थितिः । तदिदं वचनमाचार्य्यपुत्रस्येत्येतदविदुषोनारायणोपाध्यायस्य,—'कर्म्मप्रदीपोक्तम् परिमाणं गोभिलीयानाम् । अन्येषान्तु,—

"स्तनादूर्द्धमधोनाभेर्न कर्त्तव्यं कथञ्चन" ।

इति देवलोक्तं परिमाणम्'—इति प्रलापोनादरणीयः ॥०॥

"सूत्रेण नवतान्तवम्"—इत्येतत्तावदुक्तम्, सूत्रमिदानीं व्याकुरुते,—

**गोभिर्बालपवित्रेण धार्य्यमाणेन नित्यशः ।**
**न स्पृशन्तीह पापानि श्रियं गात्रेषु तिष्ठति ॥ ५५ ॥**

गोभिः,—इति व्यत्ययात् षष्ठ्यर्थे तृतीया । एवमुत्तरत्रापि बोद्धव्यम् । गवां ये बालाः—केशाः, तन्निर्म्मितेन पवित्रेण यज्ञोपवीतेनेत्यर्थः ।

कुतः?। "यज्ञोपवीतं परमं पवित्रम्"—इति दर्शनात्।' अभिधान-काण्डे पाठाच्च। तथा देवलोऽपि,—

"कार्पास-क्षौम-गोवाल-शर-वल्क-तृणोद्भवम्।
सदा सम्भवतोधार्य्यमुपवीतं द्विजातिभिः"।

इति गोवालनिर्म्मितयज्ञोपवीतस्य धारणं स्मरति। तदनेन गोवाल-निर्म्मितपवित्रेण नित्यशोधार्य्यमाणेन इह शरीरे, इह लोके वा, पापानि न स्पृशन्ति। पवित्रपापयोर्विरोधात्। तथा, गात्रेषु श्रीर्लक्ष्मीस्तिष्ठति। श्रियम्,—इति व्यत्ययात् प्रथमार्थे द्वितीया॥

**गोभिर्बालपवित्रेण यस्तु सन्ध्यामुपासते।**
**गोधर्म्मेष्वेव वर्त्तन्ते न स पापेन लिप्यते॥५६॥**

उपासते—उपास्ते। वर्त्तन्ते-वर्त्तते। गोधर्म्मः पवित्रत्वम्। कथं ज्ञायते?। "गावः पवित्रं परमम्"—इति स्मरणात्। अतएव, स पापेन न लिप्यते,—इति पूर्व्ववदर्थः। अपर आह। 'गोधर्म्मेषु गोदान-धर्म्मेषु वर्त्तते,—गोदान पुण्यं भवतीत्यर्थः'—इति॥

**गोभिर्बालपवित्रेण यस्तु ह्यग्निमुपासते।**
**पञ्चाग्नयो हुतास्तेन यावज्जीवं न संशयः॥५७॥**

यावज्जीवं पञ्चाग्नयस्तेन हुताः,—यावज्जीवं पञ्चाग्निहोमफलं स प्राप्नोतीत्यर्थः। पञ्चाग्नयश्च,—

"पवनः पावनस्त्रेता यस्य पञ्चाग्नयो गृहे"।

इत्युपलक्षणाः। व्याख्यातमन्यत्। तदत्र, गोवालनिर्म्मितयज्ञोपवीतस्य प्रामस्यमात्रावगतेरप्रतिषेधाच्च कार्पासादिसूत्रनिर्म्मितमप्युपवीतं भवति। तथाच स्मृत्यन्तरम्।

"कार्पासमुपवीतं स्याद्विप्रस्योर्द्धवृतं त्रिवृत्।
शणसूत्रमयं राज्ञोवैश्यस्याविकसौत्रिकम्"।

इति। गोवालनिर्म्मितपवित्रन्त्वस्माकं प्रशस्यते,—इति द्रष्टव्यम्। नारायणोपाध्यायः पुनरेतद्दृष्ट्वा, गोभिलीयानामपि कार्पासाद्यसम्भवे गोवालैर्यज्ञोपवीतमिच्छति॥

अथेदानीं ब्रह्मचारिणाऽन्त्या समित् यत्र होतव्या, तमग्निमाह,—

**आचार्य्येणाभ्यनुज्ञातआचार्य्याग्नौ विधिर्यथा।**
**प्रणीतेऽग्नौ समिद्दद्यादन्त्या सा ब्रह्मचारिणाम्॥५८॥**

आचार्य्येणाभ्यनुज्ञातोब्रह्मचारी, यथा विधिस्तथा, आचार्य्यस्याग्नौ समित्—समिधं, दद्यात्—जुहुयात्। स्वयं प्रणीते वा अग्नौ समिधं जुहुयात्। सेयं समित्, ब्रह्मचारिणामन्त्या समिदित्युच्यते। तत्र, यद्याचार्य्याग्नौ अन्त्यां समिधं जुहोति, तदा नासावग्निरस्य गृह्यो भवति। तदा खलु विवाहाग्निरेव गृह्यः स्यात्। यदा पुनः स्वयं प्रणीतेऽग्नौ जुहोति, तदा सएवास्य गृह्योऽग्निर्भवति। "ब्रह्मचारी वेदमधीत्यान्त्यां समिधमभ्याधास्यन्"—इत्यादिना अन्त्यसमिदाधानार्थमग्निप्रणयनं सूचयित्वा, "सएवास्य गृह्योऽग्निर्भवति"—इति सूत्रयन्नाचार्य्योऽप्येतदेवाह। अनेनाप्युक्तम्,—'अन्त्या समिद्विवाहस्य'—इति। 'अन्त्या सा ब्रह्मचारिणाम्'—इति च ब्रुवन् प्रणीतस्यैवाग्नेर्गृ-

कालं भङ्ग्यन्तरेणाह। कथं ज्ञायते?। अन्यथा समित्,—इत्याधान-कालाभिधानात्, प्रणीते चाग्नौ हुतायाः समिधोऽन्यत्वश्रवणात्। तथाच, 'अन्या सा ब्रह्मचारिणाम्'—इत्यत्र, सा,—इति सन्निहित-तराप्रणीतेऽग्नौ होतव्यैव समित् परामृश्यते,—इति न किञ्चिदनुचि-तम्। स खल्वयम्,—"खादिरे बध्नाति, पालाशे बध्नाति, रौहितके बध्नाति"—इति वद्विकल्पः,—आचार्य्याग्नौ वा जुहुयात्, प्रणीते वा अग्नौ जुहुयात्,—इति। आचार्य्याग्नौ,—इति, प्रणीतेऽग्नौ;—इति चाग्निशब्दस्य द्विरुच्चारणस्याप्येतदेवप्रयोजनम्। अन्यथा अनर्थकत्वा-पत्तेः। दीक्षितस्त्वेतदजानानः व्याचष्टे,—'आचार्य्याग्नौ स्थण्डिले प्रणीते'—इति। तदसङ्गतम्। न खल्वाचार्य्याग्नेरग्निप्रणयनस्यार्थवत्तां पश्यामः।

"न स्वेऽग्नावन्यहोमः स्यान्मुक्त्वैकां समिदाहुतिम्"।

इति कर्म्मप्रदीपे आचार्य्याग्नावपि ब्रह्मचारिणः समिद्धोमानुज्ञानात्। आचार्य्याग्नौ,—इति चाधिकरणनिर्देशात्। अलं पल्लवितेन॥

अथेदानीम्,—"आश्वयुज्यां पौर्णमास्यां पृषातके पायसश्चरौद्रः" —इति सूत्रोक्तं पृषातकं, तस्य स्थानञ्चाह,—

**दधि सर्पिश्च संयुक्तः प्रोक्तोह्येष पृषातकः।**
**होमकाले तु तस्याग्नेः स्थानमुत्तरपूर्व्वतः॥ ५८॥**

दधि प्रसिद्धम्। सर्पिर्घृतम्। तदेतत् द्वयं संयुक्तं सत्, पृषातकः प्रोक्तम्। संयुक्तः,—इत्यादौ व्यत्ययात् पुंस्त्वम्, विधेयप्राधान्य-विव-क्षया वा समर्थनीयम्। होमकाले तु तस्य पृषातकस्य स्थानम्,

अग्नेरुत्तरपूर्व्वतः,—ऐशान्यां दिशि, स्यात्। भट्टनारायणस्त्वेतदजानानः,
—अग्नेरुत्तरतः पृषातकस्य स्थानमाह ॥

आश्वयुजीकर्म्मण्येव ;—"गोनामभिश्च पृथक् काम्यासीत्येतत्प्रभृतिभिः"
—इति सूत्रोक्तानि गोनामान्याह,—

काम्या प्रिया च हव्या च इड़ा रन्ता सरस्वती।
मही विश्रुता चाघ्न्या च गोनामानि विदुर्बुधाः॥६०॥

सुजुरक्षरार्थः। चकाराः 'असि' शब्दस्याध्याहारार्थाः,—इति दीक्षितभाष्यम्। 'अघ्न्या'—नाम्ना खल्वत्र होमेमास्तीत्यष्टावाहुतयो भवन्ति। तथाच कर्म्मप्रदीपः।

"धृतिहोमे न प्रयुञ्ज्याद्गोनामसु तथाऽष्टसु।
चतुर्थीमघ्न्या इत्येतद्गोनाम्नि न हि हूयते"।

इति ॥

मधुपर्कं पिबेन्मन्थमन्ततो हृदयं स्पृशेत्।
अपूपानां चरोश्चापि सर्व्वस्थानान्यनक्ति च॥६१॥

मधुपर्कं वक्ष्यमाणलक्षणं पिबेत्। मन्थमपि वक्ष्यमाणलक्षणम्—दधिमन्थमधुमन्थोदमन्थभेदात् त्रिविधं, पिबेत्। अन्ततः—पानात् परं, हृदयं स्पृशेत्। अष्टकाविधौ अपूपानां चरोश्च सर्व्वाण्यवदानस्थानानि, अनक्ति च घृतेनाप्लावयति च। तदेतद्द्वयमर्थमभिप्रेतम्। कथं नाम?। चतुरवत्तिनां द्वे अवदानस्थाने भवतः—मध्यं पूर्व्वार्द्धञ्च। पञ्चावत्तिनां

पुनस्त्रीण्यवदानस्थानानि भवन्ति—मध्यं पूर्व्वार्द्धं पश्चार्द्धञ्च,—इति। तदेतत् सर्व्वमस्मत्कृतगृह्यसूत्रभाष्यादुपलब्धव्यम्। अलमिह ग्रन्थ गौरवेण॥

अथेदानीम्,—"विष्टरपाद्यार्घ्याचमनीयमधुपर्कानेकैकशस्त्रिस्त्रिर्वेदयेरन्"—इति सूत्रोक्तमर्घ्यादिकं व्याकुरुते,—

दध्यक्षतसुमनसश्चापश्चेति चतुष्टयम्।
अर्घ्यएष प्रदातव्यो गृह्ये ये अर्घ्यार्हाः स्मृताः॥ ६२॥

दधि, अक्षताः—यवाः, सुमनसः—पुष्पाणि, आपः—उदकम्,—इत्येतत् चतुष्टयं मिलितमर्घ्यः। स खल्वेष प्रदातव्यः। कस्मै?। "षड्र्घ्या भवन्ति"—इति सूत्रेण गृह्ये ये अर्घ्यार्हाः स्मृताः, तेभ्यः॥

अपरमर्घ्यमाह,—

दध्यक्षतः सुमनसोघृतं सिद्धार्थकाः यवाः।
पानीयञ्चैव दर्भाश्च अष्टाङ्गोह्यर्घ्यउच्यते॥ ६३॥

अक्षतस्तण्डुलः। यवानां पृथगुपदेशात्। सिद्धार्थकाः श्वेतसर्षपाः। पानीयमुदकम्। प्रसिद्धमन्यत्। अष्टावङ्गानि यस्य, सोऽयमष्टाङ्गोऽर्घ्यउच्यते॥

मधुपर्कणार्चनप्रकारमाह,—

सर्पिषा मधुना दध्ना अर्च्चयेदर्हयन् सदा।
ऋषिप्रोक्तेन विधिना मधुपर्केण याज्ञिकः॥ ६४॥

याज्ञिकः, सदा—"परिसंवत्सरानर्हयेयुः" "पुनर्यज्ञविवाहयोश्च"—इति गृह्योक्तसर्व्वकाले, मधुपर्केणार्हयन्—पूजयन्, ऋषिप्रोक्तेन गोभिलोक्तेन विधिना, सर्पिषा मधुना दध्ना—इत्येतत् त्रितयेनार्चयेत् ॥

कंसे त्रितयमासिच्य कंसेन परिसंवृतम्।
परिश्रितेषु देयः स्यान्मधुपर्कइति ध्रुवम्॥ ६५ ॥

कंसे कांस्यपात्रे, त्रितयम्—सर्पिर्मधु दधि चासिच्य, कंसेन परि सर्व्वतोभावेन संवृतम्—सम्यगाच्छादितं कृत्वा, परिश्रितेषु—अर्हणीयस्य सर्व्वतः समाश्रितेषु गृह्येषु,—इत्यर्थः। तथाच वाजसनेयके प्रवचने। "यत्र वार्हा आगच्छति, सर्व्वे गृह्यादतरे तत्र वेष्टयन्ति"—इति। अपर आह। 'कटादिना परितः श्रितेषु सर्व्वतो वेष्टितेषु स्थानेषु', —इति। तदेवं मधुपर्कोदेयः स्यात्,—इति ध्रुवं निश्चयः॥

मधुपर्के तथा सोमे अप्सु प्राणाहुतीषु च।
अनुच्छिष्टो भवेद्विप्रोयथा वेदविदोविदुः॥ ६६ ॥

मधुपर्कभक्षणे, सोमभक्षणे, अप्सु—उदके आस्येन होमे पूर्व्वोक्ते, प्राणाहुतीषु च—उपनिषद्ब्राह्मणोक्तेषु प्राणव्यानापानसमानोदानरूपपञ्चाहुतिषु, विप्रोनोच्छिष्टोभवति, यथा वेदविदोजानन्ति॥

प्राणाहुतिषु सोमेषु मधुपर्के तथैव च।
आस्यहोमेषु सर्व्वेषु नोच्छिष्टोभवति द्विजः॥ ६७॥

आस्यहोमेषु—"सर्पिरास्येन जुहुयात्"—इत्यादि सूत्रोक्तेषु। दर्शेषु,—

इतिकरणादन्येष्वप्येवंविधेषु—उपाकरणादावचनधानाभक्षणादिषु, द्विजानोच्छिष्टोभवति। तदेतद्विशेषाभिधित्सया पुनरारम्भः। पूर्वं विप्रपदोपादानात् राजन्यवैश्ययोरुच्छिष्टताऽऽशङ्कापि स्यात् कस्यचिन्मन्दमतेरिति वा पुनरारम्भः। समादरार्थो वा॥

अन्यमपि मधुपर्कमाह,—

दधनि पयसि वाऽथवा कृतान्ने
मधु दद्यान्मधुपर्कमेतदाहुः।
दधि-मधु-सलिलेषु सक्तवः
पृथगेते विहितास्त्रयस्तु मन्थाः॥ ९८॥

दधनि, पयसि—दुग्धे वा, कृतान्ने—ओदनादौ वा, मधु दद्यात्—क्षिपेत्। दध्यात्,—इतिपाठे धारयेदित्यर्थः। एतन्मधुपर्कमाहुराचार्याः। दधि-मधु-सलिलेषु सक्तवोदेयाः। तइमे त्रयोमन्था भवन्ति;—दधिमन्थः, मधुमन्थः, उदमन्थश्च,—इति। तदिदम्—"रसोऽसि वानस्पत्योरसं मयि धेहीति मधुमन्थस्य पिबेदिति गौतमः, वानस्पत्यइति प्रवचनम्, तथा दधिमन्थोदमन्थयोः"—इति द्राह्यायणादिकल्पसूत्रोक्तानां दधिमन्थमधुमन्थोदमन्थानां निर्व्वचनं प्रसङ्गागतमिति बोद्धव्यम्।

कल्पसूत्रवृत्तिकाराग्निस्वामिनाप्येवमेव श्लोकमिमं पठितवन्तः द्वितीयस्त्वन्यथेमं श्लोकं पठति—

(दधनि पयसि वा कृतान्ने मधु निदध्यान्मधुपर्कमाहुः।

दधिमधूदकं वाऽपि समाविरेते विहितास्त्रयस्तु मन्थाः।)
इति। अत्रापि पाठे पूर्व्वोक्तएवार्थः।

एवन्तावत् च्छन्दोगानां स्वशाखापरिभाषितश्चतुर्विधोमधुपर्को भवति;—दधि-मधु-घृतम्, दधनि मधु, पयसि मधु, कृतान्ने मधु-चेति। एवञ्च, सर्व्वत्रैव मधुपर्कः—इति समाख्याऽनुगच्छते। तत्र प्रथमोमधुपर्कः कांस्यस्थः कांस्यापिधानश्च भवति। द्वितीयेऽप्यमुं विशेषं वक्ष्यामः। शिष्टयोरनियमः। कथं ज्ञायते?। पूर्व्वस्मिन्नेव मधुपर्के तदभिधानात्। शिष्टयोरनभिधानाच्च। नचेदं वाक्यं घृतासम्भवपरम्। प्रमाणाभावात्। आराच्चाभिधानात्। यदि हि घृतासम्भवएव विधि-रयं स्यात्। तदनुपदमेवैतदपि कुर्य्यात्। तस्माद् व्यवहितकर-णादवगच्छामः,—पृथगेवैते मधुपर्कप्रकाराः,—इति। अपिच। 'अथवा' 'वा' शब्दयोरुपादानादेकार्थत्वाच्च विकल्पएवामीषां युक्तोवर्णयितुम्। तथा चोक्तम्। "एकार्थास्तु विकल्पेरन्"—इति। 'पृथक्'—इति वचनाच्चैवमवगच्छामः। तच्च यद्यपि पराचीनम्, तथाप्यविशेषात् पूर्व्वत्राप्यनुषञ्जनीयम्। पयःकृतान्नाभ्यामपि मधुपर्काभिधानमसुमर्थ-मुपोद्बलयति। घृतालाभे,—इत्यकरणाच्च। तस्मादियमेवावधारणा,—प्रथमएव मधुपर्कः कांस्यस्थः कांस्यापिधानश्च भवति, नान्तिमौ—इति। 'कंसे चितयमासिच्य'—इति ब्रुवन्नाचार्य्यपुत्रस्तितयस्यैव कंसे समासेचनं कंसेनापिधानञ्च, न द्वयोः,—इति दर्शयति। यथा स्वभिक्रमणं प्रयाजमात्रस्यैवाङ्गं न पुनरनुयाजादीनां प्रकरणोपा-त्तानाम्,—इति तृतीयाध्याये सिद्धान्तितम्, तद्वदत्रापि स्यात्। अतएव,—

"साक्षतं सुमनोयुक्तमुदकं दधिमिश्रितम्।
अर्घ्यं, दधिमधुभ्याञ्च मधुपर्को विधीयते।
कांस्येनैवार्हणीयस्य निनयेदर्घ्यमञ्जलौ।
कांस्यापिधानं कांस्यस्थं मधुपर्कं निवेदयेत्"।

इति कर्म्मप्रदीपेऽपि मधुपर्कपदं स्वोक्तमेव मधुपर्कमाह, नापरम्। व्यक्तिवचनं खल्वेतत् सन्निहितामेव व्यक्तिं शक्नोति वदितुं नासन्निहिताम्। आग्नेयीन्यायात्। तस्मादाद्यौ मधुपर्कौ कांस्यापिधानौ कांस्यस्थौ च भवतः, नापरौ,—इति सिद्धम्।

यच्च,—"दधनि मध्वानीय सर्पिर्वा मध्वलाभे"—इति गृह्यान्तरम्। तदन्येषामेव नास्माकम्। कस्मात्?। अस्मच्छास्त्रे तदनुपदेशात्। विशेषस्योपदेशाच्च।

रघुनन्दनस्तु च्छन्दोगोप्येतदजानानः,—दधिमधुमात्रेण मधुपर्काभिधानं घृतासम्भवपरम्'—इति स्वच्छन्दादेव परिकल्प्य, 'तत्सम्भवे गोभिलः'—इत्यभिधाय, "मधुपर्कं दधिमधुघृतमपिहितं कांस्ये कांस्येन"—इति पारस्करगृह्यसूत्रम्; "पिहितं कांस्यस्थम्"—इत्याकुलीकृत्य लिखित्वा, 'पूर्व्ववचने पात्रानुपदेशात् कांस्यपात्रं विनापि मधुपर्कोदीयते'—इति ब्रुवन् कल्पनानैपुण्यमात्मनः ख्यापयाञ्चकार।

तदसङ्गतम्। मधुपर्कान्तरे मधुपर्कान्तरोक्तविशेषस्य संश्लेषाभावात्। 'यद्धि यदुपक्रम्य श्रुतं तत्तत्रैवाङ्गं नान्यत्र,'—इति भवानेवाह। प्रथमयोर्हि मधुपर्कयोर्विशेषः श्रूयते, नापरत्र। स खल्वयं विशेषएवान्यत्र नास्ति। तत्कुतएव तत्र पात्रानुपदेशात् प्रथमावपि मधुपर्कौ कांस्यपात्रं विना देयौ स्याताम्। तस्मात् न किञ्चिदेतत्। अपिच।

मध्वभावे घृतेन मधुपर्कं ग्रन्थान्तरकाराः स्मरन्ति, भवान् पुनः स्वातन्त्र्यातिशयात्मन्यते,—घृतासम्भवे दधिमधुमात्रेण मधुपर्कः— इत्यहो प्रमादः। घृतासम्भवे वचनस्य विषयत्वे खल्वशक्तविषयमेव वचनमिति कांस्यपात्रासम्भवेपि शक्यं नेतुम्। तस्याशक्तविषयत्वस्य भवतामविवादात्। ननु कथमेतद्वचनावष्टम्भेन दधिमधुघृतवाक्ये श्रूयमाणस्यापि कांस्यपात्रस्योपलक्षणतां भङ्ग्यन्तरेणाभ्युपगच्छति। वाक्ययोरनयोः परस्परमसम्बन्धात्। सोऽयं भवदीयएव बाणोभवन्तं प्रहरति। अपिच। साहसिकः खलु भवान् यः पारस्करीयं सूत्रं गोभिलीयमिति ब्रुवन् पारमर्षञ्च सूत्रमाकुलयन्नापत्रपते,—इति किमत्र ब्रूमः॥

अथेदानीम्—" "शृतमभिघार्य्योदगुद्वास्य प्रत्यभिघारयेत्"—इति सूत्रोक्तं चरोरभिघारणं प्रत्यभिघारणञ्च व्याकुरुते,—

**पवित्रान्तर्हितं कृत्वा चरुं प्राज्ञोऽभिघारयेत्।**
**उद्वास्य चैव विधिना एवं तन्त्रं न लुप्यते॥ ६९॥**

प्राज्ञोबुद्धिमान्, उदगग्रेण पवित्रेण चरुमन्तर्हितं व्यवहितं कृत्वा; चरुमध्ये उदगग्रं पवित्रं निधायेत्यर्थः। अभिघारयेत्—घृतस्रुवेणाप्लावयेत्। चरुमुत्तरस्यां दिशि उद्वास्य उत्तार्य्य च, पूर्व्वोक्तेनैव विधिना पुनरभिघारयेत्। एवं कृते तन्त्रमङ्गविस्तारोन लुप्यते॥

**चतुर्मुष्टिश्चरुः कार्य्यश्चतुर्णामुत्तरोऽपि वा।**
**कपालस्य प्रमाणेन अपूपानष्टकाविधौ॥ ७०॥**

चरुतन्त्रे चतुर्मुष्टिपरिमितश्चरुः कर्त्तव्यः। अपि वा,—अथवा, बहु-

दैवत्ये चरौ चतुर्णां मुष्टीनामुत्तरोऽधिकोऽपि चरुः कर्त्तव्यः। अष्टका-विधौ तु कपालस्य प्रमाणेन अपूपान्—मण्डकान् कुर्य्यात्। मुष्टिः पलमित्यनर्थान्तरम्। बह्वृपाणिः कस्मान्नोच्यते?। आचार्य्यविरो-धादित्याह। एवं खल्वेकदैवत्येपि चरौ चतुर्मुष्टिकरणे आचार्य्यसूत्रं विरुध्येत। तथाच सूत्रम्। "अमुष्मै त्वा जुष्टं निर्व्वपामीति देवताना-मादेशं सकृत् द्विस्तूष्णीम्"—इति। तस्मात्,—मुष्टिरत्र पलमेव,—इति प्रतिपद्यामहे। तदिदं हविःपरिमाणपरं वचनम्। अतएव कर्म्म-प्रदीपेऽपि,—

"देवतासंख्यया ग्राह्या निर्व्वापास्तु पृथक् पृथक्।
तूष्णीं द्विरेव गृह्णीयाद्धोमश्चापि पृथक् पृथक्।
यावता होमनिर्वृत्तिर्भवेद्वा यत्र कीर्त्तिता।
शेषश्चैव भवेत् किञ्चित्, तावन्तं निर्वपेच्चरुम्"।

इत्यत्र परवचनेन हविःपरिमाणमेवोक्तम्, न मुष्टिसंख्या। तस्याः पूर्व्ववचनेनैवोक्तत्वात्। 'तावन्तं चरुं निर्वपेत्'—इत्यस्यावचनव्यक्तेर्हविः परिमाणएव तात्पर्य्यावगतेश्च। तदनयोः परिमाणयोर्विकल्पो बोद्धव्यः। द्वयोरप्यस्मच्छास्त्रोक्तत्वात्। कात्यायनोऽपि 'भवेद्वा'—इति वा शब्देन परिमाणान्तरं सूचयति॥

**चतुर्भागं पाणितलात् कपालं याज्ञिकाविदुः।**
**पृथक्कपालान् कुर्व्वीत अपूपानष्टकाविधौ॥७१॥**

पाणितलाच्चतुर्भागं कपालं याज्ञिकाः जानन्ति। तदिदं कपालं यज्ञ एवोपयुक्तम्। अष्टकाविधौ पुनर्नैतादृशं कपालं, किन्तु तत्र पृथक्

कपालान्—अन्यादृशकपालसंस्कृतानपूपान् कुर्व्वीत। अथवा। करतलाच्चतुर्भागं कपालमित्येकं वाक्यम्। तदिदं न्यूनतरकपालपरिमाणाभिप्रायं वचनम्,—न पुनरतोऽपि न्यूनपरिमाणं कपालं कुर्य्यादित्ययमत्रार्थः। एवं खल्वनेन वाक्येन,—"त्रैयम्बकप्रमाणान्"—इति सूत्रम्—

"त्रैयम्बकं करतलमपूपामष्टकाः स्मृताः"।

इति वचनञ्च न विरोत्स्यते। अष्टकाविधौ पृथककपालान्—नाना कपालसंस्कृतान् अपूपान् कुर्व्वीत,—इत्यपरं वाक्यम्। तदनेन,—"एककपालान्"—इति सूत्रं व्याख्यातम्॥

**वपाहोमे मुखेनैवहोमे स्विष्टकृते तथा।**
**व्याहृतीर्न प्रयोक्तव्या मुखे नाप्सु च लक्षणम्॥ ७२॥**

"स्थालीपाकावृता वपामवदाय स्विष्टकृदावृतावाऽष्टकायै स्वाहेति जुहोति"—इति सूत्रोक्ते वपाहोमे, मुखेन होमे—पूर्व्वोक्ते, स्विष्टकृद्धोमे च, मन्त्रानादेशे प्रयोक्तव्यत्वेन पूर्व्वमभिहिताः व्याहृतयोन प्रयोक्तव्याः। एषु मन्त्रस्योपदेशात्—एषु कर्त्तव्येषु एतदनुकूलं यत् किञ्चित् क्रियते, तत्र न व्याहृतिप्रयोगः,—इत्ययमत्रार्थः। व्याहृतीः,—इत्यत्र पूर्व्वसवर्णोद्रष्टव्यः। "जातरूपेण वाऽऽदाय कुमारस्य मुखे जुहोति"—इत्यादिसूत्रोक्ते मुखहोमे, उदकहोमे च पूर्व्वोक्ते, लक्षणं गोभिलोक्तं न कर्त्तव्यम्॥

**सन्ततः प्रणवः कार्य्यः पितृयज्ञेषु ब्राह्मणैः।**
**उपांशुकरणञ्चापि सह कर्त्रा समस्वरैः॥ ७३॥**

पितृयज्ञेषु पितृकर्म्मसु, कर्त्ता कर्म्मकर्त्ता सह, समस्वरैर्ब्राह्मणैः, सन्ततोऽविरतः,—प्रतिमन्त्रमित्यर्थः। प्रणवओँकारः करणीयः। होमे, अन्यत्र च,—

"नोङ्कुर्य्याद्धोममन्त्राणां पृथगादिषु कर्हिचित्।

अन्येषाञ्च विकृष्टानां कालेनाचमनादिना"।

इति कर्म्मप्रदीपोक्तं द्रष्टव्यम्। उपांशु,—

"शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयन्।

किञ्चिच्छब्दं स्वयं विद्यादुपांशुः स जपः स्मृतः"।

इत्युक्तलक्षणं यथा भवति, तथा करणञ्च ज्ञेयम्। अथवा। उपांशुशब्दोविविक्तपर्य्यायोऽव्ययम्। तदयमर्थः। उपांशु विविक्ते पितृयज्ञस्य करणं बोद्धव्यम्। तथाच मनुः।

"शुचिं देशं विविक्तञ्च गोमयेनोपलेपयेत्"।

इति॥

"आसायमाहुतेः प्रातराहुतिर्नात्येति"—इत्यादि सूत्रैरतीतहोमानामागामिहोमकाले करणमुपदिष्टम्। तत्र, किमतीतहोमं हुत्वा आगामिहोमः कर्त्तव्यः, आहोस्वित् आगामिहोमं हुत्वा अतीतहोमः करणीयः?—इत्येतदिदानीं वर्णयिष्यामः,—

कालातीतेषु होमेषु उत्तरेष्वागतेषु च।

कालातीतानि हुत्वैव उत्तराणि समारभेत्॥७४॥

स्पष्टार्थः श्लोकः॥

यान्यतीतान्यतिक्रम्य उत्तराणि समारभेत्।

न देवाः पितरस्तस्य प्रतिगृह्णन्ति तद्धविः॥७५॥

यः पुनर्यानि अतीतानि कर्म्माण्यकृत्वा उत्तराण्यारभते, देवाः पितरश्च तस्य तत्—अतीतहोमीयं हविर्न प्रतिगृह्णन्ति । अथवा । 'यानि'—इति यः,—इत्यर्थे व्यत्ययात् पदम् । यः अतीतान्यकृत्वा उत्तराण्यारभते, देवाः पितरश्च तस्य तत्—सर्व्वमपि हविर्न प्रतिगृह्णन्ति ॥

अथेदानीम्—"अग्नये स्वाहेति पूर्व्वां तूष्णीमेवोत्तरां मध्ये चैवापराजितायाञ्चैव दिशीतिषायम्"—इति सूत्रोक्तामपराजितां दिशं व्याकुरुते,—

**प्रक्रमणे तथोद्वाहे होमे स्विष्टकृते तथा ।**
**यस्यां दिशि विधिं प्राहुस्तामाहुरपराजिताम् ॥ ७६ ॥**

प्रक्रमणे—वध्वाः सप्तपदीगमने,तथोत्तरविवाहे, स्विष्टकृद्धोमे च, यस्यां दिशि विधानं प्राहुराचार्य्याः, तां दिशमपराजितां ब्रुवन्त्याचार्य्याः; प्रागुदीचीमैशानीमित्यर्थः । तथाच प्रक्रमणे गोभिलसूत्रम् । "सूर्पेण शेषमग्नावोप्य प्रागुदीचीमभ्युत्क्रामयन्त्येकमिषइति"—इति । तथोत्तरविवाहे । "प्रागुदीच्यां दिशि यद्ब्राह्मणकुलमभिरूपम्"—इति । तथा स्विष्टकृद्धोमे । "अग्नये स्विष्टकृते स्वाहेत्युत्तरार्द्धपूर्व्वार्द्धे जुहुयात्"—इति ॥

**अयुक्तमम्ललवणैरपर्य्युषितमेवच ।**
**हविष्यमेतदन्नाद्यमसुरैश्चाप्यसंयुतम् ॥ ७७ ॥**

अम्ललवणैर्न युक्तम्, न च पर्य्युषितम्, नाप्यसुरैर्म्मिश्रितम् । तदीदृशमोदनाद्यं हविष्यमाहुः । असुरः—इति नैघण्टुककाण्डे मेघनामसु

पठितम्। तच्च तत्रोनत्रिंशत्तमं नाम। तथा च, असुरैर्मेघैर्मेघजलैर्न मिश्रितमित्येतत्। मेघोदकस्यापवित्रत्वात्। तथाच स्मरणम्।

"स्नानमाचमनं दानं देवतापितृतर्पणम्।

शूद्रोदकैर्न कुर्व्वीत तथा मेघाद्विनिःसृतैः"।

इति। अथ वा। असुरैः—क्षारविदाहिभिरमिश्रितमित्यर्थः। कथं ज्ञायते?। शृणु यथा ज्ञायते। असुरूपतापः—इति ह्यनर्थान्तरम्। असुं रान्ति ददति ये क्षारादयस्ते खल्विमे असुराः भण्यन्ते। असुरैः,—इति लिङ्गव्यत्ययाद्वा पदं द्रष्टव्यम्। असुराभिरित्यर्थः। असुरा रजनी हरिद्रेत्यनर्थान्तरम्। बहुवचनादन्यैरप्येवंविधैरमिश्रितम्—इति। अपरआह। 'असुरैरश्वादिभिर्न भक्षितम्'—इति।

तदनेन,—"हविष्यमन्नं प्रथमं परिजपितं भुञ्जीत"—इति सूत्रोक्तं हविष्यमन्नं व्याख्यातम्। "तावुभौ तत्प्रभृति त्रिरात्रमक्षारलवणाशिनौ"—इत्यादिना सूचितमक्षारलवणमप्यनेनैव व्याख्यातं वेदितव्यम्। एतदनुपदमेव 'हविष्यमन्नम्'—इति सूत्रणात्। तस्यैव खल्वक्षारलवणाशनस्य प्रथमे अशने विशेषविवक्षया सूत्रमिदं प्रवृत्ते,—'हविष्यमन्नम्'—इत्यादि। तदत्र, लवणमात्रप्रतिषेधात्,—क्षारमृत्तिकादिकृतलवणभिन्नं लवणमक्षारलवणम्,—इति रघुनन्दनव्याख्यानं नादरणीयम्। यच्च,—"लवणे सैन्धवसामुद्रे"—इति हविष्यान्नविषयं स्मरणान्तरम्। तदप्येतद्व्यतिरिक्तविषयं बोद्धव्यम्। कस्मात् कारणात्?। स्वशास्त्रपरिभाषायाः शीघ्रमुपस्थितत्वात्॥

इक्षवः सर्व्वखल्वाश्च कोद्रवा वरटैः सह।

अकृताग्रयणाभक्ष्या येषां नोक्ता हविर्गुणाः॥ ७८॥

इक्षवः, सर्व्वखल्वाः चणकाः, कोद्रवाः प्रसिद्धाः, वरटोवरटीत्यनर्थान्तरम्। तैर्वरटैः सह, इमे इक्षुप्रभृतयः अकृताग्रयणाः भक्षणीयाः। येषां हविर्गुणाः नोक्ताः—येषां हविष्ट्वं नोक्तं, तदिमे इक्षुप्रभृतयः इत्यर्थः। न कृतं आग्रयणं नवयज्ञेष्टिर्यैः, तदिमे अकृताग्रयणाः—अकृतनवयज्ञेष्टयोभण्यन्ते॥

**नवयज्ञेऽधिकारस्थाः श्यामाकाव्रीहयोयवाः।**
**नाश्नीयान च हुत्वैवमन्येष्वनियमः स्मृतः॥ ७९॥**

नवयज्ञे योऽधिकारः, तत्र तिष्ठन्ति,—इति नवयज्ञेऽधिकारस्थाः,—नवयज्ञे अधिकृताः—इत्येतत्। तदित्थम्भूताः श्यामाकादयः न हुत्वा—होममकृत्वा नवयज्ञमकृत्वा,—इति यावत्। नाश्नीयाः नाश्नीयाः। अन्येषु पुनर्गोधुमादिषु एवमनियमः होमस्यानियमः स्मृतः। अतएव गोभिलेन व्रीहियज्ञमभिधाय, "एतयैवावृता श्यामाकयवानाम्"—इति त्रिष्वेव नवयज्ञः सूचितः। गोधूमादिषु तु करणेऽभ्युदयः, अकरणेऽपि न प्रत्यवायः। सोऽयमाचार्य्यानुक्तो विशेषः। श्यामाकयज्ञोऽपि वनस्थस्यैव। "श्यामाकोवनिनः स्मृतः"—इति वचनात्॥

अथेदानीं श्राद्धमधिकृत्य पृच्छति,—

**श्राद्धे ब्राह्मणएकश्चेत् स्वल्पञ्च प्रकृतं यदि।**
**वैश्वदेवं कथं तत्र? इति मे संशयोमहान्॥ ८०॥**

श्राद्धे यद्येकोब्राह्मणः स्यात्, प्रकृतं श्राद्धोपयुक्तमन्नं वा यद्यल्पं स्यात्, तदा तत्र कथं वैश्वदेवं भवति,—इति मम महान् संशयः। तदिदं

प्रश्नद्वयम्—बहुद्रव्यसद्भावेऽपि ब्राह्मणासम्पत्त्या एकब्राह्मणपक्षे कथं वैश्वदेवं स्यात्,—इति। ब्राह्मणसम्पत्तिसम्भवेऽपि द्रव्यस्याल्पत्वेन बहु-ब्राह्मणभोजनासम्भवे कथं वैश्वदेवं स्यात्,—इति च॥

अत्रोत्तरमाह,—

**प्रणीतान्नाद्यमुद्धृत्य सर्व्वस्य प्रकृतस्य तु।**
**ब्राह्मणाय प्रदातव्यम्, एवं भवति सम्पदि॥८१॥**

प्रकृतस्य श्राद्धार्थमुपकल्पितस्य सर्व्वस्य, प्रणीतं प्रणेतुं योग्यमन्नाद्यमु-द्धृत्य पृथक् कृत्वा, वैश्वदेवार्थमित्यर्थः। दैवस्य प्रश्नविषयत्वादुत्त-रमपि तद्विषयमेव भवति। तदेवं दैवार्थमन्नं पृथक् कृत्वा निवेद्य श्राद्धात् परं तदन्नं ब्राह्मणाय कस्मैचित् प्रदातव्यं प्रतिपादयितव्यम्। तथा च वशिष्ठः।

"यद्येकं भोजयेत् श्राद्धे दैवं तत्र कथं भवेत्?।
अन्नं पात्रे समुद्धृत्य सर्व्वस्य प्रकृतस्य तु।
देवतायतने कृत्वा ततः श्राद्धं समापयेत्।
प्रास्येदग्नौ तदन्नन्तु दद्याद्वा ब्रह्मचारिणे"।

इति।

"एकस्मिन् ब्राह्मणे दैवे साग्नेरग्निर्भवेत् सदा।
अनग्नेः कुशमुष्टिः स्यात् श्राद्धकर्म्मणि सर्व्वदा"।

इति च स्मृत्यन्तरम्। स खल्वयं बहुद्रव्यसद्भावेऽपि ब्राह्मणासम्पत्तौ विधिः। कथं ज्ञायते?। द्रव्यविशेषणतया सर्व्वस्येति श्रुतेः। सर्व्वं हि भूरिद्रव्यवत्त्ववाची। अतोऽवगच्छामः—भूरिद्रव्यसद्भावेऽपि ब्राह्मणा-

सम्पत्तौ विधिरयम्—इति। तमिमं विधिं ब्राह्मणसम्पत्तावपि द्रव्यस्याल्पत्वे, अतिदिशति,—एवं भवति सम्पदि,—इति। ब्राह्मणसम्पत्तावपि द्रव्यस्याल्पत्वे एवमेव कर्त्तव्यमित्यर्थः॥

तत्र सामगस्य प्रशंसामाह,—

यद्येकं भोजयेत् श्राद्धे च्छन्दोगं तत्र भोजयेत्।
ऋचो यजूंषि सामानि त्रैविद्यं तत्र तिष्ठति॥ ८२॥

पूर्व्वार्द्धस्य हेतुरूपमुत्तरार्द्धम्। त्रैविद्यं त्रयोवेदाः। स्वार्थे तद्धितः। तत्र च्छन्दोगे। ऋज्वन्यत्॥

तत्र फलार्थवादमाह,—

ऋग्भिस्तु पितरः प्रीतायजुर्भिस्तु पितामहाः।
सामभिः प्रपितामहास्तस्मात्तं तत्र भोजयेत्॥ ८३॥

तं च्छन्दोगम्। तत्र श्राद्धे। शिष्टमन्यत्॥

अटेत पृथिवीं कृत्स्नां सशैलवनकाननाम्।
लभेत यदि पित्रर्थे साम्नामक्षरचिन्तकम्॥ ८४॥

वनकाननयोरवान्तरभेदविवक्षया पृथगुपन्यासः। अथवा। वनं नीरं जलमित्यनर्थान्तरम्। काननशब्दस्य गृहमप्यर्थोऽस्ति॥

एकस्य पुनः पुनः श्राद्धभोक्तृत्वेऽपि दोषोनास्तीति प्रसङ्गादाह,—

दर्भाः कृष्णाजिनं मन्त्राब्राह्मणाश्च विशेषतः।
नैते निर्माल्यतां यान्ति नियोज्यास्तु पुनः पुनः॥८५॥

कृष्णाजिनं मृगचर्म्म। प्रसिद्धाश्चान्ये। एते दर्भादयोनिर्माल्यतां निर्वीर्य्यतां न प्राप्नुवन्ति। तस्मात्, पुनः पुनरपि नियोज्याः। तत्त्वकारस्त्वन्यथेमं श्लोकं पठति;—

दर्भाः कृष्णाजिनं मन्त्राब्राह्मणाहविरग्नयः।

अयातयामान्येतानि नियोज्यानि पुनः पुनः।

इति। एवं खल्वग्रिमश्लोके,—"निर्माल्याश्चितिपावकाः"—इति वचनमाञ्जस्येनोपपद्यते। तत्र, अयातयामत्वम् अपि अनिर्म्माल्यता पर्य्यवसायि बोद्धव्यम्। कुतः?।

"जीर्णञ्च परिभुक्तञ्च यातयाममिदं द्वयम्"।

इत्युक्तेः। स्मृत्यन्तरेतु विशेषः;—

"संग्रहाद्वत्सरं यावत् शुद्धिः स्याद्दिभवर्हिषाम्।

अतः परं न गृह्णीयात् जपादौ यज्ञकर्म्मणि"।

इति। 'अत्रच,—

"मासे नभस्यमावस्या तस्यां दर्भचयोमतः।

अयातयामास्ते दर्भाविनियोज्याः पुनः पुनः"।

इति मरीचिवचनात् श्रावणामस्यायामेव चितानां दर्भाणामयातयामत्वम्'। एवमेके। 'सर्व्वदैव चितानां दर्भाणामयातयामत्वम्। मरीचिवचनन्तु,—

"वार्षिकांस्तुरोमासान् नाहरेत् कुशमृत्तिकाः।

आददीत त्वभावे तु सद्योयस्योपयोजनम्"।

इत्यस्य निषेधस्यापवादकम्'। एवमपरे। तदत्र भवन्तोभूमिदेवाः प्रमाणम्॥

किममीषां न भवत्येव निर्माल्यता ?। एवं खलु प्राप्तम् । ततइद-मारभ्यते,—

दर्भाः पिण्डेषु निर्माल्याविप्राः प्रेतान्नभोजने ।
मन्त्राः शूद्रेषु निर्माल्यानिर्म्माल्याश्चितिपावकाः ॥ ८६ ॥

पिण्डेषु प्रक्षिप्तादर्भानिर्माल्याभवन्ति—कर्म्मानर्हादृत्यर्थः। प्रेतान्नस्य—प्रेतार्थौषिनामन्नस्य प्रेतश्राद्धान्नस्य वा भोजने कृते, विप्रानिर्म्माल्या-भवन्ति। शूद्रेषु प्रयुक्तामन्त्रानिर्म्माल्याभवन्ति। चितायां ये अग्नयः ते निर्म्माल्याभवन्ति ॥

पिण्डार्थं ये स्तृतादर्भास्तर्पणन्तु कृतन्तु यैः ।
धृतैः कृते च विण्मुत्रे त्यागस्तेषां विधीयते ॥ ८७ ॥

ये दर्भाः पिण्डनिर्व्वपणार्थं स्तृताः, यैश्च दर्भैः,—"यैः कृतं पितृतर्पणम्" —इति स्मरणात्—पितृतर्पणं कृतम्, धृतैर्दर्भैः—(इत्थम्भावे तृतीया) —विण्मुत्रे कृते च, तेषां दर्भाणां परित्यागः क्रियते ॥
अवसिता प्रासङ्गिकी कथा। प्रकृतामिदानीमनुवर्त्तामहे,—

उरसि पितरोभुङ्क्ते वामपार्श्वे पितामहाः ।
प्रपितामहादक्षिणतः पृष्ठतः पिण्डतक्षुकाः ॥ ८८ ॥

श्राद्धे एकस्य ब्राह्मणस्य भोजने, तस्योरसि हृदये—अयतदत्येतत्। पितरोभुञ्जते। परतोप्येवं वर्णनीयम्। 'पिण्डतक्षुकाः पिण्डलेपभुज श्चतुर्थाद्याः पितरः',—इति दीक्षितभाष्यम्। तइमे पृष्ठतोभुञ्जते ॥

क्षुते निष्ठीवने चैव दन्तोच्छिष्टे तथाऽनृते।
पतितानाञ्च संभाषे दक्षिणं श्रवणं स्पृशेत् ॥ ८९ ॥

क्षुते कृते। निष्ठीवने श्लेष्मादिनिरसने कृते। दन्तोच्छिष्टे—दन्तलग्नोच्छिष्टे, जिह्वाभिमर्षणयोग्ये निगीर्णे वा,—इत्यभिप्रेतम्। कथं ज्ञायते?। "दन्तश्लिष्टे दन्तवदन्यत्र जिह्वाभिमर्षणात्, प्राक् च्युतेरित्येके। च्युतेरास्रावविद्यान्निगिरन्नेव तत् शुचिः"—इति स्मरणात्। तथा अनृते मिथ्यावचने कथिते, पतितानां सम्भाषे च, दक्षिणं कर्णं स्पृशेत्। स खल्वयं कर्म्मकाले विधिरित्यवगच्छामः। "सुप्त्वा भुक्त्वा क्षुत्वा स्नात्वा पीत्वा विपरिधाय च, रथ्यामाक्रम्य श्मशानञ्चाचान्तः पुनराचामेत्"—इति गोभिलसूत्रमपि कर्म्मकालादन्यत्र,—इति च प्रतिपद्यामहे। किं कारणम्?। परस्परविरोधो न भविष्यति,—इति। तथाच स्मरणम्।

"क्षुते निष्ठीविते सुप्ते परिधानेऽश्रुपातने।
कर्म्मस्थएषु नाचामेत् दक्षिणं श्रवणं स्पृशेत्"।

इति॥

दक्षिणकर्णस्पर्शे हेतुविवक्षया इदमाह,—

मरुतः सोमइन्द्राग्नी मित्रावरुणौ तथैव च।
एते सर्व्वे च विप्रस्य श्रोत्रे तिष्ठन्ति दक्षिणे ॥ ९० ॥

एतस्मात् कारणात् दक्षिणश्रवणं स्प्रष्टव्यम्। मरुतो वायवः अमरा

वा। सेमादीनां पृथगुपन्यासोविशेषविवक्षया भविष्यति। मित्रा-वरुणो,—इति देवताद्वन्द्वे दीर्घः॥

**आत्मतन्त्रेषु यन्नोक्तं तत् कुर्य्यात् पारतन्त्रिकम्।**
**विशेषाः खलु सामान्याये चोक्ता वेदवादिभिः॥९१॥**

तन्त्रं शास्त्रमित्यनर्थान्तरम्। आत्मनस्तन्त्रेषु यन्नोक्तं, तत् परतन्त्रोक्तं कुर्य्यात्। ये च सामान्याः सर्व्वशाखिसाधारणाः, विशेषाः,—

"नित्यं स्नात्वा शुचिः कुर्य्याद्देवर्षिपितृतर्पणम्"।

इति।

"सन्तोषं परमास्थाय सुखार्थी संयतोभवेत्"।

इति चैवमादाय, वेदवादिभिर्मन्वादिभिरुक्ताः, ते च कर्त्तव्याः। एवं वा—

ये च साधारणाविशेषाः—आचमनादयः, मन्वादिभिरुक्तास्तेच कर्त्तव्याः। तदिदं श्रौताभिप्रायं वचनम्। कथं ज्ञायते?।

"स्मार्त्तं साधारणं तेषु ग्राह्यं श्रौतेषु कर्म्मसु"।

इति गृह्यपरिशिष्टान्तरदर्शनात्। एवं वा—

ये च सामान्याः साधारणाः—परिभाषारूपाः इत्येतत्। विशेषाः—"उच्चैर्ऋचा क्रियते उच्चैः साम्ना उपांशु यजुषा"—इत्येवमादयः, वेदवादिभिरुक्ताः, ते च कर्त्तव्याः। वेदं वदितुं शीलं येषां तइमे वेदवादिनो वेदप्रवक्तारः कठादयो भण्यन्ते। न खलु तत्र भवन्तो मन्वादयो वेदवादिनः, स्मर्त्तारोहि ते वेदार्थस्य।

एवं वा—

सामान्याः—समानकर्म्माश्रयाः ये विशेषाः वेदवादिभिरुक्ताः, ते च करणीयाः। तदनेन,—शाखान्तरीयगुणानामपि शाखान्तरे उपसंहारः कर्त्तव्यः—इत्युक्तं भवति। तथाच गृह्यपरिशिष्टान्तरम्।

"श्रौतेषु सर्व्वशाखोक्तं सर्व्वस्यैव यथोचितम्"।

इति। सेयं शाखान्तराधिकरणन्यायमूला स्मृतिरिति द्रष्टव्यम्। किं भवति तर्हि प्रयोजनं पूर्व्वार्द्धस्य? नन परार्द्धेनैव गुणोपसंहार उपदिष्टः। उच्यते। यदात्मतन्त्रे उपदिष्टं तत्र परतन्त्रोक्तगुणोपसंहारः परार्द्धस्यार्थः। यत् पुनर्नोपदिष्टमेवात्मनस्तन्त्रे, तदपि परतन्त्रोक्तं करणीयमिति प्रयोजनं पूर्व्वार्द्धस्य। यथा खल्वग्निहोत्रमस्मच्छाखायां नोपदिष्टं, तदपि याजुर्व्वेदिकमनुष्ठीयतेऽस्माभिः। तदेतत् परिशिष्टकृतः कात्यायनस्य वचनसंवादेनावधार्य्यते। तच्चोदाहरिष्यामः॥

**ऊनोवाऽप्यतिरिक्तोवा यः स्वशास्त्रोक्तमाचरेत्।**
**तेन सन्तनुयात् यज्ञं न कुर्य्यात् पारतन्त्रिकम्॥९२॥**

स्वशास्त्रे न्यूनोवा अधिको वा योविधिरुक्तः; तं स्वशास्त्रोक्तं विधिमाचरेत्। तेनैव यज्ञं विस्तारयेत्। परतन्त्रोक्तं न कुर्य्यात्॥

**यः स्वशाखोक्तमुत्सृज्य परशाखोक्तमाचरेत्।**
**अप्रमाणमृषिं कृत्वा सोऽन्धे तमसि मज्जति॥९३॥**

यः पुनः स्वशाखोक्तं त्यक्त्वा परशाखोक्तमाचरति, स खल्वयमृषिं स्वशाखाचार्य्यमप्रमाणं करोति। स खल्वृषिमप्रमाणं कृत्वा अन्धे तमसि—नरके पतति।

इदमिदानीं सन्दिह्यते। एवन्तावत्—'आत्मतन्त्रेषु यन्नोक्तम्'—इत्यनेन पारतन्त्रिकमपि कर्त्तव्यतयोपदिष्टम्, 'ऊनोवाप्यतिरिक्तोवा'—इत्यनेन 'यः स्वशाखोक्तमुत्सृज्य'—इत्यनेन च पुनरेतन्निषिद्धम्, किं पुनरत्र तत्त्वम्?। उभयं तत्त्वमित्याह। कुतः?। उभयोरेवोपदेशात्। विरुद्धं तर्हि?। न। विषयभेदात्। कथम्?। उच्यते। 'आत्मतन्त्रेषु यन्नोक्तम्'—इति तावत् श्रौताभिप्रायम्। 'ऊनोवा'—इत्यादिकन्तु गृह्यशास्त्राभिप्रायकम्; इति विषयभेदादुभयं तत्त्वमिति निश्चीयते। कथं पुनर्ज्ञायते;—गृह्यशास्त्राभिप्रायेणोत्तरः पक्षः—इति?। पारिशेष्यादिति ब्रूमः। श्रौताभिप्रायेण पूर्व्वः पक्ष इति खल्ववोचाम। तस्मादुत्तरः पक्षः पारिशेष्याद्गृह्यशास्त्राभिप्रायेण भविष्यति।

इतश्चैतदेवं भविष्यति,—अप्रमाणमृषिं कृत्वेत्यभिधानात्। नो खल्वपि श्रौतेषु पारशाखिकमाचरन् ऋषिमप्रमाणं करोति। न खल्वृषिः कर्त्ता वेदस्य। नित्योहि वेदराशिर्मीमांसकानाम्, अपौरुषेयश्चान्येषाम्। 'प्रवक्तेतिचेत्,—इति चेद्भवान् पश्यति; माभूत् कर्त्ता ऋषिर्वेदस्य, प्रवक्ता तु भवति'। 'भवतु, किमतो भवति?'। 'एतदतो भवति,—यद्येवं, श्रौतेष्वपि पारशाखिकमाचरन् प्रवक्तारमृषिमप्रमाणं करोति'। 'नैतत् साधु मन्यामहे। पूर्व्वसिद्धां हि वाचमृषिः प्रोवाच। पारशाखिकञ्चाचरन् तामेव वाचमप्रमाणां करोति, न ऋषिम्। न वा, नित्यनिर्दोषस्य पूर्व्वसिद्धस्य वेदस्य अप्रामाण्यमनुपन्यस्य परसिद्धस्य प्रवक्तुर्ऋषेरप्रामाण्यं युक्तमुपन्यसितुम्। तदधीनसिद्धत्वात्तस्य। गृह्यशास्त्राभिप्रायत्वे तु वाक्यस्यैतत् स्यात्। वेदार्थ-

मनुस्मरन् खल्वृषिः प्रयोगशास्त्रं रचयाञ्चकार। तच्चातिक्रामन् नून-मृषिमप्रमाणं करोति। तदनुमितां श्रुतिमपि,—ऋषिमप्रमाणं कुर्व्वन्नेव अप्रमाणं करोति'। शास्त्रान्तरदर्शनाच्चैवमवगच्छामः। तथाच गृह्यपरिशिष्टान्तरम्।

"प्रयोगशास्त्रं गृह्यादि न समुच्चीयते परैः।
प्रयोगशास्त्रताहानेरनारम्भविधानतः।
बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म्म प्रकीर्त्तितम्।
तस्य तावति शास्त्रार्थे कृते सर्व्वः कृतोभवेत्।
श्रौतेषु सर्व्वशाखोक्तं सर्व्वस्यैव यथोचितम्।
स्मार्त्तं साधारणं तेषु ग्राह्यं श्रौतेषु कर्म्मसु"।

इति। 'यथोचितम्'—इति कुर्व्वन्नविरोधिनएव परोक्तस्य करणमनुजानीते। कात्यायनोऽपि कर्म्मप्रदीपे,—

"अक्रिया त्रिविधा प्रोक्ता मुनिभिः कर्म्मकारिणाम्।
अक्रिया च परोक्ता च तृतीया चायथाक्रिया"।

इति गृह्यशास्त्राभिप्रायेण परोक्तां क्रियां निन्दित्वा,—

"यन्नाम्नातं स्वशाखायां परोक्तमविरोधि च।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्म्मवत्"।

इति श्रौतमेवाग्निहोत्रादिकं पारशाखिकं कर्त्तव्यमुपदिशति। तदेव-मादिभिर्व्वचनैरवगच्छामः,—श्रौतेषु पारशाखिकं करणीयं न गृह्योक्तेषु,—इति।

आह। 'यदि प्रयोगशास्त्रं गृह्यादि परैर्न समुच्चीयते, परं तर्हि सामान्यं विधानमनर्थकं भवति'। 'यदि भवत्यनर्थकं, किमिति

वयमुपालभ्येमहि'। 'न युष्मानुपालभामहे,—किन्तु, माभूदनर्थकमिति तदपि समुच्चिनुमः,—इति ब्रूमहे'। 'निरङ्कुशत्वात्ते तुण्डस्यैवं ब्रवीषि, न तु प्रमाणोपेतं ब्रवीषि। प्रयोगशास्त्रविरोधाद्धि नायं समुच्चयः सेढुमर्हति। योहि सामान्यस्य विधानस्यानर्थक्यं परिजिहीर्षुस्तदपि समुच्चिनोति, स खल्वयं स्वशास्त्राचार्य्यमृषिं प्रमाणं सन्तमप्रमाणं करोति। क्रममपि प्रयोगशास्त्रीयं विरुणद्धि। उत्सृजति च स्वशाखाश्रयं विधानम्। सेयं पितरमुपेक्ष्य श्वशुरे गाढ़ा भक्तिः। कात्यायनोऽपि,—

"स्वशाखाश्रयमुत्सृज्य परशाखाश्रयन्तु यः।
कर्त्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितम्"।

इत्यनेन एनं निन्दति। योहि ऋषिभिर्निन्द्यते, स कथं श्रद्धेयस्तत्र भवतां शिष्टानाम्'। 'अथ यथोभयमपि न विरोत्स्यते, तथा करिष्यामः'। 'नैवं शक्यम्'। 'कस्मात्?'। 'असम्भवात्। स्वशाखाश्रयस्य खल्वन्तराऽन्तरा किमपि किमपि सामान्यं विधानं निवेशयन् सामान्यमपि विधानमाकुलयति, स्वशाखाश्रयमपि। सोयं समुच्चयो न प्रयोगशास्त्रं नापि सामान्यं विधानमुपकरोति, क्रममन्यथयन् प्रधानमपि विगुणयति। तथाच, वृद्धिमिष्टवतो मूलमपि नष्टम्'। 'अथ, क्रमः पदार्थानामुपकारे वर्त्तते। पदार्थप्राप्तेरुत्तरकालं हि क्रम आपतति। यदा च पदार्थः प्राप्नोति, तदा क्रमएव नास्ति। न खलु पश्चिमसिद्धेन क्रमेण विरोधात् पूर्व्वसिद्धः पदार्थएव न कर्त्तव्योभवति। तस्मात्, न्यायविरोधस्त्वत्पक्षे दोषः'। 'भवेदेतदेवम्,—यदि वचनमत्रार्थे प्रमाणं न स्यात्। अस्ति च वचनम्—

प्रयोगशास्त्रम्—इत्यादि। किमिवहि वचनं न कुर्य्यात्। नहि वच-नस्य कश्चिदतिभारोनाम। भवदीयेऽपि पक्षे न्यायान्तरविरोधो-ऽनाग्दर्त्ते। न च पदार्थोऽपि पूर्व्वसिद्धः। सिसाधयिषितः खल्वेष भवता। विषमश्चायमुपन्यासः। सर्व्वपदार्थानां शेषभूताः खल्वाचम-नादयः प्राबल्यादनुष्ठीयन्ते, न सर्व्वे। नचाचानुतिष्ठासितानां शेषत्वं प्रामाणिकम्।

भिन्नानि चेमानि कर्म्माणि प्रयोगशास्त्रीयाणि सामान्यानि च नाम साम्येऽपि, यथासम्भवं रूपभेदादिभ्योहेतुभ्यः। संयोगचोदनाभेद-मप्येतेषु बहुलमुपलभामहे। तत्रैवंसति कुत्र कस्य गुणानुपसंहरसि। कर्म्मभेदे गुणोपसंहारन्यायस्याविषयात्। आह्लोसि चेत्, प्रयोग-शास्त्रीयं विधानमनुष्ठाय यथासम्भवं सामान्यमपि विधानं कामं पृथगेवानुतिष्ठ। किमित्युभयमपि विधानमन्यथयित्वा नरसिंहाकार-मभिनवं विधानान्तरं स्वरुच्यैव निर्म्मिणोषि। यथा खल्वेकस्माद्वाक्या-दाख्यातपदमन्यस्माच्च नामपदं गृहीत्वा योवाक्यार्थः सम्पद्यते पुरुष-कल्पनामूलः, तादृशोह्ययं परिचिकल्पयिषितः प्रयोगोभवति। स खल्वनपेक्षणीयस्तत्रभवताम्। तथाचोक्तम्। "धर्म्मस्य शब्दमूलत्वाद-शब्दमनपेक्षं स्यात्"—इति। अतएव स्वशाखाश्रययोर्वैश्वदेवबलि-कर्म्मणोरन्ते सामान्ययोरपि तयोः काममनुष्ठानं कात्यायनः स्मरति कर्म्मप्रदीपे,—

"न स्यातां काम्यसामान्यजुहोतिबलिकर्म्मणी।
पूर्व्वं नित्यविशेषोक्तजुहोतिबलिकर्म्मणः।
काममन्ते भवेयातां न तु मध्ये कदाचन।

नैकस्मिन् कर्म्मणि तते कर्म्मान्यत्तायते यतः”।

इति। यदि समुच्चयं कात्यायनोऽभिप्रैष्यत्, नूनमवदिष्यत्। अवदनाच्चावगच्छामः,—नैष समुच्चयः कात्यायनस्याभिप्रेतः,—इति। तस्मादियमेवावधारणा,—श्रौतेषु पारशाखिकं सामान्यञ्च विधानं कर्त्तव्यम्, गृह्योक्तेषु तु पारशाखिकं न कर्त्तव्यमेव, सामान्यञ्च विधानं गृह्योक्तविधानानुष्ठानादनन्तरमिच्छया प्रयोगान्तररूपेण करणीयम्,—इति। तदेवं सति “प्रयोगशास्त्रम्”—इत्यादीनि वचनान्यनुगृहीतानि भवन्ति नान्यथा। श्रौतेषु च तासु तासु शाखासु तत्तत्शाखिनामेवर्त्त्विजां कर्म्मोपदिष्टं न सर्व्वेषाम्, सर्व्वशाखिभिश्चर्त्त्विग्भिः प्रायोयज्ञोनिर्व्वहति, न तावन्मात्रैः,—इति विशेषोऽप्यस्ति। अन्येपि विशेषाः शाखान्तराधिकरणे शारीरके च द्रष्टव्याः’।

रघुनन्दनस्त्वेतदबुद्ध्वा वचनञ्चाजानानः,—‘सर्व्वत्रैवाविशेषेणाकाङ्क्षितं पारशाखिकं करणीयं न अनाकाङ्क्षितम्’—इति स्वरुच्यैव कल्पयाञ्चकार। तदश्रद्धेयम्। आकाङ्क्षाऽपि तदभिप्रेता न प्रामाणिकी। यत्र हि यावती इतिकर्त्तव्यता निर्दिष्टा, तत्र ततएव आकाङ्क्षा निवर्त्तते—विशेषहेतुं विना,—इति हि तान्त्रिकानां निर्णयः। अवश्यञ्च तेनाप्येतदङ्गव्यम्। अन्यथा पारशाखिकगुणोपसंहारेऽप्याकाङ्क्षा न निवर्त्तेत। इत्यस्तु किं विस्तरेण॥

पुनरुक्तमतिक्रान्तं यत्र सिंहावलोकितम्।
गोभिले ये न गृह्णन्ति न ते ज्ञास्यन्ति गोभिलम्॥
॥ ९४॥

पुनरुक्तम्—उक्तस्य पुनःकथनम्। अतिक्रान्तम्—अतिक्रम्य संबन्धः व्यवहितयोजना इति यावत्। यत्र सिंहावलोकितम्—सिंहावलोकितन्यायेन पराचीनस्य पूर्व्वत्रान्वयः। ये खल्वेतत् त्रयं गोभिले—गोभिलगृह्यशास्त्रे न गृह्णन्ति, ते गोभिलगृह्यशास्त्रं तत्त्वतो न जानन्ति। उदाहरणममीषां गृह्यसूत्रादस्मत्कृततद्भाष्याच्चोपलभ्यम्। विस्तरभयान्नेह प्रस्तूयते॥

एतच्छास्त्राध्ययनफलमाह,—

गोभिलाचार्य्यपुत्रस्य योऽधीते संग्रहं पुमान्।
सर्व्वकर्म्मस्वसंमूढः परां सिद्धिमवाप्नुयात्॥ ९५॥

गोभिलाचार्य्यपुत्रस्य संग्रहमिमं गृह्यासंग्रहाख्यं यः पुमानधीते, स खल्वयं सर्व्वकर्म्मसु गृह्योक्तेषु असंमूढः मोहरहितः परामुत्कृष्टां सिद्धिं प्राप्नोति॥

अत्रैव शिवम्॥
श्लोकाः—९५
आदितः श्लोकाः—२०८॥

कैकयेषु वसता द्विजन्मना
तन्त्रजालमवलोक्य निर्म्मितम्।
जीरन्ध्रमणिचन्द्रसम्मिते
वत्सरे वृषगते रवाविदम्॥ १॥

सर्गस्थितिप्रत्ययवहारहेतौ
अलोकसामान्यनयप्रवृत्तौ ।
दोषाकरेप्यादरमादधाने
समर्पितं भाष्यमिदं स्मरारौ ॥ २ ॥

सत्यपि दोषकलापे गुणलेशनिबद्धपक्षपातानाम् ।
जनयतु विदुषां तोषं कृतिरेषा चन्द्रकान्तस्य ॥ ३ ॥

यद्यपि भवति कृतीनामुपहास्यमिदं गुणेन हीनत्वात् ।
परिशीलयन्तु शिष्यास्तथापि गुरुगौरवार्द्रमनसोमे ॥ ४ ॥

अन्ध इव स्फुटदोषे गुणेषु विरलेषु वैनतेयइव ।
जयति जगत्यां लोकः कतिपयइह नौमि तं भक्त्या ॥ ५ ॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारभट्टाचार्य्यस्य कृतौ गृह्यासंग्रहभाष्ये द्वितीयः प्रपाठकः समाप्तः ॥ समाप्तश्चायं गृह्यासंग्रहः ॥

शुभमस्तु ॥ श्रीरस्तु ॥

———

# श्राद्धकल्पः।

## गोभिलप्रणीतः।

तत्र

### प्रथमा कण्डिका।

वातोयस्य चिराय चामरधरोवेदादयोवन्दिनः
सूर्य्याचन्द्रमसौ प्रदीपसदृशौ खस्मिन् महिम्नि स्थितिः।
सर्गोरक्षणमप्ययस्य जगतां कृत्यं गुणामन्त्रिणो-
भृत्यास्ते ऋतवोविचित्रविभवाः कस्मैचिदस्मै नमः॥
उदयतु मानसगगने पित्रोः पद-नख-सुधाकर-श्रेणी।
अन्तर्गतमपि भूयोया तमसां राशिमुपहन्ति॥
विलोक्य पारमर्षाणि तन्त्राण्यालोच्य संग्रहान्।
छन्दोगश्राद्धकल्पस्य भाष्यमाभाष्यतेऽधुना॥

तत्रभवान् सूत्रकारोगृह्यसूत्रोद्दिष्टस्यान्वाहार्य्यस्यान्येषाञ्च श्राद्धानां प्रयोगं प्रतिपिपादयिषुः श्राद्धकल्पाख्यमिदं शास्त्रं रचयाञ्चकार। छन्दोगश्राद्धप्रयोगजिज्ञासूनां सुखावगतये तस्येयमल्पग्रन्था वृत्तिरारभ्यते। व्याचिख्यासितस्य श्राद्धकल्पशास्त्रस्येदमादिमं सूत्रम्—

**अथ श्राद्धम्॥ १॥**

वर्त्तिष्यते,—इति सूत्रशेषः। तत्रायमथशब्दश्चानन्तर्य्यार्थः। सम्बन्धकरणार्थश्च। उच्चार्य्यमाणश्च मङ्गलप्रयोजनोभवति। आनन्तर्य्यार्थस्तावत्,—"अमावस्यायां तत् श्राद्धम्" "इतरदन्वाहार्य्यम्"—इति

सूचयता भगवता गृह्यकारेणाग्निमतामन्वाहार्य्यं नाम श्राद्धं विहितम्। न च तस्येतिकर्त्तव्यता काचिदभिहिता। भवितव्यन्तु तया। अनग्निमतामपि श्राद्धं सपरिकरं वक्तव्यम्। अतो गृह्यशास्त्राध्ययनानन्तरं श्राद्ध-प्रयोग-प्रतिपित्सया श्राद्धकल्पाख्यमिदं शास्त्रमध्येतव्यमित्ययमर्थः। आवसथ्याधानादीनि कर्म्माणि गृह्यकारेणोक्तानि। श्राद्धन्तु न तथोक्तम्। तदिदानीमस्माभिर्वक्तव्यमित्यभिप्रायः।

सम्बन्धकरणस्य च प्रयोजनम्;—गृह्योक्ताः परिभाषाः कथमत्रापि प्राप्नुयुः—इति। कथं च न प्राप्नुयुः?। शास्त्रान्तरत्वादस्य, गृह्यकर्म्मविषयत्वाच्च परिभाषाणाम्। शास्त्रान्तरं खल्वेतत् श्राद्धकल्पाख्यं गृह्यशास्त्रात्। परिभाषाश्च गृह्यकर्म्मविषयाभवन्ति,—इति गृह्यभाष्येऽवोचाम। अथापि स्यात्,—अन्वाहार्य्यस्य गृह्योक्तत्वात् तत्र गृह्योक्ताः परिभाषाः प्राप्नुयुः?—इति। अत्रोच्यते। सत्यं प्राप्नुयुरग्निमतामेव। तेषामेव श्राद्धस्यान्वाहार्य्यपदाभिधेयत्वात्। अनग्निमतामपि श्राद्धे कथं नु ताः प्राप्नुयुरिति खल्वसौ सम्बन्धः क्रियते। उच्यते। अनग्निमतामपि प्राप्नुयुः,—इति पश्यामः। किं कारणम्?। यदयं पिण्डपितृयज्ञधर्म्मानत्र प्रदेक्ष्यति। एवन्तर्हि सम्बन्धकरणात् कौथुमादिविषयत्वमस्यावगम्यते। तस्मात्,—गोभिलगृह्योक्तस्यैव पिण्डपितृयज्ञस्य धर्म्मा अत्र प्रदिश्यन्ते। अन्यथा न ज्ञायते,—कस्य पिण्डपितृयज्ञस्य धर्म्माः प्रदिश्यन्ते,—इति।

श्राद्धम्,—इति कर्म्मणोनामधेयम्। तथाचापस्तम्बसूत्रम्। "अथैतन्मनुः श्राद्धशब्दं कर्म्म प्रोवाच"—इति। तदिदम्—"तस्येदम्"—इति वा, "तेन कृतम्"—इति वा, "चूड़ादिभ्य उपसंख्यानम्"—

इति वा भवति। सेयं यथाकथञ्चिद्व्युत्पत्तिः। प्रसिद्धिस्तु वक्ष्यमाण-लक्षणे कर्म्मणि द्रष्टव्या। यच्च रघुनन्दनेन,—

"संस्कृतं व्यञ्जनाद्यान्नं पयोदधि घृतं मधु ।
श्रद्धया दीयते यस्मात् तेन श्राद्धं निगद्यते" ।

इति पुलस्त्यवचनं श्राद्धशब्दस्य कर्म्मनामधेयतायां प्रमाणम्—इति, तद्वचनबलेनैव,—श्रद्धयाऽन्नादेर्यद्दानं तत् श्राद्धम्—इति चाभिहितम्। तदसङ्गतम्। दानार्थे तद्धितस्याननुशासनात्। अपिच। दीयते,—इति कर्म्मणि तिङः श्रवणादन्नं खल्वत्र विशिष्यते। तेन, दीयमानस्यान्नादेरत्र श्राद्धत्वमुच्यते, न कर्म्मणः। दृश्यते खल्वन्यत्राप्यन्नस्य श्राद्धव्यपदेशः,—"अदैवं भोजयेत् श्राद्धम्"—इति, "श्राद्धभुक् चाष्ट वर्जयेत्"—इति, "श्राद्धभोक्ता च कर्त्ता च"—इति, "अशक्तौ श्राद्धभोजने"—इति चैवमादौ बहुलम्। तदिदं पुलस्त्यवचनं न श्राद्धशब्दस्य कर्म्मनामधेयतायां नवोक्तार्थतायां प्रमाणमित्यफलमेव प्रलपितम्। न खल्वन्नादेर्दानमेव श्राद्धं। किन्तु यच्चैतत् श्रद्धया दीयते, तदेव कर्म्म श्राद्धशब्दाभिधेयं भवति। कथं ज्ञायते?।

"प्रेतं पितॄंश्च निर्दिश्य भोज्यं यत् प्रियमात्मनः ।
श्रद्धया दीयते यत्र तत्श्राद्धं परिकीर्त्तितम्" ॥

इति पृथ्वीचन्द्रोदयादिधृतमरीचिवचनात्। इत्यास्तां विस्तरः ॥१॥०॥

## अमावस्यायां पितृभ्योदद्यात् ॥ २ ॥

स्फुटतरार्थः। अमावस्यायाम्,—इति सप्तमीनिर्देशात् निमित्तत्वमस्यावगच्छामः। स्मरन्ति च।

"न निर्व्वपति यः पिण्डं प्रमीतपितृकोनरः।
इन्दुक्षये मासि मासि प्रायश्चित्तीयते तु सः"।

इति। न च, कृष्णपक्षनिमित्तकएव श्राद्धे प्रशस्तकालोऽमावस्येत्यभिप्रायेणेदं वचनम्—इति भ्रमितव्यम्। प्रशस्तकालस्यातिक्रमे प्रायश्चित्ताभ्यनुज्ञानानुपपत्तेः। नचात्र कृष्णपक्षस्य नामापि श्रूयते। तथा याज्ञवल्क्यः।

"अमावस्याऽष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम्"।

इति कृष्णपक्षाद्भेदेनैवामावस्यां स्मरति। तथा मत्स्यपुराणे,—

"अमावस्याष्टकाकृष्णपक्षपञ्चदशीषु च"।

इत्यादीन्यभिधाय,—

"एतच्चानुपनीतोऽपि कुर्य्यात् सर्व्वेषु पर्व्वसु।
श्राद्धं-साधारणं नाम सर्व्वकामफलप्रदम्।
भार्य्याविरहितोऽप्येतत् प्रवासस्थोऽपि नित्यशः।
शूद्रोऽप्यमन्त्रवत् कुर्य्यादनेन विधिना बुधः"।

इत्यमावस्यायां कृष्णपक्षे च पृथक् पृथक् श्राद्धमभिहितम्। तदिदं साधारणं नाम श्राद्धम्,—इत्यनग्निमतामप्यमावस्यायां कृष्णपक्षे च करणीयं भवति। अन्यथा साधारणत्वमस्य पीड्येत। अपि च मात्स्ये तावत् पुराणे, पूर्व्वस्मिन्नध्याये,—

"पितृयज्ञन्तु निर्व्वर्त्त्य तर्पणाख्यं द्विजोऽग्निमान्"।

इत्यादिना,—

"तत्रानेन विधानेन देयमग्निमता सदा"।

इत्यन्तेन ग्रन्थेनाग्निमतां श्राद्धमभिधाय,—

"अतः परं प्रवक्ष्यामि विष्णुना यदुदीरितम्।
श्राद्धं साधारणं नाम भुक्तिमुक्तिफलप्रदम्"।

इत्यादिना, "एतच्चानुपनीतोऽपि"—इत्याद्यन्तेन ग्रन्थेन अग्निमतामनग्निमताञ्च साधारणं श्राद्धं परस्मिन्नध्याये समुपदिष्टम्। अतएव, 'अग्निमत्श्राद्धम्'—इति, 'साधारणाभ्युदयकीर्त्तनम्'—इति चैतावध्यायावाचक्षते। तात्पर्य्यभेदकल्पनारसिकोरघुनन्दनस्त्वेतदजानानः कण्ठोक्तमपि साधारणत्वञ्चान्यथयन्,—'अमावस्यायां यन्नित्यत्वाभिधानं तत्साग्निपरं कृष्णपक्षस्य यन्नित्यत्वाभिधानं तत्साग्निभिन्नस्य'—इत्यतत्त्वमेवार्द्धजरतीयं ब्रुवन् तत्त्वप्रवक्तारञ्चात्मानं ख्यापयन् नापत्रपते। तथा मार्कण्डेयपुराणम्।

"कार्य्यं श्राद्धममावास्यां मासिमास्युडुपक्षये।
तथाऽष्टकास्वप्यवश्यमिच्छाकालं निबोध मे"।

इति। उडुपक्षयोऽमावस्या। सेयं निमित्तकालयोरभेदोनित्यतामस्य सूचयति। एतदपि तत्रैव सुव्यक्तमुक्तम्।

"दर्शस्तत्र निमित्तं वै कालश्चन्द्रक्षयात्मकः।
नित्यतां नियतः कालस्तस्याः संसूचयत्यथ"।

इति। चन्द्रक्षयात्मकः कालोऽपि दर्शएव। अतएव, यदेव निमित्तं सएव कालः—इति निमित्तनियतः कालस्तस्य नित्यतां सूचयति,—इत्याह। अपरे पुनरेतदविद्वांसोव्याचक्षते,—"मासि मासि कार्य्यं यत् श्राद्धं तत् चन्द्रक्षयेऽमावस्यां प्राप्यातिप्रशस्तम्। चन्द्रक्षयाभावेऽपि वर्द्धमानायां श्राद्धविधानेन अमावस्याऽभावेऽपि चतुर्दश्यन्तयामे

श्राद्धविधानेन च विशिष्टविधित्वानुपपत्तेः"—इति। तदिदमनार्षं कपोलकल्पितञ्चेत्युपेक्षणीयम्।

तस्मात्,—नेदं कृष्णपक्षनिमित्तश्राद्धस्य प्रशस्तकालाभिप्रायं सूत्रं वर्णनीयम्। असंशब्दितत्वात्। प्रमाणाभावाच्च। इत्यास्थेयम्।

पितृभ्यः,—इति चतुर्थ्या पितृणामत्र देवतात्वम्। तथाचापस्तम्बसूत्रम्। "तत्र पितरो देवताः"—इति। देवतात्वन्तु देशनादेशितचतुर्थ्यन्तपदनिर्देश्यत्वं वेदमेयत्यागोद्देश्यत्वं वा,—इत्यन्यदेतत्। तस्मात्,—यागोऽयम्। "यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात्"—इति जैमिनिसूत्रात्। ददातिप्रयोगस्तु गौणः। उद्देश्यगतस्वामित्वजनकस्त्यागो हि दानम्। न च पित्रादीनां स्वामित्वमस्ति। ब्राह्मणस्येति चेन्नानुद्देश्यत्वात्। इति चेत् पश्यसि,—माभूत् पित्रादीनां स्वामित्वं ब्राह्मणस्य तु भविष्यति,—इति। तदपि नास्ति। कस्मात्?। अनुद्देश्यत्वाद्ब्राह्मणस्य। कथं पुनरनुद्देश्यत्वं ब्राह्मणस्य?। प्रमाणाभावात्। पितृणामेव तथात्वोपदेशाच्च। तथा आपस्तम्बोऽपि। "ब्राह्मणास्त्वाहवनीयार्थे"—इति सूत्रयन् अनुद्देश्यत्वं स्वामित्वाभावञ्च ब्राह्मणानां दर्शयति। यथा खल्वाहवनीयोऽग्निरनुद्देश्योऽपि प्रतिपत्तिस्थानं देवतोद्देशेन त्यक्तस्य द्रव्यस्य, एवमिहापि पितर एवोद्देश्याः ब्राह्मणास्तु प्रतिपत्तिस्थानमेव परं न पुनरुद्देश्याः,—इति। त्यागोऽयं ब्राह्मणस्य स्वामित्वमुत्पादयतीत्यत्रापि न प्रमाणम्। पित्रुद्देशेन त्यक्तस्य खल्वस्वामिकतया ब्राह्मणे तस्य प्रतिपत्तौ उपादानमेव हि तस्य स्वामित्वमुत्पादयेत्, नासौ त्यागः प्रामाणाभावात्,—इति स्थास्यते। न हि भवन्ति वक्तारः,—पितृणां श्राद्धमितिवत् ब्राह्मणानां श्राद्ध-

मिति । अपिच । "अप्सु पिण्डान् सादयेत्" "प्रणीते वाऽग्नौ" "ब्राह्मणं वा भोजयेत्" "गवे वा दद्यात्"—इत्यस्मद्गृह्यकारेण ब्राह्मणस्य भोजनमात्रोपदेशात् तस्य स्वामित्वं नोत्पद्यते,—इत्यवगच्छामः। न खलु येन ब्राह्मणं भोजयति, तत्रास्य स्वामित्वम्। तदुद्देशेन त्यागस्याभावात्। तस्य प्रतिग्रहाभावाच्च। अन्यथा यावद्भवति—परान्नमसौ भुङ्क्ते,—इति, तावद्भवति—परान्नमसौ प्रतिगृह्णाति,—इति। तथाच तत्रभवतामृषीनामुभयोस्तुल्यदोषवादोन स्यात्। न चैवं शिष्टाः प्रतियन्ति। अवादिसामान्याच्चैतदेवं प्रतिपत्तव्यम्। न खल्वप्सु पिण्डानां सादने प्रणीते वा अग्नौ, गवे वा दाने तत्र स्वामित्वमवादीनामुत्पद्यते। तस्मात्, तत्सामान्यात् ब्राह्मणस्यापि न तत्र स्वामित्वमुत्पद्यते,—इत्यास्थेयम्।

होमस्तर्ह्ययं स्यात्, प्रणीतेऽग्नौ सादनोपदेशात्। न,—इत्युच्यते। आसेचनाधिकं हि यजतिं होममाचक्षते मीमांसकाः। न खल्वत्र यजतिरासेचनाधिकः, किन्तु पश्चाद्भाविनी प्रतिपत्तिरेव निमित्तान्तरप्रणीते अग्नावुपदिश्यते,—इति नासौ होमः। यदि वा होमोऽयं भवेदपि, किन्त्वव तेन भविष्यति, दानं खल्वसौ न भवत्येव। तस्मात्,—'ब्राह्मणाश्चाहवनीयार्थे,—इत्यनेन स्वामित्वजनकत्यागोदानम्,—इति दानलक्षणमत्रास्ति,—इति सूचितम्,'—इति, 'अस्तिचोद्देश्यताऽपि ब्राह्मणस्य, तद्गतस्वामित्वाभिसन्धानेन द्रव्यत्यागात्'—इति च वदन् शूलहस्तः परास्तः।

पितृभ्यः,—इति च पितृपितामहप्रपितामहपरम्। कथं ज्ञायते?। पिण्डपितृयज्ञे तेषामेवोद्देश्यत्वात्। अत्रापि तस्यैव धर्म्मप्रदेशाच्च।

मातामहादीनान्तु श्राद्धं पृथग्वचनेनोपदेक्ष्यति। तदिदं बहुवचनम्, —"क्षौमे वसानावग्निमादधीयाताम्"—इत्यादिवदभिधानक्रियाऽपेक्षया साहित्यं बोधयति। उद्देशक्रिया हि प्रत्येकं परिसमाप्यते,—इति न तामपेक्ष्य साहित्यं सम्भवति। त्यागक्रियापेक्षयेति चेन्न नानात्वात्। इति चेत् भवान् पश्यति,—माभूत् उद्देशक्रियापेक्षया साहित्यं त्यागक्रियापेक्षया तु भविष्यति। नैष दोषः। कस्मात्?। नानात्वात् त्यागक्रियायाः। त्यागक्रिया हि प्रत्येकमेवोपदिष्टा गृह्यकारेण। तथाच गृह्यसूत्रम्। "पितुर्नाम गृहीत्वाऽसावेषते पिण्डोये चात्वामनु यांश्च त्वमनु तस्मै ते स्वधेति" "अप उपस्पृश्यैवमेवेतरयोः"—इति। यद्यपि, अन्वष्टक्यकर्म्मण्येतत् सूत्रितम्, तथापि—"अन्वष्टक्यस्थालीपाकेन पिण्डपितृयज्ञोव्याख्यातः"—इति सूत्रेणान्वष्टक्यधर्म्मस्य पिण्डपितृयज्ञेऽतिदेशात्, इहापि पिण्डपितृयज्ञधर्म्मप्रदेशात् अत्रापि प्रत्येकमेव त्यागः सिध्यति। सूत्रकारोऽप्यत्रार्घ्यादौ प्रत्येकं त्यागमुपदेक्ष्यति। पितृभ्यः,—इति चतुर्थ्या अन्यथानुपपत्त्याहि देवतात्वं पितॄणां कल्पनीयम्। तच्च बहुवचनात् सहितानां परिच्छिकल्पयिषितम्। साहित्यस्य च त्यागक्रियापेक्षया परिच्छिकल्पयिषया त्यागस्यैकत्वमानुमानिकम्। प्रत्यक्षस्तु प्रत्येकं त्यागोपदेशः। तस्मात्,—अनन्यथासिद्धप्रत्येकत्यागोपदेशबलात् न मिलितानां देवतात्वम्। शक्यं हि बहुवचनमभिधानक्रियापेक्षयापि नेतुम्। "असावेतत्ते,—इति यजमानस्य पित्रे, असावेतत्ते,—इति यजमानस्य पितामहाय, असावेतत्ते,—इति यजमानस्य प्रपितामहाय,"—इत्यपि निगमो भवति ॥०॥ २ ॥०॥

## पञ्चमीप्रभृति वाऽपरपक्षस्य ॥ ३ ॥

'पितृभ्योदद्यात्'—इत्यनुवर्त्तते। अपरपक्षस्य कृष्णपक्षस्य। तथाच श्रूयते। "पूर्व्वः पक्षोदेवानामपरः पक्षः पितॄणाम्"—इति। "योऽपक्षीयते सोऽपरपक्षः"—इत्यपि निगमोभवति। वाशब्दो वैकल्पिकं कल्पान्तरं समुच्चिनोति। कथं नाम?। पञ्चमीप्रभृति वा दद्यात् प्रतिपत्प्रभृति वा,—इति। तथाच गौतमः। "पञ्चमीप्रभृति वाऽपरपक्षस्य, यथाश्राद्धं सर्व्वस्मिन् वा"—इति। अथवा। वाशब्दो वक्ष्यमाणकल्पापेक्षया विकल्पार्थः ॥०॥ ३ ॥०॥

## यदहरुपपद्येत ॥ ४ ॥

'वाऽपरपक्षस्य'—इत्येतदिहापि सम्बध्यते। कुतः?। मध्यपठितस्य विशेषाभावात्। तदयमर्थः। अपरपक्षस्य यदहर्यस्मिन्नहनि उपपद्येत सम्पद्येत द्रव्यादिकम्, तदहर्व्वा पितृभ्योदद्यात्,—इति। उपपद्यते,—इति पाठेऽपि तथैवार्थः। सोऽयं विकल्पः,—पञ्चमीप्रभृति वा दद्यात्, यदहरुपपद्यते तदहर्वा दद्यात्,—इति।

तदनेन सूत्रद्वयेन कृष्णपक्षनिमित्तमपि श्राद्धमुपदिष्टं भवति। तदिदं श्राद्धद्वयम्—अमावस्यानिमित्तं कृष्णपक्षनिमित्तञ्च,—इति। तत्र, कृष्णपक्षनिमित्तएव श्राद्धे प्रशस्तकालोऽमावस्येति तन्त्रान्तरकाराः स्मरन्ति। तथाच निगमः। "अपरपक्षे यदहः सम्पद्यते अमावस्यायान्तु विशेषेण"—इति। नचैतावता अमावस्यायाः निमित्तत्वं शक्यमपह्नोतुम्। न खल्वन्यस्य प्रशस्तकालो न भवत्यन्यस्य निमित्तमित्यत्र किञ्चित् प्रमाणमस्ति। अभिहितश्चैतदस्माभिरधस्तादेव।

निगमवचनमाचदर्शी रघुनन्दनस्त्वाह,—'अमावस्या न निमित्तान्तरं, किन्तु कृष्णपक्षनिमित्तश्राद्धस्य प्रशस्तकालः'—इति। तदश्रद्धेयम्। अपरपक्षे यदहः सम्पद्यते तदहः कुर्य्यात्, कृतेऽप्यपरपक्षे यस्मिन् कस्मिंश्चिदहनि, अमावस्यायान्तु विशेषेण यत्नेन कुर्य्यात्, तुशब्दात् पूर्व्वस्मादन्यदिदं श्राद्धम्—इति यदि निगमवचनस्यार्थः, तदा तदपि तन्मतमुन्मूलयति,—इत्यलं किं विस्तरेण ॥०॥ ४ ॥०॥

इयमपरा सूत्रद्वययोजना,—

## पञ्चमीप्रभृति वाऽपरपक्षस्य ॥ ३ ॥

अपरपक्षस्य,—

"आषाढ़ीमवधिं कृत्वा यः स्यात् पक्षस्तु पञ्चमः।
स विशोऽपरः पक्षः कन्यां गच्छतु वा नवा"।

इत्यादि स्मृत्युक्तलक्षणस्य। वाशब्दः,—

"अश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्य्याद्दिने दिने।
त्रिभागहीनं पक्षं वा त्रिभागन्त्वर्द्धमेव वा"।

इति ब्रह्मपुराणाद्युक्तकल्पान्तरापेक्षया विकल्पार्थः। तत्र, 'अर्द्धम्'—इति पक्षस्यार्द्धमष्टम्यादिकमर्थः। अर्द्धं पक्षम्,—इत्यन्वयोपपत्तेः। न तु त्रिभागस्यार्द्धम्। अर्द्धत्रिभागयोर्द्वयोरपि पक्षविशेषणतया समत्वेन परस्परमन्वयानुपपत्तेः। तथाच गौतमः। "अथापरपक्षे श्राद्धं पितृभ्यो दद्यात् पञ्चम्यादि दर्शान्तमष्टम्यादिदशम्यादि सर्व्वस्मिंश्च"—इति। यच,—

"पञ्चम्या उत्तरे दद्यादुभयोर्वंशयोस्तर्पणम्"।

इति वचनम्। पञ्चमीमारभ्योत्तरतिथिषु,—इति तस्यार्थः। "पञ्च-म्योरन्तरे दद्यादुभयोरपि पक्षयोः"—इति हेमाद्रिप्रभृतयः पठन्ति। आश्विनकृष्णशुक्लपक्षपञ्चम्योर्मध्ये,—इति वर्णयन्ति च। सोऽयमपर-पक्षश्राद्धस्य गौणकालः।

"भौजङ्गीं तिथिमासाद्य यावच्चन्द्रार्कसङ्गमम्"।

इत्यपि वचनं भवति। एतेन,—

"पञ्चम्यूर्द्धञ्च तत्रापि दशम्यूर्द्धं ततोऽप्यति"।

इति विष्णुधर्म्मोत्तरवचनमपि व्याख्यातं वेदितव्यम्। पञ्चमीमारभ्य-करणेऽपि त्रिभागहीनत्वं पक्षस्य नानुपपन्नम्। प्रतिपदादितिथिचतु-ष्कस्य चतुर्द्दश्याश्च त्यागेन तदुपपत्तेः। स्मरन्ति च।

"श्राद्धं शस्त्रहतस्यैव चतुर्द्दश्यां महालये"।

इति। त्रिभागादिकल्पेष्वेषैव रीतिरनुसर्त्तव्या। पक्षकल्पाश्रयणे तु चतुर्द्दश्यामपि श्राद्धं कर्त्तव्यमेव भवति। पक्षव्यापकतायाः प्रकारान्त-रेणानुपपत्तेः। तथाच कार्ष्णाजिनिः।

"नभस्यस्यापरे पक्षे श्राद्धं कुर्य्याद्दिने दिने।
नैव नन्दादि वर्ज्यं स्यान्नैव वर्ज्या चतुर्द्दशी"।

इति। तथा ब्रह्माण्डपुराणम्।

"कन्यां गते सवितरि दिनानि दश पञ्च च।
पार्व्वणेन विधानेन श्राद्धं तत्र विधीयते"।

इति। तथा तत्रैव।

"कन्यां गते सवितरि यान्यहानि तु षोड़श।
क्रतुभिस्तानि तुल्यानि देवोनारायणोऽब्रवीत्"।

इति। इदञ्च षोड़शत्वमाश्विनशुक्लप्रतिपदा सह द्रष्टव्यम्। कथं ज्ञायते?।

"अहः षोड़शकं यत्तु शुक्लप्रतिपदा सह।
चन्द्रक्षयाविशेषेण साऽपि दर्शात्मिका स्मृता"।

इति देवलवचनात्। कन्यां गते सवितरि,—इति कन्यासम्बन्धस्य प्राशस्त्यमभिप्रेत्योक्तम्। तदाह शाट्यायनिः।

"कन्यास्थार्कान्वितः पक्षः सोऽत्यन्तं पुण्य उच्यते"।

इति। वृद्धमनुः।

"मध्ये वा यदि वाऽप्यन्ते यत्र कन्यां व्रजेद्रविः।
स पक्षः सकलः श्रेष्ठः श्राद्धषोड़शकं प्रति"।

इति। एवञ्च, 'कन्यां गच्छतु वा नरा'—इति समस्तपक्षाभिप्रायं वचनं भवति। ब्रह्मपुराणवचने, 'एववा'—इति निपातसमुदायो विकल्पवाची। 'एवच'—इति यथा। न तु एवशब्दो नियमार्थः, वाशब्दो विकल्पार्थः,—इति निपातद्वयम्। त्रिभागकरणे, 'अर्द्धमेव,'—इति नियमानुपपत्तेः। अतएव सकृत्करणमप्याह नागरखण्डम्।

"आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे।
यो वै श्राद्धं नरः कुर्य्यादेकस्मिन्नपि वासरे।

इति। एकस्मिन्नपि,—इत्यपिकारादनुकल्पोयम्। न चैतत् कन्यास्थरवि निमित्तश्राद्धपरं वचनम्। एकस्मिन्नपि,—इत्यपिकारलभ्यस्यानेकत्र-करणस्य तत्राभावात्। सकृद्धि तत्करणमिष्यते। तथाच गर्गः।

"पक्षश्राद्धं यदा कुर्य्यात्तर्पणन्तु दिने दिने।
सकृन्महालये चैवं परेऽहनि तिलोदकम्"।

इति। तथा नारदः।

"सङ्क्रान्महालये काम्ये पुनः श्राद्धेऽखिलेषु च।

अतीतविषये चैव सर्व्वमेतत् विचिन्तयेत्"।

इति सङ्क्रान्महालयं दर्शयति। एतत्,—इति नन्दादिवर्जनम्। तथा कात्यायनः।

"अशक्तः पक्षमध्ये तु करोत्येकदिने यदा।

निषिद्धेऽपि दिने कुर्य्यात् पिण्डदानं यथाविधि"।

इत्येकदिनेऽपि करणं सुस्पष्टमुपदिशति। तदत्र अपरपक्षश्राद्धे वक्तव्यमस्ति। ग्रन्थगौरवभयादुपारम्यतेऽस्माभिः।

अथैवमपरपक्षस्य पारिभाषिकत्वे कृष्णपक्षमात्रं श्राद्धकालो न सूचितं भवति?। माभूदनेन ग्रन्थेन, सूत्रयिष्यते तु ॥०॥ ३ ॥०॥

## यदहरुपपद्येत ॥ ४ ॥

यदहर्द्रव्यदेशपात्रमुपपद्येत, तदहः पितृभ्यो दद्यात्। तथाच गौतमसूत्रम्। "द्रव्यदेशब्राह्मणसन्निधौ वा"—इति। द्रव्यसम्पत्तिरत्र नवशस्यादिप्राप्तिरूपा। स्मरन्ति च।

"यष्टव्याः पितरोराजन्! नवशस्यफलोदकैः।

पार्व्वणेन विधानेन खड्गमांसे तथाऽऽगते"।

इति। नवशस्यमपि ब्रीहियवरूपं द्रष्टव्यम्। कुतः?। नवयज्ञे तथा दर्शनात्। तथाच छन्दोगपरिशिष्टम्।

"शरद्वसन्तयोः केचिन्नवयज्ञं प्रचक्षते।

धान्यपाकवशादन्ये श्यामाकोवनिनः स्मृतः"।

इति।

"ब्रीहिपाके च कर्त्तव्यं यवपाके च पार्थिव!।
न तावाद्यौ महाराज! विना श्राद्धं कथञ्चन"।

इति च स्मर्य्यते पुराणेषु। तदनेन नवशस्यादिप्राप्तिः श्राद्धनिमित्तमित्युक्तं भवति। नवान्नेन कर्म्मानुष्ठानं निमित्तम्,—इत्यसङ्गतैषा कल्पना। प्रमाणाभावात्।

"नक्षत्रग्रहपीड़ासु दुष्टस्वप्नावलोकने।
इच्छाश्राद्धानि कुर्व्वीत नवशस्यागमे तथा"।

इति पुराणवाक्येऽप्यागमस्य प्राप्तिरूपत्वात्।

"वृश्चिके शुक्लपक्षे तु नवान्नं शस्यते बुधैः"।

इति कालान्तरन्त्वन्येषां मन्तव्यम्। कस्मात्?। 'धान्यपाकवशादन्ये' —इति नवयज्ञे तथा दर्शनात्। अन्ये खल्वाचार्य्याः धान्यान्तरपाकवशादपि नवयज्ञमिच्छन्ति। शालयः किल वृश्चिके पच्यन्ते। रघुनन्दनस्तु नवशस्येष्टिदृष्टपरिकल्पनां श्राद्धेऽभ्युपगच्छन्नप्याह। 'वृश्चिकशुक्लपक्षो न कालान्तरं किन्त्वतिपतितब्रीहिश्राद्धस्य गौणकालमध्ये तस्य प्राशस्त्यमात्रम्'—इति। देशसम्पत्तिस्तीर्थप्राप्तिरूपा। कथं ज्ञायते?।

"गत्वैव तीर्थं कर्त्तव्यं श्राद्धं तत्प्राप्तिहेतुकम्।
पूर्व्वाह्णेऽप्यथवा प्रातर्देशे स्यात् पूर्व्वदक्षिणे"।

इत्यादिवचनेभ्यः। पात्रसम्पत्तिः श्रोत्रियब्राह्मणप्राप्तिरूपा। कुतः?।

"तस्मात् दद्यात् सदोद्युक्तोविद्वत्सु ब्राह्मणेषु च"।

इत्यादि स्मरणात्। तदेतासु द्रव्यदेशपात्रोपपत्तिषु यत् श्राद्धं, न तच्च कृष्णपक्षाद्यपेक्षा अवश्यं कर्त्तव्या। कथं ज्ञायते?। यदहरमीषामुपपत्तिस्तदहः श्राद्धविधानेन तदसम्भवात्। स्मरन्ति च।

"तीर्थंद्रव्योपपत्तौ च न कालमवधारयेत् ।
पात्रञ्च ब्राह्मणं प्राप्य सद्यः श्राद्धं विधीयते" ।

इति ।

"यथा चैवापरः पक्षः पूर्व्वपक्षाद्विशिष्यते ।
तथा श्राद्धस्य पूर्व्वाह्लादपराह्णोविशिष्यते" ।

इत्यादिकमप्येतद्विषयं द्रष्टव्यम् । गौतमोऽपि । "द्रव्यदेशब्राह्मण सन्निधौ वा कालनियमः शक्तितः"—इति सूचयन्नेतदेवाह ॥०॥ ॥ ४ ॥०॥

## तदहर्ब्राह्मणानामन्त्र्य पूर्व्वेद्युर्वा ॥ ५ ॥

यदहः श्राद्धं तदहः पूर्व्वस्मिन् वा अहनि ब्राह्मणानामन्त्र्य निमन्त्र्य, 'पितृभ्योदद्यात्'—इत्यनुवर्त्तते । 'तदहर्वा'—इति पाठे, पूर्व्वत्राच चोभयत्रैवैतत् सम्बन्धनीयम् । कुतः ? । मध्यपठितस्य विशेषाभावात् । कथं नाम ? । यदहरुपपद्येत, तदहर्वा पितृभ्योदद्यात्,—इति । तदहर्वा पूर्व्वेद्युर्वा ब्राह्मणानामन्त्र्य पितृभ्योदद्यात्,—इति च ।

ब्राह्मणग्रहणं राजन्यादिनिरासार्थम् । यद्यप्यामन्त्रणमिहोपदिश्यते, तथापि निमन्त्रणमेवार्थः । अतिक्रमनिषेधोह्यत्र सूचयिष्यते । "यत्र प्रत्याख्याने प्रत्यवायस्तन्निमन्त्रणम्"—इति हि स्मरन्ति । अभिलापे त्वामन्त्रणमेवास्मच्छास्त्रानुशिष्टं प्रयोज्यं, न निमन्त्रणम्,—इति द्रष्टव्यम् ।

अत्र चामावस्यादौ पूर्व्वेद्युर्निमन्त्रणम्, असम्भवे तदहरपि । तथाच स्मर्य्यते ।

"निमन्त्रयीत पूर्व्वेद्युः सम्यग्विप्रान् यथोदितान्।
असम्भवे परेद्युर्वा ब्राह्मणांस्तान् निमन्त्रयेत्"।

इति।

"श्वः कर्त्ताऽस्मीति निश्चित्य दाता विप्रान् निमन्त्रयेत्।
निरामिषं सकृद्भुक्त्वा सर्व्वसुप्तजने गृहे।
असम्भवे परेद्युर्वा ब्राह्मणांस्तान् निमन्त्रयेत्"।

इति चैवमादि। द्रव्याद्युपपत्तेस्तु भाविन्याः पूर्व्वेद्युर्निश्चयासम्भवेन तदहरेव निमन्त्रणं भवति। एतेन,—

"पूर्व्वेद्युरपरेद्युर्वा श्राद्धकर्म्मण्युपस्थिते।
निमन्त्रयीत त्र्यवरान् सम्यग्विप्रान् यथोदितान्"।

इत्याद्याः स्मृतयोऽपि व्याख्याताः। 'असम्भावितमैथुनान् यत्यादींस्तदहरामन्त्रयेत् अङ्गानां प्रधानकालत्वनियमात्, सम्भावितमैथुनांस्तु पूर्व्वेद्युः'—इति नीलाम्बरोपाध्यायाः। वचनमप्युदाहरन्ति।

"निमन्त्रयेच्च पूर्व्वेद्युः पूर्व्वोक्तांस्तु द्विजोत्तमान्।
अप्राप्तौ तद्दिने वाऽपि हित्वा योषित्प्रसङ्गिनम्"।

इति। महाशयसाऽप्येषैव व्यवस्था वर्णिता। प्रमाणाभावात् पुनरुपेक्षिताऽस्माभिः। अनिर्द्दिष्टकालं खल्वङ्गं प्रधानस्य काले क्रियते। निर्द्दिष्टस्चेह कालः। वचनमपि पूर्व्वेद्युरप्राप्तौ तद्दिने निमन्त्रणमाह, न प्राप्तौ। तत्रैव, 'हित्वा योषित्प्रसङ्गिनम्'—इति विशेषः। स खल्वयं विशेषो न यतिष्वेवावतिष्ठते। प्रमाणविशेषाभावात्। तस्मादस्मदुक्तैव व्यवस्था शास्त्रार्थः ॥०॥ ५ ॥०॥

अनिन्द्येनामन्त्रितोनापक्रामेत् ॥ ६ ॥

अनिन्द्योलोकापवादरहितः। तेनामन्त्रितोनिमन्त्रितोब्राह्मणः, नापक्रामेत् न प्रत्याचक्षीत। प्रत्याख्याने प्रत्यवायापत्तेरित्यभिप्रायः। तथाच मनुः।

"केतितस्तु यथान्यायं हव्यकव्ये द्विजोत्तमः।
कथञ्चिदप्यतिक्रामन् पापः शूकरतां व्रजेत्"।

इति। यथैतत्, तथा निमन्त्रयिताऽपि निमन्त्रितान् यथान्यायमपूजयन् प्रत्यवैति,—इत्यर्थात् सिद्धम्। स्मरन्ति च।

"आमन्त्र्य ब्राह्मणं यस्तु यथान्यायं न पूजयेत्।
अतिकृच्छ्रासु घोरासु तिर्य्यग्योनिषु जायते"।

इति। अस्मिन्नवसरे,—"आमन्त्रितोवा नान्यदन्नं गृह्णीयात्"—इति सूत्रमधिकं पठन्ति गौड़ाः। निगदव्याख्यातं तत् ॥०॥ ६ ॥०॥

अथेदानीं निमन्त्रणीयान् ब्राह्मणान् विशिनष्टि,—

स्नातकान् ॥ ७ ॥

'आमन्त्र्य',—इति, 'पितृभ्योदद्यात्',—इति च इयमितःप्रभृति सर्व्वत्र सम्बन्धनीयम्। योग्यत्वात्। श्लोकमपि उदाहरन्ति।

"येन यस्याभिसम्बन्धोदूरस्थस्यापि तस्य सः।
अर्थतोह्यसमर्थानामानन्तर्य्यमकारणम्"।

इति। त्रयः स्नातकाः गृह्यसूत्रे निर्द्दिष्टाः,—विद्यास्नातकोव्रतस्नातकोविद्याव्रतस्नातकश्चेति। उत्तराधरभावोऽप्यमीषां तत्रैव द्रष्टव्यः ॥०॥ ७ ॥०॥

## एके यतीन्* ॥ ८ ॥

यतयस्त्रिदण्डिनइहाभिप्रेयन्ते। कथं ज्ञायते?।

"यतिस्त्रिदण्डः करुणा राजतं पात्रमेव च"।

इति।

"शिखिभ्योधातुरक्तिभ्यस्त्रिदण्डिभ्यः प्रदापयेत्"।

इति चैवमादि स्मरणात्। तइमे यतयोनिमन्त्रणीयाः,—इत्येकेषां मतम्। अस्मादवगच्छामः,—यतयोन निमन्त्रणीयाः,—इत्यन्येषां मतम्,—इति। कस्मात् पुनः कारणात् यतयोन निमन्त्रणीयाः,—इति तत्र भवन्तोमन्यन्ते?। स्मर्त्तारोह्यमीषां भोजने अभ्युदयविशेषं स्मरन्ति।

"सर्व्वारम्भनिवृत्तानां यतीनां दत्तमक्षयम्"।

इत्यादि बहुलम्। उच्यते। श्राद्धे किल मधुमांसैः पितरोऽतिशयं प्रीयन्ते। एषा हि तेषामाशंसा।

"योदद्यादन्नमस्माकं तत्सर्व्वं मधुना सह।

आमिषेण समायुक्तं शस्तेन मृगपक्षिणाम्"।

इति। तथाचोपदेक्ष्यति तृप्तिविशेषं मांसविशेषेण। यतयस्त्वमधुमांसाशिनोभवन्ति। अतएव, "यतिपात्रकं श्राद्धं मधुमांसवर्ज्जितं कार्य्यम्"—इति वामनपद्धतिः। तदिदमनिमन्त्रणकारणं यतीनाम्।

कस्य हेतोस्तर्ह्यमी निमन्त्रणीयाः भवन्त्यन्येषाम्?। यतिपात्रकश्राद्धस्य महाफलत्वादित्याह।

---

* एके यतीन् वा,—इति कस्यचिन्मते सूत्रपाठः।

"अपि स्यात् स कुले जन्तुर्भोजयेद् यस्तु योगिनः।
विप्रान् श्राद्धे प्रयत्नेन तेन तृप्यामहे वयम्"।

इत्यपि पितृगीता गाथा भवति। दक्षोऽपि स्मरति।

"विना मांसेन मधुना विना दक्षिणयाऽऽशिषा।
परिपूर्णं भवेत् श्राद्धं यतिषु श्राद्धभोजिषु"।

इति ॥०॥ ८ ॥०॥

## गृहस्थसाधून् वा ॥ ९ ॥

गृहस्थाश्च साधवश्च, तान् गृहस्थसाधून्। वाशब्दः स्नातकापेक्षया विकल्पार्थः। तत्र, स्नातकाः—गृहस्थाश्रमप्रवेशोन्मुखाः। गृहस्थास्तु तत्र कृतप्रवेशा भार्य्यासहिताः। भार्य्यां हि गृहमाचक्षते,—इति सभार्य्याएव गृहस्थादृशाभिप्रेयन्ते। तथाच स्मरणम्।

"न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते।
तया हि सहितः सर्व्वान् पुरुषार्थान् समश्नुते"।

इति। ये पुनर्गृहस्थाश्रमे कृतप्रवेशाअपि मृतभार्य्याः सन्तः पुनर्भार्य्यामर्थयमानाः स्नातकव्रतानुष्ठानपरावा भवन्ति, तदृमे साधवो भण्यन्ते। कन्यायाः खल्वलाभे,—

"अलाभे चैव कन्यायाः स्नातकव्रतमाचरेत्"।

इति स्नातकव्रतानुष्ठानमस्य मुनयः स्मरन्ति। शास्त्रानुमतञ्चानुतिष्ठन् कथं न साधुः स्यात्। 'साधुत्वं गृहस्थविशेषणम्,'—इत्यसङ्गतैषा वर्णना महायशसः। "स्नातकान्" "एकेयतीन्" "गृहस्थसाधून् वा" —इत्याश्रमविशेषावस्थायिनएव हि निमन्त्रणीयादृहोपदिश्यन्ते।

धर्मांस्तु पश्चादुपदेक्ष्यति। न च खल्वसाधूनपि स्नातकान् निमन्त्रणीयान् मन्यसे, कथं साधुत्वं ग्टहस्थस्य विशेषणमात्थ!। अथ मन्यसे,—पश्चादुपदिष्टैर्धर्मैरसाधवः स्नातकाः व्यावर्त्तिष्यन्ते,—इति। ग्टहस्था अप्यसाधवस्तथैव तर्हि व्यावर्त्तिष्यन्ते,—इति विफलोऽयमारम्भः। कात्यायनोऽपि,—"ग्टहस्थान्" "साधून् वा"—इति ग्टहस्थाद्भेदेनैव साधून् सूचयाञ्चकार ॥०॥ ९ ॥०॥

तदेवं स्वरूपतोनिमन्त्रणीयानभिधाय धर्म्मानमीषामुपदिशति,—

## श्रोत्रियान् ॥ १० ॥

"एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य वा।
षट्कर्म्मनिरतोविप्रः श्रोत्रियोनाम धर्म्मवित्"।

इत्युक्तलक्षणान् ॥०॥ १० ॥०॥

## वृद्धान् ॥ ११ ॥

"न तेन वृद्धो भवति येनास्य पलितं शिरः।
योवै युवाऽप्यधीयानस्तं देवाः स्थविरं विदुः"।

इत्युक्तलक्षणान्। श्रोत्रियाणां स्वल्पसम्भवे, ज्ञानवृद्धा अपि निमन्त्रणीयाः,—इत्येतदर्थोऽयमारम्भः।

एवं वा—

वृद्धान् अधिकवयस्कान्। तथाच वशिष्ठः। "परिणतवयस"—इति। अपिच। गौतमः खल्वाचार्यः,—"युवभ्योदानं प्रथममेके पितृवत्"—इति सूचयन् यद्वयस्कः पित्रादिः प्रमीतः तद्वयस्काएव ब्राह्मणाः

निमन्त्रणीयाः,—इत्येकेषां मतं दर्शयति। सोऽयं वृद्धोपदेशो वृद्ध-श्राद्धविषयः पर्य्यवस्यति। अवृद्धान्,—इति वा पाठः। युवभ्यो-दानं प्रथमम्—इति सूत्रसमासार्थः ॥०॥ ११ ॥०॥

## अनवद्यान् ॥ १२ ॥

न अवद्यान् अनवद्यान्। अवद्योनिन्द्यइत्यनर्थान्तरम्। लोकापवाद-रहितानित्यर्थः। अथवा। विशुद्धमातापितृकाः स्वयमपि लोकाप-वादरहितादशाभिप्रेयन्ते। कथं ज्ञायते?। शास्त्रान्तरदर्शनात्। तथाच वशिष्ठः। "यस्य दशपुरुषं पितृमातृवंशः श्रोत्रियोविज्ञायते विद्वांसः स्नातकाश्चेति पंक्तिपावनाः"—इति। तथोशना। "पञ्च-पुरुषपारम्पर्य्यादखण्डितचारित्रमर्य्यादः पंक्तिपावनः"—इति। मनुरपि स्मरति।

"अग्र्याः सर्व्वेषु वेदेषु सर्व्वप्रवचनेषु च।
श्रोत्रियान्वयजाश्चैव विज्ञेयाः पंक्तिपावनाः"।

इति। अवद्याश्च विस्तरेण तन्त्रान्तरेषूपदिष्टास्तेभ्यएवावगन्तव्याः। ग्रन्थगौरवभयादुपारम्यतेऽस्माभिः ॥०॥ १२ ॥०॥

## स्वकर्म्मस्थान् ॥ १३ ॥

स्ववर्णाश्रमोचितकर्म्मनिष्ठान्। स्मरन्ति च।

"अव्युत्क्रान्ताः स्वधर्म्मेभ्यस्तेद्विजाः पंक्तिपावनाः"।

इति ॥०॥ १३ ॥०॥

पूर्व्वोक्तानां स्वकर्मीयाम्,—

अभावेऽपि शिष्यान् स्वाचारान् ॥ १४ ॥

अपिर्भिन्नक्रमे। पूर्व्वोक्तानामभावे, शोभनाचारान् शिष्यानपि,—इत्यर्थः। अपि शब्दो मातामहादीन् समुच्चिनोति। तथाच मनुः।

"एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः।
अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः।
मातामहं मातुलञ्च स्वस्रीयं श्वशुरं गुरुम्।
दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत्"।

इति। तदत्र, 'स्वाचारान्',—इति पुनः कुर्व्वन् आचारवत्तयैवामीषां निमन्त्रणीयत्वं न पुनः श्रोत्रियत्वादेरत्यन्तमपेक्षा,—इति दर्शयति। अन्यथा, 'अनवद्यान्'—इत्यादेः सूचितत्वात् स्वाचारानित्यनर्थकं स्यात्। मनुरपि, श्रोत्रियादीनभिधाय मातामहादीनामनुकल्पत्वम-भिदधानएतदेवाह। यच्चाहतुर्व्वशिष्ठकात्यायनौ।

"यस्य चैव गृहे मूर्खोदूरे चैव बहुश्रुतः।
बहुश्रुताय दातव्यं नास्ति मूर्खे व्यतिक्रमः।
ब्राह्मणातिक्रमोनास्ति विप्रे वेदविवर्ज्जिते।
ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते"।

इति। तदपि बहुश्रुताय दातव्यम्,—इति, ज्वलन्तमग्निमुत्सृज्य,—इति चाभिधानात् मुख्यकल्पगोचरमितिपर्य्यवस्यति। तथा भविष्य-पुराणे।

"तस्मान्नातिक्रमेत् प्राज्ञो ब्राह्मणान् प्रातिवेश्मिकान्।
सम्बन्धिनस्तथा सर्व्वान् दौहित्रान् विट्पतिं तथा।

भागिनेयं विशेषेण तथा बन्धून् गृहाधिपान्।

नातिक्रमेन्नरश्चैतान् सुमूर्खानपि गोपते!"।

इति। तदनेन,—

"श्रोत्रियायैव देयानि हव्यकव्यानि नित्यशः।

अश्रोत्रियाय दत्तानि तृप्तिं नायान्ति देवताः"।

इति वशिष्ठादिवचनानामपि मुख्यकल्पविषयत्वं व्याख्यातम्। तस्मादनुकल्पमातामहादिषु नैष नियमः,—इति सिद्धम् ॥०॥ १४ ॥०॥

अथेदानीं ये न निमन्त्रणीयाः, तानाह,—

**द्विर्नग्न-शुक्ल-विक्लिध-श्यावदन्त-विद्धप्रजनन-व्याधिताधिक-व्यङ्गि-श्वित्रि-कुष्ठि-कुनखिवर्ज्जम् ॥ ॥ १५ ॥**

द्विर्नग्नादिवर्ज्जं पूर्व्वोक्तान् निमन्त्रयेत्। तत्र, द्विर्नग्नः,—

"यस्य त्रिपुरुषादासीदुभयोर्गोत्रयोरपि।

वेदस्याग्नेश्च विच्छेदो द्विर्नग्नः स प्रकीर्त्तितः"।

इति सुमन्तुनोक्तः। रघुनन्दनस्त्वेतदजानन्नाह,—'द्विर्नग्नो दुश्चर्म्मा अप्रावृतमेढ्रः,'—इति। तदश्रद्धेयम्। न खलु द्विर्नग्नशब्दो दुश्चर्म्माणमभिधत्ते। तत्रास्य सामर्थ्यविरहात्। अतएव,—"द्विर्नग्नः कौलदुश्चर्म्मा शुक्लोऽतिकपिलस्तथा"। इत्येकस्मिन् वचने द्वयोरुपादानं सङ्गच्छते। 'शुक्लोऽतिगौरः'—इति नीलाम्बरोपाध्यायादयः। 'शुक्लोमण्डलकुष्ठी अशुरत्वादी षण्डकुष्ठीतिवा, अतिगौरो वेत्येके'—इति महायशाः। विक्लिधः,—

"यस्य नैवाधरोष्ठाभ्यां छाद्यते दशनावली।
विक्लिधः स तु विज्ञेयो ब्राह्मणः पंक्तिदूषकः"।

इति सुमन्तुनोक्तः। 'विक्लिधो विषर्षिकाबहुलः'—इति कल्पतरुः। 'गाभेरधो विचर्चिकादियुक्तः'—इति रघुनन्दनः। 'गलद्घ्राणः'—इति शङ्खधरः। 'पूतिगन्धिघ्राणः चौदुम्बरकुष्ठी तिवा'—इति मदाचार्याः।

एको द्वौ बहवो वा दन्ताः यस्य श्यावाः भवन्ति, सोऽयं श्यावदन्तः—स्वभावकृष्णदन्तो भण्यते। श्यावः कृष्णः,—इत्यनर्थान्तरम्। 'शावदन्त'—इति केचित् पठन्ति। दन्तद्वयमध्यगतक्षुद्रदन्तः,—इति तदर्थः।

विद्धं प्रजननं यस्य, सोऽयं विद्धप्रजननः। "लिङ्गचर्म्मणि केषाञ्चिद्वेधः क्रियते, तच्च स्त्रीचित्तरञ्जनार्थं काष्ठशकलमर्प्यते,—इति दाक्षिणात्ये प्रसिद्धम्"—इति नीलाम्बरोपाध्यायाः। 'अगम्यादिदोषैर्विद्धं प्रजननं यस्य सः'—इति केचित्। 'मृतापत्यः'—इत्यन्ये। तत्रकारस्तु वेधकर्त्तनयोर्भेदमजानन्नाह,—'विद्धप्रजननः कर्त्तितशिश्नः'—इति।

व्याधितः पापरोगयुक्तः, उभयभागच्छेदितशश्नो वा। तथाच देवलः। "उन्माद, स्त्वग्दोषो, राजयक्ष्मा, श्वासो, मधुमेहो, भगन्दरो, महोदरोऽश्मरीत्यष्टौ पापरोगाः। जड़ान्धवधिरकुणिरिति विकलेन्द्रियाः। उभयभागच्छेदितव्रणाः। पापिष्ठतमाश्चेति। एते पञ्चविधाः प्रोक्तावर्ज्जनीयानराधमाः"—इति। अत्र योभयभागच्छेदितव्रणः नाभेरधोभागगतलेनोपरिभागगतलेन च द्वैविध्यात् पञ्चविधत्वं नानुपपन्नम्। मनुरपि।

"वीच्यान्धो नवतेः, काणः षष्टेः, श्वित्री शतस्य तु ।
पापरोगी सहस्रस्य दातुर्नाशयते फलम्" ।

इति पापरोगिणोवर्जनं स्मरति । पापरोगपदार्थानभिज्ञस्तु कुल्लूकभट्टः,—'पापरोगी रोगराजापहतः'—इत्येतावन्मात्रं व्याचष्टे । तदनादरणीयम् । 'व्याधितोदुश्चिकित्स्यव्याधिः'—इति महायशाः । 'महारोगी'—इति रघुनन्दनः ।

अधिकोऽधिकाङ्गः । कस्मात्? । 'व्यङ्गि'—इत्यत्राङ्गेन वैगुण्यदर्शनादत्रापि तेनैवाधिक्यस्य वर्णयितुमुचितत्वात् । तथाच शङ्खः ।

"हीनाङ्गा अतिरिक्ताङ्गा ब्राह्मणाः पंक्तिदूषकाः" ।

इति । 'अधिकाङ्ग'—इत्येव केचित् पठन्ति । व्यङ्गी विकलाङ्गः, हीनाङ्गोवा । 'विकलेन्द्रियः',—इति केचित् । केचित् न पठन्त्येव । श्वित्री श्वेतकुष्ठी,—इति भानूपाध्यायप्रभृतयः । स्थूलपादः—इति कल्पतरुः । कुष्ठी उक्तातिरिक्तकुष्ठरोगवान् । बहवः कुष्ठभेदाः पुराणेषु पठ्यन्ते । तथाच भविष्ये ।

"शृणु कुष्ठगणं विप्र ! उत्तरोत्तरतोगुरुम् ।
विचर्च्चिका तु दद्रुर्म्मा चर्च्चरीयस्तृतीयकः ।
विकर्च्चुर्व्रणताम्रौच कृष्णश्वेते तथाऽष्टकम् ।
एषां मध्ये तु यः कुष्ठी गर्हितः सर्व्वकर्म्मसु ।
व्रणवत् सर्व्वगात्रेषु गण्डे भाले तथा नसि" ।

इत्यादि । कुनखी स्वभावतः सङ्कुचितनखः । इतरे द्विर्नग्नादयो न निमन्त्रणीयाः ।

आह । अनर्थकोऽमीषां वर्ज्जनोपदेशः? । यदा स्नातकादयो

निमन्त्रणीयाः—इत्युच्यते ; ज्ञायत एव,—एभ्योऽन्ये न निमन्त्रणीयाः,—इति। नैष दोषः। स्नातकादीनामपि शुक्लत्वादिसम्भवात् तेषां वर्ज्जनार्थोऽयमुपदेशो भविष्यति,—इति। ननु, द्विर्नग्नत्वस्य तथा-सम्भवः? 'श्रोत्रियान्'—इति हि सूचितम्। अवद्यास्तैते शुक्लादयः कथं निमन्त्रणीयाः स्युः। 'अनवद्यान्'—इति हि सूचितम्। अपिच। श्रोत्रियाणां शारीरदूषणैर्युक्तानामप्यवर्जनीयत्वमेव मुनयः स्मरन्ति। यथा वशिष्ठः।

"अथ चेत् मन्त्रविद्युक्तः शारीरैः पंक्तिदूषणैः।

अदूष्यं तं यमः प्राह पंक्तिपावन एव सः"।

इति। एवन्तर्हि अन्यथा वर्णयिष्यामः। पूर्व्वोक्तानां निमन्त्रणीया-नामसम्भवे द्विर्नग्नादिवर्जमन्येऽपि निमन्त्रणीयाः,—इत्येतदर्थोऽयमुपदेशः,—इत्यनवद्यम्॥०॥ १५॥०॥

अथेदानीं श्राद्धस्य प्रयोगं वक्तुमुपक्रमते,—

## स्नातान् शुचीनाचान्तान् प्राङ्मुखानुपवेश्य दैवे युग्मान्॥ १६॥

स्नातान् कृतास्नानान्। प्राप्तस्यापि स्नानस्य पुनः कथनमावश्यकत्वार्थम्। तेन, अस्नाताः श्राद्धं भुञ्जानाः प्रत्यवायिणो भवन्ति,—इति विज्ञायते। तथाच भारते।

"दैवं वा यदि वा पित्र्यं योऽश्नीयाद्ब्राह्मणादिषु।

अस्नातो ब्राह्मणोराजन्! तस्याधर्म्मोगरानृते"।

इति। अथवा। स्नातान्,—इति विशिष्टस्नानाभिप्रायं वचनम्। तथाच वायवीये।

"सुरभीणि तु स्नानानि गन्धवन्ति तथैव हि।
श्राद्धेष्वेतानि योदद्यादश्वमेधफलं लभेत्"।

इति। शुचीन् सूतकाद्यशौचरहितान्। अन्यस्याशौचस्य स्नानाचमनाभ्यामेवापगमात्। आचान्तान् कृताचमनान्। तदनेन, पादप्रक्षालनमपि देयमित्युक्तं भवति। पादप्रक्षालनपूर्व्वमाचमनस्य गृह्यसूत्रेऽभिधानात्। तथाच गृह्यसूत्रम्। "प्रक्षाल्य पाणी पादौ च त्रिराचामेत् द्विः परिमृजीत"—इत्यादि। सदाचारसिद्धं खल्वेतत् पादप्रक्षालनदानादिकमिति न विशिष्टसूचितमिति शिष्यते। तदिदमर्थं परिभाषाप्राप्तस्याप्याचमनस्य पुनरिहोपदेशः। अथवा। "यज्ञोपवीतिनाऽऽचान्तोदकेन कृत्यम्"—इति परिभाषया कर्त्तुरेव प्राप्नोत्याचमनं न भोक्तुः,—इत्याचान्तान्—इत्याह।

तदित्थम्भूतान् ब्राह्मणान् प्राङ्मुखान्, युग्मान्—समान् द्विचतुरादीनित्येतत्। दैवे उपवेश्य,—प्रागग्रेषु कुशेषु,—इत्यर्थः। कथं ज्ञायते?। प्रतिमुखानामुपवेशनस्य सूत्रणात् प्राची दिक् खल्वागतैव हृदयमस्माकम्। आगतैव चेत्, न युज्यते विना कारणमुत्स्रष्टुम्। "प्राङ्मुखकरणज्ञानादेश"—इति सूत्रकारवचनाच्चैवमवगच्छामः। कात्यायनोऽप्याह

"यत्र दिङ्नियमो न स्याज्जपहोमादिकर्म्मसु।
तिस्रस्तत्र दिशोज्ञेयाः प्राची सौम्यापराजिता"।

इति। देवलीयेऽपि प्रयोगे,—

"ये चात्र विश्वदेवार्थं विप्राः पूर्व्वं निमन्त्रिताः।
प्राङ्मुखान्यासनान्येषां द्विदर्भोपहितानि च"।

इत्युक्तम्॥०॥ १६ ॥०॥

अयुग्मान् यथाशक्ति पित्रएकैकस्योदङ्मुखान् ॥
॥ १७ ॥

अयुग्मान् विषमान् त्रिप्रभृतीन् शक्त्यनतिक्रमेण पित्र्ये, उपवेश्य,—इति योजना। 'स्नातान् शुचीनाचान्तान्'—इत्येतत् सर्व्वमत्रापि सम्बन्धनीयम्। किमविशेषेण पित्रेर सर्व्वेषामर्थे एक एवायुग्मोवर्ग उपवेशनीयः?। न। कथन्तर्हि?। एकैकस्य पित्रादेरयुग्मान् उपवेश्य,—इति सम्बन्धः। कथन्नाम?। त्रित्वपक्षे तावत्,—पितुस्त्रीन्, पितामहस्य त्रीन्, प्रपितामहस्य त्रीन्,—इति। तदेतस्मिन् पक्षे नव ब्राह्मणाः सम्पद्यन्ते। एवमन्यत्राप्यूहनीयम्। तथाच गौतमः। "नवावरान् भोजयेदयुजोयथोत्साहं वा"—इति। "यद्यप्ययुग्मान् यथाशक्ति"—इति सूचितम्, तथाप्यतिशयविस्तारो न करणीयः अनिष्टापत्तेः। तथाच वशिष्ठः।

"द्वौ दैवे पितृकृत्ये त्रीनेकैकमुभयत्र वा।
भोजयेत् सुसमृद्धोऽपि न प्रसज्जेत विस्तरे।
सत्क्रियां देशकालौ च द्रव्यं ब्राह्मणसम्पदः।
पञ्चैतान् विस्तरोहन्ति तस्मान्नेहेत विस्तरम्"।

इति। तथा श्राद्धभाष्ये ब्रह्माण्डपुराणे,—

"देशकालधनाभावादेकैकमुभयत्र वा।
शेषान् वित्तानुसारेण भोजयेदन्यवेश्मनि।
यस्मात् ब्राह्मणबाहुल्याद्दोषो बहुतरोभवेत्।
श्रद्धानाशो मौनवासः श्राद्धतन्त्रस्य विस्मृतिः।
उच्छिष्टोच्छिष्टसंस्पर्शोनिन्दा दातृषु भोक्तृषु।
वितण्डया चापवादोजल्पन्ते ते पृथग्विधाः"।

इति। ब्रह्मपुराणस्यैतदिति शूलपाणिः। स खल्वयं च्छेदपनिबन्धनो-ब्राह्मणबाहुल्यनिषेधः,—इति सर्व्वेषामेव भवति। सर्व्वत्रैव तत्सम्भ-वात्। तदसम्भवे तु बाहुल्यकरणेऽप्यदोष एव।

कथमुपवेशयेत्?। उदङ्मुखान्। आसनानि चामीषां दक्षिणाग्र-कुशानि भवन्ति। कथं ज्ञायते?। दक्षिणायाःदिशः पितृत्वात्।

"दक्षिणाप्लवने देशे दक्षिणाभिमुखस्य च।
दक्षिणाग्रेषु दर्भेषु एषोऽन्यत्र क्रमः स्मृतः"।

इत्याभ्युदयिकप्रकरणे कात्यायनेन तथोक्तत्वाच्च।

"दक्षिणामुखयुक्तानि पितॄणामासनानि च"।

इति च देवलीये प्रयोगे॥०॥ १७ ॥०॥

पक्षान्तरमाह,—

## द्वौ वा दैवे त्रीन् पित्र्ये॥ १८॥

वाशब्दोविकल्पार्थः। दैवे द्वौ ब्राह्मणौ, पित्र्ये, त्रीन् ब्राह्मणान्, उपवेश्य,—इति सम्बन्धः। अत्रकल्पे,—पितुरेकं पितामहस्यैकं प्रपि-तामहस्यैकमुपवेशयेदिति मिलित्वा त्रयोब्राह्मणाः भवन्ति॥०॥१८॥

अन्यमपि पक्षमुपदिशति,—

## एकैकमुभयत्र वा॥ १९॥

दैवे एकं पित्र्ये चैकमित्यर्थः। तदेवं द्वावपि ब्राह्मणावुपदिष्टौ यदा पुनरेक एव ब्राह्मणोलभ्यते, अनेकब्राह्मणतृप्त्यौपयिकमन्नाद्यं वा न सम्पद्यते, तदाऽपि न श्राद्धलोपः। किन्त्वेकस्मिन्नेव ब्राह्मणे श्राद्धं

करणीयम्। यद्यप्यत्र, एकब्राह्मणपक्षोनोपदिश्यते, तथापि न्याया-
गतत्वाद्ग्रन्थान्तरोपदेशाच्चादरणीयः। तथाच गृह्यासंग्रहः।

"श्राद्धे ब्राह्मण एकश्चेत् स्वल्पञ्च प्रकृतं यदि।
वैश्वदेवं कथं तत्र? इति मे संशयोमहान्।
प्रणीतान्नाद्यमुद्धृत्य सर्व्वस्य प्रकृतस्य तु।
ब्राह्मणाय प्रदातव्यमेवं भवति सम्पदि"।

इति। श्राद्धकल्पपरिशिष्टे।

"एकस्तु ब्राह्मणः श्राद्धे ह्यल्पन्तु प्रकृतं भवेत्।
त्रयस्तु पितरः प्रोक्ताः कथं चाश्नन्ति ते त्रयः।
उरसि पितरोभुङ्क्ते वामपार्श्वे पितामहाः।
प्रपितामहादक्षिणतः पृष्ठतः पिण्डतर्कुकाः"।

इति। परवचनं गृह्यासंग्रहेऽपि। तथा वशिष्ठः।

"अपि वा भोजयेदेकं ब्राह्मणं वेदपारगम्।
शुभशीलोपसम्पन्नं सर्व्वालक्षणवर्जितम्।
यद्येकं भोजयेत् श्राद्धे दैवं तत्र कथं भवेत्?।
अन्नं पात्रे समुद्धृत्य सर्व्वस्य प्रकृतस्य तु।
देवतायतने कृत्वा ततः श्राद्धं समापयेत्।
प्रास्येदग्नौ तदन्नन्तु दद्याद्वा ब्रह्मचारिणे"।

इति। शङ्खः।

"भोजयेदथवाऽप्येकं ब्राह्मणं पंक्तिपावनम्।
दैवे कृत्वा तु नैवेद्यं पश्चादग्नौ तु तत्क्षिपेत्"।

इति। तथा महायशोष्टतं वचनम्।

"पितॄणां ब्राह्मणोयोऽथोदैवे तृप्तिं नियोजयेत् ।
प्रणीताग्न्याद्यमुद्धृत्य ततः श्राद्धं समापयेत्" ।

इति । दैवेत्वग्निमिति साग्न्यभिप्रायं वचनम् । तथाच पृथ्वीचन्द्रोदये प्रचेताः ।

"एकस्मिन् ब्राह्मणे दैवे साग्नेरग्निर्भवेत् सदा ।
अनग्नेः कुशमुष्टिः स्यात् श्राद्धकर्म्मणि सर्व्वदा" ।*

इति । मातृश्राद्धे तु विप्रालाभे सुवासिनीरपि पूजयेदित्याहापरार्के वृद्धवशिष्ठः ।

मातृश्राद्धे तु विप्राणामलाभे पूजयेदपि ।
पतिपुत्रान्विता भव्या योषितोऽष्टौ कुलोद्भवाः" ।

इति । अष्टाविति वृद्धिश्राद्धविषयमिति कमलाकरः ।

आह । यदा पुनरेकोऽपि ब्राह्मणो न लभ्यते, तदा किं ब्राह्मणाभावात् श्राद्धलोपः, अथवा ब्राह्मणप्रतिनिधिमुपादाय श्राद्धं करणीयम्? इति । ब्राह्मणप्रतिनिधिमुपादाय श्राद्धं करणीयमिति ब्रूमः । कुतः?। उच्यते। ब्राह्मणोहि गुणभावेन श्राद्धमुपकरोति । न च गुणस्य लोपे प्रधानमपि लोपनीयं भवति । "गुणलोपे च मुख्यस्य"—इति सिद्धान्तविरोधात् । गुणोहि नाम स भवति, यो मुख्यस्योपकारे वर्त्तते । सचेदुपादीयमानोमुख्यमुपरुणद्धि, गुणएवासौ न भवेत् । मुख्यं कथं सगुणं स्यात्,—इति खल्वसौ गुणेषु प्रवर्त्तते, न मुख्यं कथमुपरुध्येत,—इति । तस्मात् ब्राह्मणप्रतिनिधिमुपादाय श्राद्धं करणीयमिति प्रतिपद्यामहे । मुख्यालाभे प्रतिनिधिरुपादेयः,—इति दर्शितञ्च षष्ठेऽध्याये । तथाच्छन्दोगपरिशिष्टम् ।

"यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत्।
यवानामिव गोधूमाः व्रीहीणामिव शालयः"।

इति। कः पुनर्ब्राह्मणस्य प्रतिनिधिः?। दर्भवटुरित्याह। कथं ज्ञायते?। ब्राह्मणकार्य्ये तस्य दर्शनात्। तथाच गृह्यसूत्रम्। "यद्युवा उभयं चिकीर्षेद्धौत्रञ्चैव ब्रह्मत्वञ्चैव, तेनैवकल्पेन छत्रं वोदकमण्डलुं दर्भवटुं वा ब्रह्मासने निधाय"—इति। तथोपाककर्मणि छन्दोगपरिशिष्टम्। "कौशानृषीन् स्थलस्थान्"—इत्यादि। स्मरन्ति च।

"ब्राह्मणानामसम्पत्तौ कृत्वा दर्भमयान् द्विजान्।
कृत्वा श्राद्धं विधानेन पश्चाद्विप्रेषु दापयेत्"।

इति। तदत्र कुशमयब्राह्मणेऽपि श्राद्धकरणे प्रश्नप्रत्युत्तरादिकं सर्व्वमेव विधानं प्रकृतादेव भवति,—इत्यवगच्छामः। कुतः?। यतः कुशमयब्राह्मणपक्षेऽपि 'तेनैव कल्पेन'—इत्यनेन तत्र भवान् गृह्यकारः। सर्व्वमेव प्राकृतं कल्पमनुजानाति, ततोऽन्यत्रापि तथैव युक्तं प्रतिपत्तुम्। कारणस्याविशेषात्। न पुनः स्वमणीषिकोत्प्रेक्षया कस्यचिल्लोपः कल्पयितुमुचितः। तथाच श्राद्धे सत्यव्रतः।

"विधायाथ दर्भचयमासनेषु समाहितः।
प्रैषानुप्रैषसंयुक्तं विधानं प्रतिपादयेत्"।

इति। प्रैषः प्रश्नः। प्रैषादनु—पश्चात् यो भवति, सोऽयमनुप्रैषः प्रत्युत्तरम्। तत्संयुक्तस्य विधानस्योपदेशात् सर्व्वमेव प्रश्नप्रत्युत्तरादिकं कर्त्तव्यमिति दर्शयति। तेन, हृष्टोऽस्मि,—इत्यादि प्रत्युत्तरमत्रापि भवत्यदृष्टार्थम्। समवेतत्वाभावात् प्रत्युत्तरविलोपोमा प्रशाङ्कीदिति

हि प्रैषानुप्रैषसंयुक्तमित्याह। अन्यथा, अनर्थकं स्यात्। प्रतिनिधावपि हि सर्व्वत्र प्राकृती इति कर्त्तव्यता प्राप्नोति, किमिति प्रैषानुप्रैषौ विशेषतोऽभिधत्ते। न हि तृप्तिप्रश्नस्तृतिज्ञानार्थः। तस्य प्रकारान्तरेणोपपत्तेः। प्रश्नात् पूर्व्वं खल्वेतद्भविष्यति। तस्यावसरे वक्ष्यामः। निमन्त्रणन्तु उपस्थित्यादिदृष्टार्थतया अत्र लुप्यते। तस्यादृष्टार्थत्वे तु तदपि करणीयमेव।

आह। कुशमयब्राह्मणपक्षे प्रत्युत्तरमस्तीत्युक्तम्। कः पुनरेतत् करिष्यति?। श्राद्धकर्त्ता,—इति ब्रूमः। कस्मात्?। अन्यस्य प्रत्युत्तरयितुरभावात्। 'तेनैव कल्पेन'—इति वचनेन, कुशब्राह्मणपक्षेपि कर्त्तुरेव, "आवसोः सदने सीदामि"—इति मन्त्रपाठोपदेशाच्च। प्रतिनिधितया खल्वेतन्मन्त्रपाठः कर्त्तुरिष्यते। स चेहापि सम्भवति। तथाचाग्निपुराणीयं वचनम्।

"अलाभे ब्राह्मणानाञ्च श्राद्धं स्यात् कुशपत्रके।
प्रश्नोत्तरे स्वयं कुर्य्यादिति धर्म्मोव्यवस्थितः"।

इति। रघुनन्दनस्त्वेतदजानानः,—"प्रैषानुप्रैषसंयुक्तमित्यनेन यस्य प्रैषस्य प्रश्नस्य प्रत्युत्तरमवाधितं तद्युक्तकर्म्मणोविधानात्, दर्भवटुरूपदर्भचयमादाय कर्म्मकरणे 'निमन्त्रितोऽस्मि' 'तृप्ताः स्मः'—इति प्रत्युत्तराभावात् निमन्त्रणतृप्तिप्रश्नयोरभावः, 'ॐ कुरुष्व'—इत्यादि प्रत्युत्तराणान्त्वन्येनापि सम्भवादनुज्ञादीनां कर्त्तव्यतैव"—इत्याह। तदसङ्गतम्। पूर्व्वोक्तकारणात्। प्रैषानुप्रैषसंयुक्तम्—इत्यस्य तथार्थत्वाभावाच्च। कल्पनारसिकोहि भवानेवं कल्पयति। 'प्रतिनिधौ यथाश्रुतमन्त्रपाठः'—इति, 'सर्व्वप्रतिनिधावेव नोहेन बाधः'—

इति च भवानेवाह। अन्येन प्रत्युत्तराभ्युपगमे चान्योऽपि यदा न लभ्यते, श्राद्धलोपश्चापद्येत। नचैतदुचितम् ॥०॥ १९ ॥०॥

## मातामहानाञ्चैवम् ॥ २० ॥

मातामहानामप्येवं ब्राह्मणानामन्त्र्य श्राद्धं कुर्व्वीत,—इति कृत्स्नविध्यतिदेशः। पितृश्राद्धप्रयोगमध्ये कथनात् चशब्दाच्च पितॄणां मातामहानाञ्चैकेनैव प्रयोगेन श्राद्धं स्यात्। मातामहानाम्—इति मातामहप्रमातामहवृद्धप्रमातामहपरं वचनम्। स्मरन्ति च।

"मातुः पितरमारभ्य त्रयोमातामहाः स्मृताः।
तेषान्तु पितृवत् श्राद्धं कुर्य्युर्दुहितृसूनवः"।

इति ॥०॥ २० ॥०॥

## तन्त्रं वा वैश्वदेविकम् ॥ २१ ॥

वैश्वदेविकं तन्त्रं पितॄणां मातामहानाञ्चैकं वा कुर्व्वीत। वाशब्दो-विकल्पार्थः। अस्मिन् कल्पे, मातामहानां वैश्वदेवश्राद्धं पृथक् न करणीयं, किन्तु पितॄणां मातामहानाञ्चैकमित्यर्थः ॥०॥ २१ ॥०॥

## दैवपूर्व्वं श्राद्धं कुर्व्वीत ॥ २२ ॥

श्राद्धकर्म्मणि यत् किञ्चित् पित्र्ये क्रियते, तत्सर्व्वं दैवे कृत्वा करणीयम्—ऋते पिण्डदानादिभ्यः। यथैतत्, तथाऽवसरे वक्ष्यामः। तच्च पदार्थानुसमयेन कर्त्तव्यम्। कथं ज्ञायते?। आवाहने तथा दर्शनात्। आवाहनं खल्वादितोदेवानां सूचयित्वा परतः पितॄणां सूचयिष्यति।

अस्मादवगच्छामः,—पदार्थानुसयोऽस्मत्सूत्रकारस्याभिप्रेतः,—इति ॥
॥०॥ २२ ॥०॥

## पिण्डपितृयज्ञवदुपचारः ॥ २३ ॥

कर्त्तव्यः,—इति सूत्रशेषः। एतदनेनोक्तं भवति। सैवेतिकर्त्तव्यता, तएवमन्त्राः तादृशाएवधर्म्माः अत्रापि भवन्ति,—इति। तेन, अपसव्यं दक्षिणामुखेन वामजानुपातेन पित्र्यं कर्म्म करणीयम्, दैवन्तु सव्येन प्राङ्मुखत्वादिना दक्षिणजानुपातेन,—इति। तथाच छन्दोगपरिशिष्टम्।

"दक्षिणं पातयेज्जानु देवान् परिचरन् सदा।
पातयेदितरज्जानु पितॄन् परिचरन्नपि"।

इति। "प्राची सौम्यापराजिताः"—इति च। तथा गृह्यसूत्रम्। "पितृयज्ञे त्वेव प्राचीनावीती भवति"—इति। एवं दैवं दैवतीर्थेन, पित्र्यं पितृतीर्थेन कर्त्तव्यम्। पात्रपूरणादिकमपि दैवपित्र्ययोस्तत्तत्तीर्थेन करणीयं भवति। कथं ज्ञायते?।

"पात्राणां पूरणादीनि दैवेनैव हि कारयेत्"।

इत्याभ्युदयिकश्राद्धे छन्दोगपरिशिष्टदर्शनात्।

तदस्मात् पिण्डपितृयज्ञधर्म्मप्रदेशात् पित्रर्थं चरुरत्र पृथक् पक्तव्यो भवति। "तस्मिन्नेवाग्नौ श्रपयत्योदनचरुञ्च मांसचरुञ्च"—इत्यन्वष्टक्यकर्म्मण्यस्मद्गृह्यकारेण पृथक् चरूपदेशात्, पिण्डपितृयज्ञे च,—"अन्वष्टक्यस्थालीपाकेन पिण्डपितृयज्ञोव्याख्यातः"—इति तेनैवोदनचरोरतिदेशात्। "सर्व्वस्य त्वेवान्नस्यैतान् बलीन् हरेत्—पित्र्यस्य वा

स्वध्ययनस्य वाऽर्थार्थस्य वा"—इत्यपि गृह्यसूत्रं पित्र्यं पृथक् पाकं दर्शयति। छन्दोगपरिशिष्टे अग्नौकरणविचारश्लोकेऽप्येतस्यार्थस्य लिङ्गदर्शनमस्ति। तच्चोपरिष्टाद्वक्ष्यामः। सखल्वयं चरुः व्रीहिभिः स्यात्, न यवैः। कस्मात्?। "सकृत्संगृहीतं व्रीहिमुष्टिमवहन्ति"—इत्यन्वष्टक्ये गृह्यसूत्रात्। अपरे पुनरेतदविद्वांसोभाषन्ते,—'सर्व्वार्था-देव पाकात् श्राद्धमपि कर्त्तव्यं न पृथक् पाकान्तरं कार्य्यम्, अस्म-च्छाखायां पृथक्पाकानभिधानात्'—इति।

यदपि,—'यावदुक्ते क्रियमाणे पादप्रक्षालनादि न प्राप्नोति। व्रीहिगोधूमादीनामुपादानं न प्राप्नोति। लशुनादिवर्जनं न प्राप्नोति। एवं यावदुक्तानुष्ठाने विहिताकरणं निषिद्धकरणञ्च प्राप्नोति। शाखान्तरीयानुष्ठाने परिशिष्टकारैरभ्यनुज्ञा कृतेति यावत् सम्भवं पारतन्त्रिकमपि कार्य्यं नैतद्व्यतिरेकेण कर्म्म कर्त्तुं शक्यम्"—इति महायशसा वर्णितम्। तदप्यसङ्गतम्। कस्मात्?। यस्मात् पाद-प्रक्षालनादि यथा प्राप्नोति तथा पूर्व्वमस्माभिर्व्यवस्थापितम्। लशु-नादिवर्जनमपि सामान्यैर्वचनैर्भविष्यति। शाखान्तरीयानुष्ठाने परि-शिष्टकाराणां कुत्राभ्यनुज्ञा,—इति न खल्वधिगच्छामि। अनभ्यनुज्ञैव तु विज्ञायते। तथाच छन्दोगपरिशिष्टम्!

"अक्रिया त्रिविधा प्रोक्ता मुनिभिः कर्म्मकारिणाम्।
अक्रिया च परोक्ता च तृतीया चायथाक्रिया"।

इति। तदनेन परोक्ता अयथाक्रिया च खल्वस्माकमक्रियैवेति का-त्यायनोऽब्रवीति। त्वन्तु मन्यसे,—'परोक्तानुष्ठानमन्तरेण न कर्म्म कर्त्तुं शक्यम्'—इति। तथा गृह्यासंग्रहः।

"ऊनोवाऽप्यतिरिक्तोवा यः स्वशास्त्रोक्तमाचरेत्।
तेन सन्तनुयात् यज्ञं न कुर्य्यात् पारतन्त्रिकम्"।

इति। यावती इतिकर्त्तव्यता स्वशास्त्रोक्ता, तावत्यैव यज्ञं तनुयात्, न तत्र पारतन्त्रिकं कुर्य्यात्,—इति गोभिलपुत्रः समुपदिशति। कात्यायनोऽपि,—अयथाक्रियां निन्दन्नेतदेवानुजानाति। स्वशास्त्रोक्तस्य प्रयोगस्य खल्वन्तराऽन्तरा पारतन्त्रिकस्य विशेषस्याभिनिवेशे, यथा खल्वेषोच्यते, नैषा तथा भवतीति व्यक्तमयथाक्रियैव सम्पद्यते। तदेवं पारतन्त्रिकमनुतिष्ठन् न स्वशाखाश्रयं विधानमनुतिष्ठसि, नापि पारशाखिकम्, किन्तु द्वयमप्यन्यथयित्वा नरसिंहाकारमभिनवं प्रयोगान्तरं निर्म्मिणोषि!। तच्चानुतिष्ठसि!। स्वशास्त्रोक्तस्य प्रयोगस्यान्तराऽन्तरा परशास्त्रोक्तं विशेषं निवेशयन् व्यक्तं खल्वेतदुभयमेवान्यथयसि। तथाच, वृद्धिमिष्टवतोमूलमपि ते नष्टम्,—इति किमत्र ब्रूमः!। यत् पुनर्गृह्यासंग्रहवचनान्तरम्,—

"आत्मतन्त्रेषु यन्नोक्तं तत् कुर्य्यात् पारतन्त्रिकम्।
विशेषाः खलु सामान्याः ये चोक्तावेदवादिभिः"।

इति पारतन्त्रिकं कर्त्तव्यमुपदिशति। तत् श्रौताभिप्रायम्। तथाच कात्यायनः।

"यन्नाम्नातं स्वशाखायां परोक्तमविरोधि च।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्म्मवत्"।

इति श्रौतमेवाग्निहोत्रादिकं पारशाखिकं कर्त्तव्यमाह। न च शाखान्तराधिकरणन्यायात् पारतन्त्रिकगुणोपसंहारोगृह्याद्युक्तप्रयोगेऽपीति भ्रमितव्यम्। श्रौतविषयत्वात्तस्य। श्रौतेषु हि स्वेषु स्वेषु

वेदेषु स्वस्ववेदिनामेवर्त्विजां कर्म्मोपदिष्टम् न सर्व्वेषाम्। सर्व्ववेदिभि-र्ऋत्विग्भिर्यज्ञोनिर्वहति, न तावन्मात्रैः,—इत्यस्ति विशेषः। गृह्याद्युक्ते तु प्रयोगे नैषविशेषोऽस्ति। प्रत्यक्षश्चात्र परिशिष्टकाराणां निषेधः,—'ऊनोवाऽप्यतिरिक्तोवा'—इति, 'अक्रिया त्रिविधा'—इति चैव-मादिः। अथवा। यदात्मनस्तन्त्रेषु नोक्तमेव, तदेव पारतन्त्रिकं कर्त्तव्यमित्युपदिशति, न पुनः स्वशास्त्रोक्तस्य प्रयोगस्यान्तराऽन्तरा परोक्तस्य विशेषस्याभिनिवेशस्तस्यार्थः। वचनान्तरेण सुव्यक्तमस्य निषेधनात्। सामान्याश्रयाणां विशेषाणामप्यभिनिवेशोऽनारभ्याधी-तानामेव न प्रयोगान्तरोक्तानाम्। तथा चोक्तम्।

"प्रयोगः सूत्रकारोक्तोन समुच्चयमर्हति।
समुच्चये यतस्तस्य न निष्पत्तिर्न च क्रमः"।

इति। तथाच नीलाम्बरोपाध्यायधृतं गृह्यपरिशिष्टम्।

"प्रयोगशास्त्रं गृह्यादि न समुच्चीयते परैः।
प्रयोगशास्त्रताहानादनारभ्यविधानतः।
बह्वल्पं वा गृह्योक्तं यस्य कर्म्म प्रकीर्त्तितम्।
तस्य तावति शास्त्रार्थे कृते सर्व्वः कृतोभवेत्।
श्रौतेषु सर्व्वशाखोक्तं सर्व्वस्यैव यथोचितम्।
स्मार्त्तं साधारणं तेषु ग्राह्यं श्रौतेषु कर्म्मसु"।

इति। तदिदं वचनम्,—प्रयोगशास्त्रं गृह्यादि, अनारभ्यविधानतः परैर्न समुच्चीयते,—इति वदत्, आरभ्याधीतैः सामान्यशास्त्रोक्तैः परशास्त्रोक्तैश्च समुच्चयं वारयति। ये पुनरनारभ्याधीताः सामन्य-धर्म्माः स्मर्य्यन्ते, तैस्तु समुच्चयमनुजानाति। तस्मात्, परिशिष्टोक्तादव

अनारभ्याधीताः सामान्याश्रयाविशेषाः स्वशास्त्रोक्तेऽपि प्रयोगे सन्नि-विशन्ते। अनन्यगतेर्व्वचनात्। परिशिष्टकारः खल्वस्माकमेतदनुजा-नाति,—'विशेषाः खलु सामान्याः'—इति ब्रुवाणः। पारतन्त्रिकस्य तु विशेषस्याभिनिवेशः सर्व्वतन्त्रविरुद्धएव। तदिमे सामान्याश्रया-विशेषाः स्वशास्त्राविरोधिनएव समुच्चीयन्ते, न पुनः स्वशास्त्रविरो-धिनोऽपीत्यवगन्तव्यम्।

तेषां खल्वेषां सामान्याश्रयाणां विशेषाणामननुष्ठानेऽपि फलं भवत्येव। अनुष्ठाने पुनर्महानभ्युदयः। कथं ज्ञायते?। परिशिष्ट-कारैस्तथाऽनुशिष्टेः। तथाच पुरस्तादुदाहृतम्,—'बह्वल्पं वा स्वगृह्यो-क्तम्',—इति। 'ऊनोवाप्यतिरिक्तोवा'—इति च। तदनेन अल्पेपि स्वशास्त्रोक्ते कर्म्मणि कृते सर्व्वः कृतोभवति,—इति वचनेन तावन्मा-त्रकरणस्योपदेशेन च अन्तरेणापि सामान्याश्रयानां विशेषाणामनु-ष्ठानं फलसिद्धिर्विज्ञायते। मदनपारिजातोऽपि,—"असमर्थश्चेत् स्वगृह्योक्तमात्रमेव करोति, तावतैव तस्य शास्त्रार्थसिद्धेरुक्तत्वात्"—इति ब्रुवन्नेतदेवाह। अशक्यञ्च सर्व्वेषां सामान्याश्रयाणां विशेषाणा-मनुष्ठानम्। विचित्राः खल्वेते भूयःसु प्रदेशेषु प्रभूततराश्च भवन्ति, न शक्यन्ते सामस्त्येन ज्ञातुमनुष्ठातुञ्च। न चाशक्यमर्थं कर्त्तुं शास्त्र-मस्मान् प्रेरयति। तथा सति तदेव न प्रमाणं भवेत्। विलुप्यन्ते किल कालवशाच्छास्त्राणि,—इत्यपि स्मर्त्तारोभवन्ति। तदेवं सामा-न्याश्रयाणां विशेषाणामननुष्ठानेऽपि फलसिद्धिर्भवतीति स्थितम्। अनुष्ठाने त्वमीषामभ्युदयविशेषोऽपि विज्ञायते। कुतएतत्?। यतस्ते-षामप्यनुष्ठानाय शास्त्रमस्मान् प्रयुङ्क्ते। न हि तस्यानुष्ठानाय शास्त्र-

मस्मान् प्रयुङ्क्ते,—यस्यार्थोनास्ति। तथाच च्छन्दोगपरिशिष्टम्।

"यत्र स्यात् कृच्छ्रभूयस्त्वं श्रेयसोऽपि मनीषिणः।

भूयस्त्वं ब्रुवते तत्र कृच्छ्रात् श्रेयोह्यवाप्यते"।

इति। अथैवं सामान्याश्रयाः ये प्रयोगविशेषाः पुराणादिषु स्मर्य्यन्ते, तेषामनर्थकत्वं प्राप्नोति। नैषदोषः। येषां स्वशाखायां प्रयोगविशेषोनोपदिश्यते, तेषां तद्विषयत्वोपपत्तेः। येषामप्यस्ति स्वशाखायां प्रयोगविशेषस्योपदेशः तेषामपि इच्छया तदनुष्ठानोपपत्तेश्च। यो हि सामान्यश्रयः प्रयोगः, स सर्व्वेषामेव भवितुमुचितः। सामान्याश्रयत्वादेव। स्वशास्त्रोक्तस्तु प्रयोगः स्वस्याभ्यर्हितः। तस्मात् स्वशास्त्रोक्तं प्रयोगमनुष्ठायान्ते कामं,—सामान्याश्रयोऽपि प्रयोगोऽनर्थकोमाभूत्—इति सोऽप्यनुष्ठीयताम्। न तु तद्रूपाश्रयेण स्वशास्त्रोक्तः प्रयोगोऽन्यथयितुं युक्तः। वैश्वदेवबलिकर्म्मणोः कात्यायनेन सुव्यक्तमेतस्यार्थस्योपदेशाच्च सर्व्वत्रैवमवगच्छामः। तथाच च्छन्दोगपरिशिष्टम्।

"न स्यातां काम्यसामान्ये जुहोतिबलिकर्म्मणी।

पूर्व्वं नित्यविशेषोक्तजुहोतिबलिकर्म्मणोः।

काममन्ते भवेयातां न तु मध्ये कदाचन।

नैकस्मिन् कर्म्मणि तते कर्म्मान्यत्तायते यतः"।

इति। तदत्र, सामान्यविशेषयोः प्रयोगयोः कर्म्मान्यत्वं सुव्यक्तमेवकात्यायनो ब्रवीति। तत् कुत्र कस्य गुणोपसंहारोभविष्यति। न खल्वन्यस्य कर्म्मणोगुणानामन्यस्मिन् कर्म्मण्युपसंहारोभवति। तस्मादियमेवावधारणा,—स्वशास्त्रोक्ते प्रयोगे परतन्त्रोक्तोविशेषोन करणीयः।

सामान्याश्रयाः अनारभ्याधीतास्तु विशेषाः कर्त्तव्याः। परमेषामकरणेऽपि स्वशास्त्रोक्तमात्रस्यानुष्ठानादेव फलं भवति। करणे त्वभ्युदयः। सामान्याश्रयं प्रयोगान्तरन्तु, स्वशास्त्रोक्तप्रयोगस्यान्ते इच्छया पृथगनुष्ठेयम्। ततश्च, सामान्याश्रयस्य प्रयोगान्तरस्यानुष्ठाने महानभ्युदयः। अननुष्ठानेऽपि न फलहानिः,—इति। तदित्थं शास्त्रार्थमनुसन्धानैरस्माभिः स्वशास्त्रोक्ते प्रयोगे परोक्तानां सामान्याश्रयप्रयोगान्तरोक्तानाञ्च विशेषाणां समुच्चयाद्युपारभ्यते। पूर्व्वे तु निबन्धारः,—एतदननुसन्धानाद्वा, पाण्डित्यातिशयख्यापनाद्वा, स्वशास्त्रोक्तस्य प्रयोगस्यान्तराऽन्तरा येभ्योयावन्तोऽरोचन्त ते तावतः परोक्तान् सामान्याश्रयप्रयोगान्तराभिहितांश्च विशेषानभिन्यवीविशन्त। तथाऽन्यत्रापि, प्रयोगान्तरविशेषान् प्रयोगान्तरे समुदचैषुः। तदश्रद्धेयम् ॥०॥ २३ ॥०॥

## पित्र्ये द्विगुणांस्तु दर्भान् ॥ २४ ॥

द्विगुणान् द्विगुणीकृतान् दर्भान् पित्र्ये कुर्य्यात्। दैवे तु ऋजवएव दर्भाभवन्ति। बौधायनोऽप्याह।

"प्रदक्षिणन्तु देवानां पितॄणामप्रदक्षिणम्।
देवानामृजवोदर्भाः पितॄणां द्विगुणाः स्मृताः"।

इति। तदनेन, यत् किञ्चित् पित्र्ये उत्स्रष्टव्यं तदपि द्विगुणैर्दर्भैः कर्त्तव्यम्,—इत्यर्थादुक्तं भवति। तथाच हारीतः।

"दर्भैरद्भिस्तिलैर्दत्तं तूष्णीमप्याप्नुते दिवम्।
विधिना त्वानुपूर्व्व्येण अक्षयं परिकल्पते"।

इति। तुशब्दोविशेषार्थः। कथं नाम?। सपिण्डीकरणादूर्द्धं यत् क्रियते, तत्रैव पित्र्ये द्विगुणाः दर्भाः भवन्ति, सपिण्डीकरणान्तेषु तु ऋजवएव दर्भाः,—इति। तथाच शालङ्कायनः।

"सपिण्डीकरणं यावदृजुदर्भैः पितृक्रिया।
सपिण्डीकरणादूर्द्धं द्विगुणैर्विधिवद्भवेत्"।

इति ॥०॥ २४ ॥०॥

## पवित्रपाणिर्दद्यादासीनः ॥ २५ ॥

सर्व्वत्र,—इति वक्ष्यमाणमिहापि संबध्यते। मध्यपठितस्य विशेषाभावात्। यत् किञ्चिदिह कर्म्मणि दैवे पित्र्ये च देयं, तत् सर्व्वं पवित्रपाणिरासीनश्च दद्यात्। कात्यायनोप्याह।

"सव्ये पाणौ कुशान् कृत्वा कुर्य्यादाचमनक्रियाम्।
ह्रस्वाः प्रवरणीयाः स्युः कुशादीर्घाश्च वर्हिषः।
दर्भाः पवित्रमित्युक्तमतः सन्ध्यादिकर्म्मणि।
सव्यः सोपग्रहः कार्य्योदक्षिणः सपवित्रकः"।

इति। अत्रच,—

"द्वयोस्तु पर्व्वणोर्मध्ये पवित्रं धारयेद् बुधः"।

इत्यादिकः स्मृत्यन्तरोक्तोविशेषोयथासम्भवं द्रष्टव्यः। केचित्तु, "पवित्रपाणिर्दद्यात्"—इति, "आसीनः सर्व्वं करोति"—इति च सूत्रद्वयमत्र पठन्ति। तत्र, व्यक्तएवार्थः ॥०॥ २५ ॥०॥

## सर्व्वत्र प्रश्नेषु पंक्तिमूर्द्धन्यं पृच्छति ॥ २६ ॥

सर्व्वत्र—दैवे पित्र्ये च प्रश्नेषु कर्त्तव्येषु पंक्तिश्रेष्ठं ब्राह्मणं पृच्छति ॥
॥०॥ २६ ॥०॥

सर्व्वान् वा ॥ २७ ॥

सर्व्वत्र प्रश्नेषु सर्व्वान् वा ब्राह्मणान् पृच्छति ॥०॥ २७ ॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारभट्टाचार्य्यस्य कृतौ श्राद्धकल्पभाष्ये प्रथमा कण्डिका ॥

---

द्वितीया कण्डिका।

## आसनेषु दर्भानास्तीर्य्य ॥ १ ॥

येष्वासनेषु श्राद्धिब्राह्मणाः पूर्व्वमुपविष्टाः, तेष्वासनेषु दर्भानास्तीर्य्य। तदिदमासनेषु दर्भदानं तन्त्रेण करणीयम्। नैयायिकी हि तन्त्रता-नोपेक्षितुं युक्ता। कात्यायनोऽपि,—

"अर्घ्येऽक्षय्योदके चैव पिण्डदानेऽवनेजने।

तन्त्रस्य विनिवृत्तिः स्यात् स्वधावाचनएवच"।

इत्यर्घ्यादावेव तन्त्रनिषेधमुपदिशन्नन्यत्र तन्त्रमनुजानाति। तदिमे-कुशाः दैवे ब्राह्मणदक्षिणपार्श्वे पित्र्ये तु वामपार्श्वे दातव्याः,—इति महायशाः। वचनमप्युदाहरति।

"पितॄणामासनं दद्याद्वामपार्श्वे कुशान् सुधीः।

दक्षिणे चैव देवानां सर्व्वदा श्राद्धकर्म्मसु"।

इति। तानिमान् दर्भान् दैवे, विश्वेभ्योदेवेभ्यः स्वाहा,—इति वा, वषट्,—इति वा, नमः,—इति वा, पित्र्ये च "पितृभ्यः स्वधा"—इत्युत्सृज्य दत्वा, तेपु ब्राह्मणानुपवेशयेत्। तथाच कात्यायनः।

"स्वाहाकार-वषट्कार-नमस्कारादिवौकसाम्।

स्वधाकारः पितॄणाञ्च हन्तकारोनृणां मतः"।

इति।

"पितृभ्यइति दत्तेषु उपवेश्य कुशेषु तान्।
गोत्रनामभिरामन्त्र्य पितॄनर्घ्यं प्रदापयेत्"।

इति च। तथा व्यासः।

"चतुर्थी चासने नित्यं सङ्कल्पे च विधीयते।
प्रथमा तर्पणे प्रोक्ता संबुद्धिमपरे जगुः"।

इति। तदिदं वचनमस्माकमपि भवति। कथं ज्ञायते?। अस्मत् परिशिष्टकृता कात्यायनेनैतस्यार्थस्य सुस्पष्टमुपदेशात्। 'संबुद्धिमपरे' —इत्यभिधानाच्च। तर्पणे हि संबुद्धिरन्येषां भवति। अस्माकन्तु प्रथमैव तत्र प्रयुज्यते। 'गोत्रस्तु तर्पणे प्रोक्तः'—इति गोभिलीय-वचनात्।

तदेवम्, पितृभ्यः,—इति दत्तेषु कुशेषु,—इत्यभिधाय, गोत्रनामभिः पितॄनामन्त्र्य अर्घ्यं दद्यादिति ब्रुवाणः कात्यायनः कुशदाने पितॄणां गोत्रनामभिरामन्त्रणं नानुजानाति,—इत्यवगच्छामः। 'पितृभ्यइति दत्तेषु'—इति च 'इति' करणेन सुव्यक्तमेवमुपदेशात्।

"आसनावाहने पाद्ये अन्नदाने तथैवच।
अक्षय्ये पिण्डदाने च षट्सु नामादि कीर्त्तयेत्"।

इति श्लोकसंग्रहकारवाक्यमस्मत्प्रयोगव्यतिरिक्तविषयम्। कुतः?। अस्मत्परिशिष्टविरोधात्। षण्णामन्यत्राप्यर्घ्यादावस्माकं नामादि-कीर्त्तनस्योपदेशाच्च। यत्तु,—

"उपवेश्य कुशान् दद्यादृजुनैव हि पाणिना"।

इत्युक्तप्रकारेण पितृभ्योदत्तेषु कुशेषु,—इति नारायणोपाध्यायवर्णनम्। तदसङ्गतम्। यथाश्रुतार्थपरित्यागे मानाभावात्। व्यवहित

योजनया खल्वेषोऽर्थः परिचिकल्पयिषितः,—'इति उक्तप्रकारेण पितृभ्योदत्तेषु',—इति। न चैषोऽर्थोलघ्वुमात्मानं पारयति, शब्दस्य श्रवणमात्रात् योऽर्थोऽवगम्यते, तं बाधित्वा। अनर्थकत्वापत्तेश्च। आनर्थक्यं खल्वेवमितिकारस्यापद्येत। कथम्?। ऋजुना पाणिना कुशानां प्रदानं खल्वनेनैव पूर्व्वमुपदिष्टम्। तदर्थं पुनरितिकरणमिति कोनाम सचेतनोऽभिदध्यात्। त्यागवाक्योपदेशपरत्वे त्वितिकारस्योपादानमर्थवत् स्यात्। नचार्थवत् शास्त्रमनर्थकं कर्त्तुमुचितम्। तस्मान्न किञ्चिदेतत्।

यच्च रघुनन्दनेनोक्तम्,—'इति इत्यनेन गोत्रनामभिरामन्त्र्य इति प्रक्रंस्यमानप्रकारेण पितृभ्योदत्तेषु',—इति। तदपि न समीचीनम्। इति शब्दस्य प्रक्रान्तपरामर्शकतयैवोपपत्तौ सम्भवन्त्यां प्रक्रंस्यमानपरामर्शकत्वस्यासम्भवात्। यथाश्रुतार्थस्यैवमुपरुध्यते। तत्र च प्रमाणं नास्तीत्यवोचाम।

यच्चापरमुक्तम्,—'अर्घ्योदकदानेतरत्र कुशासनदानादौ सर्व्वत्रच्छन्दोगानां येचात्रत्वेति पाठः'—इति। तदप्यसङ्गतम्। तत्रभवता गृह्यकारेण दर्भदानमतिक्रम्य तत्र तत्र तिलोदकादिदाने विशिष्य- येचात्रत्वेतिमन्त्रस्योपदेशादासनदानादावप्रसक्तेः। गृह्यकारः खल्वस्माकं तेषु तेषु बहुष्वेव येचात्रत्वेतिमन्त्रमुपदिश्य कुत्रचिदेव दर्भदानादौ नोपदिदेश। अयमपि तत्र भवान् सूत्रकारोगृह्यानुक्ते कुत्रचित् तन्मन्त्रमुपदिशन्नपि दर्भदानादौ नोपदिशति। नचैवं सति, दर्भदानादावपि येचात्रत्वेतिमन्त्रपाठः,—इति साध्वी कल्पना भवति।

यदप्युक्तम्,—

"बहूनामेकधर्म्माणामेकस्यापि यदुच्यते।
सर्व्वेषामेव तत् कुर्य्यादेकरूपाहि ते स्मृताः"।

इति बौधायनोक्ताकाङ्क्षया प्रसक्तेः,—इति। तदप्ययुक्तम्। कस्मात्?। यस्माद्बहूनां स्वधात्मनामेकं सिद्धवदनूद्य यत्र यत् किञ्चिदुच्यते, तत्र तथाविधानां सर्व्वेषामेव तद्भवतीत्यर्थोबौधायनवचनस्य। न खल्वत्र बहूनां स्वधात्मनामेकं सिद्धवदनूद्य येचात्रत्वेतिमन्त्रोविधीयते, किन्तु येचात्रत्वेतिमन्त्रविशिष्टमेव तत्तदङ्गं विशिष्य विधीयते। तच्च तथा विहितं यद्बहूनामेकं भवति,—इति नात्र बौधायनवचनस्यावसरः।

यच्चापरमुक्तम्,—

"अक्षय्योदकदानञ्च अर्घ्यदानवदिष्यते।
षष्ठ्यैव नित्यं तत् कुर्य्यान्नचतुर्थ्या कदाचन"।

इति छन्दोगपरिशिष्टवचनेनापि तथा ज्ञाप्यते। न चतुर्थ्या,—इति तस्मै ते इत्यन्तस्य निषेधः। षष्ठ्यैव,—इत्यनेन गोत्रसंबन्धनाम्नां षष्ठ्यन्तताप्रतीतेः,—इति। तदपि न सुन्दरम्। वचनस्य तथार्थत्वे-प्रमाणाभावात्। षष्ठ्यैव इत्यनेन गोत्रसंबन्धनाम्नां षष्ठ्यन्तताप्रतीतेश्च। येचात्रत्वेतिमन्त्रोहि संबोध्यमानविषयएव भवितुमर्हति, न सर्व्वत्र। कथं ज्ञायते?। ते,—इति युष्मदः संबोध्यमानार्थवाचितया षष्ठ्यन्तस्थलेऽप्रसक्तेः। भवानपि नात्र विप्रतिपद्यते। सोऽयं भवदीयएव वाणोभवन्तं प्रहरति। आह। न चतुर्थ्या कदाचन,—इति तर्हि वचनमनर्थकं स्यात्। षष्ठ्यैव, इत्यनेनैव सिद्धेः। नैषदोषः। यदेव सिद्धं तदेवात्रानूद्यते सुखावबोधार्थम्। परेषां वा मतमनेन प्रतिषिध्यते। तस्मात् नित्यानुवादोविहितप्रतिषेधोवा-

ऽयम्। विहितं केषाञ्चित् चतुर्थ्यां अक्षय्योदकदानम्। तदिह प्रतिषिध्यते। तथाच ब्राह्मे पुराणे।

"नान्दीमुखेभ्यश्चाक्षय्यं पितृभ्यस्त्विदमस्त्विति"।

इति। तथा चोक्तम्। "परोनित्यानुवादः स्यात्"—इति। "विहित-प्रतिषेधो वा"—इति च। एवकारेणैव तद्व्यवच्छिद्यते,—इति चेत्, तदेवैतेन दर्शयति। "तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यते अनाय"—इति, "महेश्वरस्त्र्यम्बकएव नापरः"—इति चैव-मादिवत्। अथाक्षय्योदकदानेऽपि ये चात्रत्वेति मन्त्रस्य प्रसङ्गं, तस्यैव च 'न चतुर्थ्यां'—इत्यनेन निषेधं विना न तुष्यसि। तर्हि 'अर्घ्यदानवत्'—इत्यतिदेशेन तत्र मन्त्रस्य प्रसङ्गः तस्यैवच निषेधः,—इति मन्यताम्। आसनादिदानेऽप्यनेन वचनेन समन्त्रः कथं प्राप्यते,—इति न खल्वधिगच्छामि।

अथ, मा तावत् बौधायनवचनेनासनदानादौ मन्त्रः प्रसञ्जि, च्छन्दोगपरिशिष्टवचनेनचासौ मा विशापि, तथापि भूयःसु प्रदेशेषु गोभिलीयं विशिष्योपदेशं प्रदर्शकमभ्युपगम्य येष्वन्येषु स मन्त्रोनो-पदिष्टः, तेष्वपि स कल्पनीयः,—इति ब्रवीमि,—इति चेत्। निरङ्कुश-त्वात्ते तुण्डस्यैवं ब्रवीषि, न तु प्रमाणोपेतं ब्रवीषि। परिशिष्टकारः खल्वस्माकं दर्भासनदाने चतुर्थ्यन्तं वाक्यमुपदिशति, त्वन्तु कल्पना-रसिकस्तत्रापि येचात्रत्वेतिमन्त्रं कल्पयसि, तत् किमत्र ब्रूमः। ननु,

"सर्व्वत्रैव पितः प्रोक्तं पिता तर्पणकर्म्मणि।

पितुरक्षय्यकाले च कर्त्ता एवं न मुह्यति"।

इति स्नानसूत्रपरिशिष्टवचने 'सर्व्वत्र' ग्रहणेन व्याप्त्यवगमात् आसन

द्दानेऽपि संबोधनविभक्त्या वाक्यरचना प्राप्नोति ? । सत्यं प्राप्नोति, 'पितृभ्यइति दत्तेषु'—इति कात्यायनीयविशेषवचनानुरोधात्तु नैवं क्रियते । न हि सामान्यवचनव्यपाश्रयेण विशेषवचनमुपरोद्धव्यं भवति । यदाहवनीयादौ हि सामान्यस्य विशेषपरत्वमुक्तम् । न सामान्यव्यपाश्रयेण विशेषस्योपरोधः । 'पदार्थान्तरसाकाङ्क्षविशेषमपहाय तदितरत्र सामान्यमन्वेति'—इति भवानेवाह । अपिच । स्नानसूत्रपरिशिष्टकारः खल्वासनादौ संबोधनविभक्तिं नोपदिदेश, किन्त्वर्घ्यादावेव । कथं ज्ञायते ? ।

"शर्म्मन्नर्घ्यादिके कार्य्ये शर्म्मा तर्पणकर्म्मणि ।

शर्म्मणोऽक्षय्यकाले तु कर्त्ता एवं न मुह्यति" ।

इति तत्परवचने तेनैव सुव्यक्तमस्यार्थस्योपदेशात् । इत्यस्तु किं विस्तरेण ॥०॥ १ ॥०॥

## यवानादायोङ्कारं कृत्वा विश्वान् देवानावाहयिष्य इति पृच्छति ॥ २ ॥

यवानक्षतान् दक्षहस्तेनादाय । कुतः ? ।

"कर्म्मोपदिश्यते यत्र कर्त्तुरङ्गं न चोच्यते ।

दक्षिणस्तत्र विज्ञेयः कर्म्मणां पारगः करः" ।

इति छन्दोगपरिशिष्टवचनात् । एवमन्यत्रापि । निगदव्याख्यातमन्यत् । ॐकारश्चात्र सन्ततः करणीयः । तथाच गृह्यासंग्रहः ।

"सन्ततः प्रणवः कार्य्यः पितृयज्ञेषु ब्राह्मणैः ।

उपांशुकरणञ्चापि सह कर्त्रा समस्वरैः" ।

इति ॥०॥ २ ॥०॥

आवाहयेत्यनुज्ञातो विश्वेदेवास आगत शृणुताम इमं हवमेदं बर्हिर्निषीदत, विश्वेदेवाः शृणुतेमं हवम्मे ये अन्तरीक्षे ये उपद्यविष्ठ ये अग्निजिह्वा उतवा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम्, ओषधयः संवदन्ते सोमेन सह राज्ञा यस्मै कृणोति ब्राह्मणस्तं राजन् पारयामसीति ॥ ३ ॥

आवाहय,—इति ब्राह्मणैरनुज्ञातः कृतानुज्ञः कर्त्ता, विश्वेदेवासः,—इत्यादिभिस्त्रिभिर्मन्त्रैः, 'आवाहयेत्'—इति सूत्रशेषः। तत्र खल्वाद्यौ द्वौ मन्त्रावावाहनप्रकाशनसामार्थ्यादावाहने समवेतार्थावेव, तृतीयस्त्वसमवेतार्थतया सर्व्वथैवादृष्टार्थः। यद्यपि, पूर्व्वमादत्तानां यवानां विनियोगविशेषोन सूचितः, तथापि इदानीं तैरन्ववकिरणं करणीयम्। कृतार्थाः खल्विमे यवाः अवश्यं केनचित् प्रकारेण त्यक्तव्याः। तच्चेत्थं कर्त्तव्यम्। किं कारणम्?। पित्रावाहने खल्वावाहनात् परतस्तिलैरन्ववकिरणं सूचयिष्यति। तदत्रापि तथैव वर्णयितुं युक्तम्,—इति। स्मृतिष्वप्येवं पश्यामः। तथाच याज्ञवल्क्यः।

"यवैरन्ववकीर्य्याथ भाजने सपवित्रके"।

इत्यादि बहुलम्। यवैरन्ववकिरणञ्चेदं मन्त्रस्यानुपदेशादमन्त्रकं करणीयम्,—इति पितृदयितापितृभक्तिमहायशःप्रभृतयः। यवोऽसीति-मन्त्रेण,—इति कल्पतरुहलायुधप्रदीपादयः। अथ केचित् शाख्यायनीयं कात्यायनश्राद्धसूत्रञ्च पश्यन्तः, विश्वेदेवासः,—इति प्रथममन्त्रेणा-

वाह्य यवान् विकीर्य्य, विश्वेदेवाः शृणुतेमं हवमे,—इत्यादिमन्त्रद्वयं जप्तव्यम्,—इति वर्णयन्ति। तदसङ्गतम्। उत्तरमन्त्रयोर्जपे विनियोजकप्रमाणाभावात्। अस्मत्सूत्रकारेण मन्त्रत्रयपाठानन्तरम् 'इति' कारकरणान्मन्त्रत्रयस्यैवावाहने विनियोगावगतेः। जपस्याप्यनुपदेशाच्च। "तत उत्तरजतं जपति"—इत्यभिधाय, आश्वायनस्योत्तरमन्त्रद्वयोपदेशः तच्छाखिनां भविष्यति। कात्यायनोऽपि माध्यन्दिनीयानां सूत्रकारः,—इति तदुपदेशोऽप्यस्माकं न भवति। यच्च रघुनन्दनेन,—एदं वर्हिर्निषीदत,—इत्यनन्तरम्,—"इत्यावाह्य विकिरेत्"—इति लिखितम्। तत् न सूत्रप्रतीकम्, अपितु सूत्रस्य स्वाभिमतं व्याख्यानम्,—इति लिख्यते। कुतः?। सूत्रग्रन्थे तदभावात्। तन्मतवादिनापि भाष्यकारेण आश्वायनवचनात्तच्छन्देन तथा वर्णनाच्च। यदपि, "आवाहयेत्यनुज्ञातो विश्वेदेवास आगत शृणुता म इमं हवम्। एदं वर्हिर्निषीदत—इति वा यवैरवकीर्य्य विश्वेदेवाः शृणुतं हवं मे ये अन्तरीक्षे य उप द्यवि ष्ठ ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् वर्हिषि मादयध्वम्"—इतिच्छन्दोगापरसूत्रम्। तदपि नैतत्प्रयोगे विनिश्चते। तदुक्तस्य वैकल्पिकमन्त्रान्तरस्याचानुपदेशात्। अत्रोपदिष्टस्य 'ओषधय'—इत्यादि मन्त्रान्तरस्य तत्रानुपदेशाच्च। 'विश्वेदेवाः'—इति मन्त्रोऽप्येतस्मादिलक्षणएव तत्र पठितः॥०॥ ३ ॥०॥

## अथ पितॄनावाहयिष्यइति पृच्छति॥ ४॥

अथेत्यानन्तर्य्यार्थम्। कथं नाम?। दक्षहस्तेन तिलानादाय ओँकारं कृत्वा पितॄनावाहयिष्ये,—इति पृच्छति,—इति। कथं ज्ञायते?।

देवानामावाहने यवानामिव पितृणामावाहनेऽपि तिलानामादानस्य ॐकारकरणस्य चोचितत्वात् । परतस्तिलविकरणस्य सूचणाच्चैवमवगच्छामः । "तिलानादायोङ्कारं कृत्वाऽथ पितृनावाहयिष्यइति पृच्छति"—इति तत्वकारपाठे व्यक्तोऽयमर्थः । छन्दोगापरसूत्रेऽप्येवमेव सूत्रपाठः । पितृन्,—इत्याद्युपादानात् पितृनावाहयिष्ये,—इत्येव वक्तव्यम्, न तु तेषां नामगोत्राद्युल्लेखः,—इत्युक्तप्रायम् ॥०॥ ४ ॥०॥

आवाहयेत्यनुज्ञातउशन्तस्त्वा निधीमह्युशन्तः समिधीमहि उशन्नुशत आवह पितृन् हविषे अत्तवे, एत पितरः सोम्यासोगम्भीरेभिः पथिभिः पूर्व्विणेभिर्दत्तास्मभ्यं द्रविणेह भद्रꣳ रयिञ्च नः सर्व्ववीरं नियच्छत, आयन्तु नः पितरः सोम्यासोऽग्निस्वात्ताः पथिभिर्देवयानैरस्मिन् यज्ञे स्वधयामदन्तोऽधि ब्रुवन्तु तेऽवन्त्वस्मानिति ॥ ५ ॥

'इति' एतैर्मन्त्रैः, पितृनावाहयेत्,—इति सूत्रशेषः । अत्रच, 'एत पितरः,—इत्यनन्तरं उशन्तस्त्वेति मूलभूतगोभिलगृह्ये तद्भाष्यद्वये च पितृदयितायाञ्च लिखितेन मैथिलानामेतद्विपरीतलिखनं हेयम्'—इति तत्वकारेणोक्तम् । वयन्तु मूलभूतश्राद्धकल्पे उशन्तस्त्वेत्यनन्तरमेव एत पितरइति मन्त्रं पश्यामः । तद्भाष्यकृता महायशसाऽपि तथैव क्रमेण मन्त्रावेतौ पठितौ । गृह्ये च गोभिलीये न खल्वावाहनं सूचितं न वैतौ मन्त्रौ पठितौ,—इति ॥०॥ ५ ॥०॥

अपहता असुरारक्षांꣳसि वेदिषद इति तिलैरन्वव-
कीर्य्यापउपस्पृशति ॥ ६ ॥

स्पष्टार्थं सूत्रम्। तदत्र, अपामुपस्पर्शे पितृमन्त्रोच्चारणं वीजम्। तस्मादन्यत्राप्येवंविधस्थले अपामुपस्पर्शः करणीयः। तथाच छन्दोगपरिशिष्टम्।

"पितृमन्त्रानुहरणे आत्मालम्भे अवेक्षणे।
अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे।
मार्जारमूषिकस्पर्शे आक्रुष्टे क्रोधसम्भवे।
निमित्तेष्वेषु सर्व्वेषु कर्म्म कुर्व्वन्नपः स्पृशेत्"।

इति। तदिदमावाहनं पितृपक्षे मातामहपक्षे च पृथक् पृथक् करणीयम्। कथं ज्ञायते?। 'मातामहानाञ्चैवम्'—इति सूत्रेण मातामहपक्षेऽपि कृत्स्नविध्यतिदेशात् पृथगेव करणं वर्णयितुमुचितम्,—इति। तन्त्रं वा वैश्वदेविकम्'—इति च सूत्रयन् वैश्वदेविकादन्यत्र तन्त्रं नानुजानात्याचार्य्यः,—इत्यवगच्छामः। अलसास्त्वत्रापि तन्त्रमनुतिष्ठन्ति ॥०॥ ६ ॥०॥

अथेदानीमर्घं वक्तुमुपक्रमते,—

यज्ञियवृक्षचमसेषु पवित्रान्तर्हितेषु ॥ ७ ॥

यज्ञेभ्योहिताः ये वृक्षास्तइमे यज्ञियवृक्षाः। ते खल्विमे खादिराः. पालाशाश्च भवन्ति। अभावे पुनरमीषां विभीतकादिवर्ज्जं सर्व्वे वनस्पतयः। कथं ज्ञायते?। अस्मद्गृह्यकारेणामीषां यज्ञकर्म्मण्युपदेशात्। तथाच गृह्यसूत्रम्। "अथेध्मानुपकल्पयते खादिरान् वा

पालाशान् वा"—इति। "खादिरपालाशालाभे विभीतक-तिल्वक-बाधक-नीव-निम्ब-राजवृक्षशाल्मल्यरलुदधित्थ-कोविदार-श्लेष्मातकवर्ज्जं सर्व्व-वनस्पतीनामिध्मोयथार्थं स्यात्"—इति च। स्मरन्ति च।

"पालाशे ब्रह्मवर्च्चः स्यादाश्वत्थे राजयोग्यता।

सर्व्वभूताधिपत्यञ्च प्लक्षे नित्यमुदाहृतम्"।

इत्यादि। पलाशविकङ्कतकाश्मरीविल्वखदिरोडुम्बरानपरे यज्ञिय-वृक्षान् मन्यन्ते। "ते वै पालाशाः स्युरथवा वैकङ्कतविल्वाः खादि-रौडुम्बराः काश्मर्य्यमयाः एते हि वृक्षाः"—इत्यपि निगमो भवति।

यज्ञियवृक्षाणां चमसेषु। यज्ञियवृक्षशाखाभिर्निर्म्मिताः अविषमाः प्रादेशदीर्घाश्चतुरङ्गुलविस्तृताश्चतुरङ्गुलोर्द्धाश्चतुरस्राः मध्यविलाश्च पात्र-विशेषाश्चमसाः भण्यन्ते। तथा चोक्तम्।

"तच्छाखाश्च समादीर्घाः प्रादेशाश्चतुरङ्गुलाः।

तथैवोत्सेधतोज्ञेयाश्चतुरस्रास्तइत्यपि"।

इति। तेषु खल्वित्यम्भूतेषु चमसेषु पवित्रान्तर्हितेषु। पवित्रैः,—

"अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेवच।

प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्"।

इत्युक्तलक्षणैः, अन्तर्हितेषु व्यवहितेष्वित्यर्थः। पवित्राणि उक्तलक्ष-णानि अन्तर् मध्ये हितानि निहितानि वा येषां तेषु पवित्रान्तर्हितेषु, यज्ञियवृक्षचमसेषु,—'अप आसिञ्चति'—इति वक्ष्यमाणेन संबन्धः। एतदुक्तं भवति। चमसान् स्थापयित्वा तेषु दैवे प्रागग्रं पित्र्ये च दक्षिणाग्राणि पवित्राणि स्थापयेत्,—इति। तानि खल्वेतानि पवि-त्राणि 'पवित्रे स्थोवैष्णव्यौ'—इत्यनेन छित्वा, 'विष्णोर्मनसा पूते स्थः'—

इत्यनुमार्ष्टव्यानि। ततश्चमसेषु स्थापयितव्यानि । कथमनुक्तं क्रियते ? । उच्यते । प्रादेशमात्रं हि पवित्रमुपदिशन्ति । न खल्वच्छिन्नानां भवति प्रादेशमात्रता । न च विनैवानुमार्जनं कर्म्मार्हता युक्ता । तदेवं छेदनमनुमार्जनञ्चेषमार्थप्राप्तम् । एवमनुक्तमपि करिष्यते । पवित्र-विधौ च खल्वस्माकमित्ययमुपदेशः । तथाच गृह्यसूत्रम् । "ततएव वर्हिषः प्रादेशमात्रे पवित्रे कुरुते" "ओषधिमन्तर्धाय छिनत्ति न नखेन पवित्रे स्थोवैष्णव्याविति" "अथैने अद्भिरनुमार्ष्टि विष्णोर्मनसा पूते स्थ इति"—इति ॥०॥ ७ ॥०॥

## एकैकस्मिन्नप आसिञ्चति—शन्नोदेवीरिति ॥ ८ ॥

एकस्मिन् एकस्मिन् चमसे अपउदकम् आसिञ्चति शन्नोदेवीरिति-मन्त्रेण दैवपूर्व्वम् । एकैकस्मिन्,—इति वीप्सया प्रतिपात्रं मन्त्रा-वृत्तिं दर्शयति । तेनात्र तन्त्रमनुष्ठानं न भवति । कात्यायनोऽपि, 'अर्घ्येऽक्षय्योदके चैव'—इत्यादिना तन्त्रस्य निवृत्तिमाह ॥०॥ ८ ॥०॥

## एकैकस्मिन्नेव यवानावपति यवोऽसि यवयास्मद्-द्वेषो यवयारातीरिति ॥ ९ ॥

एकैकस्मिन्नेव पात्रे यवानावपति यवोसीतिमन्त्रेण । तदिदं दैवार्घ्य-पात्राभिप्रायं सूत्रम् । कथं ज्ञायते ? । यवावपनस्योपदेशात् । उत्तरत्र 'पितृन्'—इति करणाच्च । वीप्सा तर्ह्यनर्थिका भवत्यसङ्गता च । किं कारणम् ? । एकं खल्वर्घ्यपात्रं दैवे भवति,—इति । कथं पुनर्ज्ञायते,—एकमर्घ्यपात्रं दैवे भवति ?—इति ।

"यवैरन्ववकीर्य्याथ भाजने सपवित्रके"।

इति याज्ञवल्क्यादि स्मृतिष्वेकवचनोपदेशात्,—इति चेत्। किमत्र भवतः सूत्रकारस्य 'एकैकस्मिन्'—इति वीप्सां न पश्यसि?। याज्ञवल्क्यस्तु नास्मत्प्रयोगस्योपदेष्टा। तथापि तद्वचनस्थमेकवचनं दृष्ट्वा पात्रमेकं निश्चिनोषि। अस्मत्सूत्रकारोक्तां वीप्सां पश्यन्नपि तत्र सन्देग्धि। सेयं पितरमुपेक्ष्य श्वशुरे गाढ़ा भक्तिः। अव्यवस्था तर्हि प्राप्नोति? न खलु ज्ञायते,—कियत्सु पात्रेष्वेषा वीप्सा विश्रमिष्यति,—इति। एवन्तर्हि सामर्थ्याद्व्यवस्था भविष्यति। पात्रे खल्वेकस्मिन् अचरितार्था वीप्सा पात्रद्वयं कल्पयिष्यति,—इति। ननु त्रिचतुरादीन्यपि शक्नोति कल्पयितुम्?। शक्नोति। द्वयोः कृतार्थत्वात्तु न कल्पयति। या हि वीप्सा त्रिचतुरादीनि पात्राणि कल्पयति,—कल्पयत्यसौ द्वे अपि पात्रे। कल्पयति चेत्, तत्र चरितार्था सती नाधिककल्पनायै भवति,—इति। अथ, शास्त्रान्तरदर्शनं विना न ते परितोषः, दृश्यतां तदपि। यथा मत्स्यपुराणम्।

"विश्वान् देवान् यवैः पुष्पैरभ्यर्च्चासनपूर्व्वकम्।
पूरयेत् पात्रयुग्मन्तु स्थाप्य दर्भपवित्रके।
शन्नोदेवीत्यपः कुर्य्यात् यवोऽसीति यवांस्तथा"।

इति। पुरूरवोमाद्रवसोरुभयत्वादर्घ्यपात्रभयत्वं प्रीत्यतिशयार्थम्,—इति शूलपाणिः। विश्वदेवस्थाने अर्घ्यपात्रमेकं द्वेवा,—इति मदनपारिजातः।

केचित् इदं सूत्रम्, उत्तरसूत्रे 'पितॄन्'—इति च, न पठन्ति। तेषां दैवेऽपि पात्रे उत्तरसूत्रानुसारात् तिलानामावपनं स्यात्, यवानां

वा?—इति विचारणीयम्। यवानाम्—इति ब्रूमः। कुतः?। यतः,—

"सदा परिचरेद्भक्त्या पितॄनप्यत्र दैववत्"।

इति कात्यायनेन वृद्धिश्राद्धे पितॄणां देववत् परिचरणमुक्तम्। "यवैस्तिलार्थः"—इत्यनेन वृद्धिश्राद्धे यवैस्तिलार्थः करणीयः,—इति सूत्रकारोऽप्युपदेक्ष्यति। अस्मात् कारणादवगच्छामः,—पितॄणां योऽर्थस्तिलैः क्रियते, देवानां सोऽर्थो यवैः करणीयः,—इति। अपरे पुनरेतदविद्वांसः सूत्रमेवेदमपठन्तः,—दैवेऽपि पात्रे तिलानावपन्ति। ॥०॥ ६ ॥०॥

**पितॄनेकैकस्मिन्नेव तिलानावपति,—तिलोऽसि सोमदेवत्योगोसवोदेवनिर्म्मितः प्रत्नमद्भिः पृक्तः स्वधया पितॄन् लोकान् प्रीणाहि नः स्वाहेति ॥ ॥ १० ॥**

पितॄन्,—इति व्यत्ययात् षष्ठ्यर्थे द्वितीया। पितॄणामेकैकस्मिन्नेव पात्रे,—इत्यर्थः। पितॄन् उद्दिश्य,—इति वा वर्णनीयम्। केचित् 'पितॄन्'—इति न पठन्ति। आह। एकैकस्मिन्,—इत्यनुवर्त्तिष्यते, किमर्थं पुनर्निर्दिश्यते?। उच्यते। तिलावपनमन्त्रे बहुवचनान्तपितृपदश्रवणात् सकृन्मन्त्रपाठेन एकैकस्मिन् पात्रे तिलवपनं कश्चिदाशङ्केत, तन्माप्रशाङ्क्षीदित्येतदर्थं पुनरिह निर्देशः ॥०॥ १० ॥०॥

## सौवर्णराजतौदुम्बरखड्गमणिमयानां पात्राणा-मन्यतमेषु वा ॥ ११ ॥

औदुम्बरं ताम्रमयम्। कथं ज्ञायते?। सौवर्णादिसाहचर्य्यात्। वृक्ष-मयानां 'यज्ञियवृक्षचमसेषु'—इत्यनेनैव गतार्थत्वाच्च। खड्गमयं गण्डकशिरोस्थिनिर्म्मितम्। मणिमयानि मारकतस्फाटिकादीनि। तेषां खल्वेषां पात्राणामन्यतमेषु पात्रेषु वा 'पवित्रान्तर्हितेषु'—इत्यादिगतेन संबन्धः। वाशब्दो विकल्पार्थः। तानि खल्वेतानि पात्राणि वैकल्पिकानि,—इत्येकजातीयान्येव सर्व्वाण्यर्घ्यपात्राणि कर्त्त-व्यानि। न पुनः कानिचित् सौवर्णानि, कानिचित् राजतानि, कानिचिच्चापरापराणि। किं कारणम्?। 'विकल्पे हि नोभयः शास्त्रार्थः'—इत्युक्तम्॥०॥ ११ ॥०॥

## पत्रपुटेषु ॥ १२ ॥

वाशब्दोऽत्र लुप्तवत् द्रष्टव्यः, पूर्व्वस्माद्वा अनुषञ्जनीयः। यज्ञियवृक्षाणां पत्रपुटेषु वा पवित्रान्तर्हितेषु,—इत्यादिपूर्व्ववदर्थः ॥०॥ १२ ॥०॥

## यानि वा विद्यन्ते ॥ १३ ॥

यानि वा अनिषिद्धानि कदलीवृक्षत्वगादीनि लभ्यन्ते, तेषु वा पवि-त्रान्तर्हितेषु,—इत्यादिगतेन संबन्धः ॥०॥ १३ ॥०॥

## एकैकस्यैकैकेन ददाति सपवित्रेषु हस्तेषु ॥ १४ ॥

एकैकस्य पित्रादेः एकैकेन प्रत्येकेन ददाति उत्सृजति। सपवित्रेषु

पवित्रसहितेषु ब्राह्मणानां हस्तेषु सत्सु,—इत्यर्थः । एतदनेनोक्तं भवति । ब्राह्मणानां हस्तेषु प्रथमं पवित्राणि दत्त्वा पश्चादर्घ्यमुत्स्रष्टव्यम्—इति ।

एवं वा—

एकैकस्य पितृब्राह्मणादेः सपवित्रेषु हस्तेषु सत्सु, प्रत्येकेनार्घ्यं ददाति । तस्मात्, प्रत्येकब्राह्मणहस्तेषु पवित्राणि दातव्यानि, न त्वाभ्युदयिकवत् मिलितेषु हस्तेषु,—इति सिद्धं भवति ।

इदमिदानीं सन्दिह्यते । सपवित्रेषु हस्तेषु,—इत्यनेन ब्राह्मणहस्तेषु पवित्राणां प्रदानं तावद्गम्यते, न ज्ञायते,—किमर्घ्यपात्रस्थान्येव पवित्राणि ब्राह्मणानां हस्तेषु इदानीं दातव्यानि, अथवा तेभ्योऽन्यानि?—इति । तेभ्योऽन्यानि,—इति प्रतिपद्यामहे । कुतः? । सपवित्रेषु हस्तेषु अर्घ्यं ददाति,—इत्युक्ते पवित्रान्तरस्यैवावगतेः । न खल्वर्घ्यं पवित्ररहितं देयमिति युक्तमभ्युपगन्तुम् । पवित्रसहितं ह्यर्घ्यं भवति । पवित्रं खल्वेतदर्घ्यस्योपकरोति,—इत्यत्र न विवादः । उपकरोति चेत्, नूनं पवित्रसहितमेवार्घ्यं भवति । तदेवं सति, न युज्यते विनैव वचनं तद्रहितमर्घ्यमुत्स्रष्टुम् । शक्यं हि सपवित्रेषु हस्तेषु,—इति वचनमन्यथाऽपि वर्णयितुम् । उत्सर्गात् पूर्व्वमेव चेत् पवित्राणि प्रतिपाद्यन्ते, अर्घ्यार्थतैवामीषां न स्यात् । कात्यायनोऽपि,—

"गोत्रनामभिरामन्त्र्य पितृनर्घ्यं प्रदापयेत्" ।

इत्यर्घ्योत्सर्गमभिधाय,

"ज्येष्ठोत्तरकरान् युग्मान् कराग्राग्रपवित्रकान् ।
कृत्वाऽर्घ्यं संप्रदातव्यं नैकैकस्याच्च दीयते" ।

इति परतो ब्रुवन् उत्सर्गानन्तरमेव अर्घीयपवित्राणां ब्राह्मणेषु प्रति-
पादनमनुजानाति। अपरे पुनरेतदविद्वांसोभाषन्ते,—दर्भानां निर्म्मा-
ल्यत्वाभावात् अर्घपात्रीयाण्येव पवित्राणि इदानीं ब्राह्मणहस्तेषु
दत्त्वा ततोऽर्घमुत्सृष्टव्यम्,—इति ॥०॥ १४ ॥०॥
केन मन्त्रेण ददाति?। उच्यते,—

यादिव्यापः पयसा संवभूवुर्या अन्तरिक्षा उत-
पार्थिवीर्या हिरण्यवर्णा यज्ञियास्तानआपः
शिवाः शंस्योनाः सुहवा भवन्तु असावेतत्ते
अर्घं येचात्र त्वामनु यांश्च त्वमनु तस्मै ते
स्वधेति ॥ १५ ॥

यादिव्या इति मन्त्रं पठित्वा असावित्यादिना दद्यात्। अत्रासाविति
संबोधनान्तनामाद्युल्लेखाभिप्रायं वचनम्। तथाच कात्यायनः।
"गोत्रनामभिरामन्त्र्य पितॄनर्घं प्रदापयेत्"।
इति।
"गोत्रं स्वरान्तं सर्व्वत्र गोत्रस्याक्षय्यकर्म्मणि।
गोत्रस्तु तर्पणे प्रोक्तः कर्त्ता एवं न मुह्यति।
सर्व्वत्रैव पितः प्रोक्तं पिता तर्पणकर्म्मणि।
पितुरक्षय्यकाले च कर्त्ता एवं न मुह्यति।
शर्म्मन्नर्घादिके कार्य्ये शर्म्मा तर्पणकर्म्मणि।
शर्म्मणोऽक्षय्यकाले च कर्त्ता एवं न मुह्यति"।

इति चास्मदीये स्नानसूत्रपरिशिष्टे। निर्देशक्रमश्चामीषामस्मादेव पाठ-क्रमात् कल्पनीयः। तेन, यादिव्या,—इति मन्त्रमुच्चार्य्य, अमुकगोत्र पितरमुकशर्म्मन्नेतत्ते अर्घ्यं येचात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा,—इत्ययमस्माकमुत्सर्गवाक्यप्रयोगः। यत् पुनः स्मरणम्,—

"संबन्धं प्रथमं ब्रूयाद्गोत्रं नाम तथैव च।
पश्चाद्रूपं विजानीयात् क्रमएष सनातनः"।

इति। तदस्मत्प्रयोगव्यतिरिक्तविषयम्। अस्मच्छास्त्रे रूपोल्लेखस्या-ननुशासनात्। बह्वृचानां खल्वसावस्ति। "गोत्रनामरूपाणां पितृ-णामिदमासनम्"—इत्याद्याश्वलायनगृह्यपरिशिष्टदर्शनात्। गोत्रा-दीनामेतद्विपरीतक्रमेणास्मत्परिशिष्टे पाठाच्च। अनयैव युक्त्या,—

"सकारेणैव कर्त्तव्यं गोत्रं सर्व्वत्र धीमता।
सकारः कुतपो ज्ञेयस्तस्मात् यत्नेन तं वदेत्"।

इति वचनोपदिष्टं सगोत्रपदमप्यस्माभिर्नोल्लेखनीयम्। किन्त्वस्मत्-परिशिष्टकारोक्तं गोत्रपदमेव। एवमस्मत्परिशिष्टे पितृपदमात्र-कीर्त्तनात् पितरित्यादिकमेव वक्तव्यं नत्वस्मत्पितरित्यादि। संबन्धि-शब्दः खल्वेष स्वमेव संबन्धिनमुपस्थापयति,—इति सुकरोयजमान-पित्रादीनामवगमः। कथमन्यथा अस्मदन्नमित्यपि नोल्लिख्यते। अत-एव "पदपांशुना यूपमनक्ति" "सप्तमं पदं गृह्णाति"—इत्यत्र सोम-क्रयार्थमुपस्थितायाअरुणायाएव पदप्रतिपत्तिरिति सिद्धान्तः। सोऽयं पदिन्यायोऽत्र शरणम्। अस्मत्पितरित्याद्युल्लेखे तु शब्दाध्याहारनयो-मूलम्। तदेवं नयभेदादुभयमप्युपपन्नम्। तथाचोभयथादर्शनम्।

'एत पितरः'—इति। 'आ यन्तु नः पितरः'—इति च। परिशिष्टकारोक्तः पितरित्याद्युल्लेखएव त्वस्माकमादरणीयः।

स खल्वयं पित्र्यर्घ्यदानप्रकारः। दैवार्घ्यन्तु या दिव्या—इति मन्त्रं पठित्वा विश्वेदेवाएतत्तेऽर्घ्यं स्वाहा,—इति वा, नमः—इति वा, वषट्—इति वा दद्यात्। पितॄणामेव स्वधाकारस्य कात्यायनेनोक्तत्वात् स्वधापदयुक्तयेचात्रत्वेतिमन्त्रस्य दैवेऽनभिनिवेशात्। अस्तु तर्हि मन्त्रस्थस्वधापदएव स्वाहादिपदोहः?। नैतत् शक्यम्। विकृतावेवोहस्य अध्वरमीमांसायां सिद्धान्तितत्वात्। नचात्र प्रकृतिविकारभावोऽस्ति। असमवेतार्थत्वाच्च। दैवे खल्वयं मन्त्रोन समवैति। किं कारणम्?।

"सपिण्डीकरणादूर्द्धं यत् पितृभ्यः प्रदीयते।
सर्व्वेष्वंशहरा माता इति धर्म्मेषु निश्चयः"।

इत्यादिवचनैर्यथा पितॄनतु सन्ति भोक्तारः, नैवं देवानतु केऽपि भुञ्जते। तस्मादसमवेतार्थोमन्त्रोकथमिव दैवेऽप्यङ्गभावमुपगच्छतु। अर्थाभिधानसामर्थ्याद्धि मन्त्राणामङ्गभावं तत्रभवन्तोमन्यन्ते। तथा चोक्तम्। "अर्थाभिधानसामर्थ्यान्मन्त्रेषु शेषभावः स्यात्"—इति। अथ, मन्त्रस्यादृष्टार्थत्वे किं बाधकम्?। अदृष्टार्थत्वे च दैवेऽपि पठनीयो भविष्यति। बाधकमपि वक्ष्यामः। साधकमपि शृणुमः। सामान्येनाभिधानमिति चेत्। इति चेत् पश्यसि,—सामान्येनाभिधानं दैवेऽपि मन्त्रपाठस्य साधकम्—इति। तत्र ब्रूमः। सामान्येनाभिधानमर्थोविशेष्यति। अर्थाभिधानसामर्थ्याद्धि मन्त्राणामङ्गभावमवोचाम। एवन्तावत् साधकं नास्तीत्युक्तम्। बाधकमपि शृणु। यस्य

हि मन्त्रस्य क्वचित् दृष्टार्थतासम्भवः, तस्य नादृष्टार्थतामनुमन्यन्ते मीमांसकाः। तथा चोक्तम्।

"यस्य दृष्टं न लभ्येत तस्यादृष्टप्रकल्पनम्।
लभ्यतेऽर्थस्मृतिर्दृष्टा मन्त्रोच्चारणतस्त्विह।
अर्थस्मृतिः प्रयोगार्था प्रयोगाच्च फलोदयः।
इति दृष्टार्थसम्पत्तौ नादृष्टमिह कल्प्यते।

इति। अपिच। यस्मादयं सूत्रकारोऽनुपदमेव, "अपउपस्पृश्यैवमेवेतरयोः"—इति करोति, तस्मादवगच्छामः,—पित्रर्घ्यमभिप्रेत्यैव येचात्रत्वामिति मन्त्रः पठितः,—इति। या दिव्या,—इति मन्त्रोऽपि तर्हि दैवे न प्राप्नोति?। प्राप्नोति,—इति पश्यामः। समवैति खल्वयमाशंसामन्त्रो दैवेऽपि। समवैति चेत्,—प्राप्नोत्यपि। अनयैव युक्त्या एतत्ते अर्घ्यमित्यपि दैवे प्रयोच्यते। कथमर्द्धजरतीयं वर्ण्यते,—एतत्ते अर्घ्यमित्यन्तं दैवसाधारणं ये चात्रत्वामिति मन्त्रः पुनरसाधारणः पित्र्ये,—इति?। किं क्रियतां यत्रान्या गतिर्न सम्भवति। भवतामप्येतत् समानम्। कथमन्यथा मन्त्रस्थः स्वधाशब्दोऽपि दैवे न प्रयुज्यते। प्रयुज्यतामिति चेत्। न। यस्मादेवं सति,—

"स्वाहाकारवषट्कारनमस्कारा दिवौकसाम्।
स्वधाकारः पितॄणान्तु हन्तकारो नृणां मतः"।

इति। छन्दोगपरिशिष्टवचनविरोध आपद्येत। सर्व्वे च परीक्षका व्याकुप्येरन्। न चैवं त्वयाऽपि दृश्यते। तस्मात् सामर्थ्यादेषा व्यवस्था भविष्यतीत्यकामेनापि वाच्यम्। अतएव महायशसा दैवेऽपि यादिव्या इति मन्त्रो लिखितः न येचात्रत्वामिति। अथवा। प्राधान्यात् पित्र्यं

पक्षमभिप्रेत्यैव इयमावृत् सूचिता। दैवेऽपि यावत् शक्यं पितृदृष्टं करिष्यामः। ये चात्रत्वामिति मन्त्रस्तु दैवे न शक्यते कर्त्तुम्। असमवेतार्थत्वात्। तस्मात् कात्यायनोक्तयैव रीत्या दैवे उत्सर्गवाक्यं रचयितव्यं भवति॥०॥ १५ ॥०॥

## अप उपस्पृश्यैवमेवेतरयोः॥ १६॥

अप उदकमुपस्पृश्य स्पृष्ट्वा एवमेव पूर्व्वोक्तयैवावृता इतरयोः पितामहप्रपितामहयोरप्यर्घं ददाति,—इति गतेन संबन्धः। मातामहादीनामपि "मातामहानाञ्चैवम्"—इति वचनात् सर्व्वमेवैतत् कर्त्तव्यम्। तदिदमुत्सृष्टमर्घ्यमिदानीं ब्राह्मणेषु प्रतिपादयितव्यं भवति। पित्रर्थं खल्वेतदुत्सृष्टं पितृस्थानीयास्त्विमे ब्राह्मणा भवन्ति। उत्तरत्र संस्रवसमवनयनसूत्रणाच्चैवमवगच्छामः। संस्रवशब्दो हि "संस्रवान् प्राश्नाति"—इत्यादौ स्रुवादिपात्रस्थप्रतिपादितावशिष्टाज्यादिद्रव्यवचनोदृष्टः। स इहापि ग्रहीतव्यो भवति। अविरोधात्। प्रतिपादनप्रकारमाह कात्यायनः।

"गोत्रनामभिरामन्त्र्य पितॄनर्घ्यं प्रदापयेत्।

* * * * * * * * * *

ज्येष्ठोत्तरकरान् युग्मान् कराग्राग्रपवित्रकान्।

कृत्वाऽर्घ्यं संप्रदातव्यं नैकैकस्यात्र दीयते"।

इति। तदत्रादौ 'गोत्रनामभिः'—इत्यादिना अर्घ्यदानमुपदिश्य परतः—'ज्येष्ठोत्तरकरान्'—इत्यादिना तत्प्रतिपादनप्रकारोऽभिहितः।

करायाग्रपवित्रकाम् कृत्वा अर्घ्यं दातव्यमिति ब्रुवन् प्रथमं पवित्राणि ब्राह्मणेषु प्रतिपाद्य पश्चाज्जलादिकं प्रतिपादयितव्यमिति भङ्ग्यन्तरेणोपदिशति। 'नैकैकस्यात्र दीयते'—इत्याभ्युदयिके कुर्व्वन् पार्व्वणे एकैकस्य दानं दर्शयति। तेषां खल्वेषां पवित्राणामुत्तराग्राणामेव ब्राह्मणहस्तेषु दानं करणीयम्। कुतः?। 'करागाग्रपवित्रकान्'—इत्यनेन तथाऽवगतेः। न हि शब्दस्य श्रवणमात्रात् योऽर्थोऽवगम्यते, स युज्यते विनाकारणमुत्स्रष्टुम्। नचाभ्युदयिकविषयत्वात् वचनस्य पार्व्वणे तदुक्तं नस्यादितिवाच्यम्।

"अन्यत्राप्येषएव स्याद् यवादिरहितोविधिः।

इति तेनैव यवादिव्यतिरेकेणाभ्युदयिकोक्तस्य सर्व्वस्यैव पार्व्वणेऽपि करणोपदेशात्। अथ,—

"वशिष्ठोक्तोविधिः कृत्स्नोद्रष्टव्योऽत्र निरामिषः।

अतः परं प्रवक्ष्यामि विशेषइह योभवेत्"।

इत्युपक्रमात्, 'करागाग्रपवित्रकान्'—इति विशेषाभिधानमेव किमिति नोपेयते?। शृणु यथा नोपेयते। आमिषमन्तरेण वशिष्ठोक्तस्य कृत्स्नस्य विधेरतिदेशात् वशिष्ठोक्तस्यैव योविशेषः—'प्रातरामन्त्रितान् विप्रान्'—इत्यादिः, तस्यैव तन्मात्रविषयत्वं गम्यते। न वशिष्ठानुक्तस्यापि विशेषस्य। 'अन्यत्राप्येषएव स्यात्'—इत्यस्यानर्थकत्वापत्तेः। अतएव, 'प्रागग्रेष्वथ दर्भेषु'—इत्यादि विशेषाणामपि पार्व्वणे करणप्रसक्तौ, तदपवादार्थम्,—

"दक्षिणाप्लवने देशे दक्षिणाभिमुखस्य च।

दक्षिणाग्रेषु दर्भेषु एषोऽन्यत्र विधिः स्मृतः"।

इति वचनारम्भोघटते। इतरथा खल्वयमारम्भोऽनर्थकः स्यात्। नचे देवं, तत्रोक्तानां भूयसामपि विशेषाणां तन्त्रात्तपरत्वापत्त्या पार्व्वणे करणं न स्यात्। क्रियन्ते च। तस्माद् यथोक्तमेवास्तु। यस्य हि विशेषस्य पार्व्वणे करणं नाभिप्रैति, कयाचिद्भङ्ग्या तमवबोधयति। श्रत्यप्रदीपेऽप्युक्तम्,—"करायाग्रपवित्रत्वमाभ्युदयिके विशेषः—इत्या-थाति, तथा चैतद्वैपरीत्यं पार्व्वणे स्यात्?-इति चेत्। नैवम्। मिलितहस्तोपरि दानमभिधाय, 'नैकैकस्यात्र दीयते'—इति यत् पुनरभिधत्ते, तेन ज्ञापयति,—इदमेवात्र विधीयते, करायाग्रपवित्र-कत्वन्त्वनूद्यते"—इति। यच्चोक्तं रघुनन्दनेन,—'नैकैकस्यात्र दीयते,—इत्यभिधानं विना पित्रादित्रयब्राह्मणानां मिलितहस्तोपरि दानानु-पपत्त्या नैकैकस्यात्र दीयते,—इत्यस्य पुनरभिधानानुपपत्तिः'—इति। तदयुक्तम्। ज्येष्ठोत्तरकरत्वेनैव मिलितहस्तलाभात्। यदप्यु-क्तम्,—"ज्येष्ठोत्तरकरत्वस्य पित्रादिप्रत्येकब्राह्मणापेक्षयाऽपि सम्भवेन तथात्वानुपपत्तेः'—इति। तदप्यसङ्गतम्। ज्येष्ठोत्तरकरान् युग्मान्,—इति बहुवचनेन बहूनामपि युग्मानां ज्येष्ठोत्तरकरत्वकथनात् पित्रादि प्रत्येकब्राह्मणापेक्षया वर्णनस्यानुचितत्वात्। निषिद्धोहि ब्राह्मणानां निस्तारः। तन्त्रात्तपरत्वे प्रमाणाभावाच्च। यच्चापरमुक्तम्,—'करा-यायपवित्रत्वस्य पार्व्वणेऽनुक्तत्वादनुवादानुपपत्तेः'—इति। तदपि नास्ति। अस्मादेवानुवादात्तत्र विधेरनुमानोपपत्तेः। तथा चोक्तम्।

"लिङ्गादपि विधिर्ज्ञेयोदर्भेषु विकिरोयथा"।

इति। अनुवादोवा मा उपपादि। तथापि, 'अन्यत्राप्येषएव स्यात्'—इति वचनात् पार्व्वणेऽप्येतत् प्राप्नोति। 'नैकैकस्यात्र दीयते'

—इत्यपि तर्हि प्राप्नोतु?। न,—इति ब्रूमः। किं कारणम्?। अत्रेति विशेषोपदेशात्। 'एकैकस्यैकैकेन ददाति'—इति सूत्रणाच्च। द्वैतनिर्णयेऽप्युक्तम्,—'कराग्राग्रपवित्रत्वमाभ्युदयिकएव, छन्दोगपरिशिष्टे विशेषाभिधानस्वरसादिति न वाच्यम्। नैकैकस्याच दीयते,—इति तदुपसंहारात् मिलितदानस्यैव विशेषस्य तत्राभिधानात्। एषोऽन्यत्र विधिः स्मृतः,—इति पश्चादभिधानाच्च'—इत्यन्तेन ॥०॥ १६ ॥०॥

**प्रथमे पात्रे सꣳस्रवान् समवनीय पात्रं न्युब्जं कृत्वा शुन्धन्तां लोकाः पितृषदनाः पितृषदनमसि पितृभ्यः स्थानमसीति ॥ १७ ॥**

प्रथमे पात्रे,—इति पितृपात्रं ब्रूमः। 'अप उपस्पृश्यैवमेवेतरयोः'—इति सूत्रणात् तत्रैवप्राथम्यावगतेः। मन्त्रलिङ्गे पितॄणां श्रवणाच्चैवमवगच्छामः। तेन, दैवे न्युब्जकरणं नास्ति। 'पैतृकं प्रथमं पात्रम्'—इत्यपि स्मर्त्तारोभवन्ति। अपरे पुनरेतदविद्वांसोभाषन्ते,—प्रथमं पात्रमत्र दैवपात्रम्,—इति। दैवे अमन्त्रकं न्युब्जीकरणमिच्छन्त्यन्ये।

तदस्मिन् प्रथमेपात्रे संस्रवान् अर्घ्यपात्रलग्नजलादीन्, समवनीय सम्यगवनीतान मिश्रितान् कृत्वा, यत्रावनीताः संस्रवाः, तत् पितृपात्रं न्युब्जमधोमुखं करोति शुन्धन्तामित्यादिमन्त्रेण। तदेवं न्युब्जं कृत्वा वक्ष्यमाणं कर्म्म कुर्य्यात्। 'शुन्धन्तां लोकाः पितृषदनाः पितृषदनमसि'—इति प्रतीकं केचित्र पठन्ति।

तदिदं पितृपक्षे न्युब्जीकरणं सूचितम्। मातामहपक्षेऽपि माता-

महपात्रे संस्रवान् समवनीय तत् पात्रं न्युब्जं कर्त्तव्यम्। कुतः?। 'मातामहानाञ्चैवम्'—इत्यतिदेशस्यार्थवत्त्वोपपत्तेः। 'तन्त्रं वा वैश्वदेविकम्'—इति च कुर्व्वन् वैश्वदेविकादन्यत् पृथगेव करणीयमित्युपदिशतीत्यवोचाम।

तेषां खल्वेषां संस्रवाणां समवनयनं कथं करणीयम्?—इति वक्तव्यम्। उच्यते। संस्रवोऽर्घ्यपात्रस्थं दत्तशेषजलम्, तेषादौ पितामहपात्रस्य पितृपात्रे प्रक्षेप्तव्यं ततः प्रपितामहपात्रस्य, प्रावर्त्तिकक्रमस्वरसात्,—इति वाचस्पतिमिश्रप्रभृतयः। तदस्य पितृपात्रस्य अपिधानमस्माकं नास्ति। अनुपदेशात्। न खल्वनुपदिष्टमपि करणीयं भवति। यच्च शौनकवचनम्,—"प्रपितामहपात्रेण निधाय प्रतिष्ठापयति"—इति। तदपि बह्वृचानामेव नास्माकम्। कथं ज्ञायते?। तस्य तत्सूत्रकारत्वात्। शौनकीये च प्रयोगे पितृपात्रस्य प्रतिष्ठापनमात्रमेवकरणीयम्, न न्युब्जीकरणमपि। प्रतिष्ठापनमात्रस्यैव तेनोपदेशात्। अस्माकन्तु न्युब्जीकरणमुपदिश्यते। तत् कोऽयमनयोः संबन्धः। येन शौनकीयमपिधानमस्माकमपि करणीयं भवेत्। आश्वलायनगृह्यपरिशिष्टेऽपि,—"तत् पात्रं शुचौ देशे पितृभ्यः स्थानमसीति निधाय प्रपितामहार्घ्यपात्रेण निदध्यात्, न्युब्जं वा तत् कुर्य्यात्"—इति निधानन्युब्जीकरणयोर्वैकल्पिकत्वमुक्तम्। तदत्र, न्युब्जं वा तत् कुर्य्यात्,—इति वचनात् न्युब्जकरणपक्षे प्रपितामहपात्रेण न तत्पात्रस्य निधानम्, प्रपितामहपात्रेण निधानपक्षे च न न्युब्जीकरणमिति व्यक्तमवगम्यते। रघुनन्दनस्त्वेतदबुद्धा आश्वलायनगृह्यपरिशिष्टस्याजानानः,—शौनकवचनात् प्रपितामहपात्रेणाधःकृतं पितृपात्र

मूर्द्धमुखावस्थितं न्युब्जमधोमुखं करोति,—इति प्रलपति। एवम्,—

"पैतृकं प्रथमं पात्रं तत्र पैतामहं न्यसेत्।
प्रपितामहं ततोन्यस्य नोद्धरेन्न च चालयेत्।
स्पृष्टमुद्धृतमन्यत्र नीतमुद्घाटितन्तथा।
पात्रं दृष्ट्वा व्रजन्त्याशु पितरस्तं शपन्ति च"।

इति यमोक्तेऽपि कल्पे नास्त्येव न्युब्जीकरणम्। पितृपात्रे पितामह प्रपितामहपात्रयोर्न्यासानन्तरमेव स्पर्शस्योद्धरणस्यान्यत्र नयनस्य चालनस्य च निषेधात्। न खल्वन्तरेण स्पर्शमुद्धरणं चालनञ्च शक्यं न्युब्जं कर्त्तुम्। रघुनन्दनस्त्वाज्ञापयति,—'यमवचनेन पितामह प्रपितामहपात्रद्वयपिधानमुक्त्वा वचनान्तरात् न्युब्जीकृतस्य तत्पात्रस्य उद्धरणादिनिषेध उक्तः'—इति। यदपि,—

"पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः"।

इति याज्ञवल्क्यस्मरणम्। तदपि तदुक्तप्रयोगविषयम्। तस्यापि, पात्रमधोभूमौ न्युब्जं करोतीत्ययमर्थः। 'अधःशायी'—इत्यादौ यथा। न पुनरधःस्थितं पात्रं न्युब्जं करोति,—इत्यर्थः। येनापिधानमनेनाक्षिप्येत। नह्यधःपदमधःस्थितं शक्नोति वक्तुम्। तत्रास्य सामर्थ्यविरहात्। कथमन्यथा, 'अधःशायी'—इत्यादावप्यपिधानं नाक्षिप्येत। तस्मात्,—'अधःस्थितं पात्रं न्युब्जं करोति,—इत्यन्यथानुपपत्त्या पिधानमत्राक्षिप्यते, अन्यथा अधःपदवैयर्थ्यापत्तेः'—इति ब्रुवाणः स्थूलहस्तोपि परस्तोभवति। अधोभूमावित्यर्थतयाऽन्यथोपपत्तेराक्षेपायोगाच्च। यदप्युक्तम्,—'अधोभूमावितिकल्पतरुव्याख्यानमयुक्तं साङ्गप्रधानार्थतया वेदेः प्राप्तत्वात्'—इति। तदेवायुक्तम्।

अधोभूमावेव न्युब्जं करोति, न कुशोपरि,—इत्यभिप्रायेणार्थं वत्त्वोपपत्तेः। केचित् किल भूमौ तिलकुशान् निःक्षिप्य तेषामुपरि न्युब्जं कुर्वन्ति। 'अधः'—इति कुर्व्वन् तत् नानुजानाति। "दक्षिणाग्रकुशस्तम्बं भूमौ निधाय तस्योपरि * * तत् पात्रं न्युब्जमधोमुखं करोति"—इति व्याकुर्व्वाणो विज्ञानेश्वरोऽविज्ञानवानपि पिधानं नोवाच। रघुनन्दनस्तु छन्दोगोऽपि, 'याज्ञवल्क्येन तत् पात्रस्याधःस्थत्वाभिधानात् पात्रान्तरेण पिधानमाक्षिप्तम्'—इति तदुपजीव्यशूलपाणिकमेवोक्तवान्। तदश्रद्धेयम्। यदि नाम याज्ञवल्कीये पिधानमाक्षिप्येतापि, तावता कथमस्मदीयेऽपि प्रयोगे तत् शक्यं कल्पयितुम्। नह्ययमनारभ्यविधिः। न वा अस्मत्प्रयोगमसावुपदिशति। काण्डानुसमयोहि क्रियाननेनोपदिष्टः। पदार्थानुसमयश्चात्र भवतः सूत्रकारस्याभिप्रेतः,—इत्यवोचाम। "प्रथमे पात्रे संस्रवान् समवनीय पितृभ्यः स्थानमसीति पात्रं न्युब्जं करोति"—इति कातीयेऽपि कल्पे न्युब्जीकरणमेवोपदिष्टं न पिधानम्। तदेवम्,—पिधानपक्षे न न्युब्जीकरणम्, न्युब्जीकरणपक्षे च न पिधानम्,—इति तत्रभवतामृषीणां समयः। निबन्धारएव केचिदत्रापरितुष्यन्तः प्रयोगान्तरविशेषान् प्रयोगान्तरे निवेशयन्ति!।

यच्चापरमुक्तं तत्त्वकारेण,—"गोभिलसूत्रे, पितृपात्रे—इत्यभिधानात्, संस्रवान्,—इति बहुवचनात्, मन्त्रे पितृभ्यइति पितृत्वेन,

"आवृतास्तत्र तिष्ठन्ति पितरः शौनकोऽब्रवीत्"।

इत्याश्वलायनगृह्यपरिशिष्टवचनेऽपि पितृत्वेन षडुपस्थितेरावाहनवत् षट्स्थितिमुद्दिश्य सकृदेव न्युब्जीकरणम्, न तु मातामहानां भेदे-

लोकं पृथक् करणम्"—इति। तदप्यसङ्गतम्। 'पितृपात्रे'—इति तावदस्माकं सूत्रपाठो न भवति। 'प्रथमे पात्रे'—इति खल्वत्र भगवान् सूत्रकारः पठति। सोऽप्येवमेव सूत्रमिदं पपाठ। 'प्रथमे-पात्रे पितृपात्रे'—इति व्याचक्रे च। स खल्वेवं सूत्रं लिखन् व्याकुर्वंश्च, कथं पुनरन्यथा लिखति,—इति न खल्वधिगच्छामि। संस्रवान्,—इति बहुवचनमपि पात्रत्रयसंस्रवपरतया नानुपपन्नम्। तथाच, समवनयनं पात्रत्रयसंस्रवानामेव, प्रथमपात्रन्तु तस्याधारः,—इति न किञ्चिदनुचितम्। अथ, 'प्रथमे पात्रे संस्रवान् समवनीय'—इत्युक्ते प्रथमपात्रातिरिक्तसंस्रवानामेव समवनयनं गम्यते?। गम्यमानोऽप्ययमर्थो मिथ्या,—इति ब्रूमः। कस्मात्?। अस्यामवगतौ प्रमाणविशेषस्याभावात्। यथा, "यस्य पर्णमयी जुहूर्भवति न स पापश्लोकं शृणोति"—इत्यत्र, पालाश्यां जुह्वां जातायां ततएव तत् फलं भवति,—इति जायमानमपि विज्ञानमप्रमाणमूलत्वान्मिथ्या विज्ञानम्,—इति चतुर्थाध्याये सिद्धान्तितम्। तद्वदत्राप्यवगन्तव्यम्। अशक्यत्वाच्च। न खलु प्रथमपात्रसंस्रवेणासमवनीय पात्रद्वयसंस्रवौ शक्यौ समवनेतुम्। किं कारणम्?। पात्रद्वयसंस्रवावपि हि प्रथमे पात्रे निःक्षेप्तव्ये। योहि प्रथमे पात्रे पात्रद्वयसंस्रवौ समवनयति, समवनयत्यसौ पात्रत्रयसंस्रवानवश्यम्। अपरिहार्य्यत्वात्। पितृत्वेन सदुपस्थितिसम्भवेऽपि, 'मातामहानाञ्चैवम्'—इति वचनागतं पृथक् करणं न शक्यते वारयितुम्। आवाहनवत्,—इत्यपि नोदाहरणम्। आवाहनेऽपि पृथक्करणस्योक्तत्वात्। सोऽयं स्वयमेवावाहने सकृदनुष्ठानं वर्णयति, स्वयमेव च तत् दृष्टान्तयति,—इति किमत्र ब्रूमः

'पैतृकं प्रथमं पात्रम्'—इत्यादि यमवचनविरोधोऽपि तस्यापरिहार्य्यः स्यात्। कथम्?। तद्धिवचनं न्युब्जकरणपरतया स्वयं वर्णितम्। तत्र च पितृपितामहप्रपितामहपात्राणुक्तानि। तेषां युगपत्करणे कथं न विरोधः।

तदिदं न्युब्जीकरणं कर्त्तुर्वामपार्श्वे करणीयम्। सौकर्य्यात्। प्रयोगान्तरेऽप्येवं पश्यामः। "न्युब्जमुत्तरतोऽन्यसेत्"—इति हि स्मरन्ति। उत्तरशब्दस्य,—

"उत्तरे चास्य सौवर्णं लक्ष्म पार्श्वे भविष्यति"।

इति भारते, "तस्मात् यस्य दक्षिणतोलक्ष्म भवति, तं पुण्यलक्ष्मीकमित्याचक्षते, उत्तरतः स्त्रियाउत्तरायणा हि स्त्री"—इति शतपथीये च ब्राह्मणे, वामवचनोदृष्टः। सइहापि ग्रहीतव्योभवति। अविरोधात्। पित्र्ये च कर्म्मणि प्राचीदिगुत्तरा भवति। "या दक्षिणा सा प्राची,या पूर्व्वा सोत्तरा"—इति हि पित्र्यामिष्टिमुपक्रम्य ब्राह्मणं भवति।

अस्मिन्नवसरे तूष्णीमुदकं दत्त्वा तिलोदकञ्च मन्त्रेण दातव्यम्। कुतः?। "दर्भान् प्रदायोदकपूर्व्वं तिलोदकं ददाति पितुर्नाम गृहीत्वाऽसावेतत्ते तिलोदकं ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधेति" "अप उपस्पृश्यैवमेवेतरयोः"—इति गृह्यकारवचनात्।

"तूष्णीं पृथगपोदद्यान्मन्त्रेण तु तिलोदकम्।
गन्धोदकञ्च दातव्यं सन्निकर्षक्रमेण तु"।

इति कर्म्मप्रदीपवचनाच्च। तदत्र, मन्त्रेण तिलोदकं गन्धोदकञ्च दातव्यम्,—इति वदन् गन्धोदकमपि तिलोदकवत् ये चात्र त्वाम्–

इति मन्त्रेण दातव्यम्,—इत्युपदिशति। यच्च 'अनुलेपनेयोग्या-गन्धो गन्धोदकम्'—इति नीलाम्बरेण वर्णितम्। तदसङ्गतम्। उदक-पदस्यानर्थकत्वापत्तेः। घृष्टोहि मलयजोगन्धोभवति। न च घृष्टानां विशुष्कानां नास्त्यनुलेपनयोग्यतेति तन्निरासार्थमुदकपदमिति वाच्यम्। यातयामतयैव तस्य निरासात्। न चादृष्टार्थं घर्षणम्, येनैवमापाद्येत। दृष्टोहि तस्यार्थोऽनुलेपनयोग्यता नाम। अन्यथा भूयःसु प्रदेशेषु गन्धमात्रोपादानादेवं प्रसज्येत। तस्मादसङ्गतैषा कल्पना। यद्यप्यन्वष्टक्यकर्म्मणि तदुपदिष्टम्, तथाप्यन्वष्टक्यधर्म्माणां पिण्डपितृयज्ञे, पिण्डपितृयज्ञधर्म्माणाञ्चात्र प्रदेशादत्रापि करणीयं भवति। नह्यत्र तन्निषिद्धम्। तदिदं तिलोदकदानं पात्रेषु करणीयम्। तथाच कात्यायनः।

"आसनाद्यर्घ्यपर्य्यन्तं वशिष्ठेन यथोदितम्।
कृत्वा कर्म्माथ पात्रेषु उक्तं दद्यात्तिलोदकम्"।

इति। महायशास्त्वाह,—"नात्र तिलोदकदानं पृथक्कार्य्यं विधेरभावात्। * * पिण्डपितृयज्ञेतिकर्त्तव्यताविधानात्तत्र चाप्रतिषेधादिति चेत्। न। अर्घ्यान्तराभावात्तत्राप्रतिषेधः। किञ्च यदि तत्राप्रतिषिद्धमत्र क्रियते, तदा सकृदाच्छिन्नदर्भमुष्टिस्तरणमष्टमदेश-परिवारणं मांसचरुश्रपणञ्च स्यात्"—इति। तदश्रद्धेयम्। अर्घ्य-पर्य्यन्तकर्म्मानन्तरमेव तत्र तिलोदकदानं—कात्यायनः स्मरति। त्वं पुनराह,—तत्रार्घ्यान्तराभावः,—इति। "सकृदाच्छिन्नं दर्भमुष्टिं स्तृणोति"—इति, "कर्षूश्च"—इति चैताभ्यां सूत्राभ्यां भगवता सूत्र-कारेण कर्षूणामभितोदर्भमुष्टिस्तरणस्योपदेशात् कर्ष्वाश्चात्र निवृत्ते-

वेक्ष्यमाणत्वात् तत्रापि निवृत्तिर्विज्ञायते। अग्निमतामग्निप्रणयनं यत्रापि भवति, स्तरणमपि दर्भमुष्टेस्तदभितः कर्त्तुमुचितम्। श्राद्ध-प्रदेशपरिवारणमपि यच्च क्रियते,—किन्नाम तत्रानिष्टं भवति,—इति न खल्वधिगच्छामि। विशेषं विना परिवृतएव पित्र्यं कर्म्म सर्व्वैरनुमन्यते। तथा हि हविषः श्वादिदृष्ट्युपघातो न भविष्यतीति।

"षण्डापविद्धचाण्डालपाषण्ड्युन्मत्तरोगिभिः।
कृकवाकुश्वनग्नैश्च वानरग्रामसूकरैः।
उदक्याद्यूतकाशौचिमृतहारैश्च वीक्षिते।
श्राद्धे, सुराम पितरोभुञ्जते पुरुषर्षभ!।
तस्मात् परिश्रिते कुर्य्यात् श्राद्धं श्रद्धासमन्वितः।
उर्व्व्यां च तिलविक्षेपाद्यातुधानान् निरासयेत्"।

इति च स्मरन्ति पौराणिकाः। पिण्डपितृयज्ञएव तावन्मांसचरु-र्नास्ति। "अन्वष्टक्यस्थालीपाकेन पिण्डपितृयज्ञोवाख्यातः"—इति सूत्रे स्थालीपाकग्रहणात्। कथमसौ अत्र अप्येत। परन्तु, तत्रान्वष्ट्य-श्राद्धेः सूचयिष्यमाणत्वात् मांसमप्यपेक्षया पच्यते। तदिदं तिलोदक-दानम्,—

"आसुरेण तु पात्रेण यस्तु दद्यात्तिलोदकम्।
पितरस्तस्य नाश्नन्ति दशवर्षाणि पञ्च च।
कुलालचक्रनिष्पन्नमासुरं मृण्मयं स्मृतम्।
तदेव हस्तघटितं स्थाल्यादि दैविकं भवेत्"।

इति कात्यायनोक्तपात्रेण करणीयम्। तिलोदकञ्चेदम्,—'अमुक-गोत्र पितरमुकशर्म्मन् असावेतत्ते तिलोदकं येचात्र त्वामनु यांश्च

त्वमनु तस्मै ते स्वधा'—इत्यन्वष्टक्योक्तेनैव प्रकारेण दद्यात्। तत्र हि भगवता गृह्यकारेण, 'पितुर्नाम गृहीत्वा'—इत्युपदिश्य, 'असावे-तत्ते'—इत्यसावित्यस्य पुनरुपदेशात् द्वयमेव प्रयोज्यं भवत्यदृष्टार्थम्। प्रत्यवोपस्थितेनादःपदार्थेन ब्राह्मणेन पित्रादीनामभेदबुद्ध्यर्थञ्च। 'एतत्ते',—इति, 'तस्मै ते'—इति च द्वयं यथा प्रयुज्यते। सर्व्वत्र चैवं पिण्डपितृयज्ञातिदेशस्थले असावित्यस्य पुनरुल्लेखोद्रष्टव्यः। महायश-साऽपि पिण्डदाने नामोल्लेखानन्तरमसाविति लिखितम्। अर्घ्यदाने त्वत्रभवता सूत्रकारेण नाम गृहीत्वा'—इत्यकरणात् असावित्यस्यैव नामोल्लेखतात्पर्य्यकत्वान्न तत्रासावित्यस्य पुनरुल्लेखः ॥०॥ १७॥०॥

## अथ गन्धपुष्पधूपदीपाच्छादनानां प्रदानम् ॥ १८ ॥

अत्रेत्यवसरानुवादकम्। तेन तिलोदकादिदानं कृत्वा,—इति ज्ञाप-यति। एवं ह्यवसरानुवादोऽर्थवान् भवति। इतरथा अर्घ्यदाना-वसरस्य पाठादेव लाभेनानर्थक्यमस्यापद्येत। अत्रेतिवचनाद्‌च गन्धा-दीनामेवप्रदानं, तेन गोहिरण्यादीनां श्राद्धान्ते दक्षिणारूपेण प्रदानं कार्य्यम्',—इति गार्ग्यनारायणः। तथा च दक्षिणामुपक्रम्य स्मरन्ति पौराणिकाः।

"सौवर्णरौप्यपात्राणि मनोज्ञानि शुभानि च।
हस्त्यश्वरथयानानि समृद्धानि गृहाणि च।
उपानत्पादुकां छत्रचामरव्यजनानि च।
यज्ञेषु दक्षिणामुख्याइति संचिन्तयन् हृदि।
दरिद्रोऽपि यथाशक्त्या दद्याद्विप्रेषु दक्षिणां"।

इति। अन्येत्वाहुः,—

"यथोपदिष्टांस्तान् सर्व्वानलङ्कुर्य्याद्विभूषणैः।
स्रग्दामभिः शिरोवेष्टैर्धूपवासोऽनुलेपनैः"।

इति देवलादिवचनात् अलङ्कारादिकमप्यत्रैव दातव्यम्। अत्रेत्यर्थाभावादवसरानुवादमात्रम्,—इति। देवलादिवचनानां स्वोक्तप्रयोगविषयत्वात् प्रयोगान्तरविषयत्वं नास्ति। येतु कञ्चित् प्रयोगमनारभ्यैवाधीताः, तेष्वेव परं पूर्व्वोक्तं द्वैतमुपतिष्ठते। तदत्रभवन्तोभूमिदेवाः प्रमाणम्।

"चामरं तालवृन्तञ्च श्वेतच्छत्रं च दर्पणम्।
दत्त्वा पितृणामेतानि भूमिपालो भवेदिह"।

इति।

"यः कञ्चुकं तथोष्णीषं पितृभ्यः प्रतिपादयेत्।
ज्वरोद्भवानि दुःखानि स कदाचिन्न पश्यति॥
स्त्रीणां श्राद्धे तु सिन्दूरं दद्युश्चण्डान्तिकानि च।
निमन्त्रिताभ्यः स्त्रीभ्योये ते स्युः सौभाग्यसंयुताः"॥१८॥

इति।

"अलङ्काराः प्रदातव्यायथाशक्ति हिरण्मयाः।
केयूरहारकटकमुद्रिकाकुण्डलादयः।
स्त्रीश्राद्धेषु प्रदातव्याश्चालङ्काराश्च योषिताम्।
मञ्जीरमेखलादामकर्णिकाकङ्कणादयः"।

इति।

"आदर्शव्यजनं छत्रशयनासनपादुकाः।
मनोज्ञाः पटवासाश्च सुगन्धाश्चूर्णमुष्टयः।
अङ्गारधानिकाः शीते योगपट्टाश्च यष्टयः।
कटिसूत्राणि रौप्याणि मेखलाश्चैव कम्बलाः।
कर्पूरादेश्च भाण्डानि ताम्बूलायतनं तथा।
भोजनाधारयन्त्राणि पतद्ग्राहांस्तथैवच।
तथाञ्जनशलाकाश्च केशानाञ्च प्रसाधनम्।
एतान् दद्यात्तु यः सम्यक् सोऽश्वमेधफलं लभेत्"।

इति चैवमादीनान्तु युक्तमस्मिन्नवसरे दानमिति। पितृणां दत्त्वेत्यभिधानाच्चैतं गम्यते। आच्छाद्यते अनेनेत्याच्छादनं वस्त्रम्। तदभावे यज्ञोपवीतं देयमित्युक्तं ब्रह्मवैवर्त्ते।

"यज्ञोपवीतं दातव्यं वस्त्राभावे विजानता।
पितृभ्योवस्त्रदानस्य फलं तेनाश्नुतेऽखिलम्"।

इति। पाद्मे तु,—

"निष्क्रयोवा यथाशक्ति वस्त्राभावे प्रदीयते"।

इति वस्त्रमूल्यमपि दातव्यम्—इत्युक्तम्। आदित्यपुराणे तु यज्ञोपवीतस्यावश्यकत्वमुक्तम्। यथा।

"पितॄन् सत्कृत्य वासोभिर्दद्याद्यज्ञोपवीतकम्।
यज्ञोपवीतदानेन विना श्राद्धन्तु निष्फलम्"।

इति। एतद्यतिस्त्रीशूद्रश्राद्धेष्वपि देयम्,—इति हेमाद्रिः। पुष्पादिविधिनिषेधाश्च स्मृत्यन्तरेभ्योयथासम्भवमवगन्तव्याः। ग्रन्थगौरवभयादुपारम्यतेऽस्माभिः

तेषां खल्वेषां गन्धादीनां द्वन्द्वनिर्देशात्, लाघवात्,

"अर्घ्येऽक्षय्योदके चैव पिण्डदानेऽवनेजने।

तन्त्रस्य विनिवृत्तिः स्यात् स्वधावाचनएवच"।

इति च्छन्दोगपरिशिष्टे, अर्घ्यादिविशेषोपादानमहिम्ना तदितरत्राप्रतिबाधके तन्त्रानुष्ठानाभ्यनुज्ञानाच्च तन्त्रेणैव प्रदानं करणीयम्। तदेवं द्रव्यतन्त्रतैवामीषां भवति, न पुनरुद्देश्यतन्त्रताऽपि। एतदनेनोक्तं भवति। पितरमुद्दिश्य गन्धादिपञ्चकं तन्त्रेणोत्स्रष्टव्यम्। एवं पितामहम्। एवं प्रपितामहम्। मातामहपक्षेऽप्येवम्,—इति। कथं ज्ञायते?। शृणु यथा ज्ञायते। "उदकपूर्व्वं तिलोदकं ददाति पितुर्नाम गृहीत्वा असावेतत्ते तिलोदकं ये चात्र त्वामनु यांश्च त्वमनु तस्मैते स्वधेत्यप उपस्पृश्यैवमेवेतरयोः, तथा गन्धान्"—इति तावदन्वष्टक्यकर्म्मणि गृह्यकारेण सूचितम्। तदत्र, तिलोदकस्य प्रत्येकेन प्रदानं सूचयित्वा, 'तथा गन्धान्'—इति सूचयन् गन्धादीनां मिलितानामपि, पित्रादिप्रत्येकोद्देशेनैव दानमतिदिशति। अन्वष्टक्यधर्म्माः पिण्डपितृयज्ञे, तद्धर्म्माश्चात्र प्रदिश्यन्ते,—इत्यवोचाम। अस्मादेव कारणात् संबोधनान्तनाम्ना ये चात्र त्वाम्,—इति मन्त्रेणचामीषां गन्धादीनामुत्सर्गः कर्त्तव्यः,—इत्यवगच्छामः। तदमी मिलिता गन्धादयः प्रत्येकं पित्रादिमुद्दिश्य पूर्व्वोक्तप्रकारेणोत्सृज्य ब्राह्मणेषु प्रतिपादयितव्याभवन्ति। प्रतिपादनञ्चामीषामेकैकशः करणीयं न मिलितानाम्। कुतः?।

"गन्धान् ब्राह्मणसात् कृत्वा पुष्पाण्यृतुभवानि च।

धूपञ्चैवानुपूर्व्वेण अग्नौ कुर्य्यादतः परम्"।

इति कात्यायनेन तथोपदेशात्। 'धूपञ्चैव'—इत्यनेन दीपाच्छादन-योरपि परिग्रहः। हरिहरस्त्वेतद्वचनमाचदर्शी ब्राह्मणोद्देशेन गन्धा-दीनामुत्सर्गमाह। तदसङ्गतम्। पश्चिमप्रतिपत्त्यभिप्रायकत्वादस्य। 'तथा गन्धान्'—इति सूचयता गृह्यकारेण खल्वमीषां पित्राद्युद्देशेन दानमनुशिष्टम्।

इदमिदानीं सन्दिह्यते। किमेतद्गन्धादिपञ्चकमेव आदौ पितृ-ब्राह्मणाय प्रतिपाद्य, तथैव पितामहब्राह्मणाय प्रतिपादनीयम्,—इत्येवंक्रमेणामीषां प्रतिपत्तिः करणीया, आहोस्वित् पित्रादिप्रत्येक-ब्राह्मणेभ्यएवादितोगन्धान् प्रतिपाद्य, तथैव पुष्पादीनां प्रतिपादनं करणीयम्?—इति। पित्रादिप्रत्येकब्राह्मणेभ्यएवादितो गन्धान् प्रतिपाद्य, तथैव पुष्पादीनां प्रतिपादनं कर्त्तव्यम्,—इति ब्रूमः। कस्मात्?। यस्मादानुपूर्व्व्येण इति वचनात् विनिगमनाविरहेण ब्राह्म-णानामिव गन्धादिप्रतिपादनस्यापि भवति प्रतीतिः। भवति चेत्, कथमुत्सृज्यते। तस्मात् सर्व्वेएव ब्राह्मणेभ्यआदौ गन्धान् प्रतिपाद्य, तथैव क्रमेण पुष्पादयोऽपि प्रतिपादयितव्याः। यथा हि वाजपेये सप्तदशानां प्राजापत्यानां पशूनां क्रमेण प्रोक्षणं कृत्वा, तेनैव क्रमे-णान्येऽपि चोदकप्राप्ताधर्म्माः कर्त्तव्याः आलम्भान्त, न सर्व्वे प्रोक्षणा-दयएकस्मिन् पशौ अनुष्ठाय पुनरन्यस्मिन्ननुष्ठातव्याः,—इति पञ्चमा-ध्याये सिद्धान्तितम्। तद्वदत्रापि पित्रादिब्राह्मणेभ्यः क्रमेण गन्धान् प्रतिपाद्य तेनैवक्रमेण पुष्पादीनामपि प्रतिपादनं करणीयम्, न पुनः सर्व्वमेव गन्धपुष्पादिकमेकस्मै ब्राह्मणाय प्रतिपाद्य पुनरन्यस्मै प्रति-पादयितव्यम्,—इति। नारायणोपाध्यायोऽप्याह,—"प्रथम गन्धं

"पित्रादित्रयब्राह्मणेभ्यः, पश्चात् पुष्पाणि,—इत्येवंक्रमेण ब्राह्मणनिष्ठाम् कृत्वा"—इति । तस्मात्,—'एकस्य सकलं गन्धादिकं प्रदायापरस्य देयम्'—इत्यसङ्गतम् वचनम् । प्रतिपादनञ्चामीषाममन्त्रकं करणीयम् । तत्रमन्त्रस्यानुपदेशात् । तत्त्वकारस्त्वाह । 'गन्धादीनां मिलितानां तन्त्रेणैवोत्सर्गः, निवेदनन्तु प्रत्येकशः । तथा च शाव्यायनः । "एषते गन्धः, एतत्ते पुष्पम्, एषते धूपः, एषते दीपः, एतत्त आच्छादनमिति"—इति । तदसङ्गतम् । शाव्यायनेन ह्ययमुत्सर्गप्रकारेगन्धादीनामुपदिष्टः । न निवेदनप्रकारः । प्रतिपत्तौमन्त्रसंयोगस्यानावश्यकत्वात् । 'एषते पिण्डः'—इत्यपि अनुपदं तस्य सूत्रणमस्ति । न हि पिण्डोऽप्युत्सृज्य प्रतिपाद्यते । तस्मात् पिण्डे तावदुत्सर्गप्रकारोऽयमित्यविवादम् । तत्सामान्याद्गन्धादीनामपि तथैवास्तु । अलं-प्रतिपत्तौ मन्त्रान्वयवर्णनेन । तस्मात्, प्रत्येकममीषामुत्सर्गः शाव्यायनस्यानुमतः । सोऽयं तदीयएव प्रयोगे निविशते न पुनरस्मदीयेऽपि । एतेन,—

"एतद्वःपुष्पमित्युक्त्वा पुष्पाणि च निवेदयेत्" ।

इति ब्रह्मपुराणादिवचनान्यपि व्याख्यातानि । भवदप्येतत् प्रतिपादनमन्त्रं तत्तत्प्रयोगएव भविष्यति,—इत्यनुदाहरणम् ।

अस्मिन्नवसरे भूमिशोधनमण्डलकरणभोजनपात्रस्थापनमिच्छन्ति । कृतशेषदानानन्तरमेव पात्रालम्भनोपदेशेन पूर्व्वं पात्रस्थापनस्यावगतेः । मण्डलमन्तरेण भोजने दोषश्रवणाच्च । एतत् सर्व्वं स्मृत्यन्तरेभ्योयथासम्भवमवगन्तव्यम् ॥ ० ॥

उद्धृत्य घृताक्तमन्नं पृच्छत्यग्नौ करिष्यामीति ॥ १९

ऋजुरक्षरार्थः। घृताक्तमिति कुर्व्वन् व्यञ्जनक्षारादेरननुज्ञां दर्शयति। घृताक्तमेवान्नमुद्धृत्य,—इत्यर्थः। तदेतद्गुणविधानार्थं पिण्डपितृयज्ञ-प्रदेशप्राप्तोऽपि प्रश्नोऽनूद्यते ॥०॥ १९ ॥०॥

कुर्व्वित्यनुज्ञातः पिण्डपितृयज्ञवद्धुत्वा ॥ २० ॥

ऋजुरक्षरार्थः। पिण्डपितृयज्ञप्रदेशप्राप्तस्यापि कुर्व्वित्यनुज्ञानस्य पुन-रुपादानम्,—"प्रत्याहुः क्रियतामित्यर्थकामं कुरुष्वेति पशुकामं कुर्व्विति पुत्रकामं"—इति छन्दोगापरसूत्रोक्ताधिकारिविशेषानन-ज्ञानार्थम्। 'पिण्डपितृयज्ञवदुपचारः'—इति सिद्धे पिण्डपितृयज्ञधर्म्म-प्रदेशे, 'पिण्डपितृयज्ञवद्धुत्वा'—इति पुनर्व्वचनं तन्त्रान्तरानुमतानां मन्त्रदैवतप्रकाराणां निरासार्थमादरार्थं वा। अनग्निमता खल्वत्र पितृब्राह्मणहस्ते होतव्यम्। तथाचान्वष्टक्यकर्म्मणि कात्यायनः।

"पित्र्ये यः पङ्क्तिमूर्द्धन्यस्तस्य पाणावनग्निमान्।
हुत्वा मन्त्रवदन्येषां तूष्णीं पात्रेषु निःक्षिपेत्"।

इति। यः पङ्क्तिमूर्द्धन्यस्तस्य पाणौ मन्त्रवद्धुत्वा, अन्येषां पाणौ तूष्णीं हुत्वा,—इत्यर्थः। नचानुषङ्गे मानाभावादन्येषां पात्रेषु तूष्णीं निःक्षिपेत्। एवञ्च, अन्येषामित्यभिधानात् तत्पात्रे हुतशेषं न देयमिति व्याख्यानं युक्तमिति वाच्यम्। मन्त्रवदित्यस्यानर्थकत्वापत्तेः। तत्पात्रे हुतशेषदानाभावस्यादृष्टार्थतापत्तेश्च। शाखान्तरेऽपि सर्व्वेषां पाणौ होमोदृश्यते। किन्तु तत्र सर्व्वत्रैव मन्त्रसम्बन्धः,—इति विशेषः। यथा शौनकः।

"सर्व्वेषामुपविष्टानां विप्राणामथ पाणिषु ।
विभज्य जुहुयात् सर्व्वं सोमायेत्यादिमन्त्रतः" ।

इति । तथा आश्वलायनः । "अभ्यनुज्ञायां पाणिष्वेव वा"—इति ।

यदा पुनर्ब्राह्मणालाभात् कुशमयब्राह्मणे श्राद्धं क्रियते, तदा तत्रैव श्राद्धवदग्नौकरणहोमोऽपि कर्त्तव्यः। ब्राह्मणकार्य्ये तस्य विधानात्। अग्नौकरणहोमोहि गुणभावेन श्राद्धस्योपकरोति। तस्यापि विप्रपाणिः। मुख्यं कथं सगुणं स्यादिति खल्वसौ गुणेषु प्रवर्त्तते। स यदि गुणस्य गुणं विनिपातयति, नास्य किञ्चिद्धीयते। अथ तु गुणस्य गुणमनुरुन्धानो मुख्यं विनिपातयति, स्वार्थोऽस्य हीयते। नचैतदुचितम्। तस्मान्मन्त्रदृष्टं जलादिकमत्रेच्छन्त्यन्ये।

इदमिदानीं सन्दिह्यते। किमयमग्नौकरणहोमः उपवीतिना प्राङ्मुखेन करणीयः, आहोस्वित् प्राचीनावीतिना दक्षिणामुखेन?—इति। उभयथा,—इत्याह। तथाचोभयथा दर्शनम्। "स उदास्याग्नौ द्वे आहुती जुहोति देवेभ्यः"—इति माध्यन्दिनीये ब्राह्मणे। "प्राचीनावीती भूत्वा दक्षिणासीनः * * स उदास्य द्वे आहुती जुहोति"—इति च शातपथीये ब्राह्मणे। सोऽयं विकल्पः। आह। स्मृतिकारविरोधस्तर्हि स्यात्। स खल्वग्नौकरणहोममुपदिश्य, "अत ऊर्द्ध्वं प्राचीनावीतिना वाग्यतेन कृत्यम्"—इति सूत्रयन्नग्नौकरणहोमे उपवीतित्वमभिप्रैति,—इति गम्यते। नायं दोषः। परतः प्राचीनावीतित्वोपदेशस्य पुरस्तादनियमाभिप्रायकतयैवोपपत्तेर्नित्यवदुपवीतित्वप्रापकत्वे मानाभावात्। तस्मादग्नौकरणहोमे प्राचीनावीतित्वोपवीतित्वयोर्विकल्पमभिप्रैति स्मृतिकारः—इत्यवगच्छामः। स खल्वयमस्यः सूत्रकारस्याभिप्रायः परिशिष्टकारेण स्पष्टीकृतः। यथा।

"अग्नौकरणहोमश्च कर्त्तव्यउपवीतिना।
प्राङ्मुखेनैव देवेभ्योजुहोतीति श्रुतिश्रुतेः।
अपसव्येन वा कार्य्योदक्षिणाभिमुखेन च।
निरुप्य हविरन्यस्मान्यस्मै न हि हूयते"।

इति। तथा चास्मदीये गृह्यसूत्रे। "तस्मिन्नेवाग्नौ अपयत्योदनचरुञ्च मांसचरुञ्च"—इति। "सर्व्वस्यत्वेवान्नस्यैतान् बलीन् हरेत् पित्र्यस्य वा"—इति च। तदत्र पित्र्यस्य चरोरभिधानान्निर्व्वापोपि पितृभ्य एव ज्ञायते।

अपरे पुनरेतदबुद्धा विभिन्नशाखिविषयाणां परस्परविरुद्धानामुच्चावचवचनानां समन्वयं कर्त्तुमिच्छन्तोयेभ्यो यथाऽरोचिषत, ते तथैव बहुप्रकारं प्रालपिषन्त। तदुपेक्षणीयम्। प्रत्यादेशश्चामीषामेकैकशोगृह्यभाष्ये प्रदर्शितोऽस्माभिरित्युपारम्यते॥०॥ २०॥०॥

## हुतशेषं ब्राह्मणाय दत्वा॥ २१॥

ऋजुरत्रार्थः। 'ब्राह्मणाय'—इत्युद्देश्यगतमेकत्वं ग्रहैकत्वमिव न विवक्षितम्। एवञ्च, ब्राह्मणाय,—इति सामान्येनोपदेशात् देवब्राह्मणायाप्येतत् देयम्। सोऽयं वैकृतोविशेषोपदेशः प्राकृतं पात्रेषु दानं निवर्त्तयति। शरमयबर्हिरुपदेशइव कुशमयं बर्हिः। कात्यायनः खल्वन्वष्टक्यकर्म्मणि हुतशेषस्य पात्रेषु दानमुपदिशति। चोदकाश्चैतत् प्रापयति। तच्च वचनेनोपरोद्धव्यं भवति। "पिण्डपितृयज्ञवद्धुत्वा हुतशेषं पाणिषु दद्यात् पाणिमुखाः पितरइति श्रुतेः"—इति च छन्दोगापरसूत्रम्। रघुनन्दनस्त्वेतदजानानोऽत्रापि पात्रेषु हुत-

शेषदानमाह। समुच्चयरसिकोह्यसौ प्रयोगान्तरविशेषानपि प्रयोगान्तरे समुच्चिनोति । स खल्वयं "कृतोच्छिष्टं ब्राह्मणेभ्यः प्रदाय"— इति यमवचनं लिखन्नपि कथं पुनः पात्रेषु कृतशेषदानमाह,—इति न खल्वधिगच्छामि ।

तदिदं ब्राह्मणेभ्योदत्तं कृतशेषमन्नमर्थादुपकल्पितैरन्नैर्मिश्रीकृत्य तैरुपयोक्तव्यमित्याहुः । श्लोकमप्युदाहरन्ति ।

"अन्नं पाणितले दत्तं पूर्व्वमश्नन्त्यबुद्धयः ।
पितरस्तेन तृप्यन्ति शेषान्नं न लभन्ति ते ।
यच्च पाणितले दत्तं यच्चान्नमुपकल्पितम् ।
एकीभावेन भोक्तव्यं पृथग्भावो न विद्यते ।

इति । अस्मिन्नवसरे, अन्नादिपरिवेशनं कर्त्तव्यमिति वक्ष्यामः । तद्विधिनिषेधाश्च यथासम्भवं स्मृत्यन्तरेभ्योऽवगन्तव्याः ॥०॥ २१॥०॥

## पात्रमालभ्य जपेत्,—पृथिवी ते पात्रं द्यौः पिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहेति ॥ २२ ॥

पात्रमित्येकवचनमविवक्षितम् । भोजनपात्राण्यालभ्य स्पृष्ट्वा पृथिवी ते पात्रमित्यादि मन्त्रं जपेत् । स चायमालम्भोदक्षिणहस्तेन कर्त्तव्यः । कुतः ? । अङ्गानभिधानात् । यच्च,—

"दैवेऽनुत्तानपाणिभ्यामुत्तानाभ्याञ्च पैतृके" ।

इति यमवचनम् । तत् तदुक्तप्रयोगविषयमित्यसकृदावेदितम् ।

स खल्वयं पात्रालम्भोऽन्नं परिविश्य करणीयः । कथमसूचितमन्नपरिवेशनं क्रियते ? । अर्थतोऽवगतेरित्याह । अनुपदं खल्वाचार्थ्योऽन्ने-

ऽङ्गुष्ठनिवेशनमन्नस्य ब्राह्मणानां सूचयिष्यति। तदेवं साचादसूचित-मप्यर्थादवगतमन्नपरिवेशनं कर्त्तव्यं भवति। यदि कर्त्तव्यम्, विशेषा-भावात् जपात् परतएव क्रियताम्?। न,—इत्युच्यते। अन्नसंस्का-रार्थोहि जपोन पात्रसंस्कारार्थः। अन्नेन हि संस्कृतेन नः प्रयो-जनम्। तद्धि ब्राह्मणाउपयोच्यन्ति। संस्कृतमपि हि पात्रं गुण-भावेनान्नस्यैवोपकरिष्यति। करिष्यति चेत्, तस्यैवोपकारः कल्प्य-ताम्। अलं पात्रस्याप्युपकारान्तरकल्पनया। न हि जपेन दृष्टः कश्चिदुपकारः क्रियते,—इत्यवश्यमदृष्टं कल्पनीयम्। सचेदन्नस्योपक-रोति, एकमेवादृष्टं कल्पयितव्यं भवति। अथ तु, पात्रस्योपकुर्व्वन्न-स्योपकरोति,—इति कल्प्यते, द्वे तावददृष्टे कल्पयितव्ये भवतः। नचैतत् न्याय्यम्। अपूर्व्वप्रयुक्ताः खल्वालम्भजपादयः पदार्थाः प्रधान-स्यैवाङ्गम्। तत्र, 'पात्रमालभ्य'—इति वचनात् आलम्भः पात्रस्योप-कारद्वारा प्रधानस्योपकरोतु। जपे तु नैतदस्ति। प्रमाणाभावात्। मन्त्रो ह्यस्य अन्नार्थतां गमयति। 'पृथिवी ते पात्रम्'—इति ह्याह! अन्नं हि ब्राह्मणस्य मुखे जुहोति, न पात्रम्। अन्नेऽपि तर्हि नायं मन्त्रार्थोघटते। न खल्वन्नस्य पात्रं पृथिवी, द्यौर्व्वा तस्य पिधानम्, ब्राह्मणस्य मुखं वा अमृतम्, न वा अन्नमप्यमृतं नाम। नैष दोषः। पञ्चाग्निविद्यादिवदुपपत्तेः। यथा हि पञ्चाग्निविद्यादिषु योषिदादि-ष्वग्न्यादिबुद्धिः, तथैवात्र पात्रादिषु पृथिव्यादिबुद्धिरभिप्रेयते। अन्ने-चामृतबुद्धिः। संस्कारार्थम्। एवं खल्वेतदनुध्यातं सत् संस्कृतं भवि-ष्यति। संस्कृतञ्च सत् ब्राह्मणानामुपयोगेन महते कल्याणायोपकल्पि-ष्यते,—इति। अमरणहेतुः खल्वन्नं शक्यमम्रृतमिति वक्तुम्। तथाच ब्राह्मे पुराणे।

"पृथिवी पात्रमित्यन्नममृतं चिन्तयेत् पठन्"।

इत्यत्रेऽमृतचिन्तामुपदिशति। रघुनन्दनस्त्वेतदबुद्धा, परिवेशनात् परतोजपे मन्त्रलिङ्गविरोधमाह। यथापरमुक्तम्,—मन्त्रे अमृतमित्यनेन यज्ञशेषमात्रावगतेस्तत्प्रक्षेपानन्तरमेव पात्रालम्भोजपस्य, ततः परिवेशनम्,—इति। तदप्यसङ्गतम्। मन्त्रलिङ्गविरोधात्। कथम्?। हुतशेषस्यात्र ब्राह्मणाय दानेन पात्रे प्रक्षेपाभावात् पृथिवी ते पात्रमित्याद्यनुपपत्तेः। जुहोमि,—इत्यनुपपत्तेश्च। यद्धि पूर्वं ब्राह्मणाय दत्तं, कथमिदानीं तद्धूयेत। अन्नं खल्विदानीं हूयेत। अमृतशब्दस्य यज्ञशेषवचनत्वेऽपि तन्मात्रवचनत्वे न प्रमाणम्। तस्मात् परिवेशनात् परतोजपेऽपि न कश्चिद्विरोधः। न खल्वपरिवेशितेऽन्ने तत्रामृतबुद्धिस्तत्पात्रादिषु वा पृथिव्यादिबुद्धिर्युक्ता। तस्मात् परिवेशनात् परं पात्रालम्भोजपश्च कर्त्तव्यः।

आह। परिवेशनात् परतः पात्रालम्भे, हुतशेषं दत्त्वा पात्रमालभ्य,—इति वचनं विरुध्यते?। न। यस्मादेवमपि हुतशेषदानस्य पूर्व्वकालता न विरोत्स्यते। तत्र हि क्त्वा स्मर्य्यते न आनन्तर्य्ये। न हि 'भुक्त्वा गच्छति'—इत्युक्ते भोजनानन्तर्य्यं गमने गम्यते, किन्तु भोजने गमनात् पूर्व्वकालता। न हि भुक्त्वा अनाचम्यैव कश्चिद्गच्छति। अस्तु तर्ह्यालम्भस्य पात्रार्थत्वात् पात्रालम्भात् परतः परिवेशनम्, ततो जपः?। तदपि नास्ति। कुतः?। यतः परिवेशनात् परमप्यालम्भे न तस्य पात्रार्थता हीयते,—इत्यनैकान्तिकोहेतुः। अपिच। आलभ्य जपेत्,—इति वचनात् आलम्भानन्तरं पात्रमत्यजन्नेव जपति,—इति गम्यते। तदपि कथम्? इति चेत्। किमनेन प्रसक्तानुप्रसक्तेन?।

गम्यते तावदेवम् । गम्यते चेत्,—न युज्यते विनाकारणमुत्स्रष्टुम् । आलम्भात् परतश्चेत् परिविष्यते, नूनमवगतिरियमुत्सृज्येत । तथाच, यथा 'उपविश्य भुङ्क्ते'—इत्युपवेशनं भोजनकालमनुवर्त्तते, तथा 'आलभ्य जपेत्'—इत्यालम्भोऽपि जपकालमनुवर्त्तते । तस्मात् परिवेशनात् परं पात्रालम्भः, ततोजपः,—इति सिद्धम् । तन्त्रान्तरकारा अप्येवं स्मरन्ति । यथा याज्ञवल्क्यः ।

"दत्त्वाऽन्नं पृथिवीपात्रमिति पात्राभिमन्त्रणम्" ।

इति । पात्राभिमन्त्रणं पात्रस्थान्नाभिमन्त्रणम् । तथाच ब्रह्मपुराणम् ।

"देवपूर्व्वं पितृभ्योऽन्नमाज्ययुक्तं मधुप्लुतम् ।
मन्त्रितं पृथिवीत्येवं मधुवातेत्यृचं जपेत्" ।

इति मन्त्रितमन्नमित्यन्नस्य मन्त्रणमाह । यद्यप्येतत् सर्व्वं तन्त्रान्तरप्रयोगविषयम्, तथापि न्यायागतस्यार्थस्योपोद्बलकं भवतीति तदुदाहरणार्थतयोपन्यस्तं परोक्तसमुच्चयवादिनां प्रत्यादेशार्थञ्च । यच्च मार्कण्डेयपुराणवचनम्,—

"कृतशेषं प्रदद्यात्तु भाजनेषु द्विजन्मनाम् ।
भाजनालम्भनं कृत्वा दत्त्वाचान्नं यथाविधि ।
यथासुखं जुषध्वं भोरितिवाच्यमनिष्ठुरम्" ।

इति । तत्रान्नस्य दानमुत्सर्गेण परिवेशनमिति समुच्चयवादिभिः सन्तोष्टव्यम् । अनुपदम्, 'यथासुखं जुषध्वम्'—इति वचनोपदेशाच्चैतदेवं प्रतिपत्तव्यम् । अन्नोत्सर्गात् परं हि तद्वचनं तैरिष्यते । परमार्थतस्त्वेतदपि वचनं तदुक्तप्रयोगविषयमित्यस्माकं नास्त्यनुपपत्तिः । भाजनेषु कृतशेषप्रदानञ्चैतदुपोद्बलयति । न च तत्र जपोऽप्यस्ति, अनुपदेशात् ।

समुच्चयवादिनाम्बियमनुपपत्तिरवर्जनीया स्यात्। 'मन्त्रितं पृथिवी-त्येवम्'—इत्यनन्यगतेर्वचनात्,—इत्यास्तां विस्तरः। सोऽयं न्यायलभ्यो-ऽर्थः,—इति कृत्वा न खल्वत्र भवान् सूत्रकारः परिवेशनमन्त्रस्य सूत्र-यास्त्रकार,—इति लिख्यते ॥०॥ २२ ॥०॥

## वैष्णव्यर्चा यजुषावाऽङ्गुष्ठमन्नेऽवधाय ॥ २३ ॥

वैष्णवी ऋक्,—'इदं विष्णुर्विचक्रमे'—इत्यादिका। यजुः,—'विष्णो! हव्यं रक्षस्व'—इति केचित्। 'कृष्ण! कव्यमिदं रक्षस्व मदीयम्'—इति केचित्। उभयत्रैव, दैवे 'हव्यम्'—इति, पित्र्ये च 'कव्यम्,—इति पठन्ति। तदत्र भवन्तो भूमिदेवाः प्रमाणम्। वाशब्दोविकल्पार्थः। अङ्गुष्ठमन्नेऽवधाय निधाय। इदञ्चाङ्गुष्ठनिवेशनमन्त्रसंस्कारार्थतया कुशमयब्राह्मणपक्षेऽपि करणीयं भवति। स्मरन्ति च।

"निरङ्गुष्ठञ्च यत् श्राद्धं वहिर्जानु च यत् कृतम्।
वहिर्जानु च यद्भुक्तं सर्व्वं भवति चासुरम्"।

इति। अन्ने,—इति वचनाचान्न एवाङ्गुष्ठावधानं न जलादाविति द्रष्टव्यम्।

अस्मिन्नवसरेऽन्ने तिलविकरणं करणीयम्। कथं ज्ञायते?।

"त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः"।

इति।

"प्राचीनावीतमुदकं तिलाः सव्याङ्गमेव च"।

* * * * * * * * *

वस्तभानि प्रशस्तानि सदैवैतानि पैतृके"।

इति च कश्चित् प्रयोगमनारभ्य सामान्यतः स्मरणात्। "यद्दृश्याय

दद्यात्तङ्कुविशेषैरुपसिच्य"—इति च परिभाषितम्। 'हविष्य'—इति तिलानामाख्या,—इति महायशाः। दैवे च यवविकरणं कर्त्तव्यम्। यः कश्चिदर्थः पित्र्ये तिलैः क्रियते, स हि दैवे यवैः करणीयोभवति। यवविकरणञ्चेदं 'यवोऽसि'—इति मन्त्रेण स्यात्। कुतः?। मन्त्रविशेषस्यानुपदेशेन अर्घ्यपात्रीययवकिरणमन्त्रस्यादर्त्तुमुचितत्वात्। कथम्?। यवविकरणसामान्यात्। मन्त्रलिङ्गाच्च। तस्मात्, सूत्रानुपात्तत्वात् समन्त्रकयवविकरणं न,—इत्यसङ्गतं वचनम्। यवविकरणस्याप्येवमकरणापत्तेश्च। क्रियते च। तस्मात् मन्त्रोऽपि पूर्व्वोक्तयुक्त्या पठ्यताम्। पित्र्यइव दैवेऽपि समन्त्रकत्वस्योचितत्वात्। विहितावहितत्वसन्देहेचाविहितकरणमेव न्याय्यम्,—इति भवानेवाह। पित्र्ये तिलविकरणञ्च 'तिलोऽसि'—इति मन्त्रेण स्यात्। कुतः?। मन्त्रलिङ्गात्। 'पृक्तः स्वधया'—इति ह्याह। 'स्वधा'—इति पितॄणामन्नं ब्रूमः। 'स्वधा वै पितॄणामन्नम्—इति हि निगमोभवति।

मध्वप्यन्ने देयम्। एवं हि मधुमन्त्रपाठोमधुजपश्च दृष्टार्थौ भविष्यति।

"यो दद्यादन्नमस्माकं तत् सर्व्वं मधुना सह"।

इत्यपि पितृगीता गाथा भवति।

अस्मिन्नवसरेऽन्नस्योत्सर्गः करणीयः। कथं ज्ञायते?। अन्नसंस्कारो ऽङ्गुष्ठनिधानान्तेन परिसमाप्यते। न च तावतैव नः कृतकृत्यता। अतोऽन्नमिदानीमुत्स्रष्टव्यम्। उत्सृष्टं खल्वन्नं ब्राह्मणैरुपयुक्तं महते कल्याणाय कल्पिष्यति,—इति। अनर्थकस्तर्ह्युत्सर्गः, ननु ब्राह्मणानामुपयोगेनैव कृतार्थता नः सम्पत्स्यते। वाढ़मेवं सम्पत्स्यते कृता-

र्थता। तथापि, तत्रभवन्तो ब्राह्मणाः कथमनुत्सृष्टं परस्वान्नमुपयो-क्ष्यन्ति। तस्मात्तदर्थमन्नोत्सर्गः।

"श्रद्धासमन्वितैर्दत्तं पितृणां नामगोत्रतः।

यदाहारास्तु ते जातास्तदाहारत्वमेति तत्"।

इति च स्मरन्ति। अनुपदमापोशानार्थानामपां प्रदानस्य सूचणा-दस्मिन्नेव क्रमे तत्करणमवगच्छामः। उत्सर्गस्य कृतत्वे खल्विदानीमु-पयोगो ब्राह्मणानामापततीत्यनुपदमापोशानार्थानामपां प्रदानमुप-पन्नतरं भवति। दत्ते खल्वन्ने पूर्व्वं पाणिषु दत्तं कृतशेषमन्ने निःक्षि-प्यापोशानं कृत्वा ब्राह्मणाश्चान्नमुपयोक्ष्यन्ति,—इति। कात्यायनोऽप्य-स्मिन्नवसरेऽन्नोत्सर्गमुपदिशति। तथाच कात्यायनसूत्रम्। "वैष्ण-व्यर्चा यजुषा वाऽङ्गुष्ठमन्नेऽवगाह्यापहताइति तिलान् विकीर्य्योष्णं स्निष्टमन्नं दद्यात्"—इति। तथा छन्दोगपरसूत्रम्। "अङ्गुष्ठमन्ने-ऽवधायासावेतत्तेऽन्नमिति, सकृत्सकृदपः प्रक्षिप्य"—इति। सोऽयं न्यायावगतोऽर्थइति कृत्वा न खल्वत्रभवान् सूत्रकारउत्सर्गमन्नस्य सूचयाञ्चकार,—इति लिख्यते। रघुनन्दनस्तु,—"वैष्णव्यर्चा यजुषा वाऽङ्गुष्ठमन्ने निधायापहतेति तिलान् विकीर्य्योष्णमन्नं दद्यात्"—इति सूत्रं पठति। क्वचिद्गौडीये सूत्रग्रन्थेऽप्येवमेव सूत्रपाठोदृश्यते। तदा च क्रममस्मिन्नवसरेऽन्नस्योत्सर्गः,—इति। परन्तु पाश्चात्यसूत्रग्रन्थेष्व-दर्शनात् भाष्यकृता महायशसाऽपठितत्वाच्च तत्र नात्यन्तमास्थेत्यन्यथै तदस्माभिर्व्यवस्थापितम्। रघुनन्दनोक्तसूत्रपाठस्य प्रामाणिकत्वे तु तदुक्तापहताइति मन्त्रेणैव तिलविकरणमिति द्रष्टव्यम्।

स खल्वयमन्नस्योत्सर्गः संबोधनपदेनामन्त्र्य स्वधापदेन करणीयः।

कथं ज्ञायते?। 'असावेतत्तेऽन्नम्'—इति दर्शनात्। 'गोत्रं स्वरा-न्तम्'—इति, 'स्वधाकारः पितॄणाम्'—इति चैवमादिवचनात्। ये चात्र त्वाम्,—इति मन्त्रस्याचोपदेशाभावाच्च। अर्घ्यादिविशेषेषु तन्त्रतानिषेधेन च पित्रादीनां त्रयाणां युगपदेव करणीयोभवति। तत्र, 'विश्वेदेवाइदमन्नं यद्दत्तं यच्च दास्यामि तत्तृप्तिपर्य्यन्तं तत्तुभ्यं ते स्वाहा'—इत्यादिकं त्यागवाक्यं महायशसा लिखितम्। 'इदमन्नं परिविष्टं परिवेक्ष्यमाणञ्चाह्नेः'—इति विज्ञानेश्वरोप्याह। नैतत् न्याय्यम्। 'असावेतत्ते'—इति सर्व्वत्रास्मच्छास्त्रे त्यागप्रकारसूचणा-दत्रापि तावन्मात्रस्यैव वक्तुमुचितत्वात्। दास्यमानान्यपि ह्यन्नानि बुद्ध्या सन्निकृष्यैतच्छब्देन निर्द्देष्टुं शक्यन्ते। कथं भविष्यदन्नमिदानीं त्यक्तुं शक्यते?। शक्यते,—इति पश्यामः। न हि दानमिदं येन 'तद्दानमफलम्'—इति वचनं विरुध्येत। यागोऽयमिति ह्यवोचाम। यागे च भविष्यन्तीनामपि समिधां त्यागोदृश्यते। अपिच। भवद्देवा-न्नमिह त्यज्यते, प्रतिपत्तिरेव परं भविष्यन्ती,—इत्यदोषः ॥०॥ २३ ॥०॥

## सकृत् सकृदपोदत्त्वा ॥ २४ ॥

ब्राह्मणानां हस्तेषु दैवादिक्रमेण सकृत् सकृदुदकं दत्त्वा। इदञ्चोदक-दानं भोजनात् पूर्व्वमापोशानार्थम्। कथं ज्ञायते?। 'अश्नत्सु'—इति वक्ष्यमाणसूत्रेणाशनममीषां तावद्गम्यते। अशनञ्चापोशानं कृत्वैव शिष्टाः कुर्व्वन्ति,—इति।

"दत्त्वाऽऽपोशानमासीनः सावित्रीं त्रिर्जपेदथ।
मधुवाता इति त्र्यृचं मध्वित्यन्नेन भोजयेत्"।

इति च सूत्यन्तरम्। तदिदमुदकदानं संबोधनविभक्त्या गोत्रादिकमुल्लिख्य स्वधाकारेण करणीयम्। कुतः?। 'गोत्रं स्वरान्तम्'—इति वचनात्। 'स्वधाकारः पितॄणाम्'—इति वचनाच्च। ब्राह्मणाश्च, 'अमृतस्योपस्तरणमसि स्वाहा'—इति मन्त्रेणापोशानं कुर्य्युः॥ ॥०॥ २४ ॥०॥

## मधुवाता इति तृचं जपित्वा मधु च त्रिर्जप्त्वाऽश्नत्सु जपेत्॥ २५॥

तृचम्,—इति, "ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि"—इति सिद्धं भवति। 'छन्दोवत् सूत्राणि कवयः कुर्व्वन्ति'—इति ह्यभियुक्तानां समयः। तथाच, मधुवाता—इति ऋक्त्रयं जपित्वा, मधु—इति च वारत्रयं जप्त्वा, अश्नत्सु ब्राह्मणेषु वक्ष्यमाणं जपेत्। अश्नत्सु,—इति वचनादशनसमकालत्वं जपस्य। सोऽयं मधुमन्त्रजपो गायत्रीजपादनन्तरं करणीयः। कथं ज्ञायते?।

"मधुमध्विति यस्तत्र त्रिर्जपोऽशितुमिच्छताम्।
गायत्र्यनन्तरं, सोऽत्र मधुमन्त्रविवर्जितः"।

इति छन्दोगपरिशिष्टवचनेनाच तथा प्रतीतेः। 'गायत्रीं मधुवाताश्च जपित्वा'—इति गौडीयपाठे व्यक्तएवायमर्थः॥०॥ २५ ॥०॥

अश्नत्सु जपेत्,—इत्युक्तम्। किं जपेत्?। उच्यते,—

## व्याहृतिपूर्व्वांꣳसावित्रीं तस्याश्चैव गायत्रं पित्र्याश्च सꣳहितां माधुच्छन्दसीञ्च॥ २६॥

जपेत्। व्याहृतयोभूराद्यास्तिस्रः। ताः पूर्व्वाः यस्याः, तां सावित्रीम्।

ॐकारोऽपि व्याहृतीनां पूर्व्वं प्रयोक्तव्यः । कस्मात्? । अस्माकं सन्ध्याकर्म्मणि तथैव सावित्रीजपोपदेशात् । अत्रापि जपतिचोदनासाम्यात् । तथाच कात्यायनः ।

"प्रणवोभूर्भुवः स्वश्च सावित्री च तृतीयिका" ।

इति । "पूर्व्वत्रिकं जपन्"—इति च । 'व्याहृतिपूर्व्वां सावित्रीं सप्रणवाम्'—इति गौडीयपाठे व्यक्तएवायमर्थः । रघुनन्दनस्तु छन्दोगोऽपि,—

"प्रणवं पूर्व्वमुच्चार्य्य भूर्भुवः स्वस्ततः परम् ।
गायत्री प्रणवश्चान्ते जपएवमुदाहृतः" ।

इति योगियाज्ञवल्क्यवचनादन्तेऽपि प्रणवमाह । तदनादरणीयम् । 'पूर्व्वत्रिकम्'—इति वचनविरोधात् । अन्ते प्रणवकरणे तु चतुष्कापत्तिः । न च, 'प्रणवत्वेन द्वयोरैक्यादविरुद्धम्,'—इति तदुक्तसमाधानं युक्तमिति वाच्यम् । अस्मच्छास्त्रे आदितः प्रणवस्यैव पूर्व्वमुक्तत्वात् 'पूर्व्वत्रिकम्'—इत्येतावन्मात्रोक्तेस्तान्ते प्रणवकल्पनाया असम्भवात् । योगियाज्ञवल्क्यस्तु तैत्तिरीयइति तद्वचनमवष्टभ्य स्वशास्त्रस्यान्यथावर्णनमयुक्तम् ।

'तस्याञ्चैव' सावित्र्यां समुत्पन्नं यत् 'गायत्रं' नाम साम । गायत्रस्य साम्नः ऋगन्तरेऽपि गीयमानत्वात् 'तस्याञ्चैव'—इत्युक्तम् । तदिदं गायत्रं साम दैवतब्राह्मणे गानग्रन्थारम्भे च गीयते ।

"यद्वाउ विश्पतिः"—इति, "सनादग्ने"—इति, "अचक्रमीमदन्त हि"—इति, "अभित्रिपृष्ठम्"—इति, "अक्रान्त्समुद्रः"—इति, "कनिक्रन्ति"—इति चैतासु ऋक्षु गीयमानानि सामानि पित्र्या नाम संहिता

भवन्ते। तथाच सामविधाने ब्राह्मणे। "अदाउ विश्पतिः समाट्- प्रोऽक्षमीमदन्तह्यभिचिप्रेष्ठमक्रान्समुद्रः कनिक्रन्तीति द्वे एवा पित्र्या नाम संहिता, एतां प्रयुञ्जन् पितॄन् प्रीणाति"—इति। सर्व्वाणि चैतानि सामानि गेयगाने पठ्यन्ते। ऋचस्त्वेताः सर्व्वाएव च्छन्दस्यार्चिके।

"इदं ह्यन्वोजसासुतम्"—इत्यस्यामृच्युत्पन्ने द्वे सामनी, "त्वावि- दाह्योनरोपीप्यन्"—इत्यस्यां ऋच्युत्पन्नमेकं साम, "स पूर्व्व्यामहोना- नाम्"—इत्यस्यां ऋच्युत्पन्नमेकं साम, "पुरां भिन्दुर्युवाकविः"— इत्यस्यामृच्युत्पन्नमेकं साम, "उपप्रक्षे मधुमति क्षियन्तः"—इत्यस्या- मृच्युत्पन्नमेकं साम, "परस्य सोम मधुमाꣳ ऋतावा"—इत्यस्या- मृच्युत्पन्नमेकं साम, "सुरूपकृत्नुम्"—इत्यस्यामृच्युत्पन्नमेकं साम। तानि खल्वेतानि सामानि 'माधुच्छन्दसी' संहितेत्युच्यन्ते। यथा सामविधाने ब्राह्मणे। "इदं ह्यन्वोजसेति प्रथमोत्तमे, त्वाविदाह्यो- नरः, स पूर्व्व्यामहोनां, पुरांभिन्दुर्युवाकविरुपप्रक्षेमधुमति क्षियन्तः, परस्य सोम मधुमाꣳऋतावा, सुरूपकृ,—रात्सं माधुच्छन्दसमेषा माधुच्छन्दसी नाम संहिता"—इति। सामानि चैतानि गेयगान एव प्रायेणगीयन्ते। एकमारण्यकेऽपि। ऋचस्तु सर्व्वाएव च्छन्दस्यार्चिके समाम्नायन्ते।

तदेतत् सर्व्वं स्वशास्त्रोक्तं जपित्वा स्मृतिपुराणादिषु सामान्यतः श्राद्धतया विहितान्यपि इच्छया पठितव्यानि। रघुनन्दनस्तु, 'तस्मान्नैव गायत्रम्'—इत्यादि स्वप्रतीकमलिखन् स्वशास्त्रोक्तान्यपि जप्यानि सामान्यनुपदिश्य स्मृतिपुराणादिविहितेषु श्राद्धेष्वेव यथा रुचि कतिचिल्लिलेख। सेयं पितरमुपेक्ष्य श्वशुरे गाढ़ा भक्तिः।

इदमिदानीं सन्दिह्यते। किमयं जपः उपवीतिना प्राङ्मुखेन करणीयः, आहोस्वित् प्राचीनावीतिना दक्षिणामुखेन? इति। कुतः पुनरयं संशयः?। यतोजपोऽयं पितृदत्तस्याक्षयत्वाय, आत्मनस्त्वभ्युदयाय भवति,—इति वक्ष्यति। ततः संशयः। उच्यते। प्राचीनावीतिना दक्षिणामुखेन,—इति ब्रूमः। कस्मात्?। यस्मात् प्राधान्येन पितृदत्तस्याक्षयत्वफलकोऽयं जपः पित्र्यमेव कर्म्म। प्रकरणाच्च। तत्र खल्वस्मार्क प्राचीनावीतित्वमेव प्राप्तं। पिण्डपितृयज्ञे च योजपः,—'नमोवः पितरोजीवाय'—इत्येवमादिः, सोयं नियमतः प्राचीनावीतिनैव क्रियते। "अतऊर्द्धं प्राचीनावीतिना वाग्यतेन कृतम्'—इति गृह्यकारस्मरणात्। तस्येहापि चोदकः प्रापयति। यत् पुनर्जमदग्निवचनम्,—

"अपसव्येन कर्त्तव्यं सर्व्वं श्राद्धं यथाविधि।
सूक्तस्तोत्रजपं मुक्त्वा विप्राणाञ्च विसर्जनम्"।

इति। तदपि नैतद्विषयम्। सूक्तस्तोत्रजपविषयत्वात्तस्य। न खल्वत्र सूक्तजपः स्तोत्रजपो वा विहितः। किन्तु साम्नामेव। तस्मात् यथोक्तमेवास्तु ॥०॥ २६ ॥०॥

जपफलमाह,—

## स्वर्गे लोके महीयते दत्तञ्चास्याक्षयं भवति ॥२७॥

तान्येतानि जपन् स्वयमपि स्वर्गे लोके महीयते। जपतश्चास्य पितृभ्योदत्तमन्नादिकमक्षयं भवति। अस्येति संबन्धलक्षणा षष्ठी ॥०॥ ॥ २७ ॥०॥

**तृप्तिं ज्ञात्वाऽन्नं प्रकीर्य्य ये अग्निदग्धाजीवा येप्य-दग्धाः कुलेमम भूमौदत्तेन तृप्यन्तु तृप्तायान्तु परांगतिमिति ॥ २८ ॥**

ब्राह्मणानां तृप्तिमवधार्य्य प्रकृतं किञ्चिदन्नं 'ये अग्निदग्धाः'—इति मन्त्रेण प्रकीर्य्य, न सर्व्वमेव भुक्तावशिष्टमन्नम्। कथं ज्ञायते?। पिण्डदानस्याप्यनेनैवान्नेन वक्ष्यमाणत्वात्। 'ये अग्निदग्धाजीवाः'—इत्यत्र, 'अग्निदग्धास्च ये जीवाः'—इति केचित् पठन्ति।

कथं पुनरिदानीं तृप्तिर्ज्ञातुं शक्या, परतोहि तृप्तिप्रश्नं सूचयिष्यति?। उच्यते। यदा दीयमानमन्नं नेच्छन्ति, बहु चान्नं पात्रे विद्यते, भवति तदा विज्ञानम्—इमे तृप्ताः,—इति। तृप्तिप्रश्नस्तर्ह्यनर्थकोभवति?। किं क्रियताम् यस्यार्थोनास्ति। अनर्थकेऽप्रवृत्तिरिति चेत्। भवेदेतदेवं यदि वचनमत्रार्थे न स्यात्। "किमिव हि वचनं न कुर्य्यात् नास्ति वचनस्यातिभारः"—इति खल्वाहुः शास्त्रतात्पर्य्यविदः। अपि च। न तदेवानर्थकं यस्य दृष्टोऽर्थोनास्ति। अदृष्टमपि ह्यर्थोभवति। तस्मात् तदेव तृप्तिप्रश्नस्यार्थोभविष्यति।

तदिदमन्नं भूमावेवास्माकं प्रकरितव्यं भवति, न कुशोपरि। कुतः?। 'भूमौ दत्तेन'—इति मन्त्रलिङ्गात्।

"दीयमानं न गृह्णन्ति अन्नञ्च बहु विद्यते।
ज्ञात्वा तृप्तिं ततोदद्योद्दर्भेषु विकिरञ्च यः"।

इति बृहस्पतिवचनं तदुक्तप्रयोगविषयम्। एवं मत्स्यपुराणादुक्तं 'येषां न माता'—इत्यादि मन्त्रान्तरमपि तत्तत्प्रयोगविषयमेव।

तिला अप्यन्ने मिश्रयितव्याः। पित्र्ये कर्म्मणि सर्व्वत्रैव तिलानाम-भ्यर्हितत्वात्। तथाचाभ्युदयिके छन्दोगपरिशिष्टम्।

"यस्तत्र प्रकरोऽन्नस्य तिलवत्, यववत्तथा।
उच्छिष्टसन्निधौ सोऽत्र तृप्तेषु विपरीतकः"।

इति। अस्माच्च वचनादुच्छिष्टसन्निधावयमन्नप्रकरः स्यात्। "सतिल-मन्नं विकीर्य्य"—इति तत्त्वकारपाठे सूत्रोपात्त एवायमर्थो भवति।

सोऽयमन्नप्रकरः प्राधान्यात् पित्र्य एव सूचितः। स खल्वयं दैवे-ऽपि करणीयः। कुतः?। "दैवपूर्व्वं श्राद्धं कुर्व्वीत"—इति वचनात्। पिण्डोऽपि तर्हि दैवे दीयताम्?। न दास्यते। किं कारणम्?। उत्तरत्रैव तत् वक्ष्यामः। सचायं 'ये अग्निदग्धा जीवाः'—इति मन्त्रोलिङ्गात् पित्र्यएवान्नप्रकरे विनियुज्यते। दैवे मन्त्रस्तु,—

"असोमपाश्च ये देवायज्ञभागविवर्जिताः।
तेषामन्नं प्रदास्यामि विकिरं वैश्वदेविकम्"।

इति गोभिलपरिशिष्टोक्तोग्राह्यः। गोभिलस्यैतदिति हेमाद्रिप्रभृतयः॥ ॥०॥ २८ ॥०॥

**सकृत् सकृदपोदत्त्वा पुनर्म्मधुवातां मधुच चिर्जप्त्वा तृप्ताः स्थेति पृच्छति॥ २९॥**

'सकृत् सकृत्'—इति वीप्सया सर्व्वेषां ब्राह्मणानां हस्तेषु जलदानं दर्शयति। सर्व्वेषां ब्राह्मणानां हस्तेषु अपः उदकं दत्त्वा। उदकदानञ्चेदं प्रत्यापोशानार्थम्,—पूर्व्ववत् सम्बोधनविभक्त्या गोत्रादिकमुल्लिख्य

स्वधापदेन करणीयम्। ब्राह्मणाश्च,—'अमृतस्यापिधानमसि स्वाहा'—इति मन्त्रेण तदुदकं पिबेयुः।

तदेवमपोदत्त्वा 'मधुवातां' मधुवाताइति त्र्यृचं 'मधुच' त्रिर्व्वारयं जप्त्वा, तृप्ताःस्थ,,—इति पृच्छति। कथं पुनरत्र त्र्यृचलाभः?। "त्र्यचतृचानामादिग्रहणेन विधिरनादेशे"—इति लाट्यायनसूत्रात्। तदीयश्च विधिर्गृह्येऽपि ग्रहीतव्योभवति। तदुक्तमग्निस्वामिना,—"तत्रापि (गृह्येपि) एषएवविधिः कृत्स्नमन्त्रप्रयोगस्य"—इति। पुनःशब्दाच्च। यथा हि पूर्व्वं मधुवाताजपस्तथेदानीमपि,—इत्येतत् पुनःशब्दस्य सामर्थ्यम्। पूर्व्वञ्च न केवलस्य मधुवाता इत्यस्य जपः, अपितु त्र्यृचस्यैव। तस्मादिदानीमपि त्र्यृचस्यैव जपः,—इति सिध्यति। अजपश्च गायत्र्याः। विहितं केषाञ्चिदिदानीमपि गायत्रीजपः। सोयमस्माकं नास्ति,—इति ज्ञापयितुं 'पुनर्मधुवातां मधुच त्रिर्जप्त्वा'—इत्याह। अनयोरेव पुनर्जपो न गायत्र्याअपि,—इत्यर्थः।

सोयं तृप्तिप्रश्नोऽदृष्टार्थोन तृप्त्यवगमार्थः। पूर्व्वं खल्वियमवगता। स खल्वयमदृष्टार्थइति कुशमयब्राह्मणपक्षेपि करणीयो भवति। रघुनन्दनस्त्वेतदबुद्ध्वा,—'कुशमयब्राह्मणपक्षे तृप्तिप्रश्नोनास्त्ययोग्यत्वात्'—इत्याह। 'तृप्तिस्तावत् सर्व्वसाधारणी सा सर्व्वान् प्रति प्रष्टव्या'—इति ब्रुवाणोमहाशयस्त्वप्यदृष्टार्थतामस्य तावन्न वेद। यावत् "प्रश्नेषु पंक्तिमूर्द्धन्यं पृच्छति सर्व्वान् वा"—इति सूत्रमपि न स्मरति॥०॥

॥ २९ ॥०॥

## तृप्ताःस्थ इत्युक्ते शेषमन्नमनुज्ञाप्य॥ ३०॥

स्पष्टार्थः। कथं पुनरिदमनुज्ञापनं भवति, तदेव परंकृत्यमवशिष्यते।

तत्र, 'अन्नशेषैः किं क्रियताम्'—इति प्रष्टव्यम् । 'इष्टैः सहोपभुज्यताम्'—इति चानुज्ञातव्यम् । कस्मात्? । स्वशाखाभेदे पठितत्वात् । तथाच छन्दोगापरसूत्रम् । "शेषमन्नमनुज्ञाप्यान्नशेषैः किं क्रियतामिष्टैः सहोपभुज्यतामिति"—इति ॥०॥ ३० ॥०॥

पितरोऽग्न्यादयस्त्वेष्टाभवन्ति,—इति प्राधान्यात् पितॄणामुपयोगं तावदाह,—

**सर्व्वमन्नमेकत्रोद्धृत्योच्छिष्टसमीपे दर्भेषु त्रींस्त्रीन् पिण्डानवनेनिज्य दद्यात् ॥ ३१ ॥**

सर्व्वमनुज्ञापितं शेषमन्नं एकत्रैकस्मिन्पात्रे उद्धृत्य । 'एकतः'—इति पाठेऽपि सएवार्थः । उच्छिष्टसमीपे दर्भेषु त्रींस्त्रीन् पिण्डान् दद्यात् । किं कृत्वा? । अवनेनिज्य । अवनेजनं कृत्वा । अत्र, "दर्भेषु"—इत्यनन्तरम्, "मधुमध्वित्यत्नमीमदन्तेति जपित्वा"—इत्येवाधिकः पाठः क्वचिद्गौड़पुस्तके दृश्यते । नैवं पाश्चात्यपुस्तके पठ्यते । महाशयभाष्येतन्न पठितम् । समुच्चयरसिकोरघुनन्दनोपि, "मधुवाता इति ऋक्त्रयं मधु मधु मधु च जपित्वा पितुर्नाम गृहीत्वा गृह्योक्तविधिना पिण्डं दद्यात्"—इत्येतावन्मात्रमाह ।

सर्व्वमिति द्रव्याभिप्रायेण वचनं न निरवशेषार्थम् । कथं ज्ञायते? । "यो वा तेषां ब्राह्मणानामुच्छिष्टभाक् स्यात्"—इत्यन्वष्टक्यकर्म्मणि गृह्यकारेण शेषभोजनस्याप्युपदेशात् । न खल्वबाधेन सम्भवति शास्त्रार्थे, वचनम्—इति कृत्वा सामान्यस्यापि शास्त्रस्य बाधः कल्पयितुमुचितः, —इति हि चमसिनां शेषभक्षाधिकरणे निर्णीतम् । पिण्डास्त्वास्माकं

विषमप्रमाणाभवन्ति । न चैतत् शेषाल्पानां प्रभूततरत्वे, निरवशेषेण शेषाक्षेन पिण्डदानमित्यर्थो वर्णनायामुपपद्यते । 'इष्टैः सहोपभुज्यताम्'—इत्यनुज्ञानाच्चैतदेवं प्रतिपत्तव्यम् । तस्मात्,—यत् किञ्चिदन्नव्यञ्जनादिकमवशिष्टं तस्मात् सर्व्वस्मादेव किञ्चित् किञ्चिद्गृहीत्वा एकस्मिन् पात्रे कृत्वा, तेन पिण्डदानं कर्त्तव्यम्,—इति सिद्धम्। तथाचान्वष्टक्यकर्म्मणि कात्यायनः ।

"यावदर्थमुपादाय हविषोऽर्भकमर्भकम् ।
चरुणा सह सन्नीय पिण्डान् दातुमुपक्रमेत्" ।

इति । तस्मात्,—अवशिष्टं मधुतिलादिकमपि पिण्डार्थं गृहीतव्यं भवति । 'दर्भेषु'—इति वैकृतोविशेषोपदेशश्चोदकप्राप्तां प्राकृतीं दर्व्वीं निवर्त्तयति । अन्यत्तु सर्व्वं प्राकृतमिहापि प्रवर्त्तते । 'दर्भेषु'—इति वचनात् दर्व्वीनिवृत्तिरित्यसङ्गतैषा कल्पना । आधाराः खल्विमेदर्भाः प्राकृतमाधारान्तरमेव निवर्त्तयन्ति, न करणभूतामतिदेशागतां दर्व्वीमपि । तस्मादन्वष्टक्यवदत्रापि कर्म्मणि चोदकप्राप्तया दर्व्यैव पिण्डादातव्याः ।

त्रींस्त्रीन्—इति वीप्सा मातामहपक्षापेक्षया । तेन, "देवपूर्व्वं श्राद्धं कुर्व्वीत"—इति वचनात् दैवेऽपि पिण्डदानं स्यादासनादिवत् —इति पर्य्यनुयोगोपि निरस्तः । "मातामहानाञ्चैवम्"—इति वचने सत्यपि यदयं सूत्रकारस्त्रींस्त्रीनिति वीप्सामभिधत्ते, तद्बोधयति षडेवात्र पिण्डाभवन्ति, न पुनर्दैवेऽपि पिण्डोदातव्यः—इति । तथाच छन्दोगपरिशिष्टम् ।

"कर्षूसमन्वितं मुक्त्वा तथाऽऽद्यं श्राद्धषोडशम्।

प्रत्याब्दिकञ्च शेषेषु पिण्डाः स्युः षड़िति स्थितिः"।

इति। दैवेऽपि चेत् पिण्डोदीयते, सप्तैव पिण्डाः स्युः। विकिरस्तु न पिण्डः, येन संख्यावचनमिदमुपरुध्येत।

अत्र च, चोदकबलात् प्राप्तं रेखोल्लेखनं कृत्वा, तत्र दर्भानास्तीर्य, चोदकप्राप्तं पितॄणामावाहनं कृत्वा, अवनेजनं कर्त्तव्यम्। अथेदानीमन्नमुद्धृत्य, अन्वष्टक्योक्तरीत्या पिण्डदानं करणीयमित्ययं कर्म्मक्रमः। 'उद्धृत्य'—इति 'अवनेनिज्य'—इति च द्वयमेव पिण्डान् दद्यादित्यनेनान्वेति। "अव्यक्तं प्रधानगामि"—इति वचनात्। नत्वनयोरपि परस्परमप्यभिसंबन्धः। कस्मात्?। द्वयोरपि पिण्डदानार्थतया समत्वात्। प्रमाणाभावाच्च। तस्मादुद्धरणावनेजनयोः पिण्डदानपूर्व्वकालतामात्रमत्रोच्यते, न पुनस्तयोरपि पूर्व्वापरीभावः। अतः कथं प्राकृतमनयोः पौर्व्वापर्य्यं चोदकप्राप्तमुत्सृज्येत। अथ, वैकृतात् पाठक्रमादनयोः क्रमः कल्प्यते?। नैतत् शक्यते। परिचिकल्पयिषितोह्यनयोः पाठक्रमात् क्रमः। क्लृप्तस्तु प्राकृतः क्रमोऽस्ति तेन च विरुद्धः परिचिकल्पयिषितः क्रमोन खल्वपि सेद्धुमर्हतीति। नचाविरोधेन सम्भवति वचनार्थे विरोधः कल्पयितुमुचितः। कात्यायनोपि,—

"प्रागग्रेष्वथ दर्भेषु आद्यमामन्त्र्य पूर्व्ववत्।

अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेति निस्तिलाः।

द्वितीयञ्च तृतीयञ्च मध्यदेशाग्रदेशयोः।

मातामहप्रभृतीं स्त्रीनेतेषामेववामतः।

सर्व्वस्मादन्नमुद्धृत्य व्यञ्जनैरुपसिच्य च।

संयोज्य यवकर्कन्धूदधिभिः प्राङ्मुखस्ततः।
अवनेजनवत् पिण्डान् दत्त्वा विल्वप्रमाणकान्।
तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेत्।

इत्यवनेजनात् परतोऽन्नस्योद्धरणं पिण्डदानस्याह। यद्यप्येतदाभ्युदयिके कात्यायनेनोक्तं, तथापि,—

"अन्यत्राप्येषएव स्यात् यवादिरहितोविधिः।
दक्षिणाप्लवने देशे दक्षिणाभिमुखस्य च।
दक्षिणाग्रेषु दर्भेषु एषोऽन्यत्र विधिः स्मृतः"।

इत्यनुपदं तेनैवान्यत्रापि तस्य विधेरतिदेशादत्राप्येतत् सिध्यति। यस्मान्यत्र विशेषोदक्षिणाप्लवनदेशादिस्तस्य विशेषतोऽभिधानाच्चैतदेवं। प्रतिपत्तव्यम्। एषएव,—इति चैवकारेण तस्यार्थस्य व्याप्तेर्ज्ञापनात्। तस्मादवगच्छामः,—उपदिष्टविशेषव्यतिरेकेण सर्व्वमन्यदन्यत्र भवतीति। नचेदेवम्, 'अन्यत्राप्येषएव स्यात्'—इत्यनर्थकमापद्येत। तस्माद्यथोक्तमेवास्तु।

एतदनन्तरं वृद्धप्रपितामहादिभ्यः लेपोदातव्यः। "लेपभाजश्चतुर्थाद्याः"—इति वचनात्। स चायं लेपः, संबोधनपदेनामन्त्र्य स्वधापदेन करणीयः। मातामहपक्षे पृथक् करणमुक्तम्। अथेदानीं कात्यायनोक्तमवनेजनं शेषोदकप्राशनानि जप-गृहावेक्षण-पिण्डावेक्षणवासोनिधानानि च कर्त्तव्यानि। तत्प्रकारस्तु गृह्यसूत्रादुपलब्धव्यः। तदमी अतिदेशागताः,—इति कृत्वा, तत्रभवान् सूत्रकारोनैषां सूत्रणामभूदिति ज्ञायते॥०॥ २१॥०॥

**आचान्तेषूदकं पुष्पाण्यक्षतानक्षय्योदकञ्च दद्यात् ॥ ३२ ॥**

आचान्तेषु ब्राह्मणेषु सत्सु उदकादिकं दद्यात्। तस्मादाचमनमिदानीं दातव्यम्। तच्चैतत् पिण्डेषु तूष्णीं गन्धादिकं निःक्षिप्य करणीयम्। कुतः ?।

"गन्धादीन् निःक्षिपेत्तूष्णीं तत आचामयेत् द्विजान्"।

इति छन्दोगपरिशिष्टवचनात्। पिण्डप्रदानं प्रस्तुत्यैतस्याभिधानात् पिण्डेष्वेव गन्धादीनां निःक्षेपः। पिण्डस्था हि पितरो भवन्ति। "पिण्डानवेक्षते सदैव: पितरोदेश"—इति ह्युक्तम्। 'गन्धादीन्'—इत्यनेन च यथासम्भवं गन्धपुष्पादयोगम्यन्ते। पूजार्थत्वादस्य। वासस्तु पूर्व्वमेवप्रदत्तम्। तस्माद्गन्धपुष्पधूपदीपाः इदानीं दातव्याः। "तथा गन्धान्"—इतिवत्पुंसा निर्देशात् पूर्व्वोक्ताएव गन्धादयोऽत्र-यमागच्छन्ति। आगच्छन्ति चेत्, किमित्युत्सृज्येरन्। तत्र वाससः पूर्व्वं प्रदानादवशिष्टानामिदानीं दानम्। तदमीषां पिण्डेषु निःक्षेप-विधानात् दैवेच पिण्डाभावात् पितृमातामहपक्षयोरेव करणमिति द्रष्टव्यम्।

तदेवं गन्धादीन् निःक्षिप्य, पित्रादीनां त्रयाणां गोत्रादिकमुल्लिख्य एतत्ते आचमनं स्वधा,—इति तन्त्रेणाचमनं देयम्। एवं मातामह-पक्षेऽपि। मन्त्रश्च गन्धादिष्विव तूष्णीमिति करोति। येनामन्त्र-कमस्य प्रदानं स्यात्। तदिदं दैवपूर्व्वमेव देयं भवति। कस्मात्। "दैवपूर्व्वं श्राद्धं कुर्व्वीत"—इति वचनात्। देवलाद्युक्तस्तु क्रमव्यत्यय-स्तन्त्रप्रयोगविषयः। आचान्तेषु यदिदमुदकदानं, तदासेचनरूपम्।

तच्चैतद्विशेषात् ब्राह्मणाग्रभूमेर्ब्राह्मणानाञ्च भवति। अक्षतायवाः।
कुतः?।

"अक्षतास्तु यवाः प्रोक्ताभ्रष्टाधानाभवन्ति ते"।

इति वचनात्। मन्त्रस्योदकादीनां कात्यायनोक्तोग्राह्यः। तथाच कात्यायनः।

"अथाग्रभूमिमासिञ्चेत् सुसुप्रोक्षितमस्त्विति।
शिवाआपः सन्त्विति च युग्मानेवोदकेन तु।
सौमनस्यमस्त्विति च पुष्पदानमनन्तरम्।
अक्षतञ्चारिष्टञ्चास्त्वित्यक्षतानपि दापयेत्"।

इति। युग्मानेव,—इत्याभ्युदयिकविषयम्। पुष्पाक्षतयोर्ब्राह्मणहस्त-एवदानम्। कस्मात्?। युग्मानेव,—इत्यनेन तेषामेव सन्निहितत्वात्। अत्र, 'अस्तु'—इति 'सन्तु'—इति च यथासम्भवमुत्तरम्। योग्यत्वात्।

"प्रार्थनासु प्रतिप्रोक्ते सर्व्वास्वेव द्विजोत्तमैः"।

इति कात्यायनवचने सर्व्वशब्देन व्याप्त्यवगतेश्च। एतदनन्तरं श्राद्धस्या-क्षय्यार्थमुदकं दद्यात्। तत्रच,—

"अक्षय्योदकदानञ्च अर्घ्यदानवदिष्यते।
षष्ठ्यैव नित्यं तत्कुर्य्यान्न चतुर्थ्या कदाचन"।

इति कात्यायनवचने, 'अक्षय्योदकदानञ्च'—इति चकारेण 'अक्षतञ्चा-रिष्टञ्चास्तु'—इति पूर्व्ववचनोपात्तमस्तु—इत्यनुषञ्जनीयम्। अर्घ्यदान-वदितिविशेषाभिधानात् एतदपि अर्घ्यवत् प्रत्येकब्राह्मणहस्तेषु देयम्। तच्चैतत् 'अमुकगोत्राणां पितरमुकशर्म्मणः एतदक्षय्यमस्तु'—इत्यादिना उदकं दद्यात्। "दैवे दत्तं श्राद्धं देवानामक्षय्यमस्त्विति ब्रूतेति पृथक्

यवाम्बु दत्त्वा"—इत्यादि आश्वलायनीये गृह्यपरिशिष्टे दृश्यते। "अक्षय्यमस्त्विति वाचयित्वा"—इति च छन्दोगापरसूत्रे। एवञ्च "उपतिष्ठतामित्यक्षय्यस्थाने"—इति वक्ष्यमाणसूत्रमाञ्जस्येनोपपद्यते—इति। "दत्तमिदमन्नपानादिकमक्षय्यमस्तु"—इति गौड़ाः। "येषामुद्दिष्टं तेषामक्षय्यमस्तु"—इति महायशाः। ब्राह्मणाश्च अस्तु,—इति ब्रूयुः। तदेतत् सर्व्वमेवोदकाह्निकं दैवपूर्व्वं करणीयम्। न हि पिण्डसंबन्धेनामीषां विधानम्। येन दैवे पिण्डाभावान्निवर्त्तेरन्॥०॥ ३२ ॥०॥

**अघोराः पितरः सन्तु, सन्त्वित्युक्ते, गोत्रं नोवर्द्धतां, वर्द्धतामित्युक्ते, स्वधा निनयनीयान् दर्भान् सपवित्रानास्तीर्य्य, स्वधां वाचयिष्यइति पृच्छति ॥ ३३ ॥**

स्वधा,—इत्युदकमाचक्षते। कस्मात्?। 'स्वधास्त्व'—इति मन्त्रलिङ्गात्। सेयं स्वधा निनीयते येषु दर्भेषु, तइमे स्वधानिनयनीयाः, तान् स्वधानिनयनीयान्। स्वधानिनयनीयेषु हि दर्भेषु वारिधारां सूचयिष्यति। रघुनन्दनस्त्वेतदजानानआह,—'स्वधानिनयनीयान् स्वधावाचनमात्रार्थान्'—इति। तदशब्दम्। न हि निनयतिर्वाचनमभिधत्ते। तस्मान्निरङ्कुशत्वात्तुण्डस्यैवमुक्तं। नत्वेवं शब्दस्यार्थोभवति। दर्भानास्तीर्य्य,—इति सिद्धे, यत् स्वधानिनयनीयान्,—इति करोति, तद्बोधयति—स्वधानिनयनमात्रममीषामर्थोनत्वन्यत् किञ्चिदिति। तस्मादकृतप्रयोजनाअन्तराअन्यएव दर्भाइदानीमास्तृतव्याः। तानिमान् दर्भान् विशिनष्टि। सपवित्रान् पवित्रसहितान्। तदेतत् पवित्र-

मिदानीमुत्पादयितव्यम्। न खल्वनुत्पाद्य पवित्रं शक्यन्ते दर्भाः सपवित्राः कर्त्तुम्। ननु, सन्ति पवित्राण्यर्घ्यपात्रसंबन्धीनि?। सत्यं सन्ति। ब्राह्मणाय प्रतिपादितानि तु तानि कथमत्रापि नियुज्येरन्। पितरोऽपि हि तैस्तर्पिताः। अपिच। किमेतत् पवित्रमर्घ्यसंबन्धि, आहो-स्विदन्यदित्यस्मिन् संशये, अन्यदिति प्रतिपद्यामहे। किं कारणम्?। स्वधानिनयनार्थाह्यन्ये दर्भाः सन्निहत्यन्ते। स्वधानिनयनीया दर्भा-स्तृणन्ते। तस्मात् पवित्राण्यपि तेभ्यएव कर्त्तव्यानि भवन्ति। व्यपेतानि खल्वर्घ्यपवित्राणि न बुद्धिमागच्छन्ति। आगच्छन्ति लितरे दर्भाः; येभ्यः स्वधानिनयनीयास्तृणन्ते। यथा दर्शपौर्णमासयोर्विधृती पवित्रे च न वेदिस्तरणार्थाद्बर्हिषः क्रियेते, किन्त्वव्यक्तत्वात् ततोऽन्यस्मात् परिभोजनीयाद्बर्हिषः। तथाऽत्रापि नार्घ्यपात्रसंबन्धि पवित्रमादेयं किन्त्वव्यक्तत्वात् स्वधानिनयनार्थाद्दर्भात्। नचेदेवम्, पिण्डदानार्थ-रेखाऽप्यर्घ्यसंबन्धिना पवित्रेण क्रियताम्। नचैवं क्रियते। तस्मात्,—तदर्थमिव एतदर्थमपि पवित्रमुत्पादयितव्यम्। तथा चोक्तम्। "विरोधे च श्रुतिविशेषादव्यक्तः शेषे"—इति।

आह। दर्भानास्तीर्य्य,—इत्युक्तम्। न ज्ञायते,—कुत्र इमे दर्भा आस्तृतव्याः—इति। पिण्डेषु,—इति ब्रूमः। कुतः?। "पवित्रान्तर्हि-तान् पिण्डान्,"—इति कात्यायनवचनात्। अतएव दैवे नैतत् स्यात्। तत्र पिण्डाभावात्। 'स्वधां वाचयिष्ये'—इत्ययञ्च प्रश्नः पितृपक्षे मातामहपक्षे च सकृदेव भवति। कथं ज्ञायते?। यदयं सूत्रकारः अत्र प्रश्नं सूचयित्वा उत्तरत्र वचनमेव स्वधावाचनं सूचयिष्यति, ततो-ऽवगच्छामः,—यथामुद्देशेन सकृदेव प्रश्नोऽयं भवतीति। अन्यथा

मातामहानां स्वधावाचनसूचनमनर्थकं स्यात्। "मातामहानाञ्चैवम्" —इति हि सूचितम्। 'अघोराः पितरः सन्तु'—इत्येषा तु प्रार्थना उभयत्रैव कर्त्तव्या। गोत्रं नोवर्द्धताम्'—इति त्रिष्वपि पक्षेषु। सा खल्वियमाशीःप्रार्थना पित्र्ये दक्षिणामुखेन प्राचीनावीतिना कर्त्तव्या। "पिण्डपितृयज्ञवदुपचारः"—इत्यनेन सर्व्वत्र तथाऽवगतेः।

"दत्त्वाऽऽशीः प्रतिगृह्णीयात् द्विजेभ्यः प्राङ्मुखोबुधः।
अघोराः पितरः सन्तु सन्त्वित्युक्तः स तैः पुनः"।

इति मत्स्यपुराणवचनं तदुक्तप्रयोगविषयम्। समुच्चयमुपपिपादयिषुर्वाचस्पतिस्तु,—

"दक्षिणां दिशमाकाङ्क्षन् याचेतेमान् वरान् पितॄन्"।

इति मनुवचनं मत्स्यपुराणवचनस्य पूर्व्वोक्तं पश्यन्, 'पूर्व्वाभिमुखोदक्षिणां दिशं मनसा पश्यन् कुर्य्यात्'—इति कल्पयन् वाचोयुक्त्यनभिज्ञ एव। 'दक्षिणां दिशम्'—इत्यनन्तरस्य मनुना 'दातारो नोभिवर्द्धन्ताम्' —इति पठितं, नत्वघोराः पितरः सन्तु—इति। मत्स्यपुराणे तु,—

"अथ पुष्पाक्षतान् पश्चादक्षय्योदकमेव च।
सतिलं नामगोत्रेण दद्याच्छक्त्या च दक्षिणाम्।
* * * * * * * * * *
ततः स्वधावाचनिकं विश्वदेवेषु चोदकम्।
दत्त्वाऽऽशीः प्रतिगृह्णीयात् द्विजेभ्यः प्राङ्मुखोबुधः।
अघोराः पितरः सन्तु सन्त्वित्युक्तः पुनर्द्विजैः।
गोत्रं तथा वर्द्धतां नस्तथेत्युक्तश्च तैः पुनः।
दातारोनोऽभिवर्द्धन्तामिति चैवमुदीरयेत्"।

इति तस्मादन्याहृशमेव पठितम् । तदेतदपि मतद्वयं कथं समुचि-चीषति,—इति न खल्वधिगच्छामि । समुच्चयरसिकोरघुनन्दनस्त्वनयोः समुच्चयमुपपादयितुमपारयन् साधारणत्वञ्च मत्स्यपुराणीयप्रयोगस्या-जानानः कल्पनाकुशलः शाख्यन्तरीयत्वं तस्य कल्पयाञ्चकार । तद-शुद्धेयम् । साधारणाभ्युदयकीर्त्तनाध्याये खल्वयं प्रयोगस्तत्रोपदिष्टः सर्व्वसाधारणएव भवति । स कथं शाख्यन्तरीयः शक्यः कल्पयितुं ऋते निरङ्कुशत्वं मनसः । शाख्यन्तरीयत्वे च नास्य साधारणत्वं स्यात् । शाख्यन्तरीयत्वकल्पना चैवंविधस्थले भवतामवलम्बनम् । सात्विह न सम्भवतीत्यकामेनाप्यसत्सिद्धान्तोऽत्राभ्युपगन्तव्यः,—इत्यस्तु किं विस्तरेण ॥०॥ ३३ ॥०॥

## वाच्यतामित्यनुज्ञातः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्योवृद्धप्रमातामहेभ्यश्च स्वधोच्यतामिति ॥ ३४ ॥

ऋजुरक्षरार्थः । चशब्दात् 'स्वधोच्यताम्'—इत्यस्य प्रत्येकमतिसंबन्धः । तेन, 'पितृभ्यः स्वधोच्यताम्'—इत्यादिकं वक्तव्यं भवति । अतोनात्र तन्त्रता । तथाच कात्यायनः ।

"अर्घ्येऽक्षय्योदके चैव पिण्डदानेऽवनेजने ।
तन्त्रस्य विनिवृत्तिः स्यात् स्वधावाचनएवच ।

इति । अत्र, मातामहाद्युपादानस्याभिप्रायः पूर्व्वसूत्रे वर्णितोऽस्माभिः ॥ ॥०॥ ३४ ॥०॥

**अस्तु स्वधेत्युक्ते स्वधानिननीये धारां दद्यादूर्जं वह-न्तीरित्युत्तानं पात्रं कृत्वा ॥ ३५ ॥**

अस्तु स्वधेति प्रत्येकं ब्राह्मणैरुक्ते, स्वधानिनयनीये पूर्व्वोक्तास्तृतदर्भे। जात्यभिप्रायेणैकवचनम्। स्वधानिनयनीयेषु,—इत्यर्थः। क्वचित्तथैव पाठः। रघुनन्दनस्तु 'स्वधानिनयने'—इति पठित्वा 'स्वधावाचने कृते'—इति व्याचष्टे। तदसम्बद्धमित्युक्तम्। तत्पाठेऽपि, अधिकरणे ल्युटा दर्भ एवार्थः। तदेतेषु दर्भेषु उदकधारां दद्यात्,—ऊर्जं वहन्तीरिति मन्त्रेण। किं कृत्वा?। यत् पात्रं पूर्व्वं संस्रवान् समवनीय न्युब्जं कृतं, तत् पात्रमुत्तानमूर्द्ध्वमुखं कृत्वा। तथाच कात्यायनः।

"प्रार्थनासु प्रतिप्रोक्ते सर्व्वास्वेव द्विजोत्तमैः।

पवित्रान्तर्हितान् पिण्डान् सिञ्चेदुत्तानपात्रकृत्"।

इति। भट्टनारायणोऽपि, उत्तानपात्रकृदिति परिषेचनकर्त्तृविशेषण-तयैव व्याचष्टे। यच्च, 'अत्रोत्तानपात्रकृदिति यथाश्रुतदर्शनात् परि-षेचनकर्त्तृविशेषणतया भट्टेन यद्व्याख्यातं तद्गोभिलश्राद्धसूत्रादर्श-नात्। तथाच प्रागुक्तपरिषेचनसूत्रानन्तरं गोभिलः। उत्तानं पात्रं कृत्वा यथाशक्ति दक्षिणां दद्यादिति'—इति रघुनन्दनेनोक्तम्। तदस-ङ्गतम्। यस्मादुत्तानं पात्रं कृत्वा,—इत्यस्य परसूत्रप्रतीकत्वे खल्वेतदेवं स्यात्। पूर्व्वसूत्रप्रतीकत्वे पुनर्नैवं भवति। न चैतस्योत्तरसूत्रप्रतीकत्वे किञ्चित् प्रमाणमस्ति। कात्यायनस्त्वेतत्सूत्रप्रतीकत्वमेव तस्य स्पष्टं ज्ञापयति। स खल्वस्पष्टानां प्रदीपवत् स्पष्टमुपदेष्टा। तस्मादुत्तानं पात्रं कृत्वेत्येतदेतत्सूत्रप्रतीकमेव, नोत्तरसूत्रप्रतीकमिति स्थियते।

ननु, उत्तरसूत्रप्रतीकत्वमस्य गम्यते ?। सत्यं, गम्यते भवताम्, न कात्यायनस्य। तस्य त्वेतत्सूत्रप्रतीकत्वमेवैतस्यागमिषत। भवतामपि कथमेतद्गम्यते,—इति वक्तव्यम्। उभयथा हि दर्शनं भवति। यथा खल्वभ्युदिते तरणौ देवदत्तः प्रातराशं भुङ्क्ते चंक्रमणं कृत्वा मध्याह्ने स्नात्वा वाससी परिधायापूपान् भक्षयति,—इति। अत्र यदि अभ्युदिते तरणौ देवदत्तः प्रथमं चंक्रमणं करोति, ततः प्रातराशं भुङ्क्ते, तदा 'चंक्रमणं कृत्वा'—इत्येतत् पूर्व्वस्यैव वाक्यस्य प्रतीकं भवति। अथ, आदौ प्रातराशं भुङ्क्ते, ततश्चंक्रमणं करोति अथ स्नाति, तदोत्तरवाक्यस्यैव प्रतीकं। तत्रैवमुभयथा दर्शने सति, 'उत्तानं पात्रं कृत्वा'—इत्येतदुत्तरस्यैव सूत्रस्य प्रतीकं, नैतस्य—इत्यस्यां कल्पनायां न किञ्चित् कारणं पश्यामः। पक्षपातेन हि भवानेवं मन्यते। परतन्त्रप्रज्ञाहि जनाः स्वयं शास्त्रार्थं निर्णेतुमशक्नुवन्तः प्रख्यातवर्णनास्ववलम्बेरन्। स्वतन्त्रप्रज्ञानान्तु नैवमकस्मात् पक्षपातोयुक्तः। पुरुषमतिवैश्वरूप्येण तत्त्वाव्यवस्थानप्रसङ्गादित्यस्तु किं विस्तरेण ?।

न च, 'उत्तानपात्रकृदित्यस्य,—

"युष्मानेव स्वस्तिवाच्यानङ्गुष्ठग्रहणं सदा।

कृत्वा धूर्य्यस्य विप्रस्य प्रणम्यानुव्रजेत्ततः"।

इत्युत्तरश्लोकेनान्वयः'—इति नारायणोपाध्यायमतं युक्तमिति वाच्यम्। यथा श्रुतार्थपरित्यागे मानाभावात्। शब्दस्य श्रवणमात्रात् योऽर्थोऽवगम्यते, सोऽयं श्रुत्याऽवगम्यते। अवगम्यते चेत्, कथं परित्यज्येत।

तदेतत् स्वधानिनयनीये धारादानम्,—अम्बष्ठकोक्तप्रकारेण वामान्वारब्धदक्षिणहस्तेन करणीयम्। यत,—

"श्राद्धे सेचनकाले तु पाणिनैकेन दापयेत्।
तर्पणे तूभयं कुर्य्यादेषएव विधिः स्मृतः"।

इति स्नानसूत्रपरिशिष्टे 'पाणिनैकेन'—इत्युक्तम्। तदञ्जलिकरणाभावाभिप्रायेण, नत्वन्वारम्भनिषेधार्थम्। कथं ज्ञायते?।

"देवतानां पितॄणाञ्च जले दद्याज्जलाञ्जलीन्।
असंस्कृतप्रमीतानां स्थले दद्याज्जलाञ्जलीन्"।

इत्यनुपदमेव तर्पणे अञ्जलिविधानस्वरसात्। तदस्य परिषेचनस्यातिदेशलभ्यत्वेपि सूत्रणमाशीःप्रार्थनानन्तरं दर्भास्तरणानन्तरञ्चैतत् करणीयमित्येतदर्थम्। न पुनर्वारिधारान्तरविधानार्थम्। कल्पनागौरवापत्तेः ॥०॥ ३५ ॥०॥

## विश्वेदेवाः प्रीयन्तामिति दैवे वाचयित्वा पिण्डपात्राणि चालयित्वा यथाशक्ति दक्षिणां दद्यात् ॥३६॥

'विश्वेदेवाः प्रीयन्ताम्'—इति दैवे ब्राह्मणं वाचयित्वा। 'वाचयित्वा' —इति कुर्व्वन्, 'विश्वेदेवाः प्रीयन्तामिति ब्रूहि'—इति वाचयितुरध्येषणाऽर्थायातेति दर्शयति। 'विश्वेदेवाः प्रीयन्ताम्'—इति प्रश्नः, 'सुप्रीता भवन्तु'—इत्युत्तरमिति मद्दाशयाः। तदेतत्सूत्रम्। 'पिण्डपात्राणि चालयित्वा'। पिण्डाश्च पात्राणि च पिण्डपात्राणि, तानि चालयित्वा,—इत्यर्थः। 'पात्राणि'—इति भोजनपात्राणि परामृशति। कथं ज्ञायते?। पिण्डपात्रस्यैकत्वाद्बहुवचनानुपपत्तेः। 'सर्व्वमन्नमेक-

णेद्धृत्य'—इति हि सूचितम्। अन्वष्टक्येऽपि एकस्मिन् पात्रे हवींषि समनीय तस्मादवदाय पिण्डदानं ग्रन्थकारेणोक्तम्। ननु, व्यक्तिभेदा-द्बहुवचनमुपपत्स्यते?। सत्यमुपपत्स्यते, अगतिरियमितित्वेतदुपेक्षणीयं भवति; सम्भवन्त्यां गतौ। अतएव, पिण्डानां पात्राणि,—इत्यपि न वर्ण्यते। तस्मात् यथोक्तमेवास्तु।

इदानीं 'यथाशक्ति' शक्त्यनतिक्रमेण दक्षिणां दद्यात्। 'इतोयज्ञ-स्सदक्षिणः'—इति हि स्मरन्ति। "यज्ञोगन्धर्व्वस्तस्य दक्षिणा अप्स-रसः"—इत्यपि निगमोभवति। तस्मादत्यन्ताशक्तावपि पणं काकिनीं फलं पुष्पमपि वा दक्षिणां दद्यात्। एवमपि सदक्षिणोयज्ञोन खल्वात्मानं धक्ष्यति,—इति। शक्तौ तु, पित्र्ये रजतस्याभ्यर्हितत्वात् तद्देयम्। दैवे पुनरमङ्गलं रजतं न देयं, किन्तु हिरण्यादिकमेवेत्या-दिकं यथासम्भवमूहनीयम्।

सेयं दक्षिणा दैवपूर्व्वं दातव्या। कुतः?। "दैवपूर्व्वं श्राद्धं कुर्व्वीत"—इति वचनात्। दक्षिणाऽपि खल्वङ्गं श्राद्धस्य। तस्मात् सापि दैवपूर्व्वमेव करणीया भवति। विष्णुपुराणोक्तस्तु क्रमविपर्य्य-यस्तदुक्तप्रयोगविषयः। यच्च,—

"ब्रह्मणे दक्षिणा देया यत्र या परिकीर्त्तिता।
कर्म्मान्तेऽनुच्यमानायां पूर्णपात्रादिका भवेत्"।

इति छन्दोगपरिशिष्टवचनेन दक्षिणादानस्य कर्म्मान्तत्वाभिधानात्,

"दैवाद्यन्तं तदीहेत पित्राद्यन्तं न तद्भवेत्।
पित्राद्यन्तन्त्वीहमानः क्षिप्रं नश्यति सान्वयः"।

मनुवचनाच्च आदौ पितृपक्षे दक्षिणा,—इति तत्प्रकारेणोक्तम्।

तदयुक्तम्। परतोपि कर्म्माभिधानादिदानीं कर्म्मान्तत्वानुपपत्तेः। छन्दोगपरिशिष्टवचनस्य सामान्यस्यापवादविषयेऽप्रवृत्तेश्च। मनुवचनञ्च तदुक्तप्रयोगविषयमित्यनुदाहरणम्।

सा खल्वियं दक्षिणा,—पित्र्ये प्राचीनावीतिना दक्षिणामुखेन कर्त्तव्या, पित्र्यकर्म्माङ्गत्वात्,—इति नीलाम्बरोपाध्यायाः। मदनपारिजाते तु,—

"सर्व्वं कर्म्मापसव्येन दक्षिणादानवर्जितम्"।

इति जमदग्निवचनादुपवीतिना प्राङ्मुखेन कर्त्तव्या,—इत्युक्तम् ॥०॥ ॥ ३६ ॥०॥

अथेदानीम्,—

दातारोनोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च श्रद्धा च नोमा विगमद्बहुदेयञ्च नो अस्तु अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि याचितारश्च नः सन्तु मा च याचिष्म कञ्चनेत्येताएवाशिषः सन्तु ॥ ३७ ॥

'इति' एतं मन्त्रं पठित्वा, 'एताएवाशिषः सन्तु'—इति प्रार्थयेत्। 'वेदाः,'—इति बहुवचनान्तमेव पदम्,—अत्र, छन्दोगपरसूत्रे, कातीयकल्पादौ च पठ्यते। मन्वादिभिरप्येवमेवेदं पठितम्। विज्ञानेश्वरकुल्लूकभट्टादिभिरपि तथैव व्याख्यातम्। दीपकलिकामात्रदर्शी रघुनन्दनस्त्वाह,—'वेदस्याध्ययनाध्यापन-तदर्थबोध-तदर्थानुष्ठानैर्वृद्धिमेतु'—इति याज्ञवल्क्यदीपकलिकायां व्याख्यानात् वेद-

इत्येवपाठोन तु वेदाइति,—इति। तदेतदुपजीव्यस्थूलपाणिभक्त-तिभ्रयख्यापनमित्युपेक्षणीयं भवति।

'माव्यगमत्'—इति केचित् पठन्ति। 'बहुदेयञ्च नोऽस्त्विति'—इति मन्वादौ इतिकारस्य स्वरूपार्थत्वमबुद्ध्वा तदेव पठन्त्यन्ये॥ ॥०॥ ३७ ॥०॥

## सन्त्वित्युक्ते स्वस्तिवाच्याशिषः प्रतिगृह्य ॥ ३८ ॥

सन्तु,—इति ब्राह्मणैरुक्ते, सर्व्वानेव ब्राह्मणान् स्वस्ति—इति वाचयित्वा पूर्व्वोक्ताएवाशिषः प्रतिगृह्य इदानीं मनसा स्वीकृत्य। स्वस्तिवाच्य,—इति वचनात् स्वस्ति ब्रूहि,—इति ब्राह्मणेषु वाचयितुः प्रश्नोऽर्थायातः,—इति। सर्व्वे च ब्राह्मणाः खल्वेतत् स्वस्ति वाचयितव्याः। कुतः?। "युग्मानेव स्वस्तिवाच्य"—इति कात्यायनदर्शनात्। युग्मान्,—इत्याभ्युदयिकाभिप्रायं वचनम्।

रघुनन्दनस्त्वन्यथेमं ग्रन्थं पठति,—'उत्तानं पात्रं कृत्वा'—इत्यादिम्। "उत्तानं पात्रं कृत्वा यथाशक्ति दक्षिणां दद्यात्, विश्वेदेवाः प्रीयन्तामिति दैवे वाचयित्वा, दातारोनोऽभिवर्द्धन्तां वेदाः सन्ततिरेवच श्रद्धा च नो माव्यगमद्बहुदेयञ्च नोऽस्त्विति अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि याचितारश्च नः सन्तु मा च याचिष्म कञ्चन अन्नं प्रवर्द्धतां नित्यं दाता शतं जीवतु येभ्यः सङ्कल्पिताद्विजास्तेषामक्षया तृप्तिरस्तु एताः सत्याश्चाशिषः सन्तु इत्याशिषः प्रतिगृह्य"—इति। महायशःप्रभृतयो यथा पठन्ति, तथैव तस्माभिः पठितोव्याख्यातश्च ग्रन्थः ॥०॥ ३८ ॥०॥

**वाजेवाजे वतवाजिनोधनेषु विप्राश्रमृताऋतज्ञा अस्य मध्वः पिवत मादयध्वं तृप्तायात पथिभिर्द्देवयाः नैरित्येतया विसृज्य ॥ ३९ ॥**

वाजेवाजे,—इत्येतया ऋचा ब्राह्मणान् विसृज्य। विसर्ज्जनप्रकारस्य च्छन्दोगपरिशिष्टोक्तोग्राह्यः। यथा,—

"युग्मानेव स्वस्तिवाच्यानङ्गुष्ठग्रहणं सदा।

कृत्वा, धूर्य्यस्य विप्रस्य प्रणम्यानुव्रजेत्ततः"।

इति। अस्माद्वचनादवगच्छामः,—सङ्कल्पमन्त्रमुच्चार्य्य धूर्य्यस्य विप्रस्यानङ्गुष्ठं पाणिं गृह्णीयात्। तावतैव सर्व्वे ब्राह्मणाविसृष्टाभवन्ति,—इति। सोयं धूर्य्योविप्रः पित्र्यएव भवति। किं कारणम्?। पित्रर्थं हि श्राद्धं दैवास्य तदङ्गतयेज्यन्ते। तत्रैवं सति, ब्राह्मणेषु यः श्रुतादिभिरन्यानत्येति, सोयं धूर्य्यः पित्र्यएव नियोक्तव्योभवति, न खल्वपि दैवे। न हि प्रधानमतिक्रम्य तच्छेषे विशेषस्याभिनिवेशः प्रधाने तु सामान्यस्येति साध्वी कल्पना भवति। तस्मात् पित्र्यएव विप्रोधूर्य्यः। तस्य च पाणिं गृहीत्वात्थापनं करणीयम्। तावता न केवलमयमेवैकः, यावत् सर्व्वेपि श्राद्धिब्राह्मणाउत्थापिताविसृष्टाश्च भवन्ति। तदेवं धूर्य्यं ब्राह्मणमनु परेषामुत्थानावगतेः पश्चादेव दैवब्राह्मणः समुत्थितोविसृष्टश्च भवति,—इत्यर्थात् सिद्धम्। अथाचापि दैवपूर्व्वत्वमिष्येत, धूर्य्यस्येतिवचनमनर्थकं स्यात्। कथम्?। धूर्य्यस्येतिवचने धूर्य्यस्यान्यस्य च हस्तग्रहणं प्राप्नोति। अवचनेपि तथैव प्राप्नोति। किमिति धूर्य्यस्येति करोति। तस्मात्,—परिसंख्यानार्थमेवैत-

इयगमिति प्रतिपद्यामहे । पित्रधीनः खल्वन्येषां यागः,—इति पितृ-श्राद्धे विहृष्टे सर्व्वएवैते सुतरां विहृष्टाभवन्ति,—इति । तदिदं दैवा-न्तलं श्राद्धस्य । तदेवं धूर्य्यं ब्राह्मणमुत्थाप्य, समुत्थितान् सर्व्वान् ब्राह्मणान् तन्त्रेण प्रणमेत् ॥०॥ ३९ ॥०॥

## आमा वाजस्य प्रसवोजगम्यादिमे द्यावापृथिवी-विश्वरूपे श्रमा गन्तां पितरा मातरा चामा सोमो श्रमृतत्वेन गम्यादित्यासीमान्तमनुव्रज्याभिवाद्य प्रद-क्षिणीकृत्य वामदेव्यं गीत्वा प्रविशति ॥ ४० ॥

आमा वाजस्य,—इति मन्त्रेण सकृत्पठितेनैव सर्व्वान् ब्राह्मणान् सीमापर्य्यन्तमनुव्रज्य सर्व्वानभिवाद्य प्रदक्षिणीकृत्य च वामदेव्यं नाम साम गीत्वा अथ प्रविशति गृहम् । 'कयानश्चित्रआभुवत्'—इति शृचे सूक्ते गीयमानं साम वामदेव्यम् । रघुनन्दनस्त्वन्यथेमं मन्त्रं पठति पितरा मातरा'—इत्यादिम् । "पितरा मातरा युवमामा सोमोऽमृतत्वाय गम्यादित्येतथाऽनुव्रज्य प्रदक्षिणीकृत्याभिवादयेत् ततोवामदेव्यं गीत्वा गृहं प्रविशति"—इति ।

एतत्पर्य्यन्तं कृत्वा, "मध्यमं पिण्डं पत्नी पुत्रकामा प्राश्नीया-दाधत्त पितरोगर्भमिति, योवा तेषां ब्राह्मणानामुच्छिष्टभाक् स्यात्" —इति, "इन्द्वं पात्राणि प्रक्षाल्य प्रत्यतिहारयेत्"—इति च चोदक-प्राप्तं कर्त्तव्यम् । तत्र, 'योवा तेषाम्'—इति सूत्रेण श्राद्धशेष-भोजनमुक्तम् । तच्चैतत् स्वभोजनकाले स्यात् न पुनरेतस्मिन्नेव क्षणे, —इति । पिण्डप्रतिपत्तिस्त्वान्वष्टक्योक्ता ग्राह्या ।

श्राद्धदिने बलिवैश्वदेवौ च श्राद्धोत्तरकाले श्राद्धशेषेण करणीयौ। कुतः?।

"श्राद्धान्ते श्राद्धशेषेण वैश्वदेवं समाचरेत्"।

इति स्मरणात्। अपिच। पितृभ्योहविर्निरूप्य तेभ्योऽदत्त्वा न खल्वन्येभ्यस्तस्य दानमुचितम्। तदुक्तं निरुक्ते नैगमकाण्डे। "अगस्त्य इन्द्राय हविर्निरूप्य मरुद्भ्यः सम्प्रदित्साञ्चकार, स इन्द्र एत्य परिदेवयाञ्चक्रे"—इति। तस्मात् श्राद्धशेषेणैतयोःकरणं न ततः पूर्व्वम्,—इति। विस्तरेण चैतदस्माभिर्गृह्यसूत्रभाष्येऽभिहितमित्युपारम्यते।

अथैतस्मिन् कर्म्मणि किं प्रधानमित्यस्य निरूपणार्थं संक्षेपतो विचारणां करिष्यामः। किं भवति प्रयोजनम्?। यत् प्रधानं तावन्मात्रे निर्वृत्ते प्रतिपतितेष्वन्यस्मिन् कस्याञ्चिदवस्थायां पुरुषेण प्रत्यवैष्यति,—इति। तत्र, इदं तावत् नः परीक्ष्यम्,—किं ब्राह्मणनिमन्त्रणादि सर्व्वं प्रधानम्, उत एषु मध्ये किञ्चित्,—इति। सर्व्वं तावन्न भवति प्रधानम्। किं कारणम्?। प्रत्यक्षं खल्वेषु कस्यचित् परार्थत्वम्। यथा निमन्त्रणादेर्भोजनाद्यर्थत्वम्। रेखाकरणादेश्च पिण्डदानाद्यर्थत्वम्। वचनमत्रार्थे नास्ति,—इति चेत्। मासीद्वचनं प्रत्यक्षं तावदेतत्। यच्च परार्थं न तत् प्रधानम्। शेषः खल्वसौ। तथाचोक्तम्। "शेषः परार्थत्वात्"—इति। न च, सर्व्वत्र तत्र भवन्तः फलमामनन्ति। फलवतः सन्निधौ च यदफलं श्रूयते, तत् फलवतो भवत्यङ्गमिति। तस्मात् किञ्चिदेषु प्रधानं न सर्व्वम्,—इति स्थितम्। एवं स्थिते चिन्ता। किं ब्राह्मणभोजनं प्रधानम्, आहोस्वित् पिण्डदानम्, उताहो उभयम्?—इति। कुतः संशयः?।

उभयत्रैव फलश्रुतिदर्शनात्। ननु, शेषेण पिण्डदानविधानाद्ब्राह्मं प्रतिपत्तिरियम्। नैषदोषः। अर्थकर्म्मणि प्रतिपादनोपपत्तेः। बलिहरणवत्। यथा खल्वर्थकर्म्मणि बलिहरणे वैश्वदेवशेषस्य प्रतिपादनं, तथा अर्थकर्म्मणि पिण्डदाने शेषोऽयं प्रतिपाद्यते,—इति। कथं ज्ञायते?। फलवादोपपत्तेः। पिण्डे फलवादः खल्वेवमुपपत्स्यते। अफलायां प्रतिपत्तौ नैतस्योपपत्तिः। तस्मादर्थकर्म्मैतत् पिण्डदानमिति पश्यामः। इतश्चैतदेवं पश्यामः। अभावेऽपि दर्शनात्। शेषस्याभावेऽपि पिण्डदानं दृश्यते। क?। पिण्डपितृयज्ञादौ। ब्राह्मणभोजनं तत्र नास्ति। ब्राह्मणभोजनस्य चाभावे कस्य शेषः प्रतिपादयिष्यते। तस्मादर्थकर्म्मैवासौ न प्रतिपत्तिः। तत्रैव शेषः प्रतिपाद्यते। प्रतिपत्त्यर्थकर्म्म वैतत् स्यात् न प्रतिपत्तिरेव। ब्राह्मणभोजनात् पुरस्तादपि केषाञ्चित् पिण्डदानदर्शनाच्चैवमवगच्छामः।

तत्र, उभयं प्रधानम्,—इति भट्टनारायणप्रभृतयोमन्यन्ते। श्लोकानप्युदाहरन्ति।

"प्राधान्यं पिण्डदानस्य केचिदाहुर्मनीषिणः।
गयादौ पिण्डमात्रस्य दीयमानस्य दर्शनात्।
भोजनस्य प्रधानत्वं वदन्त्यन्ये महर्षयः।
ब्राह्मणस्य परीक्षायां महायत्नप्रदर्शनात्।
आमश्राद्धविधानस्य विना पिण्डैः क्रियाविधेः।
तदारभ्याप्यनध्यायविधानश्रवणादपि।
विद्वन्मतमुपादाय मम त्वेतत् हृदि स्थितम्।
प्राधान्यमुभयोर्यस्मात्तस्मादेष समुच्चयः"।

इति। तदिमे श्लोकाः छन्दोगपरिशिष्टस्यान्तिमे खण्डे पठ्यन्ते। गृह्यसूत्रभाष्ये भट्टनारायणेन च पठिताः। परिशिष्टप्रकाशकृता तु नारायणोपाध्यायेन छन्दोगपरिशिष्टस्य तृतीयप्रपाठकस्यान्तिमाः कतिचित् खण्डा न पठिताः न च व्याख्याताः। तदत्र भवन्तोभूमिदेवाः प्रमाणम्। अत्रच, निमित्ततोब्राह्मणभोजनस्य पिण्डदानस्य चाननुष्ठानेऽप्युभयोः प्राधान्यं नानुपपन्नम्। असोमयाजिपचे दधिपयोयागवत्। फलश्रुतिश्चोभयत्राप्यस्ति। तदेवं न्यायोऽप्यनुगृहीतो भवति।

यच्च,—'नित्यश्राद्धादौ पिण्डनिषेधात् ब्राह्मणभोजनमात्रं प्रधानम्। निषेधोहि प्राप्तस्य, प्राप्तिश्चातिदेशात्, स चाङ्गानामेव,—इति। अङ्गे च पिण्डदाने फलश्रुतिरर्थवादएव। पिण्डदानमात्रविधिस्त्वङ्गभूतपिण्डदानात् कर्म्मान्तरम्'—इति शूलपाणिनोक्तम्। तत्र ब्रूमः। 'मासमग्निहोत्रं जुहृति'—इति कौण्डपायिनामयने, अग्निहोत्रवत् जुह्वति इति वचनव्यक्त्या यथा नैयमिकस्याग्निहोत्रस्य धर्म्मा अतिदिश्यन्ते, प्रधानस्य होमोयोऽग्नये च प्रजापतये च, इत्यादिः, यथा वा 'उद्भिदा यजेत'-इत्येवमादौ अव्यक्तयजतौ सौमिकधर्म्मादव प्रधानान्यपि यजतयः प्रदिश्यन्ते, तयोरूपान्तराभावात्। तद्वदत्रापि स्यात्। प्रधानस्यातिदेशे न कश्चिदर्थः,—इति खल्वसौ न प्रदिश्यते। यथाचावोचाम,—महानर्थस्तस्य भवति,—इति कथमसौ न प्रदिश्येत।

अथ मन्यसे,—नासौ प्रधानस्यातिदेशः किन्त्वङ्गस्यैव। प्रधानं त्वत्र जुहोतिना यजतिनाच विहितम्। द्रव्यदेवते पुनरङ्गे एव दिश्येते अङ्गान्तरवत्,—इति। एवन्तर्हि प्रकृतेऽपि श्राद्धचोदनया

प्रधानं विहितम्,—इत्यङ्गमेवेतिकर्त्तव्यता प्रदेक्ष्यते। कथन्तर्हि नित्य-श्राद्धादौ पिण्डदानस्य निषेधः?। इतिकर्त्तव्यतानिषेधाभिप्रायेण,—इति गृहाण। इतिकर्त्तव्यतायाश्च निषेधात् पिण्डोपि न दीयते। उत्तरवेदेर्निषेधात् वश्वदेवे सुनासीरीये च यथा न अग्निः प्रणीयते। न हि विहितमपि इतिकर्त्तव्यताभिरनुपकृतमर्थाय कल्पते। यस्य चार्थोनास्ति, सोपि किमिति क्रियेत। अपिच। न चोदकएव प्रापयति, किन्तर्हि चोदनापि। तस्मादुभयोः प्राधान्यपक्षे चोदकेन पिण्डोमा प्रापि। चोदनया तु प्राप्स्यते। तत्र, चोदनया प्राप्तः पिण्डः प्रतिषिध्यमानस्तदितरत् चोदनाप्राप्तं कर्त्तव्यमनुजानीते। सोयं पर्य्युदासोन निषेधः।

पिण्डदानमात्रविधिस्त्वङ्गभूतपिण्डदानात् कर्म्मान्तरम्,—इति यदुक्तम्। तत्र पृच्छामः। तस्य श्राद्धत्वमस्ति न वा?। अस्ति चेत्, विफलः प्रयासः। कर्म्मान्तरञ्चेतदेवं न स्यात्। सति ब्राह्मणभोजने पिण्डदानमङ्गम्, असति तस्मिन् प्रधानमिति चेत्। न। रूपभेदाभावात्। यदेव खल्वस्य रूपमङ्गस्य तदेव प्रधानस्यापि। तत्रैवं सति, सति ब्राह्मणभोजने तदङ्गं विपरीतमन्यथा,—इत्यत्र न खलु कारणमस्ति। अपिच। एवमपि पिण्डदानस्य श्राद्धत्वमभ्युपगतं भवति। तथा चासतीव ब्राह्मणभोजने सत्यपि तस्मिन् प्रधानमेवैतत् स्यात्।

अस्तु तर्हि, पिण्डदानस्य श्राद्धत्वं नास्ति,—इति। तदपि नास्ति। यतः तत्र भवान् गृह्यकारः 'तत् श्राद्धम्'—इति सूत्रयन् पिण्डपितृयज्ञस्य श्राद्धत्वमाह। पिण्डप्रधानस्तु सः। पिण्डैरेव तत्र पितरइज्यन्ते। न पुनर्ब्राह्मणभोजनमस्ति। तस्मात्, पिण्डमन्तरेणेव ब्राह्मण-

भोजनादृतेपि श्राद्धनिष्पत्तिदर्शनात् नैतदेकतरस्मिन्नेव पक्षे चोद-यितव्यं भवति। द्वयोः समानत्वात्। समुच्चयपक्षः खल्वेवमुपोद्बलि-तोभवति। अथ, अनयोरेकतरस्यैव प्राधान्यमिति निर्बन्धः; पिण्ड-दानमात्रं तर्हि प्रधानमुच्यताम्। पिण्डदानएव तत्र भवतोऽष्टकाकारस्य महायत्नदर्शनात्। तथा मनुरपि।

"सहपिण्डक्रियायान्तु कृतायामस्य धर्म्मतः।

अनयैवावृता कार्य्यं पिण्डनिर्व्वपणं सुतैः"।

इति पिण्डदानस्य प्राधान्यमाह। सर्व्ववचनसामञ्जस्यकरणाभिमानि-नान्त्वेतन्मनुवचनविरोधादुष्परिहरः स्यात्। अस्माकन्तु नैषविरोधः। विभिन्नविषयत्वाद्वचनानाम्। यच्च,—पिण्डनिर्व्वपणं पित्रे दानमिति वर्णितम्। तदसङ्गतम्। यथाश्रुतार्थपरित्यागे हेत्वभावात्। पितृ-द्देश्यकदानमात्रस्यैव तदितिकर्त्तव्यतापत्तेश्च। 'अस्य',—इति करणाच्चै-वमवगच्छामः।

"एवं निर्वपणं कृत्वा पिण्डांस्तांस्तदनन्तरम्"।

इति तस्यैव वचनान्तरदर्शनाच्चैवं गम्यते। 'न निर्व्वपति यः पिण्डम्'—इति चैवमादौ तथैव निर्दिश्यते। प्रसिद्धिश्चैवमनुगृह्यते। तस्माद-पवर्णितं तत्। तदेवं कस्यचित् पिण्डदानस्य कस्यचिच्च ब्राह्मणभोज-नस्य प्राधान्ये स्वरसः,—इत्यतः कारणात् समुच्चयपक्षः प्रादुर्भवति। अतः एकतरप्राधान्यावेदकानि वचनानि न खल्वेतत्पक्षे चोदयितव्यानि भवन्ति। सोयमलङ्कारो न दोषः। परेषां पुनरयं पर्य्यनुयोगोऽवर्ज-नीयः स्यात्। तथाचोभयथादर्शनम्। अन्वष्टक्यादौ तत्र भवान् गृह्यकारः पिण्डदानं महता प्रबन्धेनोपदिदेश, न ब्राह्मणभोजनम्।

"अप्येकमाशयेद्विप्रम्"—इति च नित्यश्राद्धे कात्यायनश्चाह। तस्मात्,—क्वचित् पिण्डमात्रं प्रधानम्, यथा पिण्डपितृयज्ञादौ। क्वचिद्ब्राह्मणभोजनमात्रम्, यथा नित्यश्राद्धादौ। क्वचिच्चोभयम्, यथा सपिण्डीकरणादौ। इत्यलं किं विस्तरेण ॥०॥ ४० ॥०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारभट्टाचार्यस्य कृतौ श्राद्धकल्पभाष्ये द्वितीया कण्डिका ॥

---

## श्राद्धकल्पः ।

### तृतीया कण्डिका ।

एवन्तावत् पार्व्वणश्राद्धप्रयोगोऽभिहितः । अथेदानीं तद्विकृतीभूतमेकोद्दिष्टं वक्तुं प्रतिजानीते,—

**अथैकोद्दिष्टम् ॥ १ ॥**

वर्त्तिष्यते,—इति सूत्रशेषः । अथ पार्व्वणश्राद्धानन्तरम् । एकउद्दिष्टो यत्र, तदेकोद्दिष्टम्,—इति कर्म्मणोनामधेयम् । तदेतदादिकं श्राद्धजातं पार्व्वणेन विक्रियते । कथं ज्ञायते । शृणु यथा ज्ञायते । सपरिकराभिहिता प्रकृतिर्विकृतिरन्या,—इति तावन्मीमांसकसमयः । पार्व्वणश्चात्र सपरिकरमभिहितं नत्वेकोद्दिष्टादिकम्,—इति । अपिच । आवाहनादिकं तावदत्र निषेत्स्यते । नचाप्राप्तस्य निषेधः । नचात्र वचनात् प्राप्तिः । तस्मात् चोदकप्राप्तमावाहनादिकं निषिध्यते,—इति गम्यते । एतस्मात् कारणात् पश्यामः,—पार्व्वणस्य धर्म्मात्र प्रदिश्यन्ते,—इति । दीक्षणीयादिषु 'अप्रयाजास्ताः'—इति निषेधस्यान्यथानुपपत्त्या तासु दर्शपौर्णमासधर्म्मप्रदेशोयथा । "उपतिष्ठतामित्यक्षय्यस्थाने"—इति सूत्रणाच्चैवमवगच्छामः । पार्व्वणे खल्वक्षय्योदकं विहितं, तस्य स्थाने चात्रोपतिष्ठतामिति विदधत् पार्व्वणस्य धर्म्माणां प्रदेशमत्र बोधयति ।

तदिदमेकोद्दिष्टं द्विविधं भवति, प्रेतैकोद्दिष्टं प्रत्याब्दिकैकोद्दिष्टञ्च । तदुभयमिह लाघवार्थमेकेन ग्रन्थेनाभिधीयते । अतः प्रेत-

पदप्रयोगोऽत्र नोपदिष्टः। एवं खल्वसौ प्रत्याब्दिकेऽपि प्रसज्येत। कथं नु स मा प्रसञ्जि,—इति यदुभयसाधारणं तदेवोपदिष्टम्। प्रेतैकोद्दिष्टे तु शास्त्रान्तरात् प्रेतपदप्रयोगः स्यात्। तेन, प्रत्याब्दिकमप्येकोद्दिष्टमेव। न पुनरेतेन तद्वि क्रियते। तस्मात्, तस्याप्येकोद्दिष्टतयैवोल्लेखोऽनल्पैकोद्दिष्टविधिकतया,—इति द्रष्टव्यम्। "अथैकोद्दिष्टं तत् त्रेधा भवति नवं मिश्रं पुराणञ्च"—इति शाखान्तरेऽपि प्रत्याब्दिकस्यैकोद्दिष्टत्वमुक्तं नत्वेकोद्दिष्टविधिकत्वम्,—इति।

गौड़ास्तु एतत्प्रकरणशेषे "एतत् प्रेतश्राद्धम्"—इति, एतत् कण्डिकापरिसमाप्तौ, "अत ऊर्द्ध्वं संवत्सरे संवत्सरे प्रेतायान्नं दद्यात्; यस्मिन्नहनि प्रेतः स्यात्"—इति च सूत्रद्वयमधिकं पठन्तः, प्रेतैकोद्दिष्टमेवैतत् प्रत्याब्दिकेऽप्यस्यैव धर्मप्रदेशः,—इति मन्यमानाः प्रत्याब्दिकमेकोद्दिष्टविधिकतयोल्लिखन्ति। पाश्चात्यसूत्रग्रन्थे तु नैतत् सूत्रद्वयं पठ्यते। भाष्यकारैरपि चिरन्तनैर्नपठितं न खल्वपि व्याख्यातम्। छन्दोगापरसूत्रेऽपि न तादृशं किञ्चित् पठ्यते। पारस्करोऽपि नैवं किञ्चित् सूत्रयाञ्चकार। कात्यायनएव सपिण्डीकरणात् परम्,—"अत ऊर्द्ध्वं प्रेतायान्नं दद्यात्; यस्मिन्नहनि प्रेतः स्यात्"—इति सूत्रयाम्बभूव। परमसावपि, "एतत् प्रेतश्राद्धम्"—इति नोवाच। यदापि तत् पठ्यते, तदापि प्रेतश्राद्धमिति प्रेतपदस्य, 'प्रेतायान्नं दद्यात्'—इतिवत् प्रेमीतोऽर्थः,—इति द्वयमेकेनैव ग्रन्थेनोच्यते,—इति न किञ्चिदनुचितम् ॥०॥ १ ॥०॥

## एकं पवित्रम् ॥ २ ॥

पार्व्वणवत् पवित्रबहुत्वप्राप्तौ, एकमित्यनेन तस्यैकत्वं विधत्ते। तदिदं

न्यायमूलं सूत्रम्। तत्रोद्देश्यानां बहुत्वादर्थवत् पवित्रबहुत्वम्, अत्र-तूद्देश्यस्यैकतया न खल्वर्थोऽस्तीति निवर्त्तते,—इति न्यायोऽत्र मूलम्। 'स्वयं कृता वेदिर्भवति'—इति उद्धननखननपरिलेखनानि यथा निवर्त्तन्ते। सौर्य्ये वा चरौ पेषणादीनि यथा लुप्यन्ते। तथा चोक्तम्। "अपित्वाभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात्"—इति। एककरणसाध्यं खल्वेकोद्दिष्टापूर्व्वमेककरणधर्म्मानेवाकाङ्क्षति,—इत्येकमेव पवित्रमत्रप्रदिश्येत। सौर्य्यचरोरपूर्व्वस्यैककरणसाध्यतया, प्रकृतौ दर्शपूर्णमासापूर्व्वस्य षट्करणसाध्यत्वेऽप्येकस्यैव करणस्य धर्म्मास्तत्र प्रदिश्यन्ते,—इति यथा।

वैकृतोवाऽयं विशेषोपदेशः स्यात्। सोयं श्रुत्या पदार्थं प्रापयति,—इति शीघ्रप्रवृत्तः चोदकं बाधते। चोदकेन हि विप्रकृष्टाधीतः पदार्थोऽन्वीयते,—इति विलम्बेनासौ पदार्थानतिदिशति। यथा वाजपेये सप्तदशशरावनैवारचरोरुपदेशात् चोदकप्राप्ता मुष्टिर्निवर्त्तते। यथा वा चित्रायां तण्डुलानामुपदेशात् चोदकप्राप्ताव्रीहयोनिवर्त्तन्ते;—व्रैहा अव्रैहाश्च तण्डुलाउणादातव्याः,—इति। साद्यस्क्रे च 'खलेवाली यूपोभवति'—इत्युपदेशात् चोदकप्राप्तः खादिरोनिवर्त्तते—खादिरो अखादिरो वा खलेवाली स्यात्,—इति। तद्वदत्रापि, 'एकं पवित्रम्'—इत्युपदेशात् प्राकृतं पवित्रबहुत्वं निवर्त्तते। किं कारणम्?। प्रत्यक्षा हि श्रुतिः, परोक्षश्च चोदकः,—इति। अतएव,—अर्घ्यस्यैकत्वादेव पवित्रस्यैकत्वं प्राप्नोति,—इत्यस्यापि पर्य्यनुयोगस्यानवकाशः। भगवानाचार्य्योऽर्घ्यस्यैकत्वं सूचयित्वा पवित्रस्यैकत्वं सूचयाञ्चकार। कात्यायनोहि तथा सूचयति। एतेन, तद्दृष्ट्वा, 'एको-

ऽर्घ्यः एकं पवित्रम्'—इति यद्विपर्य्यस्य पठितं रघुनन्दनेन, तदनाकरम्। भाष्यकारैरपि चिरन्तनैः, 'एकं पवित्रमेकोऽर्घ्यः'—इति क्रमवदेवैतत् सूत्रद्वयं पठितम्। तथात्वेपि वा, अर्घ्यस्यैकत्वेऽपि, एकस्मिन्नेवार्घ्ये चोदकप्राप्तं पवित्रबहुत्वमदृष्टार्थं स्यादित्यधिकाशङ्कानिरासार्थमस्य सूत्रणं नानुपपन्नम्।

यच्चापरमुक्तम्,—अर्थ्यैक्यात् द्विदलरूपसङ्केतितपवित्रैक्यप्राप्तौ एकं पवित्रमिति पुनरभिधानसार्थकत्वाय तदवयवपरम्,—इति। तदपि न सुन्दरम्। यतो न्यायमूलं विशेषोपदेशपरं वा वचनम्। उभयथापि,—

"अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेवच।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्"।

इति स्मृत्यन्तरोक्तं विशिष्टमेव पवित्रं पार्व्वणवदत्रापि प्राप्नोति। 'यत्र कुत्रचित्'—इति व्याप्तिवगतेस्तैवमवगच्छामः। "ततएव वर्हिषः प्रादेशमात्रे पवित्रे कुरुते"—इति गृह्यसूत्रे, "पवित्रेस्थोवैष्णव्यौ" इत्युपपत्त्यर्था द्दलक्षणा तु,—

"आज्यस्योत्पवनार्थं यत्तदप्येतावदेव तु"।

इति कात्यायनेनैव स्पष्टीकृता। अत्र तु तत्परिग्रहे न किञ्चित् कारणमस्ति। इतरथा पार्व्वणेप्येकदलं पवित्रं स्यात्। नचैवमिष्यते। द्विवचनान्तः खलु पवित्रशब्दोदलं लक्षयति, नत्वेकवचनान्तोऽपि। कथं ज्ञायते?। "पवित्रेस्थोवैष्णव्यौ"—इति, "पवित्रे कुरुते"—इति चैवमादिषु तथा दर्शनात्। "अच्छिद्रेण पवित्रेण"—इति, "पवित्रमन्तरा कृत्वा"—इति चैवमादिषु तथाऽदर्शनाच्च। तदेवं

द्विवचनमेवास्य लक्षणायां तात्पर्य्यग्राहकमित्यवधार्य्यते। तस्मात्, प्रमाणाभावान्नात्र दललक्षणा। प्रमाणान्तरविज्ञेयत्वात्तस्याः। तथा चोक्तम्।

"गौणे यदपि सामर्थ्यं न प्रमाणान्तरं विना।
आविर्भवति मुख्ये तु शब्दादेवाविरस्ति तत्।
तात्पर्य्यञ्च यतोमुख्ये गौणार्थपरता पुनः।
प्रमाणान्तरविज्ञेया तदभावान्न सिध्यति"।

इति। तस्मात्,—एकं पवित्रमिति पुनरभिधानसार्थकत्वाय,—इति रिक्तं वचः। एकोऽर्थः,—इति एकः पिण्डः,—इति चैतयोरनर्थकत्वापत्तिश्चैवमतर्क्कनीया स्यात्। तदनयोर्न्यायमूलत्वं विशेषविधित्वं वा अकामेनापि वाच्यम्। तत्सामान्यात् अस्यापि तथात्वमेवोच्यताम्। कृतमर्द्धजरतीयेन। यत्तु भार्गवनाम्ना वचनं पठन्ति,—

"पार्व्वणेषु तु सर्व्वेषु पवित्रं द्विदलं स्मृतम्।
नैकोद्दिष्टे तु तत् प्रोक्तं पवित्रं द्विदलं नृप!"।

इति। तदस्मत्प्रयोगव्यतिरिक्तविषयम्। अस्मच्छास्त्रे, 'यत्र कुत्रचित्" —इति व्याप्त्यवगतेस्तद्विरोधेनैतस्यादरणासम्भवात्। स्वशास्त्रविरुद्धं स्वल्पपरशास्त्रं नादर्त्तव्यमिति परोक्तसमुच्चयवादिनोपि मन्यन्ते। तस्मात्,—पार्व्वणवदेव द्विदलरूपमत्र पवित्रमिति वाचस्पतिमिश्रायुक्तमादरणीयम् ॥०॥ २ ॥०॥

## एकोऽर्घ्यः ॥ ३ ॥

पूर्व्ववद्व्याख्यानम्। पवित्रस्यैकत्वविधानेऽपि तद्रहितमेवान्यदर्घ्यपात्रं

स्यात्,—इतीमामधिकाशङ्कां निरसितुमिदं सूत्रं प्रवर्त्तते। तद्यत्रैको-ऽर्घ्य इत्यनेन प्राकृतयोर्द्वितीयतृतीयार्घ्ययोर्व्युदासं कृत्वा प्रथममवस्थापयति। तथाच, 'वैष्णव्यएककपालः'—इत्यत्र प्रथमोपस्थितत्वात् प्रथम-कपालधर्म्मानुष्ठानवत् अत्रापि प्रथमपात्रधर्म्मानुष्ठानमिति। तस्मात्, चोदकप्राप्तं न्युब्जकरणमत्रापि कर्त्तव्यं भवति। यत्तु,—संस्रवसमवनयनाभावात् प्रथमपात्राभावाच्च नात्रार्घ्यपात्रन्युब्जता,—इति वर्णितम्। तदसङ्गतम्। चोदकप्राप्तस्य विनावचनं वारयितुमशक्यत्वात्। संस्रव-समवनयनञ्च प्रतिपत्तिः,—इति तदभावोऽकिञ्चित्करः। संस्रवाः खल्वेवं प्रतिपाद्यन्ते। सेयं प्रतिपत्तिः प्रतिपाद्याभावात् मा भवतु, कथं नु न्युब्जतापि न कर्त्तव्या। प्रकृतौ खल्वेतत् न्युब्जकरणमुपस्थि-तत्वात् प्रथमपात्रपर्य्यवसितं भवति। इह तु पात्रान्तराभावात् संशयोनास्ति। अतो यदेवात्र पात्रं तदेव न्युब्जं कर्त्तव्यम्। चोदको हि न पात्रं प्रापयति, किन्तु तस्य न्युब्जकरणमात्रम्। तत् कथं न क्रियेत। तदेवं वैकृतविशेषपरत्वेऽप्यस्य, न्युब्जकरणं कर्त्तव्यम्,—इत्युक्तं भवति। प्राकृतस्य प्रथमपात्रस्यावस्थानमनेनोच्यते,—इत्येत-स्मिंस्तु पक्षे न किमपि चोदयितव्यं भवति।

ननु, 'पात्रं न्युब्जं करोति'—इति वचनात् न्युब्जकरणं पात्रार्थं गम्यते। वैकृतविशेषपरत्वे तु सूत्रस्यैतन्निवर्त्तेत। नैषदोषः। वैकृत-स्यापि पात्रविशेषस्य प्राकृतवत् संस्कारोपपत्तेः। चोदको हि तत् प्रापयति। अपिच। नैतत् न्युब्जकरणं पात्रार्थं किन्त्वपूर्व्वार्थम्। कृतप्रयो-जनं खल्विदानीं पात्रम्। न तेन संस्कृतेन किञ्चित् प्रयोजनम्। तदर्थञ्चेत् न्युब्जकरणं तदप्यनर्थकं भवति। मन्त्रार्थवत् शास्त्रमनर्थकं

कर्त्तव्यम्। तस्मादपूर्व्वार्थं न्युब्जकरणं न पात्रार्थम्। ननु पात्रार्थेऽपि न्युब्जकरणे अवश्यमदृष्टं कल्पयितव्यम्। सत्यं कल्पयितव्यम्। पात्र-संस्कारद्वारं तत्। तेन च प्रयोजनं नास्तीत्युक्तम्। तथाच, 'उत्तानं पात्रं कृत्वा'—इति श्राद्धार्थतामस्य ज्ञापयति। तस्मात् 'सक्तून् जुहोति'—इत्यादिवदिदमप्यदृष्टार्थं न द्रव्यार्थम्। तस्मात्,—नैवं विज्ञायते,—न्युब्जकरणेन पात्रं संस्कुर्य्यात्,—इति। कथं तर्हि?। पात्रस्य न्युब्जकरणेनादृष्टं साधयेत्,—इति॥ ३॥

## एकः पिण्डः॥ ४॥

पूर्व्ववद्वर्णनीयम्। तदत्र, पिण्डस्यैकत्वविधानादन्नप्रकरस्य न निषेधः। न ह्यसौ पिण्डः,—इत्यवोचाम। यत्तु पठन्ति,—

"एकोद्दिष्टे पिण्डमेकं विकिरन्तु न कारयेत्"।

इति। तदस्मत्प्रयोगव्यतिरिक्तविषयम्। समुच्चयरसिकास्तत्त्वकारादयस्तु, वचनमेतदजानन्तएवात्र विकिरमभ्युपगच्छन्तीति स्थियते॥ ४॥

## नावाहनम्॥ ५॥

तत्र पितॄणामावाहनं यद्विहितं तदत्र न कर्त्तव्यम्। तत्रैव सांशयिकोऽर्थः। किं श्राद्धसंबन्ध्यावाहनमनेन निषिध्यते, पिण्डदानसंबन्धि वा?—इति। तत्र, "नावाहनं नाग्नौकरणमिति निषेधयोः पौर्व्वापर्य्यादग्नौकरणपूर्व्वकालीनं प्रधानसंबन्धि श्राद्धसूत्रोद्दिष्टं श्राद्धार्थावाहनमेव निषिध्यते, नत्वप्रधानसंबन्धि पिण्डपितृयज्ञवदित्यतिदेशप्राप्तं पिण्डार्थावाहनम्"—इति तत्त्वकारः। तदसङ्गतम्। 'एकः पिण्डः'—इत्यभिधाय, आवाहननिषेधात् पिण्डार्थावाहनस्यैवायं निषेधो न

प्रधानार्थस्य,—इति वैपरीत्यस्यापि वक्तुं शक्यत्वात्। प्रधानार्थस्यैव निषेधो नत्वङ्गार्थस्य,—इत्यस्यामपि कल्पनायां प्रमाणं न पश्यामः। उपदेशातिदेशकृतोऽपि विशेषो नास्ति। चोदकः खल्वत्र सर्व्वं प्रापयति। चोदकप्राप्तस्यैव निषेधो नतूपदिष्टस्य,—इति न किञ्चिदेतत्। अङ्गसंबन्धिन आवाहनस्य बाधेनोपपत्तौ संभवन्त्यां न पुनः प्रधान संबन्धिनोऽपि बाधः,—इत्यपि शक्यं कल्पयितुम्। अस्तु तर्हि पिण्डार्थावाहनस्यैवायं निषेधो न प्रधानार्थस्य,—इति। न,—इत्युच्यते। चोदक प्राप्तस्य खल्वयं निषेधो न वचनप्राप्तस्य। वचनस्त्वेतत् निषेधति। न च निषेधतो वचनस्य कश्चिदतिभारोऽस्ति। तस्मात् विनिगमनाविरहात् अग्नौकरणपूर्व्वकालीनस्यैव पिण्डार्थावाहनस्याप्ययं निषेधः,—इत्यास्थेयम्॥ ५॥

## नाग्नौकरणम् ॥ ६ ॥

अगुरचरार्थः। अत्राग्नौकरणनिषेधेन हुतशेषदानाभावात् हुतशेषं ब्राह्मणाय दत्त्वा पात्रमालभ्य जपेत् पृथिवीत्यादि सूत्रप्राप्तपात्रालम्भनस्यापि बाधः, आनन्तर्य्याभावादमृतत्वाभावादमृतमिति मन्त्रलिङ्गविरोधाच्च,—इति रघुनन्दनः। नैतदेवम्। कस्मात्?। 'गुणलोपे च मुख्यस्य'—इति सिद्धान्तविरोधात्। कर्म्मोहि पात्रालम्भं गुणभावेनोपकरोति। न च गुणानुरोधात् पदार्थएव न कर्त्तव्यो भवति। गुणोहि नाम स भवति, यः पदार्थस्योपकारे वर्त्तते नापकारे। स खल्वयं कर्म्मगुणभूतो न पदार्थं निवर्त्तयितुमुत्सहते। चोदकोहि पदार्थं प्रापयति। नासौ गुणस्यानुरोधादुत्स्रष्टव्यइति। यथा [illegible]

विहितासु धानासु यदि चोदकप्राप्तोऽवहन्तिः क्रियेत, धानात्वं विहन्येत;—सक्तवोहि तदा भवेयुः। यदि वा न क्रियेत, चोदकप्राप्तोगुणोऽस्य लुप्येत, शक्यते हि स कर्त्तुम्। तस्मात्, यथा धानात्वस्य न विघातः यथा च चोदकप्राप्तस्य न लोपः, तथा क्रियते,—पूर्व्वं हन्तिं कृत्वा पाकः क्रियते, ततोहि धानाभवन्ति। एवं धानात्वं न विहनिष्यते चोदकस्यानुग्रहीष्यते,—इति। विपर्य्यासे हि क्रममात्रं न कृतं भवति, पदार्थस्तु न निवर्त्तते,—इति दशमाध्याये सिद्धान्तितम्। तद्वदत्राप्यवगन्तव्यम्। तथा चोक्तम्। "अर्थेन च विपर्य्यासे तादर्थ्यात्तत्त्वमेव स्यात्"—इति। अपिच। क्त्वा हि पूर्व्वकालतामाचष्टे, नत्वानन्तर्य्यम्,—इति शास्त्रतात्पर्य्यविदां समयः। तच्चैवं सति, कृतशेषदाने पात्रालम्भनपूर्व्वकालतां क्त्वाप्रत्ययोबोधयति, न पात्रालम्भे कृतशेषदानानन्तर्य्यम्। तदेवं कृतशेषदानएव पात्रालम्भनपूर्व्वकालता गुणोभवति, न तु पात्रालम्भेपि कृतशेषदानानन्तर्य्यम्। प्रमाणाभावात्। इतरथा, उत्तानं पात्रं कृत्वा दक्षिणा दातव्येति स्वयं वर्णितत्वात् संस्रवसमवनयनाभावेन न्युब्जकरणाभावस्याभ्युपगमात् दक्षिणाप्यच न स्यात्। दृश्यते च। तस्मादमीमांसकवचनमेतदित्युपेक्षणीयम्। 'आर्द्रारहिते बोधने मन्त्रान्तरस्यानुपदेशात् तद्युक्तमन्त्रः प्रणवयुक्तत्वेन प्रयुज्यते'—इति भवानेवाह। तत् किमिति मन्त्रलिङ्गविरोधात् बाधं वर्णयसि,—इति न खल्वधिगच्छामि। परमार्थतः पुनरत्र मन्त्रलिङ्गविरोधोनास्ति। अग्निसंस्कारार्थं खल्वयं अपोऽग्रे चेयमन्त्रवृद्धिः संस्कारार्था,—इत्यवोचाम। एवं खलु तत् स्तूयते,—इति नैष दृष्टमर्थं वदति। तस्मान्न किञ्चिदेतत्। यत्

प्रचेतोनाम्ना वचनं पठ्यते,—"नावाहनं नाग्नौकरणं न पात्रमालभ्य जपति"—इति। तत् तदुक्तप्रयोगविषयमस्मत्प्रयोगव्यतिरिक्तविषयं वा ॥ ६ ॥

## नात्र विश्वेदेवाः ॥ ७ ॥

एतदुत्तरार्थः।

"यस्मिन्नेव पुराणे वा विश्वेदेवा न लेभिरे।

आसुरं तद्भवेत् श्राद्धं वृषलं मन्त्रवर्ज्जितम्"।

इति वचनं बह्वृचविषयम्। तत्परिशिष्टोक्तत्वात्। महायशास्तु,—"असपिण्डीकृतैकोद्दिष्टविषयमेतत् सपिण्डीकृतानां विश्वेदेवाभावात्"—इति प्रलपति। तदसङ्गतम्। इदं हि पूर्व्वमुक्तम्।

"नवश्राद्धं दशाहानि नवमिश्रन्तु षड्ऋतून्।

अतः परं पुराणं स्यात् त्रिविधं परिकीर्त्तितम्"।

इति। तस्मात् बह्वृचानामपि नवसंज्ञके दशाहपर्य्यन्तक्रियमाणे पुराणसंज्ञके च सपिण्डनोत्तरं क्रियमाणे एकोद्दिष्टएव विश्वेदेवाभवन्ति, न नवमिश्रसंज्ञकेषु मासिकेषु,—इति। अस्माकन्तु न कुत्राप्येकोद्दिष्टे विश्वेदेवाः सन्तीति ॥ ७ ॥

## स्वदितमिति तृप्तिप्रश्नः ॥ ८ ॥

पार्व्वणे तृप्ताःस्थ,—इति तृप्तिप्रश्नः। सोऽत्र न भवति। किन्तत्र, स्वदितम्,—इति तृप्तिप्रश्नः कर्त्तव्यः। योग्यत्वात् सुस्वदितमित्युत्तरम् ॥०॥ ८ ॥०॥

## उपतिष्ठतामित्यक्षय्यस्थाने ॥ ९ ॥

अक्षय्यमस्तु,—इत्यक्षय्यशब्दस्थाने, उपतिष्ठताम्,—इति वक्तव्यम्। अस्तुपदमप्यर्थान्निवर्त्तते। "प्रेतायाक्षय्यमस्तु"—इति ब्रह्मपुराण वचनम्,—

"ततोवदेत् पुनर्धीमानक्षय्यमुपतिष्ठताम्"।

इति मार्कण्डेयपुराणवचनञ्च तत्तत्प्रयोगविषयम्। तदत्राक्षय्यस्थान-मात्रे, उपतिष्ठतामिति विधानात् "सर्व्वत्रार्घ्यादौ उपतिष्ठतामित्य-नेनोत्सर्गः"—इत्यसङ्गतैषा कल्पना। यत्त,—

"प्रेतान्तनामगोत्राभ्यामुत्सृजेदुपतिष्ठताम्"।

इति शातातपवचनम्। तत् तदुक्तप्रयोगविषयम्। बह्वृचानां प्रेत-श्राद्धे चोपतिष्ठतामित्यनेनोत्सर्गस्तत्परिशिष्टे लिखितः। एतदजा-मानएव शूलपाणिराश्वलायनीयानामपि हविस्त्यागवाक्ये स्वधापद-मिच्छति।

"प्रेतश्राद्धेषु सर्व्वेषु न स्वधा नाभिरम्यताम्"।

इत्याश्वलायनगृह्यपरिशिष्टान्तरेपि प्रेतश्राद्धेषु स्वधाप्रयोगोनिषिद्धः। अस्माकन्तु प्रेतश्राद्धे स्वधापदस्य निषेधाभावात् तेनैवोत्सर्गः। "स्वधाकारः पितॄणाम्"—इत्यत्र पितृपदं प्रमीतमात्रपरम्। इत-रथा प्रेतश्राद्धे त्यागप्रकारस्यानुपदेशादनध्यवसायः प्रसज्येत। छन्दो-गस्तोऽपि।

"न स्वधाञ्च प्रयुञ्जीत प्रेतपिण्डे दशाहिके"।

इत्यत्र दशाहिकग्रहणं कुर्व्वन्नन्यत्र स्वधाप्रयोगमनुजानाति। समुच्चय-

रचितोरघुनन्दनस्तु, शातातपवचनोक्त 'उपतिष्ठताम्'—इत्यनेनोत्सर्ग-प्रसङ्गादिभ्यत् एकोद्दिष्टप्रकरणे तद्वचनस्य 'उपतिष्ठतामिति'—इति प्रतीकमपह्नुवानः, प्रेतश्राद्धे संबन्धोल्लेखाभावसाधकरूपेण, 'प्रेतास्य-नामगोत्राभ्यामुत्सृजेत्'—इति पूर्व्वप्रतीकमात्रं लिलेख। सोऽयमेकस्यैव वचनस्य स्वाभिमतमंशं प्रमाणयति, स्वानभिमतञ्चांशमपह्नुते,—इति किमत्र ब्रूमः॥ ९॥

## अभिरम्यतामिति विसर्गः॥ १०॥

वाजे वाजे,—इति मन्त्रेण पार्व्वणे विसर्जनमुक्तम्। अत्र तु, 'अभि-रम्यताम्'—इत्यनेन तत् कर्त्तव्यम्। योग्यत्वात् 'अभिरतोऽस्मि'—इति, 'अभिरताः स्म'—इति वा प्रतिवचनं द्रष्टव्यम्। यत्तु,—

"प्रेतश्राद्धेषु सर्व्वेषु न स्वधा नाभिरम्यताम्।
स्वस्त्यस्तु विसृजेदेवं सकृत् प्रणववर्जितम्"।

इत्याश्वलायनगृह्यपरिशिष्टवचनात् 'अभिरम्यताम्'—इति विसर्गः प्रत्या-ब्दिकैकोद्दिष्टविषयः। प्रेतैकोद्दिष्टे तु 'स्वस्त्यस्तु'—इत्यनेनैव विसर्गः,—इति श्रीदत्तादिभिर्वर्णितम्। तदसङ्गतम्। आश्वलायनगृह्यपरि-शिष्टस्य बह्वृचपरतयाऽस्मत्प्रयोगपरत्वाभावात्। अस्मत्सूत्रकारेण विशेषस्यानुपदेशाच्च। तदेवं सूचितविशेषव्यतिरेकेणान्यत् सर्व्वं पार्व्वण-वदेव कर्त्तव्यं भवति। चोदकोऽपि तत् प्रापयति। यत्तु अत्रैतोनाम्ना वचनं पठन्ति। "नाशिषः प्रति गृह्णीयात्"—इति। तदपि तदुक्तप्रयोगविषयम्। इतरथा प्रत्याब्दिकैकोद्दिष्टेऽपि तत्प्रसङ्गात्। दृश्यते च। तस्माद् यथोक्तमेवास्तु। "स्वधोच्यतामिति वाचं विसृजेत्"—

इत्याश्वलायनवचनमपि बह्वृचमात्रविषयम्। तदत्रैकोद्दिष्टे मन्त्रलोपापोहेषु अभिलापवाक्ये च बहु वक्तव्यमस्ति। ग्रन्थगौरवभयादुपारम्यते ॥ १० ॥

प्रकरणान्तरमाह,—

## अथ सपिण्डीकरणम् ॥ ११ ॥

वर्त्तिष्यते,—इति सूत्रशेषः। समानः पिण्डोयस्य, असौ सपिण्डः प्राप्तपितृलोकोभण्यते। तस्य हि पिण्डः समानः साधारणोभवति। कथम्?। सपिण्डीकरणात् परतः खल्वयं पार्व्वणभागी भवति। तत्र च पितामहादिभिः सममस्य पिण्डदानं भवति। तदानीञ्च यदस्मै-दास्यते मात्रादीनामपि तत्र भाग इति। सोयं पिण्डो न परमस्यैव। समानोहि स मात्रादीनां भवति। तेषामपि तत्र भोगस्याविशेषात्। पूर्व्वञ्च सपिण्डकरणात् न पितामहादिभिः समानोऽस्य पिण्डोभवति, न वा तत्रान्यस्य भोगइति। तस्मादसपिण्डस्य सपिण्डस्य करणं सपिण्डीकरणमिति कर्म्मणोनामधेयम्।

पार्व्वणमेकोद्दिष्टञ्चाभिधायैतस्याभिधानात् पार्व्वणैकोद्दिष्टाभ्यामेतद्विक्रियते,—इत्यवगच्छामः। स्मरन्ति च।

"श्राद्धद्वयमुपक्रम्य कुर्व्वीत सहपिण्डताम्।
तयोः पार्व्वणवत् पूर्व्वमेकोद्दिष्टमथापरम्"।

इति ॥ ११ ॥

अथास्य कालमाह,—

## पूर्णे संवत्सरे षण्मासे त्रिपक्षे वा ॥ १२ ॥

पूर्णे संवत्सरे मृततिथावेव। कथं ज्ञायते?।

"पितुः सपिण्डीकरणं वार्षिके मृतवासरे"।

इत्युशनसोक्तेः। यच,—

"ततः सपिण्डीकरणं वत्सरात् परतः स्थितम्"।

इति भविष्यपुराणवचनम्। तत्, यस्यां तिथौ मृतस्तां तिथिमादाय वर्षगणनया बोध्यम्। आचार्य्यस्तु प्रायणतिथिमवधिंकृत्वा तत्परवर्त्तिनीं तिथिमादाय वर्षगणनामभिप्रयन् 'पूर्णसंवत्सरे'—इत्याह। एतदभिप्रायेणैव,—

"पितुः पितृत्वप्राप्त्यर्थं पूर्णे संवत्सरे सुतः।

मृताहात् परतः कुर्य्यात् सपिण्डीकरणं बुधः।

इति वचनमुपपद्यते। कथं नाम?। मृताहात् मरणदिनात् परतः-परां तिथिमादाय वर्षगणनया संवत्सरे पूर्णे सपिण्डीकरणम्—इति। शूलपाणिस्त्वमुमर्थमबुद्ध्वा विरोधभिया वचनमेतदनाकरमाह।

षण्मासे,—इत्यपरः कालः एकवचनसंयोगादेकएवायं कालः। पूरणप्रत्ययश्चात्र लुप्तवत् द्रष्टव्यः। तेन षष्ठमासे इत्यर्थः सिद्धो भवति। अत्रापि मृततिथिरेवकालोबोद्धव्यः। त्रिपक्षे,—इत्यन्यः कालः। अयमपिकालोमृततिथिरेवावधार्य्यते। किं कारणम्?। पूर्णसंवत्सरादिसाहचर्य्यादयमपि चान्द्रएवावगम्यते। गणना चास्य तद्वदेव प्रायणतिथिमवधिं कृत्वा तत्परवर्त्तिनीं तिथिमारभ्य,—इति। वाशब्दोविकल्पार्थः। अपच,—

"वृद्धिश्राद्धविहीनस्तु प्रेतश्राद्धानि यश्चरेत् ।

सश्राद्धी नरके घोरे पितृभिः सह मज्जति" ।

इत्युशनोवचनात् संवत्सरमध्ये वृद्धिसम्भावनायामेव षण्मासत्रिपक्षकल्पाविति केचित् । नैतदस्माकं भवति । कस्मात्? । यस्मादत्र भवान् सूत्रकारः 'पूर्णे संवत्सरे षण्मासे त्रिपक्षे वा'—इति सूत्रयित्वा, 'यदहर्वा वृद्धिरापद्येत'—इति विकल्पेन पृथगेव सूत्रयति, ततोऽवगच्छामः—विनापि वृद्धिसम्भावनामेतौ कल्पौ भवतः,—इति । सोऽयं तुल्यवद्विकल्पः,—पूर्णे संवत्सरे षण्मासे त्रिपक्षे वा कुर्य्यात्, यदहर्वृद्धिरापद्येत तदहर्वा कुर्य्यादिति । कुतः? । उभयत्रैव वाशब्दोपादानात् ॥ १२ ॥

## यदहर्व्वा वृद्धिरापद्येत ॥ १३ ॥

वृद्धिरभ्युदयो मङ्गलमित्यनर्थान्तरम् । तच्च पूर्त्तादन्यदभिधीयते । कथं ज्ञायते? । "वृद्धिपूर्त्तेषु युग्मानाशयेत्"—इति गृह्यसूत्रे तत्रैव वृद्धिपदप्रयोगात् । वृद्धिः पुरुषसंस्कारः,—इति भट्टनारायणः । वृद्धिराम्नायमानं—पुंसवनादिकं कर्म्म इत्यपरे । यदहर्यस्मिन्नहनि वृद्धिरापद्येत;—'गत्यर्थाः प्राप्त्यर्थाः ज्ञानार्थाः',—इत्युक्तेः, आ—सम्यक्; अवश्यकर्त्तव्यतया उत्कटकोटिकतया च प्राप्येत ज्ञायेत—यस्मिन्नहनि आवश्यकवृद्धिप्राप्तिरुत्कटकोटिकतया सम्भाव्यते इत्यर्थः । सम्भावनायां लिङ् । 'तदहस्सत्वार्य्युदकपात्राणि',—इति वक्ष्यमाणेन, तदहः सपिण्डीकरणमिति गतेन वा सम्बन्धः । तेन यस्मिन् दिने आवश्यकवृद्धेरुत्कटकोटिका सम्भावना भवति, तद्दिने सपिण्डी-

करणम्। न तु तत्पूर्व्वदिने। तस्याप्रत्यक्षत्वात्। निमित्तनैमित्ति-कयोः समानदिनत्वस्यौत्सर्गिकत्वाच्च। वृद्धिर्हि निमित्तमपकर्षस्य। तथा च मदनरत्ने पुलस्त्यः।

"निरग्निकः सपिण्डत्वं पितुर्मातुश्च धर्म्मतः।

पूर्णे संवत्सरे कुर्य्याद्वृद्धिर्व्वा यदहर्भवेत्।

इति यदहर्वृद्धिर्भवेत् तदहः सपिण्डीकरणमभिधत्ते, न तत्पूर्व्वदिने। अत्रापि, भवेत्,—इति सम्भावनायां लिङ्। तथा चतुर्विंशतिमते।

"सपिण्डीकरणं चाब्दे संपूर्णेऽभ्युदयेऽपि वा"।

इति। तदेतेषु वचनेषु वृद्ध्यव्यवहितपूर्व्वदिनस्य कुत्राप्यनभिधानात् वृद्धिदिनपूर्व्वदिने सपिण्डीकरणमिति व्यामोहएव। एवञ्च, अपकर्षात् परतएव नान्दीमुखश्राद्धं करणीयं भवति।

आपद्येत,—इति कुर्व्वन् वृद्धेरुत्कटकोटिकसम्भावनैवापकर्षनिमि-त्तमिति दर्शयति। तेन, तादृशसम्भावनया सपिण्डीकरणे कृते पश्चात् विघ्नेन वृद्धेरभावेऽपि न सपिण्डीकरणमावर्त्तनीयम्। वृद्धिस-म्भावनया करणेन यथाकालकृतत्वात्। कृतेऽपि त्वपकर्षे प्रथमवत्सरे काम्यकर्म्मणां निषेधात् तेषामपकर्षनिमित्तत्वं नास्ति। तथा च स्मृति-सागरे वृहस्पतिः।

"प्रत्यवायो भवेद् यस्मिन्नकृते वृद्धिकर्म्मणि।

तन्निमित्तं समाकृष्य पित्रोः कुर्य्यात् सपिण्डनम्।

प्रत्यवायाश्रया वृद्धिः पुनश्च निपतेद् यदि।

प्रेताब्दे सापि कर्त्तव्या नान्यत् कर्म्म कदाचन।

व्रतोद्वाहप्रतिष्ठादि यज्ञदानव्रतानि च।

न कुर्य्यात् सावकाशानि श्राद्धेऽपि सपिण्डने।
सपिण्डीकरणं यत्र समाकृष्टं समासिकम्।
तत्राप्यब्दं न कुर्व्वीत यज्ञोद्वाहव्रतानि च"।

इति। यच्च,—"अनावश्यकस्येष्टापूर्त्तादेरपकर्षनिमित्तता नास्ति, आवश्यकनिमित्तेन त्वपकर्षे अनावश्यकमिष्टापूर्त्तादिकमपि वत्सरमध्ये कर्त्तुमर्हति"—इति रघुनन्दनेनोक्तम्। तदुक्तवचनानवलोकनेन।

"सहपिण्डक्रियां कृत्वा कुर्य्यादभ्युदयन्ततः।
तथैव काम्यं यत् कर्म्म प्रथमाद्वत्सरादृते"।

इति तद्धृतलघुहारीतवचनविरोधश्च तस्यावर्ज्जणीयः स्यात्। एवमपकर्षात् परमपि तदब्दे व्रतोद्वाहनिषेधात्तदर्थमप्यपकर्षो न कर्त्तव्यः। अनन्यगतेर्वचनात्। तस्मात् समयाशुद्धिवत् तदब्दे नैतयोः करणमिति। न च 'नकुर्य्यात् सावकाशानि'—इत्यभिधानात् निरवकाशव्रतोद्वाहार्थमपकर्षो भवत्विति वाच्यम्। तत्परवचनेन व्रतोद्वाहयोर्निरवकाशयोरपि निषेधावगतेः। अन्यथा तदनर्थकं स्यात्। परमार्थतस्तु यज्ञदानव्रतानां विशेषणतयैव सावकाशत्वस्योपादानात् व्रतोद्वाहप्रतिष्ठादेर्निरवकाशस्यापि निषेधः सिध्यति। पुनरुपादानन्त्वाग्नेयद्विरुक्तिवत् स्तुत्यर्थं भविष्यति। 'व्रतोद्वाहप्रतिष्ठादि'—इत्यत्र व्रतपदमुपनयनव्रताभिप्रायम्। उद्वाहसाहचर्य्यात्। 'यज्ञदान व्रतानि च'—इत्यत्र व्रतपदन्त्वनन्तादिव्रतपरम्। यज्ञदानसाहचर्य्यात्।

यच्च,—

"व्रतबन्धोत्सवादीनि व्रतस्योद्यापनानि च।
विवाहादि भवेन्नैव मृते च गृहमेधिनि।

भिक्षुर्भिक्षां न गृह्णाति हन्तकारो न गृह्यते।
नित्यं नैमित्तिकं लुप्येत् यावत् पिण्डं न मेलितम्।
कर्मलोपात् प्रत्यवायी भवेत्तस्मात् सपिण्डनम्।
निरग्निकः साग्निकोवा द्वादशाहे समाचरेत्”।

इति गारुडेऽभिहितम्। तत्र, व्रतबन्धादेः सर्व्वथैव निषेधः, अन्यस्य तु सपिण्डनात् पूर्वमिति बोद्धव्यम्। अतएव व्रतबन्धादिनिषेधे ‘नैव भवेत्’—इति ‘गृहमेधिनि मृते’—इति चाभिहितम्। कः पुनरभिप्रायः?। गृहमेधिमरणनिमित्तएवामीषां सर्वथा निषेधः, न पुनः सपिण्डनाकरणनिमित्तः,—इति। ‘भिक्षुर्भिक्षां न गृह्णाति’—इत्यादौ च, ‘यावत् पिण्डं न मेलितम्’—इत्युक्तम्। सपिण्डनात् परतः करणममीषां यथा स्यात्,—इति। न चेदेवम्, काम्यानामप्युत्सवादीनामविशेषात् सपिण्डनात् परतः करणं प्रसज्येत। तच्चानिष्टम्। पूर्वोक्तलघुहारीतवचनविरोधात्। तस्मात् यथोक्तएवार्थः। अथात्रापरिस्पष्टन् सपिण्डनात् परतो व्रतबन्धादीनामपि करणस्य प्रतीतिं मन्यसे, तथापि सैव प्रतीतिर्वाधितव्या भवति। किं कारणम्?। आनुमानिकी हि तादृशी प्रतीतिः, प्रत्यक्षस्तु निषेधः। न खल्वनुमानं प्रत्यक्षविरुद्धमादर्त्तव्यं भवति। स्मृतिपुराणयोश्च विरोधे दुर्बलत्वं पुराणस्यावोचाम। तस्मात् व्रतोद्वाहव्यतिरिक्तसंस्कारार्थमपकर्षः कर्त्तव्यइति सिद्धम्। मृतमातृकस्य पुत्रस्य चूड़ान्तसंस्कारं कुर्वता च पित्रा तदर्थं पुत्रमातुः सपिण्डनं नापकर्ष्टव्यम्। तथा च स्मृतिसागरे हृद्धवशिष्ठः।

“मृतमातृकपुत्रस्य पिता संस्कारमाचरेत्।
अपकृष्य न कर्त्तव्यं पुत्रमातुः सपिण्डनम्”।

इति ।

"जातकर्म्मादि चूड़ान्तं किन्तु कुर्वीत नाधिकम् ।
महागुरुनिपाते तु यस्मात्तत्र सुतोऽशुचिः" ।

इति च तत्रैव वचनान्तरम् । न च जातकर्म्मादिचूड़ान्तसंस्कारकलापोऽपि कथं कर्त्तव्यः, तत्रापि सुतस्याशुचित्वाविशेषादितिवाच्यम् ।

"शिशोः पञ्चाब्दपर्य्यन्तं नाशौचं नैव पातकम् ।
न चास्य राजदण्डोऽस्ति प्रायश्चित्तं न विद्यते" ।

इति वृद्धमनुवचनेन तदानीं तस्याशौचाभावात् । यच्च स्मरन्ति,—

"जाते पुत्रे तु पुत्रस्य माता यदि विनश्यति ।
तन्मातरमसंस्कृत्य न संस्कुर्य्यात् पिता सुतम् ।
न स्यात् यद्यपि तन्मातुर्वृद्धिश्राद्धे प्रवेशनम् ।
तथाप्यवश्यं संस्कार्य्या महागुर्व्वी हि सा शिशोः" ।

इति । तन्निर्मूलमिति स्मृतिसागरः । तस्य समूलत्वे तु विधिप्रतिषेधसन्निपातादिकल्पएव मन्तव्यः । मृतपितृकस्य पुनरेवंविधस्य चूड़ान्तसंस्कारार्थमपि पितुः सपिण्डीकरणमपकर्षव्यम् । कुतः ? ।

"स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्म्मसु ।
पिण्डेनोद्वहनात्तेषां तस्याभावे तु तत्क्रमात्" ।

इति छन्दोगपरिशिष्टवचनेन तस्य तदानीं नान्दीमुखश्राद्धार्हत्वात् । अन्तरेण च सपिण्डीकरणं तदयोगात् । तथा च स्मृतिसागरे गर्गः ।

"वृद्धौ नान्दीमुखश्राद्धे प्रवेशो यस्य विद्यते ।
तस्यैवाहृत्य कुर्व्वीत मासिकञ्च सपिण्डनम्" ।

इति । तदेवमस्माकं चत्वारः सपिण्डीकरणकालाः—पूर्णः संवत्सरः,

षण्मासस्त्रिपक्षोऽर्द्धद्विमश्चेति। ते खल्विमे कालाः साग्निभिरग्नि-साधारणा भवन्ति। वाक्यादिविशेषानवगमात्।

अत्र च, सपिण्डीकरणस्यापकर्षविधानादेव तत्पूर्व्वमासिकानाम-प्यपकर्षः सिध्यति। अग्निषोमीये पशौ प्रयाजस्यापकर्षविधानात् प्रयाजात्मककर्म्मकलापस्यापकर्षः,—इति यथा। तथाचोक्तम्। "तदादि वाऽभिसंबन्धात्तदन्तमपकर्षे स्यात्"—इति।

तथा च,—

"सपिण्डीकरणं यत्र समाकृष्टं समासिकम्"।

इति स्मरन्ति। तथा गर्गः।

"तथैवाकृष्य कुर्व्वीत मासिकञ्च सपिण्डनम्"।

इति। तथा चतुर्वर्गचिन्तामणौ शाट्यायनिः।

"प्रेतश्राद्धानि शिष्टानि सपिण्डीकरणं तथा।

अपकृष्यापि कुर्व्वीत कर्त्तुं नान्दीमुखं द्विजः"।

इति मासिकानां सपिण्डीकरणस्य चापकर्षमुपदिशति। विज्ञानेश्वर-स्त्वेतदविज्ञाय, मासिकानि सपिण्डनादूर्द्ध्वं स्वकालएव कार्य्याणि, अपकर्षस्त्वनुकल्पः,—इत्याह। निषेधमप्याह गोभिलपरिशिष्टम्।

"श्राद्धानि षोड़शादत्त्वा नैव कुर्य्यात् सपिण्डनम्"।

इति। गोभिलस्यैतदिति मदनपारिजातः। तथा लौगाक्षिः।

"श्राद्धानि षोड़शापाद्य विदधीत सपिण्डनम्"।

इति। आभ्यां यत् षोड़शश्राद्धेभ्यः परतः सपिण्डीकरणमुक्तं, तत्—

"द्वादशाहे त्रिपक्षे च षण्मासे मासिकाब्दिके।

श्राद्धानि षोड़शैतानि संस्मृतानि मनीषिभिः"।

इति व्यासाद्युक्तकल्पे बोद्धव्यम्। तत्रैव कल्पे सपिण्डीकरणस्य तत्रानन्त-र्भावात्।

"द्वादशप्रतिमास्यानि आद्यं षाण्मासिके तथा।
सपिण्डीकरणञ्चैव इत्येतत् श्राद्धषोड़शम्"।

इति छन्दोगपरिशिष्टोक्ते तु कल्पे षोड़शश्राद्धेष्वेव सपिण्डीकरणमन्त-र्भवति। पूर्ब्बकल्पे, द्वादशाहे क्रियमाणमूनमासिकमिति द्रष्टव्यम्। तथा च गोभिलपरिशिष्टम्।

"मरणात् द्वादशाहे स्यान्मास्यूने वोनमासिकम्"।

इति। गोभिलस्यैतदितिमदनपारिजातः। तदस्माकं द्वावप्येतौ कल्पौ भवतः। द्वयोरेवास्मत्परिशिष्टानुमतत्वात्।

यदा त्वपकृष्य षोड़शश्राद्धानि सपिण्डीकरणञ्च करोति, तदा सपिण्डीकरणात् परं पुनरपि षोड़शश्राद्धानां यथाकालमनुष्ठानं कर्त्तव्यं प्रेतशब्दोल्लेखस्तु तत्र न करणीयः। तदाह कात्यायनः।

"द्वादशाहेऽथ सर्व्वाणि संक्षेपेण समापयेत्।
तान्येव तु पुनः कुर्य्यात् प्रेतशब्दं न कारयेत्"।

इति। प्रेतशब्दकरणनिषेधात् द्वादशाहसपिण्डीकरणात् परं तदानी-मेव प्रेतत्वनिवृत्तिरवगम्यते। कालमाधवीये गोभिलपरिशिष्टम्।

"यस्य संवत्सरादर्व्वाक् विहिता सुसपिण्डता।
विधिवत्तानि कुर्व्वीत पुनः श्राद्धानि षोड़श"।

इति। गोभिलस्यैतदिति माधवाचार्य्यः। तत्रैव गालवः।

"अर्व्वाक् संवत्सराद् यस्य सपिण्डीकरणं कृतम्।
षोड़शानां द्विरावृत्तिं कुर्य्यादित्याह गौतमः"।

इति । षोड़शानां द्विरावृत्तिस्त्वेकादशाहसपिण्डनपक्षे । तत्रोनमासिकस्य कालसत्वात् । अन्ये पक्षे तु यथासम्भवं द्रष्टव्यम् । तथा च कार्ष्णाजिनिः ।

"अर्व्वागब्दाद्यत्र यत्र सपिण्डीकरणं भवेत् ।
तदूर्द्ध्वं मासिकानां स्याद्यथाकालमनुष्ठितिः" ।

इति । मदनरत्ने अङ्गिराः ।

"यस्य संवत्सरादर्व्वाक् सपिण्डीकरणं भवेत् ।
मासिकञ्चोदकुम्भञ्च देयं तस्यापि वत्सरम्" ।

इति । पैठिनसिः ।

"सपिण्डीकरणादर्व्वाक् कुर्व्वन् श्राद्धानि षोड़श ।
एकोद्दिष्टविधानेन कुर्य्यात् सर्व्वाणि तानि तु ।
सपिण्डीकरणादूर्द्ध्वं यदा कुर्य्यात्तदा पुनः ।
प्रत्यब्दं योयथा कुर्य्यात्तथा कुर्य्यात् स तान्यपि" ।

इति । तदेवं व्यासाद्युक्तकल्पेऽपकर्षपक्षे यथासम्भवं षोड़शश्राद्धानां द्विरावृत्तिर्नियता । प्रत्याब्दिकवच्चामीषां पुनः करणम् । छन्दोगपरिशिष्टोक्ते तु कल्पे मासिकानां पुनरनुष्ठानं न नियतम् । एकोद्दिष्टविधानेन चैषां पुनरनुष्ठानं भवति न प्रत्याब्दिकवत् । तथा च छन्दोगपरिशिष्टं कात्यायनः ।

"सपिण्डीकरणादूर्द्ध्वं न दद्यात् प्रतिमासिकम् ।
एकोद्दिष्टविधानेन दद्यादित्याह शौनकः" ।

इति । 'नदद्यात् प्रतिमासिकमेकोद्दिष्टविधानेनेति संबन्धाद्दद्यादित्याह शौनक इत्यनेनैकोद्दिष्टेनैवापकृष्टसपिण्डीकरणादूर्द्ध्वं विकल्पो दर्शितः'

—इति शूलपाणिः। यत्तु स च विकल्पोऽप्राप्तप्रेतभावविषयइति शूलपाणिः; यच्च,—अप्राप्तप्रेतभावविषयवद्भ्रमपतितमासिकविषयोपीति मन्तव्यमिति रघुनन्दनश्चाह। तदुभयमपि प्रमाणाभावादुपेक्षणीयम्। वृद्धिनिमित्तेन त्वपकर्षे वृद्धेरर्व्वागेव पुनरपकृष्य षोड़शश्राद्धानां पुनरनुष्ठानम्। यथा कार्ष्णाजिनिः।

"सपिण्डीकरणादर्व्वागपकृष्य कृतान्यपि।
पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात्"।

इति। निषेधमाह कात्यायनः।

"निर्वर्त्त्य वृद्धितन्त्रन्तु मासिकानि न तन्त्रयेत्।
अयातयामं मरणं न भवेत् पुनरस्य तु"।

इति ॥ १३ ॥

अथेदानीमितिकर्त्तव्यतायां योविशेषः, सोऽभिधीयते,—

## तदहश्चत्वार्य्युदकपात्राणि सतिलगन्धोदकानि पूरयित्वा ॥ १४ ॥

तदहस्तस्मिन्नहनि, तिलगन्धोदकसहितानि चत्वार्य्यर्घ्यपात्राणि पूरयित्वा तथा च भविष्यपुराणम्।

"गन्धोदकतिलैर्युक्तं कुर्य्यात् पात्रचतुष्टयम्।
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत्"।

इति। गन्धोऽत्र वैकृतोविशेषः। तद्विशेषात् प्राकृतस्य तिलोदकस्य निवृत्तिं मा प्रशाङ्क्षीदिति 'सतिलगन्धोदकानि,'—इत्याह। पवित्रन्तु न निवर्त्तते। कथं कृत्वा?। प्राकृतानि पात्राण्यनूद्य तत्र चतुष्ट्वं

सतिलगन्धोदकत्वञ्च वैकृतोविशेषदृश्यते। पात्राणि च तत्र पवित्रान्तर्हितानि भवन्ति। तस्मात् पात्रस्य विशेषः पवित्रान्तर्हितत्वमत्रापि भवत्येव। नचेदेवम्, यज्ञियवृक्षचमसत्वादिकमपि तद्विशेषोऽत्र न स्यात्। दृश्यते च। तस्माद्यथोक्तमेवास्तु।

तदत्र, पात्राणां चतुष्ट्वविधानात् मातामहपक्षोऽत्र न भवति। तथा च छन्दोगपरिशिष्टम्।

"कर्षूसमन्वितं त्यक्त्वा तथाऽऽद्यं श्राद्धषोड़शम्।

प्रत्याब्दिकञ्च, शेषेषु पिण्डाः स्युः षड़िति स्थितिः"।

इति। दैवपक्षस्त्वत्रापि भवत्येव। प्रकृतस्य दैवपूर्व्वत्वस्य वाधायोगात्। तस्यारत्नभूतत्वाच्च। चतुष्टं खल्वर्घ्यपात्राणां प्रेतपितृपक्षाभिप्रायेण वक्ष्यति। तथा च शातातपः।

"सपिण्डीकरणश्राद्धं दैवपूर्व्वं नियोजयेत्।

पितॄनेवाशयेत्तत्र पुनः प्रेतं न निर्द्दिशेत्"।

इति॥ १४॥

चत्वारि पात्राणि,—इत्युक्तम्। तदिदानीं विशेषेणाभिधत्ते,—

## त्रीणि पितृणामेकं प्रेतस्य॥ १५॥

त्रीणि पात्राणि पितॄणां शिष्टमेकं पात्रं प्रेतस्य, 'पूरयित्वा'—इति गतेन सम्बन्धः। तदत्र, पाठक्रमात् प्रथमं पितॄणां पार्व्वणमनुष्ठेयं ततः प्रेतस्यैकोद्दिष्टम्,—इति। तथाचोक्तम्। "क्रमेण वा नियम्येत क्रमेकत्वे तद्गुणत्वात्"—इति॥ १५॥

प्रेतपात्रं पितृपात्रेष्वासिञ्चति,—ये समानाः समनसः पितरोयमराज्ये तेषां लोकः स्वधा नमो यज्ञो।देवेषु कल्पतां। ये समानाः समनसोजीवा जीवेषु मामकास्तेषां श्रीर्मयि कल्पतामस्मिन् लोके शतं समाइति॥ १६॥

प्रेतपात्रं प्रेतपात्रस्थमुदकं पितृपात्रेषु आसिञ्चति—ये समानाइति मन्त्रद्वयेन। अत्र किञ्चिद्वक्तव्यमस्ति। पाठक्रमानुरोधात् पदार्थानुसमयेन पितॄणामर्घ्यमुत्सृज्य प्रेतस्यार्घ्यमुत्स्रष्टव्यम्। ततः पितॄणामर्घ्यपात्रस्थानि पवित्राणि पितृब्राह्मणेभ्यः प्रतिपाद्य, प्रेतार्घ्यपात्रस्थमपि पवित्रं तद्ब्राह्मणाय प्रतिपादनीयम्। अथ पित्रर्घ्यपात्रस्थमुदकं पितृब्राह्मणेभ्यः प्रतिपाद्य, प्रेतार्घ्यपात्रस्थमुदकं त्रिधा विभज्य तेषामेकैकं भागं ये समाना इत्यादिमन्त्रद्वयेन प्रत्येकं पितृपात्रेषु सिञ्चेत्। कुतः?। "आगन्तुकानामन्तेऽभिनिवेशः"—इति न्यायात्। आसेचनञ्चोपदिशन् प्रेतार्घ्यपात्रस्थं पवित्रं तद्ब्राह्मणाय प्रतिपाद्य उदकमात्रस्य पितृपात्रेषु प्रक्षेपं ज्ञापयति। कथं कृत्वा?। उदकमात्रस्यैव खल्वासेचनं सम्भवति न पवित्रस्य। 'एकैकस्मिन्नप आसिञ्चति'—इति पूर्व्वत्राप्याप एवासेचनकर्म्मतया श्रूयन्ते। इदानीमप्यासेचने सूचिते आपएव हृदयमागच्छन्ति। तस्मादियमेवावधारणा,—प्रेतार्घ्यपात्रीयं पवित्रमात्रं तद्ब्राह्मणाय प्रतिपाद्य तदुदकं पितृपात्रेष्वासेक्तव्यम्, अथेदानीं चोदकप्राप्तं संस्रवसमवनयनादिकं करणीयम्,—इति। प्रेतपात्रस्थस्य तिलोदकस्य तु न भवति ब्राह्मणाय

प्रतिपादनम्। 'प्रेतपात्रं पितृपात्रेष्वासिञ्चति'—इति वचनेन तस्या-न्यथा प्रतिपादनोपदेशात्। सोऽयं वैकृतोविशेषोपदेशस्योदकप्राप्तिं प्रतिपत्तिं वाधते। तदत्र प्रत्यासेचनमन्त्रावावर्त्तेते। तौ हि गुणभा-वेनासेचनमुपकुर्व्वाते। गुणानाञ्च यावत् प्रधानमावृत्तिरित्यविवाद एव। आह। प्रेतपात्रपदं खल्वेतत् प्रेतपात्रस्थोदकपरमित्यत्र न विवादः। तत्सामान्यात् पितृपात्रपदेऽपि भवति तथा प्रतीतिः। भवति चेत्, न युज्यते विना कारणमुत्स्रष्टुम्। तस्मात् पितृपात्रा-णामुदकस्य प्रतिपादनात् प्रागेव तत्र प्रेतपात्रस्यासेचनमस्तु। नैतत् सम्यम्। किं कारणम्?। आनुमानिकं तावत् पात्रस्थमुदकं परि-चिकल्पयिषितम्। प्रत्यक्षन्तु पात्रमासेचनाधिकरणम्। पात्रपदं खल्वेतत् पात्रं वदति, न पात्रस्थमुदकम्। यदि तु तेन प्रयोजनं भवति, शक्नोति पात्रसम्बन्धं तत् लक्षयितुम्। आसेचनकर्म्मत्वं तावत् पात्रस्य नोपपद्यते-इति तत् सम्बन्धमुदकं—तेन लक्ष्यते। आसेचनाधिकारणत्वन्तु पितृपात्राणां न खल्वपि नोपपद्यते। येनैतदु-दकं लक्षयेत्। अगतिः खल्वेषा यासौ लक्षणा नाम। तस्मात् यथोक्त-मेवास्तु। तदस्य प्रेतपात्रस्थस्योदकस्य पात्रत्रयेष्वासेचनं विभागमन्तरे-णानुपपद्यमानं त्रिधा विभागमेव तस्याक्षिपति, न पुनश्चतुर्द्धा। त्रिधा विभागस्याक्षेपेणैवानुपपत्तिनिरासेनाधिककल्पनानुपपत्तेः। येयमनुपप-त्तिश्चतुर्धा विभागमाक्षिपति,—इति मन्यसे, आक्षिपत्यसौ त्रिधापि विभागम्। तत्रैवं सति, त्रिधा विभागमाक्षिप्य चरितार्थं शास्त्रं न पुनरधिकमाक्षेप्तुमर्हति। तदत्र विभागे, ये समाना इति मन्त्रद्वयं न संभूयते। कल्पितस्य मन्त्रसम्बन्धानुपपत्तेः। यत्तु शातातपवचनम्,—

"निरूप्य चतुरः पिण्डान् पिण्डदः प्रतिनामतः ।
ये समानाइति द्वाभ्यामाद्यन्तु त्रिभजेत् त्रिधा ।
एषएव विधिः पूर्व्वमर्घ्यपात्रचतुष्टये" ।

इति । तत्र विभजते—विभागपूर्व्वकं मिश्रणमर्थः । कथं ज्ञायते ?। यदयं विभजेदित्यभिधाय तमेव विधिमर्घ्यपात्रेष्वतिदिशति, ततः प्रतिपद्यामहे,—त्रिभागपूर्व्वकमिश्रणं तस्यार्थः,—इति । न हि विभागमात्रं करणीयं न मिश्रणमिति शक्यं वक्तुम्। तदुक्तप्रयोगविषयञ्चेदमित्यनुदाहरणम्। एवमसावपि त्रिधा विभागमाह न चतुर्धा। यत् पुनर्ब्रह्मपुराणवचनम्,—

"चतुर्भ्यश्चार्घ्यपात्रेभ्यएकं वामेन पाणिना।
गृहीत्वा दक्षिणेनैव पाणिना सतिलोदकम्।
संसृजतु त्वा पृथिवी ये समानाइति स्मरन्।
प्रेतविप्रस्य हस्ते तु चतुर्भागं जलं क्षिपेत्।
ततः पितामहादिभ्यस्तन्मन्त्रैश्च पृथक् पृथक्।
ये समानाइति द्वाभ्यां तज्जलन्तु समर्पयेत्।
अर्घ्यन्तेनैव विधिना प्रेतपात्राच्च पूर्व्ववत्।
तेभ्यश्चार्घ्यं निवेद्यैव पश्चाच्च स्वयमाचमेत्" ।

इति । तदपि तदुक्तप्रयोगविषयम्। न हि 'संसृजतु त्वा पृथिवी'-इत्ययमपि मन्त्रोऽस्माकं भवति। तस्मात् नैतदस्मत्प्रयोगविषयमित्यतिरोहितमेतत्। केचित् पुनः स्वशास्त्रमात्रात् कर्म्मक्रमं निर्णेतुमशक्नुवन्तोऽर्द्धजरतीयकुशलाः प्रयोगान्तरविषयस्य वचनस्यैकमंशमुपाददते, परस्यांशं शाखन्तरीयं वदन्ति। तदश्रद्धेयम्॥ १६॥

## एतेनैव पिण्डोव्याख्यातोव्याख्यातः ॥ १७ ॥

एतेनार्घ्यमिश्रणप्रकारेणैव पिण्डमिश्रणप्रकारोऽपि व्याख्यातोवेदितव्यः। एतदनेनोक्तं भवति। प्रेतपिण्डं त्रिधा विभज्य ये समाना इति मन्त्राभ्यां पितृपिण्डेषु मिश्रयेत्,—इति। मन्त्रावृत्तिरुक्ता। द्विर्वचनं प्रकरणसमाप्तिप्रज्ञापनार्थमादरार्थञ्च। तदत्र सपिण्डीकरणे बहु-वक्तव्यमस्ति। तत्सर्व्वं छन्दोगपरिशिष्टादौ ज्ञेयम्। ग्रन्थगौरवभयादु-पारम्यतेऽस्माभिः। एतत्सूत्रान्तरम्,—"अतऊर्द्धं संवत्सरे संवत्सरे प्रेतायान्नं दद्यात् यस्मिन्नहनि प्रेतः स्यात्"—इति सूत्रं रघुनन्दनः पठति। तदनाकरमित्युक्तम् ॥ १७ ॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारभट्टाचार्य्यस्य कृतौ श्राद्धकल्पभाष्ये तृतीया काण्डिका समाप्ता ॥

चतुर्थी काण्डिका ।

## अथाभ्युदयिके श्राद्धे ॥ १ ॥

अथेदानीमाभ्युदयिके श्राद्धे योविशेषः सोऽभिधीयते । अभ्युदयो मङ्गलं विवाहादिकमित्येतत् । यत्र यत् क्रियते श्राद्धं तदिदमाभ्युदयिकं श्राद्धमितिकर्म्मणोनामधेयमेतत् । तेनाभिलापे आभ्युदयिकश्राद्धमित्युल्लेख्यम् । तदिदं श्राद्धं मातृपूजा-वसोर्धाराऽऽयुष्यमन्त्रजपं कृत्वा करणीयम् । तथा च छन्दोगपरिशिष्टं कात्यायनः ।

"कर्म्मादिषु च सर्व्वेषु मातरः सगणाधिपाः ।
पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ।
प्रतिमासु च शुभ्रासु लिखिता वा पटादिषु ।
अपिवाऽक्षतपुञ्जेषु नैवेद्यैश्च पृथग्विधैः ।
कुड्यलग्नां वसोर्धारां सप्तवारान् घृतेन तु ।
कारयेत् पञ्चवारान् वा नातिनीचां न चोच्छ्रिताम् ।
आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः ।
षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत्" ।

इति । तदिदं श्राद्धं यत्र यत्र न भवति, तदपि तत्रैव द्रष्टव्यम् ॥ १ ॥

## युग्मानाशयेत् ॥ २ ॥

पितृणामप्यत्र युग्मान् ब्राह्मणानाशयेत् । ब्राह्मणानाञ्चापि कर्म्मणि

दैवे प्राङ्मुखत्वं पित्र्ये चोदङ्मुखत्वं पार्व्वणवदेव भवति। तत्रापवादक-वचनाभावात्। तथा च कात्यायनः।

"प्रातरामन्त्रितान् विप्रान् युग्मानुभयतस्तथा।
उपवेश्य, कुशान् दद्यादृजुनैव हि पाणिना"।

इति तथा—पार्व्वणवदेवोपवेशनं ब्राह्मणानामाह। कर्त्ता पुनरत्र प्राङ्मुखः स्यात्। कथं ज्ञायते?। तत्र पित्र्ये कर्म्मणि दक्षिणामुखत्वं दक्षिणायादिशः पित्र्यत्वादुपपन्नतमम्। इह तु,—

"सदा परिचरेद्भक्त्या पितॄनप्यत्र देववत्"।

इति कात्यायनेन पितॄणां देववत् परिचरणस्योपदेशात् अमाङ्गलिकं दक्षिणामुखत्वं न युक्तं वर्णयितुम्—इति। तथा च, पिण्डदाने प्राङ्मुखत्वस्य तेनाभिधानात् सर्व्वत्र तथात्वमवगच्छामः॥ २॥

## प्रदक्षिणमुपचारः॥ ३॥

प्रदक्षिणं यथा भवति, तथोपचारः कर्त्तव्यः। अस्माच्च विशेषाभिधानात् तत्राप्रादक्षिण्यमुपचारस्यावगम्यते। अन्येऽपि विशेषाः,—

"निपातो न हि सव्यस्य जानुनो विद्यते क्वचित्।
सदा परिचरेद्भक्त्या पितॄनप्यत्र देववत्"।

इत्येवमाद्याः कात्यायनोक्ताः छन्दोगपरिशिष्टादुपलब्धव्याः॥ ३॥

## ऋजवो दर्भाः॥ ४॥

दर्भा अत्र ऋजवो भवन्ति, न द्विगुणभुग्नाः॥ ४॥

## यवैस्तिलार्थः ॥ ५ ॥

तत्र तिलैर्योऽर्थः प्रयोजनं क्रियते, सोऽत्र यवैः कर्त्तव्यः । तेन 'तिलोसि,'—इति मन्त्रे, 'यवोसि,'—इत्यूहितव्यं भवति ॥ ५ ॥

## सम्पन्नमिति तृप्तिप्रश्नः ॥ ६ ॥

'तृप्ताः स्थ,'—इति तृप्तिप्रश्नस्थाने 'सम्पन्नम्'—इति वक्तव्यम् । ते च, 'सुसम्पन्नम्'—इति ब्रूयुः । तथा च कात्यायनः ।

"सम्पन्नमिति 'तृप्ताःस्थ' प्रश्नस्थाने विधीयते ।
सुसम्पन्नमिति प्रोक्ते शेषमन्नं निवेदयेत्" ।

इति । केचिदत्र,—

"मधु-मध्विति यस्तत्र त्रिर्जपोऽशितुमिच्छताम् ।
गायत्र्यनन्तरं सोऽत्र मधुमन्त्रविवर्ज्जितः" ।

इति च्छन्दोगपरिशिष्टे मधुमन्त्रजपनिषेधात् मधुनो वर्ज्जनमाहुः । तदसङ्गतम् । कस्मात् ? ।

वशिष्ठोक्तोविधिः कृत्स्नो द्रष्टव्योऽत्र निरामिषः" ।

इति च्छन्दोगपरिशिष्टे आमिषव्युदासेन वशिष्ठोक्तस्य कृत्स्नस्य विधेरतिदेशात् मधुनः प्राप्तेः । मधुमन्त्रजपनिषेधात् मधुनो निषेध,—इत्यसङ्गतैषा कल्पना । प्रमाणाभावात् । मधुमन्त्रजपनिषेधाच्च मधुनोऽस्तित्वावगतेः । इतरथा मधुनोऽभावादेव मन्त्रोपि तत्प्रकाशको निवर्त्स्यति किमित्यसौ निषिध्यते । ननु गुणस्य मन्त्रस्य वर्जनोपदेशादेव द्रव्यस्य वर्जनमिति नायमनर्थकोनिषेधः । नैतदस्ति । कुतः ? । "गुणलोपे च मुख्यस्य"—इति सिद्धान्तविरोधात् । अथ,

मा तावत् मन्त्रवर्जनोपदेशात् द्रव्यस्य वर्जनं बोधि, किन्तु मन्त्रवर्जनोपदेशात् द्रव्यवर्जनमनुमास्यामहे। एवं खल्वसौ निषेधोन्यायमूलोभविष्यति,—इति। तदपि नास्ति। मन्त्रवर्जनस्य न्यायमूलत्वोपपिपादयिषया तावत् द्रव्यवर्जनमनुमित्सति भवान्। तत्रैवं सति क्व ते लाघवम्?। तद्वरं सति द्रव्ये मन्त्रवर्जनं वाचनिकमिष्यताम्। अलं द्रव्यस्य वर्जनानुमानेन। यतोऽवश्यमेकस्य वाचनिकत्वं भवताऽप्यभ्युपगन्तव्यम्। एवं खलु सिद्धान्तोऽप्यनुगृहीष्यते। अनैकान्तिकञ्चैतत् लिङ्गं न खल्वपि द्रव्यस्य वर्जनं शक्नोत्यनुमापयितुम्। 'मधु'—इत्येतस्य विर्जपोपदेशोप्येवं सति न स्यात्। तस्मात् यथोक्तमेवास्तु ॥ ६ ॥

## दधिबदराक्षतमिश्राः पिण्डाः ॥ ७ ॥

दधिबदरे प्रसिद्धे। अक्षतोयवः। कुतः?। "अक्षतास्तु यवाः प्रोक्ताः" —इति स्मरणात्। तैर्मिश्राः पिण्डाभवन्ति। तथा च कात्यायनः।

"सर्व्वस्मादन्नमुद्धृत्य व्यञ्जनैरुपसिच्य च।
संयोज्य यवकर्कन्धूदधिभिः प्राङ्मुखस्ततः।
अवनेजनवत् पिण्डान दत्वा विल्वप्रमाणकान्।
तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेत्"।

इति। तदनेन शेषद्रव्यघटितपिण्डानां दधिबदराक्षतमिश्रत्वमुपगुणार्थविधानात् नाच श्राद्धभोजने दध्यादिकमवश्यं प्राप्नोति। यवचमसन्यायवैषम्यात्। राजन्यवैश्यकर्त्तृकज्योतिष्टोमे हि संस्कारस्य तदर्थत्वात् सोमविशेषवचनात् चमसैस्तुल्यकालत्वात् लिङ्गदर्शनाच्च फल-

चमसस्येज्याविकारत्वम्, इह तु न तद्वत् किञ्चित्कारणमस्ति दध्यादीनां ब्राह्मणभोजनेऽप्यवश्यं प्राप्तेः। राजन्यवैश्यकर्तृकज्योतिष्टोमे भक्षणं प्रतिपत्तिः, तत्र फलचमसविधानात् यागावशिष्टस्य च ऋत्विजां भक्ष्यत्वात् यागेऽपि फलचमसप्राप्तिरिति तु मीमांसानभिज्ञानां भ्रम एव। हविः—संस्कारार्थं खल्वेतद्भक्षणं न प्रतिपत्तिरित्यध्वरमीमांसायास्तृतीयेऽध्याये द्रष्टव्यम्। पिण्डदानन्तु,—

"प्रागग्रेष्वथ दर्भेषु आद्यमामन्त्र्य पूर्ववत्।
अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेति निस्तिलाः।
द्वितीयञ्च तृतीयञ्च मध्यदेशाग्रदेशयोः।
मातामहप्रभृतींस्तु एतेषामेव वामतः"।

इति कात्यायनोक्तप्रकारेणावनेनिज्य करणीयम्। 'एतेषामेव वामतः'—इत्यभिधानादावाहितानां पित्रादीनामेव वामतो न कर्त्तुरिति। तदनेन पितृपक्षास्तृतदर्भाणां दक्षिणतोमातामहपक्षदर्भास्तरणं कर्त्तव्यं भवति। एवं किल प्रदक्षिणोपचारत्वमुपपत्स्यते,—इति ॥ ७ ॥

## नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने ॥ ८ ॥

"उपतिष्ठतामित्यक्षय्यस्थाने"—इति वद्वर्णनीयम्। एवञ्च,—

"अक्षय्योदकदानञ्च अर्घ्यदानवदिष्यते।
षष्ठ्यैव नित्यं तत्कार्य्यं न चतुर्थ्या कदाचन"।

इति छन्दोगपरिशिष्टवचनात् षष्ठ्यन्तं पितुर्नामादिकमुल्लिख्य "नान्दीमुखाः पितरः प्रीयन्ताम्"—इत्युच्चार्य्य उदकं दद्यात्। एवं पितामहादिष्वपि। 'नान्दीमुखाः पितरः'—इत्यत्र, पितृपदस्य प्राप्तपितृ-

लोकपरतया न तत्र पितामहादिपदप्रयोगः। केचित्तु, षष्ठ्यैव नित्यं तत्कार्य्यम्-इति कात्यायनवचनं पठन्तोऽपि नान्दीमुखाः पितरः प्रीयन्ताम्'—इत्येतावन्मात्रेणाक्षय्योदकदानं इच्छन्ति। ये तु 'अक्षय्यमस्तु'—इत्यन्तं वाक्यमुच्चार्य्य 'नान्दीमुखाः पितरः प्रीयन्ताम्'—इति वदन्ति। ते खल्वेकोद्दिष्टेऽपि तथैव वाक्यमुल्लिख्य 'उपतिष्ठताम्'—इति किमिति न वदन्तीति प्रष्टव्याः। तुल्यं खल्वनयोः सूत्रणम्—'उपतिष्ठतामित्यक्षय्यस्थाने'—इति, 'नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने'—इति च। तस्मैतद्वाक्यं वैकल्पिकं मन्तव्यम्। कुतः ? । 'अक्षय्योदकदानञ्च'—इति च्छन्दोगपरिशिष्टवचनादत्रैव कर्म्मणि 'अक्षय्यमस्तु'—इत्यस्यापि प्राप्तेः ।

अत्र किञ्चिद्वक्तव्यमस्ति। तत्र तावत्, नान्दीमुखाः पितरः,—इति वचनात् नान्दीमुखानां पितॄणामत्र देवतात्वं गम्यते। तदेवं वैकृताद्विधेरनुमानात् प्राकृतानां केवलपित्रादीनां देवतात्वमत्र निवर्त्तते। यथा चातुर्मास्येषु साकमेधे तृतीये पर्व्वणि "अग्नयेऽनीकवते प्रातरष्टाकपालोमरुद्भ्यः सान्तपनेभ्योमध्यन्दिने चरुः मरुद्भ्यो गृहमेधिभ्यः सर्व्वासां दुग्धे सायमोदनम्"—इति प्रातर्मध्यन्दिने सायमित्यङ्कः कालेषु इष्टीनां समाम्नानात्—यथा देवदत्तः प्रातरपूपान् भक्षयति मध्यन्दिने विविधमन्नमश्नाति अपराह्णे मोदकान् खादति,—इत्येकस्मिन्नहनि,—इति गम्यते, तथाऽत्रापि गम्यते,—इत्येकस्मिन्नहनि इष्टीनामवगमात् सद्यस्कालता विकृतीनाममूषामिष्टीनामिति चोदकप्राप्तं द्वैयहकाल्यं वाध्यते,—इति पञ्चमेऽध्याये सिद्धान्तितम्, तद्वदत्रापि बोद्धव्यम्। तथाचोक्तम्। "अपि वा क्रमकालसंयुक्ता सद्यः

क्रियेत तत्र विधेरनुमानात् प्राकृतधर्म्मलोपः स्यात्"—इति। तस्मात् नान्दीमुखविशेषणविशिष्टानां पित्रादीनामत्र देवतात्वावगमात् षोड़-कप्राप्तं केवलानां पित्रादीनां देवतात्वं निवर्त्तते। तेनाभिलापे नान्दीमुख पितरित्यादिकं प्रयोज्यम्। मन्त्रेष्वपि, 'आवह नान्दीमुखान् पितॄन्'—इति 'एत नान्दीमुखाः पितरः'—इति चैवमादिकं यथासम्भवमूहनीयम्। न चागन्तुकानामन्तेऽभिनिवेशः,—इति न्यायात् पित्रादिनाम्नः परतोनान्दीमुखपदमुल्लेखनीयमिति वाच्यम्। प्राकृत-देवताबाधेनात्रामीषां देवतात्वेनागन्तुकत्वाभावात्। नान्दीमुखाः पितरः—इति सूत्रोपात्तक्रमस्यान्यथाकरणस्यानुचितत्वाच्च। ननु, अर्घ्योदकदाने स्वधावाचने च विशिष्य नान्दीमुखपदोपादानादितरत्र नान्दीमुखपदोल्लेखो नास्ति—इति गम्यते। अन्यथा द्वयोर्विशिष्योपा-दानमनर्थकं स्यात्। नैष दोषः। तस्यार्थवत्त्वोपपत्तेः। कथम्?। वैकृतः खल्वसौ विशेषोपदेशोऽर्घ्यस्थाने,—इति अत्र तावदेतत् वक्तव्यमेव। उच्यतां तर्ह्यत्रैव, स्वधावाचने च 'नान्दीमुखेभ्यः'—इत्यनर्थकं वचनम्; नन्वस्मादेव वचनात् नान्दीमुखानां पितॄणां देवतात्वमनुमास्यते। उच्यते। स्वधावाचने यद्येतत् न पुनरुच्येत, न तत्र नान्दी-मुखपदस्योल्लेखोभवेत्। किं कारणम्?। नान्दीमुखपदस्य खल्ववचने, "पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वधोच्यताम्"—इत्येतावन्मात्रं तत्रोच्येत। सोऽयं वैकृतोविशेषोपदेशः स्यात्। तत्कथं नान्दीमुखपदमधिकं तत्र प्रयोक्ष्यते। आनुमानिकं खल्वेतत् प्रयुज्यतम्! प्रत्यक्षोपदेशः। एतस्मात् कारणात् द्वयोर्विशिष्योपदेशोऽर्थवानेव भवति, न त्वनर्थकः।

अथापि स्यात्,—'आवह पितॄन्'—इति, 'एत पितरः'—इति चैव-मादिकमपि प्रत्यक्षमुपदिश्यते। कथं तत्रानुमानिकस्य नान्दीमुख-पदस्य प्रयोगः?। नायं दोषः। पार्व्वणे हि तत् प्रत्यक्षमुपदिश्यते, नत्वाभ्युदयिके। चोदकः खल्वत्र तत् प्रापयति। तस्मात् तदप्यानु-मानिकमेव,—इति न किञ्चिदनुचितम्।

सूत्रद्वयं वैतत्,—'नान्दीमुखाः पितरः',—इति, 'प्रीयन्तामित्य-क्षय्यस्थाने'—इति च। तत्रापि, 'नान्दीमुखाः पितरः'—इति द्वयी-गतिः स्यात्;—नान्दीमुखानां वा पितृत्वम्, पितॄणां वा नान्दीमुख-त्वमनेन सूत्रेणोच्यते,—इति। तत्र, प्रथमस्तावत् पक्षो न सम्भवति। कुतः?। यतो नो खल्वपि ज्ञायते,—कतमे नान्दीमुखानाम्? इति। यद्धि नैव ज्ञायते, कथं तदनूद्य विशेषस्य विधिर्भविष्यति। अथ, तदपि विधास्यसि, भेत्स्यसि तर्हि वाक्यम्। अन्यत् खलु रूपमस्य विधीयमानस्य, अन्यच्चानूद्यमानस्य स्यात्। अथ मन्यसे,—तन्त्रान्तर-सिद्धान् नान्दीमुखाननूद्य पितृत्वममीषां विधास्यते,—इति। तदपि नास्ति। कस्मात्?। अन्यशास्त्रसङ्केतस्यान्यत्रानुपयोगात्। स्वशास्त्र-विरोधश्चैवमापत्स्यते। तच्च वक्ष्यामः। विधित्सितं पितृत्वमपि कि-मिहाभिप्रेयते, तदपि वक्तव्यम्। तच्च यदि प्राप्तपितृलोकत्वं, यदि वा परम्परया जनकत्वम्; उभयथापि प्रज्ञातमेव तदिति न पुनर्वि-धातव्यं भवति। पितॄणामिव श्राद्धोद्देश्यत्वं विधीयते,—इति चेत्, नैषा साध्वी कल्पना भवति। लक्षणाशब्दः खल्वेवमसौ स्यात्। श्रुतिलक्षणाविषये च श्रुतिर्ज्यायसीत्याचक्षते। विधौ च न परः शब्दार्थ-स्तान्त्रिकाणामनुमतः। तस्मात् पारिशेष्यात् चोदकप्राप्तान् पितॄननूद्य

तेषां विशेषोनान्दीमुखत्वमनेन विधीयते,—इति वक्तव्यं भवति। तदेवं नान्दीमुखविशेषणवन्तः पितरइह देवताभवन्ति,—इति न किमपि विरोत्स्यते। कथं पराचीनमुद्दिश्य प्राचीनस्य विधिरिति चेत्। किं क्रियतां, यत्र प्राचीनमुद्दिश्य पराचीनस्य विधिर्न सम्भवति। न चैवमत्रैव केवलं भवति। "मधुरः सुधावदधरः"—इत्यादौ बहुत्र तदुपलम्भात्। किं भवति प्रयोजनं व्यत्ययस्योपदेशस्य?। नान्दीमुखपदस्य पित्रादिपदात् पूर्व्वं प्रयोगप्रज्ञापनमिति ब्रूमः। तस्मात्,—'नान्दीमुखाः पितरः'—इत्यनेन वृद्धप्रपितामहादीनामत्र देवतात्वम्, स्वधावाचने पित्रादिपदमेव वृद्धप्रपितामहादिबोधकम्,—इत्यसङ्गतं वचनम्। 'पितृभ्यः पितामहेभ्यः'—इत्यादिस्पष्टार्थपराणां वाक्याना-मन्यार्थपरत्ववर्णनस्यानुचितत्वाच्च। तथा कात्यायनः।

"स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्म्मसु।
पिण्डानोद्वहनात्तेषां तस्याभावे तु तत्क्रमात्"।

इति 'स्वपितृभ्यः—इति ब्रुवाणः पित्रादीनामेवात्र देवतात्वं ज्ञापयति। "स्वपदस्य प्रपितामह-पित्रादिव्यावर्त्तकतयैव सार्थकत्वात्"—इति नारायणोपाध्यायाः। यत्पुनर्ब्रह्मपुराणीयं वचनम्,—

"पिता पितामहश्चैव तथैव प्रपितामहः।
त्रयोह्यश्रुमुखाह्येते पितरः परिकीर्त्तिताः।
तेभ्यः पूर्व्वतरायेच प्रजावन्तः सुखोचिताः।
ते तु नान्दीमुखाः, नान्दी—समृद्धिरितिकथ्यते।
कर्म्मण्यथाभ्युदयिके मङ्गल्यवति शोभने।
जन्मन्यथोपनयने विवाहे पुत्रकस्य च।

पितॄन् नान्दीमुखान्नाम तर्पयेद्विधिपूर्व्वकम्"।

इति। यच्च मार्कण्डेयपुराणस्थ,—

"ये स्युः पितामहादूर्द्धं ते स्युर्नान्दीमुखाइति"।

इति। तदुभयमपि तत्तदुक्तप्रयोगविषयम्। अस्मच्छास्त्रविरोधेनैतद्विषयत्वासम्भवात्। अनयोस्तत्तत्प्रयोगविषयत्वादेव,—एकत्र प्रपितामहादूर्द्धानाम्, अन्यत्र प्रपितामहमारभ्य नान्दीमुखसंज्ञाविधानमुपपद्यते। तदनेन,—

"वृद्धमुख्यास्तु पितरोवृद्धिश्राद्धेषु भुञ्जते"।

इति स्मृतिरपि व्याख्याता। अस्माद्वचनात्,—पित्रादिष्वेव वृद्धशब्दप्रयोगः,—इत्यहृदयव्याहृतम्। न ह्यत्र पित्रादीनां वृद्धसंज्ञा विधीयते। वृद्धमुख्यांस्तु पितॄननूद्य भोक्तृत्वं तेषामुच्यते,—इति। अनयैव दिशा—

"नान्दीमुखे विवाहे च प्रपितामहपूर्व्वकम्।

वाक्यमुच्चारयेद्विद्वानन्यत्र पितृपूर्व्वकम्"।

इति वृद्धवशिष्ठादिवचनान्यपि व्याख्येयानि। रघुनन्दनस्त्वेतदजानानोव्याचष्टे,—'नान्दीमुखे पुत्रादिसम्वृद्धीनामादिभूते विवाहे। यस्त्वर्थः—अन्यत्रप्राप्तपित्रादिक्रमव्यवच्छेदाय'—इति। तदश्रद्धेयम्। हेमाद्रिस्तु,—

"नान्दीमुखानां श्राद्धन्तु कन्याराशिगते रवौ।

पौर्णमास्यान्तु कर्त्तव्यं वराहवचनं यथा"।

इति प्रौष्ठपदीविषयएव वृद्धप्रपितामहादीनां देवतात्वमित्याह। तदसङ्गतम्। पूर्व्वोक्तब्रह्मपुराणे वृद्धप्रपितामहादीनां नान्दीमुखसंज्ञा-

मभिधाय, 'कर्म्मण्यथाभ्युदयिके'—इत्यादिना तेषामेवाभ्युदयिकदेवतात्वाभिधानात्। यदपि,—

"अमावस्यायां पितरः पूज्या नान्दीमुखा अपि"।

इति ब्रह्मपुराणीयकन्यागतापरपक्षविषयं प्रागुक्तनान्दीमुखसंज्ञाविधानम्,—इति। तदप्यसङ्गतम्।

"ये स्युः पितामहादूर्द्ध्वं ते स्युर्नान्दीमुखास्त्विति"।

इति कन्यागतापरपक्षस्थब्रह्मपुराणएव तत्र पृथङ्नान्दीमुखसंज्ञाविधानात्। "स्वजनकादीनां देवतात्वप्रतीतेर्ब्रह्मपुराणीयप्रपितामहपित्रादित्रिकपक्षोजीवत्पित्रादित्रिकयजमानविषयः। यस्य त्रयोजीवन्ति स नैव कुर्य्यादिति विष्णूक्तनिषेधोवृद्धिश्राद्धेप्यतिदेशात् प्राप्तइति चेन्न, उपदेशेनातिदेशबाधात्"—इति कल्पतरुः। "युक्तञ्चैतत्। पित्रादीनां त्रयाणामपि विद्यमानत्वात् चतुर्थादयः प्रजावन्तः, चतुर्थादिसन्निहितत्वेन पित्रादित्रयाणां तद्विषयदुःखभाजनत्वेन सन्निहितमरणधर्म्मकत्वाच्चासुमुखत्वम्"—इति मदनपारिजातः। शूलपाणिस्त्वेतदबुद्ध्वा, यदा त्रयः प्रव्रजिताः पतिता वा मृतास्तदा ब्रह्मपुराणीयवचनमित्याह। तदपि न सुन्दरम्। तदानीं वृद्धप्रपितामहादीनां प्रजावत्त्वाभावात्।

"ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते।

व्युत्क्रमाच्च मृते देयं येभ्यएव ददात्यसौ"।

इति छन्दोगपरिशिष्टवचनेन तन्मते तेषां पार्व्वणादिसकलश्राद्धदेवतया आभ्युदयिकमात्रगोचरोवचनारम्भस्य न पुनराञ्जस्येनोपपद्यते।

एवन्तावत्पर्य्यवसिता पूर्व्वसूत्रवर्णना। 'प्रीयन्तामित्यक्षय्यस्थाने'—

इति चोत्तरसूत्रे प्रीयन्तामित्यस्य साकाङ्क्षतया तत्र "नान्दीमुखाः पितरः"—इत्ययमेव परिपूरणसमर्थोवाक्यशेषोभवति। तस्मात्, तस्यानुषङ्गः कर्त्तव्यः। तथाचोक्तम्। "अनुषङ्गोवाक्यसमाप्तिः सर्व्वेषु तुल्ययोगित्वात्"—इति। तेन, 'नान्दीमुखाः पितरः प्रीयन्ताम्'—इति पूर्व्वोक्तएवमन्त्रोभवति॥ ८॥

**दैवे वाचयित्वा नान्दीमुखेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्योमातामहेभ्यः प्रमातामहेभ्योवृद्धप्रमातामहेभ्यश्च स्वाहोच्यताम्॥ ९॥**

ऋजुरक्षरार्थः। दैवे वाचयित्वा,—इत्यत्र, किम्?—इत्याकाङ्क्षायां पूर्व्वोक्तमनुषञ्जनीयम्। तेन, इदानीं नान्दीमुखाः पितरः प्रीयन्तामिति दैवे वाचयेत्। प्रीयतामित्युत्तरम्। अथ, 'स्वाहां वाचयिष्ये—इति पृच्छति। वाच्यतामित्युक्ते, नान्दीमुखेभ्यः पितृभ्यः स्वाहोच्यतामित्यादिकं वदेत्। ते च, अस्तु स्वाहा,—इति प्रत्येकं ब्रूयुः।

स खल्वयं ग्रन्थएवमेव महायशःप्रभृतिभिः पठितोव्याख्यातश्च। अन्ये पुनरन्यथेमं ग्रन्थं पठन्ति,—नान्दीमुखाः पितरः,—इत्यादिम्। "नान्दीमुखाः पितरः, प्रीयन्तामिति दैवे वाचयित्वा, नान्दीमुखेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्योमातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च प्रीयन्ताम्" इति। तेषां नान्दीमुखेभ्यः पितृभ्यः प्रीयन्तामित्यादिवत्, प्रीयन्तां वाचयिष्ये,—इति, अस्तु प्रीयन्ताम्,—इति च, न किमपि समवैति,—इति द्रष्टव्यम्। रघुनन्दनस्तु प्रीयन्तां वाचयिष्ये,—इति, नान्दीमुखेभ्यः पितृभ्यः प्रीयन्ताम्—इति चैवमा-

दिकम् प्रयोगमभ्युपगच्छन्नपि, अस्तु स्वधेतिवत् अस्तु प्रीयन्तामिति प्रत्युत्तरं नाभ्युपगच्छति, किन्तु प्रीयन्तामित्येतावन्मात्रम्। तदत्र भवन्तोभूमिदेवाः प्रमाणम् ॥ ९ ॥

## न स्वधां प्रयुञ्जीत ॥ १० ॥

स्पष्टोऽक्षरार्थः। सोऽयं चोदकप्राप्तस्वधानिषेधः। किं पुनरत्र त्याग-वाक्यादौ प्रयोक्तव्यं भवति?! 'स्वाहा'—इति ब्रूमः। कथम्?। स्वाहोच्यतामित्यत्र स्वधापदस्थाने स्वाहापददर्शनात् स्वधानिषेधे सर्व्वत्रैव स्वाहेत्येतदागच्छति हृदयम्। आगच्छति चेत्, न सुतरा-मुत्स्रष्टव्यम्। स्वाहाशब्दः खल्वसौ स्वधाशब्दस्थाने प्रयुक्तः सर्व्वं तत् प्रयोजनमभिनिर्व्वर्त्तयति। अभिनिर्व्वर्त्तयति चेत्, नूनमन्यत्राप्यभि-निर्व्वर्त्तयिष्यति। न च शब्दान्तरप्रयोगे प्रमाणं पश्यामः। रघुनन्दन-स्त्वेतदबुद्धा, श्राद्धे स्वाहाशब्दप्रयोगे प्रमाणं नास्ति,—इत्याह!। यदपि,—

"सदा परिचरेद्भक्त्या पितॄनप्यत्र देववत्"।

इति छन्दोगपरिशिष्टवचनात् देवपत्नीयं नमएवायाति,—इत्युक्तम्। तदप्ययुक्तम्। देववत्परिचरणमात्राभिधानेन मन्त्रस्य तदीयस्याप्राप्तेः। इतरथा आवाहनादावप्यत्र देवपत्नोक्तएव मन्त्रः स्यात्। न चैवमिष्यते अतएव,—

"निपातो न हि सव्यस्य जानुनोविद्यते क्वचित्"।

इति पूर्व्वार्द्धेन सव्यजानुपातनिषेधाद्दक्षिणजानुपातादिकमुत्तरार्द्धेना-भिधत्ते। अपि च। एवमपि,—

स्वाहाकारवषट्कारनमस्कारादिवर्जितम्।

इति छन्दोगपरिशिष्टएव दैवे स्वाहाकारस्योपदेशान्नित्यवन्निषेधानुपपत्तिः। तस्मात् उक्तयुक्तेः स्वाहाशब्दएव प्रयोक्तव्योभवति। उभयमपि खल्वेवमनुगृहीष्यते। तेन, 'येषाञ्च त्वामनु यांश्च त्वमनु तस्मै ते स्वाहा,'—इति वक्तव्यम्। एवं 'पृक्तः स्वधया'—इत्यत्र, 'पृक्तः स्वाहया'—इति, 'स्वधास्थ'—इत्यत्र, 'स्वाहास्थ'—इति योहनीयम्।

"स्वधयेति पदस्थाने पुष्पाशब्दं वदेदिह"।

इति वङ्गीयकारिका तु तन्मात्रपरा। तेषामेव गृह्यपरिशिष्टे 'पृक्तः पुष्पा'—इति पठितत्वात्।

तदत्र, ब्राह्मणानामेव युग्मत्वोपदेशात् अर्घ्यपिण्डादीनां न युग्मत्वम्। प्रकृतौ ब्राह्मणबहुत्वेऽप्येकस्यार्घ्यस्य दर्शनात्। यत्तु,—

"एकं नाम्ना परं तूष्णीं दद्यात् पिण्डान् पृथक् पृथक्"।

इति चतुर्व्विंशतिमतवचनम्। तदस्मत्प्रयोगव्यतिरिक्तविषयम्। नचेदेवम्,—

"तिस्रः पूज्याः पितुः पक्षे तिस्रोमातामहे तथा।
इत्येतामातरः प्रोक्ताः पितृमातृस्वसाऽष्टमी।
ब्राह्म्याद्यास्तथामत्र दुर्गाक्षेत्रगणाधिपान्"।

इति तदुक्तमातरोऽप्यस्माकं भवेयुः। न त्वेवमिष्यते। अस्माकन्तु,—

"गौरी पद्मा शची मेधा सावित्री विजया जया।
देवसेना स्वधा स्वाहा मातरोलोकमातरः।
धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह।
गणेशेनाधिकाह्येता वृद्धौ पूज्याश्चतुर्दश"।

इति कात्यायनोक्ता एव मातरः पूजितव्या भवन्ति। एतदविद्वांस एव वक्ष्यच्छटद्वयपरिशिष्टोक्तानां मातॄणां पूजनं वदन्ति। तदेतद्वचनं परिशिष्टग्रन्थेषु दृश्यते। मदनपारिजातादावपि कात्यायनीयमिति क्वलैवैतल्लिखितम्। परन्तु, "गणेशेनाधिकाः"—इत्यर्द्धं तत्र नास्ति। तस्मात्, तदुक्तमातृपूजावत् तदुक्तपिण्डद्वयमप्यस्माकं न भवति। तथा भविष्ये।

"पिण्डनिर्व्वपणं कुर्य्यान्नवा कुर्य्याद्विचक्षणः।
वृद्धिश्राद्धे महावाहो! कुलधर्म्मायवेक्ष्य तु"।

इति। "पिण्डनिर्व्वपणमित्युपलक्षणम्, अतो यत्कुले यावती इतिकर्त्तव्यता वृद्धिश्राद्धे तावत्येव कर्त्तव्या, नाधिका"—इति मदनपारिजातः। गोभिलादयः खल्वस्माकं कुलधर्म्मोपदेशगुरवः,—इत्यवोचाम। गौड़ास्तु प्रत्येकमर्घ्यपात्रादिकं किञ्चित् युग्मं पिण्डादिकञ्च किञ्चिदयुग्ममित्यर्द्धजरतीयं कुर्व्वन्ति॥ १०॥

एवन्तावत् सर्व्वोऽपि श्राद्धविधिरभिहितः। तत्र विशेषाभिधित्सयोत्तरो ग्रन्थः प्रवर्त्तते,—

## श्रद्धान्वितः श्राद्धं कुर्व्वीत॥ ११॥

श्रद्धा,—

"प्रत्ययो धर्म्मकार्य्येषु सदा श्रद्धेत्युदाहृता"।

इत्युक्तलक्षणा। तया अन्वितो युक्तः सन् श्राद्धं कुर्व्वीत। न लोकाचारमात्रबुद्ध्या। न च नास्तिक्यमाश्रित्य न कुर्व्वीत। स्मरन्ति च।

"उच्छास्त्रवर्त्तिनो ये च पापोपहतबुद्धयः।

नास्तिक्यभावमाश्रित्य कर्म्मलोपव्यवस्थिताः।
न तत्र वीरा जायन्ते नारोगा न शतायुषः।
न च श्रेयोऽधिगच्छन्ति यत्र श्राद्धं विवर्ज्जितम्।
न सन्ति पितरश्चेति कृत्वा मनसि यो नरः।
श्राद्धं न कुरुते तत्र तस्य रक्तं पिबन्ति ते।
कर्म्मलोपात् समूढात्मा नरके पच्यते चिरम्।
लोकगर्हा भवेत्तस्य नास्तिक्यपथसंश्रयात्।
तस्माद्विधेरवष्टम्भात् कर्त्तव्यन्त्वौर्द्ध्वदेहिकम्।
प्रेतानामुपकारार्थमात्मनोऽभ्युदयाय च"।

इति। एवं वा—

श्रद्धा आकाङ्क्षेत्यनर्थान्तरम्। यदैव श्राद्धं कर्त्तुमाकाङ्क्षेदिति, तदैव श्राद्धं कुर्व्वीत। तथा च याज्ञवल्क्यः।

"अमावस्याऽष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम्।
द्रव्यं ब्राह्मणसम्पत्तिर्विषुवत्सूर्य्यसंक्रमः।
व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्य्ययोः।
श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्त्तिताः"।

इति॥ ११॥

## शाकेनापि नापरपक्षमतिक्रामेत्॥ १२॥

शाकेनापि श्राद्धं कुर्व्वीत। अपिकारात् जघन्योऽयं कल्पः। तदेवमपि कुर्व्वीत, न पुनरपरपक्षं कृष्णपक्षमतिक्रामेत्॥ १२॥

कुतएतत्?।

मासि मासि वोऽशनमितिश्रुतेरितिश्रुतेरिति ॥ १३ ॥

हे पितरः ! मासि मासि वोयुष्माकमशनम्—इति पितॄन् प्रतिप्रजापतेरुक्तिरियम्। इति श्रुतेः नापरपक्षमतिक्रामेत्—इति गतेन सम्बन्धः। 'इतिश्रुतेरितिश्रुतेः'—इति द्विर्वचनमादरार्थम्। 'इति' करणं प्रकरणसमाप्त्यर्थम्। केचित् द्विर्वचनमितिकारञ्च न पठन्ति।

आभ्यां सूत्राभ्यां कृष्णपक्षनिमित्तमपि श्राद्धमवश्यं कर्त्तव्यम्,—इत्युक्तं भवति ॥ १३ ॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारभट्टाचार्य्यस्य कृतौ श्राद्धकल्पभाष्ये चतुर्थी काण्डिका ॥

श्राद्धकल्पः ।

पञ्चमी काण्डिका ।

अथ धर्म्माः ।

अथेदानीमस्मिन् कर्म्मणि यजमानस्य भोक्तुश्च यथासम्भवं धर्म्माः—नियमाः, वर्त्तिष्यन्ते,—इति सूत्रशेषः ॥ १ ॥

**तदहस्तत्परः शुचिरक्रोधनोऽत्वरितोऽप्रमत्तः सत्यवादी स्यात् ॥ २ ॥**

यस्मिन्नहनिश्राद्धं भवति, तदहस्तस्मिन्नहनि । तत्परः तदाचरणचतुरः । शुचिः वाह्याभ्यन्तरशौचवान् । वाह्यं शौचं स्नानादि, आभ्यन्तरं मनःप्रसादादि । अक्रोधनः—यः क्रोधं करोति, स क्रोधनः, स न भवतीत्यक्रोधनः । अत्वरितः,—त्वरा संजाता यस्य सोऽयं त्वरितः, स न भवतीत्यत्वरितः । अप्रमत्तः प्रमादरहितः । प्रमादोऽनवधानतेत्यनर्थान्तरम् । सत्यवादी,—सत्यं वदितुं शीलं यस्य, स भण्यते । 'स्यात्,'—इति सर्व्वत्र संबन्धनीयम् ॥ २ ॥

**अध्वमैथुनश्रमस्वाध्यायान् वर्ज्जयेत् ॥ ३ ॥**

तदहरित्येव । अध्वनोवर्ज्जनमध्वगमनाभावः । स्वाध्यायोवेदाध्ययनम् ॥ ३ ॥

## आवाहनादिवर्ज्जं वाग्यतः ॥ ४ ॥

आवाहनादिप्रश्नप्रत्युत्तरादीन् विहाय, वाग्यतोनियमितवचनः। 'स्यात्' —इति पूर्व्वस्मादनुवर्त्तते ॥ ४ ॥

## ओपस्पर्शनात् ॥ ५ ॥

आउपस्पर्शनात् ओपस्पर्शनात्। उपस्पर्शनं आचमनमित्यनर्थान्तरम्। आउपस्पर्शनात् आचमनपर्य्यन्तम्,—"आचान्तेषूदकम्"—इत्यादिसूत्रोपात्तब्राह्मणाचमनपर्य्यन्तमित्येतत्। 'वाग्यतोपस्पर्शनात्'—इति सूत्रपाठे विसर्गलोपे सन्धिरार्षोद्रष्टव्यः।

ते खल्वमी नियमाभोक्तुरपि भवन्ति। अविशेषेणाभिधानात्। कात्यायनोऽप्येतत् सर्व्वमुपदिश्य, "आमन्त्रितास्त्वेवम्"—इति सूत्रयन्नेतदेवाह ॥ ५ ॥

## अपिचात्रोदाहरन्ति ॥ ६ ॥

अपिचात्रैतस्मिन् कर्म्मणि ब्राह्मणप्रशंसामुखेन कतिचिच्छ्लोकधर्म्मानुदाहरन्त्याचार्य्याः ॥ ६ ॥

**यश्च व्याकुरुते शब्दान् यश्च मीमांसतेऽध्वरम्।**
**सामस्वरविधिज्ञश्च पंक्तिपावनपावनाः,—इति ॥ ७ ॥**

यः शब्दान् व्याकुरुते सवैयाकरणः, यश्चाध्वरं यज्ञं मीमांसते सोऽयं मीमांसकः, साम्नः स्वराणां—क्रुष्टादीनां विधिं योजानाति स सामस्वरविधिज्ञश्चैते पङ्क्तिपावनपावनाः। ये खल्वपात्रोपहतां पङ्क्तिं पुनन्ति त इमे पङ्क्तिपावनाभण्यन्ते। स्मरन्ति च।

"अपाङ्क्त्योपहता पङ्क्तिः पाव्यते यैर्द्विजोत्तमैः ।
तान् निबोधत कार्त्स्न्येन ब्राह्मणान् पङ्क्तिपावनान्" ।

इति । ये पुनस्तानपि पङ्क्तिपावनान् पुनन्ति, ते खल्विमे पङ्क्तिपावनपावनाउच्यन्ते । 'इति' उदाहरन्तीतिगतेन संबन्धः ॥ ७ ॥

**वागीश्वरोयाज्ञिकश्च पङ्क्तिपावनपावनः,—इति च ॥ ८ ॥**

वाचामीश्वरः—संस्कृतां वाचं यः प्रयुङ्क्ते सद्दहाभिप्रेयते । तस्याः प्रयोगे ह्यभ्युदयमामनन्ति । "एकः शब्दः सुप्रयुक्तः सम्यक्ज्ञातः स्वर्गे लोके च कामधुग्भवति"—इति । 'यश्च व्याकुरुते शब्दान्'—इत्यत्र ज्ञानमात्रं विवक्षितम् । तदपि खल्वभ्युदयहेतुरितिद्वयोरुपादानम् । एतद्वा वचनं ज्ञानमात्रमभिप्रेत्य, प्रयोगस्याभिप्रेत्यान्यद्दर्शनीयम् । अथवा । 'यश्च व्याकुरुते शब्दान्',—इति वैयाकरणपरं वचनम् । यस्त्ववैयाकरणोऽपि संस्कृतां वाचं जानाति प्रयुङ्क्ते वा, सोयं वागीश्वरः । याज्ञिकोयज्ञानुष्ठाता । सखल्वयं पङ्क्तिपावनपावन इति पूर्ववदर्थः । 'इति च' उदाहरन्तीति गतेनाभिसंबन्धः । केचिदेतत् सूत्रं न पठन्ति । महायशःप्रभृतिभिस्तु पठितं व्याख्यातञ्च ॥ ८ ॥

**नियोज्यानामभावेऽप्येकं वेदविदं पङ्क्तिमूर्द्धनि नियुञ्ज्यात् काममितरान् ॥ ९ ॥**

ये ब्राह्मणाः श्राद्धे नियोज्यतयाऽभिहिताः, यावद्भिर्ब्राह्मणैः प्रयोजनं यदि तावन्तस्तथाविधान प्राप्यन्ते, तदाऽपि वेदविदमेकं ब्राह्मणं

पङ्क्तेर्मूर्द्धनि प्रधानस्थाने नियुञ्ज्यात्। इच्छया पुनरवेदविदोपि तस्यामेव पङ्क्तौ नियुञ्ज्यात्। सोऽयं श्राद्धकर्त्तुर्धर्म्मः॥ ९॥

कस्मात्पुनः कारणादेकं वेदविदं नियुज्यावेदविदोपि नियुञ्ज्यादित्युच्यते?।

"यावतोग्रसते ग्रासान् हव्यकव्येष्वमन्त्रवित्।

तावतोग्रसते प्रेत्य दीप्तशूलर्ष्ट्ययोगुड़ान्"।

इति तत्रभवन्तो मन्वादयस्तमीषां भोजने दोषमुदाहरन्ति। उच्यते,—

**आवेदविद्भिराक्रान्तां पंक्तिं योजनमायताम्।**
**पुनाति वेदविद्भेकोनियुक्तः पंक्तिमूर्द्धनि नियुक्तः पंक्तिमूर्द्धनि॥ १०॥**

वेदविदोन भवन्तीत्यवेदविदः। हि यस्मात् अवेदविद्भिराक्रान्तां योजन विस्तृतामपि पङ्क्तिं। पङ्क्तिमूर्द्धनि नियुक्तएकोवेदवित्पुनाति, एतस्मात् कारणात् एकं वेदविदं पङ्क्तिमूर्द्धनि नियुज्य काममितरान् नियुञ्ज्यात्। द्विर्व्वचनं प्रकरणसमाप्त्यर्थमादरार्थञ्च॥ १०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारभट्टाचार्य्यस्य कृतौ श्राद्धकल्पभाष्ये पञ्चमी काण्डिका समाप्ता॥

---

षष्ठी कण्डिका ।

## अथ तृप्तीः ॥ १ ॥

वक्ष्यामः,—इति सूत्रशेषः ॥ १ ॥

तत्र हविर्विशेषात् तृप्तिविशेषमाह,—

## ग्राम्याभिरोषधीभिर्मासं तृप्तिः ॥ २ ॥

ग्राम्याभिर्ग्रामे भवाभिः। ओषधीभिः,—

"व्रीहयः शालयोमुद्गागोधूमाः सर्षपास्तिलाः ।

यवाश्चौषधयः सप्त विपदोघ्नन्ति धारिताः" ।

इत्युक्तलक्षणाभिः, फलपाकान्ताभिर्वा, मासं व्याप्य पितॄणां तृप्तिर्भवति। तन्त्रान्तरे ग्राम्यतिलनिषेधोऽस्मद्व्यतिरिक्तविषयः ॥ २ ॥

## तदलाभे आरण्याभिः ॥ ३ ॥

तासां ग्राम्याणामोषधीनामलाभे, आरण्याभिरोषधीभिः, 'मासं तृप्तिः',—इत्यनुषज्यते। अनुकल्पोऽयम् ॥ ३ ॥

## मूलफलैरद्भिर्वा ॥ ४ ॥

मासं तृप्तिः,—इत्यनुवर्त्तते। मूलैः,—

"कशेरुः कोविदारश्च तालकन्दं तथा विषम् ।

तमालं शतकन्दश्च कह्लारं शीतकन्दकम्" ।

इत्यादिभिर्वक्ष्यलं तन्त्रान्तरेषूपदिष्टैः। फलैः,—

"बिल्वामलकमृद्वीकापनसाम्रातदाड़िमम् ।

भव्यं पानेरताक्षोटं खर्ज्जूराम्रफलानि च" ।

इत्येवमादिभिस्तन्त्रान्तरोक्तैरेव। अद्भिर्जलेन वा। अयमप्यनुकल्प एव। तथा च ब्राह्मे पुराणे।

"पयोमूलफलैः शाकैः कृष्णपक्षे च सर्व्वदा।
पराधीनः प्रवासी च निर्धनोवाऽपि मानवः।
मनसा भावशुद्धेन श्राद्धे दद्यात्तिलोदकम्"।

इति। अपरे पुनरेतदविद्वांसोवक्ष्यमाणेनोत्तरशब्देन मूलादीनां ग्रहणं वर्ण्यन्तोभाषन्ते,—'मूलादयोऽपि पदार्थाः सहैवान्नेन तर्पयन्ति,'—इति॥४॥

## सहान्नेनोत्तरास्तर्पयन्ति ॥ ५ ॥

उत्तराः—वक्ष्यमाणाश्छागादयः पदार्थाः, अन्नेन सहिताः सन्तस्तृप्तिं जनयन्ति, न केवलाः ॥ ५ ॥

तदिमे उत्तराः पदार्थाअभिधीयन्ते,—आकाण्डिकापरिसमाप्तेः,—

## छागोस्रमेषा आलभ्याः ॥ ६ ॥

उस्रोवृषोवलीवर्द्दइत्यनर्थान्तरम्। प्रसिद्धावन्यौ। ते खल्विमे च्छागोस्रमेषाआलभ्याः सन्तस्तर्पयन्ति, नलन्यथा। आलम्भश्चामीषां गृह्योक्तविधिना करणीयः ॥ ६ ॥

## शेषाणि क्रीत्वा लब्ध्वा वा स्वयंमृतानां वा ऽऽहृत्य पचेत् ॥ ७ ॥

शेषाणि छागादिभ्योऽन्यानि वक्ष्यमाणानि मांसानीत्यर्थः। "शेषाणीतरेषाम्"—इति पाठे, शेषाणि छागादिभ्योऽन्यानि, इतरेषां मत्स्यादीनां मांसानि,—इति पूर्व्वोक्तएवार्थः। इतरेषां क्रीत्वा लब्ध्वा वा,—इति वा वर्णनीयम्। यदा क्रयलाभाभ्यां संवन्धः, तदा 'इतरे-

साम्'—इति संबन्धलक्षणा षष्ठी। तानि खल्वेतानि मांसानि कुतश्चित् क्रीत्वा वा, लब्ध्वा वा, अथ वा स्वयंहृतानामाहृत्य, पचेत्,—गृह्योक्तप्रकारेण चरुपाकविधिना ॥ ७ ॥

अथेदानीं येन पदार्थेन यावन्तं कालं पितरस्तृप्यन्ति, तदुच्यते,—

मासद्वयं मत्स्यैः ॥ ८ ॥

मत्स्यैः पाठीनादिभिर्मासद्वयं पितॄणां तृप्तिर्भवति ॥ ८ ॥

मासत्रयं हारिणेन मृगमांसेन ॥ ९ ॥

मृगः पशुरित्यनर्थान्तरम्। मृगस्य पशोर्मांसेन मासत्रयं तृप्तिः। तदेव मांसं विशिनष्टि। हारिणेन हरिणसंबन्धिना पशुमांसेन। 'हरिणमृगमांसेन,'—इति पाठेपि, सामान्यवचनोमृगशब्दोविशेषवाचिना हरिणशब्देन विशिष्यते,—इति सएवार्थोभवति ॥ ९ ॥

चतुरः शाकुनेन ॥ १० ॥

चतुरोमासान् तृप्तिः शाकुनेन मांसेन। शकुनः पक्षीत्यनर्थान्तरम्। सच कपिञ्जललावकादिः ॥ १० ॥

पञ्च रौरवेण ॥ ११ ॥

रौरवेण मांसेन पञ्च मासान् तृप्तिः। एवमुत्तरत्रापि। रुरुर्मृगविशेषः ॥ ११ ॥

षट् छागेन ॥ १२ ॥

तृप्तिः ॥ १२ ॥

सप्त कौर्म्मेण ॥ १३ ॥

तृप्तिरित्येव ॥ १३ ॥

अष्टौ वाराहेण ॥ १४ ॥

तृप्तिः ॥ १४ ॥

नव मेषमांसेन ॥ १५ ॥

सखल्वयं मेषआलभ्योबोद्धव्य; ॥ १५ ॥

दश माहिषेण ॥ १६ ॥

मांसेन,—इत्येव ॥ १६ ॥

एकादश पार्षतेन ॥ १७ ॥

पृषतोमृगविशेषः ॥ १७ ॥

संवत्सरन्तु गव्येन पयसा ॥ १८ ॥

तृप्तिः ॥ १८ ॥

पायसेन वा ॥ १९ ॥

संवत्सरं तृप्तिः। वाशब्दश्चशब्दार्थः समुच्चये ॥ १९ ॥

वार्ध्रीणसस्य मांसेन द्वादशवर्षाणि ॥ २० ॥

तृप्तिरित्येव। वार्ध्रीणसस्य,—

"त्रिपिबन्त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम्।
वार्ध्रीणसन्तु तं प्राहुर्याज्ञिकाः पितृकर्मणि।
कृष्णग्रीवोरक्तशिराः श्वेतपक्षोविहङ्गमः।
सवै वार्ध्रीनसः प्रोक्तइत्येषानैगमी श्रुतिः"।

इत्युक्तलक्षणः। जरत्छागइति मेधातिथिः ॥ २० ॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारभट्टाचार्य्यस्य कृतौ श्राद्धकल्पभाष्ये षष्ठी कण्डिका समाप्ता ॥

---

## श्राद्धकल्पः।

### सप्तमी काण्डिका।

### अथातस्तृप्तीः॥ १॥

वक्ष्यामः॥ १॥

### खड्गः॥ २॥

खड्गआरण्यः पशुविशेषः। सोयमक्षय्यतृप्तिहेतुः पितॄणाम्। एवमग्रेऽपि॥ २॥

### कालशाकम्॥ ३॥

प्रसिद्धमेतत्। कालशाकः,—इति पाठेऽपि नार्थोभिद्यते॥ ३॥

### लोहितच्छागः॥ ४॥

रक्तवर्णच्छागः। "च्छागोवा सर्व्वलोहितः"—इति च स्मृत्यन्तरम्॥४॥

### मधु॥ ५॥

मधु चौद्रं माध्वीकमित्यनर्थान्तरम्॥ ५॥

### महाशल्कः॥ ६॥

महाशल्कोमत्स्यविशेषः। सच रोहितादिरिति वाचस्पतिमिश्रः। रोहितमत्स्यः,—इत्यपरे। तथा च ब्राह्मे पुराणे।

"रोहितामिषमुत्पन्नं दत्त्वा तु स्वकुलोद्भवाः।

अनन्तां विप्र! यच्छन्ति तृप्तिं गौरीसुतस्तथा"।

इति।

"एकशल्कोऽर्द्धचन्द्रश्च ललाटे खड्गसंयुतः।

शुक्लवर्णश्च योमत्स्योमहाशल्कः सउच्यते"।

इति पुलस्त्यवचनोक्तस्तु युक्तः॥ ६॥

## वर्षासु मघाश्राद्धम् ॥ ७ ॥

स्वजुरवरार्थः । 'वर्षासु श्राद्धम्'—इति पाठे, वर्षासु सर्व्वत्रैव श्राद्ध-मक्षयतृप्तिहेतुरिति मन्तव्यम् । तथा च विष्णुधर्म्मोत्तरे ।

"उत्तरात्त्वयनात् श्राद्धे श्रेष्ठं स्याद्दक्षिणायनम् ।
चातुर्मास्यञ्च तत्रापि प्रसुप्ते केशवे हितम्" ।

इति ॥ ७ ॥

## हस्तिच्छायायाञ्च ॥ ८ ॥

श्राद्धमित्यनुषज्यते । हस्तिच्छाया च कुञ्जरस्य च्छाया, बहुप्रकार-पारिभाषिक्यपि स्मृतिषूपदिष्टा । कुञ्जरस्य च्छाया तावत्,—

"हस्तिच्छायासु विधिवत् कर्णव्यजनवीजितम्" ।

इति भारते । पारिभाषिकी खल्वपि । प्रचेताः ।

"सूर्य्ये हस्तस्थिते या तु मघायुक्ता त्रयोदशी ।
तिथिर्वै श्रावणी या तु सा च्छाया कुञ्जरस्य च" ।

इति । यमः । हंसे करस्थिते या तु अमावस्या कराम्विता ।
सा ज्ञेया कुञ्जरच्छाया इति बौधायनी श्रुतिः" ।

इति । वायुपुराणे ।

"वनस्पतिगते सोमे या च्छाया प्राङ्मुखी भवेत् ।
गजच्छाया तु सा प्रोक्ता तस्यां श्राद्धं प्रकल्पयेत्" ।

इति । ब्रह्मपुराणे ।

"सैंहिकेयो यदा भानुं ग्रसते पर्व्वसन्धिषु ।
गजच्छाया तु सा प्रोक्ता तस्यां श्राद्धं प्रकल्पयेत्" ।

इति । एवमादिकमनुसन्धेयम् ॥ ८ ॥

अथेदानीं ब्राह्मणविशेषा अभिधीयन्तेऽव्ययत्वसिद्धेतवः,—

मन्त्राध्यायिनः ॥ ९ ॥

मन्त्रब्राह्मणात्मकस्य वेदस्य मध्यात् मन्त्रभागमात्रं ये अधीयते ते मन्त्राध्यायिनः ॥ ९ ॥

पूताः ॥ १० ॥

पूताः पवित्राः अन्युक्ताचारादिभिरित्यर्थः। अथवा। मन्त्राणामध्ययनमकुर्व्वाणा अपि वेदव्रतानुष्ठानं ये कृतवन्तः, तदृमे पूताः ॥ १० ॥

शाखाध्यायी ॥ ११ ॥

स्वीयां शाखां मन्त्रब्राह्मणात्मिकां योऽधीते, स खल्वयं शाखाध्यायी॥११॥

षडङ्गवित् ॥ १२ ॥

षड़ङ्गानि योवेत्ति सोयं षड़ङ्गवित्। तेषां मध्यादेकमपि योवेत्ति, सोऽपि,—इति महायशाः। अङ्गानि च,—

"शिक्षाकल्पोव्याकरणं निरुक्तं ज्योतिषाश्चितिः।

छन्दसां विचितिश्चैव षड़ङ्गोवेदउच्यते"।

इत्युक्तलक्षणानि ॥ १२ ॥

ज्येष्ठसामगः ॥ १३ ॥

ज्येष्ठसामान्यारण्यके गीयन्ते। तानि योगायति, सोऽयं ज्येष्ठसामगः। ज्येष्ठसामव्रतं येन चीर्णं सोऽपि,—इति महायशाः ॥ १३ ॥

अपि गायत्रीसारमात्रः ॥ १४ ॥

अपिर्भिन्नक्रमे। गायत्रीसारमात्रः,—इति व्यत्यासेन प्रयुक्ते। गायत्रीमात्रसारोऽपि,—इत्यर्थः। आरभ्य च।

"गायत्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः ।
नायन्त्रितश्चतुर्वेदः सर्व्वाशी सर्व्वविक्रयी" ।

इति। गायत्रीव्रतमात्रं सहप्रवचनापरनामधेयं येन चीर्णं स चैव मुच्यते॥१४॥

### त्रिणाचिकेतः ॥ १५ ॥

त्रिणाचिकेतोऽध्वर्य्युशाखायां प्रसिद्धः। एतद्व्रतमपि, तद्योगात् पुरुषोऽपि त्रिणाचिकेतः ॥ १५ ॥

### त्रिमधुः ॥ १६ ॥

त्रिमधु अध्वर्य्युवेदभागस्तद्व्रतञ्च। तद्योगात् पुरुषोऽपि त्रिमधुः॥१६॥

### त्रिसुपर्णः ॥ १७ ॥

सुपर्णमन्त्रास्तैत्तिरीयके प्रसिद्धाः। बह्वृचां वेदभागस्त्रैवमुच्यते। तद्व्रतञ्च । तद्योगात् पुरुषोऽपि ॥ १७ ॥

### पञ्चाग्निः ॥ १८ ॥

पञ्च—पवनपावनदक्षिणगार्हपत्याहवनीयाश्चाग्नयोयस्य, असौपञ्चाग्निः । तथा च हारीतः ।

"पवनः पावनस्त्रेता यस्य पञ्चाग्नयोगृहे ।
सायं प्रातः प्रदीप्यन्ते सविप्रः पङ्क्तिपावनः" ।

इति। केचिदेतत्सूत्रम,—'त्रिणाचिकेतः'—इत्यतः पूर्व्वं पठन्ति ॥ १८॥

### स्नातकः ॥ १९ ॥

विद्यास्नातकोव्रतस्नातकोविद्याव्रतस्नातकश्चेति त्रिप्रकारोऽगृह्यस्थोक्तः ॥ ॥ १९ ॥

### मन्त्रब्राह्मणवित् ॥ २० ॥

मन्त्रब्राह्मणात्मकसमग्रवेदवेत्ता। केचिदेतत् सूत्रद्वयं न पठन्ति ॥२०॥

धर्म्मज्ञः ॥ २१ ॥

धर्म्मशास्त्राध्यायी धर्म्मवेत्ता वा। "धर्म्मद्रोणपाठकः,"—इति पाठे, 'मनुवशिष्ठयाज्ञवल्क्यगोतमशास्त्राणि धर्म्मद्रोणशब्देनोच्यन्ते, तेषां मध्ये एकस्यापि पाठकः'—इति महायशाः ॥ २१ ॥

ब्राह्मोढ़ापुत्रश्च ॥ २२ ॥

ब्राह्मेण विवाहेन या विवाहिता स्त्री, तस्याः पुत्रः। च शब्दात् ब्रह्मदेयाप्रदानादयोभूयांसः समुच्चीयन्ते। तथा च मात्स्ये पुराणे।

"ब्रह्मदेयाऽऽत्मसन्तानो ब्रह्मदेयाप्रदायकः।

ब्रह्मदेयापतिश्चैव ब्राह्मणः पङ्क्तिपावनः"।

इति। ते खल्वमी बहुलं तन्त्रान्तरेष्वभिहितास्ततएवोपलब्धव्याः ॥२२॥

इति पंक्तिपावनाः ॥ २३ ॥

इत्येते मन्त्राध्यायिप्रभृतयो ब्राह्मणाः पङ्क्तिपावनाः 'पङ्क्तिपावनपावनाः'—इति केचित् पठन्ति ॥ २३ ॥

कुतः पुनरमीषां पङ्क्तिपावनत्वम्?

आसहस्रात् पंक्तिं पुनातीति वचनादासहस्रात् पंक्तिं पुनातीति वचनात् ॥ २४ ॥

स्फुटतरार्थः। द्विर्व्वचनमादरार्थं प्रकरणसमाप्त्यर्थञ्च। "वागीश्वरोयाज्ञिकस्त्वासहस्रात् पङ्क्तिं पुनातीति वचनादासहस्रात् पङ्क्तिं पुनातीति वचनात्"—इति केचित् पठन्ति ॥ २४ ॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारभट्टाचार्य्यस्य कृतौ श्राद्धकल्पभाष्ये सप्तमी कण्डिका समाप्ता ॥

# श्राद्धकल्पः ।

## अष्टमी कण्डिका ।

### अथ काम्यानां तिथयः ॥ १ ॥

अथेदानीं काम्यानां फलानां श्राद्धानां वा तिथयोवक्ष्यन्ते इति सूत्रशेषः ॥ १ ॥

### पुत्रोऽभिरूपः प्रतिपदि ॥ २ ॥

प्रतिपदि श्राद्धकर्त्तुरभिरूपोविद्वान् रमणीयोवा,—

"यत्र विद्या च वित्तञ्च सत्यं धर्म्मः शमोदमः ।
अभिरूपः सविज्ञेयः स्वाश्रमे योव्यवस्थितः" ।

इत्युक्तलक्षणो वा, पुत्रोभवति ॥ २ ॥

### तृतीयायां स्त्रीजन्मा ॥ ३ ॥

तृतीयायां श्राद्धं कुर्व्वन् पुरुषः स्त्रीजन्मा भवति। स्त्रीणां जन्म यस्मात् सोऽयं स्त्रीजन्मा। स्त्र्यपत्यजनकइत्यर्थः ॥ ३ ॥

### अश्वास्तृतीयायाम् ॥ ४ ॥

तृतीयायां श्राद्धकर्त्तुरश्वाभवन्ति। केचिदश्वाइति न पठन्ति। तृतीयायामपि क्षुद्रपशवः फलमितिवदन्ति च ॥ ४ ॥

### चतुर्थ्यां क्षुद्रपशवः ॥ ५ ॥

क्षुद्रपशवोऽजादयः ॥ ५ ॥

### पञ्चम्यां पुत्रभागी ॥ ६ ॥

पुत्रभागी पुत्रवान्। "पुत्राः पञ्चम्याम्"—इति पाठे, व्यक्तोऽर्थः ॥ ६ ॥

## द्यूतर्द्धिः षष्ठ्याम् ॥ ७ ॥

द्यूतेन,—

"अप्राणिभिर्यत् क्रियते तल्लोके द्यूतमुच्यते"।

इत्युक्तलक्षणेन, ऋद्धिर्धनोपचयः ॥ ७ ॥

## कृषिः सप्तम्याम् ॥ ८ ॥

कृषिः कृष्याधनोपचयः। तथाचापस्तम्बः। "सप्तमे कृषिवृद्धिः"—इति ॥ ८ ॥

## अष्टम्यां वाणिज्यम्* ॥ ९ ॥

पूर्व्ववदर्थः ॥ ९ ॥

## आरोग्यं नवम्याम् ॥ १० ॥

ऋज्वर्थं सूत्रम् ॥ १० ॥

## दशम्यां गावः ॥ ११ ॥

इदमपि ऋज्वर्थम् ॥ ११ ॥

## परिचारका एकादश्याम् ॥ १२ ॥

ऋज्वर्थमेव ॥ १२ ॥

## द्वादश्यां धनधान्यं कुप्यं हिरण्यञ्च ॥ १३ ॥

धनपदं धान्यादिभिन्नधनपरम्। कुप्यं सुवर्णरजताभ्यामन्यत्। 'कुप्यं रौप्यं हिरण्यञ्च'—इति केचित् पठन्ति ॥ १३ ॥

## ज्ञातिश्रैष्ठ्यञ्च त्रयोदश्याम् ॥ १४ ॥

चशब्दात् धनधान्यादिकञ्च ॥ १४ ॥

---

* वाणिज्यमष्टम्याम्,—इति पाठान्तरम्।

## युवानस्तत्र म्रियन्ते ॥ १५ ॥

तत्र त्रयोदश्यां श्राद्धं कुर्व्वाणस्य युवानोम्रियन्ते,—इत्ययमेकोदोषः। तदेतद्दोषसहिष्णुर्ज्ञातिश्रैष्ठ्यादिफलमर्थयमानस्तत्राधिक्रियते,—इति लिख्यते। महायशास्त्वाह,—'एतद्दोषपरिहारार्थं पिण्डरहितमत्र श्राद्धं कर्त्तव्यम्'—इति ॥ १५ ॥

## शस्त्रहतस्य चतुर्दश्याम् ॥ १६ ॥

शस्त्रेण हतस्य श्राद्धं चतुर्दश्यां कर्त्तव्यम्। स्मरन्ति च।

"शस्त्रेण तु हताये वै तेषां दद्याच्चतुर्दशीम्"।

इति। फलञ्चात्र शस्त्रहतस्य तृप्तिरेवेति मन्तव्यम्।

"पक्षिदंशमृता ये च दंष्ट्रिशृङ्गिनरैर्हताः।
पतनानशनप्रायैरुद्बन्धाग्निबन्धनैः।
मृता जलप्रवेशेन ते वै शस्त्रहताः स्मृताः"।

इत्युक्तलक्षणो वा शस्त्रहतोद्रष्टव्यः। तथाच मरीचिः।

"विषशस्त्रश्वापदाहि तिर्य्यग्ब्राह्मणघातिनाम्।
चतुर्दश्यां क्रिया कार्य्या अन्येषान्तु विगर्हिता"।

इति। न च,—

"शस्त्रविप्रहतानाञ्च शृङ्गिदंष्ट्रिसरीसृपैः।
आत्मनस्त्यागिनाञ्चैव श्राद्धमेषां न कारयेत्"।

इति च्छागलेयवचनात् शस्त्रादिहतानां श्राद्धमेव नास्ति,—इति वाच्यम्। बुद्धिपूर्व्वकमृतानामेव तथात्वात्। प्रमादमृतानान्तु श्राद्धमस्त्येव। तथाचाङ्गिराः।

"अथ कश्चित् प्रमादेन म्रियतेऽग्न्युदकादिभिः।

अशौचं तस्य कर्त्तव्यं कर्त्तव्या चोदकक्रिया"।

इति। तथा गौतमः। "प्रायोनाशकशस्त्राग्निविषोदकोद्बन्धनप्रपतनै-श्चेच्छताम्"—इति। आत्मघातिनोऽपि विशेषमाह वृद्धगार्ग्यः।

"वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः।

आत्मानं घातयेद्यस्तु अलाम्यनशनादिभिः।

तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयः।

तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमिष्यते"।

इति।

ननु,—

"ब्राह्मणादिहते ताते पतिते सङ्गवर्ज्जिते।

व्युत्क्रमाच्च मृते देयं येभ्यएव ददात्यसौ"।

इति छन्दोगपरिशिष्टवचनात् ब्राह्मणादिहतस्य श्राद्धानर्हत्वमवगम्यते। नैष दोषः। एतस्यापि बुद्धिपूर्व्वकविषयत्वात्। अथ वा। ब्राह्मणादि-हतानां सामान्यतः श्राद्धाभावेऽपि चतुर्दश्यां श्राद्धं वचनबलाद्विधीय-ते,—इति न किञ्चिदनुचितम्॥ १६॥

## अमावस्यायाꣳ सर्व्वमित्यमावस्यायाꣳ सर्व्वमिति ॥ १७॥

अमावस्यायां श्राद्धकर्त्तुः सर्व्वं पूर्व्वोक्तं फलं भवति। कथं पुन-र्ज्ञायते पूर्व्वोक्तमेव सर्व्वं न त्वन्यदपि,—इति। "सर्व्वत्वमाधिकारिकम्"—इति सिद्धान्तादित्यवेहि। तथा मनुः।

"पञ्चम्यादिविनिर्दिष्टान् विपुलान् मनसः प्रियान्।

श्राद्धदः पञ्चदश्यान्तु सर्व्वान् कामान् समश्नुते"।

इति पञ्चत्यादिविनिर्दिष्टान् सर्व्वान् कामान् समश्नुते,—इत्याह। तदस्य सर्व्वशब्दस्य प्रकृतवाचितया एकैकतिथिफलस्यैव च कामना विषयत्वेन प्रकृततया तस्यैव दर्शेऽपि फलत्वं योगसिद्धिन्यायात्। एवमेके। तत्र, "एकैकस्मै वा कामायान्ये यज्ञक्रतवश्चाह्रियन्ते, सर्व्वेभ्योदर्शपौर्णमासौ"—इति श्रवणेन एकैकफलस्यैव विशेषतः प्रकृतत्वेनोपस्थितत्वादस्तु तथा, प्रकृते तु तथाविधवचनाभावात् "पञ्चत्यादि विनिर्दिष्टान्"—इति वचनाच्च सकलतिथिफलानां विनाऽपि प्रयोगभेदं दर्शश्राद्धफलत्वम्। एवमपरे। इतिशब्दः प्रकरणसमाप्तिज्ञापनार्थः। सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयति॥ १७॥

अत्रैव शिवम्।

---

शाण्डिल्यनाम्नोविमलेऽन्ववाये
मुनेरनूचानवरोमुनीनाम्।
अनूनसत्वोविनयप्रधानः
शाण्डिल्यवद्भक्तिनयप्रवीणः॥
अभूत् द्विजोभूतदयः स राधा-
कान्तो नितान्तश्रुतिमार्गनिष्ठः।
सिद्धान्तवागीशइति प्रसिद्धि—
यं शिश्रिये तत्त्वतएव धीरम्॥
केनापि कस्मिन्नपि वा कथञ्चित्
प्रवर्त्तिते विश्वपतेः प्रसङ्गे!

वाष्पप्रपूरः परितः प्रसर्पन्
वपुर्विभोः प्लावयतेस्म यस्य ॥
तस्मादजनि योविप्रश्चन्द्रकान्तोमहात्मनः ।
वसता कैकयेष्वेतत् तेन भाष्यं विनिर्म्मितम् ॥
व्योमाम्बरचन्द्रे शकवर्षे मिथुनमुपगते सूर्य्ये ।
परिपूर्णतामगच्छत् कृतिरेषा चन्द्रकान्तस्य ॥
प्रीयतां तदनया हरिः स्वयं
धर्म्मकर्म्मनिवहैर्यदुज्यते ।
अप्यबद्धवचना सरस्वती
तस्य काममखिलात्मनः स्तुतिः ॥
साधवोऽन्यगुणलेशहर्षिताः
शोधयन्तु खलु वीक्षितैरिदम् ।
जातरूपरसभावितं स्वयो-
जातरूपमिव लक्ष्यते जनैः ॥
स्खलितमिह यदासीद्बुद्धिदोषैर्मदीयै-
स्तदमलमतिमद्भिः शोधनीयं कृपाभिः ।
न खलु कथमपि स्यात् सत्पथस्याध्वनीनः
स्खलितगतिरकस्मादाप्यपेक्षोऽनुकम्प्यः ॥
"धर्म्मस्य तत्त्वं निहितं गुहायाम्"—
इत्थं यदि स्पष्टवचोमुनीनाम् ।
तदाऽल्पवाग्बुद्धिबलोऽल्पदर्शी
काहं बुधास्तत् खलु चिन्तयध्वम् ॥

वस्तुनोऽतिगभीरत्वाद्यद्यद्येऽभवदन्यथा ।
तदीश्वरो मे क्षमयेत् करुणासिन्धुरच्युतः ॥

तत्प्रेरितां खल्ववलम्ब्य बुद्धि-
मिदं मया भाष्यमकारि यस्मात् ।
तस्मादहं जन्तुमिहार्हणो न
किङ्करे कुर्व्वति भर्त्तुराज्ञाम् ॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजस्य श्रीचन्द्रकान्ततर्कालङ्कारभट्टाचार्य्यस्य कृतौ श्राद्धकल्पभाष्ये अष्टमी काण्डिका समाप्ता ॥ समाप्तञ्चेदं श्राद्धकल्पभाष्यम् ॥

---

शुभमस्तु ॥ श्रीरस्तु ॥

---

# श्राद्धकल्पपरिशिष्टम् * ।



अनधीत्य पदस्तोभानतीषङ्गांश्च पुत्रक! ।
ऋषभांश्चाज्यदोहांश्च कथं श्राद्धेषु भोक्ष्यसे ॥
आमन्त्रितोजपेद्दोहान् नियुक्तस्तृषभान् जपेत् ।
अतीषङ्गांश्च तत्रैव जप्त्वाऽश्नीयात् द्विजोत्तमः ॥
भुक्त्वाऽऽचम्य पदस्तोभान् जपेत्तत्र समाहितः † ।
गोसूक्तञ्चाश्वसूक्तञ्च इन्द्रशुद्धे च सामनी ॥
तरन्तस्य च यत्साम तत्र जप्त्वैकधीर्बुधः ।
गत्वाऽऽसीनः शुचौ देशे वामदेव्यं ततोजपेत् ॥
एवं सामभिराक्रान्तो भुञ्जानस्तु द्विजोत्तमः ।
श्राद्धभोजनदोषैस्तु महद्भिर्नोपलिप्यते ॥
अन्यथैव हि भुञ्जानोहव्यकव्येष्वमन्त्रवित् ।
आत्मानमन्नदातृंश्च गमयत्यासुरीं गतिम् ॥
यत्नेन भोजयेत् श्राद्धे बह्वृचं वेदपारगम् ।
शाखान्तगमथाध्वर्युं छन्दोगं वा समाप्तिकम् ॥
यद्येकं भोजयेत् श्राद्धे छन्दोगं तत्र भोजयेत् ।

---

* अयं ग्रन्थः श्राद्धकल्पभाष्यएव महायशसा व्याख्यातः । एषोऽंशः श्राद्धकल्पस्यै-वान्तिमोऽध्यायः,—इति तस्य मतम् । इदं हि तेनोक्तम्,—"इत्येषोऽध्यायश्चिरन्तन-भाष्यकारैर्न व्याख्यातोनापि दर्शितः, अस्माभिस्तु सर्व्वांशु प्रदश्यमानत्वाद्दर्शितः"—इति । परमत्र सूत्रलक्षणाभावात् चिरन्तनभाष्यकारैरव्याख्यातत्वात् सूत्रग्रन्थमध्ये इदत्वाच्च एष ग्रन्थः परिशिष्टतया सङ्गृहीतोऽस्माभिः ।

† विशेषतः,—इति पाठान्तरम् ।

ऋचोयजूंषि सामानि त्रैविद्यं तत्र तिष्ठति ॥
ऋग्भिस्तु पितरः प्रीतायजुर्भिस्तु पितामहाः।
सामभिः प्रपितामहास्तस्मात्तं तत्र भोजयेत् ॥
एकस्तु ब्राह्मणः श्राद्धे स्वल्पन्तु प्रकृतं भवेत्।
त्रयस्तु पितरः प्रोक्ताः कथं चाश्नन्ति ते त्रयः? ।
उरसि पितरोभुङ्क्ते वामपार्श्वे पितामहाः।
प्रपितामहादक्षिणतः पृष्ठतः पिण्डतर्चुकाः ॥
लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः।
पिण्डदः सप्तमस्तेषां सा तृप्तिः साप्तपौरुषी ॥
अटेत पृथिवीं कृत्स्नां सशैलवनकाननाम्।
लभेत यदि पित्रर्थे साम्नामक्षरचिन्तकं साम्ना मक्षरचिन्तकम् ॥

इति श्राद्धकल्पपरिशिष्टं समाप्तम् ॥०॥

# सन्ध्यासूत्रम् ।

## गोभिलप्रणीतम् ।

अथातः सन्ध्योपासनविधिं व्याख्यास्यामः* सुप्रक्षालितपाणि-पादवदनउपविश्य प्रागग्रेषु दर्भेषु प्राङ्मुखउदङ्मुखोवा बद्धशिखी यज्ञोपवीती ततः† ॐ पूर्व्वाः‡ भूर्भुवः स्वर्महर्जनस्तपः सत्यमिति सप्त व्याहृतयः सप्रणवाः§ गायत्र्यापोज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरोमिति शिरोदशप्रणवसंयुक्तस्त्रिरभ्यस्तः पूरककुम्भकरेचकाख्यः प्राणायामएवं त्रिः|| कृत्वा सप्त वा षोड़शवाऽऽचामेत्ततोमार्ज्जनं प्रणवेन महाव्याहृतिभिस्तिसृभिर्गायत्र्याऽऽ¶ पोहिष्ठाभिस्तिसृभिरथो-दकं हस्ते कृत्वा तत्र नासिकामवधायायतासुरनायतासुर्व्वा सकृत् त्रिर्व्वा जपेदृतञ्च सत्यञ्चेति त्रीनुदकाञ्जलीनादित्यं प्रतिक्षिपेत्** सावित्र्या ततउपस्थान†† मुदुत्यं चित्रमिति ध्यानयुक्तमावर्त्तयेद्दोंपूर्व्वां गायत्रीमष्टकृत्वएकादशकृत्वोद्वादशकृत्वः पञ्चदशकृत्वः शतकृत्वः सहस्र-कृत्वस्चेत्यष्टकृत्वः प्रयुज्य पृथिवीमभिजयत्येकादशकृत्वोऽन्तरीक्षं द्वादश-कृत्वोदिवं पञ्चदशकृत्वः सर्व्वादिशोजयति शतकृत्वः सर्व्वान् कामान् सहस्रकृत्वोयत् किञ्चित् सर्व्वमित्यथेमां सन्ध्यां नोपास्ते नाचष्टे न स जयति‡‡ ये ह्युपासते श्रोत्रियाभरण्त्युपनीतास्छेदनभेदन

* वक्ष्यामः,—इति सं० पाठः ।

† उपविश्योपस्पृश्य ततः,—इति ख० ।

‡ पूर्व्वःमोङ्कार,—इति सं० ।

§ प्रतिप्रणवाख्याः—इति ख० ।

|| त्रीन्,—इति ख० ।

¶ महाव्याहृतिभिस्तिसृभिरन्ते वा गायत्र्या वा,—इति मा० ।

** प्रक्षिपेत,—इति मा० ।

†† सावित्र्युपस्थानम्,—इति ख० ।

‡‡ यश्च य इमां सन्ध्यां नोपास्ते न स जयति,—इति ख० ।

भोजनमैथुनस्वप्नस्वाध्यायानाचरन्ति ये सन्ध्याकाले ते मसूकर शृगालगर्द्दभसर्पयोनिष्वभिसम्पद्यमानास्तमोभि* सम्पद्यन्ते* तस्मात् सायं प्रातः सन्ध्यामुपासीतोदुत्यं चित्रमुद्वयं तमसस्परि भासं प्राग-न्यदनुर्त्ततें‡ प्राङ्मुखस्तिष्ठन् जपेदन्त§ षोड़शाब्दमावृन्दं|| सूत्रहादद ऋजु तीतिनोवरुणः प्रत्यु अदर्श्यायत्युद्वेदभिश्रुतात्वमिति वर्गमस्तं गति ग्रतशोधाराअवकीर्य्य गायत्र्या तु विसृज्य प्राङ्मुखा¶ उपविश्य जपेन्मध्यन्दिने विभ्राड् वृहदासीनो जपेदासीनो जपेदिति** ॥

इति गोभिलप्रणीतं सन्ध्यासूत्रं समाप्तम् ॥

---

* तमोभिः,—इति मु० ।

† तमसस्तमोभिसंपद्यन्ते,—इति सो० ।

‡ प्रागन्यदनुवर्त्तते उभयं गायत्र्यनुगानं प्रातः,—इति व० ।

§ अत्र,—इति सो० मु० ।

|| एषोऽशा अपूर्व्वा आवृन्दं—इति व० ।

¶ अवकीर्य्य प्रत्यङ्मुखः,—इति व० ।

** विभ्राड् इहद्वयमत्वां असीति वयमत्वां असीति,—इति व० । द्विःपाठानास्ति का० मु० ।

# स्नानसूत्रम् ।

## गोभिलप्रणीतम् * ।

अथ स्नानविधिं व्याख्यास्यामो† नदीदेवखातगर्त्तप्रस्रवणादीन् गत्वा शुचौ देशे मृत्तिलकुशगोमयाक्षतानुपकल्प्य‡ पारक्यनिपाने§ पञ्च पिण्डानुद्धृत्य|| नमस्कृत्य तीर्थं पावकानः सरस्वतीति पादावारभ्य मृद्भिर्गात्राणि प्रक्षाल्योपविशेद्बद्धशिखी नित्यं यज्ञोपवीतीत्याचम्य¶ प्राङ्मुख** उदङ्मुखोवा कुशहस्तः शुचिः समाहितो†† व्यस्तसमस्ता-हृतीः‡‡ सावित्रीञ्च जप्वा§§ सप्तकृत्वः सावित्र्यानुमन्त्रितं|||| सकृदुदकमाचामेत्तत आचम्यापोयथाविध्याचम्यापोयथाविधि¶¶ ॥ १ ॥

अथ देवताधिसन्धिं*** कृत्वा सुहस्तशीर्षो घृतवत्यस्तकाम्ताभि-

---

* ग्रन्थोऽयं गोभिलप्रणीत इति प्रसिद्धिः। मुद्रितपुस्तके तथैव लिखितम्। वीरमित्रोदये तु "गोभिलीयपरिशिष्टे"—इति कृत्वा ग्रन्थोऽयमुद्धृतः। तेनैतस्य न गोभिलप्रणीतत्वं किन्तु तत्परिशिष्टरूपत्वमिति लभ्यते। अतएव ग्रन्थशेषे "इति गोभिलीये"—इति साधु संगच्छते। इह तु प्रसिद्धिरनुसृतेति ज्ञेयम्।

† प्रवक्ष्यामो—इति ब०।

‡ मृत्तिलकुशगोमयानुपकल्प्य,—इति ब०।

§ पारक्यजले,—इति का०।

|| पारक्यनिपाने पञ्चपिण्डानुद्धृत्य,—इति नास्ति मु० ब० पुस्तकयोः।

¶ यज्ञोपवीताचम्य,—इति वीरमित्रोदये पाठः।

** प्रक्षाल्योपविश्य बद्धशिखायज्ञोपवीतीप्राङ्मुख,—इति ब०।

†† कुशहस्तः समाहितो,—इति ब०।

‡‡ व्यस्तव्याहृतयः,—इति का० मु०। वीरमित्रोदयेऽप्येवं पाठः। व्याख्यातञ्चैतदेवं तत्र,—'व्यस्तव्याहृतयः समस्तव्याहृतीरित्यर्थः। क्वचित्तथैव पाठः''—इति।

§§ जप्त्वा',—इति वीरमित्रोदये पाठः।

|||| सावित्र्यानुमन्त्रितं,—इति ब०। व्यस्तव्याहृतयः सप्तकृत्वः सावित्र्यानुमन्त्रितम,—इति का० मु० पुस्तकयोः पाठः। वीरमित्रोदयेऽपि।

¶¶ द्विर्वचनं नास्ति ब० पुस्तके।

*** देवताभिसन्धिं,—इति वीरमित्रोदये। देवताधिसन्धिं,—इति ब०।

र्ग्भिर्मृत्तिकामादायेदं विष्णुर्विचक्रम इति पञ्चेन संमृज्यो* द्वयं तमसस्परि उदुत्तममिति चोद्धृ पाणीकृत्वाऽऽदित्यमवेक्षेतोद्धृतासि† वराहेणामोघीति च प्रतिलोमान्यङ्गान्यभिमृशेरन्‡ द्विरेतथैवाप्लुता-कृत्वा गावश्चिद्वास§ मन्यव इत्येतेन|| गोमयं गात्रेषु मृत्तिकावद्द्-तञ्च¶ सत्यञ्चेति त्रिः प्रुष्काघमर्षणं जपेत्ततोदेवताभिसन्धिं** कृत्वा नाभिमात्रजले स्थित्वा अन्नोदेव्यापोहिष्ठीयाभिः†† पावमानीभिस्तरत् समन्दीभिरेतोन्विन्द्रं तमुष्टवाम न कि इन्द्रत्वदुत्तरमिति‡‡ पवित्रव-तीभिर्मार्ज्जयित्वा त्रिः प्राणायामं कृत्वा त्रिः सुत्य§§ सहस्रशीर्षा इति सूक्तेनाघमर्षणं जपेत्ततस्त्रिराप्लुत्य|||| पुनः अन्नोदेव्यादिभिर्मार्ज्जनञ्च मार्ज्जनञ्च¶¶ ॥ २ ॥

अथ नित्यवत् सन्ध्यामुपासीतोदुत्यं चित्रमायं गौरपत्येतातरत्सि-ष्वाग्नेय्याभिर्ऋग्भिः सवितु*** रुपस्थानं नमोब्रह्मणइत्युपजाप

---

* इदं विष्णुर्विचक्रमे इति सप्तावसनं संमृत्यो,—इति व० ।

† उद्धृतासि,—इति मु० का० ।

‡ मृद्भिर्गात्राणि प्रतिलोमान्यभिमृशेत,—इति व० । मृद्भिर्गात्राणि प्रति-लोमान्यङ्गान्यभिमृशेत,—इति वीरमित्रोदये ।

§ गावश्चिद्वास,—इति मु० का० पुस्तकयोः पाठः ।

|| इत्यनेन,—इति वीरमित्रोदये ।

¶ मृत्तिकां दत्त्वा स्नातश्च,—इति व० ।

** देवतासन्धिं,—इति व०

†† पिष्ठीयाभिः,—इति का० । वीरमित्रोदये च ।

‡‡ न कि इन्द्र इत्याभिर्ऋग्भिः, —इति व० ।

§§ 'त्रिः सुत्य' इति नास्ति वीरमित्रोदये ।

|||| त्रिः प्राणायामं कुर्य्यात् सहस्रशीर्षा सूक्तेनाघमर्षणं ततस्त्रिराप्लुत्य,—इति व० । सहस्रशीर्षा,—इत्यतः पूर्व्वं 'सवनः'—इत्यधिकं वीरमित्रोदये ।

¶¶ द्विर्वचनं नास्ति व० पुस्तके ।

*** 'सवितुः'—इति नास्ति वीरमित्रोदये ।

चेद्येवमन्ते* नाग्निस्तृप्यन्त्विति च तृप्यतां वा, सर्व्वंच सव्येनैतां स्तर्पयेद्-थापसव्येन† राणायणी शटीत्यथ कव्यबालादयोदिव्यान्मनुष्यांश्चा‡-थात्मीयांश्च चीन् पितृतस्त्रीन्मातृतोमातामहांश्च तत्पत्नीश्च§ पितृ-तर्पणं|| सनकादयोनिवीत्यथमनुष्यधर्म्मा¶ स्ततोगायत्र्यष्टशतमादौ-कृत्वा** भासं दशस्तोभमुत्तरं गायत्रीसामीसनाः†† शुद्धाशुद्धीये राजनरौहिणके बृहद्रथन्तरे पुरुषगतिर्महानाम्न्योमहादिवाकीर्त्त्यं‡‡ ज्येष्ठसामानि§§ देवव्रतानि पुरुषव्रतानुगानं तवश्शावीयमादित्यव्रत-मेकविंशत्यनुगानं पर्कादारभ्य यथाशक्त्याहरहर्ब्रह्मयज्ञइति गोभिलीया गोभिलीयाः|||| ॥ ३ ॥

इति गोभिलीयं स्नानसूत्रं समाप्तम्¶¶ ॥

---

** चेत्यन्ते,—इति वीरमित्रोदये पाठः। चेत्यन्ये,—इति प्रयकारः पाठः का० मु०।

† तृप्यन्त्विति च देवांस्तर्पयेयुरपसव्येन पाणिना, इति व०। वीरमित्रोदये चैवं 'पाणिना' इति विहाय।

‡ दिव्यामनुष्यांश्च,—इति व०। वीरमित्रोदये च।

§ मातामहांस्ततः पत्नीश्च,—इति मु०।

|| पितृन् तर्पणम्,—इति का०। मातृतः पत्नीश्च तर्पणम्,—इति व०। मातृतस्तत्पत्नीश्चेति पितृतर्पणम्,—इत्युद्धाहतत्त्वादौ। 'इति'शब्दं विहाय, एवमेव वीरमित्रोदये।

¶ सनकादयश्च निवीतमिति मनुष्यधर्म्मः,—इति व०। वीरमित्रोदये चैवम्। किन्तु मनुष्यधर्म्माः,—इति बहुवचनान्तस्तत्र पाठः।

** ततोपस्थानं गायत्र्यष्टशतादीन् कृत्वा,—इति व०।

†† सामीसनसं,—इति वीरमित्रोदये।

‡‡ उत्तरं गायत्र्यनुगानं शुद्धाशुद्धीयं राजनरौहिणं बृहद्रथन्तरं पुरुषगति-र्महानाम्नो महावैराजं महादिवाकीर्त्यं,—इति व०।

§§ ज्येष्ठसामानं,—इति मु०।

|||| यथा आनदहरहर्ब्रह्मयज्ञाय इति गोभिलीया गोभिलीयाः,—इति का० मु०। यथाशक्त्याहरहर्ब्रह्मयज्ञं गोभिलीयाः,—इति व०।

¶¶ इति स्नानविधिग्रन्थः समाप्तः,—इति का०।

# स्नानसूत्रपरिशिष्टम्† ।

आप्लवने तु सम्प्राप्ते तर्पणं तदनन्तरम् ।
गायत्रीञ्च जपेत् पश्चात्‡ स्वाध्यायञ्चैव शक्तितः* ॥
आप्लवने तु सम्प्राप्ते गायत्रीं जपतः पुरा ।
तर्पणं कुर्व्वतः पश्चात् स्नानमेव वृथा भवेत्* ॥
कदाचिदपि नो विद्वान् गायत्रीमुदके जपेत् ।
गायत्र्यग्निमुखी यस्मात्§ तस्मादुत्थाय तां जपेत् ॥
यज्जले शुष्कवस्त्रेण स्थले चैवार्द्रवाससा ।
जपहोमौ तथा दानं सर्व्वं तन्निष्फलं भवेत् ॥
गृहेषु तत्समं जप्यं गोष्ठे शतगुणं भवेत् ।
नद्यां शतसहस्रञ्च अनन्तं देवसन्निधौ ॥
दशभिर्जन्मजनितं शतेन तु पुराकृतम् ।
त्रियुगन्तु सहस्रेण गायत्री हन्ति दुष्कृतम् ॥

---

† अयमंशः स्नानसूत्रान्तर्गततयैव व० पुस्तके उपलभ्यते। का० पुस्तके वीरमित्रोदये च *चिह्नाङ्कितौ श्लोकौ स्नानग्रन्थे दृश्येते। अस्यैव केचित् श्लोकाः गोभिलीयतया स्मार्त्तेनोद्धृताः । श्रीदत्तादिभिर्गोभिलीयग्रन्थतया एतदीयवचनं लिखितं। अनत्यानां केषाञ्चित् श्लोकानां गोभिलप्रणीतत्वं प्रायः सर्व्वनिबन्धकाराणामनुमतं लक्ष्यते। परमत्र सूत्रलक्षणाभावात् स्नानग्रन्थे दर्शनाच्च तत्परिशिष्टतया व्यवहृतो ग्रन्थोऽयमस्माभिः ।

‡ नित्यं,—इति पाठान्तरम् ।

§ प्रोक्ता,—इति पाठान्तरम् ।

सहस्रपरमां देवीं शतमध्यां दशावराम्।
गायत्रीन्तु जपन् विप्रोन स पापेन लिप्यते॥
व्याहृतिभिः प्रतिप्रणवां गायत्रीञ्च प्रतिप्रति।
षट्प्रणवसंयुक्तां गायत्रीजपलक्षणम्॥
ब्राह्मणं स्नातमायान्तं पथि गच्छन्ति देवताः।
पितरस्तत्र गच्छन्ति वायुभूताजलार्थिनः॥
निराशास्ते निवर्त्तन्ते वस्त्रनिष्पीड़ने कृते।
तस्मान्न पीड़येद्वस्त्रमकृत्वा पितृतर्पणम्॥
जलमध्ये तु यः कश्चित् द्विजातिर्ज्ञानदुर्ब्बलः।
निष्पीड़यति चेद्वस्त्रं स्नानन्तस्य वृथा भवेत्॥
ये चास्माकं कुले जाताअपुत्रागोत्रिणोमृताः।
ते तृप्यन्तु मया दत्तं वस्त्रनिष्पीड़नोदकम्॥
अन्वारब्धेन सव्येन पाणिना दक्षिणेन च।
तृप्यतामिति सेक्तव्यं* नाम्ना च प्रणवादिना॥
आपोदेवगणाः सर्व्वे आपः पितृगणाः स्मृताः।
तस्मादापोजले देयाः पितॄणां दत्तमक्षयम्॥
प्रक्षालितैस्तिलैः कृष्णैस्तर्पयेन्तु पितॄन् सदा।
जलस्थोजलमध्ये तु त्रिस्त्रिरेकन्तु तर्पयेत्॥
श्राद्धे सेचनकाले तु पाणिनैकेन दापयेत्।
तर्पणे तूभयं कुर्य्यादेषएव विधिः स्मृतः॥
देवतानां पितॄणाञ्च जले दद्याज्जलाञ्जलीन्।

---

* वक्तव्यं,—इति पाठान्तरम्।

असंस्कृतप्रमीतानां स्थले दद्याज्जलाञ्जलीन् ॥
गोत्रं स्वरान्तं सर्व्वत्र गोत्रस्याक्षय्यकर्म्मणि।
गोत्रस्तु तर्पणे प्रोक्तः कर्त्ता एवं न मुह्यति ॥
सर्व्वत्रैव पितः प्रोक्तं पिता तर्पणकर्म्मणि।
पितुरक्षय्यकाले च कर्त्ता एवं न मुह्यति ॥
शर्म्मन्नर्घादिके कार्य्ये शर्म्मा तर्पणकर्म्मणि।
शर्म्मणोऽक्षय्यकाले च कर्त्ता एवं न मुह्यति ॥
येऽबान्धवाबान्धवा वा येऽन्यजन्मनि बान्धवाः।
ते तृप्तिमखिलां यान्तु ये चास्मत्तोयकाङ्क्षिणः ॥
उदकएवोदकस्थः स्थलगस्तु शुचिस्थले।
पादौ कृत्वोभयत्रैव आचम्योभयतः शुचिः ॥
कण्ठाधः प्रविशत्यापस्तावत् पूतोभविष्यति।
अन्यथा न भवेत् शौचं मुक्तकण्ठस्य नाचमेत् ॥
पवित्रं न भवेत् पाद्यमाचान्ते न कदाचन।
उच्चारे भोजनस्यान्ते तस्य त्यागोविधीयते ॥
जानुभ्यामूर्द्ध्वमाचम्य जले तिष्ठन्नदुष्यति।
ताभ्यामधस्तथा तिष्ठन्नाचामेत विचक्षणः ॥
वामहस्तकृतैर्दर्भैर्दक्षिणेनोदकं पिबेत्।
रुधिरं तद्भवेत्तोयं पीत्वा चान्द्रायणं चरेत् ॥
दक्षिणेन कुशान् गृह्य दक्षिणेनोदकं पिबेत्।
सोमपानेन तत्तुल्यं यथापाणिस्तथा हि सः ॥
अपवित्रेण हस्तेन ब्राह्मणाआचमन्ति ये।

सोमपानं भवेत्तेषामन्यच्च क्रतुमादिशेत् ॥

कुशपूतं भवेत् स्नानं कुशेनोपस्पृशेत्ततः ।

कुशेन चोद्धृतं तोयं सोमपानेन तत्समम् ॥

अकुशेन तु यत् स्नानं यद्दानं तोयवर्ज्जितम् ।

असङ्ख्यया च यज्जप्तं तत् सर्व्वं निष्फलं भवेत् ॥

अपवित्रकैर्हस्तैर्दत्तं भुक्तं कृतञ्च यत् ।

देवा हव्यं न गृह्णन्ति कव्यञ्च पितरस्तथा ॥

चितिजातं पथिजातं स्वाध्यायं पितृतर्पणम् ।

स्तरणासनपिण्डेषु षट् कुशान् परिवर्ज्जयेत् ॥

जलमध्ये श्मशाने वा वल्मीके मूषिकोत्करे ।

कृतशौचञ्च यच्छेषमग्राह्याः पञ्च मृत्तिकाः ॥

न कुर्य्याद्दन्तसंघर्षं आलूनोदेहभाजनम् ।

अपमृज्य च न स्नायात् गात्रमम्बरपाणिना ॥

स्नातोगात्राणि संमृज्यात् स्नानशाट्या न पाणिना ।

न च निर्धूनयेत् केशान् आचामेच्चैव चोत्थितः ॥

दुःस्वप्नं यदिवा पश्येद्वान्ते वा क्षुरकर्म्मणि ।

मैथुने कटधूमे च स्नानमेव विधीयते ॥

द्विजोयः स्नाति नित्योयं पञ्चाङ्गं विधिपूर्व्वकम् ।

अश्वमेधफलं तस्य गोभिलीयवचोयथा ॥ इति ॥

मन्त्राः,—पावकानइत्यादि, सप्तव्याहृतयः, सावित्रीञ्च सप्रणवामाद्यन्तौ, सहस्रशीर्षेत्यादि, घृतवतीत्यादि, अश्वक्रान्तेत्यादि, इदं विष्णुरिति, त्रीणि पदेत्यादि, तद्विष्णोः कर्म्माणीत्यादि, तद्विप्रासइत्यादि, अतो-

| अशुद्धम् | शुद्धम् | पृष्ठ | पंक्ति |
|---|---|---|---|
| स्वैवएतेषां | स्वैकएवैषां | ४८८ | १० |
| श्रोत्रिय | श्रोत्रिये | ५०३ | ८ |
| वोषा | गम्नी | ५०५ | १ |
| स्पर्श | दर्श | ५०८ | १५ |
| सम्वेशाभागो | संवेशोभोगो | ५२४ | १२ |
| दशा | देशा | ५२७ | १० |
| धूनयेत्” | धूनयेत्”—इति । नचैवमपि बक्कवासत्वदोषप्रसङ्ग कर्त्तव्या । कुतः ? । | ५३३ | २ |
| नचैवमपि बक्कवासत्वदोषाप्रसङ्ग कर्त्तव्या । कुतः ? | × × × × | ५३३ | ४ |
| इति | × × | ५३३ | ७ |
| पाय | पायस | ५४४ | १४ |
| मन्त्राभ्याहुतिर्भिरि | इ | ५७६ | ३ |
| बा षि | वर्हिषि | ५८० | १० |
| न्यञ्चा | न्यञ्चौ | ५८० | १० |
| स्नानन् | स्नानम् | ५८४ | ८ |
| मृत | मृतु | ५८८ | १३ |
| त्रिसंख्याका | त्रिसंख्याकाः | ६२३ | ११ |
| चास्मदीये | चास्मदीयं | ६३१ | १ |
| असौ—इत्येतस्मिन् स्थाने | × × × × | ६३१ | १४ |
| हेतुवन्निगदस्तु न मुख्यार्थः किन्तु स्तुतिपरएव इति प्रमाणलक्षणे दर्शितम् | × × × × | ६३६ | ३,४ |
| त्वयां | दरयां | ६३९ | १५ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तौ। |
|---|---|---|---|
| स्तत | स्तत | ६४६ | १३ |
| उत्तानं पात्रं कृत्वा | × × × × | ६५१ | १६ |
| तथा मृत्यन्तरम्। | × × × | ६५२ | ११ |
| इति | × × | ६५२ | १२ |
| पित्र्य | "पित्र्य | ६५३ | १ |
| स्थितम् | निहितम् | ६५५ | ५ |
| (तन्नष्टत्वाच मन्त्रोपिताव-<br>न्मात्रः तदीयो निवर्त्तते।<br>तेन, "एतद्वः पितरोवासः"<br>—इति श्राद्धकल्पोक्तेनैव<br>मन्त्रेण वाससोनिधानं सि-<br>ध्यति)। एकवचनसंयोगा-<br>च्चैकमेवात्रवासः स्यात्।<br>अपूर्व्वं खल्वत्रवासो विधी-<br>यते। अतस्तदेकत्वमपि प-<br>श्वेकत्ववद्विवक्षितुमुचित-<br>मेव | × × | ६७१ | २,३,४,५,६ |
| भन्त्र | मन्त्र | ६८१ | ५ |
| दृत्य | दृत्य | ६८५ | १३ |
| दग्नाहार्य्यं | दन्वाहार्य्यं | ६६६ | १२ |
| भूसि | भूरि | ६८७ | ४ |
| उभयेष | उभयेषु | ६८८ | १८ |
| भेगं | भोगं | ६९३ | १८ |
| कुष्ठ | उन्माद | ६९६ | १२ |
| सूत्रे | सूत्र | ७०६ | ५ |
| वस्त्र | वास्तु | ७१९ | ११ |
| विश्लेष | विश्लेष | ७२२ | ३ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तौ । |
|---|---|---|---|
| मासाभि ... ... ... | मन्त्राभि ... ... ... | ७२५ ... | १ |
| अर्व्वाङ ... ... ... | अर्वाङ (एवं परत्र पंक्तौ) | ७२८ ... | १० |
| "अभ्या ... ... ... | अभ्या ... ... ... | ७४५ ... | २० |
| प्रथमो ... ... ... | प्रथमोद्वितीयश्च ... ... | ७५७ ... | १७ |
| इतरेषु ... ... ... | इतरयोः ... ... ... | ७५७ ... | १८ |
| तूष्णीमेव ... ... ... | व्याहृतिभिः ... ... | ७६२ ... | ८ |
| ज्ञाव ... ... ... | ज्ञानं ... ... ... | ७६६ ... | ५ |

गृह्यासंग्रहस्य ।

| | | | |
|---|---|---|---|
| परे ... ... ... ... | पार ... ... ... ... | ७७५ ... | २ |
| प्रागल्भो ... ... ... | प्रगल्भो ... ... ... | ७७५ ... | १५ |
| कार्म्म ... ... ... | कर्म्म (एवं परत्र)... ... | ७७७ ... | ६ |
| मान्ना .. ... ... | नाम्ना ... ... ... | ७७९ ... | ६ |
| अतिभयदेभि ... ... | अतिभयदेवि ... ... | ७८६ ... | १७ |
| सन्धन्धात् ... ... | संबन्धात् ... ... ... | ७८८ ... | १८ |
| पर्य्यंगाथ ... ... ... | पर्य्यगाथ ... ... ... | ७९५ ... | ५ |
| स्मतं ... ... ... | स्मृतं... ... ... ... | ७९६ ... | ६ |
| त्रिधा ... ... ... | त्रेधा (एवं परत्र)... ... | ८०५ ... | १० |
| कामीयांश्च ... ... ... | कामीयांश्च ... ... ... | ८०८ ... | १२ |
| आचार्य्यां ... ... ... | आचार्य्यौ ... ... ... | ८०८ ... | १५ |
| विस्फुलिङ्गेऽत्र ... ... | विस्फुलिङ्गे च ... ... | ८२५ ... | १५ |
| प्राग ... ... ... | "प्राग ... ... ... | ८२८ ... | १२ |
| तथा ॥ ९२ ॥ ... ... | तथा । ... ... ... | ८२८ ... | १२ |
| प्रदक्षिणम् । ... ... | प्रदक्षिणम्" । इति ... | ८२८ ... | १२ |
| ॥ ९२ ॥ ... ... ... | ॥ ९२ ॥ (एतदनुसारात्... परत्राङ्काः शोध्याः ।) | ८२९ ... | ६ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ । |
|---|---|---|---|
| ग्रहणम | ग्रहणाम् | ८२४ | ४ |
| माथिः | मागिः | ८२४ | १४ |
| सर्पिस्तैल | सर्पिस्तैलं | ८२७ | ६ |
| गार्भे | गार्भे | ८२८ | ६ |
| पूर्व्वं | पूर्व्वं | ८३५ | १० |
| माचार्य्यः | माचार्य्यैः | ८४६ | १५ |
| र्यत्वात | र्यत्वात् | ८५१ | १८ |
| ग्भंख्या | ग्भख्या | ८५४ | ८ |
| यस्मात् | यस्मात् | ८५७ | २० |
| पितामह्याः | पितामह्याः | ८७६ | १० |
| मादाय, | मादयुः | ८८० | १० |
| प्रावस्था | अर्थप्रावस्था | ८८५ | ५ |
| मोरन्ध्र | मोवरन्ध्र | ८८७ | १५ |
| सन्नीयं | सवीयं | ९१० | ६ |
| राजा | राजो | ९१२ | ४ |
| इत्यादि | इत्यादि | ९१२ | २० |
| इतरे | तद्मे | ” | ” |
| मराक्ते | मवाक्ते | ९१४ | २० |
| पूर्व्वे | पूर्व्वं | ९१५ | ५ |
| विभिद | विभिद्य | ९१५ | ८ |
| प्रति | प्राङ् | ९१५ | १४ |
| माषः | माषाः | ९१६ | २० |
| प्रकृतादेव | प्रकृतिवदेव | ९२० | १२ |
| सम्बाम् | सर्व्वाम् | ९२१ | ३ |
| इति | इति | ९२२ | २ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तौ |
|---|---|---|---|
| यदा | यदा | ९३७ | ४ |
| देव | देव | ९४५ | ३ |
| नैवैकस्याच | नैवैकस्याच | ९४७ | २४ |
| मन्नो | मन्नः | ९५० | १४ |
| धाम | धामं | ९५० | १६ |
| निस्तारः | विस्तारः | ९५४ | १७ |
| गीताम | गीतान् | ९५५ | १७ |
| वेदैः | वेदैः | ९५७ | २२ |
| ॥ १९ ॥ | । | ९६४ | १५ |
| सर्व्वेंएव | सर्व्वेभ्यएव | ९६७ | १४ |
| प्रथम | प्रथमं | ९६७ | २२ |
| इत्येवाधिकः | इत्यधिकः | ९८७ | १२ |
| स्वधानिनयमीया | येभ्यः स्वधानिनयमीया | ९९४ | ६ |
| तदेतत्सूत्रं | तदुतत्सूत्रं | ९९९ | १८ |
| वेदाः | वेदः | १००२ | १५ |
| वाजिनो | वाजिनोनो | १००३ | १ |
| पितरा | 'पितरा | १००४ | १२ |
| नैयमिकस्यादि | नैयमिकस्यामि | १००७ | १७ |
| वश्वदेवे | वैश्वदेवे | १००८ | ४ |
| मस्य | मस्य | १०१४ | ५ |
| मेव | मवे | १०२० | ६ |
| सव्यम् | तुभ्यम् | १०२८ | १४ |
| वज्रिदिनखेति | वज्रिखेति | १०३० | १ |
| अन्ये | अन्य | १०३२ | २ |
| वेपन | वेपनं | १०३६ | ३ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तौ |
|---|---|---|---|
| विभजते-विभाग | विभजतेर्विभाग | १०२७ | ६ |
| इरते | इइते | १०२७ | २२ |
| सूत्रान्तरं | सूत्रानन्तरं | १०३८ | ७ |
| इत्युच्छितव्यं | इत्यूच्छितव्यं | १०४१ | ३ |
| निषेध, | निषेधः, | १०४१ | ११ |
| निर्वतर्स्यति | निवर्त्स्यति | १०४१ | १६ |
| प्राङ्मुमुख | प्राङ्मुख | १०४२ | १५ |
| पिण्डान | पिण्डान् | १०४२ | १६ |
| प्रयुयुप्सतं | प्रयुयुप्सितं | १०४५ | २१ |
| विमिथ्यो | विमिथ्यो | १०४५ | २२ |
| इदि | इति | १०४६ | ८ |
| नाम् | नाम | १०४६ | १० |
| वचनार्थः | वचनार्थः | १०४८ | १६ |
| प्रीयता | प्रीयन्ता | १०५० | ११ |
| [illegible] | अज्ञान्वितः | १०५१ | १६ |
| तदेव | तदेव | १०५४ | ११ |
| कार्त्स्न्येन | कार्त्स्न्येन | १०५८ | २ |
| ब्रह्मः | ब्रह्मः | १०६१ | १८ |
| तृतीयायां | द्वितीयायां (एवं परत्र पंक्तौ) | १०६८ | ३ |
| व्यवाय | व्यवाये | १०७१ | १९ |

आग्रयणस्य परिशिष्टस्य ।

| | | | |
|---|---|---|---|
| तथ | तथा | १०७६ | ७ |

आमन्त्रणस्य परिशिष्टस्य ।

| | | | |
|---|---|---|---|
| आपविभवे | आपविभक्तरे | १०८५ | ६ |

Divine attributes for which the gods stand. It is admitted by Western scholars that "Indefiniteness of outline and lack of individuality characterize the Vedic conception of the god". They also admit that "The character of each Vedic god is made up of only a few essential traits combined with a number of other features common to all the gods, such as brilliancy, power, beneficence and wisdom. Certain great cosmical functions are predicated of nearly every leading Deity individually". "The physical appearance of the gods is anthropomorphic, though only in a shadowy manner; for it often represents only aspects of their natural bases figuratively described to illustrate their activities". "The arms of the sun are simply his rays, and his eye is intended to represent his physical aspect. The tongue and limbs of Agni merely denote his flames" (Macdonell's Vedic Mythology). This supports the theory stated above, and shows the inspired wisdom of the Rishis, who boldly utilized anthropomorphism for the purpose stated above and at the same time avoided the vulgarization of the mind by attachment to form, as seen in the case of Greeks and later Hindus, who made statues and images of their gods and sang more of the symmetry of their limbs and the beauty of their physical features instead of the Divine attributes, as done by the Rishis. The names of the various gods should therefore be understood as indicating one supreme spirit, with a wealth of names to choose from, to glorify him, such as exists in no other scripture.

Wherever in this introduction the author speaks of gods in singular or plural with a capital or a small "g", be understood to mean the one supreme spirit and noth

The names of certain Devatas, such as Manyu (wra 10th book, 84 hymn, 1-4 Mantras cows, implements culture, sacrifice and war vide 8th book, 90 hymn, 15 4th book, 57 hymn, 8 Mantra; 6th book, 47 hymn, 26th Ma 6th book, 75 hymn, 16 and 18 Mantras, which are call Devatas on account of their being the subject—matter of t Mantras. Where such Devatas are prayed for blessing, it is the supreme being that should be understood as the gi the blessing, the improvised gods merely serving for Hi fication through small as through great things.

It will be observed from a perusal of the Mantras vide, for example 1st book, 39 hymn, 2 Mantra (3) that greatness, wherever visible, whether in gods or men or things belongs to the Supreme Spirit only and whenever honour is paid to a hero or a genius or a saint, it is honour to the Divine attribute which is manifested through the man and which is the cause of his greatness. To be perfect, a man must have all the Divine attributes and the praise singing and worship of the different Devatas, having different attributes, which must result in gradually investing the worshipper with the various Divine qualities for which the gods stand. To be possessed of all the Divine qualities is the object of life. The god in man strives to appear in a more and more perfect form, and until He does appear in a perfect form, man must be born and reborn. "यद्भूत्वा न पुनर्भवः"—"Becoming which there is no more being." Vedic prayer or worship is therefore not merely an auxiliary to the gaining of knowledge through purification of the heart, as generally supposed in these days, but is directly conducive to the perfection of man, i. e. to his transformation from an animal to God.

*Karma, Upasana and Jñana, or Sacrifice, Prayer and Knowledge.*

The Vedas strictly speaking include only the Mantra portion but Brahmanas and Upanishads are also considered, and rightly so as would appear below, to form part of the Vedas. The portion deals mostly with Upasana, the Brahmana with and the Upanishad with Jñana. The last two however independant Shastras, but only enlarged discourses or ons of what is already contained in the Mantra portion. er contains in fact Karma, Upasana and Jñana in due on to meet the requirements of the highest good of man and hereafter.

The manner of performing Karma or worship cannot owever be known without the study of Brahmanas and the ana or knowledge contained in Mantra portion cannot be thoroughly understood withuot studying the discourses of Upanishads. The study of Brahmanas and Upanishads is therefore essential for the practice of Vaidika religion, so much so